॥ श्रीः ॥

श्रीयुतयास्कमहर्षिप्रकाशितं

निघण्टुभाष्यरूपं

# निरुक्तम् ।

## निघण्टुपाठसमुपेतम् ।

भगवद्दुर्गाचार्यकृत-ऋज्वर्थाख्यव्याख्यया,

पं० बदरीलालतनूज-लवपुरीयप्राच्यविद्यालयप्रधानाध्यापक-महामहो-
पाध्याय-पण्डितशिवदत्तशर्मकृत-
टिप्पण्यादिभिश्च समलङ्कृतम् ।

तदेव

रावेरग्रामवासिगोविन्दशास्त्रिणा, मिर्जापुरमण्डलान्तर्गतकोंढाख्यग्रामवास्तव्य-
त्रिपाठ्युपनामकच्छोटूपतिशर्मणा च संशोध्य,

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां
( खेतवाडी ७ वीं गली खम्बाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९६९, शके १८३४.

ओ३म्



वेदार्थबुभुत्सया शब्दनिरुक्त्यादिजिगमिषया शास्त्रपरीक्षां दित्सुरस्य ग्रन्थस्याध्ययनमारभे सिद्धयश्च मे समीहितं यथा स्यात्तथाभ्यर्थये भगवन्तमीशमित्यो३म् ॥

विदुषाञ्चरणरेणुचरणदास

श्रीदधिमथी जयति ।




# प्रस्तावना।

यत्क्षेत्रजाता जगतीतले जना याता इमे दाधिमथाख्यया प्रथाम् ।
देवैः स्तुता श्रीदधिमथ्यनारतं सोपासकानां विजयं सदा क्रियात् ॥

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टये सर्वसाधकस्य धर्मस्य सर्वसाध्यस्य मोक्षस्य च साधकं स्वतःप्रमाणं प्रमाणमूर्धन्यं

**"वेदोऽखिलो धर्ममूलम्"**

**"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥"**

**"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ॥"**

इत्यादिस्मृतिवाक्येभ्यो वेदमेव मन्यन्ते सर्वे शिष्टशिरोमणयः । एवं च

**"चोदनालक्षणोऽर्थो धर्मः"**

इति जैमिनीयपूर्वमीमांसासूत्रेण वैदिकलिङ्तव्यादिघटितविधिवाक्यविधीयमानस्यैव धर्मत्वेन तादृशवाक्यानां मन्त्रभागेऽसत्त्वेन ब्राह्मणभाग एव सत्त्वेन **"मन्त्रब्राह्मणयोर्वेदनामधेयम्"** इति बौधायन-कात्यायना-ऽऽपस्तम्बादिसकलकल्पसूत्रोपज्ञातृसर्वज्ञातृमहर्षिवाक्यानुरोधेन ब्राह्मणभागेऽपि वेदत्वस्य निर्णीतत्वेन ब्राह्मणभागे वेदत्वमन्यमाना रूढिसामाजिका अविकृतबुद्धय एव ॥

सोयं वेद:

"अस्य महतो भूतस्य निःश्वसितमेतद्- ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥" ( अध्या. २ ब्राह्म० ४. ख० १० )

इति बृहदारण्यकश्रुत्या ब्रह्मनिःश्वसितरूपोऽपौरुषेय एव ॥

अत्र केषांचित् पौरुषेयत्ववादिनां मतेन पूर्वपक्षं सूत्रयति प्रथमाध्यायप्रथमपादचरमाधिकरणे जैमिनिः--

"वेदांश्चैके संनिकर्षं पुरुषाख्या ॥ १ ॥" इति।

अस्यार्थः--रामायण-भारत-पुराणादिग्रन्थानां दृष्टान्ततया समुच्चयार्थश्चकारः । एके वादिनो वेदान् प्रत्यपि कर्तॄणां संनिकर्षं मन्यन्ते रामायणादीन्प्रतीव । यथा वाल्मीकीयत्वेन रामायणस्य, वैयासिकत्वेन महाभारतपुराणादीनां प्रसिद्धिः, एवं काठकत्व-कौथुमत्व-तैत्तिरीयत्व-वाजसनेयत्वादिनामभिस्तत्तच्छाखानां प्रसिद्धिसत्त्वेन तत्तच्छाखानां पौरुषेयत्वेन शाखातिरिक्तवेदस्यासत्त्वेन वेदस्य पौरुषेयत्वमेव ॥

संप्रदायप्रवर्तकत्वेन तेषां तथा प्रसिद्धिः स्यादिति समाधानसंभवेऽपि पौरुषेयत्वसाधकं युक्त्यन्तरं सूत्रयति-

"अनित्यदर्शनाच्च ॥ २ ॥" इति ।

अनित्यानां जन्ममरणवतां बबरादीनां "बबरः प्रावाहणिरकामयत", "कुरुविन्द औद्दालकिरकामयत", "कुशिकस्य सूनुः", "आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिः" इत्यादिषु मन्त्रभागेऽपि वर्णनात् तेभ्यो जन्ममरणवद्भ्यो बबरादिभ्योऽर्वाचीनत्वेन वेदानां पौरुषेयत्वमेव । किञ्च, 'विमतं वेदवाक्यं पौरुषेयम्, वाक्यत्वात्, भारतादिवत्' इत्यनुमानसंग्रहार्थश्चकारः ।

एवं वेदानां पौरुषेयत्वे वादिना स्थापिते सिद्धान्ती वेदानामपौरुषेयत्वं स्थापयति-

"आख्याः प्रवचनात् ॥ ३ ॥" इति ।

काठकं, कौथुमं, वाजसनेयं, तैत्तिरीयम्-इत्यादिकाः शाखानामाख्याः प्रवचनादेव न तु करणात् । एतदर्थमेव भगवतः पाणिनेरपि सूत्रम्-"तेन प्रोक्तम्" ( ४।३।१०१ ) इति संगच्छते । अन्यथा "कृते ग्रन्थे" इत्यनेनैव सिद्धौ "तेन प्रोक्तम्" इति सूत्रं व्यर्थमेव स्यात् । एवं च कठादिभिः संदेशहरैरिव प्रोक्ता एव वेदा न तु कृताः ॥

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"

इति श्वेताश्वतरीयश्रुत्या ब्रह्माणं प्रत्यप्युपदेश्यतैव वेदस्य निर्दिष्टा तर्हि कटादिकर्तृकत्वं कथं घटेत ॥

"यज्ञेन वाचः पदवीयमायन्। तामन्वविन्दन्नृषिषु प्रविष्टाम् ॥"

इति श्रुत्या,

"युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥"

इति स्मृत्याऽपि वेदानां लाभ एवोपदिष्टः ॥

"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥"

इति स्मृतेरपि

"ऋचामग्निर्दैवतम्, तदेव ज्योतिः, गायत्रं छन्दः, पृथिवी स्थानम्,
'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम् ॥' इत्येवमादिं कृत्वा ऋग्वेदमधीयते ॥
यजुषां वायुर्दैवतम्, तदेव ज्योतिः, त्रैष्टुभं छन्दः, अन्तरिक्षं स्थानम्,
'इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु।
श्रेष्ठतमाय कर्मणे' इत्येवमादिं कृत्वा यजुर्वेदमधीयते ॥
साम्नामादित्यो दैवतम्, तदेव ज्योतिः, जागतं छन्दः, द्यौः स्थानम्।
'अग्न आयाहि वीतये गृणानो हव्यदातये।
निहोता सत्सि बर्हिषि' इत्येवमादिं कृत्वा सामवेदमधीयते ॥"

इति गोपथब्राह्मणानुसारेण "पृथिवीस्थानमग्निम्, अन्तरिक्षस्थानं वायुम्, द्युस्थानमादित्यम् अर्थात्—तद्वाचकशब्दघटितमन्त्रं प्रारभ्य ऋग्यजुःसामलक्षणं ब्रह्म दुदोह आविश्चकार" इत्येवार्थ इति न कोपि शङ्कावसरः। तथा च वेदा अपौरुषेया एव ॥

बबरादीनां जन्ममरणवतामनित्यानां वेदे वर्णनात् पौरुषेयत्वमेव वेदानामिति पूर्वपक्षिणो वाक्यं निराकरोति—

"परं श्रुतिसामान्यमात्रम् ॥ ४ ॥" इति।

अस्यार्थोऽप्युत्तरमीमांसायां वैयासिकस्य

"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥१।३।३०॥"

इति सूत्रस्यार्थमनुसृत्यैव करणीयः, एकशास्त्रत्वेनैकवाक्यताया एवौचित्यात्। तथाहि तस्यार्थः शङ्करभगवत्पादभाष्यानुसारी—

"धाता यथापूर्वमकल्पयद्दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥"
"स भूरिति व्याहरन् भूमिमसृजत्"

इति दर्शनात्,

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
नामरूपे च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥
सर्वेषां च स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥
यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥"

इति स्मृतितश्चानादावस्मिञ्जिहाने[1] पूर्वपूर्वकल्पजातसमाननामरूपत्वादेव सर्वस्रष्टैर्वेदे ववरादिनामसत्त्वेऽपि न वेदस्यार्वाचीनत्वं पौरुषेयत्वं च ॥

सोयं मन्त्रब्राह्मणोभयात्मक एव वेदः श्रुतिनिगमागमाम्नायसमाम्नायच्छन्दःशब्दैरपि निर्दिश्यते । अत एव मन्त्रमात्रेष्टप्रवृत्तौ विधौ मन्त्रपदम्, ब्राह्मणमात्रेष्टप्रवृत्तौ विधौ ब्राह्मणपदम्, मन्त्रब्राह्मणोभयस्थलेष्टप्रवृत्तिके विधौ छन्दःपदं निर्दिशति भगवान् पाणिनिः—'जनिता मन्त्रे', 'द्वितीया ब्राह्मणे', 'तृतीया च होश्छन्दसि' इत्यादिषु । यदि च्छन्दःपदं मन्त्रपर्यायभूतं भवेत् तर्हि 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' ( ३।२।७१ ) इति सूत्रे मन्त्रपदं निर्दिश्य तदुत्तरसूत्रे 'अवे यजः' ( ३।२।७२ ) इति सूत्रेऽपि तदनुवर्त्य मन्त्र एव प्रवृत्त्यर्थं 'विजुपे छन्दसि' ( ३।२।७३ ) इति सूत्रे छन्दःपदं नैवोपाददीत । मन्त्रपदानुवृत्तिसंभवेपि पुनश्छन्दःपदोपादानेन मन्त्रच्छन्दःपदयोरपर्यायत्वमेव पाणिनिसंमतमिति निश्चेयम् ॥ 'छन्दो ब्राह्मणानि च तद्विषयाणि' इत्यत्र च्छन्दोग्रहणेनैव सिद्धौ ब्राह्मणपदोपादानं "विशेषवाचकपदसंनिधाने सामान्यवाचकपदानां तद्विशेषा-

---

१ जिहीते इति जिहानस्तस्मिन् संसार इत्यर्थः ।

तिरिक्तपरत्वम् " इति न्यायेन "**नामाख्यातोपसर्गनिपाताः**" इत्यत्र निपातपदोपादानेनैवोपसर्गाणामपि ग्रहणे सिद्धे पुनरुपसर्गग्रहणमिव कृतमिति न कोपि शङ्कावसरः ॥

वेदेषु स्थितानि कानिचिद्दुरूहपदानि पृथक् संजग्राह भगवान् प्रजापतिः**कश्यपः** । अस्य संग्रहस्यैव **निघण्टुशब्देन** प्रसिद्धिः । निघण्टोरेव 'यूथादपसारिताया अपि गोर्गोत्वं नापहृतं भवति तथा वेदेभ्यो निःसारितानां शब्दानामपि वेदत्वं नापगतम्' इति वेदत्वमेवेति निश्चाययितुं निघण्टुग्रन्थमुद्दिश्य वेदमात्रविषयं समाम्नायशब्दं निर्दिदेश भगवान् यास्कः–"**समाम्नायः समाम्नातः स व्याख्यातव्यः**" इति । एवं च निघण्टुषु वेदत्वेन तद्व्याख्यानभूते निरुक्ताख्यभाष्ये वेदाङ्गत्वम् । भगवतः प्रजापतिकश्यपस्य निघण्टूपज्ञातृत्वं प्रकाशितं भगवता वेदव्यासेन महाभारते मोक्षधर्मपर्वणि ३४२ अध्याये ८६–८७ श्लोकाभ्याम्—

> **"वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत ।**
> **निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥**
> **कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।**
> **तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥** " इति ।

उपलभ्यते चास्मिन् निघण्टुग्रन्थे ८४६ पृष्ठे ( ५ अध्या. ६ खं. १६ शं पदम् ) **वृषाकपिरिति** ॥

तस्यैतस्य समाम्नायभूतस्य निघण्टुग्रन्थस्य भाष्यभूतं निरुक्ताख्यं ग्रन्थमिममाविश्चकार भगवान् यास्क इति च प्रकाशितवान् भगवान्वेदव्यासस्तत्रैव ( महाभारते मोक्षपर्वणि ३४२ अ. ६९–७०–७१ श्लोकैः )–

> **"शिपिविष्टेति चाख्यायां हीनरोमा च योऽभवत् ।**
> **तेनाविष्टं तु यत्किंचित् शिपिविष्टेति च स्मृतः ॥**
> **यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान् ।**
> **शिपिविष्ट इति ह्यस्माद् गुह्यनामधरो ह्यहम् ॥**
> **स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।**
> **मत्प्रसादादधो नष्टं निरुक्तमधिजग्मिवान् ॥** " **इति ।**

उपलभ्यते चास्मिन् निरुक्तग्रन्थे ३८० पृष्ठे ( ५ अ. ८ ख ) शिपिविष्टपदनिर्वचनम् । अस्य निरुक्तस्य समाप्तौ '**नमः पारस्कराय नमो यास्काय**' इति लेखस्योपलम्भेन '**पारस्करप्रभृतीनि च संज्ञायाम्**' ( ६।१।१५७ ) इति पाणिनिसूत्रभाष्ये '**पारस्करो देशः**' इति भगवत्पतञ्जल्युक्तेश्च पर्यालोचनेनायं यास्को भवेदेव पारस्करदेशीयः ।

शतपथब्राह्मणे वंशप्रक्रमे–'**भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च**' इति श्रुतः, बृहदारण्यके वंशप्रक्रमे–'**जातूकर्ण्य आसुरायणाद्यास्काच्च**' इति श्रुतः, छन्दःसूत्रेषु '**उरोबृहती यास्कस्य**' ( ५।१० ) इति सूत्रे पिङ्गलदर्शितश्च यास्कोऽस्माद्यास्कादभिन्नो भिन्नो वेति न निश्चयः ।

---

१ दो ।

'मत्प्रसादादधो नष्टं निरुक्तमधिजग्मिवान् ।'

इति महाभारतवाक्यात्,

"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥"

इति शिक्षावाक्याच्च 'वेदानामिव वेदाङ्गानामपि प्रवक्तार एव न तु कर्तारः' इति प्रतीयते ॥

'अस्मिन्निघण्टौ प्रत्यध्यायं खण्डप्रारम्भपदसूची निघण्टुग्रन्थोपज्ञात्रैव कृता, भाष्यकृत भगवता यास्केन वा कृता' इत्यत्र तु नास्माकं निश्चयः । तत्तत्खण्डसमाप्तौ 'इति ( एतावन्ति अमुक ) नामानि' इत्येतावान्पाठस्तु एतन्मात्रार्थकं निरुक्तपाठमुद्देश्य केनचिज्ज्ञात्रा ज्ञान-सौकर्याय योजितो भवेत् ॥

निरुक्तेऽपि प्रत्यध्यायमेव समाप्तौ खण्डप्रारम्भसूची दत्ता । तेन प्रतीयते तत्र पादकल्पना टीकाकर्त्रा स्कन्दस्वामिना, दुर्गाचार्येण वा कृता भवेत् । पादकल्पनायां प्राचीनायां तु प्रतिपाद समाप्ति पादसमाप्तिलेखखण्डप्रारम्भसूची च निर्दिष्टा भवेत् ॥ प्रत्यध्यायसमाप्ति समग्रा-ध्यायखण्डप्रारम्भसूची निर्दिष्टा न भवेत् ॥ प्रत्यध्यायं खण्डविभागस्तु खण्डप्रारम्भसूचीलाभेन प्राक्तन एव न नवीनः ॥ प्रतिखण्डं लघुवाक्यविभागकल्पना तु संदर्भशुद्धिसमाप्तिज्ञानसौलभ्याय दाधिमथैरस्माभिरेवोपज्ञाता 'वृद्धिरादैजदेङ्गुण इको गुणवृद्धी' इत्येवं पाणिनेः संहिता-पाठे वृत्तिकारैः सूत्रविभक्तिरिव ॥

अस्मिन्निरुक्ते दर्शितानां प्राचीनानामार्षाणां
निगमानां,
दैवतानां,
पदानां,
संबन्धिशब्दानां
च सूची सत्यव्रतसामश्रमिभिर्विस्तृततरा निदर्शिता । अस्माभिस्तु—
प्राचीनानामाचार्यादीनां,
निगमानां,
पदप्रकृतीनां
च सूची निदर्शिता । तत्र पदनिर्देशापेक्षया पदप्रकृतीनामेव निर्देशे लाघवं मत्वा यूरोपदेशे Roth महाशयेन निर्दिष्टां सूचीमनुसृत्यैव पदप्रकृतीनामेव सूची निवेशिता ॥

टीकाकर्तृदुर्गविषये अध्यायसमाप्तिलेखतोऽधिकं किञ्चिदपि नावगतम् ॥

टिप्पणीनिरुक्तालोचनविषयं सत्यव्रतसामश्रमिणां विचारं परिश्रमं च धन्यवादार्हं मन्यामहे । निरुक्तालोचनविचारविषये तु बहुतरं लेखनीयमस्माभिर्द्वितीयावृत्तौ लेखिष्यते श्रीदधिमथी-कृपाप्रेरणाभ्याम् ॥

इति निवेदयति—
सकलधीमच्चरणरेणुकज्जललुप्ततमःपटलज्ञानचक्षुः—
शिवदत्तशर्मा दाधिमथः ॥

एतन्मुद्रणे च श्रीमन्महामहिमरा.रा.श्रीवेङ्कटाचार्योपाध्यायैः ( शास्त्री बडोदा कालेज ), तथा शतारानिवासिभिः वे० शा०सं० रा. रा. गजेन्द्रगडकरश्रीबालाचार्यमहोदयैस्तथान्यैश्च कतिपयदयोदयैः पुस्तकप्रदानेन महत्साहाय्यं व्यधायीति तेभ्यो महाशयेभ्यः परश्शताः ससम्मदा धन्यवादाः समर्प्यन्ते।

एवमनेकानि पुस्तकानि तथा म. म. पं. शिवदत्तशास्त्रिदत्तं च संगृह्य खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयश्रीगोविन्दशास्त्रिणा, मिर्जापुरमण्डलान्तर्गतकोंढाख्यग्रामवास्तव्यत्रिपाठ्युपनामक पं० श्रीमहेशदत्तशर्मात्मज-श्रीछोटूपतिशर्मणा च पाठसम्मेलनपुरस्सरं मुद्रणयोग्यतासम्पादकसंस्कारैः संस्कार्य संशोध्य च मया मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर"- ( स्टीम् ) मुद्रणयन्त्रालये पुष्टमसृणपत्रेषूत्तमशीशकाक्षरैः संमुद्रय प्रकाशितमेतन्निघण्टु-निरुक्ताख्यभाष्यम्। तदेतद्ग्रहणपठनपाठनादिभिः सफलयन्तु मे परिश्रममनुग्राहका ग्राहका विद्वांस इति भृशमभ्यर्थ्यते-

क्षेमराज-श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षो मुम्बयी-स्थः।



# अथ निरुक्तोपलब्धनामकानामाचार्यादीनां नामानि ।

नामानि. ... पृष्ठसंख्या.

# अथ निरुक्तस्थनिगमानामकारादिवर्णक्रमेण सूची ।



# निरुक्तस्थनिगमानामकारादिवर्णक्रमेण सूची ।

## ॥ इति निरुक्तस्थनिगमसूची ॥



श्रीदधिमथी जयति ।



# अथ निघंटुनिरुक्तस्थितदृष्टव्यपदप्रकृतीनामकारादिक्रमेणानुक्रमणिका ।



१ 'अक्षति' पाठान्तरे ।

१ 'अस्रेमाणम्' इति पतञ्जलिना न धातुलोपसूत्रे प्रयुक्तत्वान्नान्तोऽयम्। निघण्टौ तु सविसर्गप्रयोगदर्शनेन सान्तता प्रतीयते। [illegible] भाष्यप्रयोगसंवादो भवति।

१ 'ऋभुक्षस्' इति तु Roth महाशयानां प्रमादः ।

| पदप्रकृतयः | पृष्ठांकाः |
|---|---|

| पदप्रकृतयः | पृष्ठांकाः |
|---|---|

१ 'मूस्' इति दन्त्यलेखस्तु Roth महाशयानामनवधानेनैव' इति दुर्गाचार्यलेखादेव प्रतीयते ।

पदप्रकृतयः ... पृष्ठांकाः



पदप्रकृतयः ... पृष्ठांकाः



पदप्रकृतयः ... पृष्ठांकाः

इति निघण्टु-निरुक्तस्थितद्रष्टव्यपदप्रकृतीनामकारादिक्रमानुक्रमणिका ।

॥ श्रीः ॥



# निघण्टोः—

## [ वैदिकशब्दकोषस्य ]

यास्कमुनिविरचितं

# निरुक्ताख्यं भाष्यं

## दुर्गाचार्यरचितव्याख्यासहितं प्रारभ्यते ।

---

श्रीदधिमथी जयति ।

यत्क्षेत्रजाता जगतीतले जना गच्छन्त्यमी दाधिमथाख्यया प्रथाम् ॥
देवैः स्तुता श्रीदधिमथ्यसंशयं सोपासकानां विजयं सदा क्रियात् ॥ १ ॥
वाराणसीयतु सदा जयपत्तनं मे विद्याविलासिभिरिदं सुमनीषिवर्यैः ॥
श्रीरामसिंहनृपमालिक इत्यवेत्य विद्यालतामवपदादतधीरवीरः ॥ २ ॥
उप्तां तु तां समवलोक्य निजेन पित्रा विद्यालतां नृपतिमाधवसिंहवीरः ॥
संजीवनोदिपरिरक्षणदत्तचित्तः संवर्धयत्यनिशमात्मयशोभिवृद्ध्यै ॥ ३ ॥
अर्जुनयशसो जिष्णोः क्षितिपतितिलकस्य यस्य धात्रैव ॥
रचितो नन्दकिशोरो नन्दकिशोरोपमः सचिवः ॥ ४ ॥
कुदालवदरीलालगोदागोविन्दिकासुतः । शिवदत्तो निरुक्तेऽपि क्वचिद्वक्तुं समुद्यतः ॥

---

१ "दधिमथ्याः परं क्षेत्रं पुष्करादष्टयोजनम् ।" इत्युक्तेः पुष्कराद् द्वात्रिंशत्कोशान्तरे कौबेर्यां वर्तते ॥ २ दाधिमथशब्दस्यैव प्राकृतं नाम "दाहिमह" इति प्रसिद्धम् ॥ एतन्नाम संस्कृतमपि शत्रुचेतोदाहिमहत्वेन ॥ ३ जन इति कर्तृपदमभ्याहार्यम् । तथा च " जनो लोकः सदा मे जयपत्तनं पण्डितभूयस्त्वेन वाराणसीतुल्यमाचरतु " इत्यवायनकर्म ॥ ४ संजीवनं मासिकवृत्तिदानं जलं च । संजीवनः पाठशालाध्यक्षश्च ॥ ५ नन्दकिशोरसिंहो गौडक्षत्रियः पितृपूज्यपादरामकृष्णभक्तानुनयो जयपुरमहाराजप्रधानमन्त्री ॥

---

१ अस्मिन् क्षेत्रे १४४ ग्रामा आसन् । तन्मूलकत्वेनैव 'कुदाल–सोटवाल–गोठड़ावाल–' इत्यादयो दाधिमथावान्तरभेदाः । एतत्क्षेत्रजाताः सर्वेऽपि वर्णा 'दाहिमह–दाहिमा–दाइमा–दायमा' इति शब्दैः प्रसिद्धाः । उपलभ्यन्ते च स्वकारणभूतग्रामनामख्याताः क्वचिद्ग्रामेषु ॥

# पूर्वषट्के प्रथमोऽध्यायः १.

## अथ व्याख्योपोद्घातः ।

॥ श्रीगणेशाय नमः ॥

आदितः पाणिनीयं तु शिक्षा ज्योतिस्ततश्छन्दः ।
पश्चाध्यायी निघण्टोश्च निरुक्तमुपरि स्थितम् ॥
प्रणम्य तत्प्रवक्ष्यामि रुद्रायामिततेजसे ।
स मे दिशतु सुप्रीतो वाग्धियोः शिष्टसम्मतिम् ॥

अथ किमर्थं वेदो वेदाङ्गानि च प्रवृत्तानि ? । सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति वेदः प्रवृत्तः । तत्परिज्ञानाय वेदाङ्गानि प्रवृत्तानि । तानि पुनरमूनि प्रतिनियतार्थविषयवृत्त्या वेदमास्कन्दन्ति । तद्यथा—

शिक्षा—तावत् "आत्मा बुद्ध्या समेत्यार्थान्"—इत्येवमादिना क्रमेण स्वरव्यञ्जनाभिव्यक्तिलक्षणम् । पूर्वाह्णमध्यन्दिनापराह्णेषु यथाध्येयम्, अधीतस्य च स्वरसौष्ठवयुक्तस्य यज्ञकर्मणि प्रयोगः—इत्येवमादि अर्थजातं निरुवाच । तथा ह्यधीतः प्रयुज्यमानश्चापूर्वाङ्गभावाय नान्यथेत्येवमर्थवत्ता शिक्षायाः । एवं ह्याह--

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ शि० ५२" इति ।

वेदाध्ययनानुषङ्गतश्चेतिहासपुराणशास्त्राणां लौकिकानां ग्रन्थविस्तररचनानामत एवाध्ययनपरिज्ञानम् ॥

शिक्षाऽधिगताध्ययनविधेर्वेदस्याक्षरकोशपादव्यवस्थालक्षणपरिज्ञाने छन्दोविचितिराद्रियते। इयताक्षरकोशेनेयद्भिः पादैर्गायत्री, इयद्भिस्त्रिष्टुप्, इति । न हि अविज्ञातच्छन्दसा प्रयुज्यमानो मन्त्रः कर्मण्यार्द्धकैः स्यात् । एवं ह्याह—"यो हवा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रमीयते वा पापीयान् भवति यातयामान्यस्य च्छन्दांसि भवन्ति"—इति । अतोऽनुषङ्गतो वक्त्रादिलक्षणपरिज्ञानं लोकेऽत्र लौकिकमिति ह्याह ॥

सम्यगधीतस्य परिज्ञातच्छन्दसोऽमुष्मिन् कर्मणि विनियोग इति कल्प आद्रियते । तद्यथा—इषे त्वेति च्छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टीति । न हि कल्पानभिज्ञः प्रयोगान् विजानीयादिति॥

श्रुतिचोदितकर्माङ्गभूतकालपरिज्ञानाय ज्यौतिषम् । अनुषङ्गतश्चातोपि प्राणिनां शुभाशुभकर्मफलविपाककालपरिज्ञानम् ॥

---

१ निघण्टुश्च ॥ २ 'स्मृतिम्' ॥ ३ 'ण्यार्धुकः' ॥ ४ 'गर्तं वा पात्यते वा प्रमीयते' ॥ ५ 'धीतपारे' ॥

व्याकरणाद्विभक्त्यादिपरिज्ञानम् । एवं ह्याह–"प्रयाजाः सविभक्तिकाः कर्त्तव्याः" तथा चेदं दर्शयति–"संख्यादयो न विवर्द्धन्ते"–इति । न च व्याकरणानभिज्ञो विभक्तीर्जानीयादूहितुं वा मन्त्रान् । तत एव चानुषङ्गतो लोके लौकिकलक्षणपरिज्ञानमेवं छन्दस्येवं भाषायामिति प्रविभागो नान्तरीयकोऽनन्तरेण व्यवस्थितः ॥

अत उक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्माङ्गभूतकालस्योपदर्शितलक्षणस्यैतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानम् । तद्गुणः शब्दः । स चेतरेषु व्याकरणादिषु चिन्त्यते । कल्पे खल्वपि विनियोगश्चिन्त्यते । स च पुनरर्थाभिधानवशेन मन्त्राणाम् । यो यमर्थमभिधानेन संस्कर्त्तुं समर्थो मन्त्रः, स तत्र विनियुज्यते । तदुक्तं–"अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् ३, २, १ "–इति । न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा बाह्यं शास्त्रमस्ति, तात्पर्येण यदशेषान् शब्दान् निर्ब्रूयात् । यदपि च क्वचित् क्वचिदन्यशास्त्रे शब्दनिर्वचनम्, अत एव तदित्युपलक्ष्यम्[2] ॥ यथा शब्दलक्षणपरिज्ञानं[3] सर्वशास्त्रेषु व्याकरणात्, एवं शब्दार्थनिर्वचनपरिज्ञानं निरुक्तात् । वस्तुमात्रमेव हि इतरेषु शास्त्रेषु स्वाभिमतबुद्धिविषयमेव किञ्चिच्चिन्त्यते ॥

ब्राह्मणमपि च विध्यर्थवादरूपमशेषेमन्त्रार्थशेषभूतमेव । मन्त्रब्राह्मणार्थपरिज्ञानबद्धश्चाध्यात्माधिदैवाधिभूतपरिज्ञानद्वारेण धर्मार्थकाममोक्षाख्योऽखिलपुरुषार्थः । न चानिरुक्तो मन्त्रार्थो व्याख्यातव्य इति ॥ तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमित्युपपन्नम् ॥

अथास्यैवमखिलपुरुषार्थोपकारवृत्तिसमर्थस्य संग्रहः ॥

तद्यथा–नामाख्यातोपसर्गनिपातलक्षणम्[6] ( १ ), भावविकारलक्षणम् ( २ ), नामान्याख्यातजानि, न सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणम् ( ३ ), सर्वाण्याख्यातजानि कानिचिदेवानेकधातुजान्यपीति मन्त्राणामर्थवत्त्वानर्थकत्वं विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्तावधारणम् (४), पदविभागपरिज्ञानप्रतिज्ञा तदवबोधानलम्बित्वप्रदर्शनाय (५), आदिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु मन्त्रेषु याज्ञिकपरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा ( ६ ), अर्थज्ञप्रशंसा ( ७ ), अनर्थज्ञावधीरणम् ( ८ ), वेदवेदाङ्गव्यूहः ( ९ ), सप्रयोजननिघण्टुसमाम्नायविरचनम् ( १० ), प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्रविभागलक्षणम् ( ११ ), निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशोऽर्थप्राधान्यात् ( १२ ), लोपो-

---

१ 'तथाचोहं' २ 'लक्षणम्' ॥ ३ शब्दसाधुत्वान्वाख्यापकं सूत्रादीत्यर्थः ॥ ४ 'विध्यर्थवादानुवादरूप' इत्येवं पाठो भवेत् 'विभागश्च ब्राह्मणवाक्यानां त्रिविधः "विध्यर्थवादानुवादवचनविनियोगात्" ( २।१।६१। )' इति न्यायदर्शनदर्शनात् ॥ वक्ष्यति निरुक्तकारोपि–'यथो एतत् ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः स भवति' इति ॥ ५ 'मशेषं' ॥ ६ इतः प्राक् आरम्भे निघण्टुसमाख्यानामको विषयोऽपि ज्ञातव्यः ॥

list has been handed down as tradition

पधाविकारवर्णलोपविपर्ययोपदेशेन सामर्थ्यप्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोप-विपर्ययाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरणचिन्ता ( १३ ), अन्तस्थान्तर्धातुनिमित्तेन सम्प्रसार्य्यासम्प्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः ( १४ ), भाषिकप्रायोवृ-त्तिभ्यो नैगमशब्दार्थप्रसिद्धिः ( १५ ), नैगमप्रायोवृत्तिभ्यो भाषि-कशब्दार्थप्रसिद्धिः ( १६ ), देशव्यवस्थया शब्दरूढ्युपदेशः ( १७ ), तद्धितसमासनामनिर्वचनलक्षणम् ( १८ ), शिष्यलक्षणम् ( १९ ), विशेषेण व्याख्यया तत्त्वपर्यायभेदसङ्ख्यासन्दिग्धोदाहरणनिर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम् ( २० ), अनेकार्थानवगतसंस्कारानुक्रमणम् ( २१ ), परोक्ष-कृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम् ( २२ ), स्तुत्याशीःशपथाभिशापाभिख्यापरिदेवनानिन्दा-प्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेशः ( २३ ), निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोप-परीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम् ( २४ ), इतरेतरजन्मत्वम् ( २५ ), स्थानत्रयभे-दशः (तः) तिसृणामेकैकस्या माहाभाग्यकृतोऽनेकनामधेयप्रतिलम्भः (२६), पृथगभिधानं तू-त्पत्तिसम्बन्धाद्वा ( २७ ), देवतानामाकारचिन्तनम् ( २८ ), भक्तिसाहचर्य्यसंस्तवकर्म-सूक्तभाक्त्वहविर्भाक्त्वव्यञ्जनभाक्त्वानि ( २८ )–( ३३ ), पृथिव्यन्तरिक्षद्युस्थानदेवतानाम-भिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणम् ( ३४ ), तन्निर्वचनविचारोपपत्त्यवधारणानु-क्रमेण व्याख्याय दैवतप्रकरणनिर्णयः ( ३५ ), विद्यापारप्राप्त्युपायोपदेशः ( ३६ ), मन्त्रार्थनिर्वचनद्वारेण देवताभिधाननिर्वचनफलं देवताताद्गाव्यम् ( ३७ ),—इत्येष समासतो निरुक्तशास्त्रचिन्ताविषयः ॥

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः । सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाच्यार्थ-सामर्थ्यादभिधेयानुन्नीयोन्नीय मन्त्रार्थाववोधाय छन्दोभ्यः समाहृत्यसमाहृत्य समाम्नाता । सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथा यूथापत्रस्ता गौर्गोधर्मा इति ॥

अयञ्च तस्या द्वादशाध्यायी भाष्यविस्तरः । तस्य इदमादिवाक्यम्—
(भक्ति प्रकाशो टीका नोः)

## ॥ हरिः ॐ ॥ समाम्नायः समाम्नातः स व्याख्यातव्यः ॥ १ ॥

"समाम्नायः समाम्नातः" इति । गवादिर्देवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः । समभ्यस्यते मर्य्यादयाऽयमिति

१ 'रूपव्यपदेशः' ॥ २ 'विशेषव्याख्यया' 'विशेषं व्याख्याय' ॥ ३ 'भेकैकस्य' ॥ ४ 'धानस्तुतिसं' ॥ ५ 'गौरादिदेव' ॥ ६ 'यथा यूथापत्रस्तर्हि गौ०' 'यथा यथापन्नस्ता गौ' ॥ ७ 'सजातीयैः कुलं यूथं तिरश्चाम्' इति कोशेन सजातीयतिर्यक्समूहिसजातीयत्वेन गोयूथस्य गोधर्मत्वेन, यूथादपत्रस्तापि गौर्गोधर्मैव तथेति भावः ॥ ८ 'इयं च' ॥ ९ 'तस्या' ॥



A compilation of collected words... handed down from generation to generation (teaching)

समाम्नायः । स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायीशास्त्रसंग्रहभावेन एकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः ॥

तस्य किमिति ? **"स व्याख्यातव्यः"** । स च योऽसमाम्नातः छन्दस्येवावस्थितो गवादिरन्यैर्वा निरुक्तैर्यः समाम्नातः, अयं चैतस्मिन्निरुक्ते, स एष उभयलक्षणोऽपि व्याख्यातव्यः ॥

आह—कथमेतद्गम्यते—असमाम्नातव्याख्यानमप्यत्राभिप्रेतमिति ? समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति ? ॥ उच्यते—निर्वचनलक्षणोपदेशात् । निर्वचनप्रसक्तानाञ्च मृगकर्णदक्षिणलक्ष्मीनिघण्टुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशात् ज्ञायते—असमाम्नातव्याख्यानमप्यत्राभिमतम्—इति ॥ यत्पुनरेतदुक्तम्—समाम्नानार्हाणां वा किमर्थमसमाम्नानम्—इति । अत्र ब्रूमः,—न हि समाम्नानार्हाणामन्तोऽस्ति, तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात्, अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत । शक्यश्च तावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमवायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगार्षच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु शब्दसमुदायः समाम्नातः। तस्मादुपपन्नमसमाम्नातव्याख्यानमप्यत्राभिमतमिति, असमाम्नानञ्च सर्वेषां शास्त्रातिगौरवभयादिति ॥ **"व्याख्यातव्यः"** विभज्य इमान्यत्र नामानि, इमान्याख्यातानि, उपसर्गा इमे, निपाता इमे, इदं सामान्यलक्षणम्, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगतसंस्काराणि, इदमभिधानम्, इदमभिधेयम्, इदमभिधानस्य निर्वचनमित्येवंविधया मर्य्यादया परिपाट्या यथा समाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ॥१।१।१॥

## तमिमं समाम्नायं निघण्टव इत्याचक्षते ॥ २ ॥

**"तमिमं समाम्नायं निघण्टव इत्याचक्षते"** ।[१] तं च योऽसमाम्नातश्छन्दस्येवावस्थितो गवादिरन्यैर्वा निरुक्तैः समाम्नातः, तमिमं च 'निघण्टवः' इत्याचक्षते । अन्येऽप्याचार्या इति वाक्यशेषः । निरूढा हीयमेतस्मिंश्छन्दःसमुदाये संज्ञेत्यभिप्रायः ॥ १।१।२ ॥

( अथ निघण्टुसमाख्याधिकरणम् )

## निघण्टवः कस्मान्निगमा इमे भवन्ति ॥ ३ ॥

**"निघण्टवः कस्मात्"**—इति निघण्टुशब्दव्युत्पिपादयिषया प्रश्नः ॥ निर्विवक्षयेदमाह—**" निगमा इमे भवन्ति "** । येष्वभिधाननिर्वचनप्रारम्भकेष्वाचार्यः अयं यास्को निरुक्तकारः कस्माच्छब्दमुत्तरत्र न कुर्यात्, तेष्वपि व्याख्याकाले कस्मादिति शब्दः समुत्पाद्यः । तथाहि व्याख्यासाफल्यं भवति ॥ **निगमा इमे भवन्ति** । निश्चयेनाधिकं वा निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति ज्ञापयन्ति, ततो 'निगम'संज्ञा निघण्टव एव इमे भवन्ति ॥ १ । १ । ३ ॥

---

१ 'असमानव्या०' इत्येवमासीत् ॥ २ [illegible] ॥

## छन्दोभ्यः समाहृत्यसमाहृत्य समाम्नाताः ॥ ४ ॥

आह—कः पुनरेतेषु विशेषो येनैत एव ज्ञापयन्तीति ? ॥ उच्यते—यस्मादेते गवादयः "छन्दोभ्यः समाहृत्यसमाहृत्य समाम्नाताः" ॥ छन्दांसि मन्त्राः तेभ्य उपलक्षितसामर्थ्याः समाहृत्य ग्रन्थीकृता इत्यर्थः ॥ आह—'कस्मात्पुनरेतावन्त एव ग्रन्थीकृताः' इति॥ उच्यते—इतो यस्मादेतैरेव छन्दस्यवस्थितैरभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनियोगार्षच्छन्दोदैवतनिदानविदामपि सतां मन्त्रार्थपरिज्ञानायोद्यमभङ्गः क्रियते, दुष्परिज्ञानत्वात् तेषाम्, एतेषु परिज्ञातेषु अप्रतिबन्धेन शक्यते मन्त्रार्थः परिज्ञातुमिति अत उच्यते त एव ज्ञापका भवन्तीति । अतश्चैत एवोन्नीतसामर्थ्याः समाहृत्यसमाहृत्य समाम्नाता इति समाम्नानमात्रमेव दर्शयति । प्रकरणगताश्च नित्या एवैत इति गम्यते ॥ १ । १ । ४ ॥

## ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः ॥ ५ ॥

"ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः" । उदाहृताः समाम्नाताः निर्वचनप्रसङ्गतो निरुच्यन्ते । य एते समाम्नाता गवादयः त एते मन्त्रार्थनिगमयितृत्वादुभयेऽपि निगन्तवः सन्तो निगमनाद्धेतोर्निघण्टव उच्यन्त इत्यौपमन्यवः । इत्येवमर्थनिगमयितृत्वान्निगन्तव एते सम्पन्नाः सन्तोऽतिपरोक्षवृत्तिना शब्देन गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं कृत्वा वर्णव्यापत्त्यादिलक्षणम् । अथाप्यादिविपर्यय इत्येवमादि तदेतत्परोक्षातिपरोक्षवृत्तिषु यथासम्भवं द्रष्टव्यम् ॥ त्रिविधा हि शब्दव्यवस्था—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च । तत्रोक्तक्रियाः प्रत्यक्षवृत्तयः, अन्तर्लीनक्रियाः परोक्षवृत्तयः, अतिपरोक्षवृत्तिषु शब्देषु निर्वचनाभ्युपायः । तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः । तद्यथा—निघण्टव इत्यतिपरोक्षवृत्तिः निगन्तव इति परोक्षवृत्तिः, निगमयितार इति प्रत्यक्षवृत्तिः । यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते । उक्तञ्च—

> "वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
> धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥"

वक्ष्यति चायमपि—वर्णविपर्ययवर्णव्यापत्तिलक्षणम् । त एते निगन्तवः सन्तो निघण्टव उच्यन्ते इत्येवमतिपरोक्षवृत्तयो निर्वक्तव्याः॥ प्रायेण चोणादिषु परोक्षवृत्तयः शब्दाश्चिन्त्यन्ते । तत्र तेषां लक्षणमुपेक्षितव्यम् । येषामपि लक्षणं नास्ति, तेषामपि तत्र कल्प्यम् । अपरिसमाप्ता ह्युणादय इति लक्षणविदः प्रतिजानते । सर्वथापि लक्षणासम्भवे पृषोदरादिपाठसिद्धिरेव द्रष्टव्या । तत्र हि यथाध्ययनमेव शब्दाः साधीयांसो भवन्त्यभिव्याहारानभिघातायेति



१ 'समाम्नाय' ॥ २ 'शब्देष्वेष नि०' ॥

हि लक्षणविदो मन्यन्ते इत्यौपमन्यवः । एवमौपमन्यव आचार्य्यो मन्यत इति वाक्य-शेषः । उपरतमन्युरुपमन्युस्तस्यापत्यमौपमन्यवः । कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ॥ १ । १ । ५ ॥

## अपि वाऽऽहननादेव स्युः समाहता भवन्ति ॥ ६ ॥

"अपि वाऽऽहननादेव स्युः समाहता भवन्ति" । अपि चैवं यथोक्तम् । अपि चैवमन्यथा निघण्टवः स्युः ॥ कथमिति ? । आहननादेव । न निगमनादित्यभिप्रायः । विद्यमानमपि निगमनमविवक्षितमेतस्मिन् पक्षे । अनेकक्रियायोगेऽपि हि सति कांचिदेव क्रियामङ्गीकृत्य नामधेयप्रतिलम्भो भवति । तदुत्तरत्र वक्ष्यामः ॥ आह–किमेतेष्वाहतमिति ? । उच्यते–समाहता भवन्ति । समः स्थाने नीत्येष नियुक्तः । दर्शयिष्यति चायमुपसर्ग-व्यत्ययं निरित्येष समित्येतस्य स्थाने इति । आङ्विद्यमान एवाध्याहृतो मर्यादार्थप्रकाश-नाय । हन्तेः पाठार्थे वर्तमानस्यानेकार्थत्वाद्धातूनां वर्णव्यापत्त्या ओघशब्दवत् हकारस्थाने घकारः, तकारस्य टकारः ॥ अथ कोऽर्थः ? ॥ एतस्मिन् पञ्चाध्यायीसंग्रहे मर्यादया पठिता ह्येते भवन्ति, तस्मात्समाहताः समाहन्तव एते सन्त उपसर्गव्यत्ययोपसर्गाध्याहारवर्णव्यापत्ति-भिर्निघण्टव इत्युच्यन्ते ॥ प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः । एवं हि वक्तारो भवन्ति– 'ब्राह्मणे इदमाहतम्' 'सूत्रे इदमाहतम्'–इति । अर्थप्राधान्यादर्थनिर्वचनवशेन शब्द-विपरिणामोऽयं प्रदर्शितः ॥ १ । १ । ६ ॥

## यद्वा समाहता भवन्ति ॥ ७ ॥

"यद्वा समाहता भवन्ति" । पूर्ववदेवोपसर्गव्यत्यय उपसर्गाध्याहारोऽत्रापि । धातुस्तु हरतिरत्र । यत् यस्मादित्यर्थः । यस्माद्वा एते समाहता भवन्ति च्छन्दोभ्यः, तस्मात् समाह-रणक्रियायोगात् समाहर्त्तवः एते समाहताः सन्तः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेण निघण्टव इत्युच्यन्ते । एतस्मिन्नपि निगमनसमाहननक्रिये निघण्टुषु विद्यमाने अर्थविवक्षिते कृत्वा समाहरणक्रियायोगहेतुको नामधेयप्रतिलम्भ उक्तः ॥ एवमेष निघण्टुशब्दो गसेवैकोपसर्गात्, हन्तिहरतिभ्यां वा द्व्युपसर्गाभ्यां निरुक्तः ॥

आह,–किमयं पुनरतिमहान् यत्न एकस्मिन्नभिधाने अनेकधात्वर्थनिर्वचनकृत इति ? ॥ उच्यते–इह तावत् 'सर्वाण्याख्यातजानि नामानि' इति सिद्धान्तः । सत्याख्यातजत्वे-ऽभिधेयस्था या क्रिया लक्ष्यते, तदभिधानसमर्थे परोक्षवृत्तौ वा तदभिधायिनि रूढिशब्दे धातुरुपेक्षतः । स च पुनः स्वरवर्णक्रियासामान्येन । तत्रैवं सति रूढिशब्दे यावन्तो धातवः स्वलिङ्गं रूढिगतं दर्शयन्ति, तावतः संगृह्य स रूढिशब्दो निर्वाच्यः ॥ किं कारणम् ? विशेषलक्षणव्यवस्थाभावात् । न हि तत्र विशेषलक्षणव्यवस्था काचिदस्ति ययैकोऽवतिष्ठेत, अन्ये व्यावर्त्तेरन् ॥ अपि चोक्तं वार्तिककारेण–

१ 'रूढ०' ॥ २ 'लक्ष्यते' ॥ ३ 'दर्शयन्ति' ॥ ४ तावन्तः ॥

"यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयस्थस्तावद्भिर्गुणविग्रहः ॥" इति ।

रूढिशब्दगतानां च धातूनां रूढिशब्दवाच्येऽर्थे क्रियायोगे सति । एतदभावे तु क्रियाया रूढिशब्दे वर्त्तमानमपि धातुलिङ्गमकिञ्चित्करम् । स एव क्रियाभावः तदाश्रयनिर्वचनव्यावर्त्तको भवति । ता एताः तिस्रः क्रिया निगमनसमाहननसमाहरणाख्याः निघण्टुषु विद्यन्ते, तदभिधायिन्यपि च रूढिशब्दे निरुच्यमाने गमिर्हन्तिर्हरतिश्चाहम्पूर्विकया सन्निपत्य वदन्ति— 'ममानुरूपं मयैतं निर्ब्रूहि मयैतं निर्ब्रूहि' इति । गमिस्तत्र गकारमात्मीयं व्यापन्नं मन्यते घकारं, तथा हन्तिहरती हकारं व्यापन्नं घकारं मन्येते । तस्मादयमनेकैर्धात्वर्थैर्निघण्टुशब्दो निरुक्त एवञ्जातीयाभिधाननिर्वचनप्रदर्शनाय ॥ १ । १ । ७ ॥

इति निघण्टुपदनिर्वचनम् ।

---

( अथ पदचतुष्टयोद्देशकथनम् )

## तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्ग-निपाताश्च तानीमानि भवन्ति ॥ ८ ॥

"तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति" । इहैतावदेवोक्तम्—'समाम्नायो निघण्टवः' इति, समाम्नायशब्दपर्य्यायप्रसक्तस्य च निघण्टुशब्दस्य व्युत्पत्तिरुक्ता, न तु निघण्टुशब्दस्यार्थतत्त्वमवधारितं, तदवधार्य्यत इति पर्य्युपयुक्तस्तच्छब्दः ॥ किं पुनस्तदिति ? यान्येतानि चत्वारि पदजातानि, या एताश्चतस्रः पदजातयः ॥ क्व ? । लोके वेदे च ॥ कतमानि तानि ? । नामाख्याते चोपसर्गनिपाताश्च ॥ किं तेषामिति ? । इमानि चत्वार्य्यपि पदजातानि सन्त्येतस्मिञ्छास्त्रे ॥ किमिति निघण्टुसञ्ज्ञानि भवन्ति ?। ॥ नित्यमेवानुविधीयमानानि भवन्तीत्याह । न कदाचिदपि न भवन्ति, नित्यं भवन्त्येवेत्यभिप्रायः ॥ चत्वारीति चतुर्ग्रहणमवधारणार्थम् । नैकं पदजातं, यथार्थः पदमैन्द्राणामिति । नापि द्वे, यथा सुबन्तं तिङन्तं च । नापि त्रीणि, निपातोपसर्गावेकतः कृत्वा । नापि पञ्च, षड् वा, यथा गतिकर्मप्रचननीयभेदेनेति॥ पदजातानीति पदगणा इत्यर्थः । जातशब्दो हि गणे प्रसिद्धः । तद्यथा—गोजातमश्वजातमिति । तद्वदिहापि ॥ तत्र, नामपदगणः,—स्त्रीपुन्नपुंसकलिङ्गप्रविभागेन । तथाऽऽख्यातपदगणः,—कर्तृवचनभाववचनकर्मवचनप्रविभागेन । तथोपसर्गगणः,—आङादिः । तथा निपातगणः,—इवादिः । एवमभिप्रेत्योक्तं चत्वारि पदजातानीति ॥ अत्र नामाख्यातयोः पूर्वमभिधानं प्राधान्यात्, अप्राधान्यादुपसर्गनिपातानां पश्चात् । उभे अपि नामाख्याते निपातोपसर्गनिरपेक्षे अपि सती स्व-

---

१ 'रूढिशब्दनिरुच्य' इति मुद्रितमासीत् ॥ २ 'चनीयाथभे' ॥

मर्थं ब्रूतः । न तूपसर्गनिपातानां नामाख्यातनिरपेक्षाणामर्थोऽस्ति । वक्ष्यति हि,—"न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः"—इति ॥ वाच्येन चैते अर्थनार्थवती । द्योत्येनोपसर्गनिपाता इति वाग्प्राधान्यम् । नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति । तस्मादुपपन्नं भवति प्राधान्यान्नामाख्यातयोः पूर्वमभिधानम्, अप्राधान्याच्च पश्चादुपसर्गनिपातानामिति ॥ नामाख्याते इतीतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः समासेनाभिधानम् ॥ कथमितरेतराकाङ्क्षित्वमिति ? । यज्ञदत्त इति हि नामशब्दस्तावदेव साकाङ्क्षो भवति, यावत् पचति पठति इत्याद्याख्यातशब्दैर्न निराकाङ्क्षीक्रियत इति, तथा पचतीत्याख्यातशब्दस्तावदेव साकाङ्क्षो भवति यावन्न यज्ञदत्तशब्दैः, पचति यज्ञदत्त ओदनमिति । इतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः, समानकार्य्यत्वं चैतयोर्लक्ष्यते वाच्येनार्थेनार्थवत्त्वमित्यतः समस्येते ' नामाख्याते ' इति । नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात् । नामपदवाच्याश्रयक्रियोपलक्ष्यत्वाचाख्यातस्य पश्चान्निपातः ॥ उपसर्गनिपाता इति । उभयेषामुपसर्गनिपातानां नामाख्यातयोरर्थविशेषद्योतकत्वात्समानकार्य्यत्वमित्यतः समस्यन्ते । आख्यातसहयोगित्वादुपसर्गाणामाख्यातानन्तरं पाठः, परिशेषाणां निपातानां पश्चात् ॥ अपरिमिताश्च निपाता इति ॥ १ । १ । ८ ॥

( नामाख्यातलक्षणाधिकरणम् )

## तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि ॥ ९ ॥

"तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति" तत्र तस्मिन्, लोकवेदप्रसिद्धे पदचतुष्ट्ये निघण्टुशब्दसमानसंज्ञोपलक्षिते, ये ते नामाख्याते तयोस्तावदेतल्लक्षणं प्रदिशन्ति । कतमत्?। यदेतद्वक्ष्यमाणमित्यभिप्रायः । प्रदिशन्ति प्रविभज्येदं नाम्नां लक्षणम्, इदमाख्यातस्येत्येवं दिशन्ति उपदिशन्ति आचार्या इति वाक्यशेषः ॥

आह,—लक्षणोपदेशः कस्मात् ? । अनुक्रमणेनैव सिद्धत्वात् । अनुक्रमणेनैव हि वक्ष्यति "इमानि पृथिवीनामधेयान्येकविंशतिः ( २, ख. ७, ३ )" "हिरण्यनामान्युत्तराणि पञ्चदश (२,ख.१०,१)" "कान्तिकर्माण उत्तरे धातवोऽष्टादश (३,ख.९,३)", "गतिकर्माण उत्तरे धातवो द्वाविंशं शतम् ( ३, ख.९,१९ )"—इति । तत एव विज्ञास्याम इमानि नामानीमान्याख्यातानीति । तस्मादयमनर्थको लक्षणोपदेशः ? ॥ नानर्थकः ॥ कस्मात् ? । व्याप्ति हि लक्षणं समाम्नातान्यसमाम्नातानि च व्याप्य वर्त्तते ॥ यत्पुनरेतदुक्तमनुक्रमणादेव विज्ञास्याम इति । अत्र ब्रूमः—निर्देशोऽसौ न हि लक्षणम्,

---

१ 'उच्चार्यते इति शेषः' । २ 'वाक्यार्थो' इति मुद्रितमासीत् ॥ ३ 'अथापि' ॥

निर्देशश्च परिच्छिन्नविषयः ॥ स तर्हि किमर्थ इति ? । शास्त्रे रूपस्वभावोपप्रदर्शनार्थः ॥ तस्मादसमाम्नातार्थोऽयमादितो लक्षणोपदेशो युक्त इत्युपपन्नम् ॥

आह—तात्पर्येणैवेदमन्तरेण समाम्नातवदसमाम्नातानि कस्मान्नोपदिश्यन्ते, अपि च तथा सूपदिष्टानि भवन्तीति ? ॥

उच्यते—तथाह्युपदेशगौरवं भवति, ग्रहणशक्तिहानं[2] चापि ॥ तथा चोक्तम्—

"ऋषयोऽप्युपदेशस्य[3] नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥"—इति ।

तस्मादुपदेशगौरवभयाद् ग्रहणशक्तिहानदोषाच्च समानै[4]लक्षणोपदेशः क्रियते इति ॥

आह—किं पुनस्तल्लक्षणमिति?। उच्यते—"भावप्रधानमाख्यातं, सत्त्वप्रधानानि नामानि" । नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः पाकरागत्यागाख्यः[5] स यत्र प्रधानं, गुणभूता क्रिया, तदिदं भावप्रधानम् ॥ किं पुनस्तदिति? । आख्यातम् । आख्यायतेऽनेन गुणभावेन[1] वर्त्तमाना अनेककारकप्रविभक्ता स्फुरमाणेव[6] प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया तस्याश्च प्राधान्येन वर्त्तमानो भावः[2] स्वात्मलाभप्रधान इत्याख्यातम् ॥

आह—कथं पुनर्गुणभूता क्रियेति ? ॥ उच्यते—'तदर्थत्वात्' । तदर्था हि सा । भावार्था भावसिद्ध्यर्थमात्मलाभमनुभूय कारकेषु तण्डुलादौ पाकाख्यं भावमभिनिष्पाद्यावसितप्रयोजनैकदेश एव तिरो भवति । यस्य च यदर्थं आत्मलाभस्तत्तद्गुणभूतं भवति । भावसिद्ध्यर्थश्च क्रियाया आत्मलाभस्तस्माद्गुणभूतेति गम्यते । भावसिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती ॥

आह—कथं पुनः परोक्षा क्रियेति ? ॥ उच्यते—न हि सेन्द्रियाणामन्यतमेन स्वरूपस्था सती कदाचिदपि सन्निकृष्यते ॥ किं तर्हि ? । तदवसाने योऽभिनिष्पद्यते भावः, तेन लिङ्ग्यते—'नूनमभिनिर्वृत्ता क्रिया यया[7] भावोऽयमभिनिष्पादितः' इति ।

नाभिनिर्वृत्ता चेदभविष्यद् यथैव प्राक् क्रियानिर्वृत्तेर्नाभवदयं भावः, एवं सांप्रतमपि नाभविष्यत् । अस्ति चायम् । तस्मादभिनिर्वृत्ता क्रियेत्येवमनुमीयते ॥ तदेतदाख्यातं क्रियावाचकमपि सद्भावार्थत्वात् क्रियाया भावं प्रधानमुच्यते इति एवमेके मन्यन्ते ॥ एके पुनर्भावप्रधानमाख्यातमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते । प्रकृत्यर्थविशेषणं हि प्रत्ययार्था-

१ 'देशोपयुक्त' ॥ २ ग्रहणशक्तीति । प्रतिपत्त्यभ्युपायेत्यर्थः । व्याकरणमहाभाष्यकर्त्रा श्रीमता पतञ्जलिना स्पष्टमुक्तोयमर्थः—'अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः । एवं हि श्रूयते—बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः । न चान्तं जगाम' इत्यादिना संदर्भेण ॥ ३ 'ऋषयो ह्युपदेशस्य' इति मुद्रितमासीत् ॥ ४ समानेति समाम्नातासमाम्नातसाधारणेत्यर्थः ॥ ५ 'यागाख्यः' ॥ ६ 'स्फुरमाणप्रधा' ॥ ७ 'यथा' इत्यासीत् ॥ ८ 'सा क्रिया' इत्यवमासीत् ॥

दय इति। भावः, कर्म, क्रिया, धात्वर्थः, इत्यनर्थान्तरम्। स यत्र प्रधानम्, गुणभूतानि साधनानि तदिदं भावप्रधानम्॥ किं पुनस्तत्?। आख्यातम्। आख्यायन्ते स्त्रीपुन्नपुंसकानि क्रियागुणभावेन वर्त्तमानान्यनेन, क्रिया च तेषामुपरि प्राधान्येन वर्त्तमानेत्याख्यातम्॥

आह—कथं पुनरत्र क्रियायाः प्राधान्यमिति?। उच्यते—सा ह्यत्र शब्दवाच्या। अर्थगृहीतानि तत्साधनानीति। अतः प्राधान्यमत्र क्रियायाः॥ इतश्च प्राधान्यम्॥ कुतः?। 'विशेषप्रत्ययाधानात्'। पचतीति प्रथमपुरुषैकवचनपरस्मैपदान्ते आख्यातशब्दो वर्त्तमानकालकर्तृविषयो यत्किञ्चिदविवक्षितविशेषमेव पक्त्रादिसाधनमात्मन आश्रयभावेनोपलक्षयन्ननेकक्रियाशक्तिमत्यपि पक्त्रादौ साधने पचिक्रियायामेव विशेषेप्रत्ययमादधाति, नान्यासु क्रियासु। नापि विशिष्टे पक्त्रादौ साधने॥ यश्च यस्मिन्नर्थे विशेषेण वर्त्तते शब्दः, स एव तस्य प्रधानम्। विशेषेण च क्रियायामाख्यातशब्दो वर्त्तते, गुणभावेन कारके। तस्माद्विशेषप्रत्ययाधानाद्भावप्रधानमाख्यातमित्युपपन्नम्॥ अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः—'किं करोति देवदत्तः?' क्रियाख्यापनपरतयैव प्रत्याचष्टे—'पचति' इति। न त्वोदनमिति पूर्वमुक्त्वा ततः पचतीति ब्रवीति॥

अथ कथमुच्यते—'भावप्रधानमाख्यातम्' इति?। शृणु—अमूर्त्ता हि क्रिया निरुपाख्या। सा हि कारकैरभिव्यज्यमाना कारकशरीरेव सती शक्यते निर्देष्टुम्। इतरथा हि अशरीरा सती सा न गृह्येत, अग्रहणे च सति कथमिव निर्दिश्येत। तत्रैवं सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन् साधने विशिष्टमात्मीयं कार्य्यमारभते पाकाख्यं तदभिधानशब्दोपपदैव साक्षाद्ग्रहणासम्भवान्निर्दिश्यते। न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद्ग्रहणासम्भवः। तस्मादोदनकर्मकार्य्या देवदत्तकर्तृकौदनशब्दोपपदैव निर्दिश्यते—'ओदनं पचति देवदत्तः' इति। तत्राविवक्षितस्वार्थ ओदनशब्दः॥ अपि च क्रियाव्यापारपिपृच्छिषयैव पृष्टः—'किं करोति' इति, क्रियाव्यापारमात्रमेव प्रत्याचष्टे—'पचति' इति। ततः 'किम्' इति पर्य्यनुयुक्ते शब्दान्तरेणापाकरोति—'देवदत्त ओदनम्' इति। तस्माच्छब्दान्तरवाच्यत्वात् साधनस्य पचतीत्यत्र क्रियैव प्रधानमित्युपपन्नम्॥

यत् पुनरेतदुक्तम्—'ओदनमिति पूर्वमुक्त्वा' इति, तत्र ब्रूमः—स हि पर्य्यनुयुयुक्षां साधनगतां भाविनीमाशङ्कमानः पर्यनुयोगमात्मनो बुद्ध्यवस्थं कृत्वा तदपाकरणार्थमोदनमिति पूर्वं ब्रवीति॥ एवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्यनुयोगोऽनुक्तो

---

१ अतएव 'क्रियाप्रधानमाख्यातम्' इति व्याकरणमहाभाष्योक्तेन संवादोऽप्यस्मिन्निरुक्तवाक्ये संभवति। तथा च कर्तृप्रत्ययस्थले व्यापारप्राधान्यम्, कर्मप्रत्ययस्थले फलप्राधान्यं संगच्छते॥ २ 'विशेषेण'॥ ३ 'ख्यापन'॥ ४ 'सन्ती' इत्युपलभ्यते॥ ५ 'निर्दिष्टम्' इत्युपलभ्यते॥ ६ 'कर्मिका या'॥ ७ 'उत्तरयति' इत्यर्थः॥ ८ 'देवदत्तः' इत्यपपाठः, कर्मणः पर्यनुयोगे कर्मपदोपादानस्यैवावश्यकत्वात् कर्तुः पर्यनुयोगाभावे कर्तुः पर्यनुयोगस्यानावश्यकत्वम्॥

द्रष्टव्यः । तस्मात् पचतीति शब्दवाच्यत्वादत्र क्रियायाः, शब्दान्तरवाच्यत्वात् द्रव्यस्य, क्रियैव प्रधानामिति ॥

इतश्च न[2] द्रव्यप्रधानमाख्यातम् । 'एकस्मिन् वाक्ये द्वयोराख्यातयोरसमवायात्' । पचतिपठतीत्युभयोः प्राधान्यादितरेतरेण समवायो नास्ति । न हीतरशब्द इतरत्र गुणो भवति । 'द्रव्यशब्दे च समवायात्' समवैति द्रव्यशब्देनाख्यातशब्दः । पचति देवदत्त इत्युक्ते पचिक्रियागुणभूतो लक्ष्यते देवदत्तः । तस्मादुपपन्नं भावप्रधानमाख्यातमिति ॥ अपि चोक्तम्–

"क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते ।
त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते ॥" इति ।

तत् पुनरेतच्चतुष्प्रभेदमाख्यातं भवति–कर्त्तरि, भावे, कर्मणि, कर्मकर्त्तरि चेति । पचतीति कर्त्तरि । भूयते, पच्यते इति भावकर्मणोः । पच्यते स्वयमेवेति कर्मकर्त्तरि । चतुर्ष्वप्यविवक्षितावयवार्थानि द्रव्याण्यप्रधानानीति क्रिया एव प्रधानम् । तामभिदधत् तयैव लक्ष्यमाण आख्यातसञ्ज्ञो भवतीत्युक्तम् ॥

आख्यातजत्वान्नाम्नां प्रतिज्ञोक्रमं भित्वा पूर्वमाख्यातलक्षणमुक्तम्, पश्चान्नामलक्षणमुच्यते–किं पुनस्तत् ? । सत्त्वप्रधानानि नामानि । लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वम् । तथा लक्षणोपपत्तेः । तत्रेषु प्रधानं गुणभूता क्रिया नामान्येव तानि । नमन्त्याख्यातशब्दे गुणभावेन, नमन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितम्, एवमिहापि विद्यमानापि क्रिया अविवक्षिता द्रव्यपरत्वादस्य शब्दस्य । तद्धि क्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्त्तते ॥

आह–कथं पुनर्नाम्नि क्रिया विद्यत इति, विद्यमानापि वाऽविवक्षितेति ? ॥ उच्यते–प्रकृतिः, प्रत्ययः, विभक्तिरिति त्रेधा विभज्यमानमेतावदेवैतन्नाम । तत्र प्रकृतिर्धातुरित्येकोऽर्थः । धातुश्च पुनः क्रियावचनः । स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम् । यथावश्यं यत्रार्थस्तत्र तदभिधायकः शब्दः, यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति सम्बद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्यामिति । एवं तावत् क्रिया विद्यते ॥ यत् पुनरे-

---

१ 'तत्तद्द्रव्यस्य' ॥ २ 'श्च भावप्र०' ॥ ३ शब्द इति । क्रियाशब्द इतरत्र क्रियाशब्द इत्यर्थः ॥ तथा चोक्तं व्याकरणभाष्ये "एकतिङ् वाक्यम् ॥ न च समानवाक्ये द्वे तिङन्ते स्तः" इति ॥ पचति भवतीत्यादौ तु 'पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' 'क्रियापि कृत्रिमं कर्म' इति भाष्योक्त्या प्राधान्यमेकस्या एव क्रियायाः, न द्वयोरिति न विरोधः कुत्रापि इति भावः॥ ४ लिङ्गत इति । लिङ्गेनेत्यर्थः । तत्र लिङ्गस्यान्वयो नेति यावत् । लिङ्गान्वयस्य द्रव्य एवाङ्गीकारादिति भावः ॥ ५ क्रममिति । पूर्वनिपातप्रकरणानुसारेणैव सर्वत्र क्रमोऽङ्गीकार्य इति भावः ॥

तदुक्तं—विद्यमानापि क्रिया कथमविवक्षितेति ? । अत्र ब्रूमः,—नाम्नि यो धातुः स कृत्प्रत्ययोपजनितेन प्रातिपदिकेनाभिभूतक्रियाभिधानशक्तिः प्रातिपदिकान्तर्लीनवृत्तिरेव स्वमर्थमुद्भावयितुमशक्नुवन् प्रातिपदिकार्थमेवानुवर्त्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया । सा तु विद्यमानापि विगृह्यमाणे नाम्नि प्रातिपदिकनिबन्धनादुन्मुच्यमाना द्रव्यगतमर्थं प्रकाशयति, न प्राग्विग्रहादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते । तथा चोक्तम्—

"शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥"—इति ।

पुनश्चोक्तम्—

"अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥
निर्देशः कर्म करणं प्रदानमपकर्षणम् ।
स्वाम्यर्थोऽथाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ॥"—इति ।

स्त्रीपुन्नपुंसकभेदं निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य [२]बहुवचनेनोक्तं नामानीति ॥ अपरे पुनर्भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य । तेषां भावप्रधानता भवति । अतो भावप्रधानमाख्यातमित्युक्तम् । नाम्नोऽपि सत्ता द्रव्यं संख्या लिङ्गमित्येतेऽर्थाः । तेषां द्रव्यं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तम् ॥ १ । १ । ९ ॥

## तद्यत्रोभे भावप्रधाने भवतः ॥ १० ॥

एवमेके मन्यन्ते—"तद्यत्रोभे भावप्रधाने भवतः" । एवं तावदनयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वपदार्थोक्तावेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम् । अथ पुनर्यत्रैते उभे भवतः ॥ क्व च पुनरेते उभे भवतः ? । वाक्ये ॥ तत्र कस्य प्रधानमर्थः, कस्य गुणभूत इति ? । शृणु—भावप्रधाने भवतः, तस्य चिकीर्षितत्वात् । वाक्ये ह्याख्यातं प्रधानं तदर्थत्वात्, गुणभूतं नाम तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात् । एवं तावदाख्यातं वाक्ये प्रधानम् ॥ १ । १ । १० ॥

( भाववाचकप्रदर्शनम् )

## पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति—पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् ॥ ११ ॥

१ 'सकृत् प्रयोजयति [ स ] तेन' इति पाठे तु कृता कृत्संज्ञकप्रत्ययेन सहित इत्यर्थः । प्रयोजयति अर्थप्रकाशन उपयुज्य प्रातिपदिकसंज्ञायामुपयुक्तो भवति । अर्थं प्रकाशयतीति यावत् ॥ तेन कृदन्तधातुरूपेणेत्यर्थः ॥ २ वस्तुतस्तु स्वतन्त्रेच्छस्याचार्यस्येच्छैवात्र विनिगमिका' अन्यथा कालादिभेदेनाख्यातस्यापि तथात्वापत्तेः ॥

अथ पुनः कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते ?, किं वा तदाख्यातमिति ?। यतो लोकप्रसिद्धयैवोदाहरति—तत्प्रसिद्धत्वाच्छब्दार्थसम्बन्धस्य।

"पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्"। अपूर्वमनपरं सन्तमेकत्वात् पूर्वापरीभूतं पूर्वापरमिव पौर्वापर्येणाव्यवस्थितमेकमनेकासु क्रियासु आश्रितमुपानदधिनहनपूर्वोत्तरपदविहरणपथिभोजनशयनासनोदकपानाद्यास्वाश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्त्तमानं कस्मैचित् पृच्छते[1]—'किं करोति ?'। अन्य आचष्टे—'व्रजति' इति अविभक्त[2] [ कर्तृकम्, विभक्त ]—कर्तृकं द्वितीयमिति उदाहरणद्वयं भावद्वयोपप्रदर्शनार्थम्। उपक्रमप्रभृतीति। उपक्रम आरम्भस्तस्मादारभ्य॥ अपवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः॥

आह—अन्त्यासंनिधौ भावनिर्वृत्तिदर्शनादन्त्ययैव निवर्त्यत इति ?। शृणु—पूर्वासामभावे अन्त्यैव न स्यात्। पूर्वापेक्षं हि तस्या अन्त्यात्वम्। अपि च—प्राप्तिफलो हि व्रजतिः। न चैकया क्रिययाऽभिमतदेशान्तरे प्राप्तिरस्ति[3]। तस्मादुपक्रमाद्याभिः क्रियाभिरीषदभिनिष्पाद्यमानो भावोऽन्त्यायामभिसन्तिष्ठते। ततः संनिकर्षे गृह्यते, न त्वसावन्त्ययैव[4] निर्वृत्त इत्यन्ते गृहीतः। अपि च, प्रसिद्धमेतदुपक्रमादारभ्य यच्च व्रजितं, यच्च व्रज्यते, व्रजिष्यमाणं, तत्सर्वमेकीकृत्य वक्तारो भवन्ति—'व्रजति देवदत्तः' इति। न प्रसिद्धिरुपरोद्धुं न्याय्या। यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव शास्त्रेण क्रियते, नोत्पाद्यन्ते[5] शब्दाः, नाप्यर्थेषु विधीयन्ते। तस्मात् प्रसिद्धः[6] शास्त्रसमयोऽपि लौकिकप्रसिद्ध्यैव पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्॥ तस्मादुपपन्नमनेकक्रियाभिर्निर्वर्त्यमानो भाव आख्यातेनोच्यत इति॥ आह च—

---

१ 'किं करोति' इति पृच्छते कस्मैचित्—इत्यन्वयः॥ २ अविभक्तेति। भावाश्रयाभिन्नकर्तृकमित्यर्थः। कर्तृस्थभावकमिति यावत्॥ विभक्तेति। भावाश्रयभिन्नकर्तृकमित्यर्थः। कर्मस्थभावकमिति यावत्॥ 'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता' इति ह्युक्तदिशा पक्वापक्वतण्डुलेषु विशेषदर्शनात् पचिः कर्मस्थभावः। पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु विशेषादर्शनाद् व्रजिः कर्तृस्थभावः, अकर्मकाणां च कर्मणोऽसत्त्वादेव कर्तृस्थभावकत्वमेव इत्येवं भावद्वयोपप्रदर्शनार्थमुदाहरणद्वयमिति संदर्भार्थः॥ सपरिस्पन्दसाधनसाध्या क्रिया, अपरिस्पन्दसाधनसाध्यो भाव इत्यवान्तरभेदस्तु नापेक्षित इति भावः॥ ३ 'अस्मि' इति मुद्रितमासीत्॥ ४ 'अतस्तत्संनिः' ५ 'न्त्ययैवाभिनिर्वर्त्यत'॥ ६ नोत्पाद्यन्त इति। तथाचोक्तं व्याकरणमहाभाष्ये—"ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा—घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—'कुरु घटं कार्यमनेन करिष्यामि' इति। न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणं गत्वाह—'कुरु शब्दान् प्रयोक्ष्ये' इति। तावत्येवार्थमुपादाय शब्दान् प्रयुङ्क्ते" इति॥ ७ 'प्रसिद्ध'॥

"क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव।[1]
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः॥" इति॥१।१।११॥

## मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरिति॥ १२॥

"मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरिति"। कदाचित् तमेव भावं तथैवोपक्रमप्रभृत्यभिनिर्वर्त्तमानमपवर्गपर्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वरूपिणं लिङ्गसङ्ख्यायुक्तः सत्त्वनामभिराचष्टे॥

कथम्? "व्रज्या पक्तिरिति"। तत्रोक्तो विशेषः—"कृदभिहितो भावो द्रव्यवद्भवति"॥ सोऽयं प्रयुक्तस्य लक्षणस्य प्रयोगमपेक्ष्य क्वचिदपवादः॥ आह च—

"क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात्।
संख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः॥"—इति॥

आह—कस्मात् पुनरेक एव भावस्तिङन्तेन कृदन्तेन चान्यथोच्यत इति?। उच्यते—शब्दस्वाभाव्यादृते नान्यदत्र प्रयोजकमस्ति॥ अपिचोक्तमस्माभिः—'अवस्थितानामेव शब्दानामभिधानाभिधेयसम्बन्धेनाभिसम्बद्धानामेव नित्यमन्वाख्यानमात्रमेव क्रियते। नोत्पाद्यन्तेऽर्थेषु वा विधीयन्ते शब्दाः' इति॥ व्रज्यापक्तिरित्युदाहरणद्वयमुक्तप्रयोजनम्॥१।१।१२॥

(सत्त्वोपदेशनिरूपणम्)

## अद इति सत्त्वानामुपदेशः॥ १३॥

"अद इति सत्त्वानामुपदेशः" इति। भावोऽधिकृतः। स च पुनः सत्त्वभूतो नेतरः, यतस्तत्सम्बन्धेनैव नाम्नो यदवशिष्यते तदुच्यते॥ किं पुनस्तत्?। सामान्यविशेषवाचित्वम्। तत्र अद[3] इति सत्त्वानामुपदेशः। 'सामान्यतः' इति वाक्यशेषः॥ सर्वेषामपि सत्त्वानामध्ययने प्राप्ते लिङ्गा[4]विशिष्टत्वादिदमेवैकमुदाहृतमुपप्रदर्शनार्थम्॥१।१।१३॥

## गौरश्वः पुरुषो हस्तीति॥ १४॥

---

[1] तथा चोक्तं हरिणापि—"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥" इति॥ तत्र समूहव्यवहारो बौद्ध एव न वास्तव इति सूचयितुमेवेवशब्दः प्रयुक्तः॥ [2] हरिणाप्युक्तम्—'सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते। असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते॥' इति॥ [3] अद इति। 'सर्वनाम च सामान्यवाचि' इति भाष्योक्तेः सर्वनाम्नामुपलक्षणम्। एवंच सर्वनामसञ्ज्ञकेनोपलक्ष्यमाणत्वमेव द्रव्यत्वमितियावत्॥ तथा चोक्तम्—'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥' इति॥
[4] लिङ्गविशेषशून्यत्वात्। सामान्यलिङ्गत्वादिति भावः॥

आह—विशेषोपदेशः कथमिति? ॥ उच्यते—"गौरश्वः पुरुषो हस्तीति" । 'सत्त्वानां विशेषोपदेशः' इति वाक्यशेषः ॥ सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम् । सामान्यवृत्त्या विशेषवृत्त्या चोभयथा शब्दः प्रवर्त्तत इत्युभयमुपदर्शितम् ॥ १ । १ । १४ ॥

( भावोपदेशनिरूपणम् )

## भवतीति भावस्य ॥ १५ ॥

"भवतीति भावस्य" सामान्येनोपदेशः[1] । अत्र हि सर्वेषां सत्तावाचिनामध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः । विद्यमानत्वमेवानुभवन्तः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसम्बन्ध्यन्ते । तस्माद्भवतीति सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव निरुपपदेन भवतिशब्देनोच्यत इत्युपपन्नं भवति सामान्यवाचित्वम् ॥ १ । १ । १५ ॥

## आस्ते शेते व्रजति तिष्ठतीति ॥ १६ ॥

विशेषनिर्देशः कथमिति ? । उच्यते—" आस्ते शेते व्रजति तिष्ठतीति " । सकर्मकाकर्मकोपदर्शनार्थमुभयेषामुदाहरणम् ॥ १ । १ । १६ ॥

( शब्दानित्यत्ववादिन आक्षेपः )

## इन्द्रियनित्यं वचनमौदुम्बरायणः ॥ १७ ॥ १ ॥

## तत्र चतुष्ट्वं नोपपद्यते ॥ १ ॥

"इन्द्रियनित्यं वचनमौदुम्बरायणस्तत्र चतुष्ट्वं नोपपद्यते" । आह—इह तावदुक्तं पदचतुष्टयम् । भाववचनता, द्रव्यवचनता, गुणभावः, पूर्वापरीभावः, सामान्यवाचित्वं, विशेषवाचित्वमिति नोपपद्यते । कस्मात्? । 'वचनानित्यत्वात्' यतोऽनित्यं वचनम् ॥ कथमनित्यं वचनमिति ? ॥ उच्यते—इन्द्रियनित्यं वचनमिति । इन्द्र आत्मा, स येन ईयते लिङ्ग्यते अनुमीयते च—'अस्त्यसावात्मा कर्त्ता, यस्येदं करणम्, नाकर्तृकं करणमस्ति' इति, तदिन्द्रियम् । तस्मिन्नित्यमिन्द्रियनित्यम् ॥ किं पुनस्तत् ? । वचनम् । उच्यते अनेनेति वचनं वाक्यमित्यर्थः ॥ कतमत् ? । यदेतन्नामाख्यातोपसर्गनिपातात्मकम् ॥ कः पुनरेवमाह—'इन्द्रियनित्यं वचनम्' इति । उच्यते—औदुम्बरायणः आचार्य्यो मन्यत इति वाक्यशेषः । उदुम्बरस्यापत्यमौदुम्बरिः, तस्यापत्यमौदुम्बरायणः ॥ १ । १ । १७ ॥ *

---

१ सामान्येनेति । अत एव 'भाववचनो धातुः' इति न्यासे सर्वेषां धातुसंज्ञा भवत्यनुप्रयोगश्च सिध्यतीति भावः ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां प्रथमः खण्डः ॥ १ ॥' इति द्रष्टव्यमग्रिमप्रथमाध्यायान्तखण्डप्रारम्भगणनासंवादात् ॥ परंतु युज्यते प्रारम्भो द्वितीयखण्डस्य "इन्द्रियनित्यम्—" इत्यत एव ॥

आह—ततः किमिति ? ॥ उच्यते—तत्र तस्मिन् वाक्ये एवमिन्द्रियानित्ये सति यदेतत् पदचतुष्टयमुक्तम्, एतन्नोपपद्यते॥ कस्मात् ? । शृणु—यावदेव वक्तुर्वागिन्द्रिये श्रोतुश्च श्रोत्रेन्द्रिये वचनम्, तावदेव तदस्तीति शक्यते वक्तुम्, प्रच्युतं च नास्ति ॥ अपि च—वाक्यमपि । वाक्यं समस्तमुद्धृतं तदिन्द्रिये नावतिष्ठते यदवयवभूतानि पदान्यवस्थितानि परिसंख्यातुम्, न च विनष्टाविनष्टयोः पदयोः सह परिसंख्यानमस्ति ॥ तस्माद्वचनानित्यत्वात् पदचतुष्टयानुपपत्तिरित्युपपन्नम् ॥ १ । २ । १ ॥

## (अ) युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः ॥ २ ॥

किं चान्यत्—" अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः " । वाशब्दः समुच्चयार्थः " वा विकल्पोपमानद्वन्द्वसमुच्चयार्थेषु " इति हि निपातविदः पठन्ति । वक्ष्यति चायमपि—"वेति विचारणार्थे"—इत्युपक्रम्य "अथापि समुच्चयार्थे भवति" ( १,ख० ४-५,१ ) इति ॥ एवं चैतेषामयुगपदुत्पन्नानां शब्दानां वाक्यावयवभूतानां योऽयमितरेतरोपदेशः इतरेतरगुणप्रधानभावो नाम्न आख्यातं प्रति गुणभावेनोपदेशः, आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशः । अयं च 'नोपपद्यते' इत्यनुवर्त्तते ॥ किं कारणम्? । न हि विनष्टं नाम गुणभावमियादाख्याते, नापि नष्टमाख्यातं प्रधानभावमियान्नाम्नि । न हि विनष्टाविनष्टयोरितरेतरगुणप्रधानभावोऽस्ति ॥ १ । २ । २ ॥

## शास्त्रकृतो योगश्च ॥ ३ ॥

किं चान्यत्—" शास्त्रकृतो योगश्च " । यश्चायं शास्त्रकृतो योगः शास्त्रदृष्टः शब्दस्य शब्दान्तरेण योगः संयोगः । तद्यथा—उपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य लोपागमवर्णविकारैः । अयं च वचनानित्यत्वान्नोपपद्यते । किं कारणम् ? । अयुगपदुत्पत्तौ हि सत्यां धातुरुच्चारितो विनष्टः, स कथमुपसर्गेण योक्ष्यते, प्रत्ययेन वा । न हि विनष्टाविनष्टयोर्योगोऽस्ति । तस्माच्च एव नामाख्यातयोरितरेतरगुणप्रधानभाव उपसर्गनिपातानां नामाख्याताभ्यां योगः, यच्च पदचतुष्टयमुक्तं, सर्वमेतदसम्यगिति ॥

---

१ वागिन्द्रिय इति । स्पष्टतरमुक्तोऽयमर्थो रूपान्तरेण व्याकरणमहाभाष्यकर्त्रा पतञ्जलिना "परः संनिकर्षः—" इति सूत्रे भाष्ये—" नहि वर्णानां पौर्वापर्यमस्ति । किं कारणम् ? एकवर्णवृत्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्तिनी वाग् न द्वौ युगपदुच्चारयति । गौरिति गकारे यावद्वाग्वर्तते नौकारे न विसर्जनीये । यावदौकारे, न गकारे न विसर्जनीये । यावद्विसर्जनीये न गकारे नौकारे । उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः । उच्चरितः प्रध्वस्तः । अथापरः प्रयुज्यते, न वर्णो वर्णस्य सहायः" इति ग्रन्थेन ॥ एवमेव 'श्रोतुः श्रोत्रेन्द्रियेपि वर्णस्यैकैकस्यैव स्थितिसत्त्वेन न पदस्य वाक्यस्य संभव इति भावः ॥ २ ' इन्द्रियेणावतिष्ठते ' इति मुद्रितमासीत् ॥

युगपदुत्पन्नानामयुगपदुत्पन्नानामित्येवमारभ्यमाणयोर्वाक्ययोरन्यो व्याख्यामार्गो भवति। नोपपद्यते–'युगपदुत्पन्नानाम्, अयुगपदुत्पन्नानाम्' इत्युभौ[१]वपि व्याहारौ प्राप्नुतः। समानसंहितत्वात् ॥ इन्द्रियनित्यत्वात् पदचतुष्टानुपपत्तिरित्युच्चार्य्य[२] मताशङ्काद्वारेणैतदवताऱ्यते–युगपदुत्पन्नानामिति। अथ मतम्–अविचालिन एवैते कूटस्था अविनाशिनः शब्दाः, ते तु कल्पान्ते यस्माद्यापिरूपाद्विशीर्णेष्वभिधेयेष्वभिधातृषु कारणभावमापद्यमानेष्वाश्रयभावादेवावस्थातुमशक्नुवन्तोऽभिधेयाभिधातृसहिता एव कारणात्मभावमधिकमनुभूयाभिसंस्तवकाले कल्पदावन्यकल्पविशिष्टकर्मनिर्मितकार्य्यकारणसर्वभूतसाधारणात्मभूते हिरण्यगर्भे विवर्तमाने तद्बुद्धिमाश्रयं प्राप्य तेनैव सह युगपदेवाभिव्यज्यन्ते विशेषात्मलाभाय शब्दाः–इति ॥ अत्र ब्रूमः–एवमप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टयं प्राप्नोत्येव सहावस्थितानां, तथापीतरेतरोपदेश इतरेतरगुणप्रधानभावश्च न प्राप्नोति। न हि युगपदुत्पन्नयोर्गोविषाणयोरितरेतरगुणप्रधानभावोऽस्ति। किं चान्यत्–कूटस्थेषु चाविचालिषु नित्येषु शब्देषु य एष शास्त्रकृतो योगः, स एष नोपपद्यते। किं कारणम्?। अयुक्तो हि युज्यते,नित्यं युक्ता हि धातव उपसर्गैः प्रत्ययैश्च,प्रत्ययाश्च लोपागमवर्णविकारैरिति।तस्मान्नित्यपक्षेऽपि वचनस्य तदेतदुपवर्णितं गुणप्रधानभावादि पदचतुष्टयमधिकृत्य, सर्वमेतदसम्यगिति ॥१।२।३॥

( शब्दनित्यत्ववादिनः समाधानग्रन्थः )

## व्याप्तिमत्त्वात्तु शब्दस्य ॥ ४ ॥

"व्याप्तिमत्त्वात्तु शब्दस्य" उच्यते–सर्वमेतदुपपद्यते। कस्मात् ?, व्याप्तिमत्त्वाच्छब्दस्य। व्यापनं व्याप्तिः, सा यस्मिन्नस्ति, सोऽयं व्याप्तिमान् शब्दः, तद्भावो व्याप्तिमत्त्वम्। तस्माद् व्याप्तिमत्त्वाच्छब्दस्य 'सर्वमेतदुपपद्यते' इति वाक्यशेषः ॥

आह–कथं पुनर्व्याप्तिमान् शब्द इति ?। शृणु–शरीरे ह्यभिधानाभिधेयरूपा बुद्धिर्हृदयान्तर्गताकाशप्रतिष्ठिता तयोरभिधानरूपाभिधेयरूपयोर्बुद्ध्योर्मध्येऽभिधानरूपया शास्त्राभिमतप्रयोजनविजिज्ञापयिषया बुद्ध्या पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतेन प्रयत्नेनोदीर्य्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानस्तै[३]: पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्विनिक्षिप्तोऽविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यस्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमाञ्छब्दः ॥

आह–ततः किं यदि व्याप्तिमाञ्छब्दः ?। उच्यते–'यदि नित्यो' यदा नित्यः पदचतुष्टादि सर्वमुपपद्यत एव। किं कारणम् ?। न ह्यसंव्याप्य पुरुषस्य बुद्ध्य[४]स्थमर्थं प्रत्ययमादधीत। न चानवस्थितो व्याप्नुयात्। ततश्च किम् ?। स शब्दः स्वमर्थमभिदधत् स्वाक्रियाप्रवेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वमात्मानमभिसम्बध्य तिरो भवितुमुपक्रमते, विनाशश्चो-

१ 'वपि पाठौ व्यापार प्राप्नुतः' ॥ २ 'चार्यमाणशङ्का' ॥ ३ 'स्तथा' ॥ ४ 'द्दस्तंतमर्थं' ॥

पति । तस्य स्वदेशोपजनितैराख्यातादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यानमुपपद्यत एव । तस्मात्सम्यगेवोक्तम् ॥ यत् पुनरेतदुक्तं 'न हि विनष्टाविनष्टयोः परिसंख्यानमस्ति' इति ॥ अत्र ब्रूमः–पुरुषप्रयत्नोपजनिताद्वक्त्रोद्घातात् परस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते, न तु शब्दाकृतयः । तास्तु व्याप्त्यभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्यः स्थिता एव भवन्ति । तासु साक्षात्पदपरिसंख्यानं वर्त्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्य्यते । तस्माद् व्याप्तिमत्त्वाच्छब्दस्य पदचतुष्ट्वादि सर्वमुपपद्यत एव ॥

व्याप्तिमत्त्वादित्यनेनैवेतरेतरोपदेशः प्रत्युक्तः शास्त्रकृतो योगश्च । नामाख्यातपदरूपे बुद्धितत्त्वे सत्त्वक्रियाविषये गुणप्रधानभावेनावतिष्ठेते । तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्य्यते । तथा च धातुरूपा बुद्धिस्तदर्थया संयुज्यते । बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण संस्क्रियते । तस्यां संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते । तदभिधायकत्वाच्छब्दस्य ॥ तत्र यदुक्तं–'वचनानित्यत्वादितरेतरोपदेशः शास्त्रकृतश्च योगो नोपपद्यते' इति, एतदयुक्तमिति ॥ 'नित्यत्वपक्षेऽपि युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्नास्ति' इति यदुक्तम्, अनैकान्तिकोऽसौ दृष्टान्तः । दृष्टो हि युगपदुत्पन्नयोः एककाले राजपुत्रामात्यपुत्रयोर्गुणप्रधानभावः । तत्र यदुक्तम्–'युगपदुत्पन्नानामितरेतरोपदेशो न प्राप्नोति' इति, तदयुक्तं, 'व्याप्तिमत्त्वाच्छब्दस्य सर्वमुपपद्यते' इति तदेव सम्यगिति ॥ १।२।४॥

अपरो व्याख्यामार्गः–इन्द्रियनित्यत्वात्पदचतुष्ट्वानुपपत्तिस्तदाश्रयस्य च सर्वस्यैवमाक्षिप्ते परिहारापेक्षेणेदमवतार्य्यते–"युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः" इति । अत्र समञ्जस एव वाशब्दः ॥ कथम्? अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा नित्यानां वा अनित्यानां वेत्यर्थः । इतरेतरोपदेशः । इतरस्येत्याख्यातस्य क्रियावचने शब्देऽभिधानत्वेनोपदेशः, इतरस्य च नामशब्दस्य सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः ॥ १।२।२॥

"शास्त्रकृतो योगश्च"। लक्षणशास्त्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते । तस्मादुपपद्यते पदचतुष्ट्वमिति ॥ १।२।३॥

आह–आगमनमात्रमेतत् । हेतुरुच्यतां 'कथं विनष्टाविनष्टयोः सह परिसंख्यानम्, अवस्थितयोर्वा गुणप्रधानभावः' इति? ॥ उच्यते–"व्याप्तिमत्त्वात् तु शब्दस्य।" हेत्वर्थः समान एव पूर्वेण ॥ १।२।४॥

---

१ स्पष्टं चेदं "परः संनिकर्षः–" इति सूत्रे–"बुद्धौ कृत्वा सर्वांश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः। शब्देनार्थान् वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥" बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति–अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः अस्मिंस्तावच्छब्दे अयं तावद् वर्णः, ततोऽयं ततोऽयमिति ॥" इति ग्रन्थेन ॥ स्थानिवत्सूत्रे च "कार्यविपरिणामाद्वा सिद्धम्" वार्तिकव्याख्यायां व्याकरणमहाभाष्ये ॥ २ 'द्वारेण' ॥

(less effort) ( शब्दप्रयोगस्यैव व्योवहारार्थमावश्यकतानिरूपणम् )
for designation of objects.

## अणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके ॥ ५ ॥

आह-यदि व्याप्तिमत्त्वाच्छब्दस्य व्यवहारार्थं पदचतुष्टमुपादीयते, एवमपि नोपादेयम् । किं कारणम् ? । अभिनया अपि व्याप्तिमन्तः पाणिविहाराक्षिनिकोचादयः, तैरेव कार्य्यसिद्धिरस्त्विति । अपि चैवं पदचतुष्टयदोषैर्न सम्भक्ष्यामहे, न चायमतिमहान् वेदसमुद्रः पठितव्यो भविष्यत्यतिक्लेशेनेति ॥ उच्यते-स्यादेतदेवं यद्ययमपरो विशेषहेतुर्न स्यात् ॥ कतमः ? । " अणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके " । सत्यम् , अभिनया अपि व्याप्तिमन्तः, न त्वणीयांसः, ते महता यत्नेन व्याप्नुवन्ति, न च निःसंदिग्धं कुर्वन्ति । (चिरात्प्रत्याययन्ति) तत्प्रतीतार्थसम्बन्धस्यैव नेतरस्य । शब्दस्त्वपरिमितमर्थमल्पीयसा यत्नेनोच्चारितो व्याप्नोति । तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव सञ्ज्ञाकरणं व्यवहारार्थं लोके इत्युपपन्नम् ॥ यत् पुनरेतदुक्तम्-अध्ययनदोषैर्न संभक्ष्यामहे, न चायमतिमहान् वेदसमुद्रोऽध्येतव्यो भविष्यति' इति ॥ अत्र ब्रूमः-अभ्युदयो ह्यत्र वेदानुरूप एव भवति, अभ्युदयार्थं नः शास्त्रारम्भे यत्नः ॥ १ । २ । ५ ॥

to address.

## तेषां मनुष्यवद्देवताभिधानम् ॥ ६ ॥

"तेषां मनुष्यवद्देवताभिधानम्" । आह,-एवं तावन्मनुष्याणां मनुष्येषु शब्देन चतुर्द्धा भक्तेनावबोधकरणम् । अथ मनुष्याणां देवेषु हविःसम्प्रदानाशीःप्रार्थनादिव्यवहारः केनेति ? । उच्यते-तेषामेव शब्दानामियमेव व्यवस्था देवेष्वपि देवानपि प्रति ॥ कतमा ? । मनुष्यवद्देवताभिधानमिति। मनुष्येण तुल्यं मनुष्यवत्, देवताभिधानमभिहितिरभिधानम्। यथैव हि मनुष्याः प्रयोजनेषु नामाख्यातोपसर्गनिपातैर्यथार्थमभिदधति । एवमेव देवा अपि । देवेष्वपि शब्दस्याभिधानेनापि शक्तिरपरिहीनेत्यभिप्रायः । तेऽपि हि मनुष्यवद्देवा अङ्गादियुक्ताः पौरुषविधिकैरङ्गैः कर्मभिश्च संस्तूयन्त इति हि वक्ष्यति ॥ तस्मादुपपद्यते मनुष्यवद्देवताभिधानमिति ॥ १ । २ । ६ ॥

अपरिहीनो त्येन स्यात्।

( कर्मणि वेदमन्त्रस्यैवावश्यकतानिरूपणम् )

## पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे ॥ ७ ॥

आह-यदि नामाख्यातोपसर्गनिपातानामपरिहीना शक्तिर्देवानप्यभिधातुम् । अथ किमर्थं वेदे मन्त्रः समाम्नातः ? ॥ उच्यते- " पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे " । पुरुषेषु मनुष्येषु विद्यायाः विज्ञानस्यानित्यत्वात् पुरुषविद्यानित्यत्वाद्धेतोः कर्मसम्पत्तिः

---

१ 'तत्प्रतीतशब्दार्थसंबन्ध' ॥ २ अणीयस्त्वादिति । तथा चोक्तं व्याकरणमहाभाष्ये- "संज्ञा च नाम यतो न लघीयः' इति ॥ ३ 'मू । अभिहितुरभि०' ॥

फलेन सम्पादनम् अविगुणकर्मसम्पत्तिः, फलसम्पन्नमेव कर्म भविष्यतीत्येवमर्थं वेदे मन्त्रः 'समाम्नातः' इति वाक्यशेषः। इतरथा हि पुरुषेषु विज्ञानस्यानित्यत्वाद्यथार्थं नाभिदध्युर्देवानामाख्यातोपसर्गनिपातैरशिक्षितत्वान्मन्दशिक्षितत्वाद्विस्मरणशीलत्वाद्वा। देवानामपराध्येयुरयथावत्प्रयुञ्जानाः नामाख्यातोपसर्गनिपातान्। ततश्च सर्वार्थप्रत्यक्षदृशो देवाः स्वल्पमप्ययथावदभिधानं न मर्षयन्ति विगुणमेतदिति। विद्याऽनित्यत्वात्तदभावे नेयुः कर्माणि। ततश्च देवताहीनं कर्मफलं सम्पद्यते। न च केवलं फलासम्पत्तिः, ॥ किं तर्हि ?, दुरितहेतुको दोषोऽपि स्यात्। तस्मादेत एव नामाख्यातोपसर्गनिपाताः प्रयोगानुपरिपाटीनियमार्थं मन्त्रत्वेन वेदे समाम्नाताः। नहि नामाख्यातोपसर्गनिपातान् परित्यज्य मन्त्राः सन्ति। एतदेव चतुर्विधं पदजातं प्रयोगानुपरिपाट्या कयाचिदवस्थितं मन्त्रा इत्युच्यन्ते ॥

आह—कथमनित्यत्वं विद्यायाः पुरुषेष्विति ?। उच्यते—इह येन वाक्यविरचनानुक्रमेण अर्थवस्त्वनुप्रेष्यते,—' मनुष्य एवमेव ब्रूयात्—'त्वं गन्तुं देवदत्तम्' इति। स तेनैव वाक्यविरचनानुक्रमेण[1] बद्धमपि सन्तमर्थं न शक्नोति प्रतिपादयितुम्। एवमनित्यत्वं विद्यायाः पुरुषेषु। तददोषं वा मनुष्यान् प्रति, सर्वेषामेव मनुष्याणामनित्यत्वाद्विद्यायाः। अयमपि हि येन वाक्यानुक्रमेण वक्ति मनुष्यः कश्चिदर्थं, न तेनैव द्वा शक्नोति वक्तुम् ॥ तत्र यदुक्तं—'किमर्थं मन्त्रो वेदे समाम्नातः' इति। इदं न युक्तम् ॥ 'पुरुषविद्यानित्यत्वात्कर्मफलसम्पत्त्यर्थं मन्त्रो वेदे समाम्नातः' इति। नह्यविचारितमेव विज्ञायते। अत इदमाह ॥

पदचतुष्कमाक्षिप्य पक्षप्रतिपक्षशो विचार्य्य अवधारितम्। विषयश्चाक्षेपप्रसङ्गेनैवास्य परिक्लृप्तः—देवमनुष्यव्यवहारार्थमेतदिति ॥ तदेतत्सर्वमपि चोदकवशेन प्रसक्तानुप्रसक्तमुक्तम्। भावस्तु प्रकृतो यतस्तच्छेषमधुना वर्णयिष्यामः। स च पुनरुभयात्मा भावः। कार्य्यात्मा कारणात्मा च। तयोर्यः कार्य्यात्मा तमधिकृत्योक्तम्—"क्रियानिर्वर्त्यो योऽर्थः स भावः, क्रियैव वा भावः"—इति। इदानीं कारणात्मा भावो निरूप्यते। कथं क्रियाद्रव्ययोः स्वात्मस्थो विशेषः, कार्य्यात्मप्रध्वस्तयोः पुरुषोपभोगसन्तानोपक्षये कार्य्यात्मभावातीतः, येनात्मभावेन भवनमात्राभिसम्बन्धिनौ प्रलयकालेऽवतिष्ठते, सोऽत्यन्ताविनाशधर्ममात्र आत्मा भाव इत्युच्यते ॥

आह—कथमयमिह प्रसक्तः ?। शृणु—तद्विकारा एव हि द्रव्यगुणकर्मभावेनावस्थिताः सन्तो नामाख्यातोपसर्गनिपातैरभिधीयन्ते। स्थितिकाले अंसावपि च प्रहीणसर्वविशेषभवनमात्रक्रियाभिसम्बन्धी सन् व्यावृत्तसर्वोपपदाभ्यां नामाख्यातशब्दाभ्यामुच्यते—भवतीति भाव इति च। शब्दगतत्वादपोढसर्वविशेषामप्येतामवस्थामेतौ शब्दावास्कन्दतः। यत एतयोरेव साधारण्यार्थमयमिह प्रसञ्जितः पदचतुष्काधिकरणे ॥

---

१ 'वस्त्वनुक्रमेण वाक्त्वानु (?)' ॥ २ 'त्वं यत्तु (?) अमुं देवदत्त इति' ॥ ३ 'णैवावबद्ध' ॥ ४ 'नित्य ननु सत्यप्रल' ॥ ५ 'धर्मा आत्मा' ॥ ६ 'शब्दगतविभुत्वाद' ॥

आह,—प्रधानमेतत् स्यात् । किं कारणम् ? । तद्भावेन ह्येतज्जगदवतिष्ठते प्रलयकाल इत्येके मन्यन्ते । तच्च नैव । किं कारणम् ?, भावविकार एव हि सोपपदशब्दवाच्यत्वात् प्रधानभाव इति ह्युच्यते ॥ पुरुषस्तर्हि ? । तत्राप्ययमेव हेतुः, अनुपक्षीणशक्तित्वात् ॥ एतेनैव ईश्वरपरमाण्वादिभावविकाराः प्रत्युक्ताः । ईश्वरभावः परमाणुभाव इति सोपपदत्वात्॥ शून्यं तर्हि ?, तदपि न । यस्माच्छून्यशब्देऽपि भावशब्दासङ्गदर्शनम्, न ह्यसत्यर्थे शब्दः प्रयुज्यते । शब्दो हि शब्दस्यार्थेन सम्बद्धः । किञ्चित्तदस्ति यच्छून्यमिति। लोके हि प्रसिद्धम्—'गृहं शून्यं, ग्रामः शून्यः, शून्ये शब्दमहत्त्वे' इति । तस्मान्न शून्यशब्देनाभाव एवोच्यते । किं तर्हि,अपेक्षाकृतं शून्यत्वमिति।भावशब्द एवात्रोपपदत्वेन युक्त इति चेत्,न,प्रयोगाप्रसिद्धेः। न हि भावभाव इति प्रसिद्धः प्रयोगः। न च प्रयुज्यमानोऽपि भावशब्दो भावशब्द एवोपपदत्वेन प्रधानादिशब्दवत् कञ्चिद्विशेषप्रत्ययमादधाति ॥ तस्मात् सर्वोपपदहीनस्य भवतेरात्मभावेनेदं जगन्नित्यम्, इतरैस्तु भावविकारैः परमाण्वादिभिर्भावविकारात्मभिरनित्यम् ॥ कस्मात् ? । विकारात्मकत्वादेव । विकारो ह्यनित्यः, तमेवं भवनमात्राभिसम्बन्धेन प्रहीणसर्वभावविकारम् एतत्सद्भावविदोऽवधृतवेदान्तरहस्यसम्पदः परावरविदो मेधाविन आत्मकृत्स्नकारितया मुक्ताधिकारबन्धना एतत्परिज्ञानादेवोपक्षीणकर्मोपभोगसन्तानाः सन्त आत्मकामाः प्रतिपद्यन्ते । नेतरे प्रधानादिविदो वेदानुशासनैकदेशानीश्वरपुरुषप्रधानादीननित्यान् भावविकारान् स्वमतिकल्पनाहेतुव्यवहितान् मत्वा स्थिरीकृत्यानेन प्रतिपद्यन्ते भवनमात्राभिसम्बन्धेन तदेतस्मादात्मन उद्विजन्त आत्मप्रकाशकान्तर्याम्ययं (?) चित्सन्तानमिव मन्यमानाः । केचिच्च शक्तिहानादसंबाधनादेव । स एष इह वेदाङ्गैर्वेदार्थनिर्वचनाभिनिवेशशब्दानां सामान्यविशेषवृत्त्युपदेशप्रसङ्गे प्रवर्त्तमाने भवतेः कृदन्तीभूतस्य भवनमात्रमेव वक्तुं सामर्थ्यम्, नेतरान् भावविकारान् विद्यमानानपीत्येतेन प्रसङ्गेनात्र संसूचितो वेदरहस्यो ब्राह्मणैः ॥ १ । २ । ७ ॥

( अथ भावविकारनिरूपणम् )

## षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति ॥ ८ ॥

तत्र विस्तरेणायं विधीयते,—उक्तो द्विविधो भावः—कारणरूपः कार्यरूपश्च । तत्र कारणोऽविकृतत्वादभिन्न एवेत्यवगतम् ॥ इदानीं कार्यरूपस्यानेकविकृतरूपत्वादविज्ञेयत्वेन निर्वक्तुमाह—" षड् भावविकारा भवन्तीति वार्ष्यायणिः " । भाव उक्तलक्षणो नित्यं विकृतिकारणम् । तैर्विकारैर्विशिष्टः षट्प्रकारोऽभिधीयत उपचारतः । यतोऽयं

१ 'भावाः प्रत्यु०' ॥ २ 'शब्देनेहाभाव' ॥ ३ 'अभावे' ॥ ४ 'वेदविदो' ॥ ५ 'कृत्यचातो नित्यत्वेन' ॥ ६ 'प्रणाशकतया नाकर्मोपभोगसमाप्यतत्संतानं शिवमिव मन्यमानाः' ॥

विद्यमानतामेव भावनाशब्देनाभिधत्ते । तेन यो विद्यमानमात्रभवनात्मकः स एव भिन्नोऽभिधीयते ॥

अपि च लक्षणविदो विगृह्णन्ति भावशब्दं भवतेः स्वपदार्थे—भवनं भाव इति। "सन्मात्रं भावलिङ्गं स्यात्"—इति च पठन्ति। तस्य विकारा भावविकाराः भवन्तीति सामान्यादात्मनः प्रस्कन्दा इव सन्तः स्वेनस्वेन वैशेषिकेण भावविकारात्मलाभाय भवन्ति। इति परः प्रयुज्यमानः शब्दः शब्दपदार्थकः ॥

क एवमाह—"**षड् भावविकाराः**"—इति ?। उच्यते—"**वार्ष्यायणिः**"—इति। तिकादिपाठात् फिञ्। आचार्य्य इति वाक्यशेषः ॥ निर्देशश्च उपलब्धानां पण्डित्यवधारणं सुखार्थम्। वक्ष्यामः—'**अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्ति**(१।३।१)'इति॥

आह—'कतमे ते' इति ?। उच्यते—"**जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति**" ॥ १।२।८॥

**जायत इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति ९.**

आह,—एतेषां जन्यादीनां भावविकारशब्दानां कः कस्यां विकारावस्थायामवस्थितं भावमाचष्टे, कं वा विद्यमानमपि नाचष्टे, कं वा न प्रतिषेधतीति ? ॥ उच्यते—

"**जायत इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति**"।

जनिः पूर्वो भावः, तस्य पूर्वभावस्य, षण्णां भावविकाराणां यदि वान्यो यः पूर्वो भावविकारः तस्य जायत इत्यनेन शब्देनादिमाचष्टे ॥

आह—किमादिमेव ?। नेत्युच्यते । उक्तम्—'उपक्रमप्रभृत्यपवर्गपर्य्यन्तम्' इति । स एव पूर्वापरीभूतो भावस्तावदेव जायत इत्युच्यते । यावन्निष्ठाशब्दवाच्यः संवृत्तो 'जातः' इति । **नापरभावमाचष्टे, न प्रतिषेधति** । नेति प्रतिषेधे । अपरो भावः अपरभावः ॥

आह—कस्मादपरः ? पौर्वापर्य्यं हि देशकालकृतम्, । उच्यते—जनिशब्दवाच्यो भावविकारः पूर्वः, तस्मादपरकालोऽस्तिशब्दवाच्यः । तत्रैवं सति जनिशब्दवाच्ये भावविकारे अस्तेरप्यर्थोऽस्ति विद्यमानता । किं कारणम् ?। न ह्यविद्यमानो जायते । अपि च कारणात्मनि भावे सर्व एते भावविकाराः सन्ति। सर्वार्थप्रसवशक्तित्वात्तस्य । यथा पृथिव्यां घटादयो भावविकाराः। ते तु द्वारद्वारिभावेन विशेषात्मलाभं प्राप्नुवन्ति। तद्यथा—जनिद्वारेणास्तिः, अस्तिद्वारेण विपरिणमतिः । किं कारणम् ?। न ह्यजातोऽस्तीत्युच्यते । नाप्यविद्यमानो विपरिणमत इति । तत्रैवं सति जायत इत्येष शब्दो जन्मैव केवलं ब्रवीत्यविवक्षितेतरभावविशेषम् । किं कारणम् ?। एकार्थवृत्तित्वाच्छब्दस्य । अस्तिशब्दवाच्यस्य भावविकारस्यासम्पूर्णत्वात् । अनवधृतरूपं हि तस्यामवस्थायां तद्भवत्यनुमानगम्यं किमपि जायत इति । तस्माज्जायत इत्येष शब्दो जायमानावस्थायामस्तित्वं विद्यमानमपि नाचष्टे ॥

आह,—यदि नाचष्टेऽर्थादापन्नं भवति—प्रतिषेधतीति ।. उच्यते—"न प्रतिषेधति"—इति । अस्तित्वस्य न प्रतिषेधं करोतीत्यर्थः । किं कारणम् ? । उच्यते—अस्तित्वात्मवानपि ह्यसौ 'जायते'। एतास्मिन् प्रतिषिद्धेऽनात्मक एव स्यात् । क्रमालम्ब्य जायते । तस्मान्न प्रतिषेधत्यस्तित्वम्? । 'उपस्थितत्वाच्च' । उपस्थित एव प्रत्यासन्नस्तस्यावधारणकाल इत्यतश्च न प्रतिषेधति ॥

एवमेव प्रपञ्च उत्तरेष्वपि भावविकारेषु। समासतस्तु यत्र[1] यद्वक्तव्यं तत्र तद् ब्रूमः[2] ।१।२।९

## अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् ॥ १० ॥

"अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्" । अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति, न विपरिणाममाचष्टे, अपूर्णत्वात्। न प्रतिषेधत्युपस्थितत्वात् ॥ १ । २ । १० ॥

## विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् ॥ ११ ॥

"विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम्" । विपरिणमत इत्येष शब्दोऽ-प्रच्यवमानस्य तत्त्वादप्रभ्रश्यमानस्य तत्त्वात्तद्भावाद्विकारम् । योऽस्य भावोऽस्तितत्वं स्वरूपं वा, तस्माद्विकारं विक्रियामात्रं ब्रवीति, न वृद्धेरर्थमाचष्टे, न प्रतिषेधति ॥ १ ।२। ११ ॥

## वर्द्धत इति स्वाङ्गाभ्युच्चयं सांयोगिकानां वार्थानां, वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा ॥ १२ ॥

"वर्द्धत इति स्वाङ्गाभ्युच्चयम्, सांयोगिकानां वार्थानाम्" । वर्द्धत इत्येष शब्दः, स्वेषामङ्गानां शिरोग्रीवाबाहूदरादीनां, सांयोगिकानां वा हिरण्यधान्यादीनाम्, अभ्युच्चयमाह, अभ्युचिततां ब्रवीति ॥

आह—कथं प्रयोगः ? । उच्यते—"वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा" । वर्द्धते विजयेनेति सांयोगिकेषु उदाहरणं वर्द्धते शरीरेणेति स्वाङ्गाभ्युच्चये । अत्र वर्द्धत इति ब्रुवन्नापक्षीयतिमाचष्टे, न प्रतिषेधति ॥ १ । २ । १२ ॥

## अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम् ॥ १३ ॥

"अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्" । यथैव हि स्वाङ्गैः सांयोगिकैर्वा द्रव्यैरुपचीयते, तथैवापक्षीयते । तत्रापि[3] नाचष्टे, न प्रतिषेधति ॥ १ ।२।१३॥

## विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ १४ ॥ २ ॥

---

१ 'तत्र' ॥ २ 'तत्र ब्रूमः' ॥ ३ इतः पूर्वं 'विनश्यत्यर्थम्' इति भवेत् पूर्वसंवादात् ॥

"विनश्यतीत्यपरभावस्यादिमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति।" विनाश एवापरभावस्तस्यादिमाचष्टे। किमादिमेव? । न इत्युच्यते । 'उपक्रमप्रभृत्यपवर्गपर्य्यन्तम्' इत्युक्तं यावद्विनष्ट इति। स च विनाशं ब्रुवन् न पूर्वभावमाचष्टेऽपक्षीयतेरर्थं विद्यमानमपि तस्मिन् विनाशे। कथं युगपदपक्षीयतेरर्थो विनाशोऽस्तीति?, उच्यते-नह्यनपक्षीयमाणो विनश्येत्॥ १।२।१४॥ *

## अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह॥ १॥

आह—एतेभ्यो भावविकारेभ्यः किमन्येऽपि व्यतिरिक्ताः सन्ति भावविकाराः, न वा? इति। उच्यते—"अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह"। अतो भावविकारषट्काद्येऽन्यत्वेन भावविकाराः लक्ष्यन्ते, न ते पृथक्पृथगत्यन्तभिन्नाः सन्ति। किन्तर्हि?, एतेषामेव विकारा भवन्ति। तद्यथा—जनिशब्दवाच्यो भावविकारोऽनेकप्रभेदभिन्नोऽनेकपर्य्यायशब्दवचनो निष्पद्यतेऽभिव्यज्यते, उत्तिष्ठतीत्येवमाद्युपेक्षितव्यम्। तथा अस्तिशब्दवाच्योऽनेकप्रभेदभिन्नोऽनेकपर्य्यायवचनश्च अस्ति, विद्यते, भवतीत्येवमादि। तथा विपरिणमतिशब्दवाच्यो विपरिणमते, जीर्य्यति, भावान्तरमापद्यत इत्येवमादि। तथा वर्द्धतिशब्दवाच्यो वर्द्धते, पुष्यति, उपचीयते, अर्धीयत इत्येवमादि। तथा अपक्षीयतिशब्दवाच्यो ध्वस्यति, भ्रश्यतीत्येवमादि। तथा विनश्यतिशब्दवाच्यो विनश्यति, म्रियते, विलीयत इत्येवमादि। "इति ह स्माह"। क एवमाह? आचार्य्यो वार्ष्यायणिरित्यनुवर्त्तते॥ १।३।१॥

## ते यथावचनमभ्यूहितव्याः॥ २॥

"ते यथावचनमभ्यूहितव्याः"। त एते जन्यादिशब्दवाच्याः विकाराः, यथावचनं यो यस्मिन्वचने यथावचनमवस्थिताः सन्तः प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रति अभ्यूहितव्याः वितर्क्याः प्रयुज्यमाना इति वाक्यशेषः। सर्व एव धातवो भाववचनास्तेषामिहाध्ययने प्राप्ते शास्त्रातिगौरवभयादेतल्लक्षणमुत्सृष्टम्। इह शास्त्रे व्याख्याशैलीयं द्रष्टव्या—उद्देशो, निर्देशः, प्रतिनिर्देश इति॥ तत्रोद्देशः सूत्रस्थानीयः। तद्यथा—'षड् भावविकाराः' इति॥ निर्देशो वृत्तिस्थानीयः। तद्यथा—'जायतेऽस्ति विपरिणमते' इति॥ प्रतिनिर्देशो वार्त्तिकस्थानीयः। तद्यथा—'जायत इति पूर्वभावस्यादिमाचष्टे' इति। एवं सर्वत्र यथासम्भवं योज्यम्॥ १।३।२॥

(अथोपसर्गनिरूपणम्)

## न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः॥ ३॥

---

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीयः खण्डः॥२॥' इति द्रष्टव्यमग्रिमसंवादात्॥

सानुषङ्गमुक्तं नामाख्यातयोर्लक्षणं, नाम्नस्तु किञ्चिदवशिष्यते, तदवसरप्राप्तमपि सद-धुना नोच्यते, पदचतुष्टलक्षणप्रतिज्ञाव्याघातभयात्, उक्त्वा पदचतुष्टलक्षणं चतुर्थेन पादेन ( अ.१,खं.१२ ) तद्वक्ष्यामः ॥ प्रतिज्ञाप्रसक्तमेवाधुनोपसर्गलक्षणमुच्यते ॥

आह—वक्ष्यति भवानुपसर्गलक्षणमिदमेव तावदुच्यताम्—किमिमे उपसर्गा नामाख्यातवत् पदचतुष्टान्निष्कृष्य बद्धाः सतोऽर्थानाहुः ? । 'न' इत्युच्यते—" **न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः** " । नेति प्रतिषेधे । निष्कृष्य नामाख्यातमध्यात्, बद्धाः पदवाक्यरूपेण विरचिताः सन्तः । के पुनस्ते ? । उपसर्गाः । आख्यातमुपगृह्यार्थविशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः ॥ " **अर्थान्निराहुरिति शाकटायनः** ।" निश्चयेन सतोऽर्थानाहुः । साक्षान्न तेषामर्थाभिधानशक्तिरस्ति, पृथग्विरचितानामित्यभिप्रायः ॥ यथा वर्णानां पदादपगतानामर्थाभिधानशक्तिर्नास्ति, एवमेतेषामपि नामाख्यातवियोगेऽर्थाभिधानशक्तिर्नास्ति ॥ क एवमाह?, **शाकटायनः** । शकटस्यापत्यं नडादिपाठात् फक्, शाकटायनः ॥ १ । ३ । ३ ॥

## नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति ॥ ४ ॥

आह—कथं तेषामर्थवत्तेति ? । उच्यते— " **नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति** " । तुशब्दोऽवधारणार्थः । नामाख्यातयोरेव योऽर्थः कर्म, तत्रैव विशेषं कञ्चिदुपसंयुज्य द्योतयन्ति । स एव नामाख्यातयोरेवार्थविशेष उपसर्गसंयोगे सति व्यज्यते । यथा प्रदीपसंयोगे द्रव्यस्य गुणविशेषोऽभिव्यज्यमानो द्रव्याश्रय एव भवति, न प्रदीपाश्रयः ॥

## उच्चावचाः पदार्था भवन्तीति गार्ग्यः ॥ ५ ॥

आह—कोन्यथा ब्रवीति येनैवमुच्यते ' **शाकटायन एवमाहेति** ' ? । शृणु—" **उच्चावचाः पदार्था भवन्तीति गार्ग्यः** " । उच्चाश्चावचाश्च उच्चावचाः, बहुप्रकारा इत्यर्थः । एषामुपसर्गपदानामर्थाः पदार्था भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्यः आचार्यो ' मन्यते ' इति वाक्यशेषः ॥ एकैकोऽप्येषां प्रादीनां नामाख्यातवियोगेऽपि अनेकार्थ इत्यभिप्रायः । तद्यथा—'प्र—इत्यादिकर्मोदीर्णो भृशार्थे ':इत्यभिधाने शक्तिरस्त्येवेत्येवमाद्युपलक्षितव्यं लक्षणशास्त्रे ॥ यत् पुनरेतदुक्तम् ' वर्णवद् ' इति, ' अनभ्युपगमादयुक्तम् ' न ह्यभ्युपगतमस्माभिरेतद्—'अनर्थका वर्णाः ' इति । सामान्या हि वर्णेष्वभिधानशक्तिरस्त्येव । यथा मृदोवयवेषु सर्वमृन्मयभाण्डारम्भशक्तिः । सा तु पदत्वेन समुदितानामर्थविशेषेऽवतिष्ठते । यथा मृदोऽवयवानां घटे घटारम्भशक्तिरभिव्यज्यते एवम् । तत्र यदुक्तं " वर्णवदनर्थका उपसर्गाः, नामाख्यातवियोगात्— " इति, एतदयुक्तम् । अपि च—वर्णैरनर्थकैरारभ्यमाणं पदमप्यनर्थकमेव स्यात् । न ह्यशुक्लैस्तन्तुभिरारभ्यमाणः पटः शुक्लो भवति । ततश्च पदैरनर्थकैरारभ्यमाणं वाक्यमनर्थकमेव

स्यात् । वाक्यैश्चानर्थकैरारब्धं शास्त्रमप्यनर्थकमेव स्यात् । ततश्चाभ्युदयनिःश्रेयसार्थो योऽयमभ्युद्यमः स्वप्रत्ययेन विदुषामयमनर्थक एव स्यात् । अनिष्टं चैतत् । तस्मादर्थवन्तो वर्णा इत्युपपन्नम् ॥ यत् पुनरेतदुक्तं–'प्रदीपवदनर्थका उपसर्गाः' इति । तत्रोच्यते–प्रदीपोऽपि स्वेनार्थेन प्रकाशाख्येनार्थवानेव सत्यपि चार्थवत्त्वे प्रकाश्यमर्थमाधारभूतं प्रत्याययन् स्वां प्रकाशनशक्तिमभिव्यनक्ति । एवमुपसर्गा अर्थवन्तोऽपि सन्तः स्वार्थाभिधानशक्तिमनेकप्रकारां विद्यमानामपि स्वार्थाभिधानशक्त्याधारभूते नामाख्याते प्रत्याय्य अभिव्यञ्जयेयुः ॥ तत्र यदुक्तम् [ 'प्रदीपवदनर्थका उपसर्गाः' इति, एतदयुक्तम् ][1]–'नामाख्यातयोरेवासावर्थ उपसर्गसंयोगे सति उपजायते' इति । तत्र ब्रूमः–न हि लोके यो यत्र समर्थो भवति, स तत्रान्यमपेक्षते । नामाख्याते चार्थविशेषं प्रत्युपसर्गसंयोगमपेक्षेते । तस्मादुपपन्नमुपसर्गस्य क्रियाविशेषोऽर्थः । क्रियासामान्यमात्रमाख्यातस्येति ॥ १ । ३ । ५ ॥

## तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् ॥ ६ ॥

तत्र यदुक्तम् 'अनर्थकाः पृथगवस्थिता उपसर्गाः'–इति । तदयुक्तम् । कुतः ? "तद्य एषु पदार्थः प्राहुरिमे तम्" । तदेतदुपपन्नं भवति—य एषूपसर्गेषु स्वोऽनेकप्रकारोऽर्थ इति प्राहुरेव तमिमे उपसर्गाः पदविशेषाः पृथगपि सन्तः ॥ कः पुनरसाविति ?, उच्यते– "नामाख्यातयोरर्थविकरणम्" । अर्थविक्रियामित्यर्थः । तस्मादर्थवन्त एवेति ॥ १ । ३ । ६ ॥

## आ इत्यर्वागर्थे ॥ ७ ॥

उच्यतां तर्हि क एषां कस्मिन्नर्थविशेषे वर्त्तते ? । उच्यते–अयं तावत्–"आ इत्यर्वागर्थे" । तद्यथा–'आ पर्वतात्' इति । अर्वागिति गम्यते । अनेकार्थत्वेऽपि सत्युपसर्गाणामेकैकोऽर्थ उदाहरणत्वेनोच्यतेऽर्थतत्त्वप्रकाशनार्थम्[2] ॥ १ । ३ । ७ ॥

## प्रपरेत्येतस्य प्रातिलोम्यम् ॥ ८ ॥

प्र परा-इत्येतावुपसर्गावेतस्यैवाङोऽर्थस्य प्रातिलोम्यमाहतुः । 'प्रगतः' 'परागतः' ॥ १ । ३ । ८ ॥

## अभीत्याभिमुख्यम् ॥ ९ ॥

अभीत्याभिमुख्यम् ॥ अभीत्याभिमुख्यम् आह—'अभिगतः' ॥ १ । ३ । ९ ॥

## प्रतीत्येतस्य प्रातिलोम्यम् ॥ १० ॥

प्रतीत्येतस्य प्रातिलोम्यम् ॥ प्रतीति एतस्यैवाभेः प्रातिलोम्यम् आह–' प्रतिगतः ' इति ॥ १ । ३ । १० ॥

---

१ 'एष कोष्ठकान्तर्गतः पाठः प्रमादजो भवेत्' ॥ २ 'मेव' ॥

praise, approval

## अति सु इत्यभिपूजितार्थे ॥ ११ ॥

अति सु इत्यभिपूजितार्थे ॥ अति सु–इत्येतावभिपूजितार्थे वर्त्तेते–'अतिधनः' 'सुब्राह्मणः' इति १ । ३ । ११ ॥

## निर्दुरित्येतयोः प्रातिलोम्यम् ॥ १२ ॥

निर्दुरित्येतयोः प्रातिलोम्यम् ॥ निर्दुरित्येतयोः प्रातिलोम्यमाह—' निर्धनः' ' दुर्ब्राह्मणः ' इति ॥ १ । ३ । १२ ॥

downward (a limit or a check)

## न्यवेति विनिग्रहार्थीयौ ॥ १३ ॥

न्यवेति विनिग्रहार्थीयौ ॥ न्यवेति विनिग्रहार्थीयौ । ' निगृह्णाति ' 'अवगृह्णाति' इति ॥ १ । ३ । १३ ॥

## उदित्येतयोः प्रातिलोम्यम् ॥ १४ ॥

उदित्येतयोः प्रातिलोम्यम् । " उदिति " अयमेक एव " एतयोः " द्वयोः " प्रातिलोम्यम् " आह—' उद्गृह्णाति ' इति ॥ १ । ३ । १४ ॥

lifts up, takes up, picks up.

## समित्येकीभावम् ॥ १५ ॥

" समित्येकीभावम् " समित्येकीभावार्थमाह–'संगृह्णाति' इति ॥ १ । ३ । १५ ॥

## व्यपेत्येतस्य प्रातिलोम्यम् ॥ १६ ॥

"व्यपेत्येतस्य प्रातिलोम्यम्" आहतुः—'विगृह्णाति' 'अपगृह्णाति' इति ॥ १ । ३ । १६ ॥

a secondary position, to follow.

## अन्विति सादृश्यापरभावम् ॥ १७ ॥

"अन्विति सादृश्यापरभावम्" आह–'अनुरूपमस्येदम्' इति सादृश्यम् । 'अनुगच्छति' इत्यपरभावः ॥ १ । ३ । १७ ॥

addition – together with.

## अपीति संसर्गम् ॥ १८ ॥

" अपीति संसर्गम् ". आह—'सर्पिषोऽपि स्यात् ' 'मधुनोऽपि स्यात् ' ॥ १ । ३ । १८ ॥

something over & above; accretion.

## उपेत्युपजनम् ॥ १९ ॥

" उपेत्युपजनम् " उपजनमाधिक्यम्—'उपजायते' ॥ १ । ३ । १९ ॥

## परीति सर्वतोभावम् ॥ २० ॥

" परीति सर्वतोभावम् "　आह—'परिधावति' इति ॥ १ । ३ । २० ॥

## अधीत्युपरिभावमैश्वर्य्यं वा ॥ २१ ॥

" अधीत्युपरिभावम् "　आह—" ऐश्वर्य्यं वा "। 'अधितिष्ठति' 'अधिपतिः' इति ॥ आह—'नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति' इत्युक्तम्। अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येवं न गृह्यते । " उपसर्गाः क्रियायोगे ( पा० १, ४, ५९ )"—इति प्रसिद्धो ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना । उपसर्गा हि क्रियाङ्गत्वेनैव नामान्यास्कन्दन्तीति ॥ १ । ३ । २१ ॥ *

## एवमुच्चावचानर्थान् प्राहुस्त उपेक्षितव्याः ॥ २२ ॥ ३ ॥

( निपातलक्षणनिरूपणम् )

## अथ निपाताः ॥ १ ॥

" अथ निपाताः " । उक्तमुपसर्गलक्षणं सामान्यम् " नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति १ । ३ । ४ ॥ "—इति, विशेषलक्षणमपि "आ इत्यर्वागर्थे ( १ । ३ । ७ )"—इत्येवमादि । अल्पा इति कृत्वा च ते प्रत्येकं समाम्नाताः । अधुना सामान्यलक्षणानुप्रवृत्तं प्रतिज्ञाप्रसक्तमेव निपातलक्षणं वर्णयिष्यामः । तदधिकारोऽयमथशब्दः॥ १ । ४ । १ ॥

## उच्चावचेष्वर्थेषु निपतन्ति ॥ २ ॥

" उच्चावचेष्वर्थेषु　निपतन्ति " । उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः ॥ १ । ४ । २ ॥

## अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः ॥ ३ ॥

आह—कतमे पुनस्ते ?, उच्यते— " अप्युपमार्थे, अपि कर्मोपसंग्रहार्थे, अपि पदपूरणाः "। उपमैवार्थ उपमार्थः, तस्मिन्नुपमार्थे। उपमा नाम,—कस्मिंश्चिदेवार्थे यः प्रसिद्धो

---

* इतोग्रे—'इति निरुक्तव्याख्यायां तृतीयः खण्डः ॥३॥' इति द्रष्टव्यमग्रिमसंवादात् ॥ इति श्रीजम्बुमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां षष्ठाध्यायस्य प्रथमः पादः " इत्युपलभ्यते । तत्र यत् ' षष्ठाध्यायस्य ' इत्येवमुपलभ्यते तत्तु निघण्टोः पञ्चाध्यायात्मकस्यापि गणनया बोध्यम् ॥ परंचेयं पादकल्पना मूलेऽदर्शनेन टीकायामेव दर्शनेन कैश्चित्प्रक्षिप्तेति तत्त्वम् ॥　१ एष निरुक्तपाठः प्राचीनपुस्तकेषूपलभ्यमानोपि व्याख्याकृता नैव व्याख्यातस्तत्र कारणं न जानीमः । टीकाग्रन्थस्त्रुटितो वा भवेत् ॥

गुणः, तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं क्रियते सोपमा॥ कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थः, तस्मिन् कर्मोपसंग्रहार्थे । अर्थोपसंग्रहार्थे इत्यर्थः। कर्मशब्दो हि प्रायेणार्थपर्य्यायवचन एतस्मिञ्च्छास्त्रे । "गतिकर्माण उत्तरे धातवः ( ३, ख. ९, १९ )", गत्यर्था इति गम्यते ॥ पदमेव पूरयितव्यं येषामर्थः, ते पदपूरणाः । तदेतत् त्रिधात्वमर्थभेदकृतं निपातानां समासेन ॥ १ । ४ । ३ ॥

## तेषामेते चत्वार उपमार्थे भवन्ति ॥ ४ ॥

आह–किमविशेषेण सर्वे एतस्मिन्नर्थे निपतन्ति ? । 'न' इत्युच्यते–" तेषामेते चत्वार उपमार्थे भवन्ति " । तेषां सर्वेषां मध्ये एत एव चत्वारः–इव, न, चित्, नु च प्रायोवृत्त्या उपमार्थे भवन्ति ॥ १ । ४ । ४ ॥

## इवेति भाषायाञ्च ॥ ५ ॥

अधुनैवमुक्त्वा भाषाच्छन्दःप्रविभागेनोदाहरणमेकैकं दर्शयति–समासविस्ताराभ्यां हि शास्त्राणि प्रतीयन्ते । तत्रायं तावत्–" इवेति भाषायां च " । उपमार्थीयः ॥१।४।५॥

## अन्वध्यायश्चाग्निरिवेन्द्र इवेति ॥ ६ ॥

" अन्वध्यायश्च " । छन्दसि चेत्यर्थः । कश्चित् छन्दस्येव भवति, न भाषायाम् । कश्चिद्भाषायामेव, न च्छन्दसि । कश्चिदुभयत्र, इत्यतो विभागेन प्रदर्श्यते ॥

आह,–किमुदाहरणमिवेत्यस्योपमार्थीयस्य ?, का चोपमाशब्दस्य व्युत्पत्तिरिति ?, ॥ उच्यते–उपगम्य तथागुणैर्मीयत इत्युपमा[१]। " अग्निरिवेन्द्र इवेति "–इत्येतदत्रोदाहरणम् । तपसः पुत्रो मन्युर्नाम, तस्येयमार्षम् ॥

आह,–ननु सर्व एवायमृग्यजुःसामाथर्वात्मको ब्रह्मराशिरादित्यान्तरपुरुषस्य भगवतो हिरण्यगर्भप्राणस्यार्षमैतरेयके रहस्यब्राह्मणे " शतर्चिनो मध्यमाः "–इत्येवमाद्यनुपरिक्रम्य पुनः पर्य्यावृत्त्य " एतमेव सन्तं शतर्चिन इत्याचक्षत एतमेव सन्तं गृत्समद इत्याचक्षते "–इत्येवमादिना क्रमेण मन्त्रदृक्छब्दान् प्राणे[२] निगमयति । अथापीदृशः[३] शौनकेन सन्दृष्टाः, यस्यामार्षाणि विद्यन्ते । सा न स्मृतिः ॥ 'श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी '–इति न्यायविदः खल्वपि पठन्ति–" विरोधे त्वनपेक्षं स्यात् ( जै० सू० १, ३, ३ )"–इति । तस्माद्विशेषाभिधानमनर्थकमेवेति ? ॥ उच्यते–न ह्येकस्मादात्मनः[४] परिशयमात्रशेषः सन् शौनकः कुर्य्यात् । पश्यतो ह्युभावपि । तेन क्षेत्रज्ञावुभावपि मन्त्राभिव्यक्तौ व्यापृतौ । बुद्धिदेवतात्वेन हिरण्यगर्भः क्षेत्रज्ञोऽवस्थितः सर्वभूतानां कर्मविपाकानुरू-

१ 'उपगम्यातथागुणै' ॥ २ 'अपि चैतो ऋचः शौ०' ॥ ३ 'तथाच' ॥ ४ 'ह्येकस्मात्' ॥

रूपेण यमर्थं शब्दं वा दर्शयति । तदितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यति । तत्रैवं सति वसिष्ठादिर्मन्त्रदृक् क्षेत्रज्ञस्तेनैवोपदर्शितं मन्त्रं पश्यतीत्युभयमुपपद्यते । एवं सत्युभावपि याथात्म्यतस्तावदनुसन्धेयौ मन्त्रप्रयोगकाल उभयोरर्थवत्त्वाय ॥ यत् पुनरेतदुक्तं भवता—श्रुतिस्मृत्योर्विरोधे श्रुतिरनपेक्ष्या—इति । न हि विरोधोऽस्त्युभयोरपि संधीयमानयोः । अपि च श्रुतिपूर्वकमेवेदं स्मरणं, न स्वतन्त्रम् । ताण्डके हि रहस्यब्राह्मणं दर्शयति—"यत् साम्ना स्तोष्यन् स्यात्, तत्सामोपधावेत् । यस्यामृचि तामृचम् । यदार्षं तमृषिम्"—इति ॥ तत्र यदुक्तम्—स्मृतिरियमिति ॥ तदयुक्तम् ॥ तस्माद्वक्तव्यमेव विशिष्यार्षमिति ॥

त्रिष्टुवेषा, मान्यवी, श्येनादिषु निष्केवल्ये शस्यते ।

"अ॒ग्निरि॑व मन्यो त्विषि॒तः स॑हस्व सेना॒नीर्नः॑ सहुरे हू॒त ए॑धि ।

ह॒त्वाय॒ शत्रू॒न् वि भ॑जस्व॒ वेद॒ ओजो॒ मिमा॑नो॒ वि मृधो॑ नुदस्व ॥ ( ऋ० सं० ८ ३, १९, २ )" । मन्युः पुनरिन्द्र एव,

"म॒न्युरिन्द्रो॑ म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॑ वरु॑णो जा॒तवे॑दाः । (ऋ० सं० ८, ३, १८, २ )" माहाभाग्यात् कर्मपृथक्त्वाच्च—अथवा देवतान्तरम्, पृथगभिधानश्रुत्यभिसम्बन्धात् ॥

आह—ननु मान्यवो मन्त्रो माहेन्द्रग्रहयजिसन्निधौ निष्केवल्ये शस्यमानो महेन्द्रमभिहितसंस्कारेणासमर्थ एव वक्तुम् ॥ अथ किमर्थमयं निष्केवल्ये शस्यते इति ?,॥ उच्यते,—अन्यदेव हि श्रुत्यभिव्यङ्ग्यमपूर्वमारादुपकाराङ्गभूतं माहेन्द्रग्रहयजिव्यङ्ग्यस्यापूर्वस्य । अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्यातामिति न्यायविदो याज्ञिकाः पठन्ति । वक्ष्यति चायमपि,—"इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः ( ७, ३, १ )"—इति । स एव मन्युस्तुतिभाक् एव । यथा "अभि त्वा शूर ( ऋ० सं० ५ । ३ । २१ । २ )" इति इन्द्र एव तस्मिन्निष्केवल्ये, यथा "आपो॒ हि ष्ठा ( ऋ० सं० ७, ६, ५, १ )"—इत्याप आग्निमारुते, सूर्यादय आश्विने, एवम् ॥

हे 'मन्यो !' 'सहुरे' सहनशील ! एतस्मिन् शत्रूणामभिभवनकाले प्रत्युपस्थिते 'हूतः' आहूतः सन् अस्माभिः, 'सेनानीः' सेनाप्रणेता 'नः' अस्माकम् 'एधि' भव । ततश्च 'अग्निरिव' 'त्विषितः' दीप्तस्त्वं तेजसा 'सहस्व' अभिभव तानस्मच्छत्रून् । 'हत्वाय' हत्वैव यदेतेषामस्मच्छत्रूणां 'वेदः' धनं तत् त्वमादाय तेषामस्मद्योधानाम् 'ओजः' बलं 'मिमानः' निर्माय यथावस्तु यथार्हं 'विभजस्व' । येऽपि च केचिद्धतावशिष्टाः 'मृधः' मृधकारिणः अस्मद्भ्यः अस्मत्तः प्रत्याजिहीर्षन्त्येतद्धनम्, तेषामोजो मिमानः तूलयित्वा कियदवशिष्टबला ह्येते न शक्ताः प्रत्याहन्तुमित्येवं मिमानस्तावन्मात्रशेषबलान् कृत्वा त्वं 'विनुदस्व' एतान् दूरं प्रक्षिप अपुनरागमनाय ॥

---

१ 'विशेषार्थे' ॥ २ 'श्रुत्यभिधानसम्बन्धात्' ॥ ३ 'सहुरे' ॥

द्वितीयमुदाहरणमेतस्यैव—"इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ (ऋ० सं० ८, ८, ३१, २)" अनया चानुष्टुभा ध्रुव आङ्गिरसो राजानमभिसिषेच। 'इहैव' राष्ट्रे त्वम् 'एधि' भव। 'मा' चातस्त्वम् 'अप च्योष्ठाः'। 'पर्वत इव' 'अविचाचलिः' अविचलनशीलः। 'इन्द्र इव' च 'इह' 'ध्रुवः' शाश्वतः 'तिष्ठ'। स्थित्वा च इदं 'राष्ट्रम्' 'इह' 'उ' एव विभूतियोगेन स्थितं 'धारय'—इत्याशीः॥

भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठितम्। अथवा एते एव—'अग्निरिव तीक्ष्णः' 'इन्द्र इव विक्रान्तः'॥ १। ४। ६।

## नेति प्रतिषेधार्थीयो भाषायाम् ॥ ७ ॥

"नेति प्रतिषेधार्थीयो भाषायाम्" प्रसिद्धः॥ १। ४। ७॥

## उभयमन्वध्यायम् ॥ ८ ॥

"उभयमन्वध्यायम्" अन्वध्यायं छन्दसि 'न' इति 'प्रतिषेधार्थीयः उपमार्थे च' इत्युभयमपि द्रष्टव्यम्॥ १। ४। ८॥

## "नेन्द्रं देवममंसत" इति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रतिषेधति ॥ ९ ॥

आह—तत्र प्रतिषेधार्थीयस्य किमुदाहरणम्? उच्यते—"नेन्द्रं देवममंसत इति (ऋ०सं० ८, ३, ४, १) नेन्द्रं देवमात्मनो दीपयितारममन्यन्तादित्यरश्मयः इति शेषः॥

आह—किं पुनर्लक्षणमिति?। उच्यते—" प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति"॥ १। ४। ९॥

## "दुर्मदासो न सुरायाम्" इत्युपमार्थीयः। उपरिष्टादुपचारस्तस्य येनोपमिमीते ॥ १० ॥

"दुर्मदासो न सुरायाम्—इत्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते" येनार्थेनोपमेयमर्थमुपमिमीते। तद्यथा—"दुर्मदासो न सुरायामिति"।

"हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्।
ऊधर्न नग्ना जरन्ते॥ (ऋ० सं० ५, ७, १९, १)।"

काण्वो मेधातिथिराङ्गिरसश्च प्रियमेधे ऐन्द्रं सूक्तं ददृशाते। तत्रैषा गायत्री। येषामपि विनियोगः क्वचिदन्यत्र नास्ति, तेऽपि वाचःस्तोमे विनियुज्यन्ते। 'हृत्सु' 'पीतासः'

पीताः सन्तो हृदयेष्ववस्थिताः सोमाः 'युध्यन्ते' सम्प्रहारमिव कुर्वन्ति । अहं विशिष्ट इत्येवं स्पर्द्धमानाः । क इव ? 'दुर्मदासो न' दुर्मदासः "आज्जसेरसुक्" ( पा० ७, १, ५० ) यथा कुत्सितमदाः केचित्पुरुषाः सुरायां पीतायां सत्यां युध्येरन्, एवम् । किंच, तमेव यजमानं 'जरन्ते' स्तुवन्तीव आत्मलाभपरितुष्टाः । कथं जरन्ते ? 'ऊधर्न' ऊधरिव रात्रिमिव 'नग्नाः'[1] भूत्वा स्त्रियं सम्प्रयोक्ष्यामह इत्येवमभिप्राया इव ॥ केचिद्विशिष्टाः पुरुषाः ॥ १ । ४ । १० ॥

## चिदित्येषोऽनेककर्मा ॥ ११ ॥

"चिदित्येषोऽनेककर्मा।" चिदित्येषोऽनेकार्थोऽपि सन्नुपमार्थीयप्रसंगादत्रोदाहृतः[2] ॥ ११

## आचार्य्यश्चिदिदं ब्रूयादिति पूजायाम् ॥ आचार्यः कस्मादाचार्य्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा[3] ॥ १२ ॥

कथमयमनेकार्थ इति?, उच्यते,–"आचार्य्यश्चिदिदं ब्रूयादिति पूजायाम्"। आचर्य्य एवं ब्रूयात्, कोऽन्य एवं वक्ष्यतीति ॥ १ । ४ । १२ ॥

## दधिचिदित्युपमार्थे ॥ १३ ॥

"दधिचिदित्युपमार्थे" दधिरूप ओदन इति ॥ १ । ४ । १३ ॥

## कुल्माषांश्चिदाहरेत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति ॥ १४ ॥

"कुल्माषांश्चिदाहरेत्यवकुत्सिते" । भृशं कुत्सिते । कुल्माषानपि तावदाहरेति किंवे-दादाहरिष्यसि ॥ १ । ४ । १४ ॥

## नु इत्येषोऽनेककर्मा ॥ १५ ॥

"नु इत्येषोऽनेककर्मा" ॥ १ । ४ । १५ ॥

## इदं नु करिष्यतीति हेत्वपदेशे ॥ १६ ॥

कथम् ? "इदं नु करिष्यतीति हेत्वपदेशे" कथं हि क्रियाया हेतुर्निमित्तमित्यर्थः१।४।१६

## कथं नु करिष्यतीत्यनुपृष्टे । नन्वेतदकार्षीदिति च[4] ॥ १७ ॥

---

१ "नग्नाः" स्तोतारः । ते च 'ऊधर्न' पयसा पूर्णं गवादेरूध इव सोमपूर्णं त्वां 'जरन्ते' स्तुवन्ति ।" इति सायणः ॥ २ उपमार्थीयसंयोगादुदाहृतः ॥ ३ निरुक्तपाठस्यापि व्याख्या न कृतेति ॥ ४ एष निरुक्तपाठोऽपि न व्याख्यातः ॥ ५ "चा" ॥

"कथं नु करिष्यतीत्यनुपृष्टे" ॥ करिष्यतीत्युक्ते यत् पुनरनुपृच्छति–'कथं नु करिष्यति ?' तदनुज्ञानमेतस्मिन्ननुपृष्टे ॥ "नन्वेतदकार्षीदिति च" । अनुपृष्टे एवायं भवतीति ॥ नन्वयमकार्षीदेतत्, कथमयं ब्रवीति कथं करिष्यतीति ? ॥ १ । ४ । १७ ॥

## अथाप्युपमार्थे भवति ॥ १८ ॥

"अथापि" अयम् 'नु' "उपमार्थे भवति" ॥ १ । ४ । १८ ॥

तद्यथा–

"वृक्षस्य नु ते पुरुहूत वयाः।" वृक्षस्येव ते पुरुहूतशाखाः। वयाः शाखा वेतेर्वातायना भवन्ति । शाखाः खशयाः शक्नोतेर्वा ॥ १९ ॥

"अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यू३तयो रुरुहुरिन्द्र पूर्वीः ।" ( ऋ० सं ४, ६, १७, ३ )

भरद्वाजो बार्हस्पत्यः पारिक्षितोऽस्यास्त्रिष्टुभः, पूर्वेणार्द्धर्चेनेन्द्रं स्तुत्वोत्तरेणोपालब्धवान् । हे 'शूर' इन्द्र ! 'पुरुहूत !' महानक्ष इव चक्रयोः 'प्ररिरिचे' प्रकर्षेणातिरिच्यते । 'ते' तव 'मह्ना' महत्त्वेन विभूतिः । कुतोऽतिरिच्यते ? 'रोदस्योः' द्यावापृथिव्योः । तथापि चैवं विभूतियुक्तस्य सतस्तव त्वद्भक्तानामेवास्माकं सतां 'वृक्षस्येव' 'वयाः' शाखाः 'पूर्वीरूतयः' पूर्वाः अस्मद्यज्ञागमनमार्गाः 'विरुरुहुः' खिलीभूतास्तवा॒ऽऽगमनात् । अहो कष्टं मन्दभागधेयतास्माकम् । येषां नो धनं तदस्ति येन त्वां यजेमहि । किमत्र त्वां यक्ष्या॒म इति ॥ "वयाः शाखाः" इति पर्य्यायवचनः । "वेतेः" वया इति निगमप्रसक्तस्य निर्वचनम् । "शाखाः खशयाः" इति पर्य्यायप्रसक्तस्य ॥ १ । ४ । १९ ॥

## *अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः ॥ २० ॥

व्याख्याता उपमार्थीयाः । अथानन्तरं प्रतिज्ञाप्रसक्तानेव कर्मोपसंग्रहार्थान्वक्ष्यामः– "अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते, न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः" ।

१ कटम् अस्य ॥ २ 'पूर्वैः' ॥ ३ 'स्तवनम्' ॥ ४ 'वक्ष्याम' ॥

यस्यागमादध्याहारादश्रूयमाणस्यैव निपातस्य सरूपाविरूपैकशेषादर्थतो वा 'पृथक्त्वमह' पृथग्भाव एव 'विज्ञायते' । तद्यथा,—देवदत्तयज्ञदत्तौ, देवदत्तश्च यज्ञदत्तश्चेति ॥

आह—द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते । न तु तयोरौद्देशिकमिव पृथक्त्वमिति । यथा गाः, अश्वान्, पुरुषान्, पशूनिति प्रत्येकमुद्दिश्यमानानाम् । इह तु विग्रहेण च-शब्दागमादेतत्पृथक्त्वमुपजायते । नानाग्रहणं द्वयोर्बहूनामर्थानां विग्रहः, स एष पृथक्त्वाद्धेतोः पृथक्त्वेन निमित्तेनोपलक्ष्यमाणो यस्माद्द्वावर्थौ बहून्वा गृहीत्वैकस्मिन्कर्मण्युपसमाचेष्टयति । तद्यथा,—'देवदत्तयज्ञदत्तौ पचेते'—इत्येवम् । तस्मात् 'कर्मोपसंग्रहः'—इत्येतन्नामैव तद्भवति । अथवा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिश्चेति ॥ १ । ४ । २० ॥

## चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यते—अहं च त्वं च वृत्रहन्निति ॥ २१ ॥

कतमः पुनरसाविति ? उच्यते,—"चेति" कदाचिदयमेव 'समुच्चयार्थः' 'उभाभ्याम्' अप्यर्थाभ्यां विगृहीताभ्यामेव संयुक्तः 'प्रयुज्यते' । यथा च,—

"अहं च त्वं च वृत्रहन्त्संयुज्याव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नो शूर मंसते भद्रा इन्द्रस्य रातयः ॥" ( ऋ० सं० ६, ४, ४१, ५ ) इति ।

घोरपुत्रः प्रगाथोऽनया ऐन्द्रया पङ्क्त्या इन्द्रस्य सख्यार्थी सन्नब्रवीत् । हे 'वृत्रहन्' इन्द्र ! 'अहं च' प्रगाथः 'त्वं च' 'संयुज्याव' । एकस्मिन्नर्थे सति प्राप्तिलक्षणे युज्यावहै 'आ सनिभ्यः' आप्राप्तेः । 'अरातीवा'—इत्येकं पदम् । अथैवमावां संयुक्तौ दृष्ट्वा हे 'अद्रिवः' 'अरातीवा चित्' अदानशीलोऽपि दानशीलतामुपेत्यानुमंस्यत एवावयोर्दानम् । 'भद्रा' भन्दनीया 'इन्द्रस्य' 'रातयः' दानानीत्येवं मन्यमानः । को हि नाम त्वत्संयुक्तानामस्माकं न दद्यादित्यभिप्रायः ॥ १ । ४ । २१ ॥

## एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारः ॥ २२ ॥

" अथापि " आकारः " एतस्मिन्नेवार्थे " समुच्चयार्थे । " देवेभ्यश्च पितृभ्य आ"—इति । अयमेतस्मिन्मन्त्रे आकारः ।

---

१ 'ननु' ॥ २ 'तेनाग्रहणं' ॥ ३ 'एव' ॥

"यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचाति देवेभ्यश्च पितृभ्य आ ॥" ( ऋ० सं० ७, ६, २२, १ ) ।

अनुष्टुप्, यामी, पितृयज्ञे विनियुक्ता । 'योऽग्निः' कव्यस्य वोढा, यस्यायमधिकारः, कव्यानि वोढव्यानीति, स इहास्माकं पितृयज्ञे होतृत्वेन व्यवस्थितः 'पितॄन्' आहूय 'यक्षत्' पूजयत्वित्यर्थः। किंलक्षणान् 'ऋतावृधः' सत्यवृधो वा यज्ञवृधो वा । किंच । 'प्रेदु हव्यानि' 'वोचाति' वोचतु च । प्रब्रवीत्वेतानि हवींष्यस्मत्प्रदत्तानि । कस्मै ? 'देवेभ्यश्च पितृभ्यश्च'–इति ॥ १ । ४ । २२ ॥

## वेति विचारणार्थे–हन्ताहं पृथिवीमिमां निदधानीहवेहवेति २ ३ । ४ ॥

"वेति" अयं "विचारणार्थे" । समुच्चयार्थीयप्रसंगेनोदाह्रियते--

"हन्ताहं पृथिवीमिमां निदधानीह वेह वा ।
कुवित्सोमस्यापामिति ॥ ( ऋ० सं० ८, ६, २७, ३ ) ।"

ऐन्द्रो लवस्तस्येयमार्षं, गायत्री । 'हन्त' इदानीमेव 'अहम्' 'इमां' पृथिवीम् 'इह वा' अन्तरिक्षलोके, 'इह वा' द्युलोके । अथवा 'इह' दक्षिणे स्कन्धे, 'इह वा' सव्ये 'निदधानि' अवस्थापयामि । अतः स्थानादुद्धृत्य । अथ किमर्थं ब्रूषे?, 'कुवित्सोमस्य' बह्वहं 'सोमस्य' सोमम् 'अपाम्' पीतवानिति । अस्य मे सोमपानस्यानुरूपमेव वीर्य्यमप्यस्तीत्यभिप्रायः ॥ १ । ४ । २३ ॥

## अथापि समुच्चयार्थे भवति-वायुर्वा त्वामनुर्वा त्वेति ॥ १ ॥

"अथापि" 'वेति' अयं "समुच्चयार्थे भवति" । * "वायुर्वात्वा मनुर्वात्वा" इत्यस्मिन्मन्त्रे ।

"वायुर्वा त्वा मनुर्वात्वा गन्धर्वाः सप्तविंशतिः ।
ते अग्रे अश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ( यं० सं० ९, ७ )" ।

अनुष्टुबेषा । वाजपेयेऽश्वयोजने विनियुक्ता । हे 'अश्व !' वायुश्च त्वा मनुश्च त्वा, गन्धर्वा एते सप्तविंशतिर्युञ्जन्ति त्वामस्मिन् रथे । ते हि विदुर्यथा त्वं योक्तव्यः । त एव च पूर्वमप्यश्वं युक्तवन्तो देवानामृषीणां च । त एव च तस्मिन्[3] 'जवमादधुः' आहितवन्तो यस्मादतो ब्रवीमि ममापि चाग्ने ! तमश्वं त एव युञ्जन्तु, जवं चास्मिन्नादधात्विति ॥ १ । ५ । १ ॥

---

१ 'आप्री' ॥ २ 'ब्रूते' ॥ * इतोऽग्रे–'इति निरुक्तव्याख्यायां चतुर्थः खण्डः ॥ ४ ॥' इति दृश्यते, तत् 'अथापि' इत्यतः प्रागुचितम् ॥ ३ 'अस्मिन्' ॥

## अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं न करिष्यतीति ॥ २ ॥

"अह इति च, ह इति च" द्वावप्येतौ "विनिग्रहार्थीयौ" तयोः पुनरेतयोरेतत्प्रयोगस्वाभाव्यम् । द्वयोरर्थयोरेककाले प्रकृतयोः "पूर्वेण" पूर्ववाक्यगतेनार्थेन "संप्रयुज्येते" संयुक्तौ प्रयुज्येते । तद्यथा–"अयमहेदं करोत्वयमिदम् ।" अयमह यज्ञदत्तो गाः पाययतु, अयं देवदत्तो भुङ्क्तामिति ॥

हकारस्योदाहरणम् "इदं ह करिष्यतीति" । यज्ञदत्त इदं ह करिष्यति । "इदं न करिष्यतीति" । ओदनं न पक्ष्यतीति ॥ १ । ५ । २ ॥

## अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति सत्यमु ते [ मे ] वदन्तीति ॥ ३ ॥

"अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण" । विनिग्रहार्थे भवति । स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते तद्यथा,–"मृषेमे" वृषलाः "वदन्ति" "सत्यमु ते" ब्राह्मणाः "वदन्तीति" । विनिग्रहो नाम, विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयोरेकस्मिन्यज्ञदत्तेऽभिमतगोपायनस्य[1] नियमेन ग्रहणं ( यत् स विनिग्रहः, )तदर्थो विनिग्रहार्थः, विनिग्रहार्थ एव विनिग्रहार्थीयः ॥ १ । ५ । ३ ॥

## अथापि पदपूरण इदमु तदु ॥ ४ ॥

"अथापि" अयमुकारः "पदपूरणः" भवति ।

"इदमुत्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय॥ (ऋ०सं० ३,८,२,१) ।"

वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव । प्रातरनुवाकाश्विनयोः शस्यते । 'इदं' तत् 'ज्योतिः' यत् जनाः कथयन्ति । उकारः पदपूरणः । एतत् 'पुरुतमं' बहुतमम् । कुतः पुरुतमम् ? 'तमसः' यदभिभूय शार्वरं तमः स्वमात्मानमभिव्यनक्ति । अत एव तद् बहुतमम् । 'पुरस्तात्' प्राच्यां दिशि ज्योतिः 'वयुनवत्' प्रज्ञानवदुत्तिष्ठति । 'नूनं' निश्चयेन एताः 'उषसः' 'दिवो दुहितरः' । रूपसामान्याद्दुहितृत्वम् । 'विभातीः' विभासमानाः 'गातुं' गमनमपि कृतार्थं जनानां 'कृणवत्' कुर्वत्य[2] आगच्छन्ति । यथेयमनुरज्यते प्राची दिक्, विध्वंसते[3] च तमः । एकस्या एव पूजनार्थं बहुवचनम् ॥

१ 'अभिमतरसगोपायनस्य' ॥ २ 'कुर्वन्त्य' इति सनकारपाठः प्रामादिकः, नुमोऽप्राप्तेः ॥
३ 'विध्वस्यते' ॥

"तदु प्रयंक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः॥" (ऋ० सं० १, ५, २, १)

द्वितीयमुदाहरणमस्यैव। गौतमो नोधाश्चानया त्रिष्टुभेन्द्रमस्तौत्। प्रवर्ग्ये विनियुक्ता। 'तत्' प्रकर्षेण 'यक्षतमं' पूज्यतमम्। उ इति पदपूरण एव। 'अस्य' इन्द्रस्य 'दस्मस्य' दासयितुर्दर्शनीयस्य वा 'चारुतमं' शोभनतममन्यदपि तस्य 'अस्ति' 'दंसः' कर्म किमपि बहुप्रकारम्। तत् चार्वेव पूज्यमेव। इदमेव तस्य चारुतमं च पूज्यतमं च। तत् किम्?, 'उपह्वरे यत् उपराः अपिन्वत्'। उपह्वानमर्हन्ति यस्मिन् देशेऽवस्थिताः सहायाः स उपह्वरो देशः जनैराकीर्णे[१] यस्मिन्नेकाकी 'यत्' 'उपराः' मेघपूरिताः 'मध्वर्णसः' मधूदकाः 'चतस्रः' 'नद्यः' नदीः 'अपिन्वत्' अपातयत[२] अक्षारयत्। वर्षद्वारेण यज्ञादि प्रावर्त्तयत्,—इत्यतः। एतदेवास्य चारुतमत्वं पूज्यतमत्वं चेत्यभिप्रायः॥१।५।४॥

## हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे, कथं हि करिष्यतीत्यनुपृष्टे, कथं हि व्याकरिष्यतीत्यसूयायाम्॥५॥

"हीत्येषोऽनेककर्मा"। तद्यथा,—"इदं हि करिष्यतीति हेत्वपदेशे। कथं हि करिष्यतीत्यनुपृष्टे। कथं हि व्याकरिष्यतीत्यसूयायाम्"। कथमयं व्याकरिष्यतत्यिक्त-तप्रयत्नोऽयमित्यभिप्रायः। अमर्षादसाक्षाच्छब्दपूर्वकोऽभिप्रायः परिवादोऽसूयेत्युच्यते। परगुणानभ्यनुज्ञेत्यर्थः॥१।५।५॥

## किलेति विद्याप्रकर्ष एवं किलेति॥६॥

"किलेति विद्याप्रकर्षे" विज्ञानातिशय इत्यर्थः। अन्यत उपश्रुत्यातिशय इत्यर्थः। अन्यत उपश्रुत्यातिशयेनावधार्य्यान्यस्मा आचष्टे कश्चित्—"एवं किल[३]" एतदासीद्युद्धमिति॥१।५।६॥

## अथापि न ननु इत्येताभ्यां सम्प्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवम्॥७॥

"अथापि न ननु इत्येताभ्यां" संयुक्तः किलेत्ययं प्रयुज्यते। "अनुपृष्टे" अर्थे। अन्यत उपश्रुत्य कश्चिदर्थं नायमेवमिति, ततस्तमेवार्थमन्यमनुपृच्छति अर्थान्तरमश्रद्दधत्पूर्वस्य[४]। "न किलैवम्"—इति। "ननु किलैवम्"—इति॥१।५।७॥

## मेति प्रतिषेधे मा कार्षीर्मा हार्षीरिति च॥८॥

---

१ 'जनैरनाकीर्णे'॥ २ 'अपातयत्'॥ ३ 'किलेति'॥ ४ 'अथेतर'॥

"मेति" अयं "प्रतिषेधे" । तद्यथा-"मा कार्षीर्मा हार्षीरिति च" । अयञ्च प्रतिषेधार्थीय एव ॥ १ । ५ । ८ ॥

## खल्विति च खलु कृत्वा खलु कृतम् ॥ ९ ॥

"खल्विति च" । प्रतिषेधेऽर्थे । तद्यथा-"खलु कृत्वा"। अकृत्वेत्यर्थः । देशभाषा-व्यवस्थयैवञ्जातीयानामुपेक्षितव्यः क्वचित्प्रयोगः ॥ १ । ५ । ९ ॥

## अथापि पदपूरण एवं खलु तद्बभूवेति ॥ १० ॥

"अथापि" खल्वित्ययं "पदपूरणो" भवति । तद्यथा,-"एवं खलु तद्बभूव" इति अन्वीक्ष्यः प्रयोगः क्वचित्पादवृत्तेषु ॥ १ । ५ । १० ॥

## शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे ॥ ११ ॥

"शश्वदिति विचिकित्सार्थीयो भाषायाम्" । छन्दसि पुनरन्येष्वप्यर्थेषु भवति यथासम्भवं द्रष्टव्यः । इयं चास्य शैली अर्थमपेक्ष्य । एवंशब्दस्य पुरस्तात्प्रयोगो वा भवति उपरिष्टाद्वा । तद्यथा,-"शश्वदेवमित्यनुपृष्टः एवं शश्वदित्यस्वयं पृष्टे" अर्थे इति वाक्यशेषः ॥ १ । ५ । ११ ॥

## नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्च ॥ १२ ॥

"नूनमिति विचिकित्सार्थीयो भाषायाम्"। विचिकित्सा नाम विवेकपूर्वकोऽवधारणाभिप्रायः । तत्रायं भाषायां भवति । "उभयम् अन्वध्यायम्" छन्दसि । पुनरयमर्थद्वये भवति-"विचिकित्सार्थीयश्च पदपूरणश्च" ॥ १ । ५ । १२ ॥

## अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार स इन्द्र एत्य परिदेवयाञ्चक्रे ॥ १३ ॥ ५ ॥

उदाहरणमत्र निर्विवक्षुर्निदानमेवाह,-"अगस्त्य इन्द्राय हविर्निरुप्य"—इत्यादि निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्, तेन ह्यतितरामर्थमुच्यमानः प्रकाशते । ततः पदानि । ततोऽर्थः । ततः प्रत्येकं विग्रहेण निर्वचनम् । एष हि व्याख्याक्रमः[1] ॥

---

[1] 'व्याख्याकृतः' ॥

अगः कुम्भः तत्र स्त्यानः संहत इत्यगस्त्यः । सः "इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्सांचकार" । सम्प्रदातुमैच्छदित्यर्थः। "स इन्द्र ऐत्य परिदेवयाञ्चक्रे" । परिदेवना नाम मन्युपूर्वको विलापः ॥ १ । ५ । १३ ॥*

"न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं विनश्यति ॥"

न नूनमस्त्यद्यतनं, नो एव श्वस्तनम् । अद्यास्मिन् द्यवि,—द्युरित्यह्नो नामधेयं द्योतत इति सतः । श्व उपाशंसनीयः कालः । ह्यो हीनः कालः ।'कस्तद्वेद यदद्भुतम्।' कस्तद्वेद यदभूतम् । इदमपीतरदद्भुतमभूतमिव । 'अन्यस्य चित्तमभिसञ्चरेण्यम्' अभिसञ्चारि ॥ अन्यो नानेयः । चित्तं चेततेः । 'उताधीतं विनश्यतीति' अप्याध्यातं विनश्यति । आध्यातमभिप्रेतम् ॥ १ ॥ ६ ॥

"न नूनमस्ति ( ऋ० सं० २,४, १०,१)"—इति । विचार्य्यमेतन्ममैतत्तावत्,—अद्यतनं हविर्मम नास्तीति । नकारं दृष्ट्वाद्यतनशब्दोऽध्याहृत आचार्य्येण । प्रतिषेधे हि सति प्रतिषेध्येनाप्यवश्यं भवितव्यमिति । एते च मन्त्रैकदेशा एव सन्तोऽध्याहाराः पदातिरेकादध्ययनकाले नाधीयन्ते । ते त्वर्थनिर्वचनकाले प्रकाशयितव्याः ॥ अथापि स्यात् श्वस्तनं भविष्यतीति, 'नो श्वः' इदं तावदस्मदर्थमेव निरुप्तं सदस्मत्तो व्यापन्नमद्य, श्वस्तने का प्रत्याशा । किं कारणं ? 'कस्तद्वेद यदद्भुतम्' । को हि नाम तद्वेद जानाति, यददूभुतमनुत्पन्नं कस्य भविष्यतीति मम वा अन्यस्य वा इति ॥ कस्मात्पुनर्न विज्ञायत इति ? अतः—यस्मात् 'अन्यस्य चित्तमभिसञ्चरेण्यम्' सञ्चरणशीलमनवस्थितमित्यभिप्रायः । 'उत' उत, अपि, अथेति च्छन्दसि समानार्थाः । एतदद्यतनं हविः 'आधीतम्' आध्यातमभिप्रेतं सत् । मया ममेदमित्येवं, तथापि 'विनश्यति' एवान्यस्मै प्रदीयते । तत्रैवं सति श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः ॥

१ उपेत्य' ॥ * इतोग्रे दृश्यमानम्—'इति निरुक्तव्याख्यायां पञ्चमःखण्डः ॥५॥' इति 'नूनमिति विचिकित्सार्थीयः' इत्यतः प्राग्द्रष्टव्यम् । 'इति निरुक्तवृत्तौ षष्ठा(प्रथमा) ध्यायस्य द्वितीयः पादः ॥ ६ । २ ॥' इति तूपलभ्यते ॥ २ 'ह्रियत' ॥ ३ 'अथ' ॥ ४ 'मुत्पन्नम्' ॥

अथैकपदनिरुक्तम्—।" अस्मिन् द्यवि,—द्युरित्यह्नो नामधेयं । द्योतत इति सतः" । द्योतते तत् इति द्युरिति। कर्तृकारकम् । सदिति यत्र ब्रूयात्, तत्रोच्चारित एव कारकनियमो द्रष्टव्यः, अन्यत्र यथेष्टं योज्यम् । "श्व उपाशंसनीयः कालः" "श्व" इति उपाशंसनीयः उपगम्यः, सचेतसा आशास्तव्यो भवति, अनागतत्वात् । "ह्यो हीनः कालः" अतिक्रान्तो हि स भवति ॥ श्वःसम्बन्धात् ह्यःशब्दोऽविद्यमानोऽपि निरुक्तः, ॥ "अद्भुतम् अभूतम्" । "इदमपीतरदभूतम्"—शोणितवर्षादि, "अभूतमिव" कादाचित्कत्वात् । शब्दसारूप्यप्रसङ्गेनेदं निरुक्तम् । "अन्यो नानेयः" नानात्वेन व्यवस्थितस्यापत्यमसत्कुलजस्येत्यर्थः । अथवा न सतामानेयः । "चित्तं चेततेः" चेतत्यनेनार्थानिति चित्तम् । "उताधीतं विनश्यतीति, अप्याध्यातं विनश्यति । आध्यातमभिप्रेतम्"—इति पर्य्यायवचनम् ॥ एवमयमस्मिन्मंत्रे विचिकित्सार्थीयः ॥ १ । ६ । १ ॥

अथापि पदपूरणः—

"नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥"

सा ते प्रति दुग्धां वरं जरित्रे 'वरो' वरयितव्यो भवति । जरिता गारिता । 'दक्षिणा मघोनी' मघवती । मघमिति धननामधेयं मंहतेर्दानकर्मणः । दक्षिणा दक्षतेः समर्द्धयति-कर्मणो व्यृद्धं समर्द्धयतीति । अपि वा प्रदक्षिणागमनाद् । दिशमभिप्रेत्य, दिग्घस्तप्रकृतिः, दक्षिणो हस्तो दक्षतेरुत्साहकर्मणः । दाशतेर्वा स्याद्दानकर्मणः ॥ हस्तो हन्तेः प्राशुर्हनने ॥ देहिस्तोतृभ्यः कामान् । मास्मानतिदंहीर्मास्मानतिहाय दाः ॥ 'भगो नो अस्तु बृहद्वदेम स्वे वेदने' भगो भजतेः । बृहदिति महतो नामधेयं परिवृढ़ं भवति । वीरवन्तः कल्याणवीरा वा ॥ वीरो वीरयत्यमित्रान् । वेतेर्वा स्याद्गतिकर्मणो, वीरयतेर्वा ॥ १ ॥

"अथापि" अयमस्मिन्मन्त्रे "पदपूरणः" भवति—* "नूनं सा ते ( ऋ० सं० २, ६, ६, ६ )" इति। गृत्समदस्येयमार्षम्। पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीये शस्यते। 'नूनम्' इति पदपूरण एव। 'सा' दक्षिणा 'ते' तव या पुत्रभावके कर्मणि। सा किं करोतु ?, 'प्रति दुग्धाम्'। किम् ?, 'वरम्'। कर्मणो दक्षिणागुणकात् फलप्राप्तिस्तस्थापि तु दक्षिणायामुपचर्य्यते। कस्मै ?, 'जरित्रे' स्तुवते यजमानाय। किंलक्षणा ?, 'मघोनी' मघवती हिरण्यधान्यादिधनेन संयुक्ता, तद्वतीत्यर्थः। किंच, हे इन्द्र 'शिक्षा' देहि। कस्मै ? 'स्तोतृभ्यः' ऋत्विग्भ्योऽनुकामान्। किंच, 'माति धक्' मास्मानतिहायातीत्यान्येभ्यो देहीति मा दा इत्यर्थः। अस्मभ्यं तावद्देहि, ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः। किंच, 'भगो नः' धनं नोऽस्तु। येन किं कुर्य्याम ?, 'बृहद्वदेम' महदूर्जितं वदेम दीयतां भुज्यतामिति। क्व ?, 'विदथे' यज्ञे। अथवा स्वे गृहे। किंच, युष्मदनुग्रहाच्च 'सुवीराः' वीरवन्तो भवेम पुत्रवन्तो यद्यपुत्राः। एव अयं मत्वर्थीयः सुः। अथ पुनः पुत्रवन्त एव, ततः कल्याणवीरा इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"वरो वरयितव्यो भवति" व्रियते ह्यसौ। "जरिता गरिता" इति गिरतेः स्तुत्यर्थस्य। "मघमिति धननामधेयम्, मंहतेर्दानकर्मणः" दीयते हि तत्। "दक्षिणा दक्षतेः" समर्द्धयत्यर्थस्य, यज्ञे हि यत्किञ्चिद्विगतर्द्धिकं कृतं भवति, तदियं समर्द्धयति, विशिष्टं हि यज्ञस्य साधनमेतदिति। "अपि वा प्रदक्षिणागमनात्" दक्षिणा। दक्षिणां "दिशमभिप्रेत्य"—सा हि दक्षिणस्यां वेदिश्रोणौ, अग्रेण गार्हपत्यं, जघनेन सदः, दक्षिणेनाग्नीध्रियं गत्वा अन्तर्वेदिं स्थित्वा अन्तरेण चात्वालोत्करौ तमाग्नीध्रं चोत्सृज्यमाना गच्छन्तीति "दिक्" पुनर्दक्षिणा। "हस्तप्रकृतिः" प्राङ्मुखस्य प्रजापतेर्यतो दक्षिणो हस्तो बभूव, सा दक्षिणा दिगभवत्। अथ "दक्षिणो हस्तः" कस्माद्दक्षिण इति ?, "दक्षतेः" उत्साहार्थस्य,—स ह्युत्साहवान् भवति कर्मसु, न तथा सव्यः। "दाशतेर्वा स्यात्" दानार्थस्य, तेनैव हि प्रायेण दीयते। अथ "हस्तः" कस्मात् ?, "हन्तेः"—तेन हि हन्यते। न, अन्येनापि केनचिदङ्गेन हन्यते। एवं यो हन्तव्यो भवति तस्य "हनने" अयमेव तु "प्राशुः" शीघ्र इत्यर्थः॥

"बृहदिति महतो नामधेयम्, परिवृढं भवति"—इति।

"परिवृढं" परिवृढं तद्भवति—इति। "वीरो वीरयत्यमित्रान्" नानाप्रकारं मारयतीत्यर्थः। "वेतेर्वा स्याद्गतिकर्मणः" गत्यर्थे वर्त्तमानस्य, गच्छत्येवासावभिमुखः शत्रून्। "वीरयतेर्वा" विक्रमार्थस्य, विक्रान्तो ह्यसौ भवति॥ १। ७। १॥

---

* इतोऽग्रे दृश्यमानम्—'इति निरुक्तव्याख्यायां षष्ठः खण्डः॥६॥' इति "अथापि" इत्यतः प्राग्॥ १ 'मेव'॥

## सीमिति परिग्रहार्थीयो वा पदपूरणो वा ॥ २ ॥

"सीमिति" अयं "परिग्रहार्थीयो वा पदपूरणो वा" । "प्रसीमादित्यो असृजत् ऋ० सं० (२, ७, ९, ४)" । अस्यामेव तावदुभयमपि प्रदर्शयति । ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणं वक्ष्यति ॥ गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येयमार्षम्, त्रिष्टुप्, सौरी ।

"प्रसीमादित्यो असृजद्विधर्त्ता ऋतं सिन्धवो वरुणस्य यन्ति । न श्राम्यन्ति न विमुञ्चन्त्येते वयो न पप्तू रघुया परिज्मन् ॥"

सूर्य्यः पुनरस्यां वरुणनाम्ना स्तूयते । प्रासृजत्सूर्य्यो रश्मीन् । सीमिति पदपूरण एव । कुतोऽपीत्यविवक्षितमेवैतत् पदपूरणपक्षे ॥ अथ परिग्रहार्थीयं सर्वमेव परिगृह्णाति– "प्रासृजत्सर्वत इति वा" । 'विधर्त्ता' विधारयिता, रसानां, रश्मीनां वा, स्वरश्मिजालान्तर्गतस्य वा, धर्त्ता सर्वस्य जगतः । 'ऋतम्' उदकमादाय, पृथिवीलोकादन्तरिक्षलोकाच्च । 'सिन्धवः' स्यन्दनाः[1] सूर्य्यरश्मयः,—ते हि आदित्यमण्डलात् न्यञ्चो[2] वर्त्तमानाः स्यन्दन्ते वर्षकाले, सूर्य्येण प्रसृष्टा उदकमादाय सार्वलौकिकं 'वरुणस्य' सूर्य्यस्य स्थानं मण्डलं 'यन्ति' । तदेवमप्यनिशमुत्सर्गादानलक्षणं स्वकर्म कुर्वाणाः 'न श्राम्यन्ति' । 'न' वा श्रान्ता अपि सन्तो विरागान्नाप्येतत् कर्म 'विमुञ्चन्ति एते'। कथं पुनः पतन्तो न श्राम्यन्ति ?, किं शनकैः ?, न 'वयो न' वय इव पक्षिण इव शीघ्रं 'पप्तुः' पतन्तः 'रघुया' लघुया लघ्व्या शीघ्रिकया गत्यापि 'परिज्मन्' परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्त्येतत् कर्म ॥ एतद्गुणयुक्तानामप्येतेषां सूर्य्य एव प्रविसर्गे संयमे च ईश्वर इत्येवं सूर्य्यस्य स्तुतिरेषा ॥ १ । ७ । २ ॥

## "प्रसीमादित्यो असृजत्" प्रासृजदिति वा, प्रासृजत् सर्वत इति वा ॥ "विसीमतः सुरुचो वेनआवः" इति च ॥ व्यवृणोत् सर्वत आदित्यः । सुरुच आदित्यरश्मयः सुरोचनात् । अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्—सीम्नः सीमतः, सीमातो मर्य्यादातः । सीमा मर्य्यादा, विसीव्यति देशाविति ॥ ३ ॥

"विसीमतः सुरुचो वेन आवरिति च"। इदं द्वितीयमुदाहरणम्—ब्रह्मजज्ञानमित्यृक् ।

---

१ 'स्यन्दनात्' ॥ २ 'प्राञ्चो' ॥

"ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥" (य० वा० सं० १३, ३)। सामवेदसंहितायामपि (छ० आ० ४, १, २, ९)।

वामदेवपुत्रो नकुलोऽनया त्रिष्टुभा आदित्यं तुष्टाव। प्रवर्ग्ये विनियुक्ता रुक्मोपधाने[1] चाभिचयने। 'ब्रह्म' आदित्याख्यं 'जज्ञानम्' जायमानं 'प्रथमम्' अनुत्पन्नेषु अन्येषु आदितः, 'पुरस्तात्' प्राच्यां दिशि, तदुदयोपलक्षितमेव[2] प्राच्याः प्राचीत्वम्। 'वि आवः' व्यवृणोत्, विवृतानकरोत्। 'सुरुचः' प्रशस्तरोचनान् रश्मीन् 'सीमतः' सर्वतः। किंच, 'सः' 'वेनः' मेधावी 'बुध्न्याः' बुध्नमन्तरिक्षं तदवयवभूता या दिशः 'उपमाः' उपनिर्मात्र्यः, तासु ह्येतत्प्रतिष्ठितं सर्वमुपनिर्मीयते जगदित्येतत्, तस्मात्ता एवोपनिर्मात्र्य उच्यन्ते। 'विष्ठाः' विस्थाः,—तासु ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः। 'सतश्च' अभिव्यक्तस्य स्थूलस्य 'असतश्च' अनभिव्यक्तस्य सूक्ष्मस्य 'योनिं' स्थानम् 'विवः' व्यवृणोदित्यर्थः। आदित्योदये[3] ह्येवङ्गुणयुक्ता दिशोऽभिव्यज्यन्त इत्यभिप्रायः॥ अथवा बुध्न्या आप आन्तरिक्षास्ता उपमा इत्येवमादि सर्वं योज्यम्॥

"अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्। सीम्नः सीमतः सीमातो मर्य्यादातः। सीमा मर्य्यादा विसीव्यति देशाविति"। विगतसन्तानौ देशौ करोतीति॥ १। ७। ३॥

## त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्॥ ४॥

"त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्" निपातत्वेनैतदपि सन्दिह्यते। वक्ष्यति हि "निपात इत्येके"—इति। अतः त्वं[4] इति ह्येवं निपातकाण्ड उदाह्रियते संशयपरिशोधनाय॥ त्व इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम्। किमु तत् सर्वनाम विप्रतिपन्नस्वरत्वात् स्वरमप्यवधारयन् अस्यानुदात्तमित्याह, कथं पुनर्विप्रतिपन्नस्वरमेतदिति? उच्यते—'प्रातिपदिकस्यान्त उदात्तः' इत्यौत्सर्गिकं लक्षणम् (फि० सू० १, १)—अन्यत्र चापवादात्,—लक्षणविदोऽपि चास्यापवादं पठन्ति अंशेन—"त्वत्त्वनेमसमसिमेत्यनुच्चानि[5] (फि० सू० ४, ९)"—इति॥ १। ७। ४॥

## अर्द्धनामेत्येके॥ ५॥ ७॥

"अर्द्धनामेत्येके"। अर्द्धस्यैतन्नामेत्येवमेके आचार्य्या मन्यन्ते। वक्ष्यति चायमपि "त्वो

१ 'रुक्माधाने'॥ २ तदुदयोपलक्षितेनैव', 'तदुद्भवोपलक्षितमेव'॥ ३ 'तदुदये'॥ ४ 'त्वमित्येवं' 'त्यमिति हैवं'॥ ५ 'त्यनुच्चानि'॥

नेम इत्यर्द्धस्य ( निरु० ३, ४, १ )"–इति । तदेतत् प्रकरणोपपदाभ्यामध्यवसेयम्,–क्वार्द्धनाम ? क्व सर्वनाम इति ॥ १ । ७ । ५ ॥

यथात्र सर्वनाम तथेयमृगुदाह्रियते—*

"ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रंत्वोगायतिशक्करीषु।

ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः॥"

इत्यृत्विक्कर्मणां विनियोगमाचष्टे-ऋचामेकः पोषमास्ते पुपुष्वान्होतर्ग्चर्नी गायत्रमेको गायति शक्करीषूद्गाता। गायत्रं गायतेः स्तुतिकर्मणः। शक्वर्य्य ऋचः शक्नोतेः। तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायते। ब्रह्मैको जाते जाते विद्यां वदति। ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति। ब्रह्मा परिवृढः श्रुततो, ब्रह्म परिवृढं सर्वतः। यज्ञस्य मात्रां विमिमीत एकोऽध्वर्य्युः। अध्वर्य्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयत इति वा। अपि वाधीयाने युरुपबन्धः, अध्वर इति यज्ञनाम। ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः ॥ १ ॥

"ऋचां त्वः ( ऋ० सं० ८, २, २४, ५ )"–इति । बृहस्पतेरार्षम् ॥ ऋत्विक्कर्मणां विनियोगमनयर्चाऽऽचष्टे–"ऋचां त्वः पोषम्" इति । य एते चत्वारो महर्त्विजः, एतेषां 'त्वः' एक इत्यर्थः । किमेकः करोति ? 'ऋचां' 'पोषं' पुष्टिं 'पुपुष्वान्' पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानगर्भस्थानकरणानुप्रदानवतीर्यथाकालमृचोऽधीयानः 'आस्ते'–स हि तासां पोषः । कतमः ?, 'एकः' एतत्कर्म कुर्वन्नास्ते इति,–'होता' एतत्तावदृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम्, उक्तं च–"यदृचैव हौत्रं क्रियते"–इति ( ऐ० ब्रा० ५, ५, ८ )। 'गायत्रं त्वः'? गायत्रमेको 'गायति' 'शकरीषु' ऋक्षु । कतमः ?, 'उद्गाता' तस्मिन्नप्येतत्सामगानकर्म विनियुक्तम्, उक्तं च–

* इतोऽग्रे–'इति निरुक्तव्याख्यायां सप्तमः खण्डः ॥ ७ ॥' इत्युपलभ्यते । तत् 'यथात्र' इत्यत प्रागुचितम् ॥ १ 'मर्म' ॥ २ 'एतस्मिन्' ॥

"साम्नोद्गीथम्"–इति (ऐ० ब्रा० ५, ५, ८) "ब्रह्मा त्वः" ब्रह्मा नाम एक ऋत्विक् 'जाते' प्रायश्चित्ते 'विद्यां वदति'। विद्यात्रयहेतुत्वादात्मनो विद्यां विज्ञानं वदतीतरेभ्य ऋत्विग्भ्यः-इदमत्र कुरुतेति। तत्रापि ह्येतत् कर्म विनियुक्तम्। स पुनरेष सर्वविद्यः सर्वविज्ञानस्तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्वमेव वेदितुमर्हति। न ह्यसर्ववित् तमधिकारं शक्नुयान्निर्वर्त्तयितुम्। उक्तं च–"अथ केन ब्रह्मत्वं क्रियत इति? त्रय्या विद्यया"–इति (ऐ० ब्रा० ५, ५, ८)॥ "यज्ञस्य मात्रां विमिमीत उ त्वः।" विमिमीत एक इति। मीयत इति मानं कर्म, तन्मात्रेत्युच्यते। या काचिदितिकर्त्तव्यता यज्ञस्य, तां विमिमीतेऽध्वर्युः, नानाप्रकारं करोतित्यर्थः॥

अथैकपदनिरुक्तम्–। "गायत्रं गायतेः" स्तुत्यर्थस्य,–स्तूयते ह्यनेन। "शक्वर्य्य ऋचः शक्नोतेः"–इत्युक्त्वा ब्राह्मणेनापि शक्नोतेः शक्वरीशब्दे वृत्तिं दर्शयति,–"तद्यथाभिर्वृत्रमशकद्धन्तुम्" "तत्" एवं "शक्वरीणां शक्वरीत्वम्"। तत् यद्यस्मादाभिरमिष्टुत इन्द्रो वृत्रमशकद्धन्तुं तच्छक्वरीत्वम्।–"इति विज्ञायते"। ऋचां शक्वरीत्वमित्येवं ब्राह्मणेऽपि 'शक्नोतेरेव शक्वर्य्यः' इति विज्ञायते। लिङ्गतोऽपि हि दर्शितं भवति,–आख्यातजानि नामानीति॥

"ब्रह्मा परिवृढः श्रुततः" स हि त्रयीं विद्यां वेद। शब्दसारूप्यप्रसक्तमुच्यते–"ब्रह्म परिवृढं सर्वतः" ऋगादिपरं चोभयमपि तत् परिवृढं सर्वासु दिक्षु। "अध्वर्य्युः अध्वरयुः" एवमपि विगृह्यत इति। पुनरप्याह–"अध्वरं युनक्त्यध्वरस्य नेता" प्रापयितेत्यर्थः,–स ह्यन्तं प्रापयत्यध्वरमेवं[१]। अथवा "अध्वरं कामयते" कर्तुम्"–इति" अध्वर्य्युः। एतस्मिन्निर्वचने युः, 'वसूयवः' इति यथा। अथवा "अधीयाने" तमध्वरं कस्मिंश्चिद् ब्राह्मणे अध्वर इतीयमेव सञ्ज्ञा भवति, मञ्चाक्रोशनवत्। एतस्मिंश्च निर्वचने "युः" अयम् "उपबन्धः" नामकरणः[३]। अध्वरमधीते यः सोऽध्वर्य्युः॥ विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे,–"अध्वरः–इति यज्ञनाम"॥ 'अध्वरः' इत्यधुना निर्वक्तव्यः,–"ध्वरतिर्हिंसाकर्मा"। ध्वरति धूर्वतीति हिंसार्थेषु पठितौ "तत्प्रतिषेधः" अध्वरः अहिंस्र इत्यर्थः॥

आह–नन्वत्र हन्यन्ते पशवः, छिद्यन्ते तृणवनस्पतयः, तत् कथमहिंस्रः? उच्यते–अभ्युदय एव हि सः। एवं हि श्रूयते– "न वा उ एतस्मिन् म्रियसे (य० वा० सं० २३ १६)"–इति। तथा च–"कुशत्वमिच्छन्ति तृणानि राजन्"–इति। तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते॥ १। ८। १॥

---

१ 'समानं'॥ २ 'एतत्'॥ २ 'रम्। एवमथवा'॥ ३ 'नामकरणमिति' पाठे तु नाम क्रियते अनेनेति कृत्तद्धितान्यतरदुच्यते॥

## निपात इत्येके ॥ २ ॥

"निपातः" अयम् "इत्येके" मन्यन्ते ॥ १ । ८ । २ ॥

## तत्कथमनुदात्तप्रकृति नाम स्याद् ?

## दृष्टव्ययन्तु भवति " उत त्वं सख्ये स्थिरपीतमाहुः " इति

in the same subject constant.

## द्वितीयायाम् "उतो त्वस्मै तन्वं॑ विसंस्रे" इति चतुर्थ्याम् ॥

## अथापि प्रथमाबहुवचने— ॥ ३ ॥ ८ ॥

एवमेकीयपक्षे निपातत्वमस्योक्त्वा अधुना चोदकपक्षे स्थित्वा परपक्षमाक्षिपन्नाह,— "तत् कथमनुदात्तप्रकृति नाम स्यात्"—इति । तदेतच्छन्दरूपमनुदात्तप्रकृति अनुदात्तस्वभावं सत् कथं नाम स्यात् ? ॥ ननु भवतैवोक्तम्—"उत्सर्गेणैवान्तोदात्तानि प्रातिपदिकानि"—इति (पृ० ४४ पं० २२) उच्यते—सत्यमुक्तम् । ननु तत्रैवेदं प्रत्युक्तम्—'अन्यत्र चापवादात्' इति ( पृ० ४४, पं० २३ ) । स एषोऽपवादांशः--'त्वत्वनेमसमसिमेत्यनुच्चानि' इति ( पृ० ४४ पं० २३ ) । उत्सर्गादपवादो बलीयान् । तस्माद्विप्रतिपन्नस्वरमपि एतन्नामैव ॥ किंच—

"दृष्टव्ययं तु भवति" । तुशब्दो हेत्वर्थः--हेतुसमुच्चयार्थो वा । अनुदात्तप्रकृतित्वेऽपि सति 'दृष्टानुविधयश्छन्दसि'—इति दृष्टव्ययत्वान्नामोति तद्भवति । एवं हेत्वर्थः । अथवै[^1]वमन्यथा हेतुसमुच्चयार्थः, अपवादस्मरणात्—व्ययदर्शनाच्च अनुदात्तमपि स[^2]देतन्नामैव भवति । निपातत्वेपि कल्प्यमानस्यै[^4] स्वरसामञ्जस्यं न भवत्येव निपाता अप्याद्युदात्ता भवन्ति ( फि० सू० ४, ११ ) तस्मात् कृतापवादत्वाद्—दृष्टव्ययत्वाच्च नामैवैतदित्युपपन्नम् ॥

आह—क्व पुनरस्य व्ययो दृष्टः ? उच्यते,—"उतत्वंसख्ये स्थिरपीतमाहुरिति द्वितीयायाम्" एकवचने । एवम् "उतो त्वस्मै तन्वं॑ विसस्रे इति चतुर्थ्याम्" एकवचने व्ययो दृ[^5]ष्टः । उपरिष्टाच्छेषः ॥ १ । ८ । ३ ॥

"अथापि प्रथमाबहुवचने"—व्ययो दृष्ट इत्यध्याहारः *

---

[^1]: 'स तु' ॥ [^2]: 'अथ चैव' ॥ [^3]: 'तदे' ॥ [^4]: 'कल्प्यमाने' ॥ [^5]: 'द्रष्टव्यः' ॥

* इतः परम् 'इति निरुक्तव्याख्यायामष्टमः खण्डः ॥ ८ ॥' इत्येवमुपलभ्यमानपाठस्य 'अथापि' इत्यतः प्राग्भवने सौष्ठवम् ॥

"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ।"

अक्षिमन्तः कर्णवन्तः सखायः । अक्षि चष्टेः, अनक्तेरि-त्याग्रायणः । तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते । कर्णः कृन्ततेर्निकृत्तद्वारो भवति । ऋच्छ-तेरित्याग्रायणः । ऋच्छन्तीव खे उदगन्तामिति ह विज्ञा-यते मनसां प्रजवेष्वसमा बभूवुः । आस्यदघ्ना अपरे, उपकक्षदघ्ना अपरे । आस्यमस्यतेः । आस्य-न्दत एतदन्नमिति वा ॥ दघ्नं दघ्यतेः स्रवतिकर्मणः । दस्यतेर्वा स्याद्विदस्ततरं भवति । प्रस्नेया ह्रदा इवैके । प्रस्नेया ददृशिरे स्नानार्हाः । ह्रदो ह्रादतेः शब्दकर्मणः । ह्रादतेर्वा स्याच्छीतीभावकर्मणः ॥ १ ॥

"अक्षण्वन्तः कर्णवन्तः ( ऋ०सं०८,२,३४,२)"—इत्येतस्यामृचि । वृहस्पतेरार्षं विद्यासूक्तं नाम तत्रेयमृक् ॥ 'अक्षण्वन्तः' अक्षिसंयुक्ताः । 'कर्णवन्तः' कर्णसंयुक्ताः । एवमपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः । अपि च, 'सखायः' समान-ख्यानाः सर्वे मनुष्याख्याः । अथवा समानेषु शास्त्रेषु कृतश्रमाः । वैयाकरणा वैयाकर-णानामेव समानख्यानाः, नैरुक्ता एव नैरुक्तानाम् । 'मनोजवेषु' मनोगम्येष्वर्थेषु 'असमा बभूवुः' केचिदूहापोहनधारणवक्तृत्वसमर्थाः, केचिदमेधसः । कथमसामान्य-मिति ? यतो दृष्टान्तेन प्रतिपादयति—"आदघ्नास उपकक्षास उ त्वे ह्रदा इव" । आदघ्ना एव आदघ्नासः । आस्यदघ्नह्रदपरिमाणाः, केचित् प्रज्ञया । उपकक्षासः कक्षस-न्निकृष्टदेशतुल्योदका इव ह्रदाः । एके प्रज्ञया ह्रदाः 'स्नात्वा' स्नानार्हाः । अक्षोभ्या अपरिमेयप्रज्ञानाः । 'ददृश्रे' ददृशिरे—दृश्यन्त इति समस्तार्थः ।

अथैकपदनिरुक्तम् । "अक्षि, चष्टेः" पश्यत्यर्थस्य,—दृश्यते ह्यनेनेति । "अनक्तेः" व्यक्तयर्थस्य—"इत्याग्रायणः" मन्यते । ब्राह्मणमपि चैतस्मिन्निर्वचने भवति—"तस्मा

१ 'हकरण' ॥ २ 'यतो दृष्टान्तं न प्रदर्शयति' ॥

देते व्यक्ततरे इव भवतः"—इति ह विज्ञायते ॥ यस्मादिदं नामेति किमिति प्रकृतमपेक्ष्य । अथवा यस्मादेते तेजोऽवयवभूयिष्ठे, तस्मात्कारणादित्येवं यच्छब्दमन्वाकृष्य विद्यमानमविद्यमानं चोत्पाद्य तस्माच्छब्दस्य सामर्थ्यमुत्पाद्यते । तथाहि स निराकाङ्क्षो भवति । सर्वत्र च साकाङ्क्षेषु शब्देष्वेवं व्याख्यानधर्मा द्रष्टव्याः।[1] एते अक्षिणी इतरेभ्योऽङ्गेभ्यो व्यक्ततरे स्पष्टतरे प्रकाशतरे भवतः,—अन्धकारेऽपि ह्येते प्रकाशेते नक्तञ्चरादीनां न तथेतराण्यङ्गानि । एवं ब्राह्मणेऽपि—अनक्तेरेवाक्षिणी—'इति ह विज्ञायते' "कर्णः कृन्ततेर्निकृत्तद्वारो भवति ऋच्छतेरित्याग्रायणः" मन्यते । ब्राह्मणमपि चैतस्मिन्निर्वचने भवति—"ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते"—इति । ऋच्छन्तीवैतौ कर्णौ खेऽभिव्यक्ताः सन्तः शब्दा एतावपि च उदगन्तां प्रत्युदृच्छत[2] इव शब्दग्रहणाय । विचार्य्यमाणे ज्ञायते—खे कर्णाविति । "आस्यमस्यतेः" क्षेपार्थस्य—क्षिप्यते ह्येतदाभिमुख्येनान्नम् । स्यन्दतेर्वा स्यादाङ्पूर्वस्यैव स्रवणार्थस्य,—शुष्केऽपि ह्येतदन्ने आगते स्रवत्येव श्लेष्माणं, येन तदार्द्रीकृतं[3] ग्रसितुं शक्यते ॥ "दघ्नं दघ्यतेः" स्रवत्यर्थस्य । स्रुततरमिव तद्भवति पूर्वतरात्[4] परिमाणात् । "दस्यतेर्वा स्यात्" क्षयार्थस्य। "विदस्ततरं" ह्युपक्षीणतरं, तद् "भवति" उत्तरस्मात् परिमाणात् । "प्रस्नेयाः" प्रकर्षेण स्नातुं येषु योग्यम्, अगाधत्वात्, ते प्रस्नेयाः स्नानार्हा इत्यर्थः । "ह्रदो ह्रादतेः" शब्दार्थस्य,—शब्दं ह्यसावभिहन्यमानः करोति । "ह्लादतेर्वा स्यात्" शीतीभावार्थस्य,—ग्रीष्मेऽपि ह्यसौ शीतल एव भवति ॥ १ । ९ । १ ॥

## अथापि समुच्चयार्थे भवति ॥

"अथापि"अयमपरो निपातः"समुच्चयार्थे भवति"॥कतमः?—त्वत् इति॥किमुदाहरणम्?—

## "पर्य्याया इव त्वदाश्विनम्"आश्विनञ्च पर्य्यायाश्चेति ॥२॥

" पर्य्याया इव त्वदाश्विनम् ( ऋ० प्राति० १२, १० )"—इति । आह,—किमुक्तं भवति ?, उच्यते—"आश्विनं च पर्य्यायाश्चेति"—एवं समुच्चयार्थे भवति १ । ९ । २ ॥ in the middle of a sentence (i.e. extraordinary usage).

## अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ।

not traceable "[निष्टृक्रासश्चिदिन्नरो भूरितोका वृकादिव । बिभ्युस्यन्तो ववाशिरे ] "॥ ३ ॥ ९ ॥

---

१ 'धर्मो द्रष्टव्यः' ॥ २ 'प्रत्युद्गच्छत' ॥ ३ 'तदार्द्रभूतम्' ॥ ४ 'स्रुततरात्' ॥

"अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"।

व्याख्याताः कर्मोपसंग्रहार्थीयाः, तत्प्रसङ्गेन हीत्येवमादयोऽन्यार्थाऽप्युक्ताः। प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान् वक्ष्यामः। तेषां सामान्यमेव तावल्लक्षणमुच्यते। तत्राधिकारार्थोऽयमथशब्दः। अथ ये प्रवृत्ते परिप्रापिते अर्थे अन्यैरेव वाक्यगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति ॥ पदपूरणार्थास्त एव मिताक्षरेषु पादवृत्तेषु भवन्ति। उभयत्रापि तु ते अनर्थकाः अनर्थान्तरवाचकाः, प्रकृतादर्थात् न किञ्चिदर्थान्तरं द्योतयन्ति। पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि तेषामर्थो नान्यदर्थान्तरम्। उक्तं च—

"क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः॥"—इति।

कतमे पुनस्ते ?, उच्यते—"कमीमिद्विति" एते चत्वारः—कम्, ईम्, इत्, उ,—इति॥

आह—ननु 'ये प्रवृत्तेऽर्थे' इति यदेतदुपदिष्टं लक्षणमत एव विज्ञास्यामो 'येऽमिताक्षरेषु वाक्येषु पठितास्ते मिताक्षरेषु पदपूरणा भविष्यन्ति' इति ॥ अथ किमर्थमेते विशेषतः कमीमिदवो निर्दिश्यन्त इति ?, उच्यते—एते हि प्रायेण पदपूरणा एव। अन्ये पुनः—इव—न—चित्—न्वादयोऽर्थवन्तोऽप्यर्थासम्भवे सति पदपूरणा भवंति,—लक्षणं हि तानपि व्याप्नोति। एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते। अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थका इत्यतो विशेषतो निर्दिश्यन्ते॥

आह—एवमपि च उकारो न निर्देष्टव्यः। किं कारणम् ?, स हि पुरस्तान्निर्दिष्ट एव—"अथापि पदपूरण इदमु तदु"—इति। उच्यते—सत्यं निर्दिष्टः। प्रासङ्गिकस्तु स तस्य निर्देशः, अयमेवात्रोकारस्य पदपूरणत्वे मुख्यो निर्देशः, स्वप्रकरणत्वात्॥ आह—तत्र तर्हि अकिञ्चित्कर इति ?, न अकिञ्चित्करः। किं कारणम् ?, शृणु—यदि ह्ययमुकारः तत्र पूरणत्वेन नोच्येत, इहैवोच्येत, ततः पूर्वोक्तस्य विनिग्रहार्थीयत्वस्यायमपवादः—इति गम्येत। अथापि तत्रैव केवलमस्य पदपूरणत्वमुच्यते, नेह, तथापि पदपूरणेषु परिसंख्यायमानेषु नायमुक्त इति परिसंख्यया पदपूरणत्वमस्य बाध्येत। अनिष्टं चैतत्, तस्मादुभयत्राप्यधीयत इति॥

आह—नन्वेवं 'खलु—नूनम्' इत्येतयोः पदपूरणत्वस्य बाधः प्राप्त इति ?, उच्यते—नैवम्। किं कारणम् ?, उकारवत्तौ ह्युभावपि। यथैव ह्युकारोऽर्थवांश्चानर्थकश्च, एवं तावपि। तस्मादुकारग्रहणेनापि तावप्यत्र गृहीतौ द्रष्टव्यौ। न केवलमुभावेव। किं तर्हि ?, अन्येऽपि तावन्त एव सन्ति। तद्यथा—"आ घाता गच्छानुत्तरा"—इति।

१ 'परिसमासे'॥

अत्र घकारः । तेऽपि चात्रावरुद्धा द्रष्टव्याः । उदाहरणमात्रप्रदर्शनार्थं ह्येतावन्त एवोदाहृताः । त एते सर्वे एवार्थासम्भवे सत्यनर्थका एव, सम्भवे त्वर्थवन्त इति । किं कारणम् ?, न हि कस्मिंश्चिदर्थलवे[1] तावत् सम्भवति अनर्थत्वकल्पना न्याय्या शब्दस्य,—अर्थप्रधानो हि शब्दः । स नाकस्मादभिधेयेनार्थेन विना वाक्ये संहन्येत । तस्माद्यावद्रम्यमेव तावदर्थः कल्पनीयः । यत् पुनरेतदुक्तम्—'वाक्यपूरणाः' इति, अगतिरेषा । तदेतत् सर्वथाप्यर्थासम्भवे सति अगतौ सत्यां भवति । त एते प्रायोवृत्त्या इव—न—चिन्वादयोऽर्थवन्तः । प्रायोवृत्त्या च कमीमिदवोऽनर्थका इति द्रष्टव्यम् ॥

आह—ननु आदौ च मध्ये च पूरणानामागमो दृष्टः, तद्यथा—"नूनं सा ते"—इति, अथ कथमुच्यते—'येऽप्रवृत्तेऽर्थे आगच्छन्ति ते पदपूरणाः'—इति ?, उच्यते—न ह्येतदध्ययनकालीनमानुपूर्व्यमक्षराणां पदानां वा व्याख्याकाले[2] नियतमस्ति, अर्थप्रकाशनार्थनिर्वचनवशेनान्यदानुपूर्व्यमुपजायते समाख्याकाले । तत्रैवं सत्याख्यातपदं प्रधानम्, तदनु नाम, तदनूपसर्गाः, तदनु निपाताः,—इत्येतामानुपूर्वीमपेक्ष्यैतदुक्तम्[3] । तत्र ये प्रवृत्तेऽर्थे आगच्छन्ति, ते पदपूरणा भवन्तीति । एतामानुपूर्वीमपेक्ष्य[4] पूर्वमाख्यातलक्षणमुक्तम्, तदनु नामलक्षणम् । तस्मादादावपि निपातः सन्मध्ये वा अन्त एव द्रष्टव्यः । लोकेऽपि हि दत्तानुयोगानां ब्राह्मणानामवस्थानक्रमोऽकिञ्चित्कर एव भवति । मध्येऽन्ते वावस्थितो यः प्रधानः, सोऽग्र्य इत्युच्यते । तस्मात् सम्यगेवोक्तं 'येऽप्रवृत्तेऽर्थे'—इति ॥

व्यत्ययं चाधिकृत्य श्लोकमप्युदाहरन्ति—
"आदिमध्यान्तलुप्तानि प्रच्छन्नापिहितानि च ।
ब्रह्मणः परिगुप्त्यर्थं वेदे व्यवहितानि च ॥"—इति । १ । ९ । ३ ॥ *

# शिशिरञ्जीवनाय कम् ।

## 'शिशिरं जीवनाय' शिशिरं शृणातेः शम्नातेर्वा ॥ १ ॥

अधुना एवमेतानुदाहृतान् कमीमिदून् समासतः प्रत्येकमुदाहरणैर्दर्शयति,—"शिशिरं जीवनाय कम्"—इत्यत्र कमित्येष पदपूरणः। "शिशिरं जीवनाय" जीवनार्थमित्यर्थः । तत्र हि प्रायेण प्रचुराणि शरद्धान्यानि भवन्ति । कमिति पदपूरण एव ॥( '[5]मुञ्चामि त्वा हविषा जीवनाय कम्"—इति ( ऋ० सं० ८, ८, १९, १ ) । अत्र सायणः—किमर्थम् ?, "जीवनाय कम्" जीवनार्थम् । इह लोके चिरकालावस्थानार्थमित्यर्थः । 'कम्' इति पूरकः—इति ।।) शाखान्तरेषु शेषो द्रष्टव्यः ॥ केचिदेवं कृतशेषमत्राधीयते—

---

१ 'दर्थलाभे संभ' ॥ २ 'व्याख्या' ॥ ३ 'मवेक्ष्यै' ॥ ४ 'मवेक्ष्य' ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां नवमः खण्डः ॥ ९ ॥ ' इति द्रष्टव्यम् ॥ ५ 'अयं कोष्ठकान्तर्गतो लिखितपुस्तके नोपलभ्यते । अतः केनचित्कोविदेन वर्धितो भवेत् ॥

निष्क्रासश्चिन्नरो भूरितोका वृकादिव ॥
विभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम् ॥"—इति ।

निष्क्रा एव 'निष्क्रासः' निर्वसना इत्यर्थः । 'अपि च भूरितोकाः' बहुपत्या इत्यर्थः । के पुनस्ते ?, दरिद्राः, 'केचिन्नरो' मनुष्या इत्यर्थः । किं तेषामिति ?, 'वृकादिव विभ्यस्यन्तः' पुनःपुनर्भृशं वा विभ्यतो वृकादिव हिमात् 'ववाशिरे' पुनःपुनर्भृशं वा वाश्यन्ते । किमिति ववाशिरे ?, 'शिशिरम्' अस्माकं जीवनाय जीवनार्थमागच्छति—इत्येवं हेमन्ते ववाशिरे । अल्पतरशीतं हि शिशिरं, सुखं तत्र जीविष्याम इत्यभिप्रायः ॥

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम्—"शिशिरं शृणातेः" हिंसार्थस्य "शम्नातेर्वा" हिंसार्थस्यैव, नार्थकृतो विशेषः । हिनस्ति तस्मिन् काले अप्रतिबध्यमानोऽतिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन् ॥ १ । १० । १ ॥

## " एमेनं सृजतासुते । " आसृजतैनं सुते ॥ २ ॥

to be fanned down.

ईमित्यस्योदाहरणम्—

"एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।
चक्रिं विश्वानि चक्रये ॥"( ऋ० सं० १, १, १७, २ । )

ऐन्द्रेयषा गायत्री । मधुच्छन्दस आर्षम् । पृष्ठ्याभिप्लवस्तोमवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे महाव्रते च त्र्यृचाशीतिषु विनियुक्ता । 'आ सृजतैनम्' आभिमुख्येन सृजत 'ईम्'—इति पदपूरण एव । दत्तोक्थपात्रेण चमसैश्च सोमं हे अध्वर्य्यवः ! किमासृजत ? योऽयमिन्द्रस्य 'सुते' अभिषुते सोमे स्वांशः । उक्थपात्रचमसस्थः । 'एनमासृजत' 'मन्दिं' मन्दयितारम् । 'मन्दिने' इन्द्राय हर्षवते । 'चक्रिं' चक्रनवन्तं क्रमणवन्तं वा । अपि वा हविर्द्धानशकटचक्राभ्यां चक्रवन्तम् । अपि च चक्रदिति कर्मनाम । अतिविशिष्टवीर्य्यजनकैः संस्कारकर्मभिस्तद्वन्तम् ॥ 'विश्वानि' सर्वाणि भूतानि वा । 'चक्रये' कृतवते इन्द्राय ॥ सोमोत्र प्रत्यक्षः, दातारश्च ॥ परोक्षा त्विन्द्रस्य स्तुतिः ॥ "अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि"—इति हि वक्ष्यति ॥ १ । १० । २ ॥

## " तमिद्वर्द्धन्तु नो गिरः । " तं वर्द्धयन्तु नो गिरः । स्तुतयो गिरो गृणातेः ॥ ३ ॥

"तमिद्वर्द्धन्तु नो गिरः" इति । इदित्यस्योदाहरणम् ।

"तमिद्वर्द्धन्तु नो गिरो वत्सं संशिश्वरीरिव ।
य इन्द्रस्य हृदंसनिः ॥ " ( ऋ० सं० ७, १, २०, १४ । )

अमहीयोराङ्गिरसस्येयमार्षम् । गायत्री, सौमी । आवस्तुतौ विनियुक्ता । 'तम्' 'वर्द्धन्तु' 'नः' । तं सोमम् । 'इत्' -इति पदपूरणः । वर्द्धयन्तूपजातवीर्य्यं कुर्वन्तु । देवतृप्तये । 'नः' अस्माकम् एताः 'गिरः' स्तुतयः । कथं पुनर्वर्द्धयन्तु ?, 'वत्सं संशिश्वरीरिव' । वत्समिव,एकशिशुका बह्वयो गावः, ता यथा पर्य्यायेण वत्समेकं (मृतवत्साः( स्वैःस्वैः पयोभिर्वहनादिसमर्थं कुर्य्युः । एवमेवास्मद्गिर एतं सोममुपजातवीर्यं देवतर्पणाय कुर्वन्तु वर्द्धयन्तु । कतमः ?, 'यः' 'इन्द्रस्य' 'हृदंसनिः' हृदयसम्भक्ता, तमेनं वर्द्धयन्त्वित्यभिप्रायः ॥

आह--कस्मात् पुनरत्र केचिदुदाहरणमन्त्रा अशेषाः पठ्यन्ते निरुच्यन्ते, केषाञ्चिदेकदेशाः ? इति । उच्यते----ये तावदशेषाः पठ्यन्ते, निरुच्यन्ते च, ते व्याख्याधर्मोपैदर्शनार्थम् । यदि पुनः सर्व एव पठ्येरन् निरुच्येरंश्च, अतिगुरुशास्त्रं सम्पद्येत । अथापि सर्वेषामप्युदाहरणमन्त्राणामेकदेशः पठ्येत निरुच्येत च तथापि व्याख्याधर्मो न प्रदर्शितः स्यात् । तस्माद् व्याख्याधर्मोपदर्शनार्थं केचिदशेषाः पठ्यन्ते निरुच्यन्ते च, केषाञ्चिदेकदेशाः, शास्त्रातिगौरवभयात् । इति प्रतिमन्त्रमपि सकलार्द्धर्चपादाध्ययने शक्यते प्रयोजनमन्वेष्टुम्, तदेतत्समासेन ब्रूमः । यस्मिन् यस्मिन्मन्त्रे यद्यत् पदमेकार्थमनेकार्थमनवगतसंस्कारं वा निर्ब्रवीति, किञ्चिद्वान्यच्छब्दरूपमध्याहरति, अन्यद्वापोहति, अन्यथा वा कुश्चिद्विपरिणामं करोति, सन्दिग्धं वा निर्णयति, तदर्थमेव तं सकलमधीते । यस्मिन्वार्द्धर्चे पादे तावत् पदं भवति, यदभिमतं निर्वक्तुं तावन्मात्रमेवाधीते तन्निर्विवक्षया । तदेतदेवं निपुणमन्वेष्टव्यं सर्वत्र ॥ १ । १० । ३ ॥

## " अयमु ते समतसि । " अयं ते समतसि ॥ ४ ॥

उकारस्योदाहरणम्--

"अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥" ( ऋ० सं० १, २, २८, ४ । )

शुनःशेपो नियुक्त आत्मानं मोचयितुमिच्छन्नेतया गायत्र्येन्द्रं तुष्टाव । 'अयम्' इति वर्तमानः सन् कर्मणि निर्वित्सन्नाह--'ते'तव युष्मदर्थं सोमः यं प्रति नित्यकालमेव'समतसि' सम्पतसि।त्वं तासु क्रियास्वाहूयमानः समतसि सम्पतसि ।कथं पुनर्यं प्रति समतसि?, 'कपोत इव' कम्पतनः कपोतः, कुत्सितपतनः, स यथा 'गर्भधिं' गर्भधानीं कपोतिकाम्, अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति। एवं यं प्रति नित्यकालमेव सम्पतसि त्वम्, स एवायमभिषुतः सोमः, एभिर्ऋत्विग्भिः । अथ किमस्माभिः करिष्यसि ? मोचय अस्मान् । किंवा

१ 'पदेशना' ॥

'वचः' एवेदं नः स्तुतिलक्षणं 'नोहसे' न वितर्कयसि रोरूयमाणानाम् ?, केनाप्यभिप्रायेण वयमेतद् ब्रूमः,--कैर्वा युष्मद्गुणैर्न युक्तमेतदिति, यतो न मोचयस्यस्मानतो यूपात् । श्रुत्वैतदवबुद्ध्यार्थमार्त्ततामस्माकमवधार्य्य कारुण्यान्मोचयास्मान् । किं तेऽस्माभिः, अयमेव तेऽस्मत्तः अतिविशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः ॥ १ । १० । ४ ॥

**इवोऽपि दृश्यते "सुविदुरिव, सुविज्ञायेते इव ।" ॥५॥१०॥**

"इवोऽपि दृश्यते" । कदाचिदनर्थक इति वाक्यशेषः । किमुदाहरणम् ?–

"सुविदुरिव, सुविज्ञायेते इव"–इत्येते उदाहरणे । सुष्ठु विदुर्यज्ञं ब्राह्मणा इति, इवोऽनर्थक एव वाक्यपूरणः । सुष्ठु विज्ञायेते यज्ञो नक्षत्रं ब्राह्मणैरिति, अत्रापीवोऽनर्थक एव ॥ १ । १० । ५ ॥

**अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये–**

**"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।**
**शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकम्पतामेति ॥"**

**नरकं न्यरकं नीचैर्गमनम् । नास्मिन्रमणं स्थानमल्पमप्यस्तीति वा ॥ १ ॥**

व्याख्याताः पदपूरणाः । निपातसमाहारमधुना दर्शयति, तदधिकारार्थोऽयम्–"अथ" शब्दः । 'अपि' इति सम्भावने । अथायमेव इदिति केवलः प्रयुज्यमानः पदपूरणो भवति । अपि चायमेव "न"--इत्येतेन "सं" युक्तः, "प्रयुज्यते परिभये" अर्थे । सर्वतो भयं परिभयम् ॥ * कथं प्रयोगः ?, "नेज्जिह्मायन्त्यो नरकं पतामेति"। मृग्यः शेषः ॥

केचित्त्वेतं कृतशेषमत्राधीयते--

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥" इति ॥

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तॄन् प्रति तमनेन मन्त्रेण प्रत्यूचुः । 'एके' तावत् 'इतः' लोकात् 'हविर्भिः' पुरोडाशादिभिर्निमित्तभूतैः 'स्वः' 'सचन्ते' स्वर्गं लोकं प्राप्नुवन्ति स्म । अथ 'एके' 'सवनेषु' यज्ञेषु 'सोमान् सुन्वन्तः' अभिषु-

---

* इतोग्रे दृश्यमानम्–'इति निरुक्तव्याख्यायां दशमः खण्डः ॥ १० ॥' इति 'व्याख्याताः पदपूरणाः' इत्यतः प्राग् द्रष्टव्यम् ॥ १ 'अपि' ॥

ण्वन्तः, तेन कर्मणेत्यर्थः । 'शचीभिर्मदन्तः' अन्ये शच्या वाचा स्तुतिभिरेके देवान् मादयन्तः सन्तर्पयन्त इत्यर्थः । अप्यन्ये 'दक्षिणाभिः' स्वः सचन्ते इत्येतदेवानुवर्त्तते । तत्रैवं सति, तेन तेनाभ्युद्यतेषु प्राणिषु श्रेयः प्रति यदि वयमेतानपि भर्तॄन्न सम्यक् परिचरेम । अन्येषां जपहोमादीनां कर्मणामसम्भवे सति। "न इत्" वयमेतेषामप्युपरि "जिह्मायन्त्यः" जिह्ममाचरन्त्यो भगवन् "नरकं पताम"--न ह्यन्यो भर्तृपरिचर्य्यातः स्त्रियाः कश्चन धर्मोऽस्तीत्यभिप्रायः ॥

नरकशब्दं निर्ब्रवीति,--नीचैरस्मिन्नर्य्यते गम्यत इति नरकम् । अथवा नास्त्यस्मिन् रमणं रतिकरं स्थानमल्पमप्यस्तीति नरकम् ॥ १ । ११ । १ ॥

## अथापि न चेत्येष इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे न चेत् सुरां पिबन्तीति ।

## सुरा सुनोतेः ॥ २ ॥

"अथापि" अयमपरो निपातसमाहारो "नचेत्येष इदित्येतेन" एव सम्प्रयुक्तः "प्रयुज्यते"। केनचिदनुपृष्टे सति प्रतिवचनं भवति । तद् यथा,--कश्चित् कश्चित् पृच्छति,--'तिष्ठन्ति वृषलाः ?', इति । ततः प्रत्याचष्टे,--'तिष्ठन्ति' इति । ततो 'यदि तिष्ठन्ति, किमर्थं नागच्छन्ति ?' इति पुनरनुपृष्टे ब्रवीति,--"न चेत् सुरां पिबन्ति" आगमिष्यन्ति' इति, यदि सुरां न पिबन्तीत्यर्थः ॥

अथ "सुरा" कस्मात् ?, "सुनोतेः",--सा ह्यभिषूयते अनेकैर्द्रव्यैः पिष्टादिभिः ॥ १ । ११ । २ ॥

## एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ३ ॥ ११ ॥

"एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः" । एवमनेन प्रकारेण उच्चावचेष्वर्थेषु बहुप्रकारेषु समाहृताश्चान्येऽप्येवं बहुप्रकारा निपतन्ति । प्रयुज्यमानास्ते लक्षणशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्य अनुप्रवेश्य ईक्षितव्याः,--कः कस्मिन्नर्थे वर्त्तते ? इत्येवं द्रष्टव्याः परीक्ष्या इत्यर्थः ॥ १। ११।३॥ *

## इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च ॥ १ ॥

---

* इतोऽग्रे--'इति निरुक्तव्याख्यायामेकादशः खण्डः ॥ ११ ॥' इति द्रष्टव्यम् ॥ 'इति निरुक्तवृत्तौ षष्ठा (प्रथमा) ध्यायस्य तृतीयः पादः ॥ ६ ।३ ॥ इति तूपलभ्यते ॥

"इति"-करणोऽधिकारपरिसमाप्त्यर्थः । "इमानि चत्वारि पदजातान्यनुक्रान्तानि, नामाख्याते चोपसर्गनिपाताश्च" इति प्रतिज्ञाभ्यासो निगमनार्थः । इतीमानि चत्वारि पदजातानीति व्याख्याय अनुक्रान्तानि-अनु पूर्वेण पूर्वमाख्यातम्, ततो नामानि, तत उपसर्गाः, ततो निपाता इत्येवमानुपूर्व्येण क्रान्तानि वर्णितानि । व्याख्ययेति वाक्यशेषः ॥ कतमानि पुनस्तानि? नामाख्याते चोपसर्गनिपाताश्च-इति । तदपि व्याख्यातमेव ॥ १ । १२ । १ ॥

## तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥ २ ॥

यच्च तदुक्तं-'नाम्नः किञ्चिदवशिष्यते तच्चतुर्थेन पादेन वर्णयिष्याम' इति, तदिदमेवावसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते,-"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च" । तत्र तस्मिन्नेव पदचतुष्टये यानि नामानि तानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शाकटायन आचार्य्यो ब्रवीतीति वाक्यशेषः । नैरुक्तानां चैष समयः सिद्धान्तः सर्वेषामविशेषेण गार्ग्यवर्ज्जम् ॥ १ । १२ । २ ॥

## न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ॥ ३ ॥

आह-कः पुनरन्यथा ब्रवीति, येनैवमुच्यते-शाकटायनो ब्रवीतीति?, उच्यते-"न सर्वाणीति गार्ग्यः" ब्रवीति । किं गार्ग्य एव ब्रवीति?, नेत्युच्यते,-"वैयाकरणानां चैके" व्याकरणमधीयते ये ते वैयाकरणाः, तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः ॥ १ । १२ । ३ ॥

## तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि ॥ यथा गौरश्वः पुरुषो हस्तीति ॥ ४ ॥

"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि ॥ यथा गौरश्वः पुरुषो हस्तीति ॥" इति तदेतत् प्रपञ्च्यते गार्ग्यपक्षेण । यान्याख्यातजानि नामानि, यानि वा नेति एवं पर्य्युपयुक्तस्तच्छब्दः । इह त्रिविधा

---

१ क्वचित्पुस्तकेऽत्र- "षष्ठस्याध्यायस्य तृतीयः पादः ॥ " इति पाठो दृश्यते ॥ २ तथा चोपलभ्यते 'उणादयो बहुलम्' इत्यत्र भाष्ये-" नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्" इति ॥ ३ तथात्रोच्यते-'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति ॥ 'अर्थवदधातुरप्रत्ययः' इति सूत्रं कृतवतः 'अतः कृकमि-' इति सूत्रे कमेः पृथक् कंसग्रहणं च कुर्वतः पाणिनेस्त्वव्युत्पत्तिपक्ष एवाभिमतः । 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति सूत्र आल्वादिग्रहणं तु शाकटायनानुसारेणैवेत्यन्यत्र विस्तरः ॥ ४ 'यावन्ति' ॥

व्यवस्था नाम्नाम् । तद्यथा—प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि इति । तत्र प्रत्यक्षक्रियाणि, तद्यथा--कारको हारक इति । प्रकल्प्यक्रियाणि, तद्यथा—गौरश्व इति । अविद्यमानक्रियाणि, तद्यथा--डित्थो डवित्थः, अरविन्दो वौर्विण्ड इति । तत्रैवं सति यत्र येष्वित्यर्थः । केषु ?, नामसु । स्वरसंस्कारौ--स्वरश्चोदात्तादिः, संस्कारश्च प्रकृतिप्रत्ययादिभिः, एतौ स्वरसंस्कारौ । समर्थौ—समर्थता नामोपपत्तिरुच्यते—सङ्गतार्थौ, लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः । यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थितः, एवं संस्कारोऽपि । येष्वपि च 'प्रादेशकेन' प्रदिश्यते द्रव्यमनयेति प्रदेशः क्रिया या तस्मिन् द्रव्ये अवस्थिता--यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिप्रेतस्तस्याः प्रदेशाख्यायाः क्रियाया अभिधायको यो धातुः स गुण इत्युच्यते । अन्यत्र हि गुणशब्दोऽप्रधाने वर्त्तते । शेषः, अङ्गं, गुणः इति समानार्थाः । प्रधानं तु तत्र क्रिया प्रदेशाख्या, तदभिधायको धातुः गुणाख्यः, स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते । तेन धातुरूपेणान्वितावनुगतौ स्वरसंस्कारौ स्याताम् भवेतां येषाम् ॥

आह—किं तेषामिति?, उच्यते—संविज्ञातानि तानि । समं विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः । तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि नामानीति । तद्यथा—कर्त्ता, कारकः, पक्ता, पाचक इति । न पुनर्यथा गौरश्वः पुरुषो हस्तीति । किं कारणम् ?, एतेषु प्रकल्प्यन्ते क्रियाः, न साक्षादुपलभ्यन्ते । अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते । नडित्थादिषु पुनः कल्पयितुमपि शक्यन्ते । तस्मान्न सर्वाण्याख्यातजानि नामानीति । तद् यदुक्तं 'सर्वाण्याख्यातजानि नामानि' इति, तदयुक्तम् । रूढिशब्देषु च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते, न वस्तुतोऽर्थक्रियास्वनुसहायभावं प्रति । तत्र शब्दस्याप्रच्युता । उपलक्षितेऽनुप्रवृत्तेऽभिधाने निवृत्तायां क्रियायामुपरतसाधनव्यापारं निरूप्य क्रियायामभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते ॥

अपरो व्याख्यामार्गः—"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्" । यत्र यस्मिन्नाम्नि स्वरसंस्कारौ, समर्थौ अष्टाध्यायीलक्षणोपपत्त्या युक्तौ, प्रदेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितौ अनुगतौ, स्यातां न्यायवत्कार्मनाभिकसंयुक्तेन संस्कारेण । तद्यथा—कर्त्ता, कारकः, पक्ता, पाचक इत्येवमादि । तदाख्यातजं गुणकृतमिति प्रतीम इति वाक्यशेषः । येषु पुनराष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावनुगतौ, न च न्याय्यकार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण ॥ किं तेषामिति?, उच्यते—"संविज्ञातानि तानि" । संविज्ञानपदमितीह शास्त्रे रूढिशब्दस्येयं सञ्ज्ञा । वक्ष्यति हि, अग्निरिन्द्र इत्येवमादीनां संविज्ञानपदत्वम्,—"यत्तु संविज्ञानभूतं स्यात्" इति ।

१ 'अर्वाङ् चन्द्र' ॥ २ 'तत्र' ॥ ३ 'एतदयुक्तम्' ॥ ४ 'शब्दस्य प्र' ॥ ५ 'निर्वृत्ता' ॥

तथा वृत्रहा पुरन्दर इत्येवमादीनां गुणपदत्वम् । स एवायमिहापि विभागो द्रष्टव्यः । तत्र गुणपदानि,—कारकपाचकादीनि । संविज्ञानपदानि तानि "यथा—गौरश्वः पुरुषो हस्ती" इत्येवमादीनि । न ह्येषां गवादीनाम् अष्टाध्याय्यां व्युत्पत्तिलक्षणमस्ति, तस्माद्रूढिशब्दा एवैत इति ॥

३. अन्ये तु प्रदेशो व्याकरणमिति व्याचक्षते । तत्र हि शब्दानां लक्षणानि प्रदिश्यन्ते । तत्कृतः कश्चिल्लक्षणानुग्रहः, लक्षणावयवो वा गुण इत्युच्यते,—प्रसिद्धो हि गुणशब्दोऽनुग्रहेऽवयवे च । तद्यथा—'गुणे ममायं वर्त्तते' इत्युक्तेऽनुग्रहे वर्त्तते इति गम्यते । अवयवेऽपि—'द्विगुणा रज्जुः' 'त्रिगुणा' इति चोक्ते द्व्यवयवा त्र्यवयवेति वा गम्यते । शेषं समानमेव पूर्वाभ्यामर्थाभ्याम् ॥

अथवा 'संविज्ञानानि तानि' संविज्ञातानि तानि च' इत्युभावप्येतौ पाठौ । तस्मादुभयथाऽपि व्याख्यातव्यम् । सत्त्वं प्रदेश इति केचिदङ्गभूता क्रिया गुण इति व्याचक्षते ॥ १ । १२ । ४ ॥

**अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्य्यात् सर्वं तत् सत्त्वं तथाऽऽचक्षीरन् यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद् यत् किञ्चित् तृन्द्यात्तृणं तत् ॥ ५ ॥**

किं चान्यत् ? "अथ चेत्सर्वाण्याख्यातजानि नामानि स्युः" । तथाप्ययमपरो दोषः प्रसज्येत । आह—कतम इति ? । "यः कश्च तत् कर्म कुर्य्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः कश्चाध्वानमश्नुवीत, अश्वः स वचनीयः स्यात्, यत् किञ्चित् तृन्द्यात् तृणं तत्"—इति । यः कश्चाविशेषेण प्राणी तत् कर्म कुर्य्यात्, यत् किञ्चिदनेकप्राण्याश्रयमेकवदभिप्रेत्योच्यते—तत्कर्म कुर्य्यादिति । सर्वमेव तत्सत्त्वं तथा तेनैवैकेन नाम्ना आचक्षीरन् तद्यथा—यः कश्चाध्वानमविशेषेणानश्वोऽप्यश्नुवीत, अश्व इत्येवं स वचनीयः स्यात् । 'कस्माद्वाश्वः अश्नुवन्नश्व इत्युच्यते, अन्योऽश्नुवन्नपि नोच्यते ?' इति विशेषहेतुर्नास्तीति । तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते, किं तर्हि ?, शब्दव्यवहार एवायमर्थप्रत्यायनार्थ ईदृशः क्रियानिर-

१ 'तृन्द्यात्' इति पाठस्तु—एकारादिमात्रा वर्णात्प्रागेवाकाररेखातुल्या दीयन्ते स्मेति प्राचीनलिपिज्ञानरहितलेखकप्रमादजः प्रतिभाति, 'तृन्द्यते' इति साधुः पाठ इत्यस्मान्प्रतिभाति । परं दुर्गाचार्येणापि 'तृन्द्यात्' इत्येव पाठः स्वीकृतः ॥ २ 'मेकं तदित्य' ॥ ३ 'तं प्राणिनं' ॥

पेक्षः । एवमेव यत् किञ्चित् तृन्द्यादविशेषेण तत्सर्वं तर्दनक्रियायोगात् तृणमित्ये-वमुच्येत, न चोच्यते । तस्मान्न सर्वाण्याख्यातजानि नामानीति ॥ १ । १२ । ५ ॥

**अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भि-र्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् त-त्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ ६ ॥ १२ ॥**

किञ्चान्यत् ? "अथापि चेत्" अथापि यदि । "सर्वाण्याख्यातजानि नामानि स्युः" । तथाप्ययमपरो दोषः स्यात् । आह--कतम इति ?, उच्यते—"यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात्" । क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुज्येत, तावद्भ्यो भावेभ्यस्तावतीभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यात् । किं कारणम् ?, न हि तत्र कासाञ्चिद्व्यावर्त्तको विशेषहेतुरस्ति, अन्यासां वा नियामकः । तत्रैवं सति स्थूणा एकैव सती दरे शेते इति दरशया इत्युच्येत, न चोच्यते । तथा च सज्यतेऽस्यां वंशी इति सञ्जनीत्युच्येत, न चोच्यते ॥ एवमनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः, एकं वानेकक्रियायोगादनेकनाम, उभयथापि [ च ] व्यवहाराप्रसिद्धिः । तस्मान्न सर्वाण्याख्यातजानि नामानीति ॥ १ । १२ । ६ ॥*

**अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वं तर्दनमिति तृणम् ॥ ७ ॥**

"अथापि"--चैतदन्यत्स्यात् यदि सर्वाण्याख्यातजानि नामानि स्युः ॥

आह—किमिति ?, उच्यते—"य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्" । य एषां पुरुषाश्वादिनाम्नां न्यायवान् लक्षणन्या-येन युक्तः ।

आह—कः पुनरसाविति ?, उच्यते--कार्मनामिकः संस्कारः । कर्मकृतं नाम कर्मनाम तत् पुनः पाचकलावकादि, तस्मिन् भवः कार्मनामिकः संस्कारः । किञ्च, यथा चापि प्रतीतार्थानि स्युः, प्रतीतक्रियाणि स्युः, तथैवैनान्याचक्षीरन् जनाः ॥

---

१ 'नामानि स्युः' ॥ * इतोऽग्रे–'इति निरुक्तव्याख्यायां द्वादशः खण्डः ॥ १२ ॥' इति दृश्यते ॥

आह—कथं पुनराख्यायमानान्येतानि न्यायवतां कार्मनामिकेन संस्कारेणोपेतानि स्युः, कथं वा प्रतीतक्रियाणीति?, उच्यते—"पुरुषं" तावत् "पुरि शय इत्याचक्षीरन्"। पुरि ह्यसौ शेते इति पुरिशयः प्राप्नोति। एवमसौ न्यायवता कार्मनामिकसंस्कारयुक्तेन शब्देनोक्तः स्यात्। एवं चैष प्रतीतक्रियः शब्दो भवति। एवमेव "अष्टा इत्यश्वम्" आचक्षीरन्,--अश्नोति हि असौ इति अष्टा प्राप्नोति। एवमेव तर्द्यतेऽनेनेति "तर्दनमिति तृणम्" आचक्षीरन्। न चैवमाचक्षते। न चासति कारणे विद्यमाना क्रिया परोक्षीकर्तुं न्याय्या, तस्मात् न सर्वाणि आख्यातजानि नामानीति॥ १। १३। १॥

## अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेति॥ २॥

"अथापि" इदमपरमप्रातं कुर्वन्ति, ते शाकटायनादयः। किम्?, "निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति, प्रथनात् पृथिवीत्याहुः, क एनामप्रथयिष्यत्"—इति। निष्पन्ने कस्मिन्?, अभिव्याहारे, आभिव्याहरणमभिव्याहारः तास्मिन्नभिव्याहारे, ततः पश्चादभि आभिमुख्येन स्थित्वा तस्याभिधानस्य, ततो विचारयन्ति—कतमस्य धातोरत्र रूपमिति?, आह—तथा किमिति। उच्यते—तद्यथा प्रथनात्पृथिवीत्याहुः। ते शाकटायनादयः॥

आह—ततः किमिति?, उच्यते—तत्र वयं पृच्छामस्तान्—यदीयं स्वभावत एव पृथिवी नोभविष्यत, ततः क एनामपृथिवीं सतीमप्रथयिष्यत्? कोऽस्याः प्रथनमकरिष्यदित्यभिप्रायः॥

अथापि कश्चिदस्याः अपृथिव्याः सत्याः प्रथनकर्त्ताभ्युपगम्येत, ततोऽपि च वयमिदमपरं पृच्छामः—"किमाधारश्च इति"। चशब्दः समुच्चयार्थः,—सर्वस्य हि प्राणिजातस्येयमेवाधारः प्रतिष्ठा, अथ पुनर्यदेयमप्रथितासीत्, तदा योऽस्याः प्रथयिता स किमाधार आसीत्?, न ह्यनाधारेणाप्रतिष्ठितेन शक्येयं प्रथयितुम्, स चाधारो नास्तीति प्रथनक्रियाभावः, प्रथनक्रियाभावे च सति क्रियाजान्येवमादीनि नामानीत्येतदयुक्तम्। तस्मान्न सर्वाण्याख्यातजानि नामानीति॥ १। १३। २॥

## अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायन एतेः कारितञ्च यकारादिञ्चान्तकरणमस्तेः शुद्धं च सकारादिं च॥ ३॥

१ 'तृन्यते तमिति' 'तृद्यतेऽनेनेति'। पाणिनीयैस्तु 'तृणु अदने', 'तर्द हिंसायाम्' इति पठ्यते॥ २ 'नाप्रथ'॥ ३ 'पृच्छेम'॥

"अथ" अपि इदमपरममप्राप्तं शाकटायनः कृतवान् ॥

आह—किमिति ?, उच्यते—"अनन्वितेऽर्थे" इत्येवमादिर्दोषः । आह—वेदाङ्गानामेकैकमनेकप्रभेदम् । तद्यथा—निरुक्तं चतुर्दशप्रभेदम् । व्याकरणमष्टप्रभेदम् । तत्र केषाञ्चिन्नैरुक्तानां कैश्चिद्वैयाकारणैः साकं केषुचिच्छब्देष्वैकमत्यं केषाञ्चिद्वैमत्यम् । तत्र शाकटायनो नैरुक्ताश्च गार्ग्यवर्जं कानिचिदभिधानान्यनेकैर्धातुभिरनुविदधाति, कानिचिदेकेनैव । किं कारणम् ?, प्रतिनियतो हि स्वेषु स्वेषु व्याकरणेषु शब्दानुविधानस्य समयः । तद्यथा—पाणिनीया भू इति प्रकृतिमुपादाय लडित्येतं प्रत्ययमुपाददते । ततः कृतानुबन्धलोपस्यानचूकस्य लस्य स्थाने तिवादीनादिशन्ति, तथाहि ते तं शब्दमनुविधातुं शक्नुवन्ति । स[1] हि तेषां शब्दानुविधानोपायः पाणिनिना परिक्लृप्तः।सैषा शब्दानुविधाने तन्त्रशैलीत्येतदेवैकं प्रयोजनमुक्त्वा नान्यत् प्रयोजनमस्ति लडादीनामनुबन्धानामध्ययने लोपे च ॥ अपरे पुनर्वैयाकरणा लटमकृत्वैव तिवादीनेवोपाददते । तेषामपि हि शब्दानुविधाने सा तन्त्रशैली[2] । एवं प्रतिनियतया स्वया स्वया तन्त्रशैल्या[3] भवतीत्येवमादिसमानमेव शब्दरूपं साधयन्ति । तत्रैवं शब्दानुविधानोपायविप्रतिपत्तौ सत्यां शाकटायन आचार्योऽनेकैश्च धातुभिरेकमभिधानमनुविहितवान्, एकेन चैकमेव । तत्र यदनेकैरनुविहितवान्, तदितरैर्गार्ग्यपाणिन्यादिभिर्न मृश्यते[5] । किंकारणम् ?, अप्रसिद्धो[6] हि स तेषां शब्दानुविधानमार्गः । धातुसमुदायमात्रमेव नामेति । अतस्ते[7] शाकटायनमाचिक्षिप्सन्त आहुः—"अथानन्वितेऽर्थे" इति । अनन्वितेऽर्थे अननुगते शब्देनार्थे—यत्र संस्कार्य्यमाणोऽपि शब्दोऽर्थमनुगन्तुं न शक्नोति । एवं धातुजोऽसमर्थो भवति ॥

"अप्रादेशिके विकारे" च । यया हि क्रियया तद् द्रव्यं प्रदिश्यते, तदभिधायको यो धातुः, स तदभिधानं विगृह्यमाणं विकर्तुं न शक्नोति य(त)त्र ॥

तत्र हीयमानप्रतिज्ञः शाकटायनः सर्वाण्याख्यातजानि नामान्युपपादयिष्यन्नसम्भवे सति काशकुशावलम्बनमिव[8] कुर्वन् किमकरोदिति?।"पदेभ्यः पदेतरार्द्धान् सञ्चस्कारशाकटायनः" ।पदेभ्यः आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय पदेतरार्द्धान् अन्यांश्चान्यांश्च इतरेतराख्यातपदावयवैरन्यैश्चान्यदन्यदर्द्धं नाम्नः संस्कृतवान् ॥

तद्यथा—'सत्यम्'—इत्येतदभिधानं सञ्चस्कार । कथम् ?, "एतैः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च" । एतेः 'इण् गतौ (अ० प०)'—इत्यस्य कारितं ण्यन्तं रूपं कृत्वा ततो यकारमादाय मकारान्तं कृत्वा[9] सत्यशब्दस्यान्तमर्द्धं सञ्चस्कार, ततो 'यम्'—इति भवति । अस्तेः शुद्धं च । 'अस् भुवि (अ० प०)'—

१ 'नहि' ॥ २ 'शैली' ॥ ३ 'शैली' ॥ ४ 'शैल्या' ॥ ५ 'मृष्यते' ॥ ६ 'अत्र सिद्धः' ॥ ७ 'यतस्ते' ॥ ८ 'काशकुलावलंब' ॥ ९ 'यकारमंतमादाय यकारांतं कृत्वा' ॥

इत्येतस्य शुद्धमेव रूपं कृत्वा तकारान्तामित्यर्थः। ततः सकारादिशब्दरूपं गृहीत्वा 'सत्'-इत्येतत्, 'सत्यम्'-इत्येतस्य शब्दस्य आदिमकरोत् आद्यमर्धं सञ्चस्कार। तत् सदिति भवति। अत्र योऽयमस्तेस्तकारः, स यकारमधिरोहति। एवमेतदेकमभिधानं द्वयोर्धात्वोः सञ्चस्कार सत्यमिति[3] ॥

अथ कोऽर्थः? सन्तमर्थमाययति प्रत्याययति गमयतीति सत्यम्। कारितं च यकारादिञ्च शुद्धञ्च सकारादिं चेति इतरस्माच्चेतरस्माच्चेतरं चेतरं चार्द्धमिति समुच्चयार्थाश्चकाराः। एवं पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः, तदेतदन्याय्यं कृतवान्,—को हि नाम पदं विभज्यानेकधातुजं कुर्य्यात्। तदेतदकृतपूर्वमन्यैर्विद्वद्भिः शाकटायनोऽतिपाण्डित्याभिमानादकरोत्,—यदभिनत् पदानि ॥

अपि चोपजायते नः शङ्का,—यथासौ प्रवृत्तो नासौ पदेषु स्थास्यति अपि चासौ वर्णानपि भेत्स्यति, अनेकार्थांश्च कल्पयिष्यति। यो हि पदान्यभिनत्, तस्य वर्णभेदे विशेषहेतुः को भविष्यति? तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि नामानि, नापि सर्वाण्याख्यातजानीति ॥ १।१३।३ ॥

**अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते ॥ ४ ॥ १३ ॥**

"अथापि" अयमपरो दोषः प्रसज्येत। कतमः इति? आहुः—"सत्त्वपूर्वो भाव इत्याहुः" अभियुक्तास्तद्विदः। सत्त्वं पूर्वमस्मात्सोऽयं सत्त्वपूर्वः। किंकारणम्? सत्त्वाश्रय एव ह्यसौ। तत्रैवं सति "अपरस्माद्भावात्" अपरकालीनेन भावेन क्रियया "पूर्वस्य" पूर्वोत्पन्नस्य सत्त्वस्य "प्रदेशः" प्रदेशनं सञ्ज्ञाप्रतिलम्भो "नोपपद्यते"। किं कारणम्?, उत्पत्तिसहभूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसम्बद्धमेव द्रव्यमुत्पद्यते,—नित्यसम्बद्धौ हि शब्दार्थौ। "इति तदेतत्" सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं "नोपपद्यते"। तदनुपपत्तावस्मत्पक्षसिद्धिः—कानिचिदाख्यातजानि नामानि, कानिचिदनाख्यातजानीति। अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयतामिति परिसमाप्तो गार्ग्यपक्षः ॥ १।१३।४ ॥ *

शाकटायनपक्षेणेदानीमेतान् दोषान् प्रतिसमाधास्यामस्तदर्थमिदमारभ्यते—

१ 'न कारितान्तमि' ॥ २ 'मिति भवति' ॥ ३ 'तुष्टो' ॥ ४ 'अवश्यमसौ' ॥ ५ 'तानि नामानीति' ॥ ६ 'एवं' ॥ ७ वस्तुतस्तु **'पूर्वस्य प्रदेशो नोपपद्यते इति'** इत्येतत्पर्यन्तमेव गार्ग्यपक्षः ॥ **'तदेतन्नोपपद्यते'** इति तु शाकटायनपक्षप्रारम्भ इत्येव सम्यक्। तत्र समर्थनग्रन्थो **'यथो हि नु-'** इत्येवमादिरिति बोध्यम् ॥ * इतोऽग्रे—**'इति निरुक्तव्याख्यायां त्रयोदशः खण्डः ॥ १३ ॥'** इत्युपलभ्यते ॥

**यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ॥ १ ॥**

"यथो हि नु वा एतत्" इति । यथेति वाक्योपादाने, यथा येन प्रकारेण । उकारोऽवधारणार्थः । व्याख्यातमेतत्,—"अथाप्युकार एतस्मिन्नेवार्थे" । इतरेण येनैव प्रकारेण प्रसिद्धमाचार्य्येणाख्यातजत्वं प्रतिषिद्धं नाम्नः, तेनैव प्रकारेण प्रत्यनुभाष्यं समीकरिष्यामीति । हि—इत्यसूयायाम्—कथं हि व्याकरिष्यतीति । नु—इत्येष हेत्वपदेशे । वे—इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः, येनैव प्रकारेणासमर्था हेतव उक्ताः, तेनैव प्रकारेण प्रत्यनुभाष्यं प्रतिवक्तृधर्मेण समीकरिष्यामः ॥

यथैतदुक्तं किमिति?, "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्" इति ॥ आह—तत्र किमिति ?, उच्यते—तदेतत् प्रत्युच्यत इत्युपयुक्तस्तच्छब्दः ॥

आह—केन पुनः प्रकारेण प्रत्युच्यत इति ?, उच्यते—"सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति" । सर्वमेव प्रादेशिकं सर्वमेव क्रियाजं नाम । आह—ततः किम् ? इत्येवं सत्यनुपालम्भ एव भवति । आह—कथम् ?, शृणु—प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ यावद्रूस्यमनुविधेयौ,—विम्वी हि लक्षणगतिः ॥ नैष शब्दापराधो नाप्यस्माकम् । भवत एवायमपराधो मन्दशिक्षितत्वात्—येनानुविधातुं स्वरसंस्कारौ विद्यमानावपि प्रदेशवाचिनि धातौ न शक्नोषि, स त्वं तावत् पुनः पुनः शिक्षस्वान्यद्व्याकरणं यावच्छक्तिस्तवानुविधातुमिति । व्याकरणेऽप्यष्टधा भिन्ने लक्षण एकैकदेशो विक्षिप्तः । कश्चित् सौत्रो धातुः, कश्चित् तुशब्दचशब्दवाशब्दातिरिक्ताध्याहारयोगविभागादिगम्यः । तद्यथा—मतान्तरेष्वप्यभिन्नेषु कश्चित् क्वचिद्विधिरुच्यते । ते च सर्व एव प्रयोगमिच्छता प्रयोगकाल उपसंहर्त्तव्याः । एवमिहापि सर्वाण्येव लक्षणशास्त्राण्यपेक्ष्याणि अखिलस्वरसंस्कारसिद्धयेऽभिस्वरसंस्कारे वा—इति । स त्वं तावत् शिक्षस्वानिर्विण्णः, यावदखिलशब्दानां स्वरसंस्कारावनुविधातुमुपज्ञातुं सामर्थ्यमिति ॥ १ । १४ । १ ॥

**यथो एतद्यः कश्च तत्कर्म कुर्य्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति ॥ २ ॥**

---

१ 'उत्तरेण' ॥ २ 'नैरकदे', 'नैकदे' ॥

"यथा एतत्" यत् पुनरेतदुक्तम्,— "यः कश्च तत् कर्म कुर्य्यात्, सर्वं तत् सत्त्वं तथाऽऽचक्षीरन्निति"। अनेकेषामेकक्रियायोगादेकनामता प्रसज्येतेति ॥

अत्र ब्रूमः—न हि प्रसज्यते। त्वमपि पश्यसि, वयमपि च "पश्यामः समानकर्मणाम्" तुल्यकर्मणामपि सतां कर्मकृतां "नामधेयप्रतिलम्भमेकेषां, नैकेषां यथा—तक्षा परिव्राजको जीवनो भूमिज इति"। तक्षन् कश्चित् तक्षेत्युच्यते। अन्यः तक्षन्नपि न तक्षेत्युच्यते। आह—कोऽत्र हेतुरिति ?, शृणु—लोकमेव पृच्छ, तमेवोपालभस्व, न मयैष नियमः कृत इति। अथ च तद्यथा,—समानमहिमानानां कश्चिदेवार्थेन संयुज्यते,कश्चिन्न,न चेदानीम्, एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तम्, सत्यमेकेन न लभ्यत इत्यन्यैरपि चालब्धम्। स्वभावतो हि शब्दानां क्रियाजत्वेऽपि सति काञ्चिदेव क्रियामङ्गीकृत्याव्यवस्थितिर्भवतीति। अथवा क्रियातिशयकृतो नियमः स्यात्,—यो हि यदतिशयेन करोति, तस्यानेकक्रियावत्त्वेऽपि सति तद्धेतुक एव नामधेयप्रतिलम्भो भवतीत्ययं समाधिः ॥

अथवा न ब्रूमः—यो यत्र यदा च तक्षति, स एव तक्षेति। किं तर्हि ? यो यदा यत्र तक्षा भवति, स एव तक्षेति[2]। तदेतल्लक्षणं[3] क्रियया नियतं, काममन्येष्वप्यस्तु कदाचित् क्वचित् तेषामप्यन्याः क्रिया नियततराः सन्ति, यद्धेतुको नामधेयप्रतिलम्भ इति। तेषां तु तक्षा नियमतः तक्षतीति विशेषः। जविन इक्षुरसः, शाकजातिर्वा। भूमिजोऽङ्गारकः, वृक्षो वा ॥ १। १४। २ ॥

## एतेनैवोत्तरः प्रत्युक्तः ॥ ३ ॥

"एतेनैवोत्तरः प्रत्युक्तः"। आह—कतमः ? यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यादित्येषः। पश्यामोऽनेकक्रियायुक्तानामपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति। तद्यथा—तक्षा, परिव्राजक इत्येतान्येवोदाहरणानि। तक्षा ह्यन्यान्यपि कर्माणि करोति। न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति। तत्र यदुक्तम् 'एकस्यानेकक्रियायोगादनेकनामता प्रसज्येत' इति। एतदयुक्तम्। न हि प्रसज्येत। यदि चोक्तमनेकेषामेकनामता, एकस्य चानेकनामता प्राप्नोति—ततश्च व्यवहाराप्रसिद्धिरिति, न हि तदुभयमस्ति। अनेकेषामेकक्रियायोगेऽपि हि सति एकस्य चानेकक्रियायोगेऽपि हि सति व्यवस्थित एव शब्दनियमः स्वभावत एव लोके। तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति। तत्र यदुक्तं 'व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीति' इति; एतदयुक्तम् ॥ १। १४। ३ ॥

---

१ 'नवेदा' ॥ २ 'तक्षतीति' इत्येवं पाठो भवेत् ॥ ३ 'क्षणमनियतं' ॥

**यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति ॥ सन्त्यल्पप्रयोगाः, कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाठ्य आट्णारो जागरूको दर्विहोमीति ॥ ४ ॥**

"यथो एतत्" यत् पुनरेतदुक्तम्—"यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति" । अत्र ब्रूमः—शब्दस्वाभाव्यमेतत्—यन्न तथा सर्वाण्याख्यायन्ते, यथा यथा प्रतीतार्थानि भवन्ति, न तत्राहमपराध्ये भवतः, नापि शास्त्रम् । यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव क्रियते । नाहं शब्दानां कर्त्ता, य एषां प्रयोक्तारस्तानेवोपालभस्व, निराकुरु वा यदि शक्नोषि ॥

आह—कस्मात् पुनः कानिचिदाख्यायन्ते लोके ? तदभिधानस्वाभाव्यमेव—। कानिचित्प्रतीतार्थानि, कानिचिदप्रतीतार्थानि, तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्त्तव्यानि । एतदेव शास्त्रस्य शास्त्रत्वम्,[२]—यदप्रतीतार्थान्यपि प्रकृत्यादिना[३] प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति । आख्यायन्त एव कानिचित्, कानिचिच्छास्त्रेण प्रतीतार्थानि क्रियन्ते । रूढ्यनुविधायित्वाल्लक्षणशास्त्रस्य, गुणतस्तेषु लक्षणम् ॥ अपि च—"संति" एव "अल्पप्रयोगाः" प्रतीतार्थक्रियाः केचित् "कृतः" कृत्प्रत्ययान्ताः शब्दाः "अपि" "ऐकपदिकाः" एकपदप्रकरणान्तर्वर्त्तिनस्तद्धर्माणः । तत् "यथा व्रततिर्दमूना जाठ्य आट्णारो जागरूको दर्विहोमीति" । व्रततिर्वृणातेः,—वल्ली । दमूना दममना वेत्येवमादि, अग्निरतिथिर्वा । जाठ्यः जटावान् । आट्णारो अटनशीलः । जागरूको जागरणशीलः । दर्विहोमीति दर्व्या जुहोतीत्येवं प्रतीतार्थान्यपि—इति शाकटायनाभिप्रायः । तत्र यदुक्तं—'न सर्वाण्याख्यातजानि नामानीति' एतदयुक्तम् ॥ १ । १४ । ४ ॥

**यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति, भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः—प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः ॥**

"यथो एतत्"—यत् पुनरेतदुक्तम्,—"निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति" । अत्र ब्रूमः—युक्तं ते कुर्वन्ति—"भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः" । योगपरीष्टिर्नाम योगस्य परीक्षणम् ॥ कथं वाऽनुत्पन्नः सन्नभिधानयोगः परीक्ष्येत ॥

१ 'ने स्वाभा' ॥ २ 'शास्त्रार्थत्वम्' ॥ ३ 'दीनि' ॥ ४ 'चा' ॥

तत्र यदुक्तं-"प्रथनात् पृथिवीत्याहुः"। "क एनामप्रथयिष्यत् किमाधारश्चेति"॥ न वयमेवं ब्रूमः,--प्रथितेयं केनचिदतः पृथिवीयमिति ॥

आह-कथमियमप्रथिता सती पृथिवीत्वमापेति ? उच्यते-"अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः"। दृश्यमाना हीयं पृथिवी। तस्मात् यद्यप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनक्रियायोगात् पृथिव्येव ॥

तत्र यदुक्तं--'क एनामप्रथयिष्यत् किमाधारश्च ?' इति। एतदयुक्तम्, अन्यथा हि धात्वर्थ उपपद्यत एव। तत्रैवं सति, यथा न विरोत्स्यते, तथा निर्वक्ष्यामः। तस्मादविरुद्धः शाकटायनाभिप्रायः ॥

## अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते ॥ ५ ॥

"अथापि" च, यदि दृष्टेऽप्यस्याः पृथुत्वे न वयमुपलभ्यामहे ॥ ननु "एवं" सति, "सर्व एव दृष्टप्रवादा उपालभ्यन्ते" न केवलमहमेव। यो यद्दृष्ट्वा ब्रवीति, स तत्र दोष एव। तथा सति, दृष्टहानं प्रसज्येत, अनिष्टं चैतत्। तस्मात् पृथुदर्शनात् पृथिवीत्युच्यते ॥ १ । १४ । ५ ॥

## यथो एतत्पदेभ्यः पदेतरार्द्धान्सञ्चस्कारेति योऽनन्वितेऽर्थे सञ्चस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा न शास्त्रगर्हा इति ॥ ६ ॥

"यथो एतत्" यत् पुनरेतदुक्तम्-"पदेभ्यः पदेतरार्द्धान्सञ्चस्कारेति"। अत्र ब्रूमः-"योऽनन्विते" शब्देनानभिधेये "अर्थे" अननुगतमसम्बद्धं "सञ्चस्कार, स तेन" असमञ्जसेनासम्बद्धेन संस्कारेण "गर्ह्यः" गर्हणीयः। न पुनराचार्यो योऽनुगमय्य धातुभिरनेकैरेकाभिधानगतानर्थांस्ततः सञ्चस्कार, नैव मौढ्येन। "सैषा" तदभिप्रायापरिज्ञानात् "पुरुषगर्हा" पुरुषो हि कश्चित् अशिक्षितत्वादेकधातुजमपि न जानाति, किमुत बहुधातुजम्। अपि च, सन्ति लोके तादृशाः पुरुषाः, ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति, कतमेभ्यो धातुभ्य एतान्यभिनिष्पाद्यन्त इति न जानते, एष पुरुषदोषः, "न शास्त्रगर्हा इति" न शास्त्रदोषः--यदनुगमयितुं धातुशब्दैरर्थो न शक्यते ॥ तत्र यदुक्तम्--अनन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान् संचस्कार शाकटायन इति। तदयुक्तम्, अनुगत एवार्थे सञ्चस्कार शाकटायनः 'सन्तमेव ह्यर्थमाययति गमयतीति सत्यम्' इति। तस्मादुपपद्यत एव शाकटायनमतम् ॥

---

१ 'एतद् यु' ॥ २ 'धात्वर्थो नोपप' ॥ ३ 'योऽयं' ॥

अपि च, रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते । यथा लक्षणम्, तथा लक्ष्यं प्रवर्त्तितुमर्हति, इतरथा हि कस्य तल्लक्षणं स्यात् । यदसर्पत् तत्सर्पिरीति मन्त्रः, यन्नवमेव नीतं तन्नवनीतमभवदिति मन्त्रः । अपि च ब्राह्मणेनाप्यनेकधातुजान्येव कृत्वा निरुच्यन्ते तत्र मन्त्राभिधानानि, यत्परिज्ञाने च फलमुपपद्यते ॥ आह—"तदेतत्त्र्यक्षरं हृदयमिति, 'हृ' इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद, 'द' इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद, 'य' मित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ( श० ब्रा० १४, ८, ४, १ )"--इति । एवं हरतेर्ददातेरेतेर्हृदयशब्दः । तदर्थफलोपदर्शनार्थं ब्राह्मणेनैवं निरुक्तः । तच्च नः परं प्रमाणम् । तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्—यदनेकैर्धातुभिरेकमभिधानं निरुक्तवानिति ॥ १ । १४ । ६ ॥

**यथो एतदपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति ॥ बिल्वं भरणाद्वा भेदनाद्वा ॥ ७ ॥ १४ ॥**

"यथो एतत्" यत् पुनरेतदुक्तम्—"अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति" ॥ अत्र ब्रूमः—"पश्यामः" "पूर्वोत्पन्नानां सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भम्" ॥ अपरस्माद् अपरकालीनादपि सतो भावात् । "एकेषाम् । न एकेषाम्" । तत् "यथा"--"बिल्वादो लम्बचूडक इति" । पश्चात्कालीनयापि चूडालम्बनक्रियया भविष्यता योगेन बिल्वादनक्रियया च, पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः । क्व चान्यत्र नोपपद्यते ॥ तत्र यदुक्तम्—'अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यते' इति । एतदनैकान्तिकत्वादयुक्तम् । उपपद्यत एव हि केषाञ्चिदिति ॥

"बिल्वं भरणाद्वा भेदनाद्वा" । भृतं हि तद् भवति बीजानाम्, बिभर्त्ति वा दुर्भिक्षादौ भक्ष्यमाणं जनम् । भेदनाद्वा भिद्यते हि तदवश्यं भक्षणायेति ॥

आह—किमिदमतिबह्विव किमपि पूर्वोत्तरपक्षसम्बद्धं नामाख्यातजत्वमधिकृत्योक्तमिति ? उच्यते—शिष्यबुद्धिवृद्ध्यर्थमेतदुक्तम्, कथं नाम व्युत्पन्नबुद्धिः शिष्योऽप्रतिबुध्यमानः सर्वतो मुखानेव लौकिकवैदिकाञ्छब्दान्निर्ब्रूयादिति । सर्वाण्येव हि व्याकरणानि निरुक्तानि च वेदाङ्गत्वाविशेषात् प्रमाणानि । तेषामेव फलमिदं क्वचिदसाध्वित्येतदशक्यं वक्तुमिति ॥ १ । १४ । ७ ॥ *

* इतोग्रे 'इति निरुक्तव्याख्यायां चतुर्दशः खण्डः ॥ १४ ॥' इति द्रष्टव्यम् ॥
इति निरुक्तवृत्तौ प्रथमा ( षष्ठा ) ध्यायस्य चतुर्थः पादः ॥ ४ ॥ इति तूपलभ्यते ॥

this particular branch of science

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते ॥
अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः ॥ understanding – determination –
तदिदं विद्यास्थानं (branch) व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च ॥ १ ॥

एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानामेतल्लक्षणं परिज्ञायते–"अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते" । अथशब्दोऽधिकारार्थः द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोति । अपीति सम्भावने । अपिपदेषु विभागेनावस्थितेषु लोके वेदे वा, अपिमन्त्रेषु वाक्यभावेनावस्थितेषु, यः समस्तार्थस्तस्मिन् प्रत्ययो विशेषावधारणं न विद्यते, न[1] भवतीत्यर्थः । अपीदं शास्त्रमन्तरेण पदार्थे प्रत्ययो नास्ति[2], अपि वाक्यार्थे इत्यभिप्रायः ॥

आह—कः पुनः पदार्थवाक्यार्थयोर्विशेष इति ? उच्यते—साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः । तद्यथा–गौरित्युक्ते किमित्याकाङ्क्षा भवति, ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । तथा गच्छतीत्युक्ते क्व इति साकाङ्क्षं भवति, ततो गौरित्युक्ते निराकाङ्क्षं भवति । अथेदानीं गौर्गच्छतीत्युक्ते गौर्वाहदोहादिभ्यो व्यावृत्य गमनेऽवतिष्ठते, गमनं चान्येभ्यो व्यावृत्य गव्येवावतिष्ठते, एष वाक्यार्थः । स एष प्रकरणाविरोधी वाक्यार्थः पदार्थं नियमेन लक्षयति, पदार्थश्च पदलक्षणम् । पदार्थसन्नियोगेन हि व्याकरणे पदानां प्रकृतिप्रत्ययादीनि लक्षणानि व्यादिश्यन्ते ॥

यत एवमतः "अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः" । अर्थमप्रतियतोऽप्रतिपाद्यमानस्यानवधृतार्थस्येत्यर्थः । नात्यन्तम् नैकान्तिकेन, एकान्तं नाम निश्चयोऽनिश्चयेनेत्यर्थः किम् ? स्वरसंस्कारोद्देशः स्वरोद्देशश्च संस्कारोद्देशश्च, स्वरावधारणं संस्कारावधारणं नास्तीति वाक्यशेषः ॥ किं कारणम् ? न ह्यनवधृतार्थः स्वरसंस्काराववधारयितुं शक्नुयात् । अर्थवशेन हि स्वरसंस्काराववतिष्ठेते ॥

"तदिदम्" एवं कृत्वा निरुक्तशास्त्रं "विद्यास्थानम्" एतदधीनत्वादर्थपरिज्ञानस्य । अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं "व्याकरणस्य कार्त्स्न्यम्" कृत्स्नभावं–करोतीति वाक्यशेषः॥व्याकरणेन हि स्वरसंस्कारौ चिन्त्येते । तस्मादपरिसमाप्तमेव तावद् व्याकरणम्, यावत् निरुक्तं नाधिगतमिति । न हि अनैरुक्तोऽर्थमवधारयितुमलम्,–नानवधृतार्थः स्वरसंस्कारतत्त्वं विजानीयादिति ॥

आह–ननु व्याकरणस्य कार्त्स्न्यमेतत् करोतीत्युक्ते तच्छेषभूतमेवैतत्, उणादिवत्, ततश्च विद्यास्थानत्वमस्य विरुध्यत इति ? नेत्युच्यते–"स्वार्थसाधकं च" । स्वार्थाजहद्वृत्त्या

१ 'नास्तीत्य' ॥ २ 'नास्ति समस्तार्थः' ॥

ह्येतदनुषङ्गतो व्याकरणस्य कृत्स्नतां करोति । यथा लोके स्वार्थमपरिहाय कश्चित् परानुग्रहं करोत्येवम् ॥ यत् पुनरेतदुक्तम्—उणादिवदिति । ते हि तन्त्रान्तर्भूता एव—"उणादयो बहुलम् ( पा० ३, ३, १ )"—इत्युक्तम्, न पुनर्निघण्टवो बहुलमिति । तस्मात् स्वतन्त्रमेवेदं विद्यास्थानमर्थनिर्वचनम्, व्याकरणं तु लक्षणप्रधानमिति विशेषः ॥ १ । १५ । १ ॥

## यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सः ॥ अनर्थका हि मन्त्राः ॥ २ ॥

आह,—"यदि मन्त्रार्थप्रत्ययाय" एतदारभ्यते, हन्त, तर्ह्येतदेवमर्थमारभ्यमाणम् "अनर्थकम्" एव "भवतीति" ॥ आह—क एवमाहेति ? उच्यते—"कौत्सः" ।

किं कारणम् ? "अनर्थका हि मन्त्राः" । न हि मन्त्राणामर्थोऽस्ति वाच्यवाचकत्वेन । तदर्थनिर्वचनायारभ्यमाणमिदमप्यनर्थकमेव भवति । तस्मान्नारब्धव्यमित्येवं कौत्सो मन्यते ॥ १ । १५ । २ ॥

## तदेतेनोपेक्षितव्यम् ॥ ३ ॥

"तत्" एतदेवमुच्यमानं कौत्सेन "एतेन" अनेन नैरुक्तेन [ "न"[1] ] "उपेक्षितव्यम्" । उपगम्य वेदं शास्त्रञ्च ईक्षितव्यम्, किमसौ सत्यमाचष्टे वृथेति वा परीक्ष्यम् ॥ ॰ अर्थवत्त्वे मन्त्राणां यद्धेतुज्ञानं वक्ष्यमाणं तदुपगम्यार्थवत्त्वं मन्त्राणामीक्षितव्यमिति केचिदाहुः ॥ १ । १५ । ३ ॥

## नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति ॥ ४ ॥

कया पुनरुपपत्त्या कौत्सो मन्त्राणामानर्थक्यमाहेति ? उच्यते—"नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति"—इति । नियतवाचोयुक्तयः निरूढवाचोयुक्तयः,—अभिधाननियता हि ते भवन्ति—"अ॒ग्न॒ आ या॑हि वी॒तये॑ ( सा० वे० सं० १,१,१,१ )"—इति मन्त्रे, न पुनर् —'विभावसो ! आगच्छ पानाय' इति । नियतानुपूर्व्या नियतानुपूर्वीपदप्रयोगस्य । तद्यथा—'अग्न आयाहि' इति, न पुनर्भवति 'आयाह्यग्ने' इति । इह लोकेऽर्थवतां शब्दानामनियमेन पर्यायवचनता दृष्टा गवादिप्रयोगे, तथा न पौर्वापर्य्यं दृष्टम् । तद्यथा—'गोणीमभ्याज' 'गामभ्याज' 'आहर पात्रम्' 'पात्रमाहर' इति । न च तथा मन्त्रेषु । ततोऽर्थवच्छब्दवैधर्म्यात् पश्यामोऽनर्थका मन्त्रा इति ॥ १ । १५ । ४ ॥

## अथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते—"उरु प्रथस्वेति प्रथयति" । "प्रोहाणीति प्रोहति" ॥ ५ ॥

---

[1] अयं नकारः निरुक्ते हस्तलिखितटीकापुस्तके च नैवोपलभ्यते । मुद्रितपुस्तक एव दृश्यते नापि च स कंचिद्विशेषमर्थं समर्पयत: [ ] कोष्ठक एव निवेशितः ।



(Handwritten marginal notes in English, partly illegible: "fixed forms of expression (combination of words)", "composition", "leaving argument", "Y.S. was perhaps ... which ... that they are meaningless ...")

"अथापि" अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह—कतम ? इति, उच्यते—"ब्राह्मणेन" ते[1] "रूपसम्पन्नाः" अपि सन्तो "विधीयन्ते" एव । रूपं नाम लिङ्गम्, तेन संपन्ना लिङ्गसंयुक्ता इत्यर्थः । प्रकटलिङ्गा अपि सन्तस्तदविवक्षितं कृत्वा कर्मसु विधीयन्त एव ॥ यदि ह्येते अर्थवन्तोऽभविष्यन्, स्वेनैव लिङ्गेन स्वमात्मानमेते विनियोक्तुं समर्था इति कृत्वा न ब्राह्मणेन तेषुतेषु कर्मसु व्यधास्यन्त, विहिताश्च—तद् यथा—"उरु प्रथस्वेति प्रथयति (श० ब्रा० १, ३, ६, ८)" प्रथनलिङ्गो मन्त्रो विहितः प्रथनकर्मणि, तथा च—"उरु प्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ( य०वा० सं० १, २२)" । यजुरिदम् । पुरोडाशं प्रत्युच्यते । हे पुरोडाश ! त्वं विस्तीर्णप्रथनः सन् विस्तारयथाः स्वात्मानम् । ते तव यज्ञपतिश्चायं यजमानः प्रजापशुहिरण्यादिभिश्चोरु प्रथतां विस्तीर्य्यतामिति । तथा-"प्रोहाणीति प्रोहति"—इति ब्राह्मणं द्रोणकलशप्रोहणविधायि । "इदमहमात्मानमेव प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसाय" इति । तेजोर्थं ब्रह्मवर्चसार्थं चात्मानं प्रोहामि—प्राञ्चं प्रेरयामि इति । प्रोहाणीति प्रोहति—इति प्रोहणलिङ्गो विहितः प्रोहणकर्मणि । तस्माल्लिङ्गसम्पन्नविधानात् पश्यामो ब्राह्मणेनानर्थकस्वरूपमेव सन्तं मन्त्रं विनियुक्तम् । एवं सति, मन्त्रं पुनर्विदधत् ब्राह्मणमर्थवत्, अनर्थका हि मन्त्राः ॥ नह्यर्थवन्तः सन्तो दासवद्ब्राह्मणेन विधीयेरन्, विहिताश्च । तस्मादनर्थका मन्त्रा इति पश्यामः । अपि च, ब्राह्मणस्यानर्थक्याभ्युपगमे[3] देशकालकर्तृदक्षिणादिकर्माङ्गभूतं कुत उपलभ्येत[4] ? तथा च ब्राह्मणस्यानर्थक्येऽभ्युपगम्यमाने वैदेक देशस्य मन्त्रस्यात्यन्तमिवानर्थकत्वमभ्युपगतं स्यात्, न हि ब्राह्मणस्य विविधस्तुत्यर्थादृतेऽर्थवत्तास्ति, मन्त्राणां पुनर्वाच्यवाचकत्वेनानर्थकानामपि सतां विनियोगमात्रेणाप्यर्थवत्ता स्यादेव । एतस्माच्च काममनर्थका मन्त्रा वाच्यवाचकत्वेन सन्तो विनियोगमात्रेणैवार्थवतो[6] विधेयत्वात् ( ? ) विधायकत्वाच्च ब्राह्मणमर्थवदस्त्विति ॥ १ । १५ । ५ ॥

## अथाप्यनुपपन्नार्था भवन्ति—"ओषधे त्रायस्वैनम्" "स्वधिते मैनꣳ हिꣳसीः" इत्याह हिंसन् ॥ ६ ॥

"अथापि" अयमपरो हेतुरनर्थकत्वे मन्त्राणाम् । आह—कतम इति ? उच्यते—"अनुपपन्नार्थाः" हि एते "भवन्ति" य एतेष्वर्थो लभ्यते—अयमेतेष्वर्थः स्यादिति नासावुपपद्यते । तद्यथा—"ओषधे त्रायस्वैनम् ( य० वा० सं० ४, १, ६, १५ )"—इत्याह । न चौषधिरात्मानमपि त्रातुं समर्था, किं पुनर्वृक्षम्[7] ॥ तथा—"स्वधिते मैनꣳ हिꣳसीः ( य० वा० सं० ४, १, ६, १५ ) इत्याह" आत्मनैव "हिंसन्" । को

१ 'ह्येते' ॥ २ 'स्यात्मा' ॥ ३ 'नर्थकत्वाभ्यु' ॥ ४ 'भ्यते' ॥ ५ 'र्थत्वादन्ते' ॥ ६ 'वन्तो' ॥ ७ 'किमुत वृ' ॥

हिं नाम एवमुक्त्वा स्वयमेव हिंस्यात् हिनस्ति च १। लोके यान्येवंविधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकान्युच्यन्ते, तथैवेमानि। तस्मादिमान्यप्यनर्थकानीत्युपपद्यते ॥ १ । १५ । ६ ॥

**अथापि विप्रतिषिद्धार्था भवन्ति—"एक एव रुद्रोऽवतस्थे न द्वितीयः"। "असङ्ख्याता सहस्राणि ये रुद्रा अधि भूम्याम्" ॥ "अशत्रुरिन्द्र जज्ञिषे" "शतं सेना अजयत्साकमिन्द्रः" इति ॥ ७ ॥**

"अथापि" अयमपरो हेतुरानर्थक्ये मन्त्राणाम्। आह,—कतम इति? उच्यते—"विप्रतिषिद्धार्था भवन्ति" इति। अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधोऽन्यस्य वाऽन्येन विप्रतिषेध इतरेतरव्याघात इत्यर्थः। तद्यथा,—"एक एव रुद्रोऽवतस्थे न द्वितीयः", "असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् (य०वा० सं० १६,५४)", "अशत्रुरिन्द्र जज्ञिषे (ऋ० सं० ८, ७, २१, २)", "शतं सेना अजयत्साकमिन्द्रः (ऋ० सं० ८, ५, २२; १)—इति"। एतान्युदाहरणानि।

"एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन् पृतनासु शत्रून्।
संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान् सञ्चुकोचान्तकाले॥"

'एक एवावतस्थे रुद्रः' 'स्थितवान्, 'रणे' रणाय रणार्थम्, 'न' अन्यो 'द्वितीयः' कश्चिदस्ति। इति रुद्रबहुत्वप्रतिषेधः। कथमवतस्थे? 'नि' निश्चयेन 'घ्नन्' 'पृतनासु' स्पर्द्धनीयेषु संग्रामिषु 'शत्रून्'॥ किञ्च, स एकः 'संसृज्य' सृष्ट्वा, 'विश्वा' विश्वानि, 'भुवनानि' 'गोप्ता' रक्षिता, सृष्ट्वा च सर्गकालेऽनन्तरमेव पालयित्वा च स्थितिकाले। 'प्रत्यङ्' सर्गप्रातिलोम्येन 'जनान्' 'सञ्चुकोच' सङ्कोचयति, 'अन्तकाले' प्रलयकाले। य एवं गुणयुक्तो रुद्रस्तं वयं स्तुमः॥

"असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्।
तेषां सहस्रयोजनेऽव धन्वानि तन्मसि" (य० वा० सं० १६, ५४)

एषा शतरुद्रियेऽनुष्टुप्। अनेन चाग्निचयनेऽर्कपर्णेनाजाक्षीरमिश्रा गवेधुकाः संसक्त्वा हूयन्ते उत्तरस्यां श्रोणावन्त्यायामिष्टकायाम्। प्रजापतेरार्षम्। 'असंख्याता' असंख्यातानि 'सहस्राणि' बहूनीति यावदुक्तं स्यात्॥ केषाम्? 'ये रुद्राः' 'भूम्याम्' 'अधि'

१ 'नीत्यु॥ २ 'चान्येन'॥ ३ 'सङ्काले'॥

उपरि 'तेषां' 'सहस्रयोजने' अध्वनि अवस्थितानामेव 'अव' 'तन्मसि' तनुमः 'धन्वानि' धनूंषि। अप्राप्तानामेवास्मान् प्रतीत्यभिप्रायः। तावदेव च तानभिष्टुमो यावदेव ततानि तानि धनूंषि॥

"त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम्।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु॥" (ऋ० सं० ८, ७, २१, २)।

एतया अतिच्छन्दसा इन्द्रं तुष्टाव सुदाः पैजवनः। षोडशिनि शस्त्रे विनियुक्ता। हे 'इन्द्र!' 'त्वम्' 'अवासृज' 'सिन्धून्' स्यन्दनान् एतान् माध्यमिकान् उदकसंस्त्यायान्। कथं पुनरवासृजः? 'अधराचः' तानधोगमनान् कृत्वा सर्वानेवावासृजः, नित्यकालम् 'अहन् अहिम्' घ्नन् मेघम् 'अशत्रुः' अशातयितव्यः 'जज्ञिषे' ज्ञायसे नित्यकालं भवसि, तस्मिन् हते मेघे। किञ्च, त्वमेतेन प्रकारेण मेघवधकर्मणा 'विश्वं' सर्वं 'पुष्यसि' पुष्णासि 'वार्यं' वारिप्रभवं व्रीह्यादिकम्। 'तं' 'त्वा' त्वाम् एवंगुणसंयुक्तं वयं 'परिष्वजामहे' सर्वतः स्वजामहे आश्लिष्यामः। 'नभन्तां' मा भूवन् 'अन्यकेषाम्' अन्येषाम् 'ज्याका' ज्या अपि 'अधिधन्वसु' अधिधनुःषु। किमु-तान्ये केचनाभ्युद्यच्छमाना एतेऽस्मद्द्विषः अवततज्यधनुषो हतसर्वोद्यमाः सन्त्वित्यतस्त्वां परिष्वजामह इत्यभिप्रायः॥

"आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः॥" (ऋ० सं० ८, ५, २२, १)॥

इत्येषा अप्रतिरथेन त्रिष्टुबग्निप्रणयने विनियुक्ता। अप्रतिरथस्येन्द्रपुत्रस्यार्षम्।

'आशुः' व्यापकः क्षिप्रो वा, 'शिशानः' शिश्यानः तीक्ष्णीकुर्वन् आयुधम्, प्रगृहीतायुधः, 'वृषभो न' वृषभ इव पुष्टो योद्धा। 'भीमः' शत्रूणां भयजनकः। 'घनाघनः' हनाहनः जहि-जहीत्येवं शब्दकारी 'क्षोभणः' केषाम्? 'चर्षणीनाम्' प्रत्यनीकावस्थितानामसुरादीनाम्। 'सङ्क्रन्दनः' समाह्वाता शत्रूणाम्। आहूय च 'अनिमिषः' आदरवान् जयं प्रति। 'एकवीरः' एक एव विक्रान्तः अप्रतिद्वन्द्वः[2] सङ्ग्रामेषु, 'शतं सेनाः' वह्वीः शत्रुसेनाः, 'साकम्' अवस्थिताः 'अजयत्' एक 'इन्द्रो' यः, तं वयं स्तुमः॥ एवमितरेतरविप्रतिषिद्धान्येतानि मन्त्रवाक्यानि। यद्येको रुद्रः, नासङ्ख्यातानि सहस्राणि। अथासङ्ख्यातानि, नैकः। यद्यशत्रुः, कथं शतं सेना अजयत्? अथ शतं सेना अजयत्, कथमशत्रुः? लोके हि यान्येवंलक्षणानि वा-

१ 'यावदेव ततानि', 'यावदनवततानि' इति चेदपि युक्तः पाठः। २ 'अप्रतिबद्धः'॥

क्यानि उन्मत्तादीनाम्, तान्यनर्थकानीत्युच्यन्ते । तथा चेमानि । तस्मादिमान्यनर्थकानीति ॥ १ । १५ । ७ ॥

**अथापि जानन्तं सम्प्रेष्यत्यग्नये समिध्यमानायानुब्रूहीति ॥ ८ ॥**

"अथापि" अयमपरो हेतुर्मन्त्राणामानर्थक्ये । कतम इति ? उच्यते—"जानन्तं सम्प्रेष्यति" अध्वर्युर्होतारम् । कथम् ? "अग्नये समिध्यमानायानुब्रूहीति" ॥ "तदु हैक आहुः । अग्नये समिध्यमानाय होतरनुब्रूहीति । ( श० ब्रा० १, ३, २, ३ )" होता हि विधिज्ञ एव भवति,—न ह्यविद्वान् विहितोऽस्तीति स विजानात्येवामुष्मिन्नवधाविदं मयानुष्ठातव्यमिति । तदेतद्विज्ञातार्थस्य सतः सम्प्रेषणमनर्थकमेव भवति । यथैतदनर्थकमेवमन्येऽपि मन्त्रा इति ॥ १ । १५ । ८ ॥

**अथाप्याह—"अदितिः सर्वम्" इति । "आदतिर्द्यौरदितिरन्तरिक्षम् । इति तदुपरिष्टाद् व्याख्यास्यामः ॥ ९ ॥**

"अथापि" अयमपरो हेतुर्मन्त्राणामानर्थक्ये । आह—कतम इति ? उच्यते—"आह" मन्त्रानिगमः "अदितिः सर्वमिति" । आह—किमुदाहरणम् ? 'अदितिर्द्यौरदितिरन्तरिक्षमिति"

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥" ( ऋ० सं० १, ६, १६, ५ ) ।

"तत्" एतदुदाहरणम् "उपरिष्टाद्" ऐकपदिके "व्याख्यास्यामः" इह त्वेवमर्थमियमुदाहृता,—कथं यैव द्यौः, सा अन्तरिक्षम्, यैव माता, स एव पुत्रः, स एव च पितेत्येवमादि किमपि बहुत्र परस्परासम्बद्धमुच्यते ? तदर्थवत्त्वे सत्युपपादयितुमशक्यम् । तस्मादनर्थका मन्त्रा इति ॥ १ । १५ । ९ ॥

(V.44.8) (VI.12.2)

**अथाप्यविस्पष्टार्था भवन्ति—अम्यग्याद्दश्मिञ्जारयायिकाणुकेति ॥ १० ॥ १५ ॥**

"अथापि" अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह—कतम इति ? उच्यते—"अविस्पष्टार्थाः" अपि हि केचित् "भवन्ति" । तद्यथा—"अम्यग्, यादृश्मिन्, जारयायि,

१ 'ब्रवीति' ॥ २ 'विहित' ॥

काणुका,-इति" एवमादयः । न ह्येतेषां विस्पष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम्,-न च केचिदर्थवन्तः केचिदनर्थका इति न्याय्यमभ्युपगन्तुम्, अर्द्धविशेषं हि स्यात् । तस्मात् सर्व एवानर्थका इति ॥ परिसमाप्तः पूर्वपक्षः ॥ १ । १५ । १० ॥ *

## अर्थवन्तः शब्दसामान्यात् ॥ १ ॥

स्वपक्षमिदानीं स्थापयिष्यामः, तदर्थमिदमारभ्यते,-" अर्थवन्तः शब्दसामान्यात्" इति । अर्थवन्त एव मन्त्रा इति प्रतिज्ञा । हेतुरुच्यते-शब्दसामान्यादिति । समान एव हि शब्दो लोके मन्त्रेषु च । तथा च, य एव गोशब्दो लोके स्वरसंस्कारसंयुक्तः स एव मन्त्रेष्वपि । तत्रैवं सति स एवार्थवान् लोके, स एव चानर्थको मन्त्रेष्विति विशेषहेतुर्नास्ति । असति च विशेषहेतावर्थवन्त एव मन्त्राः शब्दसामान्यादित्युपपद्यते ॥

यत्पुनरेतदुक्तम्-'प्रयोगानियमाल्लोकेऽर्थवत्त्वं प्रयोगनियमाच्च मन्त्राणामानर्थक्यम्' । इति,-तत् प्रति वक्ष्याम एतत् । लोकेऽपि हि प्रयोगनियमो दृष्टः । तद्यथा-पितापुत्राविति ॥ १ । १६ । १ ॥

## एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम् ॥ २ ॥

किञ्चान्यत्,-"एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम् ।" एतदेव हि यज्ञस्य कर्मणः समृद्धम् । तत् किम् इति ? उच्यते-यद्रूपसमृद्धम् मन्त्रलिङ्गैरभिधीयते, तदेव हि समस्तवृद्ध्या युक्तं भवति, नेतरत् । एतदेव सुतरां स्पष्टीकरोति-यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम् इति । शब्दसामान्याद् ब्राह्मणप्रामाण्याच्चेति च शब्दः[२] । ब्राह्मणमपि च मन्त्राणामर्थवत्त्वमेव दर्शयति । अनर्थका हि सन्तः कथं कर्माभिवदेयुः ? कथं वाऽनभिवदन्तः समर्द्धयेयुः ? अर्थवत्त्वं चाभ्युपगतं भवता ब्राह्मणस्य 'अथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते' इति । अत्र ब्राह्मणेन सिद्धमेवार्थवत्त्वमुक्तं मन्त्राणाम् । तदेतदुपदर्शितमस्माभिस्तस्मादर्थवन्त एव मन्त्रा इति ॥ १ । १६ । २ ॥

## क्रीळन्तौ पुत्रैर्नप्तृभिरिति ॥ ३ ॥

आह-किं पुनः समृद्धरूपत्वे मन्त्राणामुदाहरणम् ? उच्यते-"क्रीळन्तौ"-इति ।

"इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥" ( ऋ० सं० ८, ३, २८, २ ) ।

---

१ 'अर्धविशसं' ॥ * इतोऽग्रे-'इति निरुक्तव्याख्यायां पञ्चदशः खण्डः ॥१५॥' इत्युपलभ्यते ॥ २ 'तद्यथा' ॥ ३ 'ष' ॥ ४ 'चा' ॥ ५ 'वा' ॥

सूर्य्याया आर्षम् । विवाहे विनियुक्ता अनुष्टुप् ॥ 'इहैव' 'स्तं' भवतं युवां, 'स्वे गृहे' 'मोदमानौ' हर्षमाणौ 'मा वियौष्टम्' मा च विर्युज्येथाम् । 'विश्वं' सर्वम् 'आयुः' 'व्यश्नुतं' 'क्रीळन्तौ' क्रीडन्तौ 'पुत्रैः' 'नप्तृभिः' पौत्रैश्च सहेत्याशीः । स्थापितमर्थवत्त्वं मन्त्राणाम् ॥ १ । १६ । ३ ॥

## यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति ॥ ४ ॥

अधुना परपक्षे हेतवो निराकर्तव्याः, तदर्थमिदमाह–"यथो एतत्" इति ॥ यत् पुनरेतदुक्तम्–"नियतवाचोयुक्तयः, नियतानुपूर्व्या भवन्ति इति" । अत्र ब्रूमः–"लौकिकेष्वपि" हि अर्थवत्सु शब्देषु नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वञ्च दृष्टमेव । "एतद्यथा इन्द्राग्नी" इति "पितापुत्राविति" च ॥ तत्र,–यदुक्तं नियतवाचोयुक्तित्वान्नियतानुपूर्व्यत्वाच्चनर्थाका मन्त्रा इति । एतदयुक्तम्, लौकिकेष्वपि हि नियतप्रयोगाः सन्तः शब्दाः केचिदर्थवन्तो दृष्टाः, यथेन्द्राग्नी पितापुत्राविति । स एष प्रयोगनियमादनर्थका मन्त्रा इत्यनैकान्तिको हेतुः । तस्मादर्थवन्त एवेति ॥ १ । १६ । ४ ॥

## यथो एतद्ब्राह्मणेन रूपसम्पन्ना विधीयन्त इत्युदितानुवादः स भवति ॥ ५ ॥

"यथो एतत्" यत् पुनरेतदुक्तम्,–"ब्राह्मणेन रूपसम्पन्ना विधीयन्त इति" । अत्र ब्रूमः–"उदितानुवादः स भवति" । न [ नाम ] समर्था आत्मानमेव [ एते ] स्वेन रूपेण विधातुमित्यतो ब्राह्मणेन विधीयंते, किन्तर्हि ? आत्मनियोगाश्रयमुक्तमेव सन्तं मन्त्रेणार्थं ब्राह्मणमनुवक्ति विस्तरेण प्रकृतार्थसन्तुष्टच्चया । न ह्यनुक्तं स्तोतुं शक्यते, सोऽयमेवमुदितानुवाद एव भवति, उक्तानुवाद इत्यर्थः । अपि चानेकेऽपि समानलिङ्गाः प्रकरणे[3] मन्त्रा भवन्ति । ते ह्यहम्पूर्विकया एकं प्रयोगं प्रति 'खले कपोत'–वत् सम्पतन्ति, तेषां समुच्चये विकल्पे च प्राप्ते सति अभिमत एको नियमार्थं ब्राह्मणेन विधीयते । एवमुभयोरर्थवत्त्वं मन्त्रब्राह्मणयोः ॥ तत्र यदुक्तम्–रूपसम्पन्नविधानान्मन्त्रानर्थक्यम्, मन्त्रार्थवत्त्वे वा ब्राह्मणानर्थक्यमिति, एतदयुक्तम् । तस्मादुभयमर्थवत्–मन्त्राश्च ब्राह्मणं चेति १ । १६ । ५ ॥

---

१ 'वियुज्येतम्' 'वियुज्यतम्' । परमस्य दैवादिकस्यानुदात्तेत्त्वादात्मनेपदप्रयोग एव साधुः । २ 'परपक्षहेतवो' ॥ ३ 'प्रकरणमन्त्रा' ॥

**यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत ॥ ६ ॥**

"यथो एतत्" यत् पुनरेतदुक्तम्,—'ओषधे त्रायस्वैनम्, स्वधिते मैनꣳ हिꣳसीः'-इत्यादयः "अनुपपन्नार्था भवन्ति।" अत्र ब्रूमः—ओषध्यधिदेवतोच्यते, हे ओषधे! त्रायस्वैनम्, त्वपूर्वको ह्येष वृक्षश्छिद्यमानः सम्यक् छिन्नो भविष्यति, ततश्च यज्ञे विनियुक्तः। अतिविशिष्टमुत्कर्षमेतस्मात्स्थावरत्वात् प्राप्स्यत इत्येतदत्र त्राणमभिप्रेत्योक्तम्-'ओषधे त्रायस्वैनम्' इति, 'न च्छेदनं प्रतिपत्स्यतेऽयम्' इत्यनेनाभिप्रायेण। तस्मादुपपन्नार्थ एवायम्। तत्र यदुक्तम्'अनुपपन्नार्था इत्येवमादयो मन्त्राः'इति, एतदयुक्तमिति॥

यदपि चोक्तम्—'स्वधिते मैनꣳ हिꣳसीरित्याह हिꣳसन्'इति। अत्र ब्रूमः—"आम्नायवचनादहिंसा" एषा "प्रतीयेत"। आह—कथमहिंसा? प्रत्यक्षतो हि छिद्यते वृक्षः। शृणु—इयमहिंसा इयं हिंसा—इत्यागमादेतत् प्रतीयते। प्रतिविशिष्टश्चायमेव वैदिक आम्नाय आगमः, एतत्पूर्वकत्वादन्येषामागमानाम्। स एष कृत्स्नस्य जगतः, प्रतिविशिष्टाय श्रेयसेऽभ्युद्यतः सन् हिंसायां कर्त्तारं विनियोक्ष्यत इति। कुत एतत् पुनरियमहिंसैव? यतोऽस्यां नियुनक्ति कर्त्तारम्। तदेतदागमप्रत्यक्षमेव यथेयमहिंसेति। अपि चैतदोषधिवनस्पतिपशुमृगपक्षिसरीसृपाः सम्यगुपयुक्ताः सन्तो यज्ञे परमुत्कर्षं प्राप्नुवंति। सोऽयमभ्युदय एव सम्पद्यते, न हिंसा॥ तत्र यदुक्तम्—'मैनं हिंसीरित्याह हिंसन्' इति, न ह्यसौ हिनस्ति। किन्तर्हि? अनुगृह्णाति यज्ञैविनियोगार्थं विधानतः छिन्दन्। तस्मादुपपन्नार्थमेवमपि। तत्र यदुक्तम्—'अनुपपन्नार्थत्वादनर्थका मन्त्राः' इति, एतदयुक्तमिति १। १६। ६॥

**यथो एतद्विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद्यथाऽसपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति ॥ ७ ॥**

"यथो एतत्" यत् पुनरेतदुक्तम्—"विप्रतिषिद्धार्था भवन्ति" इति। अत्र ब्रूमः—नैष विप्रतिषिद्धोऽर्थः—"एक एव रुद्रोऽवतस्थे" "असंख्याता सहस्राणि"—इति,—देवता हि माहाभाग्ययोगादेकापि सत्यनेकधा भवति, अनेकापि चैकधा, तदुपरिष्टाद् व्याख्यास्यामः "माहाभाग्याद्देवतायाः (दै० का० ७, १, ४)" इत्यत्र॥

यत् पुनरेतदुक्तम्—"अशत्रुरिन्द्र जज्ञिषे" "शतं सेना अजयत् साकमिन्द्रः"—इति

१ 'तत्र'॥ २ 'नूनमि'॥ ३ 'अस्मात्'॥ ४ 'यज्ञः विनि'॥ ५ क्वचित्पुस्तके-'अनुपपन्नार्थका मन्त्रा' इति॥ ६ 'अनेकधापि च'॥

अत्र ब्रूसः—"लौकिकेष्वपि" अर्थवत्सु शब्देषु "एतत्" एवमेवोच्यमानं दृष्टम्। तद् यथा-"असपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति"। न हि कश्चिदसपत्नोऽस्ति लोके। उक्तं हि[1]—

'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥' इति।

तथापि स्वल्पसपत्नं दृष्ट्वा केचिदेवं वक्तारो भवन्ति—'असपत्नोऽयं ब्राह्मणः' इति। एवमेव कस्मिंश्चिदतिप्रवृद्धे भृशं पीतिते[2] मेघेऽन्येषामसारतामभिप्रेत्येदं[3]मुक्तं स्यात्—"अशत्रुरिन्द्र जज्ञिषे यस्त्वामेतमेवमतिप्रवृद्धमहन्नहिम्"—इति॥ यत् पुनरेतदुक्तम्,—'शतं सेना अजयत्'—इति। अत्र ब्रूमः—कुतो हि सेनाः, या इन्द्रो जेष्यति? न हि देवानां शत्रवः सन्ति, ये जेतव्या इति। किं कारणम्? विभवो देवा वशिनः अधिकरणधर्माणश्च परेण महिम्ना युक्ताः॥ आह—कथं तर्हि 'शतं सेना अजयत्' इत्येतदुक्तम्? उच्यते—रूपकल्पनयैवैषा युद्धप्रवादा स्तुतिः। वक्ष्यति च—'अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थे न युद्धवर्णा भवन्ति (नैग० का० २, ५, २)"—इति। तदेतद् भवता न सम्यग् दृश्यते, सम्यगन्विष्यतां देवतासतत्त्वं नैरुक्तेभ्यः, ततो मन्त्रार्थान् विरोधेन सम्यगवभोत्स्यसे। नैवमवाक्यतत्त्वज्ञेन मन्त्रार्थो विगोहितुं शक्यः। गम्भीरपदार्थो हि वेदः कथमवलोक्यते कथमवभोत्स्यते? वेदार्थावबोधाविभ्रान्ता एव हि प्रवादिनः स्वबुद्धिलाघवमाविर्भावयन्तो ब्राह्मणाः सन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे॥ यदुक्तम्—'विप्रतिषिद्धार्थत्वादनर्थका मन्त्राः' इति। एतदयुक्तम्, न हीमे विप्रतिषिद्धार्थाः॥ भवत एवं[6] मतिविभ्रमो मन्दशिक्षितत्वात्। तस्मादर्थवन्त एव मन्त्रा इति॥ १।१६॥७॥

**यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राहेति ॥ ८ ॥**

"यथो एतत्" यत् पुनरुक्तम्,—"जानन्तं सम्प्रेष्यतीति"॥ अत्र ब्रूमः—लौकिकेष्वप्यर्थवत्सु शब्देषु एतदेव स्वाभाव्यं दृष्टम्। तद्यथा—"जानन्तम्" गुरुम् "अभिवादयते" स्वगोत्रमभिवदन्। तथा च "जानते मधुपर्कं प्राह" त्रिर्मधुपर्को मधुपर्को मधुपर्कः इति। तदेतदर्थवत्स्वपि शब्देषु विहितार्थख्यापनार्थशब्दसामान्यादर्थवन्तो मन्त्रा इति। १।१६।८॥

**यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति ॥ ९ ॥**

१ 'च'॥ २ 'शान्ति गते'॥ ३ 'त्येतदुक्तं'॥ ४ 'दान्'॥ ५ 'अगा'॥ ६ 'वं'॥ ७ 'दनर्थव॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—अथाप्याह—"आदितिः सर्वमिति"। अत्र ब्रूमः—द्विविधा हि शब्दप्रवृत्तिः, मुख्या[र्था] गौणी चेति। तत्रैवं सति यत्र मुख्याऽसम्भवस्तत्र गौण्याश्रयिते। स एष भक्तिवादः—अदितिः सर्वम्—इति, यथा कश्चिद् ब्रूयात् कञ्चिदनेकोपकारे प्रवृत्तम्—'त्वमेव मे माता, त्वं मे पिता'। एवमेतदपि द्रष्टव्यम्। "लौकिकेष्वपि" चार्थवत्सु शब्देषु "एतत्" उच्यमानं दृष्टम्, "यथा सर्वरसा अनुप्राप्ताः पानीयमिति"। ततो हि तेषां प्रभव इति, अनया गुणवृत्त्या एवमुच्यते. एवमिहापि गुणवृत्त्या कयाचिददितेः सर्वत्वमुच्यते॥ यदुक्तमितरेतरविरुद्धं किमपि बह्वत्रेति, एतदयुक्तम्। सर्वमेतदुपपद्यन्त एव गुणवृत्त्या। तस्मादर्थवन्त एव सर्वे मन्त्रा इति॥ १। १६। ९॥

**यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति। पारोवर्य्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति॥ १०॥ १६॥**

"यथो एतत्" यत् पुनरेतदुक्तम्,—अथापि—"अविस्पष्टार्था भवन्तीति"। अत्र ब्रूमः—"नैष स्थाणोरपराधः" इति। न ह्यत्र स्थाणुरपराध्यति "यदेनं" स्थाणुम् "अन्धो न पश्यति" यदत्रासावभिहन्यते। किन्तर्हि? "पुरुषापराधः स भवति" पुरुष एवापराधी तत्र, यदसावचक्षुष्मान्। एवमिहापि नैषे[2] मन्त्राणामपराधो यदशिक्षितेन भवता न विज्ञायन्ते, भवत एवापराधोऽस्ति, यो (भो) भवान् सर्वमात्मीयमपराधं मन्त्रेष्वस्मासु वा संयोजयितुमिच्छति, न तैव प्रज्ञास्ति किञ्चित्॥

"यथा जानपदीषु": कासुचित् प्रवृत्तिषु इतिकर्त्तव्यतासु कौशलशिक्षाकृतः "विद्यातः पुरुषविशेषो भवति"। पुरुषाणां विशेषः। एवमिहापि मन्त्रार्थशिक्षाकौशलकृतः पुरुषाणां विज्ञानविशेषो भवत्येव। तत्रैवं सति केचित् पुरुषाः [ये] सुविस्पष्टार्थानपि मन्त्रान् न शक्नुवन्ति निर्वक्तुम्, अपरे पुनरविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्त्तुम्। तदुक्तम्—"उत त्वः (ऋ० सं० ८, २, २३, ४। नैघण्टुककाण्ड० १, [६,] ३)"—इत्यत्र॥

तत्रैवं सति "पारोवर्य्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति"—इति। य एते पारोवर्य्यविदो ब्राह्मणाः, पारोवर्य्येण विजानन्ति आचार्य्यपरम्परया—ते. पारो...

१ 'सर्वमन्त्रा'॥ २ 'व'॥ ३ 'तेषु'॥

र्यविदः, न साक्षात्कृतधर्माण इत्यभिप्रायः । किं तेषाम् ? तेषां य एव भूयोविद्यो भवति बहुश्रुतः कश्चित् स एव प्रशस्यते । स एव मन्त्रार्थविज्ञातो प्रशस्यो भवति, नेतरो मन्दबुद्धिरशिक्षितः । स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न क्वचित् प्रतिबध्यते, न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति । तस्माद्धेतोः स त्वं बहु शृणु, ततः सम्यगवभोत्स्यसे मन्त्रार्थान् ॥ तत्र यदवोचः—'अविस्पष्टार्था मन्त्राः' इति । न हि ते अविस्पष्टार्थाः, तांश्चोपरिष्टात् स्पष्टीकृत्य व्याख्यास्यामहे । तवैष मतिं विभ्रमयति सम्मोहः । तस्मादर्थवन्त एव मन्त्रा इति सिद्धम् । तस्माच्चैतदपि शास्त्रं मन्त्रार्थप्रत्ययायारभ्यमाणमर्थवदेव भवतीति सिद्धः शास्त्रारम्भः ॥ तत्र यदुक्तं—'यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति' इति, एतदयुक्तम् । इति प्रभिन्नेषु परस्य हेतुषु स्वपक्षसिद्धावुत्थिते च कारणे अवस्थिता मन्त्रगणस्य सार्थता । तदर्थमेतत् खलु शास्त्रमर्थवदिति ॥ १ । १६ । १० ॥ *

## अथापीदमन्तरेण पदविभागो न विद्यते ॥ १ ॥

"अथापीदमन्तरेण पदविभागो न विद्यते" । शास्त्रारम्भप्रयोजनाधिकारे वर्त्तमाने अपीदमन्तरेण मन्त्रेष्वर्थावधारणं नास्तीत्युक्ते यदि मन्त्रेत्यादिनानर्थक्यहेतुभिर्बहुभिरानर्थक्य उपपादिते निरुक्तशास्त्रस्य कौत्सेन, मन्त्राणामर्थवत्तां स्थापयित्वा परपक्षहेतवः प्रत्युक्ताः । तेषु स्थितमर्थवत्त्वं मन्त्राणाम् । तेषामर्थनिर्वचनायेदमारभ्यमाणमर्थवदित्युपपन्नमर्थवत्त्वं निरुक्तशास्त्रस्य । तदेतत् सर्वमपि चोदकशास्त्रकारव्याजेन प्रसक्तानुप्रसक्तमुक्तं प्रज्ञाया विवृद्धये शिष्यस्य । कथं नामासावविवृद्धप्रज्ञः शब्दार्थन्यायसङ्करेषु हेतुसमयानभिज्ञः परैः प्रतिबध्यमानोऽपि पदार्थान् वाक्यार्थांश्चासम्मोहेन निर्ब्रूयादिति । एवं तावत्, एतदन्तरेण मन्त्रार्थप्रत्ययो नास्ति । अथेदमपरमारम्भप्रयोजनमित्येवं विशेषाधिकारार्थोऽयमथशब्दः । अपि मन्त्रार्थप्रत्यय इदमन्तरेण नास्ति, नाप्यस्ति यदिदं वक्ष्यमाणम्, इत्यपिशब्दः एवं सम्भावने ॥

आह—किं पुनस्तद् वक्ष्यमाणम् इति ? उच्यते—पदविभागः । 'एवं पदानि वक्तव्यानि'—इत्येतद् विभागपरिज्ञानं नास्तीत्यर्थः । किं कारणम् ? अर्थवशेन हि पदान्यवतिष्ठन्ते, न चेदमन्तरेणार्थपरिज्ञानमस्ति । तस्मादत एव पदविभागप्रसिद्धिरिति । इदमर्थवत्त्वं मन्त्राणामन्तरेण पदविभागोऽप्यकिञ्चित्करः । प्रसिद्धश्चैष सर्वशाखासु । तस्मात् पदविभागार्थवत्त्वाय चार्थवन्तो मन्त्रा इति केचिद् वर्णयन्ति ॥ १ । १७ । १ ॥

---

१ 'क्वचित्' ॥ २ 'ने' ॥ ३ 'तिषिध्य' ॥ ४ कौत्सेन—इत्यनुषञ्जनीयम्—प्रक्रान्तखण्डनविषयत्वात्तदुक्तेः ॥ ५ 'स्पष्टे' ॥ ६ 'वुदिते' ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां षोडशः खण्डः ॥ १६ ॥' इति द्रष्टव्यम् ॥ 'इति निरुक्तवृत्तौ प्रथमा (षष्ठा)ध्यायस्य पञ्चमः पादः ॥ ५ ॥' इति तूपलभ्यते ॥ ७ 'अथ—इत्यस्यायमर्थः ॥

"अवसायं पद्वते रुद्र मृळ" इति । "पद्वदवसं गावः पथ्यदनम्, अवतेर्गत्यर्थस्यासौ नामकरणः । तस्मान्नावगृह्णन्ति ॥ "अवसायाश्वान्" इति स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति ॥ २ ॥

एवं प्रतिज्ञाय समानसंहितेषु ग्रन्थेष्वर्थहेतुकं पदविभागविशेषं दर्शयति,—तद्यथा—"अवसायं पद्वते रुद्रमृळेति"। "पद्वत्" पादवत् पादसंयुक्तम् । "अवसं गावः पथ्यदनम्" इति निगमप्रसक्तस्य पर्य्यायवचनम् । "अवतेर्गत्यर्थस्यासौ नामकरणः" प्रत्ययः । "तस्मात्" असमासत्वादस्य "नावगृह्णन्ति" एतत्पदकारा इति शेषः ॥

"मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम् ।

पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ॥"(ऋ० सं० ८, ८, २७, १)॥

शबरो नाम काक्षीवतः, स मयोभूरित्यस्यास्त्रिष्टुभः पूर्वैस्त्रिभिः पादैः गवामाशिषमाशास्योत्तमेन तासामेव च रुद्रात् सुखमयाचत । गवामुपस्थाने विनियुक्ता । 'मयोभूः' मयोभावयिता पाश्चात्यः 'वातः', एताः 'उस्राः' 'अभिवातु' आभिमुख्येन वातु । किञ्च, तेन सुखभुवा वातेनानुद्वेजनीयेन स्पृश्यमानाः 'ऊर्जस्वतीः' प्रभूतरसाः 'ओषधीः' 'आरिशन्ताम्' आस्वादयन्तु । आस्वाद्यास्वाद्य च सलवणस्वादमात्माभिप्रेते काले उदकं 'पिबन्तु' । तच्च पीतमोषधिसहितमासां तथा कोष्ठे विपच्यतां रसशोणितमांसमेदोमज्जाऽस्थिक्रमेण यथैताः 'पीवस्वतीः' पीवस्वत्यः पीवगुणयुक्ताः स्थूला बलवत्यो; बहुपयस्का भवेयुः । सति च बहुपयस्त्वे 'जीवधन्याः' जीवधनिन्यो रोगदुष्टपातृकाः । हे 'रुद्र!' वयम् एतासां गवाम् एताम् आशिषम् आशास्महे । त्वमप्यस्मै गोलक्षणाय 'अवसाय' पथ्यदनाय 'पद्वते' पादयुक्ताय 'मृळ' सुखी भव । मैना हिंसीस्त्वमासामीश्वर इत्यभिप्रायः ॥

"अवसायाश्वानिति" । इदमपरमुदाहरणम् । अस्मिन् पूर्वेण रूपेण सरूपमेव पदमर्थकृतादविशेषादवगृह्णन्ति ॥ द्वयोः पदयोः बहूनां वा यदविच्छेदेनोच्चारणं स समासः । तयोरेवार्थप्रविभागोपदर्शनार्थमवच्छेदेन ग्रहणमवग्रहः । तदेतदवगृह्यते पदम्—"स्यतिः" धातुः "विमोचने" अर्थे वर्त्तते, स पुनः "उपसृष्टः" उपसर्गेणावेत्यनेनोपसृष्टः संयुक्त इत्यर्थः । यतो धातूपसर्गविभागोपप्रदर्शनार्थमेव तत् पदमवगृह्यते अवसायेत्येतत् ॥

---

१ 'सुचरो नाम गौतमः' ॥ २ 'विनियोगः' ॥ ३ 'रोगदष्टपातृकाः' 'रोगदुष्टमातृकाः' ॥ ४ 'थंप्रतिमागोप' ॥ ५ 'वगृह्यते' ॥

"योनिष्ट इन्द्र निषदे अकारि तमा निषीद स्वानो नार्वा ।
विमुच्या वयोऽवसायाश्वान्दोषावस्तोर्वहीयसः प्रपित्वे ॥ ( ऋ० सं० १, ७, १८, १ )"।

एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव । "योनिष्टे" हे 'इन्द्र!' योनिः स्थानं 'ते' तव यदिदं 'निषदे' निषदनाय, मया 'अकारि' कृतम्, 'तं' योनिं तत् स्थानम् 'आ निषीद' एत्य निश्चयेन सीद। कथं पुनर्निषीद ? 'स्वानो न' स्वन्यमान इव 'अर्वा' अश्वः। संशब्द्यमान इवाश्वबन्धने स यथा स्वे स्थाने निषीदेदेवं मया त्वमपि शब्द्यमानः स्तुतिभिरेतास्मिन् मया संस्कृते स्वास्तीर्णे बर्हिषि स्थाने निषीद। कथंपुनर्निषीद? 'विमुच्य' एतान् 'वयः अश्वान्' । कुतः ? रथात् । पुनरपि च एतान् 'अवसाय' वियोज्य रश्मिभ्योऽश्वान् लब्धोदकयवसान् कृत्वा 'दोषावस्तोर्वहीयसः' अहनि च रात्रौ च ये केचिद् वहन्ति, तेभ्योऽपि वहीयसः शीघ्रतरेण जवेन वोढृतमान् ततस्त्वं स्वस्थो भूत्वा निषीद । एतस्मिन् योनौ एतस्मिन् संस्कृते बर्हिषि 'प्रपित्वे' प्राप्ते अस्माकं त्वद्यजनकाले मा नो विघ्नं कार्षीरित्यभिप्रायः ॥ एवं तावदिदमवग्राह्यमिदमनवग्राह्यमित्यर्थपरिज्ञानद्वारेण । "तस्मात्" एतन्निरुक्तशास्त्राद् विज्ञायते ॥ १ । १७ । २ ॥

## "दूतो निर्ऋत्या इदमाजगाम"इति—पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाःकारान्तम् ॥

## "पुरो निर्ऋत्या आचक्ष्व"इति। चतुर्थ्यर्थप्रेक्षैकारान्तम् ॥ ३ ॥

यान्यपि च खल्वनवग्राह्याणि पदानि समानसंहितानि, तेषामप्यर्थकृतमेव विभागवैशेष्यं भवति।तद्यथा—"दूतो निर्ऋत्या इदमाजगाम—इति—पञ्चम्यर्थप्रेक्षा वा" अस्मिन् पदे निरुच्यमाने पञ्चम्यर्थदर्शनं वेत्यर्थः, पञ्चम्यर्थोऽत्र दृश्यते? "षष्ठ्यर्थप्रेक्षा वा"षष्ठ्यर्थदर्शनं वेत्यर्थः, षष्ठ्यर्थोऽत्र दृश्यते ? अत एतत् "आःकारान्तम्" पदं निर्ऋत्या इति ।

"देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे॥ ( ऋ० सं० ८, ८, २३, १ )" ।

प्रचेता नामाङ्गिरसः, तेनेयं कपोतसूक्ते दृष्टा । कपोतनिलयनशान्त्यै कपोतपदनिर्हरण एतत् सूक्तम् । त्रिष्टुबेषा ॥ हे 'देवाः!' 'कपोतः' 'इषितः' प्रेषितः 'निर्ऋत्याः' स्वभूतः, तयैवानुप्रेषितः इत्येवं षष्ठ्यर्थः । अथवा निर्ऋत्याः सकाशादित्येवं पञ्चम्यर्थः।'दूतः' 'यत्' कर्तुम् 'इच्छन्' 'इदम्' अस्मद्गृहम् 'आजगाम' । यस्य नः पापस्य च पापकर्मणो जन्मान्तरकृतस्य एतत् कपोतगृहनिलयनं तत्पददर्शनं च कुड्यादिषु विपाकलिङ्गम् ।

'तस्मै' कर्मणे तदर्थं युष्मानेव 'अर्चाम' । समर्था यूयमेतत् पापकर्म विपच्यमानमस्माकमपहर्तुमृजु विपाकं वा कर्त्तुम् वयमपि च तस्मै पापाय कर्मणे 'कृणवाम' 'निष्कृतिम्' निष्क्रमणं निर्णेजनम्, तपसा एतद्भूतानुरूपेण । यतो ब्रूमः—'शं नः' सुखं नः 'अस्तु' 'द्विपदे शं चतुष्पदे' युष्मत्प्रसादेन च स्वेन च तपसेत्यभिप्रायः ॥

"परो निर्ऋत्या आचक्ष्वेति" । एतस्मिन् पदे "चतुर्थ्यर्थप्रेक्षा" चतुर्थ्यर्थदर्शनम् अत एतत् पदम् "ऐकारान्तम्" ॥

"अपेहि मनसस्पतेऽपक्राम परश्चर ।
परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः ॥ ( ऋ० सं० ८, ८, २२, १)" ।

प्रचेता नाम आङ्गिरस एतामनुष्टुभमपश्यत् । दुःस्वप्नदर्शने विनियुक्ता । मन इति हि विज्ञानमुच्यते, बुद्ध्यादिः, तस्य पतिः मनसस्पतिरात्मा, इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः। उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते । तयोरन्यतरः सम्बोध्यते,—हे 'मनसस्पते !' 'अपेहि' अपगच्छ । अस्मत्तो गत्वा च त्वमीषदपगम्य अस्मत्तः, समीप एव मा स्था अस्माकम् । किन्तर्हि ? 'अपक्राम' दूरमपेत्य क्राम । अपक्रम्य च 'परः'परतः, अन्यत्रास्मत्तः 'चर' अपुनरावर्त्तमानोऽस्मान् प्रति । किञ्च 'परः' परागत्य, यस्याः त्वं दूतः निर्ऋत्याः, तस्यै 'निर्ऋत्यै' 'आचक्ष्व' । किमिति ? 'बहुधा जीवतः' मम 'मनः' । अथवा परः प्रकृष्ट आप्तस्त्वं तस्याः निऋत्या दूतो मां प्राप्तः । अविज्ञातमरणकाल एवातिसम्मोहात् । अतो ब्रवीमि । तस्यै 'निर्ऋत्यै' गत्वा 'बहुधा' अनेकप्रकारम् 'आचक्ष्व' कथय । 'जीवितः' यादृशं मनः भवति, तादृशं मम 'मनः' बुद्ध्याधिकरणं[2] ज्ञानं हि न करणस्पष्टवृत्ति न तावत् स मुमूर्षुरित्येतदाचक्ष्व । मुमूर्षोर्हि[3] उपक्षणिकर्मणो नातिस्पष्टा इन्द्रियवृत्तयो भवन्ति, न च मम तथेत्यभिप्रायः ॥ एवं समानसंहितानामपि पदानामर्थभेदकृतं विभागवैलक्षण्यम् । स चार्थ इदमन्तरेण न विज्ञायते । अत इदमुक्तम्,—'अथापीदमन्तरेण पदविभागो न विद्यते' इति ॥ १ । १७ ।३॥

"परः सन्निकर्षः संहिता" "पदप्रकृतिः संहिता" RV. Pr.
"पदप्रकृतीनि सर्वचरणानां पार्षदानि" ॥ ४ ॥

पदविभागप्रसक्तमधुना संहितालक्षणमाह—"परः सन्निकर्षः संहिता ( पा० १, ४, १०९)"—इति । परः प्रकृष्टो यः सन्निकर्षः संश्लेषः, परस्परेण स्वराणां स्वराधिरूढानां च व्यञ्जनानां सा संहितेत्युच्यते । सा च पुनरियं "पदप्रकृतिः संहिता ( ऋ० प्रातिशा० २, १ )" ॥ अत्र द्विधा वर्णयन्ति—पदानां या प्रकृतिः, सेयं पदप्रकृतिः संहिता । किं का-

१ 'अन्यतोऽस्मत्तः' ॥ २ 'बुद्ध्या दिकरणज्ञानदिनकरकिरणस्पष्टवृत्तित्वेन तावत्' इति मुद्रितमासीत् । तदविचारितरमणीयम् ॥ ३ 'मुमुक्षो' ॥

रणम् ? संहितातो हि पदानि प्रोच्यन्ते, तस्मात् संहितैव प्रकृतिः, विकारः पदानीत्येवमेके मन्यन्ते । अपरे पुनः पदप्रकृतिः संहितेति पदानि प्रकृतिर्यस्याः सेयं पदप्रकृतिरिति । किं कारणम् ? पदान्येव हि संधीयमानानि संहिता भवति, तस्मात् पदान्येव प्रकृतिः, विकारः संहितेति ॥

एवं च कृत्वा "पदप्रकृतीनि सर्वचरणानां पार्षदानि" । सर्वेषां चरणानां शाखान्तराणामित्यर्थः । किम् ? पार्षदानि, स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहप्रगृह्याप्रगृह्यक्रमसंहितास्वरलक्षणमुच्यते तानीमानि पार्षदानि प्रातिशाख्यानीत्यर्थः । आह—किं तेषाम् इति? उच्यते—तानि पदप्रकृतीनि । पदं येषु संहितायाः प्रकृतित्वेन चिन्त्यते, तानीमानि पदप्रकृतीनि । तेषामपि स एव समय इत्यभिप्रायः ॥

आह—किं पुनरत्र साधीयः—पदानां प्रकृतित्वम्, संहिताया विकारत्वम् ? उत वा विकारत्वं पदानाम्, प्रकृतित्वं संहिताया इति ? उच्यते—संहितायाः प्रकृतित्वं ज्यायः ।

आह—किं कारणम् ? उच्यते—मन्त्रो ह्यभिव्यज्यमानः पूर्वमृषेर्मन्त्रद्रष्टुः संहितयैवाभिव्यज्यते, न पदैः, अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणाः, अधीयते चाध्येतारः ॥ अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मन्त्रा न पदैः । यदि हि पदानि प्रकृतिरभविष्यत्, न संहिता, पदैरेव मन्त्रोऽभिव्यज्येत पदान्येव च पूर्वमध्यापयिष्यन् ब्राह्मणा अध्यैष्यन्त चाध्येतारः । पदैरेव विनियोक्ष्यन्त मन्त्राः कर्मसु । न त्वेतत् सर्वमस्ति । तस्मादेतैर्विशेषहेतुभिः संहितैव प्रकृतिर्न पदानीति पश्यामः ॥ समयमात्रमितरत् स्वशास्त्रनियतमेव ॥ यदुक्तं 'पदप्रकृतीनि सर्वचरणानां पार्षदानि' ॥ तेष्वेव हि व्याख्यायमानेषु पदानां प्रकृतित्वं भवति, न सर्वत्रैव । तस्मात् संहितैव प्रकृतिरित्येतदेव साधीय इति ॥ १ । १७ । ४ ॥

अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यम् ॥ ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति, "इन्द्रं न त्वा शवसा देवता वायुम्पृणन्ति" इति वायुलिङ्गं चेन्द्रलिङ्गञ्चाग्नेये मन्त्रे "अग्निरिव मन्यो त्विषितः सहस्व" इति तथाऽग्निर्मान्यवे मंत्रे । त्विषितो ज्वलितः । त्विषिरित्यप्यस्य दीप्तिनाम भवति ॥ ५ ॥ १७ ॥

"अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति" । अथेदमपरमारम्भप्रयोजनमस्य शास्त्रस्येत्येवं विशेषाधिकारार्थोऽयमथशब्दः । अपीदं वक्ष्यमाणमपि यान्युक्तानीत्येवमपिशब्दः



१ 'अथवा' ॥ २ 'त्येतदसाधीय इ' ॥

सम्भावने। आह—किं पुनस्तत् इति? उच्यते—याज्ञे कर्मणि प्रवर्त्तमाने दैवतेन बहवः प्रदेशा भवन्ति, दैवतेन लिङ्गेन बहवो विधिप्रदेशा भवन्ति। तद्यथा—"उपतिष्ठते व्युच्छन्त्यामैन्द्रया सदः, आग्नेय्याग्नीध्रं वैष्णव्या हविर्धानम्" इत्येवमादि। न्यायविदः खल्वपि याज्ञिकाः पठन्ति,—लिङ्गतो मन्त्राणां शेषभावमधिकृत्य, "लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्" इत्यधिकारे, "मन्त्रविधिस्तदाख्येयेषु[2] विशिष्टत्वात्" इति चैवमादि।

तत्रैवं सति "ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति"। ते यद्यत्र ब्रुयुः। किमिति? लिङ्गज्ञाः लिङ्गज्ञातारो वयमत्र एतस्मिन्नाम्नाये। लिङ्गतो वयमत्र या यस्मिन् देवता तां तत्र विजानीमः। विज्ञाय च तद्दैवत एव कर्मणि विनियुञ्ज्महे तं मन्त्रम्। एवं च सति न नो निरुक्तशास्त्रेण प्रयोजनमस्तीति लिङ्गमस्माकं ज्ञापकमिति केचिद् वर्णयन्ति॥

त एवं ब्रुवन्तो वक्तव्याः,—यदि यूयं लिङ्गतो मन्त्रदेवतां विजानीध्वे, तर्हि "इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति (ऋ० सं० ४, ५, ६, २)"—इत्येतस्मिन् मन्त्रे का देवता? इति॥

आह—केन पुनरभिप्रायेणास्मिन् मन्त्रे देवता पृच्छ्यते? इति। उच्यते—"वायुलिङ्गं चेंद्रलिङ्गं चाग्नेये मन्त्रे"। अथ तावदयमाग्नेयो मन्त्रः, अथ च तावदेतस्मिन् मन्त्रे इन्द्रवायू अपि श्रूयेते, तदेतद् दुष्परिज्ञानं लिङ्गमात्रेण कतमदत्र प्रधानं देवताभिधानम्? कतमदत्र नैघण्टुकम्? इति। ते चेद् याज्ञिका लिङ्गमात्रान्निरुक्तमुपेक्ष्य मन्त्रान् कर्मसु विनियुञ्जाना गुणप्रधानभावमजानन्तो देवताभिधानानामेकमन्त्रगतानामन्यदेवतमन्त्रमन्यदेवते कर्मणि विनियुञ्जीरन्, ततश्चायथाकरणात् कर्मासमृद्धिः स्यात्। न च केवलं कर्मासमृद्धिरेव, किं तर्हि? अपध्वंसोऽपि स्यादेव दुरिष्टहेतुकः। तस्मात् परिज्ञेयं निरुक्तम्। तेन हि गुणप्रधानभावः शक्यते विज्ञातुमेकमन्त्रगतानां देवताभिधानानामिति तदेतदेवं देवतापरिज्ञानद्वारेण पुरुषस्य प्रति विशिष्टोपकारकारि। तस्माद् युज्यते प्रारब्धुमिति॥

"त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः॥(ऋ०सं० ४,५,६, २)"।

बार्हस्पत्यस्य भरद्वाजस्यार्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोर्विनियोगः। हे 'अग्ने!' 'त्वां हि' त्वामेव 'मन्द्रतमं' मृदुतमं सुखाराध्यतमम्, त्वं हि देवेषु सर्वेषु मृदुहृदयतमो यतः, अतस्त्वामेव 'ववृमहे' सम्भजामहे। केन? 'अर्कशोकैः'। एकपदमेतत्। अर्चनैर्मन्त्रैः शोकैर्दीप्तैः यथोक्तब्रह्मचर्यजनितवीर्यैः। अतस्त्वं भज्यमानः तैः मन्त्रैः संसेव्यमानः 'नः'

१ 'धिषुं दे'॥ २ 'दाख्येषु विधि'॥

[illegible] स्मृतिसन्तानगर्भैरुपग्रथितं 'श्रोधि' शृणु । अस्माकं 'महि' [illegible] किंच [illegible] क 'देवताः' अपि सर्वाः 'इन्द्रं न' इन्द्रमिव [illegible] न बलवतीभिः स्तुतिभिः अभ्यर्चन्ति । किं पुनः स्वैः [illegible] न्यं त्रिलोके नृणां मध्ये बलधनश्रुतैः 'नृतमाः' तेऽपि च त्वामेव [illegible] त पूरयन्ति वा । 'राधसा' हविर्लक्षणेन धनेन । एवं सदेवमनुष्यस्य [illegible] पूज्यस्त्वं न केवलमस्माकमिति ॥

एवमयमाग्नेयो मन्त्रः, स एष लिङ्गमात्रदर्शनेनाविज्ञातप्रधानदेवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्माणि कर्त्तुरभिप्रेतफलसिद्धये नालं स्यात्, कर्मवैगुण्याच्च कर्त्तुरपध्वंसाय स्यात् । तस्माद् विज्ञेयं मन्त्रदेवतानिश्चयज्ञानाय निरुक्तमिति ॥

"अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून्विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥ (ऋ० सं० ८. ३, १९, २)" इति ॥

यथा पूर्वस्मिन्नाग्नेये वायुलिङ्गमिन्द्रलिङ्गं च, "तथा" एतस्मिन्नपि "मान्यवे मन्त्रे" "अग्निः" अग्निलिङ्गं नैघण्टुकम् । एवमनेकदेवतालिङ्गसङ्कटेषु दुरवधारं देवतातत्त्वम् नैरुक्तेनाप्रसिद्धमन्त्रव्याख्यानसमयेन ॥

यदुक्तम्—लिङ्गज्ञातारो वयमत्र लिङ्गत एव मन्त्रान् कर्मसु विनियोक्ष्यामहे, न नो निरुक्तेन प्रयोजनमस्ति—इति एतदयुक्तमिति । "त्विषिरित्यप्यस्य दीप्तिनाम भवति" । १ । १७ । ५ । अपठितमपि दीप्तिनामसु न केवलं यान्येव पठितानि, अन्यान्यपीति ॥

अथापि ज्ञानप्रशंसा भवति, अज्ञाननिन्दा च—
"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥"
"यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ।"
स्थाणुस्तिष्ठतेः ॥ अर्थोऽर्त्तेरणस्थो वा ॥ १ ॥ १८ ॥

१ 'नूलं'.

"अथापि" इदमपरमारम्भप्रयोजनमस्य। आह—किम् इति? उच्यते—"ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च" ज्ञानं च प्रशस्यते, अज्ञानं च निन्द्यते। तत्रैवं सति वयमनिन्द्याः स्याम प्रशस्याश्चेति परिज्ञेयं निरुक्तम्[1]। अतो हि आध्यात्माधिदैवताधियज्ञाभिधायिनां मन्त्राणामर्थाः परिज्ञायन्ते, ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति। तदेवमखिलपुरुषार्थोपकारसमर्थशास्त्रमिति न्याय्यमारब्धुम्॥ क्व पुनर्ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यते? इति। उच्यते—लोके, शास्त्रे च। लोके तावद् यः कश्चिद् विद्वान् भवति, स पूज्यते पुण्यफलैर्विभिर्जनैः, तदेतत् प्रत्यक्षत एव दृष्टम्। शास्त्रेऽपि* "स्थाणुरयं भारहारः"—इत्यादि। स्थाणुर्वृक्षः, स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव सम्बध्यते,—न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः। एवञ्च "किल" असौ "अधीत्य वेदं न विजानाति योऽर्थम्" तस्य वेदस्याध्ययनभारमात्रमेव ह्यसौ बिभर्ति। "योऽर्थज्ञ इत् सकलं भद्रमश्नुते" य एवार्थज्ञो भवति न ग्रन्थमात्राध्येता, स एव सकलमनवखण्डितं भद्रम् अश्नुते, अर्थपरिज्ञानफलमश्नुते प्राप्नोति। किं पुनस्तत्? इह लोके पूज्यतामुपेत्य शिष्टानाम्, इतो लोकादन्तकाले "नाकमेति" यत्रासुखं किञ्चिदपि नास्ति, आध्यात्मिकमाधिदैविकमाधिभौतिकं वा, [ "कमिति सुखनाम, तत् प्रतिषिद्धं प्रतिषिध्येत 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्।' न वा अमुं लोकं गतवते किञ्च नासुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति"—इति नैघ० का० अ०२,ख० १४,][2] तत् स्थानमेति निरतिशयम्। कस्मात् पुनरसावीदृशं स्थानमेति इति? उच्यते—इतः—यस्मादसौ "ज्ञानविधूतपाप्मा" ये हि नाकगमनप्रतिबन्धिनः पाप्मानः, ते तस्य ज्ञानेन विधूताः, अतोऽसावेति नाकम्। उक्तं चान्यत्रापि—'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति।

अथवा स्थाणुर्गर्दभः[3]। स यथा चन्दनभारं वहत्येवं न तदुपभोगेनाभिसम्बध्यते, एवं किलासौ यो ग्रन्थमात्राध्येता, नार्थज्ञः। एवं तावदस्मिञ्ज्ञानं प्रशस्तम्॥

अथैतस्मिन् अज्ञानं निन्द्यते,—"यद् गृहीतमविज्ञातम्"—इति। यद् गृहीतं गुरुमुखात्, अविज्ञातं चार्थतः। किञ्च, "निगदेनैव शब्दयते" निगदमात्रेणैव नित्यकालं शब्दयते उच्चार्य्यते, न पुनरर्थतो विचार्य्यते। आह—किं तस्य? उच्यते—"अनग्ना-

---

१ 'वयं कथं नामानिन्द्याः' ॥ * इतोग्रे—'इति निरुक्तव्याख्यायां सप्तदशः खण्डः १७॥' इत्युपलभ्यते तद् 'अथापि' इत्यतः प्रागेव समुचितम्। २ अयं कोष्ठकान्तर्गतः पाठो लिखितपुस्तके नोपलभ्यते॥ ३ एतमेवार्थं गृहीत्वोक्तं सुश्रुते सूत्रस्थाने चतुर्थे प्रभाषणीयाध्याये—
"यथा खरश्चंदनभारवाही भारस्य वेत्ता न तु चन्दनस्य।
एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति॥ २॥" इति।

विव शुष्कैधो न तज्ज्वलति कर्हिचित्' । शुष्कं काष्ठमनग्नौ प्रदेशे नालं ज्वलनाय प्रकाशाय । एवं यो वेदार्थस्यानभिज्ञोऽध्येता स वेदाध्ययनभारमात्रेणैव सम्बध्यते, न तु [illegible]येन फलेन. परिज्ञाता तु श्रेयसा चाभ्युदयेन च युनक्तीति । तस्मादेतत्परिज्ञानाय अवश्यं निरुक्तशास्त्रमध्येतव्यमिति ॥

स्थाणुशब्दमर्थशब्दं च उदाहरणप्रसक्तौ निर्वक्ति,--"स्थाणुस्तिष्ठतेः" स्थितो ह्यसौ नित्यकालमेव भवति, न कदाचिदप्यासीतेति ॥ "अर्थोऽर्त्तेः" गतिकर्मणः, अर्य्यते ह्यसावर्थिभिः । "अरणस्थो वा" यदास्य स्वामी अरति गच्छति इतो लोकादमुं लोकं तदायमिहैव तिष्ठति, नानेनैव सहामुं लोकं गच्छति दीनारादिरर्थः, तत्सामान्यादितरोऽपि शब्दार्थोऽर्थ उच्यते ॥

एवं तावत् शिष्टानुगमस्मृतौ ज्ञानं प्रशस्यते, अज्ञानं च निन्द्यते ॥ १ । १८ । १ ॥

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं १ विसस्रे जायेव पत्य उशती सुवासाः ॥"

अप्येकः पश्यन्न पश्यति वाचम् । अपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धम् ॥ अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु ॥ सुवासाः कल्याणवासाः ॥ कामयाना ऋतुकालेषु । यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा ॥ १ ॥ १९ ॥

न केवलं स्मृतावेव ज्ञानप्रशंसा अज्ञाननिन्दा च । किं तर्हि ? (क) वेदेऽपि * "उत त्वः पश्यन् ( ऋ० सं० ८, २, २३, ४ )"—इति । विद्यासूक्ते द्वे अध्येते ऋचौ बृहस्पतेरार्षम् । "उत" शब्दोऽपिशब्देन समानार्थः । "त्वः" एक इत्यर्थः । बहूनामपि समानपृष्ठोदरपाणिपादानां समानमेवाध्ययनमधियानानाम् एकः कश्चित् "पश्यन्"

१ 'ऋच्छति' इति तूचितम् ॥ ( क ) 'वेदेपि प्रदर्शयति'॥ * इतोग्रे—'इति निरुक्तव्याख्यायां प्रथमा(षष्ठा)ध्यायेऽष्टादशः खण्डः ॥१८॥ ' इत्युपलभ्यते परंतु 'न केवलम्' इत्यतः प्रागुचितम् ॥

अपि "वाचं" मनसा स्वभ्यस्ताध्ययनोऽपि तीक्ष्णन्द्रियः सन् "न ददर्श" न पश्यत्येव, अर्थानभिज्ञत्वात्। स हि तां सम्यक् पश्यति, यस्तस्या अर्थं विजानाति। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। एवमेकः "शृण्वन्" अपि "न शृणोति" "एनां" वाचम्। य एव हि अर्थमवबुध्यते वाचः, तेनैव हि सा सम्यक् श्रुता भवति, नेतरेण, इतरो ह्यविद्वान् ध्वनिमात्रमेवोच्चारयति यन्न शृणोति वाचम्। एवम् "अर्धम्" अनेनार्द्धर्चेन "अविद्वांसमाह" निन्दन् मन्त्रदृक्। साम्प्रतमुत्तरेणार्द्धर्चेनार्थज्ञं प्रशंसन्नाह—"उतो त्वस्मै" "अप्येकस्मै" कस्मैचिदर्थज्ञाय "तन्वं" शरीरं "विसस्रे" विस्रंसयति विवृणोतीत्यर्थः। अर्थो वाचः शरीरं तं विवृणोति॥ आत्मानं दर्शयत्येकस्मै कस्मैचिदर्थज्ञाय "प्रकाशनमर्थस्याहानया वाचा" अनेन तृतीयेन पादेनेत्यर्थः॥ कथं[3] तर्हि विवृणुते तन्वम्? इति अतः—"उपमोत्तमया वाचा" उत्तमेन पादेनोच्यते,—"जायेव पत्य उशती सुवासाः"—इत्यनेन। यथा हि जाया विवृतसर्वाङ्गावयवा भूत्वा उशती "कामयमाना" पत्ये इष्टाय भर्त्रे प्रेम्णा दर्शयेदात्मानम्। कस्मिन् काले? यदा सुवासाः भवति, निर्णिक्तवासा भवति। निर्णिक्तवासा नीरजस्का "ऋतुकालेषु" तदा ह्यतितरां स्त्री पुरुषं प्रार्थयते। अत एतयावस्थयोपमीयते। "यथा सः" पुरुषस्ताम् "एनां" यथावत् "पश्यति" स्त्रियम्, नेतरां या घनपटप्रावृतसर्वगात्रा। एवं "सः" एव एनां वाचं यथावत् "शृणोतीति"। यः पदशोऽवच्छिद्यैतां विगृह्य वार्थमस्याः पश्यति समस्तव्यस्तम्। एवमस्यामृचीयम्। "अर्थज्ञप्रशंसा"॥ १। १९। १॥

तस्योत्तरा भूयसे निर्वचनाय—

"उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥"

अप्येकं वाक्-सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा, विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि। अधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान् भवत्यफलामपुष्पामित्यफला-

१ 'विवृत्य आ'॥ २ 'यति—कस्मै'॥ ३ 'कथं पुनर्वि'॥ ४ 'यतः'॥ ५ 'पश्यति'॥

ऽस्मा अपुष्पा वाग् भवतीति वा किञ्चित्पुष्पफलेति वा अर्थं वाचः पुष्पफलमाह । याज्ञदैवते पुष्पफले, देवताध्यात्मे वा ॥ १ ॥

[illegible] ऋक् अस्या एव "उत्तरा" "तस्य" अस्यैवार्थस्य प्रकृतस्य ज्ञानप्रशंसा[illegible] फलाभिधानद्वारेण "भूयसे" बहुतराय अमुना फलेनाभिसम्बन्धात् प्रतिविशिष्टज्ञानमित्येवं "निर्वचनाय" निर्विविच्य निर्द्धार्य्य वचनं कथनं निर्वचनम्, तस्मै निर्वचनाय।
तद्यथा–*"उत त्वं सख्ये स्थिरपीतमाहुः ( ऋ० सं० ८,२, २४, ४ )"–इति। "अप्येकम्" अपि बहून् विदुषः 'सख्ये' सखिभावे, कतरस्मिन् "देवसख्ये" देवानां समानख्यानतायां देवसायुज्ये इत्यर्थः । वक्ष्यति हि,–"यां यां देवतां निराह, तस्यास्तस्यास्ताद्भाव्यमनुभवति ( अ० १३, खं १३ )"–इति । अथवा, देवसख्ये रमणीये स्थाने । यस्मिन् देवानां सखिभावः, तद्देवसख्यं स्थानम्, तस्मिन् देवसख्ये रमणीये स्थाने, देवलोक इत्यर्थः । किम् ? इति, "स्थिरम्" अविचालिनम्[1] अप्रच्यवनधर्माणम् । कमेवमाहुः ? "विपीतार्थम्" आपीतार्थं गृहीतार्थमित्यर्थः । क एवमाह ? इयमेव "वाक्" ऋक्संज्ञिका[2] । किंच, "नैनं हिन्वन्त्यपि वाजिनेषु" । एनं वागर्थज्ञं न हिन्वन्ति नानुगन्तुं शक्नुवन्ति । केषु ? वाजिनेषु "वाग्ज्ञेयेषु" अर्थेषु "बलवत्सु" "अपि" दुर्ज्ञेयेषु दुरवघटनीयेषु, समुद्रपिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्त्तव्येषु । स हि तान् व्याकर्त्तुं शक्नोति, नेतरे मन्दबुद्धयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान् व्याकर्त्तुम्, यानसौ व्याकरोति । अत एतदुक्तम्–नैनं हिन्वन्त्यपि वाजिनेषु–इति । अपि एवं तावदर्थज्ञः प्रशस्तः ॥

अथेदानीमविद्वानुत्तरेणार्द्धर्चेन निन्द्यन्ते—"अधेन्वा चरति" "अधेन्वा हि एष चरति" न हि सा वाक् धिनोतीह न परत्र च, यस्या अर्थो न परिज्ञायते । तया गृहीतयैव तामधीयान इतश्चेतश्चरति, तत्प्रधान एव सर्वतः पर्य्यटतीत्यभिप्रायः । किञ्च, "माययैष" चरति गृहीतया । यथा हि कश्चिन्मायया सुवर्णं बिभृयात्, एवमयं "वाचम्"[3] एव एतां बिभर्त्ति । सा तादृशी भ्रियमाणा "वाक्" किं करोति ? "नास्मै कामान् दुग्धे" ॥ कतमान् ? "दोह्यान्" ये तस्या वाचो दोग्धव्याः। क्व ? "देवमनुष्यस्थानेषु" देवतास्थानेषु मनुष्यस्थानेषु च। "यः" किं करोति ? य एवं "शुश्रुवान्" "श्रुतवान् भवति"।

* इतोग्रे–'इति निरुक्तव्याख्यायां प्रथमा(षष्ठा) ध्याय एकान्नविंशः खण्डः॥ ॥ १९ ॥' इत्येवमुपलभ्यते तत् "अपीयमपरा" इत्यतः प्रागुचितम् ॥ १ 'अविचालितम्' ॥ २ 'ऋक्संहिता' ॥ ३ 'अवाचमेतां' ॥

कथम् ? "अफलामपुष्पामिति" एवं यः श्रुतवान् भवति अन्येभ्यः सकाशात्, श्रुत्वा च दृढग्राहेण गृहीत्वावस्थितो भवति, अध्ययनादृते नान्यदस्ति वाचि किञ्चित् मृग्यमिति ॥ तस्मै किम् ? इति "अफलैवास्मा अपुष्पा" च "वाग् भवतीति" । यथैव ह्यसौ पश्यति अफलेयमपुष्पा चेति तथैव भवतीत्यभिप्रायः । अथ "वा" "किञ्चित्पुष्पफलेति वा" । एतदुक्तं भवति—अल्पफलामल्पपुष्पामिति । किं कारणम् ? अस्ति ह्यध्ययनमात्रेऽपि किञ्चिदल्पं फलम्, नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः ॥ आह—किं पुनर्वाचः पुष्पफलम् ? इति । उच्यते—"अर्थं वाचः पुष्पफलमाह" एतस्मिन् मन्त्रे मन्त्रदृगाह—कः पुनरसावर्थः ? इति । याज्ञं दैवतमध्यात्ममित्येष वाचः समासतोऽर्थः । स पुनरेष रूपककल्पनया पुष्पफलविभागेन द्विधा प्रविभज्यते,—"याज्ञदैवते" "पुष्पफले" "देवताध्यात्मे वा" इति। यज्ञपरिज्ञानं याज्ञम्, देवतापरिज्ञानं दैवतम्, आत्मन्यधि यद् वर्त्तते तदध्यात्मम् । स एष सर्वोऽपि मन्त्रब्राह्मणराशिरेवं त्रेधा विभक्तः । तत्रैवं सति,—यदा अभ्युदयलक्षणो धर्मोऽभिप्रेयते, तदा याज्ञं पुष्पं दैवतं फलम् । किं कारणम् ? पूर्वं हि पुष्पं भवति फलार्थम्, याज्ञमपि च । पूर्वं तन्यते देवतार्थम्, इत्येतस्मात् सामान्याद् याज्ञं पुष्पम्, दैवतं फलम् । यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदोभे अपि याज्ञदैवते पुष्पत्वमेव बिभृतः । दैवते हि याज्ञमन्तर्भूतमेव तदर्थत्वात्, अतो न पृथगुच्यते । यत् पुनरेतदधिदैवतं सर्वमपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसा आत्मानमेव प्रत्यभिसम्पाद्यते कार्य्यकारणाधिदेवताद्वारेण, सोऽयमेवमधिदैवतमधियज्ञं चोच्छिद्याध्यात्ममेवाभिसम्पादयति, यथा पुष्पभावमुच्छिद्य पुष्पं फलभावायेति । एवं सोऽयमात्मयाज्येवाभिसपद्यते । तत्रैवं सति—अध्यात्मार्थत्वादधिदैवतस्य, अध्यात्मस्य च पुरुषार्थस्य निष्पन्नत्वात्, दैवतं पुष्पम्, अध्यात्मं फलमित्येवमुक्तम् ॥ १ । २० । १ ॥

**साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः ॥ उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ॥ बिल्मं भिल्मं भासनमिति वा ॥ २ ॥**

आह—कुतः पुनरिदमायातं निरुक्तशास्त्रं प्रधानमितराणि चाङ्गानि इति ? उच्यते—"साक्षात्कृतधर्माण ऋषयो बभूवुः" । साक्षात् कृतो यैर्धर्मः साक्षाद् दृष्टः प्रतिविशिष्टेन तपसा, त इमे साक्षात्कृतधर्माणः ॥ के पुनस्त इति ? उच्यते—ऋषयः । ऋषन्ति अमुष्मात् कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणः फलविपरिणामो भव-

१ 'एव' ॥

तीत्यन्वयः । "ऋषिर्दर्शनात् ( नै० २अ० ११ख० )"—इति वक्ष्यति । तदेतत् कर्मणः फलविपरिणामदर्शनमौपचारिकया वृत्त्याऽक्रम, साक्षात्कृतधर्माण इति । न हि धर्मस्य दर्शनमस्ति; अप्रत्यक्षो हि धर्मः ।

आह—किं तेषाम् इति ? उच्यते—"तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः" [ ये ते साक्षात्कृतधर्माणस्तेऽवरेभ्योऽवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः । तेषां हि श्रुत्वा ततः पश्चादृषित्वमुपजायते, न यथा पूर्वेषां साक्षात्कृतधर्मणां श्रवणमन्तरेणैव ।। आह—किं तेषाम् इति ? उच्यते—ते अवरेभ्य उपदेशेन शिष्योपाध्यायिकया वृत्त्या मन्त्रान् ग्रन्थतोऽर्थतश्च सम्प्रादुः सम्प्रदत्तवन्तः, तेऽपि चोपदेशेनैव जगृहुः ।।

अथ तेऽपि "उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"—इति । उपदेशाय उपदेशार्थम् । कथं नामोपदिश्यमानमर्थमेते शक्नुयुर्ग्रहीतुमित्येतमधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वगृह्णत्सु तदनुकम्पया तेषामायुषः सङ्कोचमवेक्ष्य कालानुरूपाञ्च ग्रहणशक्तिम् । बिल्मग्रहणायेमं ग्रन्थं गवादि—देवपत्न्यन्तं समाम्नासिषुः समाम्नातवन्तः । किमेतमेव ? नेत्युच्यते—वेदं च वेदाङ्गानि च इतराणीति ।।

कथं पुनः समाम्नासिषुः इति ? आह—शृणु । वेदं तावदेकं सन्तमतिमहत्त्वाद् दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः, सुखग्रहणाय व्यासेन समाम्नातवन्तः । तद्यथा—एकविंशतिधा बाह्वृच्यम्, एकशतधा आध्वर्य्यवम्, सहस्रधा सामवेदम्, नवधा आथर्वणम्। वेदाङ्गान्यपि । तद्यथा—व्याकरणमष्टधा, निरुक्तं चतुर्दशधा—इत्येवमादि । एवं समाम्नासिषुर्भेदेन ग्रहणार्थम् । कथं नाम भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्याः,—इत्येवमर्थं समाम्नासिषुरिति ।।

बिल्मग्रहणं भाष्यवाक्यप्रसक्तं निर्ब्रवीति—यदेतत् "बिल्मम्"इत्युक्तम्,एतद्"भिल्मम्" वेदानां भेदनम् । भेदो व्यास इत्यर्थः । "भासनमिति वा" अथ वा भासनमेव बिल्मशब्देनोच्यते । वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इति । अत इदमुक्तं बिल्ममिति । एवं भिदेर्भासतेर्वा बिल्मशब्दः। एवमिदमृषिभ्यो निरुक्तशास्त्रमायातमितराणि चाङ्गानीति परिशोधित आगमः ।। १ । २० । २ ।। *The book is arranged on the following plan:—*

**एतावन्तः समानकर्माणो धातवः ।। धातुर्दधातेः ।। एतावन्त्यस्य सत्त्वस्य नामधेयानि, एतावतामर्थानामिदमभिधानम् ।। नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् ।। ३ ।।**

*not a prominent mention* *That deity is called—*

१ 'मागतम्' ।।

अथेदानीं निघण्टुसमम्नायविरचना वक्तव्या प्रकरणत्रयविभागेन सुखव्याख्यानार्थमस्य शास्त्रस्य। सेयमुच्यते—"एतावन्तः समानकर्माणो धातवः"—"एतावन्त्यस्य सत्त्वस्य नामधेयानि" इति। स एष पदराशिर्नैघण्टुकं नाम प्रकरणम्। एतावन्त इति या चैषु धातुषु व्याख्यातपदेषु प्रतिनियता संख्या, साभिप्रेयते। तद्यथा,—"गतिकर्माण उत्तरे धातवो द्वाविंशशतम् ( अ० २, खं० १, )" "कान्तिकर्माण उत्तरे धातवोऽष्टादश ( अ० ३ खं० ९, )"—इत्येवमादि॥

एतावन्त्यस्य सत्त्वस्येति या नामसु प्रतिनियता संख्या, साभिप्रेयते। तद्यथा,—"पृथिवीनामधेयान्येकविंशतिः" "हिरण्यनामान्युत्तराणि पञ्चदश(अ०२खं०१०)" इत्येवमादि। यत्रैतावर्थौ प्रायेण चिन्त्येते, प्रसङ्गतोऽन्यद् यत् किञ्चित्। तदेतद् एवंलक्षणं नैघण्टुकं नाम प्रकरणम्। गवादि, प्राक् "जहा( अ० ४ खं० २ )" शब्दात्।

अथ पुनर्यत्र "एतावतामर्थानामिदमभिधानम्"—इत्यर्थः प्रायेण चिन्त्यते। तद्यथा—"आदित्योऽप्यकूपारः समुद्रोऽप्यकूपारः ( अ० ४ खं० १८. )"—इत्येवमादि। अनवगतसंस्काराश्च निगमा जहादयः प्रायेण चिन्त्यन्ते, प्रसङ्गतोऽन्यत् यत् किञ्चित्। तदेतदेवंलक्षणम् ऐकपदिकं नाम प्रकरणम्, जहादि, प्राक् अग्निशब्दात् ( दै० का० १, ३, ६ )॥

अथ पुनर्यत्र नैघण्टुकं देवतानामप्राधान्येनास्मिन्मन्त्रे, इदमन्यदत्र प्राधान्येन वर्तते इत्ययं विभागः प्रायेण चिन्त्यते, तदेवंलक्षणं दैवतं नाम प्रकरणम्, अग्निशब्दादि देवपत्न्यन्तम् ( अ० १२, खं ४५—४६ )। तान्येतानि त्रीणि प्रकरणानि—नैघण्टुकम्, ऐकपदिकम्, दैवतम्—इति। अनेन प्रकरणत्रयविभागप्रपञ्चेनेदमवस्थितं निरुक्तशास्त्रमिति।

"नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्"। इदमुक्तं नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति, तत्र न ज्ञायेत किमिदमुक्तं भवति, तदेतल्लक्षणत उपदिश्यत इति पर्य्युपयुक्तस्तच्छब्दः।यत् अभिधानम् अन्यदैवते, अन्या यस्मिन् प्रधानदेवताः सोऽयमन्यदैवतः, तस्मिन् अन्यदैवते मन्त्रे। यमर्थमन्यस्यां प्रधानायां मन्त्रदेवतायां निपतति निगमयति अभिप्रयुज्यमानमङ्गभावं गच्छति मन्त्रवाक्ये नैघण्टुकं तदित्युच्यते, गुणभूतमित्यर्थः। सञ्ज्ञा हि तस्येयमस्मिञ्छास्त्रे॥ १। २०। ३॥

"अश्वं न त्वा वारवन्तम्।" अश्वमिव त्वा वालवन्तम्॥ वाला दंशवारणार्था भवन्ति॥ दंशो दशतेः॥ ४॥

१ 'दिः'॥ २ 'स्वम'॥

तद्यथा—

"अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।

सम्राजन्तमध्वराणाम् ॥ (ऋ० सं० १, २, २२, १)" ।

इत्यग्निदेवत्यायामृचि अग्निः प्रधानम् । शुनःशेपस्यार्षम् । गायत्री । वारवन्तीयस्य साम्नः ... । साम्नश्च वारवन्तीयस्य एषा योनिः । 'अश्वं न त्वा' अश्वमिव त्वां हे अग्ने । 'अग्निम्' अग्रे नेतारं देवानां, 'वारवन्तं' वालवन्तं वृषाश्वम् । स हि अतितरां वालवान् भवति । वन्द्यते परिचर्य्यते च । न तथान्ये । तमिव त्वां 'वन्दध्यै' वन्दामहे स्तुमः । 'नमोभिः' नमस्कारैः, अन्नैर्वा हविर्भिरुद्यतैः । क्व पुनरवस्थितम् ? कथं वा वन्दामहे ? इति । 'सम्राजन्तम्' दीप्यमानम् 'अध्वराणां' यज्ञानां मध्येऽवस्थितमुत्तरवेद्यादिषु धिष्ण्येषु अभिप्रेतार्थसिद्धये वन्दामहे ॥

वालशब्दस्य निगमप्रसक्तस्य निर्वचनम्,—"वाला दंश [नि[१]]वारणार्था भवन्ति" । तैर्हि दंशादयो निवार्य्यन्ते ॥ दंशशब्दस्य प्रसक्तानुप्रसक्तस्य निर्वचनम्,—"दंशो दशतेः" इति । दशति ह्यसौ ॥ १ । २० । ४ ॥

"मृगो न भीमः कुचरो गिरिष्ठाः ।" मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणः । भीमो बिभ्यत्यस्माद् ॥ भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितम् ॥ अथ चेद्देवताभिधानम्, क्वायं न चरतीति । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः समुद्गीर्णो भवति । पर्ववान् पर्वतः ॥ पर्व पुनः पृणातेः प्रीणातेर्वा । अर्द्धमासपर्व—देवानस्मिन् प्रीणन्तीति । तत् प्रकृतीतरत्सन्धिसामान्यात् । मेघस्थायी । मेघोऽपि गिरिरेतस्मादेव ॥ ५ ॥

द्वितीयमुदाहरणम्—

"प्रतद्विष्णुः स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ (ऋ० सं० २,२,२४,२)" ।

१ अयं 'मूलपुस्तकमुद्रितटीकापुस्तकयोर्नास्ति । प्राचीनटीकापुस्तके तूपलभ्यते । विशेषानभिधायकत्वात्कोष्ठके निवेशितः' ॥

किञ्च,—

"मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥ ( ऋ० सं० ८, ८, ३८, २ )" इति ।

गयो नामेन्द्रपुत्रः, तस्येयमार्षम् । त्रिष्टुप् । वैमृधस्य हविषो याज्या ( आप० सू० २, १० ) । इन्द्रोऽस्यां प्रधानम्, मृगो नैघण्टुकः । 'मृगो न' मृग इव व्याघ्रो वा सिंहो वा । 'भीमः' भीषणः । 'कुचरः' कुत्सितचरणः, हिंस्रः, प्राणिवधजीवनः । 'गिरिष्ठाः' पर्वताश्रयः । स यथा कश्चिदन्यं प्राणिविशेषं हन्ति । तेनानभिभूयमानः 'परावतः' परस्मात् अतिदूरस्थानात्, 'परस्याः' दिवः सम्बन्धिनः 'आजगन्थ' आगच्छ । एतदर्थमागत्य च इह कर्मणि हे 'इन्द्र !' एतदस्मद्वचः कुरु । 'सृकम्' यः शत्रुकायेषु सर्त्तुं शक्नोति । तं 'पविं' वज्रं 'संशाय' तीक्ष्णीकृत्य 'तिग्मं' छेदनायोत्साहवन्तं सुनिशितं कृत्वा ततो 'वि ताळ्हि' विताडय, एतान् 'शत्रून्' अस्मच्छत्रून् एकप्रहारवर्जितदेहान् कुरुष्व । यानपि च संग्रामयुक्तान् युयुत्सून् न हि हिनस्सि कथञ्चित् तानपि 'मृधः' हिंसकान् 'वि नुदस्व' नानाप्रकारं प्रेरयस्व दूरमपुनरागमनाय ॥

"अथ चेद् देवताभिधानम्" एतत् कुचर इति, ततः "क्वायं न चरतीति" सर्वत्र चरतीति । "गिरिष्ठा" "मेघस्थायी" इति च । अनुपक्षीणशक्तयो हि विभवो वेदशब्दा यथाप्रज्ञपुरुषाणामर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्थान् प्रब्रुवन्तीत्येतदनेन प्रदर्शितं भवतीत्यथ चेद् देवताभिधानमिति ॥

मृगादिशब्दान् निगमप्रसक्तान् निर्ब्रवीति,—"मृगो मार्ष्टेर्गतिकर्मणः" नित्यं ह्यसौ गच्छति ॥ "भीमो बिभ्यत्यस्मात्" सर्वं एव ह्यस्माद् बिभेति । भीष्मशब्दं सारूप्यप्रसक्तं निराह—"भीष्मोऽप्येतस्मादेव" इति । "कुचर इति, चरति कर्म कुत्सितम्" चरति ह्यसौ कर्म कुत्सितम्, व्याघ्रो वा सिंहो वा "अथ चेद्देवताभिधानम्" "क्वायं न चरतीति" देवताभिधानत्वे । "गिरिः पर्वतः" । "समुद्गीर्णो भवति" समस्तो ह्यसावुद्गीर्ण इव भूमौ भवति ॥

पर्वतशब्दं पर्य्यायानुप्रसक्तं निराह,—"पर्ववान् पर्वतः" इति । शिलाशिखरसन्धिभिरसौ तद्वान् हि भवति ॥ पर्वशब्दं विग्रहप्रसक्तं निराह,—"पर्व पुनः पृणातेः" पूरणार्थस्य । पूरयन्ति हि ते शिलाशिखरसन्धयोऽखिलं पर्वतम् । "प्रीणातेर्वा" तर्पणार्थस्य । तत् पुनरेतत् "अर्द्धमासपर्व" । किं कारणम् ? "देवान् अस्मिन्" हविर्भिः "प्रीणन्तीति" । "तत्प्रकृतीतरत्सन्धिसामान्यात्" कालसन्धिश्च शिलासन्धिश्च

१ 'कार्येषु' ॥ २ 'पर्वतशब्दपर्यायाज्ञानप्रसक्तं निराह–' ॥ ३ 'सन्धि [ मात्र ] सामान्यात्' ॥

समानं सन्धित्वमिति ॥ देवताभिधानपक्षे "मेघस्थायी" गिरिष्ठाः । "मेघोऽपि गिरि-रेतस्मादेव" असावपि समुद्गीर्णो भवति अन्तरिक्षलोके ॥ १ । २० । ५ ॥

तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां, तद्दैवतमित्याचक्षते । तदुपरिष्टाद् व्याख्यास्यामः ॥ नैघण्टुकानि नैगमानीह ॥ ६ ॥ २० ॥

"तद्यानि नामानि प्राधान्यस्तुतीनां, देवतानां तद्दैवतमित्याचक्षते । तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानि इह इह" । तदेतदुच्यते—सामान्यलक्षणोपलक्षितप्रकरणत्रयविभागेनावस्थितो गवादिर्देवपत्न्यन्तः समाम्नायोऽयमानुपूर्व्या व्याख्यास्यत इति पर्य्युपयुक्तस्तच्छब्दः । यानि नामानि प्राधान्यस्तुतीनामग्न्यादीनाम्, प्रधानभावेन याः स्तूयन्ते न निपातभाक्त्वेन ता एताः प्राधान्यस्तुतयो देवताः, तासां किल यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि, तानि सर्वाण्यपि समुदितानि सन्ति । एतयैकया सामान्यया प्रकरणसञ्ज्ञया आचक्षते आचार्य्याः । कतमया ? उच्यते—दैवतमित्येतया निरूढा हीयमेतस्मिन् नैघण्टुकशब्दसमुदाये सञ्ज्ञेत्यभिप्रायः । तत् पुनरेतद् दैवतं प्रकरणम् उपरिष्टाद् व्याख्यास्यामः अस्य शास्त्रस्य ॥ आह—किं कारणम् इति ? उच्यते,—गुणपदेषु व्याख्यातेषु प्रधानदेवतापदानि सुखं व्याख्यास्यन्त इत्यनेनाभिप्रायेण । देवतापरिज्ञानं तत्फलाभिधाननिष्ठं च कथं नामेदं शास्त्रं स्यात्? इति । यानि पुनर्नैघण्टुकानि गवादीनि, नैगमानि च जहादीनि, तानीह प्रकरणद्वये नैघण्टुके चैकपदिके च व्याख्यास्याम इत्येतदेवानुवर्त्तते । त एते गवादयो देवतपत्न्यन्ताः निघण्टवः, तदेकदेशो नैघण्टुकं प्रकरणमिति निघण्टुसञ्ज्ञया व्यवहारो लोके,—'निघण्टुमधीमहे' 'निघण्टुमध्यापयामहे' इति । शास्त्रे खल्वपि नैघण्टुकं प्रकरणमिति । नैगमभित्यैकपादिकम् । "नैघण्टुकानि" च पदानि "नैगमानि" चेह प्रकरणद्वये व्याख्यास्यामः ॥

अध्यायपरिसमाप्तिलक्षणार्थः परितोषार्थो वा द्विरभ्यास इति १ । २० । ॥ ६ ॥ *

[ समाम्नायस्तत्रचतुष्ट्वमतोऽन्येर्थनिपातावायुर्वात्वाननूनंनूनंसातर्क्षचान्त्वोऽक्षण्वन्तोनिर्ष्वक्रासोहविभिरितीमान्यर्था-

* इतोग्रे—'इति निरुक्तव्याख्यायां प्रथमा (षष्ठा) ध्यायस्य विंशः खण्डः॥२०॥ इत्येवं द्रष्टव्यम् ॥ "इति निरुक्तवृत्तौ षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥" इति तूपलभ्यते ॥

पियोर्येथोहिन्वर्थांपीदमर्थवन्तोऽर्थांपीदंस्थाणुरयमुतेत्वःप-श्यन्नुतंत्वंसख्येविंशतिः ॥

इति निरुक्ते पूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ प्रथमो ( षष्ठो )ऽध्यायः समाप्तः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः ।

## प्रथमः पादः १.

### ॐ अथ निर्वचनम् ॥ १ ॥

"अथ निर्वचनम्" । नामाख्यातोपसर्गनिपातलक्षणमुक्त्वा शास्त्रारम्भप्रयोजनानि च वेद-वेदाङ्गव्यूहं च सप्रयोजनं निघण्टुसमाम्नायविरचनां च प्रकरणत्रयविभगेनोक्त्वा दैवतमुत्कृष्य नैघण्टुकनैगमे प्रकरणे पुरस्कृते नैघण्टुकानि नैगमानीहेहेति । ते पुनरेते निर्वच-नलक्षणमनुक्त्वा न शक्येते व्याख्यातुं यस्मात्, "अथ" एतस्मात् कारणात् "निर्वचनम्" लक्षणतो व्याख्यास्याम इति वाक्यशेषः । अपि हि तस्यार्थस्य परोक्षवृत्तावतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम् । स एष निर्वचनाभ्युपाय इत्युच्यते ॥ २ । १ । १ ॥

### तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात् ॥ २ ॥

इह विविधाः शब्दाः,—समर्थस्वरसंस्काराश्च, असमर्थस्वरसंस्काराश्च । "तत्" तत्रैवं सति, "येषु" तावत् "पदेषु" "स्वरसंस्कारौ समर्थौ" संगतार्थौ अवैपरीत्येन "प्रादेशिकेन" च "गुणेनान्वितौ स्याताम्" । प्रदेशाभिधायिना गुणेन धातुरूपेणान्वितौ सम्बद्धावनुगतावभिधेयस्थे धातुरूपे स्याताम् ॥

"तानि" तावत् "तथा" एव यथालक्षणमेव नैरुक्तो "निर्ब्रूयात्"॥ आह—कुतो वा संशय इति ? उच्यते—अर्थप्रधानत्वादनादृत्यैव लक्षणमेवमेषु नैरुक्तो निर्ब्रूयात् । तन्मा भूदित्यत इदमुच्यते— येषु पदेषु स्वरसंस्कारौ समर्थौ स्यातां तथा तानि निर्ब्रूयात् इति ॥ २ । १ । २ ॥

**अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत । केनचिद् वृत्तिसामान्येन ॥ ३ ॥**

"अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन" । अथ पुनरनन्वितेऽर्थे न्याय्यस्वरसंस्कारयुक्तेन शब्देन यत्र निपुणमन्यन्विष्यमाणः शब्दोऽर्थवान्कल्पयितुं न शक्यते, अन्यथैवार्थो व्यवतिष्ठते,–(अन्यथैव शब्दः)। प्रादेशिकेन विकारेण विक्रियमाणोपि चासौ शब्दो विपरिणम्यमानः अप्रादेशिक एव स्यादसमर्थ एव तां प्रदेशाख्यामभिधेयसत्त्वस्थां क्रियामभिधातुम् ॥

आह–तत्र किं कर्त्तव्यम् इति ? उच्यते,–तत्रैवं सति अर्थनित्यो भूत्वा, अर्थप्रधानः। तद्यथा,–मुद्गनित्यमेवास्य भोजनमित्युक्ते मुद्गप्रधानमिति गम्यते, एवमिहापि अर्थनित्य इत्युक्ते अर्थप्रधान इति गम्यते, अर्थप्राधान्येनानादृत्य स्वरसंस्कारौ परीक्षेत । ततस्तदभिधानं बुद्ध्वा केनचिदर्थवृत्तिसामान्येन क्रियागुणसामान्येनेत्यर्थः । 'कतमस्य धातोरर्थसामान्यमिहास्ति' इति ततस्तर्कयित्वा सामान्यं तेन निर्ब्रूयात् । अर्थो हि प्रधानम्, तद्गुणभूतः शब्दः । तस्मात् अर्थसामान्यं बलीयः शब्दसामान्यात् ॥ २ । १ । ३ ॥

**अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति यथार्थं विभक्तीः सन्नमयेत् ॥ ४ ॥**

अथ पुनर्यत्रार्थसामान्यमपि नास्ति, तत्र ?

"अविद्यमाने [ऽर्थे[3]] सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति, यथार्थं विभक्तीः सन्नमयेत्" ॥

स्वरवर्णसामान्येनापि निर्ब्रूयादेव,–अमुष्मिन् धातावयं स्वरो वर्णो वा मया दृष्टः स एवायमस्मिन्नभिधाने लक्ष्यत इत्येवमुत्प्रेक्ष्य स धात्वर्थः सूत्रबद्ध इव तस्मिन्नभिधाने आहृत्य स्फारीकृत्य कृत्स्नः प्रकाशयितव्यः । एवमविद्यमाने अर्थसामान्ये स्वरवर्णसामान्यमात्रेणापि निर्ब्रूयादेव । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत, इतरथा ह्यनर्थकमेव निरुक्तशास्त्रं स्यात् । तन्मा भूदित्यत इदमुच्यते लक्षणपराङ्मुखेषु शब्देषु न संस्कारमाद्रियेत ॥

---

१ 'शब्दोऽर्थो वा'॥ २ 'न्यमत्रा' ॥ ३ इदम्–'ऽर्थे' इति मूले नास्तीत्यतोऽत्र कोष्ठके निविष्टं बोध्यम् ॥

किं तर्हि ? अर्थसामान्यमाद्रियेत, शब्दसामान्यं वा ? तद्यथा-प्रवीणोदारनिस्त्रिंशशब्दा उत्सृष्टस्वार्थाभिधेयसम्बन्धाः सन्तः क्रियागुणं सामान्यं हेतुमात्रमाश्रित्यान्येष्वेवार्थान्तरेषु वर्त्तन्ते ॥ एवमपि वनशब्दः, वनेशय इत्येवं गृह्यते-

तद्यथा,-प्रकृष्टो वीणायां प्रवीणो गान्धर्वे, अत्र ह्यस्य मुख्या वृत्तिः । स एव स्वमर्थमभिधेयमुत्सृज्यैव गान्धर्वमभ्यासपाटवमात्रं सामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः, यो हि यस्मिन् कृतयत्न उत्पन्नकौशलो भवति, स तत्रोच्यते प्रवीण इति । तद्यथा-'प्रवीणो व्याकरणे'' 'प्रवीणो निरुक्ते' इति ॥

एवमेवोदार इति । प्रागारसन्निपातात् व्याहृतमात्रेणैव वाक्संकेतेनाकूतेनैव सारथेर्यो वहत्यश्वोऽनड्वान् वा स उद्धतारत्वादुदारः । तत्र हि समञ्जसा वृत्तिरस्य शब्दस्य । स एव उत्सृज्यैव स्वमर्थमाकूतानुविधायित्वमात्रमेव सामान्यमाश्रित्य प्रवृत्तः । यो हि कश्चित् कस्मैचिदाकूतं लक्षयित्वा प्रागेव प्रार्थनात् ददाति, स-उदार इत्युच्यते ।

एवमेव निस्त्रिंशः । त्रिभिः प्रदेशैर्द्वाभ्यां धाराभ्यामग्रेण च निशितः श्यतीति निस्त्रिंशः खड्गः मुख्यग्रहणात्, तत्र ह्यस्य शब्दस्य समञ्जसा वृत्तिः । स एव च्छेदनसमानरूपं क्रौर्य्यसामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः । यो हि लोके क्रूरो भवति, स निस्त्रिंश इत्युच्यते । एवमेते क्रियागुणसामान्यमात्रेण वर्त्तन्ते ॥

यथैते, एवमन्येऽप्यभ्यूहितव्याः । अभ्यूह्य च एवमर्थसामान्येन निर्वक्तव्याः । स्वरवर्णसामान्ये तु प्रचुराण्येवोदाहरणानि । सर्व एव हि नैगमाः शब्दा जहादयः स्वरवर्णसामान्यमात्रेणैव निरुच्यन्ते ॥

न च निरुक्ते कारकहारकलावकादिशब्दा व्युपाद्यन्ते, सुबोधैव हि तेषां व्युत्पत्तिः प्रसिद्धैव च व्याकरण इति । अत्र केचिदर्थे य एव तु दुर्बोधाः परोक्षातिपरोक्षवृत्तयः बिल्मकृदरोदारवैतसपर्वशब्दादयः, त एव हि व्युत्पाद्य निरुच्यन्ते । तेषु हि विशेषेणार्थवत्ता निरुक्तस्य । तान्येव अर्थसामान्येन वा शब्दसामान्येन वा निर्ब्रूयात्, न तेषु संस्कारमाद्रियेतेति ॥

आह-किं कारणम् इति ? उच्यते-विशयवत्यो हि वृत्तयो भवन्ति । हिरयं हेत्वर्थे । यस्माद्विशयवत्यो बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवंति, नोभावेनार्थेषु अवस्थिता प्रवृत्तिरिति एवं (स्यादेवं स्यादिति विचारयन्तः प्रतिपन्नसंमोहाच्छेरत इवास्मिन्निति विशयः संशयः, नाभावेनार्थेषु अवस्थिता प्रवृत्तिरिति एवं ) स्यान्नैवं स्यादिति विचारयन्तः सन्तः प्रतिपक्षसम्मोहाच्छेरत इवास्मिन्निति विशयः संशय इति । वर्ण
अत्र-केचिदर्थसामान्येन क्वचिद्वर्त्तन्ते शब्दाः,केचित् स्वरसामान्येन, केचिदूर्णसामान्येन,यत एवम्, अतो विभक्तीरपि यथार्थमेव सन्नमयेत विपरिणमयेत्,पूर्वोत्तरपदप्रकरणाविरोधेन ।

१ 'प्रवृत्तिः' ॥ २ 'नानाभावेना' ॥ ३ एत ( ) दन्तर्गतः पाठः क्वचित् ४ 'देवं स्या' ॥

किं कारणम्? तासामपि हि व्यत्ययो भवत्येव,—सुपां स्थानेषु सुपो भवन्ति इति हि वैयाकरणाः पठन्ति। दर्शयिष्यति चायमपि विभक्तिविपरिणामम्। तद्यथा,—"हृत्सु शोकैः—हृदयानि शोकैः (दै० का० ९, ३, ३३)" इत्येवमादि॥ २।१।४॥

## प्रत्तमवत्तमिति धात्वादी एव शिष्येते ॥ ५ ॥

अधुनैवमुक्त्वा विशयवत्यो भवन्तीति, अर्थवशेन व्याकरणेऽपि शब्दविपरिणामो भवतीत्येवं दर्शयति,—"प्रत्तमवत्तमिति धात्वादी एव शिष्येते" इत्येवमादि। 'डुदाञ् दाने (जु० उभ०)' तस्य प्रपूर्वस्य प्रत्तमिति। अत्र दकार आकारश्च धातुः, परो निष्ठाप्रत्ययस्तकारः, तत्रैवं सति 'दो दद् घोः (पा० ७, ४, ४६)'—इति वर्त्तमाने 'अच उपसर्गात् तः (पा० ७, ४, ४७)'—इति आकारस्य तकारो भवति, 'झरो झरि सवर्णे (पा० ८, ४, ६५)'—इति धात्वन्तस्य तकारस्य लोपे कृते 'खरि च (पा० ८, ४, ५५)'—इति दकारस्य चर्त्वे कृते 'परः सन्निकर्षः संहिता (पा० १, ४, १९)'—इति धातुतकारः प्रत्ययतकारेण साकं संयोगतामुपैति 'हलोऽनन्तराः संयोगः (पा० १, १, ७)'—इति, ततः प्रादिसमासे कृते प्रत्तम्—इति भवति। एवमेव 'दो अवखण्डने (दि० प०)'—इत्यस्यावपूर्वस्य अवत्तम्—इति। अत्रापि दकार ओकारश्च धातुः, परो निष्ठातकारः। अत्र 'आदेच उपदेशेऽशिति (पा० ६, १, ४५)'—इत्योकारस्याकारे कृते तभावलोपचर्त्वपरगमनप्रादिसमासाः पूर्ववदेव। एवमनयोर्धात्वोरादी एव शिष्येते। यथानयोरेवमन्येषामपि दृष्ट्वा यथासम्भवमनुविधेयम्॥ २।१।५॥

## अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति ॥ ६ ॥

"अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति, स्तः सन्तीति"। 'अस् भुवि (अदा० प०)'—इत्यस्य निवृत्तिस्थानेषु गुणवृद्धिनिवृत्तिस्थानेषु 'क्ङिति' इति वर्त्तमाने 'श्नसोरल्लोपः (पा० ६, ४, १११)'—इत्यादिलोपो भवति। योऽयं धात्वादावकार एष लुप्यते, तस्मिन् लुप्ते प्रयोगः स्तः सन्तीति। एवमन्येषामपि दृष्ट्वानुविधेयं यथासम्भवम्॥ २।१।६॥[1]

## अथाप्यन्तलोपो भवति गत्वा गतमिति ॥ ७ ॥

"अथाप्यन्तलोपो भवति गत्वा गतमिति"। अत्र, गमेः (भू० प०) क्त्वाप्रत्यये, निष्ठाप्रत्यये च परतोऽनुनासिकलोपो भवति, 'अनुदात्तोपदेश—' (पा० ६।४।३७), इत्यधिकृत्य क्ङितीति। एवमन्येष्वपि द्रष्टव्यमनुविधेयं च यथासम्भवम्॥ २।१।७॥

---

१ 'लुप्ते कथं प्रयोगः स्तः स' ॥ २ 'यथानुसम' ॥

## अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति ॥ ८ ॥

"अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति" । अत्र, गमेः ( भ्वा० प० ) अलोपः 'अलोन्त्यात् पूर्व उपधा ( पा० १, १, ६५ )'—इत्युपधा सञ्ज्ञा, तस्य 'गमहनजनखनघसां—( पा० ६, ४, ९८ )'—इत्युपधालोपः । एवमन्येषामपि द्रष्टव्यमनुविधेयं च यथासम्भवम् ॥ २ । १ । ८ ॥

## अथाप्युपधाविकारो भवति राजा दण्डीति ॥ ९ ॥

"अथाप्युपधाविकारो भवति राजा दण्डीति" । राजन्, दण्डिन्—इति स्थिते 'नोपधायाः ( पा० ६, ४, ७)'—'सर्वनामस्थाने चासम्बुद्धौ ( पा० ६, ४, ८)'—इति दीर्घत्वम्,—दण्डिन्नित्यत्रापि 'इन्हन्पूषार्यम्णां शौ ( पा० ६, ४, १२ )'—'सौ च ( पा० ६, ४, १३ )'—इति दीर्घत्वम्, 'नलोपः प्रातिपदिकान्तस्य ( पा० ८, २, ७ )'—इत्युभयोरपि नकारलोपे कृते राजा, दण्डीति । एवमुपधाविकारो भवति ॥ २ । १ । ९ ॥

## अथापि वर्णलोपो भवति तत्त्वा यामीति ॥ १० ॥

"अथापि वर्णलोपो भवति तत्त्वा यामीति" । अत्र चकारलोपः । याचामीत्येवमेतद् द्रष्टव्यम् । अयञ्च छान्दस एव । अत एव च छान्दसत्वादेवमेव याच्ञाकर्मस्वयं पठितः "यामि" "मन्महे" इति । भाषायां याचे इति भवति ॥

"तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः । (ऋ०सं० १,२,१५,१)"।

किंच—

"तत्त्वा यामि सुवीर्य्यं तद्ब्रह्म पूर्वचित्तये ।
येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥( ऋ० सं० ५,७,२६,४ )"।

इत्यनया त्रिष्टुभा उपाकृतः शुनःशेपो वरुणं तुष्टाव । आज्याहुतिरनया साग्निकेषु क्रतुषु समिष्टयजुष उत्तरकालं हूयते । चातुर्मास्येषु च वरुणप्रघासेषु वारुणस्य हविषो याज्यैषा। 'हे वरुण !' 'तत्' अहं 'त्वा' वरुणं 'यामि' याचे इत्यर्थः । किम् ? यत् ममाभिप्रेतम् । कथं पुनर्याचे ? 'ब्रह्मणा' ऋग्यजुःसामाख्येन 'वन्दमानः' स्तुवन् । किञ्च, यदेव त्वं मया याच्यसे, 'तत्' एव अयमपि 'यजमानः' 'हविर्भिः' संस्कृतैः

---

१ क्रियाफलस्य परगामित्वविवक्षायामिति शेषः । धातोः स्वरितेत्त्वात्परगामिनि क्रियाफले परस्मैपदस्य वारयितुमशक्यत्वादिति बोध्यम् ॥

साम्नाय्यादिभिः 'आशास्ते' । तावावां भवन्तमेकमेवार्थं याचावहे, स्तुतिभिर्हविर्भिश्च । स त्वम् 'अहेळमानः' अक्रुध्यन् । सर्वो हि याच्यमानः क्रुध्यतीत्यत एवमुच्यते ॥ हे 'वरुण !' 'बोधि' बुध्यस्व । बुद्ध्वा चैतमावयोरभिप्रेतार्थं कुरु । उरुशंसेत्येकं पदं सम्बोधनं च । हे 'उरुशंस' बहुस्तुत्य वरुण ! 'मा' 'नः' अस्माकं याचमानानाम् 'आयुः' 'प्रमोषीः' । कुरु नोऽभिप्रायसिद्धिमित्यभिप्रायः ॥ २ । १ । १० ॥

## अथापि द्विवर्णलोपस्तृच इति ॥ ११ ॥

"अथापि द्विवर्णलोपस्तृच इति" अत्र ऋवर्णरेफयोर्लोपः । रेफ एव ऋवर्णोदरं कामिवदनुप्रविष्टो द्रष्टव्यः स लुप्यते ऋवर्णेन साकम् ॥ २ । १ । ११ ॥

## अथाप्यादिविपर्य्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति ॥ १२ ॥

"अथाप्यादिविपर्य्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति" । 'द्युत दीप्तौ ( भू० आ )' तस्यादिव्यापत्त्या ज्योतिः । 'हन हिंसागत्योः ( अदा० प० )' तस्य घन इति । 'भिदिर् विदारणे ( रु० उ० )' तस्य बिन्दुः । 'भट भृतौ ( भू० प० )' तस्य वाट्यः ॥ २ । १ । १२ ॥

## अथाप्याद्यन्तविपर्य्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति ॥ १३ ॥ १ ॥

"अथाप्याद्यन्तविपर्य्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति" । 'श्चुतिर् क्षरणे ( भू० प० )' तस्याद्यन्तविपर्य्ययेण स्तोकाः । 'सृज विसर्गे ( दि० आ०, तु० प० )' तस्य रज्जुः 'कस विकसने ( भू० प० )' तस्य सिकता । 'कृती छेदने ( तु० प० )' तस्य तर्कु ॥ २ । १ ॥ १३ ॥

## अथाप्यन्तव्यापत्तिर्भवति ओघो मेघो नाधो गाधो वधूर्मध्विति ॥ १ ॥

"अथाप्यन्तव्यापत्तिर्भवति *ओघो मेघो नाधो गाधो वधूर्मध्विति" । 'वहे

१ ऋवर्णेति । 'ऋचि त्रेः संप्रसारणम्, उत्तरपदादिलोपश्च च्छन्दसि' इति वार्तिकेन उत्तरपदभूतस्य ऋचशब्दस्यादिभूतस्य ऋवर्णस्य लोपो भवति तत्र वर्णद्वयं कथमत आह–रेफ इति । ऋवर्णैकदेशो रेफो हल्त्वेन गृह्यते–इति सिद्धान्ते रेफ एको वर्णस्ततः परमज्भक्ति द्वितीयो वर्ण इति बोध्यम् । गर्भिणीहनने गर्भहननमपि भवत्येवेति द्विवर्णलोप इति भावः ॥ * इतोग्रे–'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य प्रथमः खण्डः ॥ १ ॥' इति दृश्यते तद् 'अथापि' इत्यतः प्राक् समुचितम् ॥ २ वहतेरादिव्यापत्तेरप्यङ्गीकरणीयत्वेन विस्मयेन तस्मात् 'ओघ' धातुरेव स्वीकार्यः ॥

प्रापणे ( भू० प० )' तस्यान्तव्यापत्त्या ओघः। 'मिह सेचने ( भू० प० ) तस्य मेघः। 'णह बन्धने ( दि० उ० ), तस्य नाधः। 'गाहू विलोडने ( भू० आ० ), तस्य गाधः। 'वह प्रापणे ( भू० उ० )' तस्य वधूः। 'मद तृप्तौ ( चु० आ० )' तस्य मधु॥२।२।१॥

## अथापि वर्णोपजन आस्थद्द्वारो भरूजेति-॥ २ ॥

"अथापि वर्णोपजन आस्थद् द्वारो भरूजेति"। 'असु क्षेपणे ( दि० प० )' तस्य आस्थत् वर्णोपजनेन। 'वृङ् सम्भक्तौ ( क्र्या० आ० )' तस्य द्वारः। 'भ्रस्ज पाके ( तु० उभ० )' तस्य भरूजा एवं व्याकरणेऽपि लक्षणप्रधाने सति अर्थवशेन लोपागमौ विपरिणामश्च शब्दानां दृष्टः, किमुत निरुक्ते यदर्थप्रधानमेव। तस्मात् साधूक्तम्,—"अथानन्विते ऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् विभक्तीः, अपि यथार्थं सन्नमयेत्"—इति। एवमयमादिमध्यान्तलोप आदिमध्यान्तविकारो वर्णलोपो द्विवर्णलोप आदिविपर्यय आद्यन्तविपर्य्ययो वर्णोपजनश्छन्दसि भाषायां च द्रष्टव्याः, दृष्ट्वा च यथासम्भवमनुविधेयम्॥ २।२।२॥

## तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति ॥ ३ ॥

अतः परं सम्प्रसारणचिन्ता वर्त्तिष्यते, तदर्थमिदमारभ्यते,—"तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति"। सम्प्रसार्य्यप्रकृतयश्चासम्प्रसार्य्यप्रकृतयश्चोभयप्रकृतयश्च धातवः। तत्रैवं सत्युभयप्रकृतिषु स्वशास्त्रविषयगतं यद्वक्तव्यं तत् इदमुच्यत इति पर्य्युपयुक्तस्तच्छब्दः।

आह—इदमेव तावदुच्यतामुभयप्रकृतीनां किं लक्षणम् इति ? उच्यते—यत्र यस्मिन् धातौ स्वरात् अकारादेः अनन्तरा अनन्तर्हिता अन्येन व्यञ्जनेन, परा[3] वा पूर्वा अन्तस्था यरलवानामन्यतमो वर्णः अन्तर्धातु धातुमध्ये भवति। किं तत्र ? तत् एतदेव लक्षणं धातुरूपं हि द्विप्रकृतीनां द्विस्वभावानां शब्दानां स्थानम् आश्रय इति एवमाचार्य्याः प्रदिशन्ति प्रविभागेनोपदिशन्ति। तद्यथा—'यज देवपूजासङ्गतिकरणदानेषु ( भू० उ० )—इति। अत्र द्वे शब्दप्रकृती भवतः। सम्प्रसारणपक्षे तावत्—इष्टवान्, इष्टिः, इष्ट्वा, एताः शब्दप्रकृतयो भवन्ति। असम्प्रसारणपक्षे पुनः—यष्ट्वा, यष्टुं, यष्टव्यमित्येताः॥ २।२।३॥

---

१ 'वृ संवरणे' ( भ्वादिः ) तूचितः॥ २ 'मिदचोऽन्त्यात्परः' इति सूत्रभाष्ये तु "भर्जिमर्च्योश्च" इति वार्त्तिकं समुपलभ्यते॥ ३ परेति। 'च्छ्वोः शूड्' 'ज्वरत्वर—' इति विहितस्य 'द्यूत' 'उतिः' 'ओम्' मामूतः इत्यादौ वकारस्योठः संप्रसारणसंज्ञाया निर्बाधत्वात्॥

**तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत् ॥ ४ ॥**

"तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत्"। तत्र एवं सति एकप्रकारेण सिद्धायाम् अर्थसिद्धौ अनुपपद्यमानायाम्, इतरया उपपिपादयिषेत् उपपादयितुमिच्छेदर्थम् ॥ द्वयोः सम्प्रसारणासम्प्रसारणप्रकृतयोर्यथैवोपपद्यतेऽर्थस्तथैवोपपादयेत् । अथवोभयथाप्यनुपपद्यमानेऽर्थे स्वयमुत्पाद्य निर्द्धार्य्य यथायथोपपद्येतार्थः तथातथोपपादयेदर्थलक्षणशास्त्रविहितेनार्थसाधनोपायेन, अर्थस्य प्रधानत्वात् ॥ २।२।४।

**तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति ॥ ५ ॥**

"तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति" तत्रापि एतस्मिन्नपि सम्प्रसारणलक्षणे सति एके धातवः अल्पनिष्पत्तयो भवन्ति अल्पेषु शब्द रूपेषु सम्प्रसारणप्रकृतिरभिनिष्पद्यते, तदप्युपेक्षितव्यम् ॥

"तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति"। तद्यथा एतदुदाहरणजातम्—ऊतिः, मृदुः, पृथुः, पृषतः, कुणारुम्—इति। अवतेर्गत्यर्थस्य ( भू० प० ) क्तिप्रत्यये परतः 'च्छ्वोः शूडनुनासिके च ( ६, ४, १९ )' इति वर्त्तमाने 'ज्वरत्वरश्रिव्यविमवामुपधायाश्च ( ६, ४, २० )'—इत्यूड्भावः क्रियते, तत ऊतिरिति भवति। 'म्रद मर्दने ( भू० आ० )' तस्य मृदुः, रेफः सम्प्रसार्य्यमाण ऋकारो भवति। एवमेव 'प्रथ प्रख्याने ( भू० आ० )' तस्य पृथुः। 'प्रुष दाहे ( भू० प० )' तस्य पृषतः। 'क्वण शब्दार्थः ( भू० प० )' कुणारुः ॥ २।२।५॥

**अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति ॥ ६ ॥**

एवमयमपि सम्प्रसार्य्यासम्प्रसार्य्यविशेषः परिज्ञेयः शब्दान् निर्ब्रुवता पुंसा—"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते" अथापि इदमपरमुपेक्षितव्यमनेन शब्दान् निर्ब्रुवता। आह—किम् इति ? उच्यते—भाषिकेभ्यो धातुभ्यः। भाषायां ये प्रायेण प्रसिद्धप्रयोगास्ते भाषिकास्तेभ्यः। नैगमाः छन्दोविषयाः। कृतः कृत्प्रत्ययान्ताः शब्दाः। भाष्यन्ते विव्रियन्ते निरुच्यन्त इत्यर्थः। तद्यथा,—"दमूनाः क्षेत्रसाधा इति"। 'दम उपशमे ( दि० प० )' तस्य भाषायां दाम्यति अनड्वान्, दमयति अनड्वाहम्,

१ 'स्नेहने' इति 'सेचने' इति वा पाठः ॥

दान्तः अनड्वान्—इत्येवमादयः प्रयोगा भवन्ति, छन्दसि पुनः दमूना अभिरुच्यते स भाषाशब्दसामान्येन केनचिन्निर्वक्तव्यः—दममना इत्येवमादिना । एवमेव साध्यते भाषाप्रायोवृत्तेः साधा इति । "मित्रं न क्षेत्रसाधसम् ( ऋ० सं० ६, २, ४०, ४ )"—इत्येवमादयो मित्रमिव क्षेत्रसाधयितारमित्येवमादिना प्रकारेण निर्वक्तव्याः ॥ २ । २ । ६ ॥

## अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति ॥ ७ ॥

"अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति" निगमे छन्दसि ये प्रायोवृत्त्या प्रसिद्धाः तेभ्यः सामान्यं गृहीत्वा भाषिकाः कृत्प्रत्ययान्ता भाष्यन्ते विक्रियन्ते । तद्यथा—उष्णं घृतमिति । 'उष दाहे ( भू० प० )' एष प्रायेण छन्दसि प्रसिद्धः,—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ( य० वा० सं० १, ७ )"—इत्येवमादि । भाषायां पुनरुष्णमिति श्रूयते । स एष नैगमशब्दसामान्येन निर्वक्तव्यः । एवमेव 'घृ क्षरणदीप्त्योः ( भू० प० )' तस्य छन्दसि "आ त्वा जिघर्मि ( य० वा० सं० ११, २३ )"—इत्यादिषु सिद्धः प्रयोगः, भाषायां पुनर्घृतमिति श्रूयते । स एवं जिघर्त्तेरेव च्छान्दसस्य सामान्ये निर्वक्तव्यः । एवं भाषाविषयेभ्यश्छन्दोविषया निर्वक्तव्याः, छन्दोविषयेभ्यश्च भाषाविषयाः ॥ २ । २ । ७ ॥

( अथ देशप्रसिद्ध्या शब्दरूढिनिर्णयः )

among the people. derivatives -

## अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु ॥

अथापीदमपरमुपेक्षितव्यमनेन शब्दान् निर्ब्रुवता ।

आह—किम् इति ? उच्यते—"अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु" । एकेषु देशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते, विकृतय एकेषु । धातोराख्यातपदभावेन यः प्रयोगः, सा प्रकृतिः । नामीभूतस्य तस्यैव यः प्रयोगः, सा विकृतिः ॥

**शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ।**
**कम्बोजाः कम्बलभोजाः कमनीयभोजा वा ।**
**कम्बलः कमनीयो भवति ॥**
**विकारमस्यार्येषु भाषन्ते शव इति ॥**
**दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु ॥ ८ ॥**

going · or those who use what is countable; - for indeed a blanket is but countable there.

स एषः "शवतिर्गतिकर्मा" गत्यर्थो धातुः। "कम्बोजेष्वेव भाष्यते" म्लेच्छेषु प्रकृत्या प्रयुज्यते, आख्यातपदभावेन। शवति गच्छतीत्यर्थः॥ उदाहरणविशेषप्रसक्तः कम्बोजशब्दो निरुच्यते,—"कम्बोजाः कम्बलभोजाः" ते हि प्रायेण कम्बलानुपभुञ्जते, हिमप्रायत्वात्तस्य देशस्य। "कमनीयभोजा वा" कमनीयानि प्रार्थनीयानि चैते हि द्रव्याणि उपभुञ्जते प्रचुररत्नो हि स देश इति॥ कम्बलशब्दं विग्रहप्रसक्तं निर्ब्रवीति,—"कम्बलः कमनीयो भवति" प्रार्थनीयो हि स शीतार्त्तैर्भवति॥ "विकारमस्यार्य्येषु भाषन्ते शव इति" आर्य्येषु जनपदेषु अस्यैव शवतेर्विकारं भाषन्ते, मृतकनामधेयभूते प्रेते प्रयुञ्जते, कथम्? शव इति। एवमेकेष्वाख्यातस्थ एव प्रयुज्यते, नामीभूत एकेषु इत्येतत् प्रकृतित्वं विकारत्वं च॥ अथवा चेतनावत्स्वेकेषु गमनक्रियायोगिनि द्रव्ये प्रयुज्यते,एकेषु पुनश्चेतनारहित एव,—इत्येतत् प्रकृतित्वं विकारत्वं च॥

द्वितीयमुदाहरणम्—"दातिर्लवनार्थे प्राच्येषु"। दातिर्धातुराख्यातस्थो लवनार्थे प्राच्येषु जनपदेषु प्रयुज्यते। तद्यथा—व्रीहीन् दाति, यवान् दाति। अयमेव नामीभूतः "उदीच्येषु" जनपदेषु प्रयुज्यते "दात्रम्" इति। दीयते अनेनेति दात्रम्, लूयत इत्यर्थः॥ २।२।८॥

## एवमेकपदानि निर्ब्रूयात्॥ ९॥

"एवमेकपदानि निर्ब्रूयात्" अनेनैव प्रकारेण एकपदानि निर्ब्रूयात्,—भाषानिगमव्यवस्थया वा देशभाषाप्रसिद्धिविभागेन वा॥ २।२।९॥

### (अथ तद्धितसमासनिर्वचनम्)

## अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्॥ १०॥

आह—एवं तावदतद्धितयुक्तेषु पदेषु असमासयुक्तेषु च निर्वचनम्। अथ पुनर्यानि तद्धितयुक्तानि समासयुक्तानि च पदानि, तानि कथं निर्वक्तव्यानि? किं तद्धितयुक्तेषु पदेषु पूर्वं पदार्थो निर्वक्तव्यः, उत तद्धितार्थः? समासयुक्तेष्वपि किं पदार्थः पूर्वम्, उत समासार्थो वा पूर्वम्? इति। उच्यते—"अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्"। अथशब्दो विशेषाधिकारार्थः।

---

१ एष एवास्यार्थो महाभाष्यकर्त्रा पतञ्जलिना "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति विकार एवैनमार्या भाषन्ते शव इति" इति पठता सूचितः॥

'तद्धिताः ( पा० ४, १, ७६ )'—इत्यधिकृत्य ये प्रत्यया विहिताः, ते तद्धिताः, 'समर्थः पदविधिः ( पा० २, १, १ )'—इत्यधिकृत्य ये विहिताः, ते समासाः । तेषूभयेष्वपि तद्धितसमासेषु अविशेषेण एकपर्वसु चानेकपर्वसु च एकपदेषु चानेकपदेषु च। तद्यथा,—दण्डय इत्येकपदस्ताद्धितः ॥ वार्ष्यायणिरित्यनेकपदः । अनेकानि ह्यत्र पदानि स्वात्मन्यन्तर्णीय प्रवर्त्तन्ते । तद्यथा,—वृषस्यापत्यं वार्ष्यः, वार्ष्यस्यापत्यं वार्ष्यायणः, तस्यापि वार्ष्यायणिरिति । एवं समासेष्वप्येकपदेषु चैवं निर्ब्रूयात् । यथा वक्ष्यामः,—एकशेष एकपदः समासः 'सरूपाणामेकशेष एकविभक्तौ ( पा० १, २, ६४ )'—इति । तद्यथा,—पुरुषश्च पुरुषश्च पुरुषौ, पुरुषश्च पुरुषश्च पुरुषश्च पुरुषा इत्येवम् ।

"द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥"

एतेऽनेकपदाः समासाः । पाणिनेः सूत्रम्,—'संख्यापूर्वो द्विगुः ( पा० २, १, ५२ )'। पञ्चमूली, पञ्चरथी, दशरथी—इत्येवमादि ॥ सूत्रम्,—'चार्थे द्वन्द्वः ( पा० २,१, २९ )'। स च पुनर्विभाषयैकवद् भवति । तद्यथा—प्लक्षन्यग्रोधौ, अहिनकुलम्, भीमार्जुनवासुदेवा इत्यादि ॥ उपसर्गनिपातपूर्वकोऽव्ययीभावः। तद्यथा,—उपमणिकम्, अनुसमुद्रम्, व्यभ्रम् इत्येवमादि ॥ तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः कर्मधारयः । तद्यथा,—कृष्णमृगः, रक्ताश्वः, श्वेतपताका इत्येवमादि ॥ एतेष्वेकपर्वसु चानेकपर्वसु च तद्धितसमासेषु पूर्वं पूर्वमेव निर्ब्रूयादपरमपरमेव प्रविभज्य विगृह्येत्यर्थः । पूर्वं तद्धितार्थं निर्ब्रूयात्, पश्चात् पदार्थम् । समासेष्वपि,—पूर्वं समासार्थम्, पश्चात् पदार्थम् ॥२।२।१०॥

**'दण्ड्यः पुरुषो' दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा । दण्डो ददतेर्धारयतिकर्मणः 'अक्रूरो ददते मणिम्' इत्यभिभाषन्ते । दमनादित्यौपमन्यवः । दण्डमस्याकर्षतेति गर्हायाम् ॥ ११ ॥**

तदेतत् उदाहरणैरेव दर्शयति, तद्यथा—"दण्ड्यः पुरुषो दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा" । दण्ड्य इत्येष तद्धितः, पुरुषशब्दविशेषणम् । पूर्वं तावत् तद्धितार्थं निर्वक्ष्यति ततः पदार्थं निर्वक्ष्यति—कस्मिंश्चिदपराधे दण्डमर्हतीति दण्ड्यः, दण्डेन वा कार्षापणादिना यः सम्पद्यते संयुज्यते स दण्ड्यः ॥

अधुना पदार्थनिर्वचनम्,—"दण्डो ददतेर्धारयतिकर्मणः" । ददतेः धारयत्यर्थे वर्त्तमानस्य, धार्य्यते ह्येषोऽपराधेषु राजभिः ।

१ 'इत्येतत्पदः' ॥ २ 'दण्डपुरुषो' इति पाठाधिक्यं क्वचिदेकस्मिन्पुस्तक उपलभ्यते ।

आह—दृष्टः पुनः क्वचित् प्रयोगो ददतेः धारयत्यर्थे? इति। उच्यते—दृष्टो वेदे लोके च। वेदे तावत्,—"विश्वेदेवाः पुष्करे त्वा ददन्त ( ऋ० सं० ५, ३, २४, १ )"—इति ॥ "अक्रूरो ददते मणिमित्यभिभाषन्ते" ॥ तथा लोके,—अक्रूरो ददते मणिम्। अक्रूरो नाम राजा वृष्ण्यन्धकाधिपतिः, स ददते मणिं स्यमन्तकनामानं शिरसा ॥ लोकेऽप्येवं ददतिर्धारणार्थे भाष्यते ॥

"दमनादित्यौपमन्यवः" दमनाद् दण्ड इत्यौपमन्यव आचार्य्यो मन्यते। तेन हि अदान्तो दम्यते राजभिः, तेनादान्तान् दमयेदित्युक्तम्, लोके हि प्रसिद्धो यः कश्चिद-दान्तो भवति तमधिकृत्य वक्तारो भवंति—"दण्डमस्याकर्षतेति गर्हायाम्" ॥ दण्ड मस्याकर्षत हे सभासदः! तेन सम्पद्यतामयं ततो दान्तो भविष्यति,—इत्येवमयं गर्हायां दृष्टः। एवं दमनाद् दण्डः, इत्यौपमन्यव आचार्य्यो मन्यते ॥ २। २। ११ ॥

"कक्ष्या रज्जुरश्वस्य"।
कक्षं सेवते।
कक्षो गाहतेः क्स इति नामकरणः।
ख्यातेर्वानर्थकोऽभ्यासः।
किमस्मिन् ख्यानमिति।
कषतेर्वा ॥
तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य॥१२॥२॥

तद्धितस्यैव द्वितीयमुदाहरणम्,—

"कक्ष्या रज्जुरश्वस्य" कक्ष्या इत्येष तद्धितः ॥ आह—का पुनरियं कक्ष्या? इति। उच्यते—या अश्वस्य सन्नाहरज्जुः सा कक्ष्येत्युच्यते॥

एवं कक्ष्याशब्दस्य तत्त्वमुक्त्वाधुना तद्धितार्थं ब्रवीति,—"कक्षं सेवते"। सा हि कक्षं सेवते, कक्षसंयुक्ता भवति। कक्षे भवा वा कक्ष्या ॥

अधुना कक्षपदार्थं निर्वक्ति,—"कक्षो गाहतेः" विलोडनार्थस्य ( भू० आ० ) ॥ कक्षयोरेव हि बलेन विलोडयति स्त्री दध्यादि द्रव्यम्। अत्र पुनः—"क्स इति नामकरणः"। सर्वमन्यदाद्यन्तविपर्य्ययादि यथोपप्रदर्शितं यथासम्भवं योज्यं तत्रतत्र ॥

"ख्यातेर्वानर्थकोऽभ्यासः" ककारः, कख्यः सन् कक्ष इत्युच्यते ॥

अर्थवानेव वा ककारः। कथम्? "किमस्मिन् ख्यानमिति"। एवं किमस्मिन् ख्यापनीयमस्ति? न किञ्चिदपि, अदर्शनीयत्वात्, गूहनीयोऽयमित्यर्थः। स एष एवं कृत्वा किंख्यः सन् कक्ष इत्युच्यते ॥

"कषतेर्वा ( भू० प० )" नित्यकालं ह्यसौ स्वेदशीलत्वात् कण्डूं ददाति, ततो नखैः कष्यते यतः, तस्मात् कषणक्रियायोगात् कक्ष इत्युच्यते ॥

"तत्सामान्यान्मनुष्यकक्षः"। स्त्रीकिक्षस्य सामान्यात् मनुष्यकक्षोऽपि कक्ष इत्युच्यते। "बाहुमूलसामान्यादश्वस्य"। अश्वस्यापि यो बाहुमूलप्रदेशः, स कक्ष इत्युच्यते। तं सेवत इति कक्ष्या ॥

अन्ये तु ब्रुवते,—"पूर्वपूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्" इति 'पूर्वं' पदं 'पूर्वम्' एव 'प्रविभज्य निर्ब्रूयात्' 'अपरं' पदम् 'अपरम्' एवेति। एतस्मिन्नेवार्थे कल्प्यमाने पदानामेव पौर्वापर्य्ये निर्वचने तद्धितसमासयोस्त्वनियमः पूर्वं वा पश्चाद्वेति। पूर्व एव त्वर्थः साधीयान् ॥ २।२।१२ ॥ *

**राज्ञः पुरुषो राजपुरुषः।**
**राजा राजतेः। पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा।**
**पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ॥**
**"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।"**
**इत्यपि निगमो भवति ॥ १ ॥**

उक्तं तद्धितनिर्वचनलक्षणं सोदाहरणम्, अधुना समासोदाहरणमुच्यते,—"राज्ञः पुरुषो राजपुरुषः"। राज्ञ इत्युक्ते, सर्वं स्वं गम्यते, षष्ठीसामर्थ्यात्। तथा पुरुष इत्युक्ते सर्वः स्वामी गम्यते, निर्देशसामर्थ्यात्। अथेदानीं राजपुरुष इत्युक्ते, राजा पुरुषमन्येभ्यः स्वामिभ्यो विनिवर्त्य स्वात्मनि संयुनक्ति, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यो विनिवर्त्य स्वात्मना संयुनक्ति। तावुभावप्यन्योन्यविमिश्रपदार्थकौ मिथःसंसृष्टपदार्थौ समस्येते। अथेदानीं राजपुरुष आनीयतामित्युक्ते न राजानमानयन्ति, नापि पुरुषमात्रम्, नाप्युभयम्, किंतर्हि राजस्वामिकं पुरुषमानयन्ति। एवं समासार्थः ॥ कुतः पुनरेतत् राजस्वामिकमिति ? प्रधानोपसर्जने हि सहभूते विवक्षितमेकमर्थं ब्रूतः ॥

राजपुरुषशब्दावधुना विग्रहप्रसक्तावाह—

"राजा राजतेः" राजतेर्दीप्त्यर्थस्य ( भू० उभ० )। दीप्यते ह्यसौ पञ्चानां लोक-

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य द्वितीयः खण्डः ॥ २ ॥' इति द्रष्टव्यम् ॥ १ 'किंतु' ॥

पालीनां वपुषा ॥ "पुरुषः पुरिषादः" । पूः शरीरं बुद्धिर्वा, तयोरसौ विषयोपलब्ध्यर्थं सीदतीति पुरिषाद् इति पुरुषः ॥ "पुरिशयः" अथवा तयोरसौ शेते विशेषेणास्ते इति पुरिशयः सन् पुरुष इच्युते ॥ "पूरयतेर्वा" पूर्णमनेन पुरुषेण सर्वगतत्वात् जगदिति पुरुषः ॥ "पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य" । अन्तरित्यन्तरपुरुषाभिप्रायेणैवमुच्यते प्रासङ्गिकम् ।

निगमश्च भवति,—

"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" ।

यस्मात् परमपरं वा न किञ्चिदस्ति यस्माच्च न किञ्चिदप्यणीयो नापि ज्यायोऽन्यदस्ति, स एव सर्वमित्यभिप्रायः । वृक्ष इव स्तब्धो नित्यसङ्कोचविकाशधर्मादिविद्योतनवति स्वात्मनि सर्वर्द्धिभागेन तिष्ठति यः तेन पुरुषेणेदं पूर्णं सर्वं जगदिति ॥ २ । ३ । १ ॥

**'विश्वकद्राकर्षः' वीति चकद्र इति श्वगतौ भाष्यते ।**
**द्रातीति गतिकुत्सना ।**
**कद्रातीति द्रातिकुत्सना ।**
**चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासः ।**
**तदस्मिन्नस्तीति विश्वकद्रः ॥ २ ॥**

समासस्यैव द्वितीयमुदाहरणम्,—

"विश्वकद्राकर्षः" इति । विश्वकद्रमाकर्षतीति विश्वकद्राकर्षः ॥

आह—कः पुनरयं विश्वकद्र इति ? "वीति चकद्र इति श्वगतौ भाष्यते" । वीति चकद्र इति शब्दद्वयं श्वगतौ भाष्यते । श्वभिः साकं यो गच्छति मनुष्यः, तस्मिन् भाष्यते ॥

"द्रातीति गतिकुत्सना" । अत्र पुनः द्रातीति गतिकुत्सना । 'द्रा कुत्सायां गतौ (अदा० प० )'—इत्युक्तम्, इदं हि तस्य कुत्सितगतित्वम्, यदस्य श्वभिः सह गमनम् ॥

"कद्रातीति द्रातिकुत्सना" । इदानीं कद्रातीति द्रातिकुत्सना कुत्सितकुत्सनेत्यर्थः । इदमेव तावत्तस्य कुत्सितत्वं यदसौ श्वभिः सह गच्छति । इदमपरं कुत्सिततरत्वम्-यद् गत्वा श्वभिः सह सत्त्वानि हन्ति, तस्मात् कद्रातीति कुत्सितकुत्सनेत्युपपद्यते ॥

"चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासः" । अथेदानीं च इत्येष कद्रातीति एवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यासः। यदेवोक्तं भवति कद्रातीति तदेव चकद्रातीति।

"तदस्मिन्नस्तीति विश्वकद्रः" । तदस्मिन् द्वितयमप्यस्ति,—कुगतित्वं, कुत्सिततरग-

तित्वं च, नानाप्रकारमिति विश्वकद्रः श्वजीवनः पुरुषः । तमपराधे कस्मिंश्चित् वर्त्तमानमन्यो य आकर्षति, स विश्वकद्राकर्षः ॥

अन्ये तु ब्रुवते,—श्वैव विश्वकद्रः, अस्यैव हि स्वभावत एव हिंस्रत्वाद् गतिः कुत्सिता, स च पुनः पादविकलः, अतस्तस्य कुत्सितकुत्सितत्वम् । वीत्युभयोरर्थयोर्मत्वर्थः, तमाकर्षति यः पुरुषः, स विश्वकद्राकर्षः ॥ २ । ३ । २ ॥

## कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपम् । कल्याणं कमनीयं भवति । वर्णो वृणोतेः । रूपं रोचतेः । एवं तद्धितसमासान्निर्ब्रूयात् ॥ ३ ॥

अधुना रूपसमासं दर्शयति,—"कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपम्" कल्याणवर्णं सुवर्णम्, तस्येव यस्य रूपं स कल्याणवर्णरूपः । अग्निरन्यो वा कश्चित् ॥

कल्याणादिशब्दान् विग्रहप्रसक्तान् निर्ब्रवीति,—"कल्याणं कमनीयं भवति" । प्रार्थ्यते तत् सर्वेणैव । "वर्णो वृणोतेः" । आवृणोति हि स आश्रयम् । "रूपं रोचतेः" तद्धि रोचते, तद्धि रोचिष्णु भवति ॥

"एवं तद्धितसमासान्निर्ब्रूयात्"—इत्युपसंहारवचनम् ॥ २ । ३ । ३ ॥

## नैकपदानि निर्ब्रूयात् ॥ ४ ॥

"नैकपदानि निर्ब्रूयात्" प्रकरणोपपदरहितानि यानि सन्ति, तानि केवलान्येव परेणाभिद्रोहबुद्ध्या पृच्छ्यमानानि न निर्ब्रूयात्, न निर्वक्तव्यानीति । किं कारणम् ? तेषा प्रकरणादुपपदाद्वा अर्थः शक्यतेऽवधारयितुम्, सोऽसौ प्रकरणानभिज्ञोऽन्यथैव निर्ब्रूयात्, ततश्च प्रत्यवायेन योगादपहारश्च स्यात् । तद्यथा,—'जहा'—इत्येकं पदं प्रकरणोपपदरहितम्, [ तत्र ] न विज्ञायते—किं हन्तेः ( अदा० प० ), उत "ओहाक् त्यागे ( जु० प० )"—इत्यस्य धातोः स्यात् ? इति । तत् पुनरेतत्—

"मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु ।
वधीर्मा शूर भूरिषु ॥ ( ऋ० सं० ६, ३, ४८, ४ )"

इत्येतस्यामृचि यदेतन्मा वधीरिति पदम्, एतद् गम्यते हन्तेः स्यादिति । किं कारणम्? विज्ञातप्रकरणोपपदस्य हि समञ्जसं ह्यर्थकरणं न्याय्यमित्येवमनवगतसंस्काराणामेकपदानां प्रकरणादर्थावधारणमुपपदाद्वा शक्यते कर्त्तुम् । अत इदमुक्तम्,—नैकपदानि निर्ब्रूयात् इति ॥ २ । ३ । ४ ॥

---

१ 'तस्यै' ॥ २ 'पहासश्च' ॥ ३ 'ह्यपाकरणं न्याय' ॥

( अथ वर्ज्यशिष्यनिरूपणम् )

## नावैयाकरणाय ॥ ५ ॥

उक्तं निर्वचनलक्षणम्, अधुना यस्मै निर्वक्तव्योऽयमुक्तनिर्वचनलक्षणः समाम्नायः, तस्य लक्षणं वक्तव्यमिति तदर्थमिदमारभ्यते—"नावैयाकरणाय"। यस्तावदवैयाकरणः, तस्मै न निर्वक्तव्योऽयं समाम्नायः, न ह्यसावलक्षणज्ञत्वात् व्युत्पाद्य निरुच्यमानमेतद् बुध्येत, ततो व्यर्थ एव श्रमः स्यादिति ॥ २ । ३ । ५ ॥

## नानुपसन्नाय ॥ ६ ॥

किंच, "नानुपसन्नाय"। किमेति महदद्भुतमनेन कृतं यद् व्याकरणमधीतमिति,—एतावता गौरवेण वैयाकरणायापि न निर्ब्रूयात्, धर्मो हि सर्वथैवापरित्याज्यः, तस्माद् वैयाकरणायापि सम्यगुपसन्नाय पुरां शिष्यवृत्तिमास्थितायैव निर्ब्रूयात् । २ । ३ । ६ ॥

## अनिदंविदे वा ॥ ७ ॥

नैवमेव, किञ्च, "अनिदंविदे वा"।[1]अनिदंविदे वा वैयाकरणोऽपि जडः कश्चिदसमर्थ एव वेदितुं स्यात्, बहु वेदितव्यमन्यत्रास्ति, देवतादि किञ्चित्। तस्मै वैयाकरणायापि इदं वेदितुमसमर्थाय अनिदंविदे नैव निर्ब्रूयात्। अथवा इदमित्यात्मपर्य्यायवाचि। इदंविदे आत्मविदे, योगिने। स ह्यात्मज्ञानविधूतकल्मषोऽल्पेनैव यत्नेन बोद्धुं सूक्ष्मानर्थान् शक्त इति इदंविदे निर्ब्रूयात्। अथवा—यत्किञ्चिच्छास्त्रमिदमिति निर्दिश्यते। येन ह्यन्यत् किञ्चिदश्रुतपूर्वं शास्त्रं तस्मै न निर्ब्रूयादिदं निरुक्तशास्त्रमनास्फालितहृदयकुड्मलाय ॥ २। ३।७॥

## नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ॥ ८ ॥

किं कारणम्? "नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया"। यो हि न विजानाति नावबुध्यते, तस्याविज्ञातुर्नित्यकालमेव विज्ञाने असूया, स ह्यनवबुध्यमान आत्मीयं दोषमाचार्य्य एवावसृजति,—स्वयमेव तावदयं नावबुध्यते किमस्मान् बोधयिष्यतीति। एतस्मात् कारणादश्रुतपूर्वान्यशास्त्रायाखिन्नमनसे नेदं निर्ब्रूयात् ॥ २ । ३ । ८ ॥

( अथ ग्राह्यशिष्यनिरूपणम् )

## उपसन्नाय तु निर्ब्रूयाद्यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा ॥ ९ ॥ ३॥

१ 'किमपि' ॥ २ कस्मिंश्चित्पुस्तके—'तस्मै वैयाकरणायापि इदं वेदितुमसमर्थाय अनिदंविदे नैव निर्ब्रूयात्। अनिदंविदेव वैयाकरणोऽपि जडः कश्चिदसमर्थ एव वेदितुं स्यात्, बहु वेदितमन्यत्रास्ति, देवतादि किञ्चित्।' इतीत्थं पाठव्यत्ययो दृश्यते। ३ 'य खि' ॥

"उपसन्नाय तु निर्ब्रूयात् यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा" । य एव तु मेधावी स्यात्—अन्यजन्मान्तरानुभावितया प्रज्ञया युक्तः, यो वा तपस्वी, कामं ताभ्यामवैयाकरणाभ्यामपि निर्ब्रूयादेव,—न हि तयोरसाध्यं किञ्चिदस्ति,—तपसा हि स्वयमपि वेदार्थः प्रादुर्भवेदेव । यथा मन्त्राः प्रादुरभूवन् पूर्वेषामृषीणाम् । मेधाव्यपि च स्वयमप्युत्प्रेक्षितुं शक्नुयात्, किमुतोच्यमानमवबोद्धुम् । यो वान्यः कश्चिदलं पर्य्याप्तो विज्ञातुमेतच्छास्त्रं भवेत्, दृढग्राही स्थिरबुद्धिः, तस्मै निर्ब्रूयादेव सर्वथा यतात्मने विदितवेदाङ्गाय वेदार्थे ब्राह्मणाय । अनुपसन्नाय नैव निर्ब्रूयात्, यद्यपि तपस्वी, मेधावी, दृढग्राही वा ॥

उक्तं हि—

"यश्चान्यायेन निर्ब्रूयाद्यश्चान्यायेन पृच्छति ।
तयोरन्यतरो मृत्युं विद्वेषं वाऽधिगच्छति" ॥ इति ॥ २ । ३ । ९ ॥ *

"वि॒द्या ह॒ वै ब्रा॑ह्म॒णमा॑जगाम॒ गो॒पा॑य मा शे॒व॒धि॒ष्टेऽ॒हम॑स्मि ।
अ॒सू॒य॒का॒या॒नृ॒ज॒वे॒ऽय॒ता॒य॒ न मा॒ ब्रू॒या वी॒र्य॑वती॒ तथा॑ स्याम्" ॥ १ ॥

अथाप्येतमर्थमधिकृत्योदाहरन्ति—"विद्या ह वै ब्राह्मणमाजगाम"—इति । विद्या किल कामरूपिणी भूत्वा विद्याधिदेवता वा संयतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणं प्रति कश्चिदाजगाम । तमेत्य प्रह्वीभूतोवाच—। किम् इति ? "गोपाय मा" रक्ष माम् । ततः "ते" "अहं" गुप्ता सती "शेवधिः" भविष्यामि, सुखनिधानमित्यर्थः । आह—कुतः पुनस्त्वां रक्षामि ? उच्यते—" असूयकायानृजवेऽयताय " असूयकः परापवादशीलः । अनृजुः यस्य मनोवाग्देहेषु असमाः प्रवृत्तयः । अयतः विप्रकीर्णेन्द्रियः—यत्किञ्चनकारी अशुचिः । एवंलक्षणाय "न मा ब्रूयाः" त्वम् । किं तथा भविष्यति ? "वीर्य्यवती तथा" अहं तव "स्याम्" भवेयमित्यर्थः ॥ २ । ४ । १ ॥

य आ॒तृ॒ण॒त्त्यवि॑तथेन॒ कर्णा॑वदुः॒खं कु॒र्वन्न॒मृतं॒ स॒म्प्रय॑च्छन् ।
तं म॑न्येत पि॒तरं॑ मा॒तरं॑ च॒ तस्मै॒ न द्रु॑ह्येत्कत॒मच्च॒नाह॑ ॥ २ ॥

"य आतृणत्त्यवितथेन कर्णौ" । अधुना शिष्योपदेशमाह—य आतृणत्ति, आभिनत्ति, अपिहिताविव सन्तौ कर्णौ विवृणोति । अवितथेन, सत्येन ब्रह्मणा ॥ कथं पुनरातृणत्ति ? "अदुःखं कुर्वन्नमृतं सम्प्रयच्छन्" । यो हि किञ्चिदातृणत्ति, स दुःखयति, अयं पुनः

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ऽध्यायस्य तृतीयः खण्डः ॥ ३ ॥' इति द्रष्टव्यम् ॥

सुखमातृणत्ति। किञ्च, अमृतत्वप्राप्तिहेतुं ज्ञानं सम्प्रयच्छन्॥ आह—य आतृणत्ति तस्मै किम् इति? उच्यते—"तं मन्येत पितरं मातरं च" नेतरौ मातापितराविंत्यभिप्रायः।
उक्तं च,—

"उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता॥
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥ (म० सं० २, १४६)"॥

"तस्मै" मातापितृभूताय गुरवे "न द्रुह्येत्"। "कतमच्चनाऽह"—कदाचिदपि आपद्यपि कष्टायामित्यभिप्रायः॥२।४।२॥

"अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्"३॥

अधुना इतरान् दुष्टशिष्यान् अभिशपन्तो विद्या इदमाह,—"अध्यापिता ये गुरुं नाद्रियन्ते" इत्यादि। अध्यापिताः सन्तो ये गुरुं प्रति नाद्रियन्ते, नादरं कुर्वन्ति॥ के पुनस्ते इति? उच्यते—"विप्राः" मेधाविनः सन्तो गृहीतविद्याः॥ कथं पुनर्नाद्रियन्ते? "वाचा मनसा कर्मणा वा"॥आह—किं तेषाम् इति? उच्यते—"यथैव" "ते" तस्य "गुरोः" "न" "भोजनीयाः" न भोज्याः, न भोजनार्हाः, "तथैव" "तान्" "तत्" "श्रुतम्" अपि "न भुनक्ति" न पालयति, श्रुतफलेन न संयुनक्तीत्यर्थः॥२।४।३॥

"यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम्।
यस्ते न द्रुह्येत् कुतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति"।
निधिः शेवधिरिति॥४॥४॥

अधुना यस्मै वक्तव्या, तस्य लक्षणं ब्रवीति—"यमेव" "विद्याः" जानीयाः, त्वम्। "शुचिमप्रमत्तम्" यमनियमेषु। "मेधाविनं" च "ब्रह्मचर्य्योपपन्नम्"। किञ्च, "यः ते न द्रुह्येत्" न द्रोहमुपगच्छेत्। "कतमच्चनाह" कदाचिदपि सर्वास्वप्यापत्सु "तस्मै मा" माम् "ब्रूयाः" त्वम् "निधिपाय" गोप्त्रे "ब्रह्मन्!"॥
आह—"निधिः" कः? इति। उच्यते—"शेवधिः" "इति" शेव इति सुखनाम,

१ 'किं वा'॥ २ "प्रेत्य चेह च विप्रस्य ब्रह्मजन्म हि शाश्वतम्"॥

सुखनिधानमित्यर्थः । ब्रह्मकोशो हि निधिः सुखानां कृत्स्नस्य जगतो यज्ञद्वारेण, अत इदमुक्तं निधिः शेवधिरिति ॥ २ । ४ । ४ ॥ *

( विशेषव्याख्यया तत्त्वपर्यायभेदसंख्यासंदिग्धोदाहरणतन्निर्वचनव्यवस्था )

## अथातोऽनुक्रमिष्यामः ॥ १ ॥

"अथातोऽनुक्रमिष्यामः" ॥ "समाम्नायः समाम्नातः, स व्याख्यातव्यः"—इति प्रतिज्ञातम् ( १ । १ । १ ) । सा च पुनरियं व्याख्या सामान्या वैशेषिकी च । तत्र सामान्या,—सर्वेषां नाम्नामिदं सामान्यलक्षणम्, इदमाख्यातानाम्, इदमुपसर्गाणाम्, इदं निपातानाम्—इति । सोऽयमनयैव प्रकारया व्याख्यया कृत्स्नः समाम्नायो व्याख्यातः, तदनुषक्तान्येव च शास्त्रारम्भप्रयोजनान्युक्तानि, आगमश्च परिशोधितः, वेदवेदाङ्गव्यूहश्च सप्रयोजन उक्तः, निघण्टुसमाम्नायविरचना चोपदिष्टा[२] प्रकरणत्रयविभागेन, निर्वचनलक्षणं चानेकप्रपञ्चमुक्तम् ॥

अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्यः, तदधिकारार्थोऽयम् "अथ" शब्दः । "अतः" शब्दः क्रमे हेतौ वा, । सामान्यव्याख्यानादनन्तरं विशेषव्याख्यानम्, तदधिकारार्थमेवावसरप्राप्तमित्येवं क्रमे । अथवा हेतौ यस्मात् सामान्यतः समाम्नायो व्याख्यातः अत इदानीं विशेषतः "अनुक्रमिष्यामः" आनुपूर्व्येण क्रमिष्यामो वर्णयिष्यामः, व्याख्यायेति शेषः ॥ नैघण्टुकान् -

आह—किंलक्षणा पुनरसौ व्याख्या ? इति । उच्यते—तत्त्वपर्य्यायभेदसङ्ख्यासंदिग्धसन्दिग्धोदाहरणतन्निर्वचनविभागेन यदाख्यानं सा व्याख्या नैघण्टुके प्रकरणे । तद्यथा, तत्त्वम्—"गौरिति पृथिव्या नामधेयम्"—इत्येवमादि । पर्य्यायवचनम्-प्रसिद्धेनाभिधानेनाप्रसिद्धस्यार्थस्य ख्यापनम्, तद्यथा—पृथिव्या नामधेयं गौरिति । भेदो व्युत्पत्तिरिति समानार्थः, तद्यथा—"यद् दूरं गता भवति"—इत्येवमादि । संख्या, तद्यथा—"पृथिवीनामधेयान्येकविंशतिः" । सन्दिग्धम्,—"तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या सन्दिह्यते"—इत्येवमादि । सन्दिग्धोदाहरणम्, "य ईं चकार" इत्येवमादि । तन्निर्वचनम्—"बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः"—इत्येवमादि । एवंप्रकारया व्याख्यया इदं नैघण्टुकप्रकरणं व्याख्यास्यते ॥ २ । ५ । १ ॥

---

१ 'ब्रह्मलोको हि नि'॥ * इतोग्रे–इति निरुक्तव्याख्यायां द्वितीया(सप्तमा) ध्यायस्यचतुर्थः खण्डः ॥ ४ ॥इति द्रष्टव्यम् ॥ "इति जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां ( द्वितीया सप्तमा ) ध्यायस्य प्रथमः पादः ॥ १ ॥" इति तूपलभ्यते ॥
२ 'चोदिष्टा' ॥

# अथ निघण्टुः।

गौः। ग्मा। ज्मा। क्ष्मा। क्षा। क्षमा। क्षोणिः। क्षितिः। अवनिः। उर्वी। पृथ्वी। मही। रिपः। अदितिः। इळा। निर्ऋतिः। भूः। भूमिः। पूषा। गातुः। गोत्रेत्येकविंशतिः पृथिवीनामधेयानि ॥ १। १ ॥

(अथ पृथिवीनामसु गोशब्दनिर्वचनम्)

गौरिति पृथिव्या नामधेयम्। यद् दूरङ्गता भवति। यच्चास्याम्भूतानि गच्छन्ति। गातेर्वौकारो नामकरणः ॥२॥

"गौरिति पृथिव्या नामधेयम्" ॥ आह—यस्मात् कारणाद् द्रव्ये शब्दनिविशो[1] नैरुक्तानां, तदुच्यतां कारणं, केन कारणेन गोशब्दः पृथिव्यां सन्निविष्टः ? इति। उच्यते-"यत्" यस्मात् इयं "दूरम्" अध्वानं प्रति "गता भवति" न ह्यस्या अन्त उपलभ्यते, "यत्" यस्मात् "च" "अस्यां भूतानि गच्छन्ति" आधारभूतायाम्। एवं कर्तृकारकमधिकरणं वा योज्यम्। "गातेर्वा", "गाङ् गतौ (भू० आ०)"—इत्यस्य धातोः "ओकारो नामकरणः" प्रत्ययः ॥ २। ५। २ ॥

अथापि पशुनामेह भवत्येतस्मादेव ॥ ३ ॥

"अथापि" गौरित्येतत् "पशुनाम" "भवति" "इह" एव कारकद्वये, "एतस्मादेव" धातुद्वयाद् गमेर्गातेर्वा ॥ २। ५। ३ ॥

अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति "गोभिः श्रीणीत मत्सरम्" इति पयसः।

मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः।

मत्सर इति लोभनामाभिमत्त एनेन धनं भवति।

---

१ 'शब्दनिर्देशो' ॥

पयः पिबतेर्वा प्यायतेर्वा ।
क्षीरं क्षरतेः ।
घसेर्वेरो नामकरण उशीरमिति यथा ॥ ४ ॥

"अथाप्यस्याम्" एव पशुगवि "ताद्धितेन" प्रयोगेणाकृत्स्नायां सत्यां "कृत्स्नवन्निगमा भवन्ति"। तद्यथा,—"गोभिः श्रीणीत मत्सरम् इति" गोरेकदेशस्य "पयसः" कृत्स्नवत् प्रयोगः । तदेतच्छिष्यबुद्धिव्युत्पादनार्थमनेकप्रकारं शब्दवृत्तिविषयोपप्रदर्शनं क्रियते, कथं नामोपप्रदर्शितशब्दवृत्तिविषयोऽसंमुह्यन् मन्त्रार्थान् निर्ब्रूयादिति ॥

"आधावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना ।
गोभिः श्रीणीत मत्सरम् ॥ ( ऋ० सं० ७, १, ३, ४ )" ।

इमां गायत्रीमयास्य आङ्गिरसोऽपश्यत् । ग्रावस्तुतौ विनियुक्ता । हे अध्वर्य्यवः ! एभिः ग्रावभिः संस्कृत एष सोमः । ते यूयं हे 'सुहस्त्यः' सुवर्णेनालङ्कृतहस्ताः ॥ किम् ? 'आधावत' । 'आ' 'गृभ्णती' गृह्णीत, एतौ 'शुक्रा' 'मन्थिना' ग्रहावनतिक्रान्तकालम् । किञ्च, 'गोभिः' गोभ्योऽभिनिष्पन्नेन क्षीरेण 'श्रीणीत' एनम् 'मत्सरं' मादयितारं सोमं मैत्रावरुणग्रहतामुपगतम् । 'श्रृतशीतेन तृतीयसवने वा पूतभृत्याशिरेण ततोऽनतिक्रान्तकालं जुहुत' एवं मन्त्रविधानादशक्यत्वाच्च गोभिः श्रपणस्य गव्येन पयसेति गम्यते ॥

"मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः" तृप्यन्ति हि अनेन देवताः ॥

शब्दसामान्यप्रसङ्गप्रसक्तमुच्यते,—"मत्सर इति लोभनामाभिमत्त एनेन धनं भवति" । तेन ह्याविष्टो धनाभिमुख्येन मत्तो भवति ॥

पर्यायाख्यानप्रसक्तं निरुच्यते,—"पयः पिबतेर्वा पानार्थस्य" ( अदा० प० ), पीयते हि तत् । "प्यायतेर्वा" वृद्ध्यर्थस्य ( भू० आ० ), तेन हि वर्द्धन्ते प्राणिनः ॥

प्रसक्तानुप्रसक्तं निरुच्यते,—"क्षीरं क्षरतेः" श्च्योतनार्थस्य ( भू० आ० ), श्चोतते हि तदूधसः । "घसेर्वेरो नामकरणः" अदेर्घस आदेशः क्रियते, अतस्तेनैव सिद्धरूपेण निर्दिश्यते । धात्वन्तरामिति वा केचित् । ज्ञापकं च ददाति,—"उशीरामिति यथा" । "वश कान्तौ ( अदा० प० )" तस्य कृतसम्प्रसारणस्य ईरप्रत्ययेनोशीरमिति भवति । तद्धि सौगन्ध्याक्रान्तं भवति ॥ २ । ५ । ४ ॥

"अंशुं दुहन्तो अध्यासते गवि" इत्यधिषवणचर्मणः । अंशुः शमष्टमात्रो भवति । अननाय शम्भवतीति वा ॥
चर्म चरतेर्वोच्चृत्तं भवतीति वा ॥ ५ ॥

"अंशुं दुहन्तो अध्यासते गवीत्यधिपवणचर्मणः"। कृत्स्नवदभिधायकः ।

"ते सोमादो हरी इन्द्रस्य निंसतेऽशुं दुहन्तो अध्यासते गवि ।

तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्द्धते प्रथते वृषायते॥ (ऋ०सं०८,४,३०,४)"।

एषा जगती । अर्बुदो नाम काद्रवेयः सर्पऋषिः, तस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । 'ते' एते ग्रावाणः 'सोमादः' सोमभक्षयितारः यदाभिषवणकर्मणि प्रवर्त्तन्ते, अथ तदा 'हरी इन्द्रस्य' अश्वौ, यज्ञागमनार्थमेतेषां शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ, रथे योगमिच्छन्तौ, आत्मना ऋजीषं[1] भक्षयिष्यन्तौ, इन्द्रं च सोमं पाययिष्यन्तौ, स्वयमेव 'निंसते' नीचैर्नमिते 'युक्तौ आवां हे इन्द्र ! गच्छ यज्ञायतनं संस्कृतः सोमः' इति । तदैव च ऋत्विजोऽपि त्वरमाणा इन्द्रोपस्थानकालमभ्यूर्ण[2] मन्वानाः 'अंशुं' सोमांशम् अभिषुत्य 'दुहन्तः' प्रपूरयन्तः । 'गवि अधि' गोरुपरि गोरवयवे अधिषवणचर्मणि । एतत् कर्म कुर्वाणा इन्द्रं प्रतीक्षमाणाः 'आसते' अथ स 'इन्द्रः' एत्य 'तेभिः दुग्धम्' ऋत्विग्भिः प्रक्षारितं[3] 'पपिवान्' पीतवान् 'सोम्यं मधु' सोममयम् । तेन तृप्तः । तृप्त्यनन्तरं[4] 'वर्धते' वीर्येण । 'प्रथते' च शरीरेण विस्तीर्यते, विस्तीर्णश्च स्वेन वीर्येण मेघं विदार्य 'वृषायते' वर्षं प्रवर्त्तयते । तदिदं सर्वमपि वर्षादि जगदनुग्राहकमैन्द्रं कर्म । अभिषवद्वारेण सोमाभिषवग्रावाधीनामित्येवं ग्रावस्तुतिः ॥

निगमप्रसक्तं निरुच्यते,—"अंशुः शमष्टमात्रो भवति" । अष्टमात्रो व्याप्तमात्रो हि स यजमानेन । तस्यैव शं भवति, सुखी भवति । इष्टसोमो ह्यनृणोऽहमिति विगतमनोदुःखो भवति । "अननाय शं भवतीति वा" अननाय जीवनाय शं सर्वेषां भूतानां भवति, सुखी भवतीति वा । यज्ञो हि वर्षे प्रवृत्तिहेतुस्ततश्च सर्वभूतानि सुखं जीवन्ति ॥

व्याख्यानप्रसक्तं निरुच्यते—"चर्म चरतेर्वा" चरितं हि तत्सर्वस्मिन् शरीरे गतमित्यर्थः । "उच्चृत्तं भवतीति वा" उच्चृत्तम् उत्कर्तितं शरीरादिति च ॥ २ । ५ । ५ ॥

**अथापि चर्म च श्लेष्मा च । "गोभिः सन्नद्धो असि वीळयस्व" इति रथस्तुतौ ॥ ६ ॥**

"अथापि चर्म च श्लेष्मा च" गोशब्देनोच्यत इति शेषः । "गोभिः सन्नद्धो असि वीळयस्वेति रथस्तुतौ" ॥

"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ॥

गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥ (ऋ० सं० ४, ७, ३५, १) । (य० वा० सं० २९, ५२) (अथर्व० सं० ६, १२५)" ॥

---

१ ऋजीषम्—कण्डितं निश्च्योतितरसं सोमलताकाण्डम्—इत्यर्थः । यतस्तृणवद्धि तत् ॥
२ 'मारभ्यग्रं' 'मभ्यग्रं' ॥ ३ 'क्षालितं' 'प्रचारितं' ॥ ४ 'तत्पानान' "ततोऽनन्त"

स हि चर्मणावनद्धो भवति, श्लेष्मणा च तस्य अरादयः संश्लेषिता भवन्ति॥२।५।६॥

अथापि स्नाव च श्लेष्मा च।
"गोभिः सन्नद्धा पतति प्रसूत" इतीषुस्तुतौ ॥ ७ ॥५॥

"अथापि स्नाव च श्लेष्मा च" गोशब्देनोच्यत इति शेषः। "गोभिः सन्नद्धा पतति प्रसूतेतीषुस्तुतौ"॥

"सुपर्णं वस्ते मृगोऽअस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता॥
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥ (ऋ० सं० ५, १, २१, १)। (य० वा० सं० २९ ४७)"।

सा हि स्नाव्ना वेष्टिता भवति, श्लेष्मणा च संश्लेषिता॥ २। ५। ७॥

ज्यापि गौरुच्यते गव्या चेत्ताद्धितमथ चेन्न गव्या गमयतीषूनिति॥

"ज्यापि गौरुच्यते"। सा पुनः "चेत्" यदि "गव्या ताद्धितम्" अभिधानम्, "अथ" पुनः "न चेत् गव्या, गमयतीषूनिति" गौरन्यद्रव्यम्॥ * ॥

"वृक्षेवृक्षे नियतामीमयद्गौस्ततो वयः प्रपतान्पूरुषादः।"
वृक्षेवृक्षे धनुषिधनुषि।
वृक्षो व्रश्चनात्।
वृत्वा क्षां तिष्ठतीति वा। क्षा क्षियतेर्निवासकर्मणः।
नियतामीमयद्गौः शब्दं करोति। मीमयतिः शब्दकर्मा।
ततो वयः प्रपतन्ति पुरुषानदनाय।
विरिति शकुनिनाम वेतेर्गतिकर्मणः॥
अथापीषुनामेह भवत्येतस्मादेव॥ १ ॥

---

१ 'न्यदद्रव्य'॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा) ध्यायस्य पञ्चमः खण्डः॥ ५॥' इति दृश्यते तद् 'ज्यापि गौरुच्यते' इत्यतः प्रागुचितं द्रष्टव्यम्॥

"वृक्षेवृक्षे नियताममीमयद्गौस्ततो वयः प्रपतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ ( ऋ० सं० ७, ७, १८, २ )" ॥

वसुक्रस्येन्द्रपुत्रस्येदमार्षम् । त्रिष्टुवैन्द्री । महाव्रते मरुत्वतीये शस्यते । इन्द्रो भगवानैश्वर्य्ययोगात् संग्रामेष्वनेकबाहुर्भूत्वानेकानि धनूंष्यादत्ते, तानि मन्त्रदृग्दृष्ट्वैवमाह,— "वृक्षेवृक्षे" वृक्षावयवे "धनुषिधनुषि" यावन्तीन्द्रेण गृहीतानि धनूंषि, तेषु सर्वेषु प्रत्येकं "नियता" निबद्धा, "गौः" गव्या, गमयित्री वा शराणाम्, इन्द्रबाह्वाकृष्टा "अमीमयत्" मीमयति "शब्दं करोति" । जात्यभिप्रायेणैकवचनम् । "ततः" शब्दकरणानन्तरमेव "प्रपतान्" "प्रपतन्ति" "वयः" ॥ अथवा 'ततः ततो धनुषः 'वयः' पक्ष्यवयवपत्रसम्बन्धात् इषवोऽपि वयः पक्षिणः ॥

अथवा "वेतेर्गतिकर्मणः" । साक्षादेव इषवः वयः न गुणवृत्त्या । ते प्रपतान् प्रपतन्ति "पुरुषानदनाय" भक्षणाय, ते हि शत्रूणां प्राणान् भक्षयन्ति ॥ 'अथ' अयमेवमतिप्रभाव इन्द्र इति ज्ञात्वा 'इदं' 'विश्वं' सर्वं 'भुवनं' भूतजातं यावत् किञ्चिदविकृतं कर्मणि 'भयाते' बिभेति । अथ बिभ्यत् किं करोति ? 'इन्द्राय' इन्द्रार्थं 'सुन्वत्' अभिषवम् उचिते काले कुर्वत् 'ऋषये च' ऋत्विजे 'शिक्षत्' दक्षिणां ददते । इन्द्रोन्मुखमादरवदास्ते सर्वमन्यत् परिहाय । य एवंप्रभाव इन्द्रः, तं वयमभिप्रेतार्थसिद्धये स्तुमः ॥

निगमप्रसक्तं निराह,—"वृक्षो व्रश्चनात्" इति । स हि वृश्च्यते छिद्यते इन्धनार्थम् ॥

अत्र व्याख्याने गतार्थत्वात् न [ वि ] शेषो विविच्यते ॥ २ । ६ । १ ॥

## आदित्योऽपि गौरुच्यते । "उतादः परुषे गवि ।" पर्ववति भास्वतीत्यौपमन्यवः ॥ २ ॥

एवं तावदेकदेशो कृत्स्नवदभिधानं भवतीति प्रदर्शितम् ॥ अथेदानीमन्येष्वर्थान्तरेषु गोशब्दोऽभिप्रसृतो बहुष्वित्येतत् प्रसङ्गतो दर्शयति । एतद्धैकपदिके वक्तव्यमिह तु गोशब्दप्रसक्तमुच्यते,—"आदित्योऽपि गौरुच्यते" एतस्मिन् मन्त्रे—।

" उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् ।
न्यैरयद्रथीतमः ॥ ( ऋ० सं० ४, ८, २२, ३ )" ।

१ 'दधिक्र'॥ २ 'मन्त्रव्याख्यान' ॥

भरद्वाजस्येयमार्षम् । गायत्री । पौष्णी । पूषा पुनरादित्यो नैरुक्तानां दृष्ट्या, अन्यत्र इयं वै पूषेति भूमिरुच्यते । "उतादः" उत, अपि, अथ इति च्छन्दसि समानार्थाः । अपि चक्रमीरयति, अपि रसानादत्ते, अपि तमांस्यपहन्ति । अदः अमुष्मिन् आदित्यमण्डले "परुषे" "पर्ववति" पर्वभिस्तद्वाति । अथवा "भास्वति" भासा तद्वतीति । अहोरात्रादि पर्व तद्वति "इत्यौपमन्यवः" "गवि" गमनशीले मुहूर्त्तमप्यनवस्थायिनि 'सूरः' सूर्य्यः अवस्थितः । पूषा आदित्यमण्डलान्तःपुरुषः, तदेव पर्ववत् भास्वद् वा । 'चक्रं' चकनं क्रमणं वा गमनशीलं मण्डलं 'हिरण्ययं'[२] तेजोमयं चक्रं चक्राकृति 'न्यैरयत्' नियतगमनवृत्तिना मार्गेण नित्यकालमरियति । उदयास्तमयमध्यन्दिनकालोपलक्षणार्थम् । अथवा अमुष्मिन् मण्डलेऽवस्थितः पर्ववति मण्डलान्तः पुरुषः सूर्य्यो भगवान् । चक्रं लवक्षणनिमेषघटिमुहूर्त्ताहोरात्रार्द्धमासमासर्त्त्वयनवत्सरलक्षणं कालचक्रं सर्वभूतहारि हिरण्ययं हिरण्मयं सर्वभूतविनाशस्थितिहेतुं न्यैरयत् नित्यमीरयाति । कीदृशः पुनः स सूर्य्य ईरयति ? रथीतमः अन्येऽपि रथिनः सन्ति, अयं तु मुहूर्त्तमप्यनवस्थितरथ इत्यतो रथीतमः । य एवंगुणयुक्तः पूषा, तं वयमभिप्रेतार्थसिद्धये स्तुमः ॥ २ । ६ । २ ॥

## अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्—आदित्यतोऽस्य दीप्तिर्भवतीति । "सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः" इत्यपि निगमो भवति ॥ ३ ॥

"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्—आदित्यतोऽस्य दीप्तिर्भवति—इति ॥" एको रश्मिरादित्यस्य सुषुम्णो नाम चन्द्रमसं प्रत्यवस्थितो[३] दीप्यते । तदेतेन मन्त्रार्थविदा मन्त्रानुपेत्य ईक्षितव्यं द्रष्टव्यम् । येयमस्य चन्द्रमसो दीप्तिः ज्योत्स्ना सेयम् आदित्यतः आदित्यरश्मेरनुग्रहादेव अस्य भवति—इति । अम्मयं हि चन्द्रमसो मण्डलं तत्तत्तेजःसम्बन्धाद् दीप्तिमद् भवति, ततः सर्वा दिशः प्रकाशयति ।

यथा चैतदेवं तथा "सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" । "सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ( य० वा० सं० १८, ४० )" ।

राष्ट्रभृत्सु हस्तग्रहहोमे ॥ अप्ययमन्ये बहव इत्यपिशब्दः । 'सुषुम्णः' सुष्ठुसुम्नः सुष्ठुसुख

---

१ 'पौष्णे सूक्ते' ॥ २ सूर्यस्य रथमपि हिरण्ययमेवावर्णयत् 'हिरण्ययेन सविता रथेन' इति । युज्यते च हिरण्ययरथस्य चक्रेपि हिरण्यत्वमेव ॥ ३ 'अस्मदुपरि यच्चन्द्रम' 'अस्यायं हि' ॥

इत्यर्थः । सर्वाणि भूतानि नित्यमसौ ह्लादयति ॥ कोऽसौ इति ? 'सूर्य्यरश्मिः' सूर्य्या-न्निःसृत्य चन्द्रमसं प्रति गतः 'चन्द्रमा गन्धर्वः' सति सुषुम्णगमने गोशब्दवाच्यता (?) 'तस्य' गन्धर्वस्य सतः चन्द्रो धारयिता गन्धर्वः स हि तस्य प्रतिष्ठा । 'स न इदं' सोऽस्मा-कमिदं 'ब्रह्म क्षत्रं' च 'पातु' रक्षतु । किञ्च, 'तस्मै' सुषुम्णाय सूर्य्यरश्मये 'स्वाहा' सु शोभनमिदमाभिमुख्येनाह, हविराज्यलक्षणमस्तु । स चेदं 'वाट्' वेतु पिबत्वि-त्यर्थः ॥ २ । ६ । ३ ॥

**सोऽपि गौरुच्यते—"अत्राह गोरमन्वत" इति। तदुपरिष्टाद् व्याख्यास्यामः ॥ ४ ॥ ६ ॥**

"सोपि गौरुच्यते" सोऽपि सुषुम्णो रश्मिरेक एव गौः—इति उच्यते ॥ यथासौ गौस्तथेदमुदाहरणम्,—"अत्राह गोरमन्वतेति" "तत्" पुनरेतत् "उपरिष्टात्" ऐकप-दिके ( ४ । २५ । १ )व्याख्यास्यामः" ॥ २ । ६ । ४ ॥

**सर्वेऽपि रश्मयो गाव उच्यन्ते ॥**

"सर्वेऽपि रश्मयो गाव उच्यन्ते" । यथैतदेवं तथेयमृगुदाहियते *

**"ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ।" तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो बहु-शृङ्गाः ॥ भूरीति बहुनो नामधेयं प्रभवतीति सतः ॥ शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा ॥ अयासोऽयनाः ॥ तत्र तदु-रुगायस्य विष्णोर्महागतेः परमं पदं पराध्यर्स्थमवभाति भूरि ॥ पादः पद्यतेः ॥ तन्निधानात्पदम् ॥ पशुपाद-प्रकृतिः प्रभागपादः ॥ प्रभागपादसामान्यादितराणि पदानि ॥ १ ॥**

---

१ 'यथा स' ॥ २ 'दाहरणम्' ॥ * 'इतोग्रे—इति निरुक्तव्याख्यायां द्वितीया-( स्सप्तमा ) ध्यायस्य षष्ठः खण्डः ॥६॥' इति दृश्यते तत् "सर्वेपि रश्मयः—" इत्यतः प्राक्समुचितं द्रष्टव्यम् ॥

"ता वां वास्तूनि"—इति। दीर्घतमस आर्षम्। वैष्णवी। त्रिष्टुप्। यूपावधाने[1] विनियुक्ता, सोमातिरेकशस्त्रे च। वामिति दम्पती अभिप्रेत्य द्विवचनम्। ता "तानि" "वा" युवाभ्यामर्थाय वास्तूनि निवासस्थानानि "उश्मसि" "कामयामहे" "गमध्यै" "गमनाय" "यत्र" येषु स्थानेषु। किम्? "गावः" रश्मयः। "भूरिशृङ्गाः" "बहुशृङ्गाः" बहुदीप्तयः "अयासः" अयनाः मुहूर्त्तमप्यनवस्थायिनः। किञ्च, "अत्राह" तेषु स्थानेषु "तत्" "पदम्" "उरुगायस्य"[2] उरुगमनस्य महागतेः भगवतो "वृष्णः"[3] "विष्णोः" "परमं पदम्" आदित्यमण्डलं स्थानम्। स्थाने हि पदसञ्ज्ञा, पदस्थ इति लोकेऽपि वक्तारो भवन्ति। "अवभाति" अर्वागिदं सर्वं कृत्वा भाति दीप्यते। "भूरि" बह्वित्यर्थः। इति समस्तार्थः॥

अथैकपदनिरुक्तम्—। "भूरीति" एतत् "बहुनो नामधेयम्"। "प्रभवति" हि तद् बहुधापि दीयमानम्। "शृङ्गं श्रयतेः" तद्ध्याश्रितं भवति शिरसि। "शृणातेर्वा" हिंसार्थस्य। तेन हि हिनस्ति। "शिरसो निर्गतमिति वा" शृङ्गम्॥ परमेऽर्द्धे स्थितं "पराद्ध्र्यस्थम्"[3]। अथवा परमयर्द्ध्या युक्ते स्थाने स्थितं पराद्ध्र्यस्थम्। "पादः पद्यतेः" गत्यर्थस्य। पद्यते हि तेन॥ "तन्निधानात् पदम्" यदुत्पद्यते तत्सरूपमेव पांसौ अन्यत्र वा, तत् पदमित्युच्यते पशोर्मनुष्यस्य वा "पशुपादप्रकृतिः"॥ चतुर्भागसामान्यात्—"प्रभागपादः" दीनारादिपादः॥ "प्रभागपादसामान्यादितराणि पदानि" ग्रन्थपदानि क्षेत्रपदानि वा। विभागो हि तेष्वपि समान एव॥ २।७।१॥

**एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते तानि चेत् समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नाना निर्वचनानि यथार्थं निर्वक्तव्यानीति॥ २॥**

प्रसक्तानुप्रसक्तमिदमुक्तम्, अधुनोपसंहरति,-"एवमन्येषामपि सत्त्वानां" यानि नामानि तेषु "सन्देहा विद्यन्ते" न केवलं गोशब्दे पदशब्दे वा। तेषु [ हि ] त्वेतदौत्सर्गिकं निर्वचनलक्षणं द्रष्टव्यम्—॥ "तानि चेत् समानकर्माणि" यदि सामान्यक्रियया युक्तानि, ततः

---

१ 'यूपविधा'॥ २ उरुगायस्य बहुभिर्गीयमानस्य स्तुत्यस्य—इति सायणः॥ ३ वृष्ण इत्यत्र वृष्णिशब्दस्यान्त्यस्येकारस्य च्छान्दसे लोपेऽङ्गीकृते 'वृष्णिकुलोत्पन्नस्य श्रीकृष्णाख्यस्य विष्णोः परमं पदं स्थानं व्रजनामकमित्यपि गूढोऽभिप्रायः। निरुक्तरीत्या गोलोकस्य प्रतीतिर्भवत्येवेति गोलोक एव व्रजमण्डलमिति सर्वेषामास्तिकानां सिद्धान्तः। 'मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः' इत्युक्तेः॥ ३ 'परार्ध्यम्'॥

"समाननिर्वचनानि" एव कर्त्तव्यानि ॥ अथ पुनः "नानाकर्माणि" ततः "नानानिर्वचनानि" । एवं "यथार्थं निर्वक्तव्यानीति" ॥ २ । ७ । २॥

**इमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि । तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या सन्दिह्यते । तयोर्विभागः ॥ ३ ॥ ७ ॥**

अधुनैवमुक्त्वोदाहरणैरेव तत्र सन्देहपदान्यनुक्रम्य मन्त्रेष्वेव दर्शयन्नाह,—"इमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा" । लोकेषु हीदं सर्वं भूतजातमन्तर्भूतम्, यदभिधानानि यदाश्रयक्रियावचनाश्च शब्दा निघण्टव उच्यन्ते, तेषां च पृथिवी प्रथमा, तस्मात् तत आरम्भः । एकविंशतिरिति संख्या २१ । पृथिवीनामधेयानि, स्वार्थे धेयप्रत्ययः, नामैव नामधेयम् । अनुक्रान्तानि, आनुपूर्व्येण पठितानीत्यर्थः । एकविंशतिर्यान्यनुक्रान्तानि, एभ्योऽन्यान्यपि यानि कानिचित् स्युः, तान्युपलभ्य निर्वक्तव्यानि । तद्यथा,—कु इत्येतदसमाम्नातं पृथिव्या नामधेयम् ।

उक्तं हि—

'नाग्निचिन्नरकं याति न सत्पुत्रो न कुप्रदः'—इति ॥

तत्रैतस्मिन्नेकविंशके नामगणे निर्ऋतिः इत्येतदभिधानम् । निरमणात् निविष्टानि रमन्तेऽस्यां भूतानीति निर्ऋतिः पृथिवी । रमेर्धातोः ( भू० आ० ) । ऋच्छतेः(तु०प०) इतरा कृच्छ्रापत्तिः दुःखसञ्ज्ञिका, निर्ऋतिः पाप्मा । "सा" पुनरियं समाननामधेयत्वात् समानश्रुतित्वात् "पृथिव्या सन्दिह्यते" । "तयोः" समाननामधेयत्वेऽपि सति एष कर्मकृतो "विभागः"—एका निविष्टानां भूतानां रमयित्री, एका पुनः कृच्छ्रमापादयित्री । एवं नानाकर्माण्यभिधानानि निर्वक्तव्यानि ॥ २ । ७ । ३ ॥

**तस्या एषा भवति—**

"तस्याः" कृच्छ्रापत्तेः पृथिव्या अपि "एषा" निर्वाचिका ऋग् "भवति—" *

---

१ 'यथार्थं निर्वक्तव्यानि' इत्येतावदेवैतद् वाक्यम् 'इतीमा देवता अनुक्रान्ताः' (७।१३।१) इत्यत्रेवात्रापि 'इतीमान्येकविंशतिः—' इत्येवमेव भाष्यकारशैलीसिद्धत्वात् ॥ २ 'सद्वादी' ॥
* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य सप्तमः खण्डः ॥ ७ ॥ १ इति दृश्यते तत् "तस्याः" इत्यतः प्राक्समुचितम् ॥

"य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश ॥" बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः ॥ वर्षकर्मेति नैरुक्ताः ॥ य ईं चकारेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा । 'न सो अस्य वेद' मध्यमः स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् । 'स मातुर्योनौ' मातान्तारिक्षम्—निर्मीयन्तेऽस्मिन् भूतानि ॥ योनिरन्तारिक्षं महानवयवः परिवीतो वायुना ॥ अयमपीतरो योनिरेतस्मादेव, परियुतो भवति ॥ बहुप्रजा भूमिमापद्यते वर्षकर्मणा ॥ १ ॥

"य ईं चकार"—इति । दीर्घतमस आर्षम् । त्रिष्टुप् । महाव्रते वैश्वदेवे शस्त्रे शस्यते । "अयं स शिङ्क्ते"—इतीयमपि तथैव समानार्षविनियोगा । जगती । द्वे अप्येते अस्यवामीये ॥ कश्चित् "बहुप्रजाः' बह्वपत्यो दरिद्रः पुरुषः स दुष्पोषत्वादपत्यानां व्यापन्नत्वात् "कृच्छ्रं" दुःखम् "आपद्यते" । सा या तस्य कृच्छ्रापत्तिः, सैवैतस्यामृचि निर्ऋतिशब्देनोच्यते "इति" एषः "परिव्राजकाः" परिव्राजकानामस्यामृचि संक्षेपार्थः ॥ स एष विस्तरेण प्रदर्श्यते—"यः" "चकार" करोति "ईं" गर्भं "न सः" "अस्य" गर्भस्य तत्त्वं "वेद" केवलं त्वसौ कामार्त्तः पुत्रार्थी वा करोत्येव गर्भम् । "य ईं ददर्श" यश्चैनं पश्यति "हिरुग्" अन्तर्हितमेतस्मिन् जठरे, एतस्मिन् वा शरीरे । "ईं नु" जन्तुम् । "तस्मात्" तस्यैव एष गर्भो याथात्म्यतः प्रत्यक्षो भवत्यध्यात्मशास्त्रदृष्ट्या, नेतरस्य गर्भकर्त्तुः । "सः" पुनरेष गर्भो "मातुर्योना" गर्भाशयस्थाने "अन्तः" उदरे पुष्यति स मातुरशितपीतलीढभक्षितेन चतुर्विधाहारपरिणामेन, ततः "परिवीतः" जरायुणा परिवेष्टितो यथाकालं जायते । अथैवं "बहुप्रजाः' बहुशः प्रजायमानः स गर्भकर्त्ता गर्भतत्त्वमजानानः "निर्ऋतिं" दुःखम् "आविवेश" आविशतीत्यर्थः । एवं गर्भतत्त्वापरिज्ञानात् यो गर्भं करोति स दुःखमापद्येत, यस्तु अध्यात्मदृष्ट्या गर्भतत्त्वं वेद,

१ पूर्वमर्थतो व्याख्यातत्वात्प्रातिस्विकत्वेन न व्याख्यातमेतत् ॥

स गर्भकर्मणो निवर्त्तते, स निर्ऋतिमापद्यते । एवमस्यामृचि निर्ऋतिर्देवतैत्यैप[2] परिव्राजकार्थः ॥

अन्ये तु ब्रुवते,—यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहुषु प्रजायमानो जन्ममरणसन्तानानुबद्धां[3] निर्ऋतिमाविशति । यो रेतः सिञ्चति, तद् भूयोभूयोजन्मान्तरेषु बहुशः प्रजायमानो जन्ममरणसन्तानाननुभवतीत्युक्तम् ॥

“वर्षकर्मेति नैरुक्ताः” वर्षकर्मैतदुच्यते । निर्ऋतिश्चात्र भूमिरुच्यते । एवं नैरुक्ता मन्यन्ते । “य ईं चकारेति” यः करोति वर्षं,यो वा किरति क्षिपति । कः पुनरसौ ? मेघः । स हि वर्षस्य कर्त्ता विक्षेप्ता वा । मेघाद्धि वर्षं प्रवर्त्तते । किं तस्य ? न सोऽस्य वर्षस्य [ स ] तत्त्वं वेद कुतोऽप्येतदुदकं मय्यागच्छति यन्मया विसृज्यते । किं वा उदकस्य तत्त्वमिति केवलं त्वसौ विसृजत एवोदकम् । य ईं ददर्श य एव पश्यति एतद् वर्षं हिरुक् ईं नु तस्मात् अन्तर्हितम् अन्तरिक्षलोके तस्मात्तस्येत्यर्थः । तस्यैव प्रत्यक्षम् । तद्यथा—आत्मतो वर्षं नेतरस्य घनस्य मध्यस्थानस्य । स एव ह्यस्य वर्षस्य [ स ] तत्त्वं “वेद” यो ददर्श यः पश्यति “आदित्योपहितम्” आदित्यस्य रश्म्यन्तर्गतं वर्षमनभिव्यक्तम् । कश्चासौ अन्तर्गतः ? इन्द्रः । असावपि मध्यम एव । तत इदमुक्तम्—“न सोऽस्य वेद मध्यमः” मेघः । “स एवास्य वेद मध्यमः” इन्द्र इति । स एव महानुदकसंस्त्याय इन्द्रः प्रत्यक्षो मध्यमः मातुः अन्तरिक्षलोकस्य उदकाभिव्यक्त्याशयस्थाने “परिवीतः” परिवेष्टितः सौर्येण रश्मिजालेन वायुना च मेघोदरान्तर्गतः प्रावृट्काले वर्षभावेनाभिव्यक्तो “बहुप्रजाः” बहुशः प्रजायमानो निर्ऋतिं भूमिमाविशतीति समस्तार्थः ॥

अथैकपदनिरुक्तम् —।“करोतिकिरती सन्दिग्धौ” धातू “वर्षकर्मणा” सम्बध्येते । उभयथा ह्युपपद्यते,—यः करोति यो वा क्षिपति । “मातान्तरिक्षम्” एतस्मिन् हि “भूतानि” “निर्मीयन्ते”[4] । एतद्ध्यवकाशदानेन विशिष्टमुपकारं करोति भूतानां जायमानानाम् । “योनिरन्तरिक्षम्” आकाशस्यैव प्रदेशविशेषः कश्चित् । स वायुसंयुतः सन् उदकयोनिभावं पुष्णाति । तदेतत् “वायुना” तस्य संयवनं दृष्ट्वोक्तम्—परिवीतः भवति—इति ॥

शब्दसारूप्यप्रसक्तमुच्यते,—“अयमपीतरः” “योनिः” स्त्रीयोनिः “एतस्मादेव”। असावपि “परियुतः” एव “भवति” स्नाव्नां मांसेन च ॥

एवमेतस्मिन् मन्त्रे नैरुक्तानां निर्ऋतिशब्देन भूमिरुच्यते, परिव्राजकानां कृच्छ्रापत्तिः । तदेवं मन्त्रेषु शब्दगतिविभुत्वादुभयमप्युपपद्यत एव । तद्यथा,—“दधिक्राव्णो अकारिषम् ( ऋ० सं० ३, ७, १३, ६ )”—इत्येष मन्त्रः, अग्न्युपस्थाने अग्निहोत्रे,

१ ‘तिं नाप’ ॥ २ ‘त्यैच्छत् पारि’ ॥ ३ ‘नुभवविद्धां’ ॥ ४ ‘निर्मीयन्ते’ ॥
५ ‘सद्भवन्तं’ ॥

अयमेव चाग्निष्टोमे "दधिक्राव्णो अकारिषमित्याग्नीध्रे दधि भक्षयन्ति ( आ० सू० ६, १३ )"-इति दधिभक्षणे, तथा: चाश्वमेधे "दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जपन्ति"इत्यश्वसंनिधानेन पत्न्यो जपन्ति महिष्यामुत्थितायाम् । तत्रैवं सति प्रतिविनियोगमस्यान्येनार्थेन भवितव्यम् । त एते वक्तुरभिप्रायवशादन्यत्वमपि भजन्ते मन्त्राः । न हि एतेषु अर्थस्येयत्तावधारणमस्ति, महार्था ह्येते दुष्परिज्ञानाश्च । यथाश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति, एवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति ।

तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते, क्वचिच्च आध्यात्माधिदैवाधियज्ञोपदर्शनार्थम् । तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्--आधिदैवाध्यात्माधियज्ञाश्रयाः सर्वे एव ते योज्याः, नात्रापराधोऽस्ति २ । ८ । १ ॥

**शाकपूणिः सङ्कल्पयाञ्चक्रे-सर्वा देवता जानामीति । तस्मै देवतोभयलिङ्गा प्रादुर्बभूव । तां न जज्ञे, तां पप्रच्छ-विविदिषाणि त्वेति॥सास्मा एतामृचमादिदेशैषा मद्देवतेति-**

एवमेव सन्देहाधिकारमुपजीवन्नाह-"शाकपूणिः सङ्कल्पयाञ्चक्रे,-सर्वा देवता जानामीति" । शाकानि यः पूणयति संहन्ति, स शाकपूणः, तस्यापत्यं शाकपूणिः आचार्य्यः । स सङ्कल्पयाञ्चक्रे, संकल्पं कृतवान् । किम् इति ? सर्वा देवता जानामीति । "तस्मै" संकल्पमेवं कृतवते "देवतोभयलिङ्गा" स्त्रीपुंलिङ्गा, अथवा मध्यस्थानालिङ्गा द्युस्थानलिङ्गा च "प्रादुर्बभूव" प्रादुर्भूतवती । "तां" पुरतोऽवस्थितां सतीं "न जज्ञे" न ज्ञातवान्, किमियं स्त्री स्यादथवा पुरुष इति, अथवा किमियं मध्यस्थाना अथवा द्युस्थानेति । "ताम्" अजानन् "पप्रच्छ" "विविदिषाणि त्वा" । वेदितुमिच्छामि त्वाम्,-किमसि पुरुषः अथवा स्त्री ? "इति" अथवा किमस्यन्तरिक्षस्थाना अथवा द्युस्थाना इति ? "सा" एवं पृष्टा सती "अस्मै" शाकपूणये "एतामृचम्" "आदिदेश" आदिष्टवती । किम् इति ? "एषा मद्देवतेति" अस्यामृचि अहं देवतेति, त्वं च नैरुक्तः मामेतस्या ऋचः सकाशादर्थावगत्यावधारयेति * ॥

**"अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधिश्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥"** अयं स शब्दायते 'येन गौर-

* इतोग्रे-'इति निरुक्तव्याख्यायां द्वितीया(सप्तमा)ध्यायस्याष्टमः खण्डः ॥८॥' इति दृश्यते, तद् 'एवमेव सन्देहा-' इति ग्रन्थतः प्राक् समुचितम् ॥

भिप्रवृत्ता मिमाति मायुं' शब्दं करोति मायुमिवादित्यमिति वा । वागेषा माध्यमिका ध्वंसने मेघेऽधिश्रिता । सा चित्तिभिः कर्मभिर्नीचैर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिम् ॥ वव्रिरिति रूपनाम वृणोतीति सतः । वर्षेण प्रच्छाद्य पृथिवीं तत् पुनरादत्ते ॥ १ ॥ ९ ॥

कतमा पुनरसावृग् ? इति । उच्यते,—"अयं स शिङ्क्ते"—इति। "अयं स शब्दायते" अयं स मेघः शब्दायते शब्दमिव करोति । न च तावदसौ शब्दं करोति । अयं च तावन्माध्यमिकायां वाचि तत्स्थायां शब्दं कुर्वत्यां तत्साहचर्याद्विज्ञायते—स एव मेघः शब्दं करोतीति। येन मेघेन किं कृतम् ? इति । 'येन गौरभीवृता' येन माध्यमिका वागभिप्रच्छादिता सती "मिमाति मायुं" निर्मिमीते निर्वर्त्तयति मायुम्, "शब्दं करोति" इत्यर्थः । "मायुः, काकुत्"—इति च वाङ्नामसु ( निघ० १ । ११ ) पठितम् ॥ "वायुमिवादित्यमिति वा" अथवा मायुरादित्यो भवति, सर्वभूतनिर्माता । तमिवात्मानं निर्मिमीते ॥ क्वावस्थिता ? "ध्वंसने" उदकध्वंसने उदकस्रंसने मेघे "अधिश्रिता" । अयं तावदर्द्धर्चो मेघान्तर्वर्त्तिन्या वाचोऽनाभिव्यक्तविद्युद्रूपाया अभिधायकः, मेघरूपत्वात् पुरुषत्वाभिप्रायः ॥ अथ वायुत्तरः स्त्रीत्वाभिप्रायः । यैवंलक्षणा वाक् कैर्मस्वरूपा, मेघशरीरा वा । 'सा चित्तिभिः कर्मभिः स्वैः चटचटाशब्दकर्मभिः "नीचैः" "नि हि चकार" "निकरोति" नीचैः करोति 'मर्त्यं' मनुष्यम् । सर्वो हि बिभ्यत्तस्या आसीदति अवनमति च ॥ कदा पुनर्निकरोति मर्त्यम् ? इति। उच्यते—"विद्युद् भवन्ती"इति,विद्युदात्मना स्व्याख्येनाभिनिर्वर्त्तमाना, तदा हि दारुणश्चटचटाशब्दो भवतीति विशेषेण भयङ्करः, न तथा विद्युद्रहितः । सैवमात्मानमाविष्कृत्य विद्युद्रूपेण विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीम् । ततो वर्षव्युपरमे "प्रति" "आहत" "ऊहते" "वव्रिम्" प्रत्युपसंहरति—रूपमात्मीयमदृश्यं करोतीत्यर्थः । "वव्रिरिति रूपनाम" तद्ध्यावृत्य स्वमाश्रयं वर्त्तते ॥ यस्मिंस्तु पक्षे मध्यस्थानलिङ्गा द्युस्थानलिङ्गा चेति तस्मिन् पक्षे मेघरूपत्वमविवक्षितमेव, वाचो विद्युद्रूपत्वं च । किंतु एतावद् विवक्षितम्,—मेघाश्रया शब्दवती भूत्वा माध्यमिका वाक् विद्युदात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपभूतं जलाशयेभ्यश्चादित्यात्मना स्थित्वा "तत्पुनरादत्ते" विद्युदात्मना मध्यस्थाने स्थित्वा वर्षति, आदित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः । वक्ष्यति हि,—"त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवि ( दै० का० १२, खं० १९, )"—इति ॥

१ 'एवं' ॥ २ 'मेघरू' ॥ ३ 'भयंकरम्' ॥ ४ 'तम्, मेघवाचो वि' ॥

सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा, द्युस्थाना वाऽऽदित्यरूपा, इत्ययमेवंलक्षणो देवतातत्त्वसन्देह उपेक्षितव्यो मन्त्रदर्शनाच्च निर्वक्तव्य इत्ययं मन्त्रसंक्षेपार्थः ॥
सा पृथिव्या सन्दिह्यत इत्यनेन सन्देहसामान्येनोदाहृतमिदमत्र मतं शाकपूणे रित्येवमादि॥

अनुक्रमणं त्वधिकृतम्। तस्मिन् गोशब्द एको निरुक्तः प्रकारोपप्रदर्शनार्थम्, इतराण्यभ्यूह्य निर्वक्तव्यानि । तद्यथा—'ग्मा' गमनात्, अस्यां गच्छन्ति भूतानि:,—'ज्मा' जमनात्, जमन्ति गच्छन्ति अस्यां भूतानि,—इत्येवमादि ॥

नैघण्टुकांस्तु याञ्छब्दान्प्रत्यर्थगणसंस्थितान्[1]।
छन्दोभ्योऽन्विष्य तत्त्वार्थान्निर्ब्रूयाद्योगतस्तु तान् ॥ २ । ९ । १ ॥ *

## ( अथ हिरण्यनामानि । )

**हेम । चन्द्रम् । रुक्मम् । अयः । हिरण्यम् । पेशः । कृशनम् । लोहम् । कनकम् । काञ्चनम् । भर्म । अमृतम् । मरुत् । दत्रम् । जातरूपमिति पञ्चदश हिरण्यनामानि ॥ १ । २ ॥**

## ( अथ हिरण्यवाचकशब्दनिर्वचनम् )

**हिरण्यनामान्युत्तराणि पञ्चदश ॥ १ ॥**

"हिरण्यनामान्युत्तराणि पञ्चदश" । हिरण्यस्य नामानि हिरण्यनामानि, उत्तराणि । कुतः ? प्रकृतेभ्यः पृथिवीनामभ्यः॥पृथिव्यामेव हिरण्यमुत्पद्यत इत्यतः पृथिव्यभिधानानन्तरं हिरण्यनामानि समाम्नातानि।कियन्ति पुनस्तानि?पञ्चदश,पञ्च च दश च पञ्चदश यानि समाम्नातानि ॥ असमाम्नातान्यपि सन्ति,—हाटक-सुवर्ण-चामीकर-शातकुम्भादीनि ॥ कतमानि पुनस्तानि समाम्नातानि इति ? उच्यते—"हेम, चन्द्रं, रुक्मम्"—इत्येवमादीनि । हितं ममेदमिति सर्व एवैतन्मन्यते, तस्माद्धेम । चन्द्रम्,—चंदतेः कान्तिकर्मणः, सर्व एव ह्येतत् कामयते । रुक्मम्,—रोचतेर्ज्वलनार्थस्य, तद्धि रोचिष्णु भवतीति । एवमूहितव्यं सर्वत्र निर्वचनम् ॥ २ । १० । १ ॥

**हिरण्यं कस्माद् ध्रियत आयम्यमानमिति वा ॥**
**ह्रियते जनाज्जनमिति वा ॥**

---

१ 'त्यर्थ गणशः स्थि'॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा)—ध्यायस्य नवमः खण्डः ॥९॥' इति द्रष्टव्यम् ॥ "इति निरुक्तवृत्तौ सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥" इति तूपलभ्यते ॥

हितरमणं भवतीति वा ॥ हृदयरमणं भवतीति वा ॥ हर्य्यतेर्वा स्यात्प्रेप्साकर्मणः ॥ २ ॥

आह—"हिरण्यं कस्मात्" ? उच्यते—"ह्रियत आयम्यमानमिति वा" । आयम्यमानं ह्रियत एव शिल्पिभिः, कटकरुचकस्वस्तिकादिभावेन विस्तीर्य्यमाणम् ॥ "ह्रियते जनाज्जनमिति वा" । तेन हि व्यवहारः क्रियते । ततस्तन्नैकत्रावतिष्ठते, ह्रियत एव सर्वदा ॥ "हितरमणं भवतीति, वा" । यस्य हि तद् भवति, तस्य हितं च दुर्भिक्षादिषु, तद् भवति रमणं चेति । तेन गृहीतेन मूषिकोऽपि रमते, किमुत मनुष्यः । "हर्य्यतेर्वा स्यात् प्रेप्साकर्मणः" तद्धि सर्वैरेव प्रार्थ्यते लोकानुक्रमेणैव ॥ २ । १० । २ ॥

( अथान्तरिक्षनामानि । )

अंबरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयंभूः । अध्वा । पुष्करम् । सगरः । समुद्रः । अध्वरमिति षोळशान्तरिक्षनामानि ॥ १ । ३ ॥

(अथान्तरिक्षवाचकशब्दनिर्वचनम् )

अन्तरिक्षनामान्युत्तराणि षोळश ॥ ३ ॥

"अन्तरिक्षनामान्युत्तराणि षोळश" । षट् च दश च षोळश ॥ कतमानि पुनस्तानि ? "अम्बरं, वियत्, व्योम"—इत्येवमादीनि ॥ अम्बरमम्बुमद्भवति । नानाभावेन सर्वतो वियतमिति वियत् । नानाप्रकारमेतदवति भूतानीति व्योम । एवमाद्यभ्यूहितव्यम् ॥ २ । १० । ३ ॥

अन्तरिक्षं कस्मादन्तरा क्षान्त भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षयमिति वा ॥ ४ ॥

आह—"अन्तरिक्षम्" एव तावत् "कस्मात्" ? उच्यते—"अन्तरा" हीदं द्यावापृथिव्योरवस्थितम्, "क्षान्तं" च "भवति" पृथिव्यन्तमित्यर्थः ॥ अथ "वा" "अन्तरा" "इमे" द्यावापृथिव्यौ क्षियति निवसति "इति" अन्तरिक्षम् ॥ अथ "वा" "शरीरेषु" एतदेव "अन्तर" मध्येऽवस्थितम् "अक्षयम्" । इतराणि पृथिव्यादीनि भूतानि क्षीयन्ते तस्मादक्षयत्वादन्तरिक्षम् ॥ २ । १० । ४ ॥

तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते ॥ ५ ॥

"तत्र" तस्मिन् षोडशके अन्तरिक्षनामसमुदाये "समुद्र इत्येतत्" अभिधानमुभयाभिधानम् । उभयाभिधायित्वात् "पार्थिवेन समुद्रेण" एतेन जलाशयेन "सान्दिह्यते" एतदत्र सन्देहपदम् ॥ २ । १० । ५ ॥

**समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः सम्मोदन्तेऽस्मिन् भूतानि समुदको भवति समुनत्तीति वा ॥ ६ ॥ १० ॥**

आह–"समुद्रः कस्मात्"? इति । उच्यते,–"समुद्द्रवन्त्यस्मादापः" वीचितरङ्गशीकरादिभावेन ॥ "समभिद्रवन्त्येनमापः" सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति स हि निम्नो भवति ॥ "सम्मोदन्तेऽस्मिन् भूतानि", संहृष्यन्ति जलचराणि सत्त्वानि, बहूदकत्वात् ॥ "समुदको भवति" । उद इत्युदकनाम, तदस्मिन् संहतमिति समुद्रः ॥ "समुनत्तीति वा" संक्लेदयतीत्यर्थः । अतो हि प्रसृतैरम्भोभिः सर्वमिदं संक्लिद्यते ॥ २ । १० । ६ ॥

**तयोर्विभागस्तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयाञ्चक्रे । देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तारित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति ॥ तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति– ॥**

"तयोर्विभागः" यस्मिन्नुदाहरणे लक्ष्यते, "तत्रेतिहासमाचक्षते" आचार्य्याः ॥ निदानभूत इति हैवमासीत्–इति य उच्यते स इतिहासः ॥ कतमः पुनरसौ ? इति । उच्यते,–"देवापिश्चार्ष्टिषेणः" इत्येवमादिः । देवापिश्चार्ष्टिषेणः, "शन्तनुश्च" आर्ष्टिषेण एव "कौरव्यौ" कुरुवंशप्रभवौ "भ्रातरौ बभूवतुः" । तयोरेको यः "कनीयान् शन्तनुः" नाम, "सः" आत्मानम् "अभिषेचयाञ्चक्रे" अभिषेचितवानित्यर्थः सोऽभिषिक्तः सन् राजा बभूव, इतरः पुनर्ज्येष्ठः "देवापिस्तपः प्रतिपेदे" । स कि

तीव्रेण तपसा ब्राह्मण्यमापेदे, विश्वामित्रवत् । "ततः" तेनापचारेण ज्येष्ठातिक्रमजेन "शन्तनोः" "राज्ये" राष्ट्रे "द्वादश वर्षाणि देवो न ववर्ष" । अवर्षति देवे "तं" शन्तनुम् "ऊचुः" उक्तवन्तः "ब्राह्मणाः"–"अधर्मस्त्वयाचरितः"–"ज्येष्ठं भ्रातरम्" "अन्तरित्य" अतिक्रम्य "अभिषेचितम्" अभिषेक आत्मनः कारितो यतस्त्वया "तस्मात्" तेन मर्यादातिक्रमेण "ते" तव राज्ये "देवो न वर्षति" प्राप्तकालं प्रतिपद्यस्व–"इति" । "सः" एवमुक्तः "शन्तनुः" "देवापिं" "शिशिक्ष" पुनःपुनः शशास अभिगमितवानित्यर्थः । कथम् ? "राज्येन" अभ्युद्यतेन । अर्थ्यमानः "तं देवापिरुवाच" काममहं "पुरोहितस्ते" "असानि" भवानि "याजयानि च" "त्वा" त्वां वार्षिकेण कर्मणा । न च राजा भविष्यामि, भवानेवास्तु राजेत्यभिप्रायः ॥

"तस्य" देवापेः "एतद् वर्षकामसूक्तम्" आविरभूत् । तत्र "तस्य" समुद्राभिधानस्य सन्दिग्धस्य प्रविभागोपदर्शनाय "एषा" निर्वाचिका ऋग् भवति" *

"आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् ॥ स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥" आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा ॥

सेना सेश्वरा समानगतिर्वा ॥ पुत्रः पुरु त्रायते निपरणाद्वा, पुन्नरकं ततस्त्रायत इति वा ॥ होत्रमृषिर्निषीदन् । ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः तद्यदेनांस्तपस्य-

---

१ ब्राह्मण्यमिति । 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्युक्तदिशा ब्राह्मणतुल्यत्वमित्यर्थः ॥ तत्तुल्यत्वं च ब्राह्मणावश्यकर्तव्यतपःश्रुतावश्यंकरणेन । नतु ब्राह्मणजातिविशिष्टत्वम् 'तपः श्रुतं च योनिश्च ह्येतद्ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥' 'त्रीणि यस्यावदातानि योनिर्विद्या च कर्म च । एतदेव विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्' इति भगवत्पतञ्जल्युपदर्शितलक्षणस्य योनिरूपस्याभावेन तत्र ब्राह्मणीगर्भोत्पन्ने ब्राह्मणजातेरनङ्गीकारात् । 'ब्रह्म जानाति ब्राह्मणः' इत्येवमौपचारिकं ब्राह्मण्यं विदुरादीनामप्यस्त्येव ॥ अतएवाग्रे 'विश्वामित्र ऋषिः' इति वक्ष्यतीति दिक् ॥ * इतोऽग्रे–'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य दशमः खण्डः ॥ १० ॥' इति दृश्यते तत् 'तयोर्विभागो यस्मिन्नुदाहरणे' इत्यतः प्राक्समुचितम् ।

मानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते ॥ देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च। देवसुमतिं देवानां कल्याणीं मतिम्। चिकित्वांश्चेतनावान्। 'स उत्तरस्मादधरं समुद्रम्' उत्तर उद्धततरो भवति। अधरोऽधोरः ॥ (अध एनालावच्छिते).

अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा ॥ १ ॥ ११ ॥

आर्ष्टिषेण इति ॥ एतया देवानस्तौत्। त्रिष्टुप् ॥ "आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रः, इषितसेनस्येति वा"। अन्यकल्पान्तरीणोऽन्यकल्पान्तरीणस्यैव शन्तनोर्वर्षार्थीये कर्मणि होतृत्वे वृतः "होत्रं" कर्म प्रति "निषीदन्" उपविष्टवान्। ततोऽपि "देवापिः" नाम नाम्ना "देवसुमतिं" देवानां कल्याणीं मतिमुदकसम्प्रदानाभिमुखीं कर्त्तुं "चिकित्वान्" जानानः। स हि तथाऽस्तौत्, यथा देवानामुदकसम्प्रदानाभिमुखी मतिरभूत्। ततः परितुष्टेषु देवेषु "सः" देवापिः "उत्तरस्मात्" अन्तरिक्षाख्यात् समुद्रात् "अधरं" समुद्रं पार्थिवं प्रति। एष विभागः समुद्रयोः। "अपो दिव्याः" प्रशस्ताः सस्यसम्पत्करीः "असृजत्" अक्षारयत्। किंलक्षणाः? "वर्ष्याः" वर्षभूताः "अभि" सर्वभूतानामुपरि। स देवाप्यधिकारे वर्तमान एतदकरोत्। अन्यस्मिन् कल्पेऽपि देवापिर्मसाप्येतदेवमेवास्त्वित्यवं वर्त्तमानेनाभिसम्बध्यत इति समस्तार्थः ॥

अथैकपदनिरुक्तम्—ऋष्टिरायुधविशेषः, तद्बहुला सेना यस्य, सोऽयमृष्टिषेणः इषितसेनो वा नित्यमेव प्रेषितसेनः शत्रून् प्रति ॥

"सेना, सेश्वरा"। इनेतीश्वरनाम, तेन हि सा नित्यमेव संयुक्ता भवति ॥ "समानगतिर्वा" समानमेकमर्थमुद्दिश्य जयाख्यमेतीति सेना ॥ "पुत्रः, पुरु त्रायते" बह्वपि यत् पित्रा पापं कृतं भवति, ततोऽयं त्रायति पुत्रः ॥ "निपरणाद्वा" निपृणाति निददाति ह्यसौ पिण्डान् पितृभ्य इति पुत्रः॥ अथवा "पुत्" इति "नरकं" नरकस्थानमुच्यते, "ततस्त्रायत इति वा" पुत्रः ॥

"ऋषिर्दर्शनात्" पश्यति ह्यसौ सूक्ष्मानप्यर्थान् ॥ "स्तोमान् ददर्शेत्यौपमन्यवः"। मन्त्राः स्तोमाः, तानसौ तारकेण ज्ञानेन पश्यतीत्येवम् औपमन्यवः आचार्य्यो मन्यते ॥ ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति,—"तद्यदेनांस्तपस्यमानान् ब्रह्मस्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति" इत्यादि। तत् एतत्। उच्यते,—यत्कृतमृषीणामृषित्वम्। यत् यस्मात् एनान् तपस्यमानान् तप्यमानान् ब्रह्म ऋग्यजुःसामाख्यं स्वयम्भु-

अकृतकम् अभ्यानर्षत् अभ्यागच्छत्, आविर्भूतमित्यर्थः ॥ अनधीतमेव तत्त्वतो ददृशुः तपोविशेषेण । तदृषीणामृषित्वम्—इत्येवं ब्राह्मणेऽपि "वि" विचोर्य्यमाणे "ज्ञायते" ॥ "देवापिः, देवानामाप्त्या" स हि स्तुतिभिर्देवानाप्नोति, हविःसम्प्रदानेन च ॥ "उत्तरः, उद्धततरः" उद्गततरोऽसौ "भवति" उपरिष्टादवस्थानात् ॥ "अधरः" अधोरः" । किमुक्तं भवति ? अध एवासावेराति ॥

"अधः" पुनः "न धावति" । तस्य ह्यधोगतित्वादेव "ऊर्ध्वगतिः प्रतिषिद्धा" ॥ २ । ११ । १ ॥

## तस्योत्तरा भूयसे निर्वचनाय—

"तस्योत्तरा भूयसे निर्वचनाय" । किमुक्तं भवति ? तस्य एवार्थस्य प्रकृतस्य [ यथोत्तरस्मात् समुद्राद् वृष्टिमयाचत देवेभ्यो देवापिः, यथा च पौरोहित्यमकरोत्, यथा वा अयाजयच्छन्तनुं वर्षार्थीयेन कर्मणा ] भूयसे बहुतराय निर्वचनाय निर्विच्य वचनाय उत्तरा एषा ॥ *

"यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्" ॥ शन्तनुः शं तनोऽस्त्विति वा, शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायत् । देवश्रुतं देवा एनं शृण्वन्ति । वृष्टिवनिं वृष्टियाचिनम् । रराणो रातिरभ्यस्तो, बृहस्पतिर्ब्रह्मासीत् सोऽस्मै वाचमयच्छत्, बृहदुपव्याख्यातम् ॥ १ । १२ ॥

"यद्देवापि" । यत् यस्मात् देवापिः "शन्तनवे" राज्ञे "पुरोहितः" पुरोहितो ह्येवाग्निकर्मणि व्याप्रियते, स पुरोहितः सन् देवापिः "होत्राय" होतृकर्मणे वर्षार्थीये कर्मणि "वृतः" सन् "कृपयन्" "कृपायमाणः" राज्ञे "अदीधेत्" "अन्वध्यायत्" वृष्टिर्भवेदिति । तं, "देवश्रुतं" देवैः श्रुतं देवापिमेनं "वृष्टिवनिं" "वृष्टियाचिनं" चतुर्थ्यर्थे चोभयत्र द्वितीया देवैः श्रुताय वृष्टिवनये वृष्टियाचिने "रराणः" रातेः 'व्यत्ययो बहुलम्' इति शपः श्लुः । ददद् वृष्टिमित्यर्थः ॥ देवापिमेनं वृष्टिवनिं वृष्टियाचिनं मत्वा रराणो ददत् ॥ [ इह ] बृहस्पतिः तस्मिन्नेव कर्मणि "ब्रह्मा आसीत्" ब्रह्मत्वेऽव-

१ 'माणं' ॥ २ 'वृच्छ' ॥ * इतोग्रे—'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा) ध्यायस्यैकादशः खण्डः ॥ ११ ॥' इति दृश्यते तत् 'तस्योत्तरा'—इत्यतः प्राक्समुचितम् ॥

स्थितः । "सः" "अस्मै" वर्षसाधिकां "वाचम्" "अयच्छत्" अददादित्यर्थः । तया वाचा तदनुगृहीतया देवान् स्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—"शन्तनुः" कस्मात् ? इति । उच्यते,—स हि कञ्चिद्रोगार्त्तं दृष्ट्वा ब्रवीति हे "तनो शं" तव "अस्तु इति" ततोऽसावगदो भवति ॥ अथ "वा" "शमस्मै तन्वा अस्त्विति" एवमसावाशास्ते ॥ शमिति सुखनाम । तनुः शरीरं तदसौ नित्यं शरीरायाशास्ते ॥

"पुरोहितः" शान्तिकपौष्टिकाभिचारिकेषु कर्मसु "पुर एनं दधति" राजानः पुरस्कुर्वन्तीत्यर्थः ॥

"देवश्रुतं" "देवाः" हि "एनं" स्तुतीरुच्चारयन्तं "शृण्वन्ति" इति देवश्रुत्, तं देवश्रुतम् । "रराणः" इति "रातिः" दानार्थः "अभ्यस्तः" ॥

"बृहदुपव्याख्यातम्" । "बृहदिति महतो नामधेयम्, परिवृढं भवति" (१।७।१) इति । मन्त्रनिदानद्वारेण धर्मोऽयमत्र दर्शितः । ज्येष्ठे तिष्ठति कनीयसो राज्यप्राप्तिर्धर्मातिक्रमः । धर्मातिक्रमे च देवो न वर्षतीति ॥ निरुक्तपक्षे,—ऋष्टिषेणो मध्यमः, तदपत्यमयमभिः पार्थिव आर्ष्टिषेणो देवापिः, स शन्तनवे सर्वस्मै यजमानायेति योज्यम् । बृहस्पतिः वाचस्पतिरिति मध्यमः । स्तनयित्नुलक्षणां वाचमित्यर्थः ॥ २ । १२ । १ ॥ *

## ( अथ साधारणानि )

## स्वः । पृश्निः । नाकः । गौः । विष्टप् । नभ इति षट् साधारणानि ॥ १ । ४ ॥

### ( साधारणानां षण्णां नाम्नां निर्वचनम् )

## साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च ॥ १ ॥

लोकाभिधानाधिकारेणेदमुच्यते,—"साधारणान्युत्तराणि षट्, दिवश्चादित्यस्य च" इति । समानं ध्रियन्ते इति साधारणानि नामानीत्यधिकारो वर्त्तते । अत एव उत्तराणि प्रकृतमपेक्ष्य ॥ किं चात्र प्रकृतम् ? अन्तरिक्षनामानि ( अ. २ खं. ९ ) । तेभ्य इमान्युत्तराणि । कियन्ति पुनस्तानि ? षट् ६ । कयोः पुनः साधारणानि ? दिवश्चादित्यस्य च ॥ कतमानि पुनस्तानि ? "स्वः, पृश्निः, नाकः," —इत्येवमादीनि ॥ २ । १३ । १ ॥

## यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः ॥ २ ॥

---

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य द्वादशः खण्डः ॥१२॥' इति द्रष्टव्यम् ॥ "इति निरुक्तवृत्तौ द्वितीया ( सप्तमा ) ध्यायस्य तृतीयः पादः ॥ ३ ॥" इति तु दृश्यते ॥

"यानि त्वस्य" आदित्यस्य "प्राधान्येन" वर्त्तन्ते प्रधानस्तुतिभाञ्जि नामानि,—"सविता, भगः, सूर्य्यः, पूषा"—इत्येवमादीनि, "तानि उपरिष्टात् व्याख्यास्यामः" सप्त [ द्वा ] दशेऽध्याये । इमानि तु नैघण्टुकानि संसृष्टरूपाणि च द्युनामभिः साकमित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते ॥ २ । १३ । २ ॥

**आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वादितेः पुत्र इति वा ॥ ३ ॥**

आह—"आदित्यः" एव तावत् "कस्मात्?" इति । उच्यते—शृणु—"आदत्ते" ह्यसौ "रसान्" रश्मिभिरित्यादित्यः ॥ "आदत्ते भासं ज्योतिषाम्" तदुदये हि चन्द्रादीनां प्रभानाशो भवत्येव अन्यग्रहापेक्षमेतत् ॥ "आदीप्तो भासेति वा" सर्वतो ह्येष भासा आदीप्त आवृतो भवति ॥ "अदितेः पुत्र इति वा" अदितिर्देवमाता, तस्याः पुत्रः, सोऽयमादितेयः सन्नादित्य इत्युच्यते ॥ २ । १३ । ३ ॥

**अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् 'सूर्य्यमादितेयम्' अदितेः पुत्रम् ॥ ४ ॥**

"अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्य्यमादितेयम्" इति । अल्पप्रयोगम् अल्पप्रयोगविषयम् । तुशब्दो विशेषणार्थः । एतदेवाल्पप्रयोगविषयम्, इतराणि सवितृभगपूषादीनि बहुप्रयोगविषयाणि अस्य आदित्यस्य । क्वाल्पप्रयोगविषयम्? आर्चाभ्याम्नाये ऋचो यस्मिन्नाम्नायेऽभ्युपर्य्युपर्य्याम्नाताः, सोऽयमार्चाभ्याम्नायो दाशतयः, तस्मिन्नल्पप्रयोगविषयम् । "अदितेः पुत्रम्" एतददितेः पुत्रत्वाभिप्रायमभिधानम्—आदितेय इति । सूक्तभाक् एवं चैतदभिधानं न हविर्भाक् । न ह्यादितेय इत्यनेन नाम्ना हविराध्वर्य्यवे चोदितपूर्वमस्ति । यथा त्वेतत् सूक्तमेव नैघण्टुकवत्या भजते, तथेदमुदाहरणम्— सूर्य्यमादितेयम् इति ।

"यदे॑दे॒नमद॑धुर्य॒ज्ञियासो दि॒वि दे॒वाः सूर्य॑मादि॒तेयम् ।
य॒दा च॑रि॒ष्णू मि॑थु॒नावभू॑ता॒मादित्प्राप॑श्यन्भुव॑नानि॒ विश्वा ॥ (ऋ०सं०८,४, १२, १)"—इत्यस्यामृचि ॥ अन्ये तु मन्यन्ते,—आदित्य इत्येतदेवाल्पप्रयोगमिति । तत्र त्वेतद् विरुद्ध्यते—सूक्तभागिति । हविरपि ह्यनेनाभिधानेन चोद्यते—"आदित्यं बहुरूपमालभेत"—इति । तस्य च पश्चोरेतत् पडर्चम्—"आदित्यो देव उदगात् पुरस्तात्"—इति ॥

१ 'पप्रभृतीनि' ॥ २ 'चैतत्' ॥ ३ 'न विधानेन चो' ॥

अथ चैवैमन्यथा वाक्यद्वयप्रविभागेन स्यात्,—अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये आदित्य इति हविर्भाक्, सूक्तभाक् च, अल्पं हविः, सूक्तभाग्विषयमित्यर्थः।इदन्त्वन्यत्— सूक्तमेव नैघण्टुकवृत्या भजते, न कदाचिदपि हविः, इति ॥ २। १३। ४ ॥

## एवमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति॥ तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति॥५॥

आदित्यशब्दप्रसक्तमाह,—"एवमन्यासामपि देवतानाम्" इति । देवताभेदपक्षमपेक्ष्येदमुच्यते,—"आदित्य [ अभिधान ] प्रवादाः स्तुतयो भवन्ति"। "तद्यथा एतत्" उदाहरणजातम्,—"मित्रस्य वरुणस्यार्य्यम्णो दक्षस्य भगस्यांशस्य इति"।

"इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि। शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ (ऋ० सं० २, ७, ६, १)"।—

इत्यस्यामृचि सर्वे एवादित्यप्रवादाः स्तुत्या स्तूयन्ते ॥ २। १३। ५॥

## अथापि मित्रावरुणयोः—"आदित्या दानुनस्पती" दानपती ॥ ६ ॥

"अथापि मित्रावरुणयोः" आदित्यप्रवादाः स्तुतयो भवन्ति । तद्यथा—

"आदित्या दानुनस्पती ।" "दानपती" ।

"ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥" ( ऋ० सं० २, ८, ८, १ )"।

इयमृक् गायत्री गृत्समदेन दृष्टा। अभिप्लवस्य षडहस्य द्वितीयेऽहनि प्रउगं नाम शस्त्रम्' तत्र "अयं वां मित्रावरुणा सुतः सोमः (ऋ० सं० २, ८, ७, ४)"—इत्येष तृचः शस्यते, तस्योत्तमा एषा । 'ता संम्राजा' तौ सन्दीप्तौ 'घृतासुती' तौ हि घृत मुदकमासुवाते, वर्षकर्मणा जनयतः । 'आदित्या' आदित्यौ अदितेः पुत्रौ 'दानुनस्पती' दानानामीशाते तौ यजमानैः सम्यक् स्तुतिभिर्हविर्भिश्च संसेवितौ सन्तौ 'सचेते' प्रतिसंसेवेते यजमानमभिमतैर्दानैः । 'अनवह्वरम्' अनवरुध्यमानावित्यर्थः । यजमानविशेषणं वा युक्तम् । न कृतघ्नौ, शक्तौ च दातुमित्येवं मित्रावरुणावत्र स्तूयेते ॥ २। १३। ६ ॥

---

१ 'यवैवम' ॥ २ 'सर्वा एव' ॥ ३ 'प्रवादय' ॥

**अथापि मित्रस्यैकस्य—"प्र स मित्र मर्त्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन" इत्यपि निगमो भवति ॥ ७ ॥**

"अथापि मित्रस्यैकस्य" आदित्यप्रवादा स्तुतिर्भवति । तद्यथा—

"प्र स मित्र मर्त्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ ( ऋ० सं० ३, ४, ५, २ )" ।

अयमप्यन्ये वहवो निगमा इत्यपिशब्दः । प्र स मित्रेति विश्वामित्रेण दृष्टा, त्रिष्टुप् । मैत्रस्य चरोः पुरोऽनुवाक्या । 'प्र अस्तु' प्रकर्षेणास्तु भवतु । हे 'मित्र !' 'आदित्य' अदितेः पुत्र । 'स मर्त्तः' स मनुष्यः 'प्रयस्वान्' अन्नवान् । यः किं करोति? 'यः' 'ते' तुभ्यं 'शिक्षति' ददाति 'व्रतेन' कर्मणा यागाख्येन निर्वपणप्रोक्षणादिना संस्कृत्येदं हविश्चरुलक्षणम् । किं च एवमतिमहाप्रभावस्त्वं येन स मर्त्तो यस्तव यष्टा 'त्वोतः' त्वत्परिग्रहे वर्त्तमानः, त्वया रक्षितः 'न' केनचित् प्रत्यनीकभूतेनातिबलेनापि शत्रुणा 'हन्यते' हिंस्यते । 'न' चाहतोऽपि स च 'जीयते' वशीक्रियते केनचित् । न च केवलं शत्रूणामनाधृष्यः, तेनातिबलेनापि ॥ 'न' च 'एनं' त्वोतं सन्तम् 'अंहः' अपि पापमपि 'अश्नोति' [ न[3] ] व्याप्नोति यत् 'अन्तितः' अन्तिकात् समीपात्, यत् स्वशरीरादेव वाङ्मनश्चेष्टानिमित्तमुत्पद्यते पापम्, तदुत्पत्तिसमकालमेव त्वदनुग्रहादपध्वस्यते, तत स्तन्नैनं व्याप्नोति । न च केवलं यदन्तिके उत्पद्यते, तदेवैनं न व्याप्नोति, किं तर्हि ? यदपि 'दूरात्' पुत्रभ्रातृजायादिद्वारेणैनमास्कन्दति, तदपि 'न' एनम् अभिव्याप्तुं शक्नोति त्वोतं सन्तम् । एवं महानुभावस्त्वम्, ततस्त्वां स्तुमः इत्यभिप्रायः ॥ २।१३।७॥

**अथापि वरुणस्यैकस्य—"अथा वयमादित्य व्रते तव ।"**
**व्रतमिति कर्मनाम वृणोतीति सतः ॥**
**इदमपीतरद् व्रतमेतस्मादेव निवृत्तिकर्म वारयतीति सतः ॥**
**अन्नमपि व्रतमुच्यते यदावृणोति शरीरम् ॥ ८ ॥ १३ ॥**

"अथापि वरुणस्यैकस्य" आदित्यप्रवादा स्तुतिर्भवति । तद्यथा—"अथा वयमादित्य व्रते तव" इति ।

---

१ 'वाह' ॥ २ नकारोऽत्र निरर्थकः—पूर्वमन्नैव वाक्ये गतत्वात् ॥

"उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ॥
अथावयमादित्य व्रते तवानागसो अदितये स्याम ॥ ( ऋ० सं० १,२,१५,५ । )"

अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं स्तुतवान्, आत्मानं मोचयिष्यन् । वरुणप्रघासेष्ववभृथेष्टौ वारुणनिष्कासहविषः पुरोऽनुवाक्येयम् । हे 'वरुण !' त्रिषु स्थानेषु—अधो मध्ये उपरिष्टाच्च, वयम् त्वया आबद्धाः स्वैः पाशैर्यतोऽतो ब्रूमः—स्तुत्या हविषा चोपसृप्तस्त्वमस्माभिरतस्तावत् 'उत्तमं' 'पाशम्' उपरिष्टादवस्थितम् 'अस्मत्' अस्मत्तः 'उत्-श्रथाय' ऊर्द्ध्वमेव श्लथय । उच्छ्रृत्य च विमुञ्चास्मानपीडयन् । योऽपि चायं 'अधमः' ते पाशः अस्मासु वर्त्तते, एनम् अपि अर्वाञ्चम् 'अव' श्रथय, अवमुञ्च । तथा च योऽप्ययं 'मध्यमः' ते पाशोऽस्मन्मध्ये वर्त्तते, एनमपि तथैवावस्थितमनभिसर्पयन् ऊर्द्ध्वमधो वा, अदुःखयन्नस्मान् 'वि' श्रथय विमुञ्च । अथैवं त्वया 'वयं' सर्वविमुक्तपाशाः सन्तो हे 'आदित्य' ! अदितेः पुत्र ! वरुण ! 'अनागसः' अपापाः संशुद्धसर्वकिल्विषाः । एतदेव हि यौष्माकीणं पाशत्रयमागः, तेन विमुक्ताः सन्तः 'तव' एव 'व्रते' तवैव परिचरणकर्मणि 'अदितये' चात्मनोऽदीनत्वाय अनुपक्षयाय च आदरवन्तः स्थिताः 'स्याम' इत्याशीः ॥

निगमप्रसक्तमुच्यते—"व्रतमिति कर्मनाम" । "वृणोतीति" । एवं कर्त्तरि कारके "सतः" वृणोतेः । तद्धि कर्म शुभमशुभं वा कृतं सदावृणोति कर्त्तारम् ॥ "इदमपीतरद् व्रतमेतस्मादेव" ॥ "निवृत्तिकर्म" यमनियमाख्यं [ वा ] बाहिर्वैदिकमान्तर्वैदिकं वा, यदग्निसन्निधावुपेयते तत् पुनः "वारयतीति" एवं "सतः" तद्विषयेषु प्रवर्त्तमानं पुरुषं स्त्र्यादिषु वारयति, तदनुसृत्य स पुरुषो निवर्त्ततेऽवकीर्णी भविष्यामीत्येतस्माद् भयात् ॥

"अन्नमपि व्रतमुच्यते, यदावृणोति शरीरम्" । रसशोणितमांसमेदोमज्जास्थिभावेन विपरिणममानम् ॥ २ । १३ । ८ ॥

आदित्यशब्दप्रसक्तानुप्रसक्तमिदमुक्तम् ॥ *

**स्वरादित्यो भवति सु अरणः,—सु ईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषाम् । स्वृतो भासेति वा । एतेन द्यौर्व्याख्याता ॥ ९ ॥**

as it moves well. impels water — moisture
overpowers
followed by.

१ 'वारुण्यामिष्टयां हवि' ॥ २ 'तदस्यावृणो, तदप्यावृ' ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया(सप्तमा)ध्याये त्रयोदशः खण्डः ॥ १३ ॥' इति दृश्यते तद् 'विपरिणममानम्' इतः परं द्रष्टव्यम् ॥

अधुना प्रकृतमेवोच्यते,—"स्वरादित्यो भवति" इति। "सु अरणः" सुगमन इत्यर्थः॥ अथवा "सु ईरणः"। सुष्ठु तमांसि ईरयतीत्यर्थः॥ अथवा विशेषणविशेष्यभावेन एते वाक्ये स्याताम्। किमुक्तं भवति—सु अरणः इति? उच्यते—सु ईरणः इत्येव॥

"स्वृतो रसान्" सुष्ठु रसानादातुमृतो गतः भौमान् आन्तरिक्षांश्च॥

"स्वृतो भासं ज्योतिषाम्" सुष्ठु ग्रहनक्षत्रादीनां ज्योतिषां भासमादातुमृतो गतः॥

"स्वृतो भासेति वा" सुष्ठु परिगतो भासेति वा, सर्वतो ह्येष परिगतो दीप्त्या भवति॥

"एतेन द्यौर्व्याख्याता"। उक्तं हि 'तानि चेत् समानकर्माणि समाननिर्वचनानि (२ अ० ७ खं०)'—इति। सापि हि सु अरणा शोभनगमना भवति, शोभनं वा अस्यामर्य्यत इत्येवमादि यथासम्भवं योज्यम्॥ २।१४।१॥

**पृश्निरादित्यो भवति-प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान्। संस्प्रष्टा भासं ज्योतिषाम्। संस्पृष्टो भासेति वा॥ अथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च॥ २॥**

"पृश्निरादित्यो भवति"। आह—कस्मात्? उच्यते—"प्राश्नुत एनं वर्ण इति नैरुक्ताः"। प्राश्नुते प्रकर्षेण व्याप्नोति एनम् आदित्यं वर्णः प्रोज्ज्वलः इति नैरुक्ताः मन्यन्ते॥

"संस्प्रष्टा रसान्" स हि नित्यकालमेव रसानां संस्प्रष्टा भवति। तस्य तदेव कर्म। वक्ष्यति—"अथास्य कर्म रसादानम् (दै० का० ७, खं० ११)"—इति॥ "संस्प्रष्टा भासं ज्योतिषाम्"। आदित्यसंस्पर्शादेव ग्रहनक्षत्रचन्द्रमसां भासो नश्यन्ति॥ "संस्पृष्टो भासेति वा" दीप्त्या ह्येष सर्वतः संस्पृष्टो भवति॥

आह—"अथ द्यौः" कस्मात्? पृश्निः उच्यते—सापि हि "संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च"॥ २।१४।२॥

**नाक आदित्यो भवति—नेता रसानाम्। नेता भासां, ज्योतिषां प्रणयः॥**

**अथ द्यौः। कमिति सुखनाम, तत् प्रतिषिद्धं प्रतिषिध्येत। "न वा अमुं लोकं जग्मुषे किं च नाकम्।" न वा अमुं लोकं गतवते किञ्च नासुखं, पुण्यकृतो ह्येव तत्र गच्छन्ति॥ ३॥**

"नाक आदित्यो भवति"।आह—कस्मात् ? उच्यते—"नेता रसानाम्, नेता भासां" नेता ह्यसौ भासां सर्वासु दिक्षु ।। "ज्योतिषां" च "प्रणयः" अस्यैव हि भगवतो रश्मिजालप्रान्तोपलग्नं ज्योतिश्चक्रं बंभ्रमीति ।।

"अथ द्यौः" कस्मान्नाक इति ? उच्यते—"कमिति सुखनाम ( अ० ३ खं० ७ )" ।। आह ततः किम् ? इति । शृणु—"तत्प्रतिषिद्धं"सत् पुनरपि "प्रतिषिध्येत"।। आह—किम् इति ? उच्यते—तत्प्रतिषिध्यमानम् अकम् भवति, असुखमित्यर्थः, पुनरपि च प्रतिषिध्यमानः "नाकम्" भवति । ततो द्विः प्रतिषेधः प्रकृतमापादयति, नाकमित्युक्ते सुखमिति प्रतीयते ।। ब्राह्मणमपि चैतस्मिन्नर्थे भवति—"न वा अमुं लोकं जग्मुषे किं च नाकम्"—इति ।। आह—किमुक्तं भवति ? "अमुम्" एव "लोकं" द्युलोकं "गतवते" "न" "किं च" किञ्चित् नाकं "नासुखम्" इत्यर्थः— किं कारणम् ? य एव हि "पुण्यकृतः" भवन्ति, ते "एव हि" "तत्र गच्छन्ति" न च पुण्यकृतां दुःखेन भवितुं न्याय्यम् ।। २ । १४ । ३ ।।

**गौरादित्यो भवति—गमयति रसान् ।। गच्छत्यन्तरिक्षे ।। अथ द्यौर्यत् पृथिव्या अधि दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति ।। ४ ।।**

"गौरादित्यो भवति" । आह—कस्मात् ? उच्यते—"गमयति" ह्यसौ "रसान्" आत्मानं प्रति, उपक्षयं वा गमयति ।। किं च, "गच्छत्यन्तरिक्षे" स एवात्मना ।।

"अथ द्यौः" कस्माद् गौः इति ? उच्यते—"यत्" यस्मादियं गौः "पृथिव्याः" "अधि" उपरि "दूरम्" अध्वानं "गता भवति" । किं च "यत्" यस्मात् "च" "अस्यां" "ज्योतींषि" ग्रहनक्षत्रतारकादीनि "गच्छन्ति" तस्माद् गौः ।। २।१४।४ ।।

**विष्टबादित्यो भवति—आविष्टो रसान् । आविष्टो भासं ज्योतिषाम् । आविष्टो भासेति वा ।। अथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।। ५ ।।**

---

१ गौरादित्य इति ।। एवं च 'आयं गौः पृश्निरक्रमीत्' इति मन्त्रेऽपि गौरादित्यः, तद्विशेषणं पृश्निरिति । एवं च 'अयम्' इति लिङ्गव्यत्ययोपि नैव कल्पनीयः 'मातरं पुरः पितरं च' इत्यप्यनायासेनान्वितं भवति 'द्यौर्मे पिता—' इति मन्त्रे मातृपितृशब्दयोः द्यावापृथिवीवाचकत्वस्य दृष्टत्वात् अत्र मन्त्रे गोशब्दस्य पृथिवीवाचकत्वे महती कष्टकल्पना कर्तव्या स्यात् ।।

"विष्टबादित्यो भवति" ॥ आह—कस्मात् ? उच्यते—आभिमुख्येन हि एषः "रसान्" भौमानान्तरिक्षांश्च "आविष्टः" प्रविष्टो रश्मिभिरादातुम् ॥ किंच, आभिमुख्येन "आविष्टः" प्रविष्टो "भासं" "ज्योतिषां" ग्रहादीनाम् ॥ अथवा अयमेवाभिमुख्येन "आविष्टो भासेति वा" सर्वतो ह्येष सन्दीप्तो भवति ॥

आह—"अथ द्यौः" कस्माद् विष्टप् इति ? उच्यते—इयमपि हि "आविष्टा" "ज्योतिर्भिः" ग्रहनक्षत्रादिभिः, "पुण्यकृद्भिः" ये चान्ये सुपुण्यकृतस्तैश्च तस्माद् विष्टविति ॥ २।१४।५ ॥

**नभ आदित्यो भवति—नेता भासां ज्योतिषां प्रणयोऽपि वा भन एव स्याद्विपरीतो न न भातीति । तेन द्यौर्व्याख्याता ॥ ६ ॥ १४ ॥**

"नभ आदित्यो भवति" । आह—कस्मात् ? उच्यते,—"नेता" ह्येष "भासां" सर्वासु दिक्षु ॥ "ज्योतिषां" च "प्रणयः" व्याख्यातमेतत् । "अपि वा भन एव स्याद्विपरीतः" भनः[1] भासनः[2] सन् नभ इत्युक्तो विपर्य्ययेण । "न न भातीति वा" नैन भाति, भात्येवेति नभः ॥

"एतेन द्यौर्व्याख्याता" सापि ह्यादित्यवन्नेत्री भासामित्येवमादि योज्यम् ॥२।१४।६॥*

## ( अथ रश्मिनामानि )

**खेदयः । किरणाः । गावः । रश्मयः । अभीशवः । दीधितयः । गभस्तयः । वनम् । उस्राः । वसवः । मरीचिपाः । मयूखाः । सप्तऋषयः । साध्याः । सुपर्णा इति पञ्चदश रश्मिनामानि ॥१५॥**

### ( अथ रश्मिनामनिर्वचनम् । )

**रश्मिनामान्युत्तराणि पञ्चदश ॥ १ ॥**

आदित्यसम्बन्धेनैव "रश्मिनामान्युत्तराणि पञ्चदश" ॥ २ । १५ । १ ॥

---

१ भासनशब्दे आकारसकारवर्णद्वयलोपेन भन इति भवति ॥ २ अनभःशब्दे आद्याक्षरलोपेन नभ इति भवति ॥ * इतोग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये चतुर्दशः खण्डः ॥ १४ ॥' इति द्रष्टव्यम् ॥ "इति निरुक्तवृत्तौ द्वितीया [ सप्तमा ] ध्यायस्य चतुर्थः पादः॥२,४" ॥ इति तूपलभ्यते ॥

## रश्मिर्यमनात् ॥ २ ॥

"रश्मिर्यमनात्" उदकस्य अश्वानां वा ॥ २ । १५ । २ ॥

## तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः ॥ ३ ॥

"तेषां" "पञ्च" यानि "आदितः" तानि "साधारणानि" "अश्वरश्मिभिः" ॥ कतमानि पुनस्तानि? "खेदयः, किरणाः"—इत्येवमादीनि । खे दयन्ते खे गच्छन्ति इति खेदयः ॥ किरणाः, ते हि विक्षिप्ता भवन्ति ॥ २ । १५ । ३ ॥

(अथ दिङ्नामानि)

# आताः । आशाः । उपराः । आष्ठाः । काष्ठाः । व्योम । ककुभः । हरित इत्यष्टौ दिङ्नामानि ॥ १ । ६ ॥

(अथ दिङ्नामनिर्वचनम्)

## दिङ्नामान्युत्तराण्यष्टौ ॥ ४ ॥

"दिङ्नामान्युत्तराण्यष्टौ" । आदित्योपलक्षणा एव हि दिश इत्यादित्यनामभ्यः उत्तराणि दिङ्नामानि ॥ कियन्ति पुनस्तानि? अष्टौ ८ ॥ कानि पुनस्तानि? "आताः, आशाः, उपराः"—इत्येवमादीनि । आताः, आगता ह्येतास्तंतमर्थं प्रति भवन्ति । आशाः, अभ्यश्नुवते ह्येताः सर्वमेव यदस्ति किञ्चित् । उपराः, सर्वमेव ह्येता उपगम्य रता भवन्तीत्युपराः ॥ २ । १५ । ४ ॥

## दिशः कस्माद्दिशतेरासदनादपि वाभ्यशनात् ॥ ५ ॥

आह—"दिशः कस्मात्"? "दिशतेः" अतिसर्जनार्थस्य (तु० उ०), अतिसृज्यन्ते ह्यासु हविरादीनि देवतानाम् ॥ अथवा "आसदनात्" तंतमर्थं प्रत्येता आसन्ना भवन्ति ॥ "अपि वाभ्यशनात्" अभ्यश्नुवते ह्येतास्तंतमर्थम् ॥ २ । १५ । ५ ॥

## तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति ॥ ६ ॥

"तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति" तत्र तस्मिन्नष्टके दिङ्नामगणे काष्ठा इत्येतन्नामानेकस्यापि सत्त्वस्य भवति ॥ २ । १५ । ६ ॥

## काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति ॥ ७ ॥

तद्यथा,—"काष्ठा दिशो भवन्ति" । आह,—किं कारणम्? इति । उच्यते,—"क्रान्त्वा स्थिता भवन्ति" क्रान्त्वा ह्येतास्तंतमर्थं प्रति गत्वा स्थिता भवन्ति, नहि तदस्ति, यत्रेमा न सन्ति ॥ २ । १५ । ७ ॥

काष्ठा उपदिशो भवन्तीतरेतरं क्रान्त्वा स्थिता भवन्ति ॥ ८ ॥

"काष्ठा उपदिशो भवन्ति" । "इतरेतरं क्रान्त्वा स्थिता भवन्ति" ता अपि ह्रीतरेतरं क्रान्त्वा दिग्भिः साकं स्थिता भवन्ति ॥ २ । १५ । ८ ॥

आदित्योऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवति ॥ ९ ॥

"आदित्योऽपि काष्ठोच्यते" । "क्रान्त्वा स्थितो भवति" असावपि स्वस्थानं क्रान्त्वा गत्वा स्थितो भवति ॥ २ । १५ । ९ ॥

आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवति ॥ १० ॥

"आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति" । आज्यन्तोऽपि शरपथान्तः काष्ठोच्यते, असावपि स्वप्रदेशं क्रान्त्वा गत्वा स्थितो भवति ॥२।१५।१०॥

आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् ॥ ११ ॥ १५ ॥

"आपोऽपि काष्ठा उच्यन्ते" । ता पुनर्द्वय्यः,–स्थावराश्चास्थावराश्च । तत्र "क्रान्त्वा" गत्वा जलाशयमेताः "स्थिता भवन्तीति स्थावराणाम्" काष्ठात्वम् । अस्थावराणां पुनः क्रामन्ते चैताः, न क्वचित् तिष्ठन्तीति काष्ठा मेघ्या आपः ॥२।१५।११॥

मन्त्रोऽपि चैतस्मिन्नेवार्थे भवति—*

"अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥" अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः ॥ शरीरं शृणातेः शम्नातेर्वा ॥ वृत्रस्य निण्यं निर्णामम् । विचरन्ति विजानन्त्याप इति ॥ दीर्घं द्राघतेः । तमस्तनोतेः । आशयदा शेतेः । इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः ॥ १ ॥

* इतोऽग्रे–'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये पञ्चदशः खण्डः ॥ १५ ॥ इति दृश्यते तत् 'मन्त्रोऽपि' इत्यतः प्राक् समुचितम् ॥

अतिष्ठन्तीनामिति । हिरण्यस्तूपस्येयमार्षम्, दासपत्नीरिति च । त्रिष्टुभावेते । अग्निष्टोमे निष्केवल्यं नाम शस्त्रम्, तत्र निविद्धानीयमेतत् सूक्तम्, तत्रैते द्वे अपि शस्येते । न तिष्ठन्तीत्यतिष्ठन्त्यः, तासाम् "अतिष्ठन्तीनाम्" मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव, तदाधारत्वात् । "अनिवेशनानाम्" "अनिविशमानानाम्" न हि ताः क्वचिन्निविशन्ते, यावज्जलाशयं नाप्नुवन्ति । तासामेवंविधानां "काष्ठानां मध्ये" अवस्थितानां बाह्यतो मेघाख्यं "निहितम्" अवस्थापितं धात्रा "शरीरम्" आवृत्य अपः, तासामेव गुप्तये । ताः पुनः "आपः" तस्य "वृत्रस्य" मेघस्य "निण्यं निर्णामं" येनासौ नीचैर्नमति तं प्रदेशं "विजानन्ति" इव । यतस्तेन प्रदेशेन "विचरन्ति" प्रचरन्ति निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रचरन्तीषु तत्प्रचरणनिरोधं चिकीर्षुः स्वशरीरविवृद्ध्या 'दीर्घं तमः' स हि तमः स्वत एव, धूमादिप्रभवत्वात् । यावन्तं प्रदेशं निम्नमनुसरन्त्यो मेघस्य ताः स्रुता भवन्ति, निपतिष्यन्त्यस्ततो बहुतरमसौ वर्द्धते । तदवरुत्सया एवं दीर्घं तम आवृत्य "आशयत्" आशेत इत्यर्थः ॥ कः पुनरेवमाशयत् ? "इन्द्रशत्रुः" इति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—"शरीरं शृणातेः" हिंसार्थस्य, हिंस्यते हि तत् ॥ "शम्नातेर्वा" हिंसार्थस्य ॥ "दीर्घं द्राघतेः ( भू० आ० )" वृद्ध्यर्थस्य, वृद्धं हि तद् भवति ॥ "तमः तनोतेः ( तना० उभ० )" तेन हि सर्वमेव ततं भवति ॥ "आशयत्" "आङ्" पूर्वस्य "शेतेः" ॥ "इन्द्रशत्रुः" "इन्द्रोऽस्य शमयिता वा" हन्तेत्यर्थः "शातयिता वा" हन्ता वा, धात्वन्यत्वमर्थैकत्वम् ॥ २ । १६ । १ ॥

**तत्को वृत्रः ? मेघ इति नैरुक्ताः ॥ त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ॥ अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते ॥ तत्रोपमार्थेन युद्धवर्णा भवन्ति ॥ २ ॥**

इह मन्त्रे वृत्र इत्येतच्छ्रुतं "तत्" एतत् नैगमानुप्रसक्तं विचार्यते इत्युपयुक्तस्तच्छब्दः । आह—"को वृत्रः ?" उच्यते—"मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहा-[4]

१ 'क्षरन्ति' ॥ २ 'क्षरन्ती' ॥ ३ 'आतत्य' ॥ ४ ऐतिहासिका इति । इतिहासमधीयते त ऐतिहासिकाः । अयं चेतिहासो यजुर्वेदे शतपथे (१।५।२) तैत्तिरीयसंहितायां ( २।५ )उपलभ्यते ॥ वेदार्थनिर्णयश्च इतिहासमन्तरा नैव भवति ॥ तथा चोक्तं स्मृतिषु—'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥' इति । ऐतरेयतैत्तिरीयकाठकादिषूक्तानि हरिश्चन्द्रनाचिकेताद्युपाख्यानानि तेषुतेष्वितिहासग्रन्थेषु स्पष्टीकृतानि ॥ स्वयं च नैरुक्तो भूत्वापि तत्रतत्रेतिहासं दर्शयति वेदार्थसंगतये तेन सूचयति वेदार्थज्ञाने 'मुख्यं कारणत्वमितिहासज्ञानस्यैव' इति ॥ उपमार्थेन 'युद्धवर्णाः' इति तु नैरुक्तानामगतिकगतिकल्पना । बहूनां युद्धवर्णकानां निगमानामनुरोधेन युद्धवर्णस्य मायात्वप्रतिपादकस्याल्पस्य निगमस्यैव बलातिशयेन माहात्म्यस्तुत्यर्थवादत्वकल्पनाया एवाङ्गीकरणीयत्वात् ॥ अत एव "नैरुक्ताः" इत्येवोक्तम्, नतु वयमिति स्वस्थानाभिनिवेशं सूचयितुमिति दिक् ॥

सिका:" । निरुक्तमधीयते नैरुक्ताः॥ आह—यदि मेघो वृत्रो, य एष मन्त्रेषु तत्र सङ्ग्रामः श्रूयते तत्र कः समाधिः ? इति । उच्यते—"अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" । अपां च मेघोदरान्तर्गतानां ज्योतिषश्च वैद्युतस्य उद्भूतवृत्तेः मिश्रीभावकर्मणो वर्षकर्म जायते तेन हि वैद्युतेन ज्योतिषा वाय्वावेष्टितेन इन्द्राख्येनोपताड्यमाना आपः प्रस्यन्दन्ते—वर्षभावाय कल्प्यन्ते । तत्र एवं सत्युदकतेजसोरितरेतरप्रतिद्वन्द्वभूतयोः उपमार्थेन रूपकल्पनया युद्धवर्णा भवन्ति—इति युद्धे रूपकाणीत्यर्थः । न ह्यत्र यथाभूतं युद्धमस्ति, न हीन्द्रस्य शत्रवः केचन सन्ति । मन्त्रोऽपि चैतस्मिन्नर्थे अस्ति नेन्द्रस्य शत्रवः,—

"यदचरस्तन्वा वावृधानो वलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से ॥ (ऋ० सं० ८,१,१५,२)" ।

वामदेवपुत्रस्य बृहदुक्थस्यार्षम् । त्रिष्टुप् । व्यूढस्याष्टमेऽहनि निष्केवल्ये शस्यते॥ 'यत्' 'अचरः' त्वं नानाप्रकारं 'तन्वा वावृधानः' शरीरेण विग्रहवान् भूत्वा वावृधानः पुनः-पुनः वर्द्धमानः ॥ कथं पुनरचरः ? 'वलानीन्द्र प्रब्रुवाणो जनेषु' । वलानि आत्मीयानि-वीर्य्याणि, हे इन्द्र ! प्रब्रुवाणः इव ॥ क ?, जनेषु ॥ किं त्वं तथैव ? न । 'मायेत्सा ते यानि युद्धान्याहुः' । यानि युद्धान्याहुः ऐतिहासिकाः, नानारूपाण्युपप्रदर्शयन्तः, सा अपि च ते तव माया इत् मायैव ॥ किं कारणम् ? 'नाद्य' शत्रुः तवास्ति प्रत्यनीकभूतः ॥ 'न नु पुरा' नापि पुरा कश्चिदासीत् । यावद् वीर्यं किञ्चित् क्वचिदस्ति सर्वं तत् त्वमेव । "वीर्य्यं वै प्राणो वीर्य्यमिन्द्र इति ह विज्ञायते" । क ते शत्रुः ? येन साकं युयोधिथ । एतच्च त्वमपि 'विवित्से' वेत्स्येव, न केवलमहमेवेत्यभिप्रायः । एवमेतन्मन्त्रे मायामात्रमेव युद्धमिति श्रूयते । विज्ञायते च "तस्मादाहुर्नैतदस्ति यद्देवासुरमिति" । तस्मात् साधूक्तम्—"अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षं जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" ॥ २ । १६ । २ ॥

**अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च ॥ विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार । तस्मिन् हते प्रसस्यन्दिर आपः ॥ ३ ॥ १६ ॥**

आह—किं वृत्रवदेव युद्धरूपाणि भवन्ति ? नेत्युच्यते—"अहिवत्तु खलु मन्त्रवर्णा, ब्राह्मणवादाश्च"।तुः[1] शब्दः समुच्चयार्थो द्रष्टव्यः । वृत्रवच्चाहिवच्चेति मन्त्रवर्णा मन्त्रलिंगानि । भवन्ति, ब्राह्मणवादाश्च शाखान्तरेषु भवन्ति, तदप्युपेक्षितव्यम् ॥

"तस्मिन् हते" वृत्राख्ये मेघे हते "प्रससस्यन्दिरे" "आपः" प्रस्यन्दितवत्य आपः ॥ २ । १६ । ३ ॥

१ 'चः' ॥

## तदभिवादिन्येषर्ग्भवति—

"तदभिवादिनी एषा" तस्यार्थस्याभिमुख्येन वादिन्येषा "ऋक् भवति"—*

"दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः। अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥" दासपत्नीर्दासाधिपत्न्यः॥ दासो दस्यतेरुपदासयति कर्माणि॥ 'अहिगोपा अतिष्ठन्' अहिना गुप्ताः॥ अहिरयनादेत्यन्तरिक्षे॥ अयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति॥ 'निरुद्धा आपः पणिनेव गावः।' पणिर्वणिग् भवति॥ पणिः पणनात्॥ वणिक् पण्यं नेनेक्ति॥ 'अपां बिलमपिहितं यदासीत्'। बिलं भरं भवति बिभर्त्तेः॥

वृत्रं जघ्निवानपववार तत्॥ वृत्रो वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा "यदवृणोत्तद् वृत्रस्य वृत्रत्वमिति विज्ञायते॥ यदवर्त्तत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते॥ यदवर्द्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते" ॥ १ ॥ १७ ॥

दासपत्नीरहिगोपा अतिष्ठन्निति। "दासपत्नीः" आपः। "अहिगोपाः" मेघगोपाः "अतिष्ठन्" स्थितवत्यः। "निरुद्धाः" ता दासपत्नीः "आपः" यथा केनाचित् "पणिना" वणिजा कस्मिंश्चिद्वीथ्यन्तरे विक्रयार्थे "गावो" निरुद्धास्तिष्ठेयुः॥ एवं स्थितवत्यस्ताः॥ पुनः खे[१] निरुद्धाः सत्यः तेन मेघेन तासाम् "अपां" "यत्" "बिलं" निर्गमद्वारम् "अपिहितम्" "आसीत्" तेन मेघेन, "तत्" यदा इन्द्रः तं "वृत्रं" मेघं "जघन्वान्" निजघ्निवान् अहत, हत्वा च "अपववार" अपावृतवान्। अथ तदा तस्मिन् निहते अपावृते च द्वारे ताः आपः प्रसस्यन्दिरे वर्षभावेनेति समस्तार्थः॥

---

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा) ध्यायस्य षोडशः खण्डः॥ १६॥' इति दृश्यते तत् 'तदभिवादिनी' इत्यतः प्राक् समुपगन्तव्यम्॥

१ 'नखे' ॥

अथैकपदनिरुक्तम् । "दासपत्नीः दासाधिपत्न्यः" दासः कर्मकरः, तं हि ता अधिष्ठाय पान्ति रक्षन्ति । स हि कर्मणा श्रान्तः, तासु पीतासु विश्रान्त आप्यायितो भवति ॥ विग्रहप्रसक्तं निरुच्यते,—"दासो दस्यतेः (दि०प०)" स हि "उपदासयति" उपक्षयति कृष्यादीनि "कर्माणि" ॥ "अहिगोपाः" "अहिना गुप्ताः" ॥ "अहिः" कस्मात् ? उच्यते—"अयनात्" "एति" हि असौ "अन्तरिक्षे" ॥ शब्दसामान्यान्निरुच्यते,—"अयमपीतरोऽहिः" सर्पः "एतस्मादेव" असावपि हि एति ॥ अथवा "निर्ह्रसितोपसर्गः" स्यात् ॥ कथम् ? "आहन्ति" असौ भोगेनेत्यादिः । आङ्पूर्वस्य हन्तेः ( अदा० प० ), स पुनरयमुपसर्गं निर्ह्रस्य ह्रस्वं कृत्वा अहिरुच्यते ॥ "पणिर्वणिग् भवति"—इति पर्य्यायेण तत्त्ववचनम् । "पणिः पणनात्" पैणिति[1] ह्यसौ व्यवहारं करोति ॥ पर्य्यायप्रसक्तं निरुच्यते,—"वणिक् पण्यं" वणिजो यत् द्रव्यं तत् पण्यम्, तदसौ "नेनेक्ति" नित्यकालं शुचीकरोति मूल्यार्हं स्यादिति ॥ "बिलं भरं भवति" "बिभर्त्तेः (जु०प०)" धातोः, भृतं हि तदुदकतादिभिः ॥ "वृत्रो वृणोतेर्वा (स्वा०उ०) वर्त्ततेर्वा (भू० आ० ) वर्द्धतेर्वा ( भू० आ० )" इत्येषां धातूनामन्यतमस्य । ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"यदवृणोत्" अन्तरिक्षमुदकं वा, महत्त्वात् "तद् वृत्रस्य वृत्रत्वम्"—"इति" एवं ब्राह्मणेऽपि "विज्ञायते" विचार्य्यमाणे ज्ञायते । अथवा "यदवर्तत" इन्द्रेण हतो वृत्रो मेघः अपां बिले अपावृते अपः वृष्टिभावेन अवर्त्तयत् प्रावर्त्तयत्, "तद् वृत्रस्य वृत्रत्वम्" । अथवा "यत् अवर्द्धत" असावतिमात्रप्रमाणम्, "तद् वृत्रस्य वृत्रत्वं" स्यादिति ॥ २ । १७ । १ ॥ *

## ( अथ रात्रिनामानि )

**श्यावी । क्षपा । शर्वरी । अक्तुः । ऊर्म्या । राम्या । यम्या । नम्या । दोषा । नक्ता । तमः । रजः । असिक्नी । पयस्वती । तमस्वती । घृताची । शिरिणा । मोकी । शोकी । ऊधः । पयः । हिमा । वस्वीति त्रयोविंशती रात्रिनामानि ॥ १७ ॥**

---

१ 'पणते' इति तूचितम् । इकारयोगस्य परस्मैपदस्य चाप्राप्तेः ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायस्य सप्तदशः खण्डः ॥ १७ ॥ इति द्रष्टव्यम् ॥ "इति निरुक्तवृत्तौ द्वितीया [ सप्तमा ] ध्यायस्य पञ्चमः पादः ॥ २ ।५॥" इति तूपलभ्यते ॥

(अथ रात्रिनामनिर्वचनम्)

## रात्रिनामान्युत्तराणि त्रयोविंशतिः ॥ १ ॥

"काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति (२ अ० १५ खं०)"—इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्तमुक्तम् । प्रकृतमिदानीमुच्यते,—

"रात्रिनामान्युत्तराणि त्रयोविंशतिः ।" रात्रेर्नामानि "रात्रिनामानि" । 'उत्तराणि' इति प्रकृतेभ्यो दिङ्नामभ्यः, तमःसंतत्या हि रात्रिः, तस्य च तमसो दिक्ष्वेवात्मलाभो भवति, अतो दिङ्नामभ्य उत्तराणि रात्रिनामानि ॥ कियन्ति पुनस्तानि ? त्रयोविंशतिः । त्रीणि च विंशतिश्च त्रयोविंशतिः २३ ॥ कतमानि पुनस्तानि ? "श्यावी, क्षपा, शर्वरी"—इत्येवमादीनि । श्याववर्णा हि रात्रिरिति श्यावी । स्वैःस्वैः कर्मभिः अहनि क्षीणान् प्राणिनः इयं स्वापेन पातीति क्षपा, अस्यां हि सुप्ताः पुनर्नवा इव प्राणिनः प्रातरुत्तिष्ठन्ति । शरणमस्यां स्वापार्थं व्रियत इति शर्वरी । इत्येवमादि सर्वत्र योज्यम् ॥ २ । १८ । १ ॥

## रात्रिः कस्मात् प्ररमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि ध्रुवीकरोति ॥ रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्यायाः ॥ २ ॥

आह—"रात्रिः कस्मात् ?" इति । उच्यते—इयं ह्यागच्छन्ती "प्रकर्षेण रमयति"॥ कानि ? "भूतानि नक्तञ्चारीणि" पिशाचादीनि, तानि हि विगतेऽहनि रात्र्यामुपस्थितायां प्राप्तोऽयं विहारसमय इति प्रकर्षेण रमन्ते ॥ "उपरमयतीतराणि ध्रुवीकरोति" इतराण्यपि दिवाचारीणि सैवोपरमयति. तस्यां ह्युपस्थितायां दिवाचराणि भूतानि मनुष्यादीनि इतिकर्त्तव्यताभ्य उपरमन्ति, उपरम्य च स्थिरीभवन्ति निवासाय ॥ "रातेर्वा स्यात् दानकर्मणः" दानार्थस्य । आह—किमस्यां प्रदीयन्ते ? उच्यते—"प्रदीयन्तेऽस्यामवश्यायाः" अवश्यमायन्तीत्यवश्यायाः, तुषारा इत्यर्थः, ते हि रात्रौ निपतन्ति ॥ २ । १८ । २ ॥

(अथोषोनामानि)

## विभावरी । सूनरी भास्वती । ओदती । चित्रामघा । अर्जुनी । वाजिनी । वाजिनीवती । सुम्नावरी । अहना । द्योतना । श्वेत्या । अरुषी ।

सूनृता । सूनृतावती । सूनृतावरीति षोळशोषोनामानि ॥ १ । ८ ॥

( अथोषोनामनिर्वचनम् )

उषोनामान्युत्तराणि षोळश ॥ ३ ॥

"उषोनामान्युत्तराणि षोळश" उषसो नामानि । रात्रेरेव ह्यपरः कालः उष आख्यो भवतीति रात्रिनामभ्य उत्तराणि उषोनामानि ॥ कियन्ति पुनस्तानि? षोळश षट् च दश च षोडश १६ ॥ कतमानि पुनस्तानि ? विभावरी, सूनरी"— इत्येवमादीनि । विविधां भियं भासं वृणोतीति विभावरी । शोभनं नराणामस्यामुत्थानं भवतीति सूनरी । इत्येवमादि निर्वचनं योज्यम् ॥ २ । १८ । ३ ॥

उषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालः ॥ ४ ॥ १८ ॥

आह—"उषाः कस्मात् ?" इति । उच्यते—"उच्छतीति सत्याः" । 'उच्छी विवासे (भू० प० )' विवासयति हीयं तमांसि, तस्मादुच्छतीत्येवमस्या एतस्मिन् कर्मणि सत्याः कर्त्तरि कारके उषा इत्येतदभिधानं भवति ॥ आह—का पुनरियमुषा इति ? उच्यते— "रात्रेरपरः कालः" स उषा इत्युच्यते ॥ २ । १८ । ४ ॥

तस्या एषा भवति—

आह—कथमेतद्गम्यते रात्रेरपरः काल उषा इति ? उच्यते—"तस्याः", उषसः रात्र्यपरकालत्वे "एषा" निर्वाचिका ऋग् "भवति"—*

"इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा । यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥" इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् । चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्य । एवं रात्र्युषसे योनिमारिचत् स्थानम् ॥ स्त्रीयोनिरभियुत एनां गर्भः ॥ १ ॥

१ 'दुच्यते रा' ॥ * इतोऽग्रे—इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा) ध्यायेऽष्टादशः खण्डः॥१८॥इति दृश्यते तत् 'आह—कथमेतद्गम्यते' इत्यतः प्राक् समुचितम् ॥

इदं श्रेष्ठमिति। आङ्गिरसस्य कुत्सस्येयमार्षम्, उत्तरा च। उभे अपि त्रिष्टुभावेते प्रातरनुवाकाश्विनयोः शस्येते। "इदम्" उषोलक्षणं "ज्योतिः" "श्रेष्ठम्" आदित्यादीनां "ज्योतिषाम्" इति निर्धारणे षष्ठी। आदित्यो हि तापकः प्रकाशकः, चन्द्रमा अप्यतिशीतः प्रकाशकश्च, इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकं च। इत्येवमादित्यादीनामिदमेव श्रेष्ठम्। "आगात्" "आगमत्" आगच्छतीत्यर्थः। "चित्रं" चायनीयं पूजनीयं वा श्रेष्ठत्वादेव, "प्रकेतः" "प्रकेतनं" "प्रज्ञाततमम्" "अजनिष्ट" जातमित्यर्थः। जातं सदागच्छति सर्वासु दिक्षु। "विभ्वा" "विभूततमम्" इदमतिमहत्त्वाद् विभूततमं विस्तीर्णतमम्, इतराणि परिच्छिन्नतराणि ज्योतींषि अपेक्ष्य। किंच, "यथा प्रसूता" प्रकर्षेण सूता प्रसवमनुप्राप्ता। सूतिशब्दः प्रसवार्थः। "रात्रिः" "सवितुः" "आदित्यस्य" "सवाय" "प्रवसवाय" आदित्योत्सृष्टे देशे जायते। "एवम्" एव "रात्री" रात्रिः उषसो जन्मार्थं "योनिं" "स्थानम्" अवकाशम् "उषसे" आत्मलाभाय "आरैक्" "अरिचत्" आरेचयति, ददातीत्यर्थः। यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरजन्मत्वात्, एवं रात्रिरुषसो जन्मनो हेतुः, इत्येवमस्यामृचि रात्रेरेवापरः काल उषःसञ्ज्ञित इति गम्यते। "स्थानं" योनिशब्देनोच्यते। यद्धि यस्मिन् विधीयते, तत् तेन साकं युतं भवति मिश्रीभूतमित्यर्थः॥ इयमपीतरा—"स्त्रीयोनिः" एतस्मादेव। किं कारणम्? "अभियुतः" हि "गर्भः" "एनाम्" भवति, आमिश्रीभूत इत्यर्थः॥ पूर्वत्र (२ अ० ८ खं०)—"अयमपीतरो योनिः, एतस्मादेव। [किम्?] परियुतो भवति" इति परियवनक्रियासामान्येन निरुक्तो योनिशब्दः, इह (२।१९) पुनः "अभियुत एनां गर्भः" इति मिश्रीभावसामान्येन उभयलिङ्गत्वं चास्योपदर्शितम्,—इह स्त्रीलिङ्गम्,—तत्र पुंलिङ्गम् इति॥ २। १९। १॥

## तस्या एषापरा भवति—

"तस्याः" उषसः "एषा" "अपरा" ऋग् "भवति" * अस्यैवार्थस्य दृढतायै रात्रेरपरः काल उषा उच्यत इति—

"रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने॥"

'रुशद्वत्सा' सूर्य्यवत्सा। रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्य्यमस्या वत्समाह साहचर्य्याद्रसहरणाद्वा।

१ 'रेव वा'॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा) ध्यायस्य एकान्नविंशः खण्डः॥१९॥' इति दृश्यते तत्र 'वत्सा सूक्तः' इत्यतः प्राक् समुचितम्॥

'रुशती श्वेत्यागात् ।' श्वेत्या श्वेततेः । अरिचत् कृष्णा सदनान्यस्याः, कृष्णवर्णा रात्रिः । कृष्णं कृष्यतेर्निकृष्टो वर्णः ॥

अथैने संस्तौति 'समानबन्धू' समानबन्धने ।

'अमृते' अमरणधर्माणौ 'अनूची' अनूच्यावितीतरेतरमभिप्रेत्य 'द्यावा वर्णं चरतः' ते एव द्यावौ द्योतनात् । अपि वा द्यावा चरतस्तया सह चरत इति स्यात् ॥

आमिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे ॥ १ ॥

रुशद्वत्सेति । "रुशद्वत्सा" रोचिष्णुवत्सा, सूर्य्यो हि रोचिष्णुः । तं "सूर्य्यम् अस्या वत्समाह" मन्त्रदृक् । "साहचर्य्यात्" । मातृसहचरो हि वत्सो भवति, अयमपि चानयोषसा सह चरतीत्येतस्मात् सामान्याद् वत्स इत्युच्यते ॥ "रसहरणाद्वा" । यथा हि मातुरूधसः क्षीराख्यस्य रसस्याहर्त्ता भवति वत्सः, एवमेषोऽप्यौषसिकानामवश्यायाख्यानां रसानामाहर्त्ता भवति रश्मिभिः,—इत्येतस्मात् सामान्याद् वत्सत्वम् ॥

"रुशती" रोचनशीला आत्मनापि ॥ "श्वेत्या" "श्वेततेः" धातोः ( भू० आ० ) । श्वेतो वर्ण एत्यस्याम्, श्वेतवर्णेत्यर्थः । या चैवंलक्षणा उषाः, सा "आगात्" आगच्छति ।

आगतायाश्च तस्याः "आरैक्" "आरेचत्" आरेचयति । "कृष्णा" "कृष्णवर्णा रात्रिः" किमारेचयति ? "सदनानि" स्थानानि । "अस्याः" उषसः । येष्वियमुषाः स्थानेषु आगता सती आसीदति, तान्यारेचयति रात्रिः । एवं तावदयमर्द्धर्चो रात्र्युषसोर्विभक्तस्तुतिः ।

"अथ" अनेनोत्तरार्द्धर्चेन "एने" रात्र्युषसौ "संस्तौति" ।—"समानबन्धू" एते रात्र्युषसौ, "समानबन्धने" समानमनयोर्बन्धनम् । आदित्यस्येयं ह्यस्तमयं प्रति रात्रिर्बद्धा संश्लिष्टा, उदयं प्रत्युषाः, एवं समानबन्धू ॥

"अमृते" "अमरणधर्माणौ" न हि रात्र्युषसौ म्रियेते ।

"अनूची अनूच्यौ, इतीतरेतरमभिप्रेत्य" इतरेतरं संश्लिष्टे ह्येते । "द्यावा वर्णं चरतः" । "ते एव" रात्र्युषसौ । "द्यावौ द्योतनात्" उषा हि स्वेन प्रकाशेन द्योतते,

१ 'ष्वेवमु' ॥ २ 'षसी' ॥

रात्रिरपि स्वेन तमोवीर्य्येण नक्षत्रगणेन वा स्वमधिकारं प्रति द्योतते । एवं हि द्यावेति द्विवचनम् ॥ "अपि वा" तृतीयान्तमेकवचनमेतत् स्यात्,—द्यौः,तया "द्यावा" 'सह युक्ते (पा० २, ३, १९ )' । "तया" सह स्पर्द्धमाने "चरतः" गच्छतः ॥

कथं पुनश्चरतः ? "आमिनाने" । आङ् अध्यर्थे "तोदस्येव शरण आ महस्य । तुदस्येव शरणेऽधि महतः"—इति ( नैग० का० ५ अ० ७ खं० )॥ उषा अपि रात्रेरधि आत्मानं निर्मिमीते, रात्रिरप्युषसः, इतरेतरसंश्लिष्टे हीमे रात्र्युषसौ । तस्मादेवमुच्यते,—"अन्योऽन्यस्याध्यात्मं कुर्वाणे" इति ॥ २ । २० । १ ॥

## ( अथाहर्नामानि )

## वस्तोः । द्यौः ( द्युः ) । भानुः । वासरम् । स्वसराणि । घ्रंसः । घर्मः । घृणः । दिनम् । दिवा । दिवेदिवे । द्यविद्यवीति द्वादशाहर्नामानि ॥ १ । ९ ॥

### ( अथाहर्नामनिर्वचनम् )

### अहर्नामान्युत्तराणि द्वादश ॥ २ ॥

उषःशब्द तत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रौ उपवर्णितौ, प्रकृतमिदानीमुच्यते,—

"अहर्नामान्युत्तराणि द्वादश" । अह्नो नामानि, अहर्नामानि, उत्तराणि प्रकृतेभ्य उषोनामभ्यः, उषस एवानन्तरमहर्भवति, तस्मादुषोनामभ्य उत्तराणि अहर्नामानि। कियन्ति पुनस्तानि ? "द्वादश" द्वे च दश च द्वादश १२ ॥ कानि पुनस्तानि ? "वस्तोः, द्युः भानुः"—इत्येवमादीनि। वस्ते ज्योतिरेतदिति वस्तोरित्युच्यते । यथैव हि श्रुतं मन्त्रे तथैवेह समाम्नातम् । द्युः, द्योतते ह्येतत् ज्योतिषा । भानुः, भासते ह्येतत् ज्योतिषेत्येवमादि योज्यम् ॥ २ । २० । २ ॥

### अहः कस्मादुपाहरन्त्यस्मिन् कर्माणि ॥ ३ ॥ २० ॥

आह—"अहः कस्मात्"?उच्यते—"उपाहरन्त्यस्मिन् कर्माणि" न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकराः, यथाहनि ॥ २ । २० । ३ ॥

### तस्यैष निपातो भवति वैश्वानरीयायामृचि—

"तस्य" अह्नः "एष निपातो भवति" । नैघण्टुकवृत्त्या "वैश्वानरीयायाम्" वैश्वानरदेवतायाम् "ऋचि"—

"अहश्च कृष्णमहरर्जुनं च विवर्त्तेते रजसी वेद्याभिः ॥ वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥" अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनं विवर्त्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्वैश्वानरो जायमान इवोद्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्योतिषा तमांसि ॥ १ ॥

अहःशब्दो हि रात्रिमहश्चोभयमभिधत्ते, अतः सन्देहपदम्, तस्यैष विभागोऽस्यामृचि उपपदविशेषात् प्रदर्श्यते,—*

अहश्च कृष्णमिति । भरद्वाजस्येयमार्षम् । त्रिष्टुप् । पृष्ठस्य षष्ठेऽहन्याग्निमारुते शस्त्रे शस्यते । "अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनम्" । अर्जुनशब्दो हि शुक्लपर्य्यायः । "विवर्त्तेते" विपर्य्ययेण वर्त्तेते । रात्रिरतीता, अहर् आयातम्, अहरतीतं, रात्रिरायाता, इत्येवम् । "रजसी" रञ्जके । ज्योतिषा हि भूतान्यहो रञ्जयति, तमसा रात्रिः । "वेद्याभिः" "वेदितव्याभिः प्रवृत्तिभिः" न हि तासां प्रवृत्तीनामन्तोऽस्ति, अहनि च रात्रौ च प्राणिनाम् । अतस्ता वेदितव्या एव भवन्ति, बहुत्वात्, न हि विदितानामन्ताः कदाचित् । किञ्च, "वैश्वानरः" अग्निः "अवातिरत्" "अवाहन्" अपहन्ति, स्वेन "ज्योतिषा तमांसि" ॥ कथं पुनरपहन्ति?, "जायमानो न राजा" "जायमान इव" "उद्यन्" "सर्वेषां" सर्वभूतानां "राजा" "आदित्यः" । यथा ह्युद्यन्नादित्यस्तमांसि अपहन्ति दिवा, एवम् "अग्निः" अपि रात्रावपहन्तीत्यग्निरादित्येन तम उपघातं प्रत्युपमीयते ॥ २ । २१ । १ ॥

## ( अथ मेघनामानि )

अद्रिः । ग्रावा । गोत्रः । वलः । अश्नः । पुरुभोजाः । वलिशानः । अश्मा । पर्वतः । गिरिः । व्रजः । चरुः । वराहः । शंबरः । रौहिणः । रैवतः । फलिगः । उपरः । उपलः । चमसः । अहिः ।

---

* इतोऽग्रे-'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये विंशः खण्डः॥ ॥ २० ॥ इति दृश्यते तत् 'तस्य अहः' इत्यतः प्राक् समुचितम् ॥

**अभ्रम् । वुलाहुकः । मेघः । दृतिः । ओुदुनः । वृषन्धिः । वृत्रः । असुरः । कोश इति त्रिंशन्मेघनामानि ॥ १ । १० ॥**

( अथ मेघनामनिर्वचनम् )

## मेघनामान्युत्तराणि त्रिंशत् ॥ २ ॥

"मेघनामान्युत्तराणि त्रिंशत्" । मेघानां नामानि मेघनामानि तानि उत्तराणि, प्रकृतेभ्योऽहर्नामभ्यः । मेघा ह्यहनि रात्रौ चाविशेषेण भवन्त्यतो रात्र्यहर्नामभ्य उत्तराणि मेघनामानि ॥ कियन्ति पुनस्तानि ? त्रिंशत् ३० । कतमानि पुनस्तानि ? "अद्रिः, ग्रावा, गोत्रः"—इत्येवमादीनि । अद्रिः, आदरयितव्यो भवति ह्यसावुदकार्थमित्यद्रिः । ग्रावा, गृणातेर्वा गृह्णातेर्वा, गृणात्यसौ शब्दं करोति, गृहीतं चोदकमनेनेति गोत्रः, गौर्वागत्र । इत्येवमाद्यभ्यूहितव्यम्, पर्वतनामत्वेऽपि यथासम्भवं योज्यम् ॥ २ । २१ । २ ॥

## मेघः कस्मान्मेहतीति सतः ॥ ३ ॥

आह—"मेघः कस्मात्" ?, उच्यते—"मेहतीति" सिञ्चत्यसौ । एवं कर्त्तरि कारके "सतः" अस्यैतदभिधानं भवति ॥ २ । २१ । ३ ॥

## आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः ॥ ४ ॥

तेषां मेघनाम्नाम् "आ उपर उपल इत्येताभ्यां" प्राक् उपर उपल इत्येताभ्यां यानि नामानि, तानि "साधारणानि पर्वतनामभिः" तदेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्य्यः ॥ आ उपर इत्येतस्मात्—इति वक्तव्ये आ उपर उपल इत्येताभ्याम् इत्युक्तम्—उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन् निरुक्ते निरुक्तौ भविष्यतः, इति, श्लोकश्चाविशेषख्यापनार्थम् ॥ २ । २१ । ४ ॥

**उपर उपलो मेघो भवति ॥**
**उप रमन्तेऽस्मिन्नभ्राणि ॥**
**उप रता आप इति वा ॥ ५ ॥ २१ ॥**

"उपर उपलो मेघो भवति" उपर इति च उपल इति च मेघ उक्तो भवति । उपरशब्दादारभ्य मेघनामान्येव, न पर्वतनामानि ॥

आह—उपरः कस्मात् ?, उच्यते—"उप" गम्य "रमन्ते" "अस्मिन् अभ्राणि" ॥

अथ "वा"—"उप" गम्य "रताः" "आपः" भवन्ति "इति"उपरः ॥ उपलोऽप्ये तस्मादेव श्लोरविशेषेण ॥ २ । २१ । ५ ॥

तेषामेषा भवति—

आह—कथं पुनर्गम्यते उपरशब्देन मेघ एवोच्यते, न पर्वतः ? इतिउच्यते—"तेषां" मेघानाम् उपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका "एषा" ऋक् "भवति"—*

"देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन्।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥"

देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमिका देवगणाः । प्रथम इति मुख्यनाम प्रतमो भवति ॥ कृन्तत्रमन्तरिक्षं विकर्तनं मेघानां विकर्त्तनेन मेघानामुदकं जायते 'त्रयस्तपन्ति पृथिवीमनूपाः ।' पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति अनूपा अनुवपन्ति लोकान् स्वेन-(१) स्वेन कर्मणा ॥

अयमपीतरोऽनूप एतस्मादेवानूप्यत उदकेन ॥
(२)अपि वान्वाविति स्याद्यथा प्रागिति । तस्यानूप इति स्याद्यथा प्राचीनमिति । 'द्वा बृबूकं वहतः पुरीषम् ।'वाय्वादित्या उदकम् । बृबूकमित्युदकनाम ब्रवीतेर्वा शब्दकर्मणो भ्रंशतेर्वा । पुरीषं पृणातेः पूरयतेर्वा ॥ १ ॥ २२ ॥

देवनां मान इति । वसुक्रस्येन्द्रपुत्रस्येयमार्षम् । त्रिष्टुप् । महाव्रते मरुत्वतीये शस्यते । "देवानां" दानादिगुणयुक्तानां "माने" [ विमाने ] निर्माणे । यदा देवाः सृष्टाः प्रजापतिना, तदैत एव माध्यमिका देवगणाः "प्रथमाः अतिष्ठन्" एतेऽपि हि दानादियोगाद् देवा उच्यन्ते । प्रथमाः प्रतमाः प्रकृष्टतमा मुख्या इत्यर्थः । मेघाभावे हि सर्वमेवेदं जगद्

---

* इतोऽग्रे-'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याय एकविंशः खण्डः ॥ २१ ॥' इति दृश्यते, तद् 'आह—कथं पुनर्गम्यते' इत्यतः प्राक् समुचितम् ॥

x स्त्री त्वं ...माश्रितं भगवता दुर्गेण ?





वर्षाभावान्न स्यात् । तस्मादेत एव प्रकृष्टतयाः अतिष्ठन् अवस्थितवन्तः सृष्टौ हि सर्वदेवानामेत एवाग्रे सृष्टा इत्यभिप्रायः ॥ किंच, "कृन्तत्रात्" उत्कृन्तात् प्रदेशात् "एषां" मेघानामिन्द्रेण[1] "उपराः" आपः "उदायन्" आगतवत्यः, आगच्छन्ति च ॥ किं कारणम् ? विकर्त्तनेनैव हि मेघानामुदकं जायते । उपरशब्देनात्रोदकमुक्तम्, तात्स्थ्यात्तच्छब्दो मञ्चाः क्रोशन्त इतिवत्[2], उपरेषु मेघेषु या आपः, ता उपचारादुपरा इत्युच्यन्ते किंच, यदा ताभिः उपराभिरद्भिरोषधयः प्रोहिता भवन्त्यस्य तदा "त्रयः" "तपन्ति" त्रयः पर्जन्यादयः तपन्ति । "पृथिवीं" पृथ्वीलोकम् । "अनूपाः" ते हि "अनुवपन्ति लोकान् स्वेनस्वेन कर्मणा" यथाकालमनुगृह्णन्ति एतदनुवपनं लोकानां यद् वर्षादिभिः पर्जन्यादयो यथार्थम् "ओषधीः पाचयन्ति" । किं च, "द्वा बृबूकं वहतः पुरीषम्" द्वौ वाय्वादित्यौ वहत आक्षिपत इतः पृथिवीलोकात् बृबूकमुदकम् । किंलक्षणम् ? पुरीषम्, प्रीणयितृ पूरयितृ वा सतः ॥

"अयमपीतरोऽनूपः" नद्यनूपः समुद्रानूपो वा । "एतस्मादेव" वपतेर्धातोः । असावपि हि "अनूप्यते" अनुप्रकीर्य्यते नित्यकालम् "उदकेन" ॥

"अपि वा" एवमन्यथा स्यात्, —आप्नोतेः, अन्वाप्यतेऽसावुदकेनेति "अन्वाप्" । पुरस्तादञ्चतीति "प्राक्" "तस्य" अन्वाबित्येतस्य सतः "अनूप इति" एष शब्दः "स्यात्" "यथा प्राचीनामिति" प्रागित्येवं सतः प्राचीनम् ॥ "बृबूकमिति उदकनाम" इति । पर्य्यायवचनेन तत्त्वाभिधानम् । "ब्रवीतेर्वा" शब्दार्थस्य ( अदा० उ० ) शब्दकारि हि तद् भवति । "भ्रंशतेर्वा" भ्रश्यति ( दि० प० ) हि तन्मेघादिति ॥ २ । २२ । १ ॥ *

## ( अथ वाङ्नामानि )

**श्लोकः । धारा । इळा । गौः । गौरी । गान्धर्वी । गभीरा । गंभीरा । मन्द्रा । मन्द्राजनी । वाशी । वाणी । वाणीची ॥ वाणः । पविः । भारती । धमनिः । नाळीः । मेना । मेळिः । सूर्या । सर–**

---

१ 'इन्द्रेण' इत्यस्य–'उत्कृन्तात्'–इत्यत्र संबंधः । २ 'मञ्चक्रोशनवत्' ॥ * इतोऽग्रे–'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये द्वाविंशः खण्डः ॥ २२ ॥ इति द्रष्टव्यम् ॥ निरुक्तव्याख्यायां द्वितीया [ सप्तमा ] ऽध्यायस्य षष्ठः पादः ॥ २–६ ॥ इति चोपलभ्यते ॥

स्वती । निवित् । स्वाहा । वग्नुः । उपब्दिः ।
मायुः । काकुत् । जिह्वा । घोषः । स्वरः । शब्दः ।
स्वनः । ऋक् । होत्रा । गीः । गाथा । गणः ।
धेना । ग्नाः । विपा । नग्ना । कशा । धिषणा ।
नौः । अक्षरम् । मही । अदितिः । शची । वाक् ।
अनुष्टुप् । धेनुः । वल्गुः । गल्दा । सरः ।
सुपर्णी । बेकुरेति सप्तपञ्चाशद्वाङ्नामानि ॥ ११ ॥

(अथ वाङ्नामनिर्वचनम्)

## वाङ्नामान्युत्तराणि सप्तपञ्चाशत् ॥ १ ॥

"वाङ्नामान्युत्तराणि सप्तपञ्चाशत् ।" मेघनामप्रसक्तौ "देवानां माने"–इत्येष मन्त्रो व्याख्यातः । प्रकृतमिदानीमुच्यते,–वाङ्नामानीति । वाचो नामानि वाङ्नामानि उत्तराणि प्रकृतेभ्यो मेघनामभ्यः । मेघेष्वेव हि भूयसी वाग् भवति इति ततो वाङ्नामानि भवन्ति ॥ कियन्ति पुनस्तानि? "सप्तपञ्चाशत्" सप्त च पञ्चाशच्च सप्तपञ्चाशत् ५७। कतमानि पुनस्तानि? "श्लोकः, धारा, इळा"–इत्येवमादीनि । श्रूयते इति श्लोकः । ध्रियते तंतमर्थमवधारयितुमिति धारा । तंतमर्थं प्रति ईट्टे गच्छतीति इळा । इत्येवमाद्यभ्यूहितव्यम् ॥ २ । २३ । १ ॥

## वाक् कस्माद्वचेः ॥ २ ॥

आह–"वाक् कस्मात्"? उच्यते–"वचे" धातोः (अदा० प०) । उच्यतेऽनयेति वाक् ॥ २ । २३ । २ ॥

## तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति ॥ ३ ॥

"तत्र सरस्वतीत्येतस्य" तत्र तस्मिन्, सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम्नः "नदीवद् देवतावच्च निगमा भवन्ति" नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः ॥ २ । २३ । ३ ॥

## तद्यद् देवतावदुपरिष्टात्तद् व्याख्यास्यामः ॥ ४ ॥

"तत्" तत्रैवं सति, "यत्" अभिधानं "देवतावत्" "तत्" अधिकृत्य "उपरिः

ष्टाद् व्याख्यास्यामः" षोडशेऽध्याये "पावका नः सरस्वती ( ऋ०सं०१,१,६,३ )"-इत्येतस्मिन् मन्त्रे ॥ २ । २३ । ४ ॥

अथैतन्नदीवत्—

"अथ" पुनः यत् "एतत्" "नदीवत्" तद् व्याख्यायते-*

"इयं शुष्मेभिर्बिसखाऽइवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥"

इयं शुष्मैः शोषणैः॥शुष्ममिति बलनाम शोषयतीति सतः॥ बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा ॥ सानु समुच्छ्रितं भवति समुन्नुन्नमिति वा ॥ महद्भिरूर्मिभिः पारावतघ्नीं पारावारघातिनीम् । पारं परं भवति । अवारमवरम् । अवनाय सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः सरस्वतीं नदीं कर्मभिः परिचरेम ॥ १ ॥

इयं शुष्मेभिरिति । भरद्वाजस्यार्षम्, जगतीछन्दः पृष्ठ्य (?) षडहे चतुर्थेहनि व्यूह्ळपक्षे प्रउगतृचे विनियुक्ता । "इयं" सरस्वती नदी "शुष्मेभिः" बलैः । किं करोति ?, "बिसखा इवारुजत्" यथा बिसखानको बिसमनादरेणैव मृदुत्वात् खनति, एवमियमनादरेणैव यदपि "सानु" भवति समुच्छ्रितं वज्रसङ्घातकल्पं "गिरीणां" "सानु" शिखरं तदपि "तविषेभिः" "महद्भिरूर्मिभिः," बिसखानक इवानादरेणैव "रुजति" भनक्तीत्यर्थः । येयमेवंगुणविशिष्टा तामेतां वयं "पारावतघ्नीं" पारावारघातिनीं, सा हि ऊर्मिभिः पारं चावारं च उभे अपि हन्ति । "अवसे" अवनाय रक्षणाय आत्मनः ॥ कथं नाम रक्षेदसावस्मानित्येवमर्थं पुरस्कृत्य 'सुवृक्तिभिः' 'सुप्रवृत्ताभिः' स्तुतिभिः स्वरसौष्ठवादियुक्ताभिः । किम् ? "सरस्वतीम् आविवासेम धीतिभिः" सरस्वतीमाभिमुख्येनावस्थिताः "परिचरेम धीतिभिः" "कर्मभिः" स्तुतिभिश्चानेकप्रकाराभिश्चेत्यर्थः । एष समस्तार्थः ॥

---

* इतोऽग्रे-'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये त्रयोविंशः खण्डः ॥ २३ ॥ इति दृश्यते तत् 'अथ पुनः' इत्यत प्राक् समुचितम् ॥ १ 'समुच्छ्रूतं' ॥

अथैकपदनिरुक्तम् ।—"शुष्ममिति बलनाम" तद्धि "शोषयतीति सतः" सत इति कारकावधारणम् । विपर्ययेणापि ह्यभिधानानामर्थो भवत्येवं मन्यमानो भाष्यकारो बलनामसु पठितमपि सदेतदभिधानमेवमाह—शुष्ममिति बलनामेति । "बिसं, बिस्यतेर्भेदनकर्मणः" तद्धि भिद्यते ॥ "वृद्धिकर्मणो वा" वर्द्धते हि तत् ॥ "सानु" समस्तं हि तत् "उच्छ्रितं भवति ॥ समुन्नुन्नमिति वा" अथवा ऊर्द्ध्वं नुन्नं प्रेरितं भवति ॥ "पारं परं भवति" अवरस्मात् कूलात् ॥ "आवारम्" एव "अवरम्" भवति परस्मात् कूलात् ॥

अस्यामृचि तविषेभिः, ऊर्मिभिः, पारावतघ्नीम्—इत्येतद् विशेष्यलिङ्गं नदीसत्त्वं पश्यता भाष्यकारेण "अथैतन्नदीवत्"—इत्युक्त्वा इयमृगुपात्ता । सरस्वतीशब्दस्य नद्यभिधायकत्वे इयं पुनर्मैत्रायणीयके "उतस्यानः सरस्वती"—इत्यस्य षडर्चस्योत्तमा । एतच्च पुनः षडर्चम्,षडर्चानुक्रमेण च "सारस्वतीं धेनुष्टरीमालभेत यः क्षेत्रे पशुषु वा विवदेत"—इत्येतस्य पशोः सम्पद्यते । सेयमनेन प्रकारेण सारस्वतस्य पशुहविषो याज्या भवति। एवं च सति इयमपि देवतावदित्येव समुपपद्यते,न त्वदेवता इज्यते।तदेवं कृत्वा भाष्यकारेण यदुक्तं "तद्यद्देवतावदुपरिष्टात् तद्व्याख्यास्यामोऽथैतन्नदीवत्"—इति, तद्विद्यते ॥ तत्रोक्तः समाधिः,—विभवो ह्यनुपक्षीणशक्तयो मन्त्रशब्दाः । प्रदर्शनमात्रमेतत् क्रियते सर्वथैव मन्त्रशब्दानां योऽर्थ उपपद्यते स योज्यो यथासम्भवामिति ॥ देवतापक्षे विनियोगानुविधानाभिप्रायेण सरस्वती माध्यमिका वाक्, सा गिरीणां मेघानां सानूनि भञ्जयत्यूर्मिभिः स्तनयित्नुभिः पारावारे द्यावापृथिव्यौ हन्तीति योज्यम् । तविषेभिरूर्मिभिः महद्भिरित्येवमादि च योज्यम् । "सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीं कर्मभिः परिचरेम" गतार्थम् ॥ २ । २४ । १ ॥

## ( अथोदकनामानि )

**अर्णः । क्षोदः । क्षद्म । नभः । अंभः । कबन्धम् । सलिलम् । वाः । वनम् । घृतम् । मधु । पुरीषम् । पिप्पलम् । क्षीरम् । विषम् । रेतः । कशः । जन्म बृबूकम् । बुसम् । तुग्र्या । बुर्बुरम् । सुक्षेम । धरुणम् । सिरा । अररिन्दानि । ध्वस्मन्वत् । जामि । आयुधानि । क्षपः । अहिः ।**

१ 'उच्छृतं' ॥ २ 'वदेवेत्येतदुपपद्यते' ॥ ३ 'कर्मदे' ॥

अक्षरम् । स्रोतः । तृप्तिः । रसः । उदकम् । पयः । सरः । भेषजम् । सहः । शवः । यहः । ओजः । सुखम् । क्षत्रम् । आवयाः । शुभम् । यादुः । भूतम् । भुवनम् । भविष्यत् । महत् । आपः । व्योम । यशः । महः । सर्णीकम् । स्वृतीकम् । सतीनम् । गहनम् । गभीरम् । गंभरम् । ईम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः । सर्गाः । शंबरम् । अभ्वम् । वपुः । अंबु । तोयम् । तूयम् । कृपीटम् । शुक्रम् । तेजः । स्वधा । वारि । जलम् । जलाषम् । इदमित्येकशतमुदकनामानि ॥ १ । १२ ॥

( अथोदकनामनिर्वचनम् )

उदकनामान्युत्तराण्येकशतम् ॥ २ ॥

"उदकनामान्युत्तराणि एकशतम्" । उदकस्य नामानि उदकनामानि, उत्तराणि प्रकृतेभ्यो वाङ्नामभ्यः । मेघाश्रया हि वाक्, मेघोत्थं चोदकम्,—स्तनयित्नु शब्दपूर्वकं चेति वाङ्नामभ्य उत्तराण्युदकनामानि ॥ कियन्ति पुनस्तानि ? एकशतम् एकं च शतं च एकशतम् १०१ ॥ कतमानि पुनस्तानि ? "अर्णः, क्षोदः, क्षद्म[1]"—इत्येवमादीनि । अरणशीलमर्णः । क्षिप्रमुनत्तीति क्षोदः । क्षीणमन्नं करोतीति क्षद्म । इत्येवमाद्यभ्यूहितव्यम् ॥ २ । २४ । २ ॥

---

[1] 'क्षीरि' ॥

## उदकं कस्मादुनत्तीति सतः ॥ ३ ॥

आह—"उदकं कस्मात्" ? उच्यते—"उनत्तीति सतः" तद्धि यत्र गच्छति तत्र उनत्ति क्लेदयति । 'उन्दी—क्लेदने ( स्वा० प० )' । सत इति कारकावधारणं पूर्ववत् ॥ २ । २४ । ३ ॥

( अथ नदीनामानि )

**अवनयः । यव्याः । खाः । सीराः । स्रोत्याः । एन्यः । धुनयः । रुजानाः । वक्षणाः । खादोअर्णाः । रोधचक्राः । हरितः । सरितः । अग्रुवः । नभन्वः । वध्वः । हिरण्यवर्णाः । रोहितः । सस्रुतः । अर्णाः । सिन्धवः । कुल्याः । वर्यः । उर्व्यः । इरावत्यः । पार्वत्यः । स्रवन्त्यः । ऊर्जस्वत्यः । पयस्वत्यः । सरस्वत्यः । तरस्वत्यः । हरस्वत्यः । रोधस्वत्यः । भास्वत्यः । अजिराः । मातरः । नद्य इति सप्तत्रिंशन्नदीनामानि ॥ १ । १३ ॥**

( अथ नदीनामनिर्वचनम् )

## नदीनामान्युत्तराणि सप्तत्रिंशत् ॥ ४ ॥

"नदीनामान्युत्तराणि सप्तत्रिंशत्" । नदीनां नामानि नदीनामानि, उत्तराणि इति प्रकृतेभ्य उदकनामभ्य उत्तराणि, नदीनामानि ॥ कियन्ति पुनस्तानि ? सप्तत्रिंशत् सप्त च त्रिंशच्च सप्तत्रिंशत् ३७॥ कानि पुनस्तानि ? "अवनयः, यव्याः, खाः, सीराः"—इत्येवमादीनि । अवनतेन निम्नेन प्रदेशेन यान्तीत्यवनयः । ईयन्त्यो यान्तीति यव्याः[1] । खातव्या भवन्तीति खाः । सरन्तीति सीराः । एवमादि योज्यम् ॥ २ । २४ । ४ ॥

## नद्यः कस्मान्नदना इमा भवन्ति शब्दवत्यः ॥ ५ ॥

आह—"नद्यः कस्मात्" ?, उच्यते—" नदनाः " " इमाः " ह्येताः " भवन्ति "—"शब्दवत्यः" शब्दसंयुक्ताः ॥ २ । २४ । ५ ॥

---

१ 'यातव्या भवन्तीति यव्याः' ॥

बहुलमासां नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन तत्रेतिहास-माचक्षते-

विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव ॥

विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याण-दानः । पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्द्ध-नीयजवो वाऽमिश्रीभावगतिर्वा ॥ स वित्तं गृहीत्वा वि-पाट्छुतुद्र्योः सम्भेदमाययौ । अनुययुरितरे । स विश्वामित्रो नदीस्तुष्टाव 'गाधा भवत' इति । अपि द्विवदपि बहुवत् तद्यद् द्विवदुपरिष्टात्तद् व्याख्यास्यामः ॥ ६ ॥ २४ ॥

किंच, "बहुलम्" "आसां" नदीनाम्, अन्यदेवतेषु मन्त्रेषु "नैघण्टुकं वृत्तम्" अप्रधानम् । "आश्चर्यमिव प्राधान्येन" क्वचिदेव नदीदेवतो मन्त्रः स्यात् । "तत्रेति-हासमाचक्षते" । यस्मिन् सूक्ते प्रधाना नद्य एव, तत्रेमं निदानभूतमितिहासमाचक्षत इति आचार्याः ॥-

"विश्वामित्रः" नाम "ऋषिः"[1] "सुदासः पैजवनस्य" राज्ञः "पुरोहितो बभूव"॥ "विश्वामित्रः सर्वमित्रः" सर्वस्यैव हि स मित्रं, सर्वमेव वा तस्य मित्रमिति विश्वामित्रः॥ "सर्वम्"-इति किमुक्तं भवति ? उच्यते-तद्धि "संसृतं" भवति,-सङ्गतं भवत्येकस्मिन्॥ "सुदाः कल्याणदानः" तस्य हि नित्यमेव प्रशस्तं दानं भवति ॥ "पैजवनः पिजवनस्य पुत्रः" ॥ "पिजवनः पुनः स्पर्द्धनीयजवः" तस्य हि स्पर्द्धार्हो जवो वेगः । अथ "वा" "अमिश्रीभावगतिर्वा" न तस्य मिश्रीभूतपूर्वा गतिरन्यैर्वेगवद्भिः, अतिशैघ्र्यात् । तस्य पैजवनस्य विश्वामित्रः पुरोहितो बभूव । "सः" पौरोहित्योपार्जितं "वित्तं" धनं

---

१ ऋषिरिति । मन्त्रद्रष्टृत्वम् ऋषित्वम् । तथाचोक्तम् 'ऋषिर्दर्शनात्' इति । तच्च तपोबलेन क्षत्रियेष्वपि भवत्येव । तथा चोक्तम् 'अनृष्यानन्तर्ये-'इति सूत्रे महाभाष्ये-"विश्वा-मित्रस्तपस्तेपे 'नानृषिः स्याम्' इति । तत्र भवानृषिः संपन्नः । स पुनस्तपस्तेपे-'नानृषेः पुत्रः स्याम्' इति । तत्र भवान् गाधिरपि ऋषिः संपन्नः । स पुनस्तपस्तेपे-'नानृषेः पौत्रः स्याम्' इति । तत्र भवान् कुशिकोपि ऋषिः संपन्नः ।" इति ॥ अत एव केषुचिदन्येषु क्षत्रियेष्वपि 'राजर्षि' पदं पुराणेषु श्रूयते ॥

"गृहीत्वा" "विपाट्छुतुद्र्योः" नद्योः "सम्भेदं" सङ्गमम् "आययौ" आगतवान्, यत्र विपाट्छुतुद्र्यौ इतराभिः सिन्ध्वाद्याभिर्नदीभिः सम्भिन्ने एकीभूते इत्यर्थः॥ "अनुययुः" "इतरे" तदनुयायिनस्तस्करा वा ॥ "स विश्वामित्रः" तास्तितीर्षुः "नदीः तुष्टाव"— "गाधाः" स्वल्पोदकाः, यूयं "भवतेति"। एतमर्थं पुरस्कृत्य । कथं पुनस्तुष्टाव ? "अपि द्विवत्" द्विवचनसंयुक्तैर्मन्त्रैः, अपि बहुवत्" बहुवचनसंयुक्तैर्मन्त्रैः । "तत्" तत्र, एवं सति "यद् द्विवत्" द्विवचनवत्, "तत्" "उपरिष्टात्" चतुर्दशाध्याये "प्रपर्वतानाम्" ( ऋ० सं० ३, २, १२, १ )"—इत्येतस्यामृचि "व्याख्यास्यामः" ॥ २ । २४ । ६ ॥

where they are praised as many.

## अथैतद् बहुवत् ॥

"अथ" पुनः "एतद् बहुवत्" व्याख्यायते—*

"रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्त्तमेवैः ॥
प्रसिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥"

उप रमध्वं मे वचसे सोम्याय सोमसम्पादिन ऋतावरीर्ऋतवत्यः ॥ ऋतमित्युदकनाम प्रत्यृतं भवति ॥ 'मुहूर्त्तमेवैः' अयनैरवनैर्वा ॥ मुहूर्त्तो मुहुर्ऋतुः ॥ ऋतुरर्त्तेर्गतिकर्मणः॥ मुहुर्मूढ्ळ इव कालो यावदभीक्ष्णं चेति ॥ अभीक्ष्णमभिक्षणं भवति ॥ क्षणः क्षणोतेः प्रक्ष्णुतः कालः ॥ कालः कालयतेर्गतिकर्मणः ॥ प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वा अवनाय ॥ कुशिकस्य सूनुः कुशिको राजा बभूव ॥ क्रोशतेः शब्दकर्मणः । क्रंशतेर्वा स्यात् प्रकाशयति कर्मणः साधुविक्रोशयितार्थानामिति वा ॥ १ ॥ २५ ॥

* इतोऽग्रे—'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्यायें चतुर्विंशः खण्डः ॥ २४ ॥ इति दश्यते, तत् अथ पुनः इत्यतः प्राक्समुचितम् ॥

रमध्वं मे वचस इति। त्रिष्टुभ एताः। "उपरमध्वं मे" उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्वमित्यनेन क्रियापदेन योजितः। उपरमध्वं मे-मम "वचसे" "सोम्याय सोमसम्पादिने" सोमा हि अनेनास्मद्वचसा देवतानामन्नभूता बहवः सम्पादिताः, तान् यूयमस्मै प्रतिविशिष्टाय वचसे सत्यतार्थम्,-कथं नाम सत्यमिदं स्यादित्येवमर्थमुपरमध्वम्, मन्दवेगा गाधाश्च भवतेत्यभिप्रायः। हे "ऋतावरीः" उदकवत्यः। कियन्तं पुनः कालमुपरमध्वम्?, "मुहूर्त्तम्" न च नित्यमेव, मन्दवेगतां गाधोदकतां वा प्रार्थये। किं तर्हि? यावदुत्तरेयमहं तावदेवेत्यभिप्रायः। "एवैः" एभिरुदकैरतिप्रवृद्धैरुपरमध्वम्। "अवनैर्वा" कामैरेतैरस्मत्प्रार्थनाविशेषैः-उत्तरेम, गृहान् गच्छेम, वित्तं प्रापयेम, इत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम्। अथ वा "अयनैः" चित्रैर्गमनैर्वेगवद्भिर्यैर्यूयमभिप्रवृत्तास्तैरुपरमध्वं मुहूर्त्तम् ॥ यदैवमविशेषेणोच्यमाना न शुश्रुवुः,तदैकामुद्दिश्य प्रववृते वक्तुम्,-"प्रसिन्धुमच्छ" अच्छ[३] अभेः स्थाने। "अह्वे"-इत्येतत् पदमाकृष्य "प्र अभि ह्वयामि" इत्येवं योजितं भाष्यकारेण ॥ किं प्राभिह्वयामि? "सिन्धुम्" ॥ केन[४]?, "बृहती मनीषा" "बृहत्या महत्या मनीषया मनस ईषया" मनःपूर्विकया "स्तुत्या" इत्यर्थः। अथ "वा" "प्रज्ञया" कमर्थमिच्छन् प्राभिह्वयामि "अवस्युः" अवनमिच्छन्, गमनमित्यर्थः। "कुशिकस्य सूनुः" अहमिति पितुरपि गौरवान्मम गौरवमेताः कुर्य्युः ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम्।-"ऋतमित्युदकनाम"। तद्धि देशंदेशं "प्रत्यृतं भवति" गतमित्यर्थः। "मुहूर्त्तो मुहुर्ऋतुः" एवं विगृह्य ऋतुशब्दं तावन्निर्ब्रवीति,-"ऋतुरर्त्तेः" "गतिकर्मणः" गत्यर्थे वर्त्तमानस्य। स हि गच्छत्येव ॥ अधुना मुहुः शब्दं निर्ब्रवीति,-"मुहुर्मूढ इव कालः" अल्पत्वात्। मूढ इव यः कालः ऋतुः, स मुहूर्त्त इत्युच्यते। किंच "यावत्" एव "च अभीक्ष्णं"तावान्मुहूर्त्तः,यावांश्च मुहूर्त्तस्तावदेवाभीक्ष्णमित्यर्थः॥ सारूप्यप्रसक्तं निरुच्यते,-"अभीक्ष्णमभिक्षणं भवति" तद्धि क्षणमाभिमुख्येन स्थितं भवति॥ "क्षणं क्षणोतेः" हिंसार्थस्य (तना०उ०)। स हि "प्रक्ष्णुतः"। प्रकर्षेण हिंसितः "कालः" अल्पत्वात्। "कालः कालयतेर्गतिकर्मणः"। स हि सर्वाण्येव भूतानि कालयति क्षयं नयतीत्यर्थः। "कुशिको राजा"-इति तत्त्ववचनम्। "क्रोशतेः" वा शब्दार्थस्य (भू० प०)। स हि साध्वेव क्रियतामिति नित्यकालमेव क्रोशति। "क्रंशतेर्वा स्यात्" प्रकाशयत्यर्थस्य, स हि प्रकाशयिता साधूनां धर्माणामात्मनैव प्रकाशकः। अथ "वा"-"साधुविक्रोशयितार्थानामिति" साधुषु ब्राह्मणेषु विक्रोशयिता अर्थानां दातेत्यर्थः ॥ २। २५। १ ॥

---

१ "छन्दसि परेऽपि", "व्यवहिताश्च" इति पाणिनिस्मरणात्। २ 'ता यू' ॥ ३ 'अच्छ अभेः स्थाने'-अभि इति वक्तव्ये अच्छ-इत्युक्तमित्यर्थः। ४ 'कया'-इति पाठस्तु-सुज्ञशोधकैः परिवर्तितः ॥

**नद्यः प्रत्यूचुः ॥**

एवमुक्तवन्तं "नद्यः प्रत्यूचुः"-*

**"इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ॥ देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥" 'इन्द्रो अस्माँ अरदद्वज्रबाहुः'। रदतिः खनतिकर्मा।'अपाहन्वृत्रं परिधिं नदीनाम्'इति व्याख्यातम्। 'देवोऽनयत्सविता सुपाणिः'। कल्याणपाणिः ॥ पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति ॥ 'तस्य वयं प्रसवे याम उर्वीः'। उर्व्य ऊर्णोतेर्वृणोतेरित्यौर्णवाभः ॥ १ ॥ २६ ॥**

इन्द्रो अस्माँ अरददिति । "अरदत्" अखनदित्यर्थः "रदतिः खनतिकर्मा" "वज्रबाहुः" वज्रयुक्तो बाहुर्यस्यासौ बाहुनाऽत्र हस्तो लक्ष्यते । वज्रहस्त इत्यर्थः ॥ कथं पुनरखनत् ? "अपाहन् वृत्रम्" अपघ्नन् मेघम् । "परिधिं नदीनाम्" परिधारयितारं नदीनाम् नदनानामपाम् । स हि नियतंतीरपो निरुणद्धि, तमिन्द्रो वज्रेण हन्ति, तस्मिन हते पृथिवीं प्राप्यापो यथा निम्नानुसारिण्यः खातानि कुर्वत्यो वहन्ति, तैः खातैर्वयं गच्छामः। एवं कृत्वा "अस्मान् इन्द्रः अरदत्"। एवं च कृत्वा स एव च इन्द्रः "देवः" "सविता" सर्वार्थप्रसविता वर्षद्वारेणास्मान् "अनयत्" समुद्रम् । "सुपाणिः" प्रशस्तपाणिरित्यर्थः । यत एव सोऽस्माकं खनिता नेता च, अतः "तस्य" इन्द्रस्य "प्रसवे" अनुज्ञायामादेशे वर्त्तमाना "वयं" "यामः" गच्छामः "उर्वीः" ऊर्णुवत्यः सम्भजमाना वा तानितानि देशान्तराणि अम्भोभिः । सोऽस्माकमीश्वरः । स एवास्मानाज्ञापयितुमर्हति, न त्वमित्यभिप्रायः ॥ इति समस्तार्थः ॥

अथैकपदनिर्वचनम् "पाणिः पणायतेः" पूजार्थस्य । "प्रगृह्य पाणी" संयुतौ कृत्वा ततः "देवान् पूजयन्ति" इति ॥ २ । २६ । १ ॥

---

* इतोग्रे-'इति निरुक्तव्याख्यायां द्वितीया (सप्तमा) ऽध्याये पञ्चविंशः खण्डः ॥२५॥' इति दृश्यते तत् 'एवमुक्तवन्तम्'इत्यतः प्राक्समुचितम्॥ १ 'अपावधीत् मे'॥ २ 'नियतं तीरयोर्निरुणद्धि' इति तु सुज्ञशोधकभ्रमविलसितम् ॥

## प्रत्याख्यायान्तत आशुश्रुवुः ॥

"प्रत्याख्याय" एवं तमृषिं तत्सूक्तस्य "अन्ततः" अन्ते अनयर्चा "आशुश्रुवुः" ता नद्यः श्रुतवत्य इत्यर्थः-

"आ ते॑ कारो शृणवामा वचां॑सि य॒याथ॑ दू॒रादन॑सा रथे॑न । नि ते॑ नंसै पी॒प्याने॑व योषा॒ मर्य्या॑येव क॒न्या॑ शश्वचै॒ ते॑ ॥" आ शृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्य्यायेव कन्या परिष्वजनाय निनमा इति वा ॥ १ ॥

तदा च श्रुतं भवति, यदा तद्वचः क्रियते, श्रूयमाणमपि हि तन्नैव श्रुतं भवति, यन्न क्रियते ॥ * आ ते कारो शृणवाम इति । "आ ते कारो शृणवाम" आभिमुख्येनावस्थिताः सत्यः श्रृणवाम, हे कारो स्तोमानां कर्त्तः ! किमाश्रृणवाम ? "वचांसि"। वचनानि श्रुतानि चैतानि तावकानि वचांसि, अतो ब्रूमः-"ययाथ" याहि त्वम् । "अनसा" शकटेन च सह "रथेन" च ॥ कस्मात् पुनरेवमादरवत्यो ब्रूमः याहीति ? इतः-यस्मात् "दूरात्" आयातस्त्वं परिश्रान्तः, तस्मात्कारुण्यं नस्त्वयि । तेन वयमेता "नि ते नंसै" "निनमाम ते"।नीचैर्नमाम गाधोदका भवामेत्यर्थः ॥ कथं पुनर्निनमाम ? "पीप्यानेव योषा" "पाययमानेव योषा पुत्रं" यथा निनमेदेवं वयं तव निनमाम ॥ एवमुक्त्वा पुत्रोपमया कदाचिदयं क्रोधमियादिति मन्वानाः सत्यः पतिकन्यासम्बद्धामन्यामुपमामुपाददिरे,-"मर्य्यायेव कन्या शश्वचै ते" मर्य्याय मनुष्याय कन्या नवोढा शश्वचै ते "परिष्वजनाय" कथं नाम 'परिष्वजेत मामयम्' इत्यभिप्रायेण यथा सा निनमेदेवं वयं तव निनमाम । "निनमा इति वा" यदि वा "निनमाम" इत्येवं परिणामः "निनंसै" इति एतस्य पदस्य, अथ वा "निनमै" इति ॥ २ । २७ । १ ॥

## ( अथाश्वनामानि )

अत्यः॑ । हयः॑ । अर्वा॑ । वा॒जी । सप्ति॑ः । वह्नि॑ः । दधि॒क्राः । दधि॒क्रावा॑ । एत॒ग्वा । एत॒शः । पैद्वः॑ ।

* इतोऽग्रे-'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये षड्विंशः खण्डः ॥ २६ ॥' इति दृश्यते तत् 'प्रत्याख्याय' इत्यतः प्राक्समुचितम् ॥

दौर्गहः । औच्चैःश्रवसः । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः । मांश्चत्वः । अव्यथयः । श्येनासः । सुपर्णाः । पतङ्गाः । नरः । ह्वार्याणाम् । हंसासः । अश्वा इति षड्विंशतिरश्वनामानि ॥ १ । १४ ॥

( अथाश्वनामानिर्वचनम् )

अश्वनामान्युत्तराणि षड्विंशतिः ॥ २ ॥

"अश्वनामान्युत्तराणि षड्विंशतिः ।" अश्वस्य नामानि अश्वनामानि उत्तराणि प्रकृत्येभ्यो नदीनामभ्यः, अब्जा एव ह्यश्वाः । एवं ह्युक्तम्,—"अप्सु जाता अश्वाः स्वादेवैनान् योनेर्जनयन्ति" इति । तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि ॥ कियन्ति पुनस्तानि ? षड्विंशतिः षडधिका विंशतिः २६ । कतमानि पुनस्तानि ? 'अत्यः, हयः, अर्वा''—इत्येवमादीनि ॥ अतति गच्छतीत्यत्यः । हयति गच्छतीति, हन्ति वाध्वानमिति हयः । ईरणवानर्वा, गमनवानित्यर्थः । एवमादि ॥ २ । २७ । २ ॥

तेषामष्टा उत्तराणि बहुवत् ॥ ३ ॥

"तेषाम्" अश्वनाम्नाम् "अष्टौ" यानि "उत्तराणि" अव्यथय इत्येवमादीनि, तानि "बहुवत्"बहुवचनसंयुक्तानीत्यर्थः ॥ २ । २७ । ३ ॥

अश्वः कस्मादश्नुतेऽध्वानम् ॥ महाशनो भवतीति वा ॥ ४ ॥

आह—"अश्वः कस्मात्" ? उच्यते—स हि "अश्नुतेऽध्वानं" व्याप्नोतीत्यर्थः "महाशनो भवतीति वा" स हि बहु भुङ्क्ते ॥ २ । २७ । ४ ॥

तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा ।
दधत् क्रन्दतीति वा ।
दधदाकारी भवतीति वा ॥ ५ ॥

"तत्र" तस्मिन् षड्विंशके अश्वाभिधानगणे "दधिक्रा इत्येतत्" पदं सन्दिग्धम् । तत् पुनरेतत्—"दधत् क्रामतीति" अथवा धारयन्नयमश्वारोहं क्रामतीति दधिक्राः ॥ अथ "वा" "दधत्" धारयन्नयमश्वारोहं "क्रन्दति" शब्दं करोति "इति" दधिक्राः ॥

अथ "वा" "दधत्" धारयन् अयमश्वारोहम् "आकारी" आकारवान् "भवतीति" दधिक्राः ?-स हि अधिरूढेऽश्वारोहे आकुञ्चितग्रीवो विपुष्पितसर्वगात्र आकृतिमान् भवति ॥ २ । २७ । ५ ॥

**तस्याश्ववद् देवतावच्च निगमा भवन्ति ॥ ६ ॥**

"तस्य" दधिक्राशब्दस्य "अश्ववत्" अश्वसंयुक्ताः, "देवतावत्" देवतासंयुक्ताः "च" "निगमा भवन्ति" ॥ २ । २७ । ६ ॥

**तद्यद्देवतावदुपरिष्टात्तद् व्याख्यास्यामः ॥ ७ ॥ २७ ॥**

"तत्" एतदुच्यते,-"यद् देवतावत्" अस्य दधिक्राशब्दस्य, "तत्" "उपरिष्टात्" पञ्चदशेऽध्याये "आ दधिक्राः शवसा ( ऋ० सं० १, ६, १६, १ )"-इत्यस्यामृचि "व्याख्यास्यामः" ॥ २ । २७ । ७ ॥

**अथैतदश्ववत् ॥**

"अथ" पुनर्यत् "अश्ववत्" अस्य, तत् "एतत्" व्याख्यायते- *

**"उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि । क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥" अपि स वाजी वेजनवान् क्षेपणमनु तूर्णमश्नुतेऽध्वानम् । ग्रीवायां बद्धः । ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वा । अपि कक्ष आसनीति व्याख्यातम् । 'क्रतुं दधिक्राः' कर्म वा प्रज्ञां वा । 'अनु सन्तवीत्वत् ।' तनोतेः पूर्वया प्रकृत्या निगमः । 'पथामंकांसि' पथां कुटिलानि । पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वा । अङ्कोऽञ्चतेः ॥ आपनीफणदिति फणतेश्चर्करीतवृत्तम् ॥ १ ॥**

उत स्य वाजीति । गौतमपुत्रस्य वामदेवस्येयमार्षम् । जगती । वाजपेये वाजियुक्तं रथमधिरुह्य यजमानोऽनुवाकं जपति, तत्रैषा । "उत स्यः" "अपि सः" इत्यर्थः ।

---

* इतोऽग्रे-'इति निरुक्तव्याख्यायां द्वितीया ( सप्तमा ) ध्याये सप्तविंशः खण्डः ॥ २७॥' इति दृश्यते, तत् 'अथ पुनः' इत्यतः प्राक्समुचितम् ॥

"वाजी वेजनवात्"। 'ओ विजी भयचलनयोः ( रु० प० )'। भयवान् परेभ्यो भयदाता, परेषां हि तं दृष्ट्वा भयमुत्पद्यते । चलनवान् वा, स हि नित्यं चलनशीलः। "क्षिपणि" "क्षेपणम् अनु" कशाघातमनु "तुरण्यति" "तूर्णमश्नुतेऽध्वानम्" व्याप्नोतीत्यर्थः। अपि कशाप्रहारमनु तुरण्यति अप्यनाहत एवेत्यपिशब्दः । किंच "ग्रीवायाम्" उरसि वर्ध्रेण[1] "बद्धः" । "अपि कक्षे" कक्षायाम् । अथ "आसनि" मुखे खलीनेन बद्धः । एवमनेकेषु स्थानेषु बद्धः । तथापि तुरण्यत्येव । अन्यो हि एकस्मिन्नपि प्रदेशे बद्धः स्यन्दितुमपि[2] न शक्नोति, किमुत त्वरितुम् । किंच, "क्रतुम्" आत्मीयं गमनं "कर्म वा प्रज्ञां वा" अश्वारोहस्य सन्तनोति काममभिप्रेतेनार्थेन शीघ्रगामित्वात् "दधिक्राः" अश्वः अनु सन्तनोतीत्यर्थः । किंच, यान्यपि च कानिचित् "पथां" मार्गाणाम् "अङ्कांसि" अञ्चितानि कुटिलानि सन्ति, तान्यपि अनुलोमानीव कुर्वन् आशुगामित्वात् । आभिमुख्येन पुनःपुनर्भृशं वा फणति गच्छतीत्यर्थः ॥ एष समस्तार्थः ॥

अथैकपदानिरुक्तम् ।—"ग्रीवा, गिरतेर्वा" गिलनार्थस्य ( तु० प० ), तया हि गिलत्यन्नम् ॥ "गृणातेर्वा" शब्दार्थस्य ( क्र्या० प० ), तया हि शब्दो गीर्यते ॥ "गृह्णातेर्वा" ( क्र्या० उ० ), तया ह्युदकादि गृह्यते, तस्यामेव वा गृह्यते यः शृङ्खलीक्रियते ॥ "अनुसन्तवीत्वत्" इति, "तनोतेः" धातोः ( त० प० ) "पूर्वया प्रकृत्या निगमः" । षड्विधो हि धातुः ।

"प्रकृत्यन्तः सनन्तश्च यङन्तो यङ्लुगेव च ।
ण्यन्तो ण्यन्तसनन्तश्च षड्विधो धातुरुच्यते ॥"

आसां षण्णां धातुप्रकृतीनां या पूर्वा प्रकृतिस्तयैष निगमः, न सन्प्रकृतीत्यादीनामन्यतमया । "पन्थाः, पततेर्वा पद्यतेर्वा पन्थतेर्वा" त्रयोऽपि ह्येते गत्यर्था एव । एषामन्यतमस्य । "अङ्कः अञ्चतेः" गत्यर्थस्य । "आपनीफणदिति" "फणतेः" गत्यर्थस्य "चर्करीतवृत्तम्" चर्करीतान्तत्वेन वृत्तम् ॥ २ । २८ । १ ॥

## ( अथादिष्टोपयोजनानि )

हरी इन्द्रस्य । रोहितोऽग्नेः । हरित आदित्यस्य । रासभावश्विनोः । अजाः पूष्णः । पृषत्योमरुताम् । अरुण्यो गाव उषसः । श्यावाः सवितुः ।

---

[1] 'वरत्रेण' ॥ [2] 'चलितुम्'

विश्वरूपा बृहस्पतेः । नियुतो वायोरिति दशादिष्टोपयोजनानि ॥ १ । १५ ॥

( अथादिष्टोपयोजननिर्वचनम् )

दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्य्यज्ञानाय ॥ २ ॥

"दश" यानि "उत्तराणि" नामानि, तान्यश्वनामसम्बन्धेनैवोच्यन्ते तान्यपि ह्यश्वानामेवेति । तानि पुनः "आदिष्टोपयोजनानि"–"इति" एवम् "आचक्षते" आचार्य्याः । इदमिन्द्रस्याश्वानां नाम, इदमग्नेः, इदमादित्यस्य,–इत्येवमादिष्टोपयोजनानि ॥ कतमानि पुनस्तानि ? "हरी इन्द्रस्य" "रोहितोऽग्नेः"—इत्येवमादीनि । हरी हरितवर्णौ इन्द्रस्याश्वौ । रोहितोऽग्नेः रोहितवर्णः इति ॥ २ । २८ । २ ॥

( अथ ज्वलतिकर्माणः )

भ्राजते । भ्राशते । भ्राश्यति । दीदयति । शोचति । मन्दते । भन्दते । रोचते । द्योतते । ज्योतते । द्युमदित्येकादश ज्वलतिकर्माणः ॥ १ । १६ ॥

( अथ ज्वलतिकर्मधातुनिर्वचनम् )

ज्वलतिकर्माण उत्तरे धातव एकादश ॥ ३ ॥

"ज्वलतिकर्माण उत्तरे धातव एकादश" । य एव ह्यश्ववन्तो भवन्ति, त एव ज्वलन्तीव तेजसा, ततोऽश्वनामभ्य उत्तरे ज्वलत्यर्था धातवः ॥ कियन्ति पुनस्तानि ? एकादश, एकश्च दश च ११। कतमे पुनस्ते ? इति । "भ्राजते, भ्राशते, भ्राश्यति"–इत्येवमादयः ॥ २ । २८ । ३ ॥

( अथ ज्वलतो नामधेयानि )

जमत् । कल्मलीकिनम् । जञ्झणाभवन् । मल्मलाभवन् । अर्चिः । शोचिः । तपः । तेजः । हरः । घृणिः । शृङ्गाणि शृङ्गाणीत्येकादश ज्वलतो नामधेयानि ॥ १ । १७ ॥

( अथ ज्वलन्नामनिर्वचनम् )

तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ ४ ॥ २८ ॥

"तावन्त्येवोत्तराणि" "जमत्, कल्मलीकिनम्, जञ्जणाभवन्"—इत्येवमादीनि "ज्वलतो नामधेयानि" जमतिं गच्छतीति जमत् । कमहं मलिनं शोधयामीति कल्मलीकिनम् । जनंजनं भावयतीति जञ्जणाभवन् । इत्येवमादि ज्वलतो नामधेयानि— इति ॥

अध्यायपरिसमाप्त्यर्थो द्विरभ्यासः ॥ २ । २८ । ४ ॥*

गौर्हेमांबरंस्वः खेदयआताश्यावींविभावारिवस्तोरद्रिः श्लोकोर्णोवनयोत्योहरी इन्द्रस्य भ्राजंतेजमदिति सप्तदश ॥

इति निघण्टौ प्रथमोऽध्यायः ॥ १ ॥

( अथ निर्वचनमोघोराज्ञोविद्याहवा अथातोऽनुक्रमिष्यामोवृक्षेवृक्षेतांवांवास्तूनिर्यईचकारायंसशिक्के हिरण्यनामान्यार्ष्टिषेणोयद्देवापिःसाधारणनिस्वैरादित्यो रश्मिनामान्यतिष्ठन्तीनांदासपत्नीरात्रिनामानीदंश्रेष्ठंरुशद्वत्साऽहश्चकृष्णंदेवानांमानेवाङ्नामानीयंशुष्मेभीरमध्वंमइन्द्रो अस्मानांतेकारवुतस्यवाज्यष्टाविंशतिः ॥ )

इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥ २ ॥

इति जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ द्वितीयो [ सप्तमो ] ऽध्यायः समाप्तः ॥ २ ॥

---

* इतोऽग्रे ॥ "निरुक्तव्याख्यायां द्वितीया ( अष्टमा ) ध्यायेऽष्टविंशः खण्डः ॥ २८ ॥" इति ज्ञातव्यम्॥ "इति निरुक्तवृत्तौ द्वितीया ( सप्तमा ) ध्यायस्य सप्तमः पादः ॥ २–७ ॥" इति चोपलभ्यते ॥

# अथ निघण्टुद्वितीयोऽध्यायः २.

## ( अथ कर्मनामानि )

हरिः ॐ ॥ अपः । अप्नः । दंसः । वेषः । वेपः । विष्ट्वी । व्रतम् । कर्वरम् । शक्म । क्रतुः । करुणम् । करणानि । करांसि । करन्ती । करिक्रत् । चक्रत् । कर्त्वम् । कर्तोः । कर्तवे । कृत्वी । धीः । शची । शमी । शिमी । शक्तिः । शिल्पमिति षड्विंशतिः कर्मनामानि ॥ २ । १ ॥

# अथ तृतीयाध्यायः ३.

## प्रथमः पादः ।

### ( अथ कर्मनामानिर्वचनम् )

ॐ । कर्मनामान्युत्तराणि षड्विंशतिः ॥ १ ॥

"कर्मनामान्युत्तराणि षड्विंशतिः" । कर्मणो नामानि कर्मनामानि उत्तराणि-इति प्रकृतेभ्यः । ज्वलत्येवाग्नौ कर्माणि क्रियन्त इति ज्वलन्नामभ्यः उत्तराणि कर्मनामानि॥ कियन्ति पुनस्तानि ? षड्विंशतिः षडधिका विंशतिः २६ ॥ कतमानि पुनस्तानि ? "अपः, अप्नः, दंसः"—इत्येवमादीनि । आप्यते पुरुषेणैतत्, आप्नोति वा पुरुषमेतदिति अपः, अप्नः—इत्येतदप्याप्नोतेरेव । एवमादि योज्यम् ॥ ३ । १ । १ ॥

कर्म कस्मात् क्रियत इति सतः ॥ २ ॥

आह—"कर्म कस्मात्"? उच्यते—"क्रियत इति सतः"। सत इति कारकावधारणार्थमिति ॥ ३ । १ । २ ॥

---

१ 'त्येव ह्यग्नौ' ॥

( अथापत्यनामानि )

तुक् । तोकम् । तनयः । तोक्म । तक्म । शेषः । अप्नः । गयः । जाः । अपत्यम् । यहुः । सूनुः । नपात् । प्रजा । बीजमिति पञ्चदशापत्यनामानि ॥ २ । २ ॥

( अथापत्यनामनिर्वचनम् )

अपत्यनामान्युत्तराणि पञ्चदश ॥ ३ ॥

"अपत्यनामान्युत्तराणि पञ्चदश" । अपत्यस्य नामानि अपत्यनामानि उत्तराणि—इति प्रकृतेभ्यः कर्मनामभ्यः । सर्वकर्मणां ह्यपत्योत्पादनकर्मैव प्रधानमृणापाकरणद्वारेणेति कर्मनामभ्य उत्तराणि अपत्यनामानि ॥ कियन्ति पुनस्तानि ? पञ्चदश, पञ्च च दश च १५ ॥ कतमानि पुनस्तानि ? "तुक्, तोकम्, तनय."—इत्येवमादीनि । तुक तकतेर्धातोस्तुज्यतेर्वा तोकम् तुद्यतेः । तनयः तनोतेरिति वक्ष्यति ॥ ३ । १ । ३ ॥

अपत्यं कस्मात् ? अपततं भवति । नानेन पततीति वा ॥ ४ ॥ १ ॥

आह—"अपत्यं कस्मात्" ? उच्यते—"अपततं भवति" पितुः सकाशादेत्य पृथगिव ततं भवति ॥ अथ "वा" "अनेन" जातेन सता पिता नरके "न पततीति"—इत्यपत्यम् ॥ ३ । १ । ४ ॥

तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः—

अत्र पुनर्विवदन्ते,—द्वयोः संनिपाते किं क्षेत्रिणोऽपत्यमुत बीजिनः ? इति । "तत्" एतदुच्यते,—"यथा जनयितुः" एव "प्रजा" भवति, "एवमर्थीये ऋचा उदाहरिष्यामः"—*

"परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ॥
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो विदुक्षः ॥"

---

१ 'औरसादिषु पुत्रेषु कस्य मुख्यं पुत्रत्वम्' इति इत्येवमुपक्रमो योज्यः 'देहि नः पुत्रमौरसम्' इत्युपसंहारात् ॥ अथवा कुण्डस्य नौरसत्वमिति सर्वज्ञानां दर्शनेनैष उपक्रमोऽपि योजनीयः ॥ * इतोऽग्रे—'इति निरुक्तव्याख्यायां तृतीया ( अष्टमा ) ध्याये प्रथमः खण्डः ॥ १ ॥' इति दृश्यते, तद् 'अत्र पुनर्विवदन्ते' इत्यतः प्राक्समुचितम् ॥

परिहर्त्तव्यं हि नोपसर्त्तव्यम् । 'अरणस्य रेक्णः' अरणोऽ-
पार्णो भवति ॥ रेक्ण इति धननाम । रिच्यते प्रयतः ॥
'नित्यस्य रायः पतयः स्याम ।' पित्र्यस्येव धनस्य ॥
'न शेषो अग्ने अन्यजातमस्ति' शेष इत्यपत्यनाम ।
शिष्यते प्रयतः ॥ अचेतयमानस्य तत्प्रमत्तस्य भवति ॥
मा नः पथो विदूदुष इति ॥ १ ॥ २ ॥

"परिषद्यं हि" "न हि ग्रभाय"—इति च (अ० ३, खं० ३) । एते त्रिष्टुभौ । वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेण अग्निरभ्यर्थितः—पुत्रं मे देहीति । तेन किलासौ प्रत्युक्तः—क्रीतककृत्रिमदत्तकादीनां पुत्राणामन्यतमं कुरुष्व पुत्रमिति । स एवमुक्तः एताभ्यामृग्भ्यामन्यजान् पुत्रान् निन्दन्नौरसं पुत्रं ययाचे । "परिषद्यं०—०वि दुक्षः" । ( ऋ० सं० ५, २, ६, २ ) "परिषद्यं" "परिहर्त्तव्यं" परिहरणीयं परित्याज्यमित्यर्थः । किं पुनस्तत् ? "अरणस्य रेक्णः" अरणस्य अपगतार्णस्य अपगतोदकसम्बन्धस्य परकुलजातस्य रेक्णः यदपत्याख्यं धनं, तत् परिहर्त्तव्यम्, न पुत्रत्वेन परिकल्पयितव्यमित्यर्थः । न हि तत् पुत्रत्वेन कल्प्यमानमपि पुत्रकार्य्येष्वातिष्ठाति, परकीयत्वात् । यत् एवमतो ब्रूमः—"नित्यस्य रायः पतयः स्याम" "पित्र्यस्येव धनस्य" । यथा हि यदेव पित्र्यं धनं पुत्रत्वे भवति । तस्यैव ह्युपरि अगौणं स्वामित्वं भवति । एवं यदेव स्वयं जातमपत्यं भवति, तदेव मुख्यं भवति, नेतरत्—क्षेत्रजं वा क्रीतकं वा । यत एवमतो ब्रूमः,—यदेव नित्यमात्मीयमगौणं स्वयमुत्पादितं पुत्राख्यं राः धनम्, तस्यैव वयं पतयः पालयितारः स्याम, मा परकीयस्येत्याभिप्रायः । कस्मात् पुनरेवं ब्रूमहे ? इतः,—यस्मात् "न शेषो अग्ने अन्यजातमस्ति" न अस्ति शेषः नास्त्यपत्यमन्येन जातं हे अग्ने ! य एव जनयति तस्यैव हि तद् भवति, नेतरस्येत्यभिप्रायः । "अचेतनस्य" य एव हि अचेतयमानो भवति, अविद्वान्, प्रमादी, तस्यैव "अचेतयमानस्य" "प्रमत्तस्य" अश्रुतवतो धर्मान् परितोषमात्रं "भवति"—ममेदमपत्यमिति, न अपत्यकार्येऽवतिष्ठते ॥ यत एवमतो ब्रूमः,—"मा पथो वि दुक्षः" मास्मानेतस्मात् पितृपितामहप्रपितामहानुसन्ततात् पथः मार्गात्, येन केनचित् प्रत्याख्यानद्वारेण "विदूदुषः" त्वम्, देहि नः पुत्रमौरसमित्यभिप्रायः ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम् । "अरणोऽपार्णः" अपगतोदकसम्बन्ध इत्यर्थः ॥ "रेक्ण इति धननाम" तद्धि "रिच्यते" अतिरिच्यते इतो लोकादमुं लोकं "प्रयतः" म्रियमाणस्ये-

इत्यर्थः ॥ "शेष इत्यपत्यनाम" तद्धि "शिष्यते" इहैव लोकेऽवतिष्ठते पितुरमुं लोकं प्रयतः गच्छत इत्यर्थः ॥

एवमस्यामृचि न शेषो अग्ने अन्यजातमस्ति—इत्यनेन विशेषलिङ्गेन उपपन्नमेतद् भवति,—जनयितुरेव प्रजा भवति, न क्षेत्रिणो[२], नापि क्रेतुरन्यस्य वा कस्यचिदिति । एवं चैव शब्दार्थ उपपद्यते,—यस्मादेवापेत्य ततं भवति, तस्यैवापत्यमिति ॥ ३ । २ । १ ॥

## तस्योत्तरा भूयसे निर्वचनाय—

अनेनैव चापत्यशब्दनिर्वचनप्रसङ्गेनैष मन्त्रो व्याख्यातः, उत्तरं च सावशेषमपत्यशब्दे प्रसक्तानुप्रसक्तमेवोच्यते,—"तस्य उत्तरा भूयसे निर्वचनाय"—*

"न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥"

न हि ग्रहीतव्यो अरणः सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यो 'ममायं पुत्रः' इति । अथ स ओकः पुनरेव तदेति यत आगतो भवति ॥ ओक इति निवासनामोच्यते । एतु नो वाजी वेजनवान् । अभिषहमाणः सपत्नान् । नवजातः स एव पुत्र इति ॥ १ ॥

न हि ग्रभायेति । "न हि ग्रहीतव्यः" नाङ्गीकर्त्तव्यः[३], पुत्रो ममायमित्यनेनाभिप्रायेण ॥ कः पुनरसौ नाङ्गीकर्त्तव्यः ? "अरणः" अपार्णः, अपगतोदकसम्बन्धः, अन्यकुलजः । यद्यपि "सुशेवः" एव स्यात् "सुखतमः" परिचारितो हितैषी, तथा "अपि" "अन्योदर्यः" अन्येनोदीरितात्द्रेतसो जातः, अन्यजायोदरसम्भूतो वा, यो हि स्वस्यां जायायां सम्भवति, स स्व एवोदरे सम्भूतो भवति । "अर्द्धो ह वा एष आत्मनो यज्जायेति विज्ञायते" । तस्माद् योऽन्यजायोदरसम्भूतः, सः "मनसापि न मन्तव्यो ममायमिति" किं पुनः पुत्रत्वेन परिकल्पयितव्य इति ॥ किं कारणं मनसापि न मन्तव्य इति ? "अधा चिदोकः पुनरित्स एति" । अधःशब्दोऽथशब्दस्यार्थे वर्त्तते, स च हेत्वर्थः ।

---

१ जनयितुरेवेति । बुधश्चन्द्रस्यैवेतिभावः॥ २ न क्षेत्रिण इति । बृहस्पतेरिवेति भावः॥ * इतोऽग्रे--'इति निरुक्तव्याख्यायां तृतीया ( अष्टमा ) ध्याये द्वितीयः खण्डः॥ ॥ २ ॥' इति दृश्यते तत् 'अनेनैव चापत्य' इत्यतः प्राक्समुचितम् ॥ ३ 'नात्मीयोक' ॥

यस्मात् ओकः स्वं निवासस्थानं स्वं वंशं बहुनापि कालेन स एति—तद्वंश्य एव भवति, तस्मादपुत्र एवासौ । यत एवमतो ब्रवीमि,—"आ नो वाज्यभीषाळेतु नव्यः"। "एतु" आगच्छतु, "नो वाजी वेजनवान्" परेभ्यो भयदाता । अभिषाट् " अभिषहमाणः" अभिभवन् "सपत्नान्" नव्यः "नवजातः" शिशुरित्यर्थः । "स एव पुत्रः"आगच्छतु, न परकीयैः पुत्रैः सङ्कल्पितैरित्यभिप्रायः ॥ ३ । ३ । १ ॥

## अथैनां दुहितृदायाद्य उदाहरन्ति ॥ २ ॥

"अथैनां दुहितृदायाद्य उदाहरन्ति" । इदमुक्तम्,—अपेत्य यस्मात् पितुः सकाशात् ततं भवति, तस्मादपत्यमिति तादिदमुभयोरपत्यत्वं प्राप्नोति—दुहितुः पुत्रस्य च। दुहितापि ह्यपेत्येव तता भवति पितुः सकाशात् । तत्रैवं सति उभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति, तदिदं विचार्यते । तदधिकारार्थोऽयमथशब्दः । एनामृचं 'शासद्वह्निः' इत्यादि या वक्ष्यमाणा ( ३ अ० । खं० ४) ताम्, दुहितृदायाद्य अर्थे उदाहरन्ति धर्मविदः । अस्यामृचि वक्ष्यमाणायां (४ खं० ) दुहितुरपि दायाद्यत्वमस्तीति दृश्यते ॥ ३ । ३ । २ ॥

## पुत्रदायाद्य इत्येके ॥ ३ ॥ ३ ॥

"पुत्रदायाद्य इत्येके" एके पुनर्धर्मविदो मन्यंते यत् पैतृकं वित्तं तत् पुत्रस्यैव दायाद्यं न दुहितुरिति ॥ ३ । ३ । ३ ॥

यथा दुहितापि दायाद्यमर्हति, तथेयमृग निरुच्यते,—*

"शासद्वह्निर्दुहितुर्नप्त्यंङ्गाद्विद्वाँ ऋतस्य दीधितिं सपर्य्यन् ॥
पिता यत्र दुहितुः सेकमृञ्जन्संशग्म्यैन मनसा दधन्वे ॥"

प्रशास्ति वोढ्ला सन्तानकर्मणे दुहितुः पुत्रभावम् ॥ दुहिता दुर्हिता दूरे हिता । दोग्धेर्वा ॥ नप्तारमुपागमद् दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य, रेतसो वा अङ्गादङ्गात् सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य।विधानं पूजयन्नविशेषेण मिथुनाः पुत्रा दायादा इति १॥

---

* इतोऽग्रे-'इति निरुक्तव्याख्यायां तृतीया ( अष्टमा ) ध्याये तृतीयः खण्डः ॥ ३ ॥'इति दृश्यते, तत् 'यथा दुहितापि--' इत्यतः प्राक् समुचितम् ॥

शासद्वह्निरिति । एषा त्रिष्टुप् । ऐन्द्रे सूक्ते विश्वामित्रेण दृष्टा माध्यन्दिने सवने उक्थपर्याये अच्छावाकस्य यच्छस्त्रमभिजिद्विश्वजिदादिष्वहीनकेष्वहःसु अहीनसूक्तं नाम, तत्रैषं शस्यते । "न जामये तान्वं ( ३ । ६ खं० )"—इतीयमपि अनयैव समानार्षविनियोगदैवतच्छन्दस्का । 'शासद् वह्निः' "प्रशास्ति" प्रख्यापयति प्रज्ञापयतीत्यर्थः ॥ कः पुनरसौ प्रशास्ति ? किं वा प्रशास्ति ? इति । "वोढा" य उद्वोढा स्त्रियाः भवति सः, तस्यां या जायते दुहिता, तस्याः पुत्रभावं प्रशास्ति,—"सन्तानकर्मणे" अर्थाय ॥ "दुहिता, दुर्हिता" सा हि यत्रैव दीयते, तत्रैव दुर्हिता भवति, "दूरे" सती सा पितुः "हिता" पथ्या भवतीति दुहितेत्युच्यते ॥ "दोग्धेर्वा" सा हि नित्यमेव पितुः सकाशात् द्रव्यं दोग्धि प्रार्थनापरत्वात् ॥ आह—कथं पुनर्गम्यते प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम् ? इति । उच्यते—इतः । यस्मात् 'नप्त्यङ्गात्' "नप्तारमुपागमत्" उपागच्छति चेतसा । "दौहित्रम्" दुहितृपुत्रम् । "पौत्रमिति" पौत्रो ममायमिति एवमुपागच्छति । न चापुत्रस्य पौत्रः स्यात्, उपागच्छति च दुहितुः पिता पौत्रो ममायमिति दौहित्रम् । तस्माद् दुहितापि पुत्र एव, यस्याः पुत्रः पौत्रो ममायमित्येवं चेतसा उपगम्यते । 'विद्वाँ ऋतस्य दीधितिं सपर्यन्' । 'विद्वान्' । कस्य ? 'ऋतस्य' "प्रजननयज्ञस्य" । ऋत इत्येतदपठितं यज्ञनाम । 'दीधितिं' विधानमित्यर्थः । प्रजननयज्ञविधानमविशेषेण 'सपर्यन्' पूजयन्नित्यर्थः ॥ यथैव हि पुत्रजनने प्रजननयज्ञस्तन्यते तथैव हि दुहितृजननेऽपि,—यैरेव मन्त्रैर्येनैव च विधानेन पुत्रगर्भ आधीयते, तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि ॥ अथ "वा" ऋतशब्देन रेत उच्यते । तत् "अङ्गादङ्गाद्" यत् सम्भूतं तत् सर्वगात्रेभ्यः हृदयानुस्मरणनिमित्तेन गर्भजनने "मातरि" प्रत्युतं प्रवृत्तं भवति रेतः, तस्य "रेतसः" "विधानम् अविशेषेण पूजयन्" स वोढा दौहित्रं पौत्रो ममायमित्येवमुपगच्छति चेतसा । येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते, तेनैव हि दुहितृजननेऽपि, तत्रैवं सति रेत उत्सर्गविध्यविशेषात् प्रजननयज्ञाविशेषाद्वा "अविशेषेण" "मिथुनाः" पुरुषाः स्त्रियश्च उभयेऽपि दायादा इत्येवमेके धर्मविदो मन्यन्ते ॥ ३ । ४ । १ ॥

तदेतदृक्श्लोकाभ्यामभ्युक्तम्—

"अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्" इति ॥

अविशेषेण पुत्राणां दायो भवति धर्मतः । मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत् ॥ २ ॥

तदेतत् "ऋक्श्लोकाभ्याम्" "अभि" आभिमुख्येन "उक्तम्"–"मिथुनाः पुत्रा दायादा इति" "अङ्गादङ्गात् सम्भवसि ( गो० गृ० सू० २, ८, २१ )", "अविशेषेण पुत्राणाम्"–इत्येताभ्याम् ॥

'शासद्वह्निः'–इत्येतस्या ऋचः प्रथमोऽर्द्धर्चो व्याख्यातः, "पिता यत्र दुहितुः"–इत्ययं द्वितीय उपरिष्टादस्य पादस्य व्याख्यास्यते। अनयोरर्द्धर्चयोरन्तरा "तदेतदृक्श्लोकाभ्यामभ्युक्तम्" इत्यत आरभ्य प्रसक्तानुप्रसक्तं दायाद्यधर्माश्रितमेव पूर्वोत्तरपक्षसम्बन्धादाचारगतं बहु व्याख्यायते मन्त्रविषयख्यापनाय, ईदृशोऽपि मन्त्राणां विषयो भवतीति धर्मसंविज्ञानाय च। सर्व एवायमेवंप्रकारो धर्मो मन्त्रेभ्य एव निर्गमावित्येतदेतेन ख्यापितं भवति ॥

"अङ्गादङ्गात् सम्भवसि"–इत्येतामृचं प्रवासादेत्य पुत्रस्य मूर्द्धनि जपन् जिघ्रति। अनुष्टुबेषा। स पुत्र उच्यते,–हे 'पुत्र !' 'अङ्गात् अङ्गात् सम्भवसि' त्वं 'हृदयात्' च 'अधिजायसे' ॥ यत्तदुक्तम्–"अङ्गादङ्गात्सम्भूतस्य हृदयादधिजातस्य ( ३ अ० ४ ख० )"–इति, तदनेनापि स्पष्टार्थतरेण मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थतायां स्पष्टार्थीकरणार्थोऽयं मन्त्रः। तत्र हि 'ऋतस्य दीधितिं सपर्य्यन्'–इत्यत्र "ऋतस्य प्रजननयज्ञस्य रेतसो वा विधानम् अविशेषेण पूजयन्"–इत्युक्तम् ( ३ अ० ४ ख० )" तच्च पुनरेतदस्पष्टम्, इह पुनः 'अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे' इत्येवमुच्यते। तत्रैवं सति यथैव पुमान् अङ्गादङ्गात् सम्भवति हृदयाच्चाधिजायते, तथैव दुहितापीत्यविशेष उपपद्यते। तस्मात् साधूक्तम्—"अविशेषेण मिथुनाः पुत्रा दायादाः" इति ( ३ अ० ४ खं० )" ॥ "आत्मा वै पुत्रनामासि" यस्मादङ्गादङ्गात् सम्भूतस्त्वं हृदयादधिजातस्तस्मादात्मैव त्वं ममैवावयवभूत इत्यभिप्रायः। केवलं तु पुत्रनामा त्वम्, अहं पितृनामा, एतावानावयोर्विशेषो नाममात्रं भिन्नमित्यभिप्रायः ॥ "सः" त्वं "जीव शरदः शतम्"–इत्याशीः। सर्वस्मिन्नपि संवत्सरे शरदेव दुर्जीवा, प्रचुररोगत्वाच्छरदः, तस्माच्छरदेवोपलक्ष्य संवत्सरशतमेतदायुराख्यास्यते ॥ (?)

"अविशेषेण पुत्राणां दायो भवति धर्मतः मिथुनानाम्"। क एवमाह ? "मनुः" "स्वायम्भुवः" स्वयम्भुवोऽपत्यं स्वायम्भुवः ॥ कस्मिन् काले स एवमाह? "विसर्गादौ" सृष्ट्यादाविसर्गे ॥ पूर्वार्द्धं श्लोकस्य ऋग्वेव। एवमेताभ्यामप्यृक्श्लोकाभ्यामुक्तमविशेषेण पुत्रस्य दुहितुश्च दायादत्वम् ॥ ३ । ४ । २ ॥

न दुहितर इत्येके ॥ तस्मात् पुमान् दायादोऽदायादा स्त्रीति विज्ञायते ॥ तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसमिति च ॥ स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः ॥ ३ ॥

"न दुहितर इत्येके" न दुहितरो दायाद्यमर्हन्तीत्येवमेके धर्मविदो मन्यन्ते । ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति—"तस्मात् पुमान् दायादः, स्त्री अदायादा–इति विज्ञायते इति यदृच्छन्ति स्थालीं न दारुमयं तस्मात्पुमान्दायादोऽदायादा स्त्री-इति विज्ञायते" ॥ एतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते—न दुहितरो दायाद्यमर्हन्ति, पुमानेवार्हतीति ॥ "तस्मात् स्त्रियं जातां परास्यन्ति, न पुमांसमिति च" ॥ एतदपरं दर्शनं दुहितुरदायादत्वं लिङ्गतो दर्शयति—"अथ यत् स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति, न दारुमयं परास्यन्ति हवनकर्मणः दारुमयेणैव जुह्वति, तस्मात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति, न पुमांसम्" । तस्मात् पुमानेव पैतृकस्य वित्तस्येष्टे, न दुहिता ॥ किञ्च, स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः । प्रदीयते हि परस्मै स्त्री, विक्रीयते च वैवाहिकेन शुल्केन ।

"विक्रयं चाप्यपत्यस्य मतिमान् कोऽनुमंस्यते ।
स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः ॥"

इति भगवता वासुदेवेनोक्तं सुभद्राहरणे । तथा च ब्राह्मणमपि दर्शयति—"चातुर्मास्येष्वनृतं वा एषा करोति, या पत्युः क्रीता सती अन्यथान्यैश्चरति" इति, तस्माच्छुल्केन प्रदानं विक्रयः कन्याया इत्युपपद्यते ॥ अतिसर्गः परित्यागः । परित्यज्यते हि कन्या स्वबन्धुभिः स्वयंवरे, यो बलिष्ठः स गृह्णातु, यो वा तुभ्यं रोचते तं वृणीष्वेति । स एष क्षत्रियाणामेव स्वयंवरधर्मो नेतरेषां वर्णानामिति । स पुनरयमितरेषामपि वर्णानामदायाद्यार्हत्वे कन्याया लिङ्गं भवति । तस्मान्न दायाद्यमर्हति कन्येति ॥ ३ । ४ । ३ ॥

पुंसोऽपीत्येके, शौनःशेपे दर्शनात् ॥ ४ ॥

"पुंसोऽपीत्येके, शौनःशेपे दर्शनात्" । यदुक्तं दानविक्रयातिसर्गैर्हेतुभिरदायादत्वं स्त्रिया इति, अनेकान्त एषः, पुंसोऽपि दानविक्रयातिसर्गा विद्यन्त एव । पुरुषोऽपि हि परस्मै दीयते । एवं युक्तम्—"दत्तक्रीतकृत्रिमक्षेत्रजौरसाः पुत्राः" इति । तथा च "शौनःशेपे दर्शनात्" शौनःशेपे आख्याने बह्वृचानाम्, भारते च शुनःशेपस्य

---

१ इति इ वि ॥ २ इतोऽग्रे—'कारणात्' इत्यधिकमेकस्मिन्पुस्तके ॥ ३ 'योऽत्र बलिष्ठः' इ० पा० ॥

विक्रयो दृष्टः—'विक्रीतं मध्यगं[1] मन्ये' इत्येवमादि ॥ तथा च परित्यागोऽपि दृष्टः,—यथा विश्वामित्रेण मधुच्छन्दआदीनाम् ॥ तस्मादनैकान्तिकत्वादेवैषां[2] हेतूनामुभयोरपि दायाद्यत्वमित्येवमेके मन्यन्ते ॥ ३ । ४ । ४ ॥

## अभ्रातृमतीवाद इत्यपरम् ॥ ५ ॥

"अभ्रातृमतीवाद इत्यपरम्" 'आचार्यमतम्' इति वाक्यशेषः । यैवाभ्रातृका भवति कन्या, सैव पित्र्यं धनमर्हति, नेतरा सभ्रातृका, पुरुषेषु हि पितुः पिण्डदातृषु तिष्ठत्सु न स्त्री धनमर्हति, सा हि परकीयं वंशं वर्द्धयति, न स्वम्, तस्मादसौ नार्थभागिनी। अभ्रातृकायां पुनरयं विशेषः,—अभ्रातृकायाः पितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिषु कार्येष्ववतिष्ठते इति भवत्यर्थभागिनी अभ्रातृका दुहिता। तदुक्तम्,—'पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्याभिसन्धानमात्रं पुत्रिका इत्येकेषाम्' इति ॥ ३ । ४ । ५ ॥

**( अमूर्या यन्ति जामयः सर्वा लोहितवाससः। ) अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः ।"**[3]

**अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया अनिर्वाह औपमिकः ॥ ६ ॥ ४ ॥**

निगममप्येतस्मिन्नर्थे उदाहरन्ति,—"अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः"—इति। निगमस्य समासतोऽर्थमाह,—"अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इति" अस्यामृचि "अभ्रातृकायाः" कन्यायाः "अनिर्वाहः" अनिर्वहणं विवाहनिषेध इत्यर्थः । "औपमिकः" उपमया दर्शितः—"अभ्रातर इव" इति ॥

"अमूर्या यन्ति जामयः[5] सर्वा लोहितवाससः ।
अभ्रातर इव योषास्तिष्ठन्ति[6] हतवर्त्मनः ( अ० सं० १, १७, १ ) ॥"

इयमथर्वणां प्रसवमार्गवहनरोगिणी या स्त्री भवति, तस्याः तत्प्रतिकारकर्मणि विनियुज्यते । 'अमूर्या' 'यन्ति' स्रवन्ति नाड्यो रक्तमजस्रमविरताः स्त्रिय इवातिलोहितवस्त्राः 'सर्वाः' एताः तिष्ठन्तु उपरमन्तु हतलोहितवहनमार्गाः, अस्य मन्त्रस्य वीर्येण ॥ कथं पुन-

१ 'मध्यमं' ॥ २ 'देतेषां' ॥ ३ एतत्कोष्ठका ( ) न्तर्गतः पाठो बहुषु न दृश्यते ॥ ४ 'योषितो हिराः' ॥ ५ 'जामयः' ॥ ६ 'तिष्ठन्तु' ॥ ७ इतोग्रे 'हिराः' सिराः इति पाठो वर्तते ॥ ८ इतोऽग्रे 'योषितः' इति पाठोऽस्ति ॥ ९ 'सर्वाः' इति पाठ एतोग्रे क्वचित्पुस्तके ॥

स्तिष्ठन्तु ? 'अभ्रातर इव योषाः' यथा काश्चिदभ्रातृका योषा हतभर्तृवंशमार्गास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय, एवमेता नाड्यः तिष्ठन्त्विति । एवमस्यामृचि अभ्रातृकाया अनिर्वाह उपमया लिङ्गतो दर्शितः ॥ ३ । ४ । ६ ॥

तस्योत्तरा भूयसे निर्वचनाय—

"तस्य" अनिर्वाहस्य "उत्तरा" ऋक् "भूयसे" बहुतराय "निः" निर्विविच्य "वचनाय"—*

"अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥"

अभ्रातृकेव पुंसः पितृनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम् । गर्त्तारोहिणीव धनलाभाय दाक्षिणाजी ॥ गर्त्तः सभास्थाणुर्गृणातेः । सत्यसङ्गरो भवति ॥ तं तत्र यापुत्रा यापतिका सारोहति । तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते ॥ १ ॥

अभ्रातेव पुंस इति । दीर्घतमःपुत्रस्य कक्षीवत आर्षम् । त्रिष्टुप् । औषसी । प्रातरनुवाकाश्विनयोः शस्यते ॥ "अभ्रातेव पुंसः" यथा अभ्रातृका कन्या दत्तापि सती पित्रा, ऊढा भर्त्रा, पुनः "प्रतीची" पुंसः "पितॄन्" एव पितृवंशमेव "अभिमुखी एति" "सन्तानकर्मणे पिण्डदानाय न पतिम्" पतिवंशमित्यर्थः । सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्द्धयति, न भर्तृवंशमिति, तस्मादभ्रातृका पैतृकं दायाद्यमर्हतीत्युपपद्यते ॥ "गर्त्तारुगिव सनये धनानाम्" । "गर्त्तारोहिणी इव" काचित् "दाक्षिणाजी" दाक्षिणात्या स्त्री सा यथा "गर्त्तः सभास्थाणुः" तमारोहति । अक्षनिर्वपनपीठं निविशतीत्यर्थः । तत्र गता सती अपुत्रा रिक्थं लभते कितवा दापयन्ति रिक्थम्—इति दाक्षिणात्येषु देशरीतिः । "सनये" लब्धये "धनानाम्" । एवम् "उषाः" अपरकाले रात्र्या नभ आरोहति । किञ्च, "जायेव पत्य उशती सुवासाः" । यथा जाया पत्ये

१ 'जामयः' ॥　२ इतोऽग्रे 'जामयो भगिन्यः' इति ॥　* इतोग्रे--'इति निरुक्तव्याख्यायां तृतीया (अष्टमा) ध्याये चतुर्थः खण्डः ॥ ४ ॥' इति दृश्यते तत् 'तस्य अनिर्वाहस्य' इत्यस्मात् प्राक्समुचितम् ॥　३ 'स्वीकृतापि' ॥

भर्त्रे सुवासा भूत्वा ऋतुकालेषु आत्मानं दर्शयति एवमुषा आत्मानं दर्शयति जनानाम् । किञ्च, "उषा हस्रेव निरिणीते अप्सः" । यथा हसना स्त्री हसनस्वभावा दन्तान् आत्मनो दर्शयति, एवमुषा अपि आत्मनोऽन्तर्भूतानि सर्वद्रव्याणां रूपाणि विवृणुते, शार्वरेण तमसा दिग्धानि सर्वद्रव्याणि स्वेन प्रकाशोदकेन धौतानीव करोति ॥

"चतस्रः" एता "उपमाः" अस्यामृचि । अभ्रातेव पुंस इत्येका १ । गर्त्तारोहिणीवेति द्वितीया २ । जायेव पत्य इति तृतीया ३ । हस्रेवेति चतुर्थी ४ । अत्र प्रथमयोपमया अभ्रातेव पुंस इत्यनया अभ्रातृकाया अनिर्वाहो लिङ्ग्यते, यथा अभ्रातृका पितॄनेव प्रत्येति न पतिम्, एवमुषा आदित्यमेव प्रत्येति । एवमभ्रातृका कन्या यस्मिन्नेव वंशे उत्पन्ना भवति, तमेव प्रकाशयति वर्द्धयति, न भर्त्तृवंशम् । इत्येवमुपमया नासौ वोढव्येत्येतदुपप्रदर्शितं भवति, पुत्रार्थत्वाद् विवाहस्य । तस्मादवर्द्धयितृत्वाद् भर्त्तृवंशस्य, वर्द्धयितृत्वाच्च पितृवंशस्य, अभ्रातृका पितृदायाद्यमर्हतीत्युपपद्यते ॥

निगमप्रसक्तस्य तत्त्वमाचष्टे,—"गर्त्तः सभास्थाणुः" इति, अक्षनिर्वपणपीठमित्यर्थः । "गृणातेः ( क्र्या० प० )" स हि "सत्यसङ्गरो भवति" सङ्गीर्य्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र न पतितमित्येवम् । प्रायेण कितवास्तत्रानृतं ब्रुवते । तम् एवंलक्षणं गर्त्तमारोहति या स्त्री, सा 'गर्त्तारुक्' इत्युच्यते । तदेतद्गर्त्तस्य सभास्थाणोरारोहणं रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रियाः प्रसिद्धम् । तयैव प्रसिद्ध्या निरुच्यते देशसमाचारव्यवस्थयापि क्वचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति ॥

"तं तत्र या अपुत्रा या अपतिका सा आरोहति" तं सभास्थाणुम्, तत्र कितवमध्ये अवस्थितं या अपुत्रा स्त्री, या अपतिका, सा आरोहति तस्मिन्नुपविशतीत्यर्थः । ततः "सा" भर्त्तृबन्धुभ्यः सकाशात् "रिक्थं लभते" यस्तस्या भर्त्तृसक्तो धनांशस्तम् । एवमसौ सनये लब्धये धनानां गर्त्तमारोहति ॥ ३ । ५ । १ ॥

**श्मशानसञ्चयोऽपि गर्त्त उच्यते गुरतेरपगूर्णो भवति ॥**

**श्मशानं, श्मशयनम् ॥**

**श्म शरीरम् ॥ शरीरं शृणातेः शम्नातेर्वा ॥**

**श्मश्रु लोम, श्मनि श्रितं भवति ॥**



**लोम लुनातेर्वा लीयतेर्वा ॥**

"नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्य्याद्गर्त्तेष्ठाः स्यात् प्रमायुको यजमानः" इत्यपि निगमो भवति ॥ २ ॥

गर्त्तशब्दप्रसक्तमुच्यते,—"श्मशानसञ्चयोऽपि गर्त्त उच्यते" । "गुरतेः (तु० आ०)" उद्यमनार्थस्य । स हि लोकविनाशायाभ्युद्यत इव भवति । यानि हि तत्र पिशाचादीनि सत्त्वान्याश्रितानि भवन्ति । तानि जनमरणमाशासते, म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति ॥

"श्मशानं श्मशयनम्" इत्याख्यानप्रसक्तमुच्यते । तत्र हि श्म शेतेऽत्रेति श्मशयनं सत् तत् श्मशानमित्युच्यते ॥

श्मशब्दार्थमाह,— "श्म शरीरम्" इति । तद्धि तत्र शेते, तत्र हि तन्निक्षिप्यते मृतस्य सतः ॥

"शरीरं शृणातेः" "शम्नातेर्वा" कृतव्याख्यानमपि पुनराह मुख्यत्वादस्य । तत्र औपमिकं वृत्रसम्बन्धात् । न हि वृत्रस्य मुख्यं शरीरम् ॥

श्मशब्दप्रसक्तं निराह,—"श्मश्रु लोम" इति, तद्धि "श्मनि" शरीरे "श्रितं भवति" ॥

पर्यायप्रसक्तं निराह,—"लोम लुनातेः (क्र्या०, उ०)" तद्धि लूयते । "लीयतेर्वा (दि० आ०)" तद्धि शरीरे लीयते ॥

तत्र निगममपि चोदाहरन्ति,—श्मशानसञ्चयोऽपि गर्त्त उच्यत इति "नोपरस्याविष्कुर्य्याद् यदुपरस्याविष्कुर्य्याद् गर्त्तेष्ठाः स्यात् प्रमायुको यजमानः" इति । उपर इति यूपस्यातष्टप्रदेश उच्यते, "पञ्चमभागोपरा यूपाः"—इति ह्युक्तम् । तदतष्टं यूपस्य न आविष्कुर्य्यात्—इत्यर्थः । पांशुभिस्तदवच्छादनीयं बर्हिषा च । यदि पुनः उपरस्य काञ्चिदप्यवयवम् आविष्कुर्य्यात् गर्त्तेष्ठाः गर्त्तप्रतिष्ठः श्मशानप्रतिष्ठः, प्रमायुकः प्रमरणधर्मायुरेव यथाविहितादायुषो यजमानः स्यात् । "इत्यपि निगमो भवति"; अप्ययमप्यन्ये बहव इत्यपि शब्दः ॥ ३ । ५ । २ ॥

रथोऽपि गर्त्त उच्यते गृणातेः स्तुतिकर्मणः स्तुततमं यानम् ॥ "आरोहथो वरुण मित्र गर्त्तम्" इत्यपि निगमो भवति ॥ ३ ॥

"रथोऽपि गर्त्त उच्यते" । "गृणातेः" स्तुत्यर्थस्य । तद्धि "स्तुततमं यानम्" अश्वादिभ्यो यानेभ्यः सुखतरं हि तेन गम्यते ।

रथोऽपि गर्त्त इत्यस्मिन्नर्थे "आरोहथो वरुणमित्र गर्त्तमित्यपि निगमो भवति" ।



१ 'सञ्चयो' ॥ २ 'नकामान्याशा' ॥ ३ 'चात्रो' ॥

"हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्य्यस्य।
आरोहथो वरुण मित्र गर्त्तमतश्चक्षाथे अदितिं दितिं च॥—इति ( ऋ० सं० ४, ३, ३१, २ )"

श्रुतविदात्रेय एतया त्रिष्टुभा मित्रावरुणावस्तौत्। राजसूयेऽभिषेचनीयो नाम क्रतुः, तत्र यजमानस्य रथमारुरुक्षतः गृहीतेषुधनुष्कौ बाहू अनया अभिमन्त्र्येते। तावेवात्र मित्रावरुणावभिप्रेतावधिदेवताभिप्रायेण। एवं ह्याह—"मित्रोऽसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपम्, वरुणोऽसीतीमं वरुणस्यैतद्रूपम्" इति,तावुच्येते।हे "मित्र!वरुण!" "हिरण्यरूपं' हिरण्यसदृशवर्णम्'उषसो व्युष्टौ'उषसो व्युच्छेदकाले'उदिता'च उदयकाले 'सूर्य्यस्य' यौ युवामेतस्मिन् काले एवंरूपम् 'अयःस्थूणम्' अयोमयं स्थूणं स्वं "गर्त्तं" रथम् "आरोहथः" तौ युवां ब्रवीमि ममाप्येवं रथं गर्त्तमेतस्मिन् विधावङ्गभूतं तत्सरूपमेव साम्प्रतमारोहतम्, 'अतः' एनमारुह्य 'चक्षाथे' कुरुतमित्यर्थः। 'अदितिं दितिं च' अदीनमनुपक्षीणमात्मपक्षं दीनं चोपक्षीणममित्रपक्षमित्यर्थः ॥ ३ । ५ । ३ ॥

**जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते रूपाणीति ॥ ४ ॥**

"गर्त्तः सभास्थाणुः"—इत्यत आरभ्य प्रसक्तानुप्रसक्तमुक्तम् ॥

"जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः"—इति। अयमप्यर्द्धर्चः पूर्वमेव व्याख्यातो भाष्यकारव्याख्यानुक्रमं भित्त्वा अस्माभिः,तथाह्यृग्वाक्यस्याप्यैकवाक्यता न विच्छिन्ना भवेदिति ॥ ३ । ५ । ४ ॥

**चतस्र उपमाः "नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्भवति" इत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः ॥ ५ ॥**

"चतस्र उपमाः"—इति यदुक्तं भाष्यकारेण, तदपि परिसंख्याय ताः उपमाः उपपादिताः अस्माभिः। एवम् "अभ्रातेव पुंस एति प्रतीची"—इत्यनेन पादेनास्यामृचि अनिर्वाहो दर्शितः ॥

अन्यत्रापि चोक्तम्,—"नाभ्रातृकामुपयच्छेत तोकं ह्यस्य तद् भवति—इति"। अयमस्मिन् वाक्ये नाभ्रातृकामुपयच्छेत—इति प्रत्यक्ष एवोपयमनप्रतिषेधो विवाहार्थे पाणिग्रहणप्रतिषेध इत्यर्थः। पूर्वयोर्हि मन्त्रयोरुपमया लिंगतो विवाहप्रतिषेधो दर्शितः,



१ 'तथा ह्यृग्वाक्यस्याप्यै-' इति पाठे तया-व्याख्यया-इत्यर्थः।

एतस्मिंस्तु वाक्ये साक्षादेव प्रतिषेधः आहत्य विधानेनैव नाभ्रातृकामुपयच्छेतेति । अत इदमुक्तम्,–"उपयमनप्रतिषेधः प्रत्यक्षः"–इति ॥

आह–किमुपयमनप्रतिषेध एव ? नेत्युच्यते–"पितुश्च पुत्रभावः" प्रत्यक्षः श्रूयते । कथम् ? "तोकं ह्यस्य तद् भवति"–इति । तोकमित्यपत्यनाम । यदपत्यमभ्रातृकायाः तत् पितुर्भवति, नेतरस्य वोढुः, इत्येवमितरस्य विवाहप्रतिषेध एव नेत्युच्यते पुत्रभावादितरस्य च पुत्रिकापितुरपत्यप्राप्तिरिति । तस्मादुपपन्नं भवति,–यैवाभ्रातृमती, सैव पैतृकं धनमर्हति नेतरेति ॥ ३ । ५ । ५ ॥

## पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्जयति सन्दधात्यात्मानं सङ्गमेन मनसेति ॥ ६ ॥ ५ ॥

अधुना योऽसौ शासद्वह्निः ( ३ । ४ । १ ) इत्यस्या ऋचः उत्तरोऽर्द्धर्च उत्सृष्टः, स एवाभ्रातृकावादपक्षेणैव निरुच्यते । पूर्वोऽपि च शासद्वह्निरित्ययमभ्रातृमतीवादपक्षेणैव योजयितव्यः । एष एव हि स्थितः पक्षः । तस्या एव ह्यभ्रातृमत्या यः पुत्रो भवति,तमेव पुत्रिकाविधानेन कृताभिसन्धित्वात् पौत्रो ममायमिति अपुत्रः सन् मातामह उपगच्छति, नेतरान् भ्रातृमतीपुत्रान् । अन्यथा सर्व एव हि वोढारोऽपुत्राः स्युः । ततो विवाहपरिश्रमो व्यर्थ एव स्यात् । अथवा सर्व एव लोको द्व्यामुष्यायण एव स्यात् । किंच,पुत्रिकापितुरपि या भार्य्या सान्यस्य दुहितेति तस्यामपि या जायते सा मातामहस्यैव, नेतरस्य पुत्रिकापितुः स्यात् । अनिष्टं चैतत् सर्वम् । तस्माद् यैवाभिसन्धिपूर्वकं धर्मेण पुत्रिका क्रियते, तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्या इति, सैव च दायाद्यार्हा, नेतरा भ्रातृमत्यः । अत इदमुच्यते,–"पिता यत्र दुहितुः" इति । 'पिता यत्र' यस्मिन् काले दुहितुः "अप्रत्तायाः" प्राक् प्रदानादित्यर्थः । "रेतःसेकं" रेतसः सेक्तारं यो दुहितरि रेतः सिञ्चति तं जामातरं "प्रार्जयति" प्रसाधयति, प्रकल्पयति, उपावर्त्तयतीत्यर्थः । तदा तस्मै तां दुहितरं ददत् किं करोति ? 'संशग्म्येन मनसा दधन्वे' "सन्दधाति" अभिसन्दधाति "आत्मानम्" यदत्रापत्यमुत्पत्स्यते तन्ममेति । कथं पुनरभिसन्दधात्यात्मानामिति 'संशग्म्येन' 'मनसा' "सङ्गमेन" "मनसा" विगतापुत्रत्वसन्तापेन चेतसा–'नाहमपुत्रः, इयमेव पुत्रिका मम पुत्रः, यो ह्यस्यामुत्पत्स्यते, स पौत्रो मम भविष्यति' इत्येवं सुखेन मनसा सन्दधात्यात्मानं तस्यां पुत्रिकायाम् । तत्रैवं सति यस्तस्यामेव कृतपुत्रिकाधर्मिण्यामुत्पाद्यते दौहित्रः, तमेव 'नप्ता ममायम्' इत्येवमुपगच्छति मातामहः, न सर्वानेव दौहित्रान् । ( अ ) भ्रातृमत्या अपि स तस्या एव पुत्रो मातामहस्य पौत्रो भवति, न सर्वस्याः, इति सैव च दायाद्यार्हा, नेतरा । स एव च मुख्यया

१ 'एलदु' ॥ २ 'प्रत्यक्षं' ॥ ३ 'पिनाम-' असंगत चैतत्पाठान्तरम् ॥

वृत्त्या मातामहस्यैव पौत्रो भवति, नेतरे भ्रातृमतीपुत्राः । ते हि गौण्या वृत्त्या जनयितुः पितुः पौत्राः सन्तो मातामहस्य पौत्रा इत्युच्यन्ते कदाचिल्लोके शास्त्रे च ॥

तत्रैवं सति "अङ्गादङ्गात् सम्भवसि" "आत्मा वै पुत्रनामासि" इत्येवमादिषु गौणं दुहितुः पुत्रत्वमुच्यते । किंच, यदि दुहिता पुत्रेण अविशिष्टा एव स्यात्, ततो दुहितेति विशेषसमाख्या नैव स्यात्, अस्ति चेयम् । तस्माद् विशिष्टतरः पुत्रो दुहितुः सकाशादित्युपपद्यते ॥

यदपि चोक्तम्,—"अविशेषेण पुत्राणां दायो भवति"—इति, तदप्यभ्रातृमतीपक्षे द्रष्टव्यम् ॥ अथवा वेदस्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान्, न स्मृतिदृष्टः ॥ ३ । ५ । ६ ॥

**अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति । ज्येष्ठं पुत्रिकाया इत्येके—॥**

तस्मिंश्च वेदे "अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति" धर्मविदः,—येयमृग् वक्ष्यमाणा (६ ख०) "न जामये तान्वः"—इति ॥ अथशब्दो विशेषाधिकारार्थः ॥ "ज्येष्ठं पुत्रिकाया इत्येके।" ज्येष्ठमपत्यं यत्पुत्रिकायास्तदेव मातामहस्य नेतराणि। इतराणि जनयितुरेवेत्येवमेके मन्यन्ते ॥ अथवा ज्येष्ठं पुत्रिकाया इत्येक इति । यदा उत्सृष्टायां पुत्रिकायां पुत्रिकापितुरन्ये पुत्रा जायेरन्, तदा विभागकाले ज्येष्ठं धनंभागं पुत्रिकायै एव दद्यात्, यथाभागमितरान् विभजेत्, अभागा एव त्वितरा दुहितर इति । तदेतदनयर्चा निरुच्यते यथा हि दुहितॄणां भागो नास्तीति—* ॥

**"न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्निमन्यः कर्त्ता सुकृतोरन्य ऋन्धन् ॥"**

**न जामये भगिन्यै ॥ जामिरन्येऽस्यां जनयन्ति जामपत्यम् । जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति ॥ तान्व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादात् ॥ चका-**

१ 'च' ॥ * इतोग्रे-'इति निरुक्तव्याख्यायां तृतीया (अष्टमा) ऽध्याये पञ्चमः खण्डः ॥ ५ ॥' इति दृश्यते, तत् 'तस्मिंश्च वेदे' इत्यतः प्राक्समुचितम् ॥

रैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य । 'यदी मातरोऽजनयन्त वह्निम् ।' पुत्रम् । अवह्निं च स्त्रियम् । अन्यतरः सन्तानकर्त्ता भवति पुमान् दायादः । अन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै ॥ १ ॥ ६ ॥

न जामये इति । "न जामये भगिन्यै" "तान्वः आत्मजः" आत्मनो [1] जातः सः आत्मजः ॥ स च किं करोति इति ? "रिक्थम् आरैक्" । रिक्थं पैतृकं धनं न "प्रादात्" न प्रददौ इति ॥ किं तर्हि तस्याः करोति ? इति । उच्यते—"चकार गर्भं सनितुर्निधानम्" । "सनितुः हस्तग्राहस्य" भगिनीभर्त्तुः प्रसवसमर्थां करोति, पुष्णातीत्यर्थः ॥ किंच, "यदी मातरः" यत् पुत्रद्वयमिह मातरो जनयन्ति, "वह्निं" च वध्वा वोढारं "पुत्रम्" "अवह्निं च" अवोढ्रीं "स्त्रियम्" तयोर्द्वयोरपि वोढ्रवोढ्र्योः पुत्रयोः "अन्यतरः" एकतरः "कर्त्ता" "सन्तानकर्त्ता भवति" ॥ कतमः ? यः "पुमान्" स एव च "दायादः" दायग्राहः, नेतरः कन्याख्यः ॥ किंच, तयोरुभयोरपि "सुकृतोः" सुकृतयोः सुतरामेकेनापि प्रयत्नेन कृतयोरुत्पादितयोः "अन्य ऋन्धन्", "अन्यतरोऽर्द्धयित्वा" सुकृतोऽपि सुपुष्टोऽपि सन् "जामिः" जाम्याख्यो भगिन्याख्यः "प्रदीयते परस्मै" न कस्याञ्चिदप्यवस्थायामसावात्मीयो भवतीत्यभिप्रायः ॥ एवमस्यामृचि 'न जामये तान्वो रिक्थमरैक्' इति न दुहितरो रिक्थभागिन्यो भवन्ति, नैताः सन्तानकर्मणि पितुरुपतिष्ठन्ते, वर्द्धयित्वा ह्येताः परस्मै दीयन्ते, तस्मादभागा एता इति ॥

यत् पुनरेतदुक्तं पुंसोऽपि दानातिसर्गविक्रया विद्यन्त इति, तत् कदाचित् केनचिन्निमित्तेन भवति, स्त्री तु निसर्गेणैव दीयते विक्रीयते विसृज्यते वा, सा हि परार्थमेवोत्पद्यते, तस्मादभोगा इति[3] ॥ ३ । ६ । १ ॥

प्रसक्तानुप्रसक्तमिदमुक्तम्, तद्यथा—'जनयितुः प्रजाः' इत्येवमादि ॥ प्रकृतमिदानीमुच्यते,—*

## ( अथ मनुष्यनामानि )

मनुष्याः । नरः । धवाः । जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः । हरयः ।

---

१ 'तां' भवति 'सन्तानकर्मणः' ॥ २ 'दसममि' ॥ ३ इतोग्रे "इति निरुक्तवृत्तौ तृतीया-( अष्टमा ) ध्यायस्य प्रथमः पादः ॥ ३ । १ ॥" इत्युपलभ्यते ॥ * इतोग्रे—'इति निरुक्तव्याख्यायां तृतीया (अष्टमा) ध्यायस्य प्रथमः पादः ॥ ६ ॥' इति दृश्यते तत् 'प्रसक्तानुप्रसक्तमुक्तम् ।' इत्यतः प्राक्समुचितम् ॥

मर्याः । मर्त्याः । मर्ताः । व्राताः । तुर्वशाः । द्रुह्यवः । आयवः । यदवः । अनवः । पूरवः । जगतः । तस्थुषः । पञ्चजनाः । विवस्वन्तः । पृतना इति पञ्चविंशतिर्मनुष्यनामानि ॥ २ । ३ ॥

मनुष्यनामान्युत्तराणि पञ्चविंशतिः ॥ १ ॥

"मनुष्यनामान्युत्तराणि पञ्चविंशतिः" । मनुष्याणां नामानि मनुष्यनामानि उत्तराणि प्रकृतेभ्योऽपत्यनामभ्यः, अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते ॥ कियन्ति पुनस्तानि ? पञ्चविंशतिः, पञ्च च विंशतिश्च पञ्चविंशतिः ( २५ ) ॥ कतमानि पुनस्तानि ? "मनुष्याः, नरः"—इत्येवमादीनि ॥ नृत्यन्ति कर्मस्विति नरः इत्येवमादि ॥ ३ । ७ । १ ॥

मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टाः । मनस्यतिः पुनर्मनस्वीभावे ॥ मनोरपत्यम् । मनुषो वा ॥ २ ॥ ७ ॥

आह,—"मनुष्याः कस्मात्" ? उच्यते—"मत्वा" ज्ञात्वा, तत एते "कर्माणि" "सीव्यन्ति" संतन्वन्तीत्यर्थः ॥ अथवा "मनस्यमानेन" प्रजापतिना "सृष्टाः" ॥ "मनस्यतिः पुनः" अयं धातुः "मनस्वीभावे" । मनस्वीभावो नाम प्रहृष्टता ॥ प्रहृष्यता प्रजापतिनैते सृष्टाः ॥ अथवा "मनोरपत्यं" मनुष्याः "मनुषो वा" अपत्यं मनुष्याः ॥ ३ । ७ । २ ॥

तत्र पञ्चजना इत्येतस्य निगमा भवन्ति—॥

"तत्र पञ्चजना इत्येतस्य निगमा भवन्ति" सन्दिग्धाः, तत्रेयमृगुदाहरणम् । तद्यथा, *—

---

१ मनुष इति ॥ 'समिद्धो अद्य मनुषो दुरोणे' ( ऋ० सं० ८ । ६ । ८ । १ ) इत्यत्र प्रयोगे प्रकल्पन्ते षकारस्य दर्शनात् षुगागममन्तरापि केवलं यत्प्रत्यये मनुष्यशब्दसिद्धिरिति भावः ॥ * इतोऽग्रे--'इति निरुक्तव्याख्यायां तृतीया ( अष्टमा ) ऽध्याये सप्तमः खण्डः ॥ ७ ॥ इति दृश्यते, तन्न 'तत्र पञ्चजनाः--इत्यतः' प्राक् समुचितम् ॥

"तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येनासु॑राँ अ॒भि दे॒वा अ॒साम॑ ।
ऊर्जा॑द उ॒त य॑ज्ञियासः॒ पञ्च॑जना॒ मम॑ हो॒त्रं जु॑षध्वम् ॥"
तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवाः ! ॥
असुरा असुरताः स्थानेष्वस्ता स्थानेभ्य इति वा ॥
अपि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः ॥
सोर्देवानसृजत तत् सुराणां सुरत्वम्, असोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते ॥ 'ऊर्जाद उत यज्ञियासः ।' अन्नादाश्च यज्ञियाश्च ॥ ऊर्गित्यन्ननामोर्जयतीति सतः ॥ पक्वं सुप्रवृक्णमिति वा ॥ 'पञ्चजना मम होत्रं जुषध्वं' गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके ॥ चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः ॥ निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः ॥ "यत् पाञ्चजन्यया विशा ।" पञ्चजनीनया विशा ॥ पञ्च पृक्ता सङ्ख्या स्त्रीपुंनपुंसकेष्वविशिष्टा ॥ ७ ॥

"तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒० जुषध्वम् ( ऋ० सं० ८, १, १३, ४ )" । सौचीकस्याग्नेरार्षम् । तस्य विश्वैर्देवैः सह संवादः । तत्रेयं होतृजपे विनियुक्ता ॥ "तत्" वीर्यं "वाचः" "परमम्" उत्कृष्टम् अहम् "अद्य" "मंसीय" मन्ये जाने इत्यर्थः ॥ तेन वीर्येण किम् ? इति—"येन असुरान् अभिभवेम" वयम् । हे देवाः ! ॥ "ऊर्जादः" अन्नभक्षयितारः । अपि च हे "यज्ञियासः" यज्ञसम्पादिनः "देवाः !" यूयम् । अपि च हे "पञ्चजनाः" मनुष्याः ! निषादपञ्चमा वर्णाः ! "मम" इदं "होत्रं" "जुषध्वम्" अनुगृह्णीध्वम् ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम्—"असुराः असुरताः स्थानेषु" ते हि न सुष्ठु रताः स्थानेषु, चपला इत्यर्थः ॥ अथ "वा" अस्ताः स्थानेभ्यः इति" प्रच्याविता देवैरित्यर्थः ॥ "अपि वा

असुरिति प्राणनाम" । स हि "अस्तः" क्षिप्त इव "शरीरे भवति" तस्य हि तत्र नित्यमवस्थानमित्यभिप्रायः ॥ "तेन" हि "तद्वन्तः" भवन्ति । रो मत्वर्थे ॥ अथवा इदमन्यद् ब्राह्मणोक्तं निर्वचनं स्यात् "सोऽदेवानसृजत" सुरिति प्रशस्तनाम । प्रशस्तादात्मनः प्रदेशात् प्रजापतिः सुरानसृजत्, ऊर्ध्वेभ्यः प्राणेभ्यः । तदुक्तम्,—"ऊर्ध्वमुदतृणत् पूर्वपक्षः पञ्चदशः, तेन सोऽदेवानसृजत तत् सुराणां सुरत्वम्—इति विज्ञायते ।" एवमेव प्रातिलोम्येन "असोरसुरानसृजत" । असुरिति प्रशस्तप्रतिषेधः । अप्रशस्तादात्मनः प्रदेशात् प्रजापतिरसुरानसृजत । तदुक्तम्,—'अर्वाङ्वातिरदपरपक्षः, तेन असुरानसृजत'—इति ॥

ऊर्जाद उत यज्ञियासः," "अन्नादाश्च यज्ञियाश्च" ॥ "ऊर्गित्यन्ननाम" तद्धि "ऊर्जयति" बलिष्ठं करोतीत्यर्थः ॥ अथ "वा" "पक्वम्" एतत् "सुप्रवृक्णम्" भवति "इति" ककाररेफसामान्यात् पचेर्वृश्चतेर्वा स्यात् । द्वयोरपि वा तद्धि पक्वं सन्मृदुत्वात् सुच्छेद्यं भवति ॥

"पंचजना मम होत्रं जुषध्वम्" । एतदत्र सन्देहपदमेकमुद्धृत्य प्रदर्शितम् । "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके" मन्यन्ते ॥ "चत्वारो वर्णाः" निषादः पञ्चमः,—इत्यौपमन्यवः" । निपद्य हन्तीति निषादः प्राणिवधजीवनः ॥ अथवा "निषण्णमस्मिन् पापकमिति" निषादः सौधन्वन इत्येके मन्यन्ते । स च रथकारः ।

"रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।
ताँ ऊन्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि" ॥—इति (ऋ० सं० ३, ७, ७, २) ।

तस्य हि भिन्नकालमाधानं श्रूयते,—"वर्षासु रथकारः" । "ऋभूणां त्वा इति रथकारस्य" इति च मन्त्रभेदः,—"सौधन्वना ऋभवः ( ऋ० सं० १, ७, ३०, ४ )"—इति च मन्त्रलिङ्गात् ॥

यथा तु पञ्चजनशब्देन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते तथैव[1] निगमः—

"यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्तृणाद्बर्हणा विपोऽर्यो मानस्य स क्षयः ॥"—इति ( ऋ० सं० ६, ४, ४३, १ ) ।

प्रगाथेन दृष्टा । इयमनुष्टुप् । ऐन्द्री । पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीयशस्त्रस्य प्रतिपदेषा । 'यत्' यदा 'पाञ्चजन्यया विशा' "पञ्चजनीनया विशा" पञ्चजनसमुदायलक्षणया

---

१ 'च विराट्' ॥

सहितैः स्तोतृभिः ऋत्विग्भिः अवर्षति 'इन्द्रे' वर्षार्थिभिः 'घोषाः' स्तुतीः 'असृक्षत' असृज्यन्त । निषादपञ्चमा वर्णा आर्त्ताः सन्तो वर्षाभावे अस्तुवतैव इन्द्रम्—'वर्ष भगवन् !'—इत्येवमर्थयन्तः । अत इदमुक्तम्,—यदा पाञ्चजन्यया विशा सह घोषा ऋत्विग्भिः असृज्यन्तेति ॥ तदा किम् ? इति । तदा उपश्रुत्य स इन्द्रः ताभिः प्रह्लादितचेताः 'अस्तृणात्' अहन् वर्षार्थं मेघान् । 'बर्हणा' परिवृद्धेन वज्रेण, परिवृद्धानि वा मेघजालानि । 'विपः' विपाटयिता मेघानां, मेधावी वा 'अर्य्यः' ईश्वरः कृत्स्नस्य जगतः ॥ कस्मात् पुनरस्तृणात् ? यस्मात् 'मानस्य स क्षयः' मानस्य दर्पस्य बलस्य वीर्य्यस्य सः क्षयः निवासः, तस्मात् अस्तृणात् । अवीर्य्यो हि स्तूयमानः किं कुर्य्यात् परितुष्टोऽपि ? अथवा मानस्य सत्कारस्य पूजायाः स इन्द्रः क्षयो निवासो भाजनमिति मन्वानैः स्तोतृभिः वर्षार्थिभिः सत्कृतः, तान् वर्षप्रदानेन प्रतिसत्कारयिष्यन् अस्तृणात् मेघान् ॥ अपि वा अस्य जगन्निर्माणस्य देवादेः स्थावरान्तस्य स इन्द्रः क्षयो निवास आश्रयो यस्मात् ततो मेघानस्तृणात्—अनावृष्टिद्वारेणास्य जगतः विनाशो मा भूत् कथंनामेत्यभिप्रायेण ॥

"पञ्च पृक्ता सङ्ख्या" । सा हि "स्त्रीपुंनपुंनकेष्वविशिष्टा" एव भवति । तद्यथा—पञ्च स्त्रियः, पञ्च पुरुषाः, पञ्च कुलानि—इति । एवं पञ्चशब्दे स्त्रीपुंनपुंसकेषु विशेषो नास्ति ॥ ३ । ८ । १ ॥

## ( अथ बाहुनामानि )

आयती । च्यवाना । अभीशू । अप्नवाना । विनङ्गृसौ । गभस्ती । कुस्नौ । बाहू । भुरिजौ । क्षिपस्ती । शक्वरी । भरित्रे इति द्वादश बाहुनामानि ॥ २ । ४ ॥

## बाहुनामान्युत्तराणि द्वादश ॥ २ ॥

"बाहुनामान्युत्तराणि द्वादश" । बाह्वोर्नामानि बाहुनामानि उत्तराणि प्रकृतेभ्यो मनुष्यनामभ्यः । मनुष्याणामेव हि भवन्तीति मनुष्यनामभ्य उत्तराणि बाहुनामानि ॥ कियन्ति पुनस्तानि ? द्वादश द्वे च दश च द्वादश १२ ॥ कतमानि पुनस्तानि ? "आयती, च्यवाना, अभीशू"—इत्येवमादीनि । आभिराभवतः कर्मभिरेताविति आयती । च्यावयितारौ कर्मणां च्यवाना । अभीशू अभ्यश्नुवाते कर्माणि । इत्येवमादि योज्यम् ॥ ३ । ८ । २ ॥

बाहू कस्मात् प्रबाधत आभ्यां कर्माणि ॥ ३ ॥

आह—"बाहू कस्मात्" ? उच्यते— "प्रबाधत आभ्यां कर्माणि" प्रकर्षेण बाधते प्रक्षेपयत्याभ्यां कर्माणि ॥ ३ । ८ । ३ ॥

( अथाङ्गुलिनामानि )

अ॒ग्रुव॑ः । अ॒ण्व्य॑ः । व्रि॒शः॑ । क्षि॒प॑ः । श॒र्या॑ः । र॒श॒नाः॑ । धी॒तय॑ः । अ॒थ॒र्य॑ः । वि॒प॑ः । क॒क्ष्या॑ः । अ॒व॒नय॑ः । ह॒रित॑ः । स्वसा॑रः । ज्ञा॒मय॑ः । स॒ना॒भय॑ः । यो॒क्त्राणि॑ । योज॑नानि । धुर॑ः । शाखा॑ः । अ॒भीश॑वः । दीधि॑तयः । गभ॑स्तयः । इति द्वाविंशतिरङ्गुलिनामानि ॥ ५ ॥

अंगुलिनामान्युत्तराणि द्वाविंशतिः ॥ ४ ॥

"अङ्गुलिनामान्युत्तराणि द्वाविंशतिः" । अङ्गुलीनां नामानि अङ्गुलिनामानि' उत्तराणि प्रकृतेभ्यो बाहुनामभ्यः । बाह्वोरेव ह्यङ्गुलयो भवन्तीति बाहुनामभ्य उत्तराणि अङ्गुलिनामानि ॥ कियन्ति पुनस्तानि ? द्वाविंशतिः द्वे च विंशतिश्च द्वाविंशतिः २२॥ कतमानि पुनस्तानि ? "अग्रुवः, अण्व्यः, क्षिपः"—इत्येवमादीनि । बाह्वग्रे अवस्थिता अवन्त्येताः कर्माणीति अग्रुवः । अण्व्यः परिमाणात् एताः । क्षिप्यते आभिः क्षेप्तव्यं द्रव्यमिति क्षिपः । इत्येवमादि ॥ ३ । ८ । ४ ॥

अङ्गुलयः कस्मादग्रगामिन्यो भवन्तीति वाग्रगालिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना[1] भवन्तीति वापि वाभ्यञ्चनादेव स्युः ॥ ५ ॥ ८ ॥

आह—"अङ्गुलयः कस्मात्" ? उच्यते—"अग्रगामिन्यो भवन्ति" अग्रे ह्येताः कर्मसु गच्छन्ति ॥ अथ "वा" "अग्रगालिन्यो भवन्ति" अग्रे ह्येता गलन्ति उदकानि ॥

---

१ 'वाञ्जना' ॥

"अग्रकारिण्यो वा भवन्ति" अग्रे ह्येताः कर्माणि कुर्वन्ति ॥ "अङ्कना भवन्तीति वा" तथाहि,—यो ह्येताभिरभिहन्यतेऽसावङ्कित इव भवति ॥ "अञ्चना भवन्तीति वा" "अपि वा अभ्यञ्चनादेव स्युः" एता हि तंतमर्थमाभिमुख्येनाञ्चन्ति गच्छन्ति । येतु- "अभ्यञ्जनाः"—इत्याभिधीयन्ते, तेषामभ्यज्यत आभिरित्यङ्गुलयः ॥ ३ । ८ । ५ ॥

## तासामेषा भवति—

"तासाम्" अङ्गुलीनाम् "एषा" निर्वाचिका ऋक् "भवति"*—

"दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्रेभ्यो दशयोजनेभ्यः । दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥"

अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि ॥ कक्ष्याः प्रकाशयन्ति कर्माणि ॥ योक्राणि योजनानीति व्याख्यातम् ॥ अभीशवोऽभ्यश्नुवते कर्माणि ॥ "दश धुरो दश युक्ता वहद्भ्यः ।" धूर्धूर्वतेर्वधकर्मणः ॥ १ ॥

दशावनिभ्य इति । "अवनयः" इत्येवमादीनि नद्यादिनामभिः सन्दिह्यन्ते, तदर्थमिदमुदाह्रियते । त्रिष्टुबेषा । अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् । ग्रावस्तुतौ विनियुक्ता ॥ दशभिरवनिभिः ये उपचर्यन्ते ग्रावाणः, सोमाभिषवकर्मणि प्रवृत्ते, ते दश अवनयः,तेभ्यः "दशावनिभ्यः" हे ऋत्विजः । यूयमपि "अर्चत" स्तुतीः प्रोच्चारयतेत्यर्थः । एवमेव दशभिः कक्ष्याभिर्ये उपचर्यन्ते, ते दशकक्ष्याः, तेभ्यः "दशकक्षेभ्यः" अर्चत । दशभिर्योक्रैः ये उपचर्यन्ते, ते दशयोक्राः, तेभ्यः "दशयोक्रेभ्यः" अर्चत । दशभिर्योजनैः ये उपचर्यन्ते, ते दशयोजनाः, तेभ्यः "दशयोजनेभ्यः" अर्चत । दशभिरभीशुभिर्ये उपचर्य्यन्ते, ते दशाभीशवः, तेभ्यः "दशाभिशुभ्यः" अर्चत । "अजरेभ्यः" अजरणधर्मभ्यः अर्चत । "दश धुरः" य एते ग्रावाणः तेभ्यः अर्चत । दशभिर्दशभिरङ्गुलीभिर्य एते युक्ता वहन्ति ग्रावाणः, तेभ्य एभ्यः "दश युक्ता वहद्भ्यः" अर्चत ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम्—। "अवनयोऽङ्गुलयो भवन्ति" ता हि "अवन्ति कर्माणि" रक्षन्ति भक्षयन्ति वा क्षिपयन्तीत्यर्थः । "कक्ष्याः" अप्यङ्गुलय एव, ता हि "प्रकाशयन्ति कर्माणि" प्रकटीकुर्वन्तीत्यर्थः ॥ "योक्राणि"—इत्येतत् पदं "योजनानि इति"

---

* इतोऽग्रे अष्टमखण्डसमाप्तिर्दृश्यते सा 'तासाम्' इत्यतः प्राक् समुचिता ।

अनेन पदेन "व्याख्यातम्" योजनानीत्येतत् निगदसिद्धमेव ॥ "अभीशवः" अपि अङ्गुलय एव, ता हि "अभ्यश्नुवते कर्माणि"व्याप्नुवन्तीत्यर्थः॥अनेकैर्नामभिरङ्गुलय एवोक्ताः अनेकक्रियाशक्त्युपप्रदर्शनाय । एते ग्रावाण एवमनेकक्रियायोगिनीभिरङ्गुलीभिर्गृहीतास्तदर्थमर्चंतेति ॥ "धूः धूर्वतेः वधकर्मणः" ध्वरति धूर्वतीति वधकर्मसु पठितम् ॥ ३ । ९ । १ ॥

**इयमपीतरा धूरेतस्मादेव विहन्ति वहम् ॥ धारयतेर्वा ॥ २ ॥**

"इयमपीतरा धूः"अनडुहादिसम्बन्धिनी । "एतस्मादेव" धातोः वधकर्मणः । सापि 'विहन्ति वहम्" अनडुहोऽश्वस्य वा । "धारयतेर्वा" सा हि धारयत्यश्वमनड्वाहं वा ॥ ३ । ९ । २ ॥

## ( अथ कान्तिकर्माणः )

**वश्मि । उश्मसि । वेति । वेनति । वेसति । वाञ्छति । वष्टि । वनोति । जुषते । हर्यति । आचके । उशिक् । मन्यते । छन्त्सत् । चाकनत् । चकमानः । कनति । कानिषदित्यष्टादश कान्तिकर्माणः ॥ २ । ६ ॥**

**कान्तिकर्माण उत्तरे धातवोऽष्टादश ॥ ३ ॥**

"कान्तिकर्माण उत्तरे धातवोऽष्टादश" । स खल्वयं पुरुषो व्याख्यातः सबाहुः साङ्गुलः, तं खलु काम एव प्रथममाविवेशेति उत्तरे कान्त्यर्था इत्यर्थः । यदपि ह्यकान्तं भवति, तदप्यङ्गुलीभिरेव कान्तं क्रियत इत्यतोऽङ्गुलिनामभ्यः 'उत्तरे कान्तिकर्माणः' समाम्नाताः॥ कियन्तः पुनस्ते ? इति । अष्टादश अष्टौ च दश च अष्टादश १८॥ कतमे पुनस्ते ? इति। "वश्मि, उश्मसि, वेति"—इत्येवमादयः ॥ ३ । ९ । ३ ॥

## ( अथान्ननामानि )

**अन्धः । वाजः । पयः । प्रयः । पृक्षः । पितुः । वयः । सिनम् । अवः । क्षु । धासिः । इरा । इळा । इषम् । ऊर्क् । रसः । स्वधा । अर्कः ।**

क्षद्म । नेमः । सुसम् । नमः । आयुः । सूनृता । ब्रह्म । वर्चः । कीलालम् । यश इत्यष्टाविंशतिरन्ननामानि ॥ २ । ७ ॥

अन्ननामान्युत्तराण्यष्टाविंशतिः ॥ ४ ॥

"अन्ननामान्युत्तराणि अष्टाविंशतिः" । अन्नस्य नामानि अन्ननामानि उत्तराणि प्रकृतेभ्यः कान्तिकर्मभ्यः । अन्नमेव हि कान्तं सर्वभावेभ्यो भवतीति कान्तिकर्मभ्य उत्तराणि अन्ननामानि ॥ कियन्ति पुनस्तानि ? अष्टाविंशतिः अष्टौ च विंशतिश्च अष्टाविंशतिः २८ ॥ कतमानि पुनस्तानि ? "अन्धः, वाजः, पाजः, पयः"—इत्येवमादीनि । अन्ध इत्ययं निर्वक्ष्यति । वाजयितव्यं पूजयितव्यम् एतद् भोजनायोपस्थितं भवतीति वाजः । पीयत इति पाजः । पयः पानादेव ॥ ३ । ९ । ४ ॥

अन्नं कस्मादानतम्भूतेभ्योऽत्तेर्वा ॥ ५ ॥

आह—"अन्नं कस्मात्" उच्यते—"आ" आभिमुख्येन ह्येतत् "नतं" प्रह्वीभूतं भवति भोजनाय भूतानाम् ॥ "अत्तेर्वा" 'अद्यतेऽत्ति च भूतानि, तस्मादन्नं तदुच्यते' इत्युक्तम् ॥ ३ । ९ । ५ ॥

( अथात्तिकर्माणः )

आवयति । भर्वति । बभस्ति । वेति । वेवेष्टि । अविष्यन् । बप्सति । भसथः । बब्धाम् । ह्वरतीति दशात्तिकर्माणः ॥ २ । ८ ॥

अत्तिकर्माण उत्तरे धातवो दश ॥ ६ ॥

"अत्तिकर्माण उत्तरे धातवो दश" । अन्नमेव ह्यद्यत इत्यन्ननामभ्यः उत्तरेऽत्तिकर्माणः समाम्नाताः । कियन्तस्ते ? दश १० ॥ कतमे पुनस्ते ? "आवयति, भर्वति, बभस्ति"—इत्येवमादयः ॥ ३ । ९ । ६ ॥

( अथ बलनामानि )

ओजः । पाजः । शवः । तरः । तवः । त्वक्षः । शर्द्धः । बाधः । नृम्णम् । तविषी । शुष्मम् ।

शुष्णम् । शूषम् । दक्षः । वीळु । च्यौत्नम् । सहः । यहः । वधः । वर्गः । वृजनम् । वृक् । मज्मना । पौंस्यानि । धर्णसिः । द्रविणम् । स्यन्द्रासः । शंबरमित्यष्टाविंशतिर्बलनामानि ॥ २ । ९ ॥

बलनामान्युत्तराण्यष्टाविंशतिः ॥ ७ ॥

"बलनामान्युत्तराण्यष्टाविंशतिः" । बलस्य नामानि बलनामानि । उत्तराणि प्रकृतेभ्योऽत्तिकर्मभ्यः, य एव ह्यदन्ति, त एव बलवन्तो भवन्तीत्यात्तिकर्मभ्य उत्तराणि बलनामानि समाम्नातनि ॥ कियन्ति पुनस्तानि ? अष्टाविंशतिः अष्टौ च विंशतिश्च अष्टाविंशतिः २८ ॥ कतमानि पुनस्तानि ? "ओजः, पाजः, शवः"—इत्येवमादीनि । आजः ओजतेर्वौब्जतेर्वा । इत्येवमादि ॥ ३ । ९ । ७ ॥

बलं कस्माद्बलं भरं भवति बिभर्तेः ॥ ८ ॥

आह—"बलं कस्मात्" ? उच्यते—तद्धि "बलं भरं भवति" भ्रियते ( भ्व० उ० ) हि सः, यो बलिष्ठो भवति ॥ "बिभर्त्तेः" वा ( जु० उ० ) स ह्यन्येषां भर्ता भवति ॥ ३ । ९ । ८ ॥

( अथ धननामानि )

मघम् । रेक्णः । रिक्थम् । वेदः । वरिवः । श्वात्रम् । रत्नम् । रयिः । क्षत्रम् । भगः । मीळ्हम् । गयः । द्युम्नम् । इन्द्रियम् । वसु । रायः । राधः । भोजनम् । तना । नृम्णम् । बन्धुः । मेधा । यशः । ब्रह्म । द्रविणम् । श्रवः । वृत्रम् । वृतमित्यष्टाविंशतिरेव धननामानि ॥२।१०॥

धननामान्युत्तराण्यष्टाविंशतिरेव ॥ ९ ॥

"धननामान्युत्तराण्यष्टाविंशतिरेव"। य एव बलवन्तो भवन्ति त एव धनं प्राप्नुवन्ति इति बलनामभ्यः उत्तराणि धननामानि॥कियन्ति पुनस्तानि ? अष्टाविंशतिरेव १० ॥

---

१ 'ऽवलिष्ठो' ॥

धनानामान्युत्तराण्यष्टाविंशतिः इमान्यष्टाविंशतिरेवेत्येवशब्दः ॥ कतमानि पुनस्तानि ? "मघम्, रेक्णः, रिक्थम्, वेदः"—इत्येवंप्रभृतीनि । रिच्यत इति रेक्णः । अतिरिच्यमानमेतदिहैव तिष्ठति म्रियमाणस्येति रिक्थम् । विद्यते लभ्यते एव इति वेदः । इत्येवमादीनि ॥ ३ । ९ । ९ ॥

धनं कस्माद्धिनोतीति सतः ॥ १० ॥

आह—"धनं कस्मात्" ? उच्यते—"धिनोतीति सतः" शब्दस्य कर्तरि कारके सत इति कारकावधारणम्, धिनोतिस्तर्पणार्थः ॥ ३ । ९ । १० ॥

(अथ गोनामानि)

अघ्न्या । उस्रा । उस्रिया । अही । मही । अदितिः । इळा । जगती । शक्वरीति नव गोनामानि ॥ २ । ११ ॥

गोनामान्युत्तराणि नव ॥ ११ ॥

"गोनामान्युत्तराणि नव" गवां नामानि गोनामानि उत्तराणि प्रकृतेभ्यो धननामभ्यः, गाव एव हि प्रकृष्टं धनमिति धननामभ्य उत्तराणि गोनामानि ॥ कियन्ति पुनस्तानि ? नव ९ ॥ कतमानि पुनस्तानि ? "अघ्न्या, उस्रा, उस्रिया" इत्येवमादीनि ॥ अघ्न्या अहन्तव्या भवति । इत्येवमादि निर्वचनम् ॥ उक्तनिर्वचनो हि गोशब्दः, अतो 'गौः कस्मात्' इति न ब्रवीति ॥ ३ । ९ । ११ ॥

(अथ क्रुध्यतिकर्माणः)

रेळते । हेळते । भामते । हृणीयते । भ्रीणाति । भ्रेषति । दोधति । वनुष्यति । कम्पते । भोजत इति दश क्रुध्यतिकर्माणः ॥ २ । १२ ॥

क्रुध्यतिकर्माण उत्तरे धातवो दश ॥ १२ ॥

"क्रुध्यतिकर्माण उत्तरे धातवो दश" । धनार्थमेव हि गवार्थं च क्रोधो भवतीति गोनामभ्यः उत्तरे क्रुध्यर्थाः समाम्नाताः ॥ कियन्तस्ते ? दश १० ॥ कतमे पुनस्ते ? इति । "रेळते, हेळते"—इत्येवमादयः ॥ ३ । ९ । १२ ॥

(अथ क्रोधनामानि)

हेळः । हरः । हृणिः । त्यजः । भामः । एहः ।

ह्वरः । तपुषी । जूर्णिः । मन्युः । व्यथिरित्येकादश क्रोधनामानि ॥ २ । १३ ॥

क्रोधनामान्युत्तराण्येकादश ॥ १३ ॥

"क्रोधनामान्युत्तराण्येकादश" क्रुध्यर्थसम्बन्धेनैव क्रोधनामान्युत्तराणि॥ कियन्ति पुनस्तानि ? एकादश ११ ॥ कतमानि पुनस्तानि ? "हेळः, ह्वरः, ह्वणिः, त्यजः" इत्येवमादीनि । हे अर इत्यनेनाविष्टो ब्रवीतीति हेळः । नीचैरनेन नरकं प्रति ह्रियते इति ह्वरः । नीचैरनेन ह्रियन्ते नरकं प्रति प्राणिन इति ह्वणिः । त्यजत्यनेनाविष्टो धर्मं जहातीति त्यजः । इत्येवमादि ॥ ३ । ९ । १३ ॥

( अथ गतिकर्माणः )

वर्तते । अयते । लोटते । लोठते । स्यन्दते । कसति । सर्पति । स्यमति । स्रवति । स्रंसते । अवति । श्चोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कण्टति । पिस्यति । बिस्यति । मिस्यति । प्रवते । प्लवते । च्यवते । कवते । गवते । नवते । क्षोदति । नक्षति । सक्षति । म्यक्षति । सचति । ऋच्छति। तुरीयति । चतति । अतति । गाति । इयक्षति । सश्चति । त्सरति । रंहति । यतते । भ्रमति । ध्रजति । रजति । लजति । क्षियति । धमति । मिनाति । ऋण्वति । ऋणोति । स्वरति । सिसर्ति। विषिष्टि । योषिष्टि । रिणाति । रीयते । रेजति । दध्यति । दभ्नोति । युध्यति । धन्वति । अरुषति । आर्यति । सीयते । तकति । दीयति ।

ईषति । फणति । हनति । अर्दति । मर्दति । सस्रुते । नसते । हर्यति । इर्यति । ईते । ईंखते । ज्रयति । श्वात्रति । गन्ति । आगन्नागन्ति । जङ्गन्ति । जिन्वति । जसति । गमति । ध्रति । ध्राति । धयति । वहते । रथर्यति । जेहते । ष्वः- कति । क्षुम्पति । प्साति । वाति । याति । इषति । द्राति । द्रूळति । एजति । जमति । जवति । वञ्चति । अनिति । पवते । हन्ति । सेधति । अगन् । अजगन् । जिगाति । पतति । इन्वति । द्रमति । द्रवति । वाति । हन्तात् । एति । जुगुयात् । अयुथुरिति द्वाविंशशतं गतिकर्माणः ॥ २ । १४ ॥

गतिकर्माण उत्तरे धातवो द्वाविंशशतम् ॥ १४ ॥

"गतिकर्माण उत्तरे धातवो द्वाविंशशतम्" १२२ । क्रुद्धा एव सन्तः सुतरां गच्छन्तीति क्रोधनामभ्यः उत्तरे गतिकर्माणः समाम्नाताः । कतमे पुनस्ते ? 'वर्तते' 'अयते' इत्येवमादयः ॥ ३ । ९ । १४ ॥

( अथ क्षिप्रनामानि )

नु । मक्षु । द्रवत् । ओषम् । जीराः । जूर्णिः । शूर्ताः । शूघनासः । शीभम् । तृषु । तूयम् । तूर्णिः । अजिरम् । भुरण्युः । शु । आशु । प्राशुः । तूतुजिः । तूतुजानः । तुज्यमानासः । अज्राः । साचीवित् । द्युगत् । ताजत् । तरणिः । वातरंहा इति षड्विंशतिः क्षिप्रनामानि ॥ २ । १५ ॥

१ 'द्वाविंशं श' ॥ २ 'द्वाविंशं शतम्' ॥

## क्षिप्रनामान्युत्तराणि षड्विंशतिः ॥ १५ ॥

"क्षिप्रनामान्युत्तराणि षड्विंशतिः" । गतिसम्बन्धादेव क्षिप्रनामानि उत्तराणि समाम्नातानि ॥ कियन्ति पुनस्तानि ? षड्विंशतिः षट् च विंशतिश्च षड्विंशतिः २६ ॥ कतमानि पुनस्तानि ? "नु, मंक्षु, द्रवत्"—इत्येवमादीनि । नुन्न इव हि क्षिप्रं गच्छतीति नु । मां क्षिणोति मां क्षिणोतीति सर्व एव हि क्षिप्रगामिनं मन्यन्ते इति मंक्षु । द्रवत् द्रवतेः । इत्येवमादि ॥ ३ । ९ । १५ ॥

## क्षिप्रं कस्मात् सङ्क्षिप्तो विकर्षः ॥ १६ ॥

आह—"क्षिप्रं कस्मात्" ? उच्यते—"विकर्षः" विकृष्टो विक्षिप्तोऽर्थः "सङ्क्षिप्तः" क्षिप्रम्—इत्युच्यते ॥ ३ । ९ । १६ ॥

### ( अथान्तिकनामानि )

**तळित् । आसात् । अंबरम् । तुर्वशे अस्तमीके । आके । उपाके । अर्वाके । अन्तमानाम् । अवमे । उपम इत्येकादशान्तिकनामानि ॥२।१६॥**

## अन्तिकनामान्युत्तराण्येकादश ॥ १७ ॥

"अन्तिकनामान्युत्तराण्येकादश" । य एव हि क्षिप्रं गच्छति, स एवाभिप्रेतार्थस्य अन्तिके समीपे,—भवतीति क्षिप्रनामभ्यः उत्तराणि अन्तिकनामानि ॥ कियन्ति ? एकादश ११ ॥ कतमानि पुनस्तानि ? "तळित्, आसात्"—इत्येवमादीनि । ताड्यतेऽस्मिन् प्रदेशेऽवस्थित इति तळित् 'तडित्' इत्युच्यते । अन्तिकप्रदेशो य आसन्नः स आसात् । इत्येवमादि योज्यम् ॥ ३ । ९ । १७ ॥

## अन्तिकं कस्मादानीतं भवति ॥ १८ ॥

आह—"अन्तिकं कस्मात्" ? उच्यते—तद्धि "आनीतं भवति" सान्निकृष्टत्वात् ॥ ३ । ९ । १८ ॥

### ( अथ संग्रामनामानि )

**रणः । विवाक् । विखादः । नदनुः । भर । आक्रन्दे । आहवे । आजौ । पृतनाज्यम् । अभीके । समीके । ममसत्यम् । नेमधिता । सङ्काः । समितिः । समनम् । मीळ्हे । पृतनाः ।**

स्पृधः । मृधः । पृत्सु । समत्सु । समर्ये । सम-रणे । समोहे । समिथे । संखे । संगे । संयुगे । संगथे संगमे । वृत्रतूर्ये । पृक्षे । आणौ । शूरसातौ । वाजसातौ । समनीके । खलै । खजै । पौंस्ये । महाधने । वाजे । अज्म । सद्म । संयत् । संवत इति षट्चत्वारिंशत्सङ्ग्रामनामानि ॥ १७ ॥

## सङ्ग्रामनामान्युत्तराणि षट्चत्वारिंशत् ॥ १९ ॥

"संग्रामनामान्युत्तराणि षट्चत्वारिंशत्" । संग्रामस्य नामानि संग्रामनामानि उत्तराणि प्रकृतेभ्योऽन्तिकनामभ्यः, अन्तिकीभूतानामेव हि संग्रामो भवतीत्यन्तिकनामभ्य उत्तराणि संग्रामनामानि ॥ कियन्ति पुनस्तानि ? षट्चत्वारिंशत् ४६ ॥ कतमानि पुनस्तानि ? "रणः, विवाक्, नदनुः"—इत्येवमादीनि । रणन्त्यस्मिन् शूरा इति रणः। विविधा शूराणामत्र वाग् भवतीति विवाक् । नदन्त्यस्मिन् शूरा इति नदनुः। इत्येवमादि योज्यम् ॥ ३ । ९ । १९ ॥

## सङ्ग्रामः कस्मात् सङ्गमनाद्वा सङ्गरणाद्वा सङ्गतौ ग्रामा-विति वा ॥ २० ॥

आह—"संग्रामः कस्मात्" ? उच्यते—"सङ्गमनाद्वा" सङ्गच्छन्ते हि परस्परेण तत्र योधाः ॥ "संगरणाद् वा" संगृणन्ति संशब्दायन्ते शूरा यत्र परस्परेण । "सङ्गतौ ग्रामाविति वा" । ग्राम इति संघात इत्युच्यते । परस्परं जिगीषया समागतौ तत्र भवतः ॥ ३ । ९ । २० ॥

## तत्र खल इत्येतस्य निगमा भवन्ति—

"तत्र" षट्चत्वारिंशत्के संग्रामनामगणे "खल—इत्येतस्य" नाम्नः "निगमाः" सन्दिग्धाः "भवन्ति" ॥ इतरोऽपि धान्यखल इत्युच्यते, संग्रामोऽपि च । तत्रैवं सति अस्यामृचि वक्ष्यमाणायां 'खले न पर्षान्' इति व्यपदेशाद् विभागो लक्ष्यते शस्यखल-संग्रामखलयोः—*

---

* इतोऽग्रे—नवमखण्डसमाप्तिर्दृश्यते वा 'तत्र षट्चत्वारिंशत्के' इत्यतः प्राक् समुचिता ॥

"अभी३दमेकमेको॑ऽस्मि निष्षाळभी द्वा किमु त्रयः करन्ति । खले न पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥" अभिभवामीदमेकमेकोऽस्मि निष्षहमाणः सपत्नानभिभवामि । द्वौ किं मा त्रयः कुर्वंति ॥ एक इता संख्या ॥ द्वौ द्रुततरा संख्या ॥ त्रयस्तीर्णतमा संख्या ॥ चत्वारश्चलिततमा संख्या ॥ अष्टावश्नोतेः ॥ नव न वननीया, नावाप्ता वा ॥ दश दस्ता, दृष्टार्था वा ॥ विंशतिर्द्विर्दशतः ॥ शतं दशदशतः ॥ सहस्रं सहस्वत् ॥ अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् ॥ अर्बुदो मेघो भवति । अरणमम्बु तद्दोऽम्बुदः, अम्बुमद्भातीति वा । अम्बुमद्भवतीति वा । स यथा महान् बहुर्भवति वर्षंस्तदिवार्बुदम् । "खले न पर्षान् प्रतिहन्मि भूरि ।" खल इव पर्षान् प्रतिहन्मि भूरि । खल इति संग्रामनाम खलतेर्वा स्खलतेर्वा । अयमपीतरः खल एतस्मादेव समास्कन्नो भवति । "किं मा निन्दन्ति शत्रवोऽनिन्द्राः ।" य इन्द्रं न विविदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा ॥ १ ॥

"अभी३ दमेक०ऽनिन्द्राः" (ऋ० सं० ८, १, ६, २) । वैकुण्ठस्येन्द्रपुत्रस्येयमार्षम् । जगती । दशरात्रस्य नवमेऽहनि निष्केवल्ये शस्यते ॥ आध्यात्मिको मन्त्रः । "इदं" तावत् जगत् 'एकः' एव अहम् "अभि अस्मि" अभिभवामि" "अभिभूय च भवामि वर्ते । अस्य सर्वस्याहमेकोऽधिपतिरित्यभिप्रायः ॥ कथं पुनरभिभवाम्यहमेतत् ? "एकम् एकः" "निष्षाळ्" "निष्षहमाणः" "सपत्नान्" शत्रून् निश्चयेनाधिकं वाभिभवामीत्यर्थः । सहतिरभिभवार्थश्छन्दसि ॥ कथं पुनरभिभवन् सपत्नानहमस्य जगत आधिपत्ये वर्त्ते ? यावदेकं तावदागतं सन्तमेक एवाभिभवामि सपत्नम्, "अभी द्वा"

१ 'यत एकम्'

'द्वौ' अभ्यागतौ एक एव अभिभवामि ॥ "किम्" "उ" "त्रयः" "करन्ति" त्रयोऽपि युगपदागताः सन्तः एकाकिनोऽपि मम किं कुर्वन्ति ? न किञ्चिदपीत्यभिप्रायः । किंच, "खले न पर्षान्" गाह्यमाने हन्यमाने गैम्यमानेऽन्ने । एकः खलशब्द उपमानम्, उपमासम्बन्धात्, यथा खले खलस्थाने कर्षकेण पर्षान् बहूनपि साञ्चितान् पूलान् अप्रतिबन्धेन क्षुद्यैरन्, एवमहमपि भूरीनपि शत्रूनागतान् क्षणादेव तैरप्रतिबध्यमानः "हन्मि" । तमेवंप्रभावं सन्तं "मा" मां "किं निन्दन्ति शत्रवः ?" नाहं निन्दार्हः, स्तव्योऽहमित्यभिप्रायः । अपि च "अनिन्द्राः" "ये" माम् "इन्द्रं न विदुः" याथार्थ्यतः, ते कथमविज्ञायैव मां निन्दन्ति ? नैतन्न्याय्यमित्यभिप्रायः । "अनिन्द्रा इतर इति वा" वा अथवा अनिन्द्राः सन्तः आत्मना, कथमिन्द्रं सन्तं मां निन्दन्ति ? ननु नामेन्द्रत्वेनैवाहमतिरिक्तस्तेभ्यः । अथ कथमितरे मां निन्दन्ति अनिन्द्राः सन्तो न लज्जन्तीत्यभिप्रायः ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम्—"एक इता संख्या" गता संख्यात्वं प्राप्तेत्यर्थः । द्व्यादिकं वापीयं गता ॥ "द्वौ द्रुततरा संख्या" एकस्याः सकाशात् ॥ "त्रयस्तीर्णतमा संख्या" द्वयोः सकाशात् ॥ प्रसक्तानुप्रसक्तमुच्यते,—"चत्वारश्चलिततमा संख्या" त्रिभ्यः सकाशात् ॥ "अष्टावश्नोतेः" ते हि सप्त संख्या व्याप्य वर्त्तन्ते ॥ "नव" इति या संख्या, सा "न वननीया" न सम्भजनीया भवति । नवसंख्यायुक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते ॥ "दश" इति या संख्या, सा "दस्ता" दशान्तैव हि संख्या भवति ॥ "दृष्टार्था वा" दृष्टार्थैव हि दशानामुपरि पुनः पुनः दृश्यते संख्या । तद्यथा,—एकादशेत्येवमादि । तस्माद् दृष्टार्थदर्शनाद् दशेत्युच्यते ॥ "विंशतिर्द्विर्दशतः" द्विः[३] दश ( द् ) विंशतिरित्युच्यते ॥ "शतं दशदशतः" दशदशतः[४] समुदिताः शतमित्युच्यते ॥ "सहस्रं सहस्वत्" । सह इति बलनाम, तेन तद्वत्, दुर्बलानामपि सहस्रं समुदितं बलवदेव भवति सङ्घातबलीयस्त्वात् ॥ "अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम्" सहस्रं दशकृत्वोऽभ्यस्तमयुतमामिश्रीभूतमयुतमित्युच्यते ॥ अयुतमपि दशकृत्वोऽभ्यस्तं नियुतमित्युच्यते ॥ नियुतमपि दशकृत्वोऽभ्यस्तं प्रयुतमित्युच्यते ॥ अथार्बुदशब्दनिर्विवक्षया "अर्बुदो मेघो भवति" । अम्बुदशब्दं निर्वचन्—अम्बुशब्दं निवक्ति,—"अरणम्" अरणशीलम्—गमनशीलम् "अम्बु" ॥ "तद्दः" तस्य दाता मेघः, सः "अम्बुदः" इत्युच्यते "स यथा" उदकभावमापद्यमानः "महान् बहुर्भवति वर्षन् तदिवार्बुदम्" तदिव वर्षन् तदपि वर्षदिव यद् बहु द्रव्यजातं भवति, तदर्बुदमित्युच्यते ॥

१ 'गम्यमानोऽत्र ॥ ए' ॥ २ 'थाल्म्यतः' ॥ ३ 'पंक्तिविंशति—' इति सूत्रमहाभाष्ये तु 'द्वौ दशतौ विंशतिः' इत्येवमेवोपलभ्यते ॥ ४ 'दशकृत्वोऽभ्यस्ता या दश, ताः' इति मुद्रितमासीत् ।

"खल इति[1] संग्रामनाम खलतेर्वा" भ्रंश्यत्यर्थस्य, भ्रश्यन्ति हि तत्र योधाः ॥ "स्खलतेर्वा" हिंसार्थस्य, हिंस्यन्ते हि तत्र परस्परेण॥ "अयमपीतरः खलः" धान्यखलः "एतस्मादेव" तत्रापि हि भ्रश्यन्ति चूर्ण्यमानानि धान्यानि॥हिंस्यन्ते वा, चूर्ण्यन्त इत्यर्थः। अथवा "समास्कन्नः" असौ "भवति" विप्रकीर्णैः धान्यैः ॥ ३ । १० । १ ॥

## ( अथ व्याप्तिकर्माणः )

इन्वति । नक्षति[3] । आक्षाणः । आनट् । आष्ट । आपानः । अशत् । नशत् । आनुशे । अश्नुत इति दश व्याप्तिकर्माणः ॥ १८ ॥

व्याप्तिकर्माण उत्तरे धातवो दश ॥ २ ॥

"व्याप्तिकर्माण उत्तरे धातवो दश" । संग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति संग्रामनामभ्यः उत्तरे व्याप्तिकर्माणः समाम्नाताः ॥ कियन्तः ? दश १० ॥ कतमे पुनस्ते ? इति । "इन्वति, नक्षे"—इत्येवमादायः ॥ ३ । १० । २ ॥

तत्र द्वे नामनी आक्षाण आश्नुवान आपान आप्नुवानः ॥ ३ ॥

"तत्र" दशके व्याप्तिकर्मधातुगणे एते "द्वे नामनी" भवतः आक्षाणः ३ इति, आपानः ६ इति च । तत्र, "आक्षाण आश्नुवानः" यो हि अश्नोति व्याप्नोति स आक्षाण इत्युच्यते ॥ तथा च य आप्नोति सः "आप्नुवानः" सन् "आपानः" इत्युच्यते ॥ ३ । १० । ३ ॥

## ( अथ वधकर्माणः )

दभ्नोति । श्नथति । ध्वरति । धूर्वति । वृणक्ति । वृश्चति । कृणवति । कृन्तति । श्वसिति । नभते । अर्दयति । स्तृणाति । स्नेहयति । यातयति । स्फुरति । फुलति । निवपन्तु । अवतिरति । वियातः । आतिरत् । तळित् । आखण्डल । दृणाति । रम्णाति । शृणाति । शुम्नाति । तृणेह्ळि ।

१ 'हिंसार्थस्य–' इत्यादि पाठो भवेत् ॥ २ 'भ्रश्यत्यर्थस्य' इत्यादिपाठो भवेत् ॥
३ निघण्टौ तु 'नक्षति' इत्येवमुपलभ्यते ॥

ताड्ळि। नितोशते। निबर्हयति। मिनाति। मिनोति। धमतीति त्रयस्त्रिंशद्वधकर्माणः॥१९॥

वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्॥ ४ ॥

"वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्"।संग्रामे हीतरेतरं व्याप्य ततो घ्नन्तीति व्याप्तिकर्मभ्यः उत्तरे वधकर्माणः समाम्नाताः॥ कियन्तः? त्रयस्त्रिंशत् ३३॥ कतमे पुनस्ते? इति। "दभ्नोति, श्नथति, ध्वरति, धूर्वति"—इत्येवमादयः॥ ३। १०। ४॥

तत्र वियात इत्येतद् वियातयत इति वा वियातयेति वा॥५॥

"तत्र" वधकर्मधातुमध्ये "वियात इत्येतत्" नाम। तत्पुनरेवं निर्वक्तव्यम्,—"वियातयते" नानाप्रकारं यातयते यः शत्रून् स वियातः। अथ "वा" एवमन्यथा स्यात्—"वियातय" शत्रून् इति एवमुच्यते यः स्तोतृभिः, स वियातः॥ ३। १०। ५॥

"आखण्डल प्रहूयसे।" आखण्डयितः खण्डं खण्डयतेः॥६॥

"आखण्डलेति" एतदपि नामैव। निगममपि चात्र दर्शयति,—"आखण्डल प्रहूयसे" आभिमुख्येनावस्थितो यः खण्डयति मेघान्, स आखण्डयिता, तस्य सम्बोधनम्। हे "आखण्डयितः!"।

इरिम्बिठिर्नाम कण्वो मन्त्रदृक्। तस्येयमार्षम्। गायत्री। ऐन्द्री। रात्रिपर्यायेषु मेहारात्रिके[1] पर्याये होतुरियं शस्त्रे विनियुक्ता॥

"शाचिगो शाचिपूजनायं रणाय ते सुतः।
आखण्डल प्रहूयसे॥ (ऋ० सं० ६, १, २४, २)"॥

शाचिगो इति चैकं पदम्। शचीति कर्मनाम। तस्य शच्याख्यस्य कर्मणो येयमिष्टिपशुसोमादिलक्षणा सन्ततिः, सा शाचिः। अथवा स्वार्थिक एव तद्धितः स्यात्। शच्येव शाचिः। तां प्रत्याहूयमानो यो गच्छति, स शाचिगुरिन्द्रः, तस्य सम्बोधनं[2] हे 'शाचिगो'! इति। तथैव[3] शाच्यां य आगतः सन् पूज्यते स शाचिपूजनः, तस्य सम्बोधनं हे 'शाचिपूजन!' हे 'आखण्डल' आखण्डयितः! शत्रूणां मेघानां वा। इयमस्माभिः प्रस्तुता शची यां प्रति ते नित्यमिष्टमागतं[4] यथा[5] च पूज्यसे त्वमागतः सन्। किंच, एतस्यां च शच्यामस्मिन्न कर्मणि 'अयं' 'रणाय' रमणाय 'ते' तव 'सुतः' अभिषुतः सोमो यतोऽस्माभिः त्वं 'प्रहूयसे' प्रकर्षेणादरवद्भिर्हूयसे आहूयसे। स एवमेतज्ज्ञात्वा अस्मदनुग्रहाय अनतीतकालमागन्तुमर्हसीत्यभिप्रायः॥ ३। १०। ६॥

---

१ 'मध्यमरात्रिपर्याये'॥ २ 'संबोधने'॥ ३ 'तथैव शाच्या य आग'॥ ४ 'ष्टमागंतुं य'॥ ५ 'यया च'॥

तळिदित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः ॥ ७ ॥ १० ॥

आखण्डलशब्देऽल्पतरं वक्तव्यम्, बहुतरं तडिच्छब्दे इति क्रमभेदैतो निरुच्यते,— "तळिदित्यन्तिकवधयोः संसृष्टकर्म"।तडिदित्येतच्छब्दरूपमन्तिकाभिधायि वधाभिधायि च इत्येकमेव ह्येतदुभाभ्यामर्थाभ्यां सम्प्रयुज्यते ॥ [ विद्युदपि च तडिदित्युच्यते । सा पुनःकर्त्तरि कारके ] "ताडयतीति सतः" ॥ ३ । १० । ७ ॥

"त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि। या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ।" त्वया वयं सुवर्द्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि । याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो वाऽदानप्रज्ञा वा जम्भय ता अनप्नसः॥अप्न इति रूपनामाप्नोतीति सतः॥ १ ॥

यथा त्वन्तिकनामेदम्, तथेयमृगुदाहरणम्, *—"त्वया वयं सुवृधा ब्रह्मणस्पते०—अनप्नसः"—इति ( ऋ० सं० २, ६, ३०, ४ ) । गृत्समदस्यार्षम् । जगती । प्रवर्ग्ये विनियुक्ता ॥ हे "ब्रह्मणस्पते !" "त्वया" "वयं" 'सुवृधाः' "सुवर्द्धयित्रा" सुष्ठु वर्द्धिताः अनुगृहीताः सन्तः "वसु" "वसूनि" यानि यानि 'स्पार्हा' स्पार्हाणि "स्पृहणीयानि" तानि तानि 'मनुष्या' "मनुष्येभ्यः" तानि अभिभूय "आददीमहि"। किंच, "याश्च नो दूरे तळितः" "या नो दूरे" अध्वन्यवस्थिताः "अरातयः" "याश्चान्तिके" । तडिच्छब्दस्यान्तिकाभिधायित्वम् । दूरे च अन्तिके च या अरातयः । अरातिसेना । "अदानकर्माणः" । रातिर्दानार्थः । अस्माकमभिमतानर्थान् ददतो ये निवारयन्ति ते 'अरातयः' ॥ "अदानप्रज्ञाः वा" न दातव्यमस्माभिरेभ्य इत्येवं येषां प्रज्ञा ते अदानप्रज्ञाः । द्विविधा हि शत्रवः,—दुःखसन्नाश्याः, सुखसन्नाश्याश्च, तत्र ये दुःखसन्नाश्याः ते अदानप्रज्ञाः, ये अदानकर्माणस्ते सुखसन्नाश्याः, ते चोभयेऽपि दूरे चान्तिके चावस्थिता भवन्ति ॥ "ताः" तान् दूरान्तिकावस्थितानुभयानपि "जम्भय" स्तम्भय

---

१ 'दैनैतौ निरुच्येते' ॥ २ अयं कोष्ठकान्तर्गतः पाठो वक्ष्यमाणशाकपूणिमतसाधकः कैश्चिदत्र प्रक्षिप्तो भवेत् ॥ ॥ * इतोग्रे **दशमखण्ड**समाप्तिर्दृश्यते सा' **यथा-त्वन्तिक—**' इत्यतः प्राक् समुचिता ॥

निश्चेष्टान् कुरु त्वं ब्रह्मणस्पते! किंच, "अनप्रसः" अरूपांश्चैतान् कुरु । "अप्र इति रूपनाम" । तद्धि "आप्नोति" आश्रयम् ॥ ३ । ११ । १ ॥

**विद्युत्तळिद्भवतीति शाकपूणिः । सा ह्यवताडयति दूराच्च दृश्यते ॥ अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात्—"दूरे चित् सन्तुळिदिवार्तिरोचसे ।" दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति ॥ २ ॥**

"विद्युत् तळिद्भवतीति शाकपूणिः" आचार्यो मन्यते । किं कारणम्? "सा ह्यवताडयति" अशनिरूपेण । "दूरात्" एव "च" "दृश्यते" । तस्मान्न तस्या अन्तिकनामाभिसम्बन्धोऽस्ति । "अपि त्विदम्" अपरेणोदाहरणेन "अन्तिकनामैवाभिप्रेतं स्यात्"—"दूरे चित् सन्तळिदिवातिरोचसे" । "दूरेऽपि सन्नन्तिक इव" अवस्थितः "दृश्यसे इति" अत्र दूरेऽपि सन्नन्तिक इवेति स्फुटतरमन्तिकाभिधानत्वम्, न तथा पूर्वस्मिन् मन्त्रे—"या नो दूरे तळितः" इति ॥

एवमन्तिकनामत्वेन वा विद्युन्नामत्वेन वा वधनामत्वेन वा प्रकरणोपपदे अवेक्ष्य यथासम्भवं निर्वक्तव्यम् ॥

"यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवातिरोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ (ऋ० सं० १, ६, ३१, २)" ।

एषा जगती । आग्नेयी । कुत्सेन दृष्टा । महाव्रते आग्निमारुते शस्त्रे अभिप्लवस्य च षष्ठेऽहनि आग्निमारुते एव च शस्यते ॥ 'यः' त्वं हे 'अग्ने!' 'विश्वतः' सर्वतः 'सुप्रतीकः' सुदर्शनः शोभनदर्शनः, अपिच 'सदृङ्' यतो यतो दृश्यसे ततस्ततः समानदर्शनः तुल्य एव लक्ष्यसे । अपिच "दूरे" अपि "सन्" अतिभ्राजिष्णुत्वात् 'तळिदिव' तडिदिव अन्तिक इव अवस्थितः 'अतिरोचसे' अतिरोचिष्णुर्दृश्यसे । अपिच यदेतत् 'रात्र्याश्चित्' रात्र्यां अपि 'सन्' ततम् 'अन्धः' अध्यानलक्षणं तमः, यत्र[1] न ध्यातुमपि शक्यते, किमुत द्रष्टुम् । एतदपि 'अति' अतीत्य हे 'देव' सर्वभूतदीपयितः! 'पश्यसि' एव त्वम्, न तेऽस्माकमिव तेनान्धेनापि तमसा प्रतिबध्यते दर्शनम् । तस्य तवैवंगुणयुक्तस्य हे 'अग्ने!' 'वयं' 'सख्ये' सखिभावे परिचरणकर्मणि आ उत्तमादुच्छ्वासाकृताध्यवसायाः सन्तः 'मा' केनचिद् विधिना शत्रुणा वा 'रिषाम' मास्मान् कश्चिद्धिंसीत्[2] त्वदनुध्यानादेवेत्यभिप्रायः ॥ ३ । ११ । २ ॥

---

१ 'यत्र [ न्न ] ध्यातुमपि दु. सं. शक्य' । २. 'किञ्चिद्धिं'. ॥

(अथ वज्रनामानि)

**दिद्युत् । नेमिः । हेतिः । नमः । पविः । सृकः । वृकः । वधः । वज्रः । अर्कः । कुत्सः । कुलिशः । तुजः । तिग्मम् । मेनिः । स्वधितिः । सायकः । परशुरित्यष्टादश वज्रनामानि ॥ २० ॥**

**वज्रनामान्युत्तराण्यष्टादश ॥ ३ ॥**

"वज्रनामान्युत्तराण्यष्टादश" । यो हि हन्यते स वज्रेणैवेति वधकर्मभ्यः उत्तराणि वज्रनामानि ॥ कियन्ति पुनस्तानि ? अष्टादश, अष्टौ च दश च १८ ॥ कतमानि पुनस्तानि ? "दिद्युत्, नेमिः, हेतिः"—इत्येवमादीनि ॥ दिद्युत्, द्यतेर्वा द्योततेर्वा, पुनःपुनरतिशयेन वा द्यति अवखण्डयति, द्योतते दीप्यते वा सा दिद्युत् । अवानामयति खण्डयति प्रहारेणेति नेमिः । हेतिर्हन्तेः । इत्येवमादि ॥ ३ । ११ । ३ ॥

**वज्रः कस्माद् वर्जयतीति सतः ॥ ४ ॥**

आह—"वज्रः कस्मात्" ? उच्यते—"वर्जयति" वियोजयति प्राणैः प्राणिनः ॥ ३ । ११ । ४ ॥

**तत्र कुत्स इत्येतत् कृन्ततेः ॥ ऋषिः कुत्सो भवति कर्त्ता स्तोमानामित्यौपमन्यवः ॥ अत्राप्यस्य वधकर्मैव भवति, तत्सख इन्द्रः शुष्णं जघानेति ॥ ५ ॥**

"तत्र, कुत्स इत्येतत्" सन्देहपदम् । "ऋषिः" अपि कुत्स इत्युच्यते । तत् पुनरेतत् यदा वज्रनाम, तदा "कृन्ततेः" कृत्यतेऽनेनेति "कुत्सः" ॥ यदा पुनरेतदृष्यभिधानं, तदा "कर्त्ता स्तोमानाम् इति" "औपमन्यवः" आचार्य्यो मन्यते । "अत्राप्यस्य वधकर्मैव" अभिप्रेतं स्यात् । अत्रापि एतदृषौ वर्त्तमानमभिधानमस्य ऋषेर्वधकर्मैव वधार्थसंयुक्तमेव स्यात् । किं कारणम् ?, "तत्सख इन्द्रः शुष्णं जघान इति" । तेन स्तूयमानो विवृद्धबलः शुष्णं शोषयितारं रसानामसुरं मेघं वा जघान । मेघो हि शुष्णः, तदुदये हि धान्यानि उदकग्राहनिमित्तेन शुष्यन्ति ॥ ३ । ११ । ५ ॥

(अथैश्वर्यकर्माणः)

**इरज्यति । पत्यते । क्षयति । राजतीति चत्वार ऐश्वर्यकर्माणः ॥ २१ ॥**

ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः ॥ ६ ॥

"ऐश्वर्य्यकर्माण उत्तरे धातवश्चत्वारः" । व्रतामेव हि वज्रेणायुधेनैवैश्वर्य्यं भवतीति वज्रनामभ्यः उत्तरे ऐश्वर्यकर्माणः ॥ कियन्तस्ते ? चत्वारः ४ । कतमे पुनस्ते ? "इरज्यति, पत्यते, क्षियति, राजति"—इति ॥ ३ । ११ । ६ ।

( अथेश्वरनामानि )

राष्ट्री । अर्यः । नियुत्वान् । इनइन इति चत्वारीश्वरनामानि ॥ २२ ॥

अपस्तुङ्मनुष्या आयुत्वं श्रुवोवश्म्यन्धआवयत्योजोसघमन्युरेळतेहेळोवर्ततेनुतळिद्रणइन्वतिदभ्नोतिदिद्युदिरज्यदिराष्ट्रीद्वाविंशतिः ॥

इति निघण्टौ द्वितीयोऽध्यायः ॥ २ ॥

ईश्वरनामान्युत्तराणि चत्वारि ॥ ७ ॥

"ईश्वरनामान्युत्तराणि चत्वारि" । ऐश्वर्य्यसम्बन्धेनैवोच्यन्ते । कतमानि पुनस्तानि "राष्ट्री, अर्य्यः, नियुत्वान्, इनः" ॥ ३ । ११ । ७ ॥

तत्रेन इत्येतत् सनित ऐश्वर्येणेति वा सनितमनेनैश्वर्यमिति वा ॥ ८ ॥ ११ ॥

"तत्र इन इत्येतत्" अभिधानमेवं व्युत्पाद्यम्,—"सानितः" सम्भक्तः "ऐश्वर्येणेति वा" ॥ अथ "वा" "सनितं" सम्भक्तम् "अनेनैश्वर्यमिति" ॥ ३ । ११ । ८ ॥.

"यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्राविवेश॥"

यत्र सुपर्णाः सुपतना आदित्यरश्मयः। 'अमृतस्य भागम्' उदकस्य । अनिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषां भूतानां गोपायितादित्यः 'स

मा धीरः पाकमत्राविवेश' इति ॥ धीरो धीमान् । पाकः पक्तव्यो भवति "विपक्वप्रज्ञ आदित्यः" ॥ इत्युपनिषद्वर्णो भवतीत्यधिदैवतम् ॥

अथाध्यात्मम्—'यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे॥१।१२॥

अधुना मन्त्रमपि व्याचष्टे यस्मिन्नेतदीश्वरनामेन इति, *—"यत्रा सुपर्णा०"—इति ( ऋ० सं० २, ३, १८, १ ) । त्रिष्टुबेषा । वैश्वदेवीये सूक्ते दीर्घतमसा दृष्टा । महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते ॥ वैश्वदेवेषु हि सूक्तेष्वेकदेवता बहुदेवताश्च मन्त्रा भवन्ति, तदप्युपेक्षितव्यम् । "यत्र" यस्मिन् मण्डलेऽवस्थिताः "सुपर्णाः सुपतनाः आदित्यरश्मयः" ते हि शोभनमर्थमुद्दिश्य तमोविघातलक्षणं[1] पतन्ति । अथवा शोभमानाः पतन्तीति सुपर्णाः । ते किं कुर्वन्ति ? उच्यते—"अमृतस्य भागम्" "उदकस्य" अमरणधर्मणः भागं भजनीयमंशमादाय पृथिवीलोकात् तेनान्विताः सन्तः सर्वभूतानि "अभिस्वरन्ति"। 'स्वृ शब्दोपतापयोः ( भू० प० )' अभितपन्तीत्यर्थः।अथवा अभिस्वरन्ति आदित्यमण्डलम् "अभिप्रयन्ति" आभिमुख्येन रसान् गृहीत्वा प्रयान्ति ॥ कथं पुनः प्रयान्ति ? "अनिमेषम्" "अनिमिषन्तः" अनिमिषमाणा इव आदरवन्त इत्यर्थः । "विदथा" "वेदनेन" स्वकर्माधिकारयुक्तेनान्विताः सन्तः इदमेवास्माभिः कर्त्तव्यं रसादानादिलक्षणं कर्मेति अभिस्वरन्ति॥यत्रैतदेवंलक्षणं कर्म कुर्वन्त्यादित्यरश्मयः, तत्र किम् ? इति, उच्यते—"इनो विश्वस्य भुवनस्य गोपाः" । इनः "ईश्वरः" इनो ह्यसावादित्यः, ऐश्वर्येण भवति 'विश्वस्य' भुवनस्य भूतस्य "सर्वेषां भूतानां" गोपाः "गोपायिता" भवति "आदित्यः" मण्डलान्तरपुरुषो यः तत्र मण्डलेऽवस्थितः । "स मा धीरः" "धीमान्" प्रतिविशिष्टया बुद्ध्यान्वितः, बुद्धिरेव हि तस्य शरीरम् । "पाकः पक्तव्यः" पक्तव्यप्रज्ञः "विपक्वप्रज्ञः" सम्यग्दर्शनोऽनुग्राह्यतया "आविवेश" आविशतु ॥

* इतोऽग्रे-**एकादशखण्ड**समाप्तिर्दृश्यते, सा '**अधुनामन्त्रमपि**' इत्यतः प्राक् समुचिता ॥
[1] 'तमोपघातलक्ष' ॥

"इति" शब्दः प्रकरणप्रदर्शनार्थः—एवमयम् "उपनिषद्वर्णः" मन्त्रः "भवतीति"। यद्विज्ञानमुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यविद्या उपनिषदित्युच्यते । उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्णः ॥ "अधिदैवतम्" उक्तम् ॥

"अथाध्यात्मम्" आध्यात्मिकम् उच्यते—अधिदैवतमध्यात्ममित्येतौ शब्दौ व्याख्यातौ। "यत्र" यस्मिन् शरीरे "सुपतनानि इन्द्रियाणि" अवस्थितानि स्वेषु स्वेषु आयतनेषु कृष्णतारादिषु । किं कुर्वन्ति ? उच्यते—"अमृतस्य" अमरणधर्मणः "ज्ञानस्य" "भागं" भजनीयं स्वंस्वं रूपादिलक्षणम् अंशमादाय "विदथा" "वेदनेन" विज्ञानेन युक्तानि "अभिस्वरन्ति" । न हि इन्द्रियाणां चैतन्यमस्तीति । तानि ह्यचेतनानि, चेतनस्य पुरुषस्य कर्त्तुर्विज्ञानमयस्य करणानि, तदधिष्ठात्र्यस्तु देवताश्चेतनाः । तदभिप्रायेणोच्यते,—विदथा वेदनेन विज्ञानेनेति । किं कुर्वन्ति ? अभिस्वरन्ति अभिप्रयन्ति विषयविज्ञानं पुरुषस्यापि भोक्तुः पटूकुर्वन्ति । अथवा अभिस्वरन्ति बुद्धिमाभिमुख्येन विषयविज्ञानमादाय बाह्यप्रत्ययाधानार्थं स्वरन्ति गच्छन्तीत्यर्थः । तत्र किम् ? इति, उच्यते—तत्र योऽवस्थितः "ईश्वरः" इनः, "सर्वेषामिन्द्रियाणां गोपायिता" यः "आत्मा" "स मा धीरः" "धीमान्" "पाकं पाकः पक्तव्यः" पक्तव्यप्रज्ञः असम्यग्दर्शिनम् असर्वज्ञम् "विपक्वप्रज्ञः" सम्यग्दर्शी सर्वज्ञः । सः "अत्र" एव हि देहेऽवस्थितः बुद्ध्यधिदैवतभावेन तैजसाख्यो मम् "आविवेश" आविशत्वनुग्राह्यतया स माम् अत्रैवावस्थितोऽनुगृह्णात्वित्यर्थः । तदनुग्रहाद्ध्यस्य सम्यग्दर्शनं प्रकाशते तदाशास्यत इति । "आत्मगतिमाचष्टे" एवमयमात्मविज्ञानमाचष्टे मन्त्रः ॥

यदुक्तं "पुष्पफले देवताध्यात्मे वा" (१ । २० । १) इति, तदेवमुपपाद्यम्,—तत्रतत्र एक एव ह्यसावादित्यमण्डले चाधिदैवते चाध्यात्मे च बुद्ध्यधिदेवताभूतः स एव तत्रतत्रोपेक्षितव्यः । तस्मादमुष्मादादित्यमण्डलाद् ये रश्मयः प्रसर्पन्ति ते विश्वेदेवा इति, "रश्मयो वै विश्वेदेवाः" इति ह्युक्तम् । अध्यात्मेऽपि ह्याकाशाद् यानीन्द्रियाणि प्रसर्पन्ति, त एव रश्मयः । अधिदैवते त एव विश्वेदेवा इत्युक्तम् । एवं तत्रतत्र योज्यम्, प्रकारमात्रमेवेदमुपप्रदर्शितं भाष्यकारेणेति ॥ ३ । १२ । १ ॥*

---

१ 'करणः' ॥ २ 'यद्वा, ज्ञानमु' —इति तु शोधकभ्रमः ॥ ३ 'मिपत' ॥ ४ 'विषयज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति' इति मुद्रितमासीत् । ५ 'अध्यात्मे च त' * इतोऽग्रे द्वादशखण्डसमाप्तिर्दृश्यते ॥ "इति निरुक्तवृत्तौ तृतीया [ अष्टमा ] ध्यायस्य द्वितीयः पादः ॥ ३, २ ॥" इति चोपलभ्यते ॥

# अथ निघण्टुतृतीयाऽध्यायः ३.

## ( अथ बहुनामानि )

हरिः ॐ ॥ उरु । तुवि । पुरु । भूरि । शश्वत् । विश्वम् । परीणसा । व्यानशिः । शतम् । सहस्रम् । सलिलम् । कुविदिति द्वादश बहुनामानि ॥ १ ॥

**बहुनामान्युत्तराणि द्वादश ॥ १ ॥**

"बहुनामान्युत्तराणि द्वादश" । ईश्वराणामेव बहु [ त्वं ] भवतीत्यतः ईश्वरनामभ्यः उत्तराणि बहुनामानि ॥ कियन्ति ? द्वादश द्वे च दश च १२ ॥ कतमानि पुनस्तानि: "उरु, तुवि, पुरु"—इत्येवमादीनि । उरु विस्तारे, यद्धि बहु भवति, तद् विस्तीर्णं भवति । तुवि वृद्धौ, यद्धि बहु भवति, वृद्धं तद् भवतीति तुवि । प्राप्तं च सर्वतो भवति पूरितमिव हि बहुनाम सर्वं भवतीति पुरु । इत्येवमादियुक्तं योज्यम् ॥ ३ । १३ । १ ॥

**बहु कस्मात् प्रभवतीति सतः ॥ २ ॥**

आह—"बहु कस्मात्"?उच्यते—"प्रभवति" हि एतत् बहुभ्योऽपि दीयमानम् ३।१३।२॥

## ( अथ ह्रस्वनामानि )

ऋहन् । ह्रस्वः । निघृष्वः । मायुकः । प्रतिष्ठा । कृधु । वम्रकः । दभ्रम् । अर्भकः । क्षुल्लकः । अल्प इत्येकादश ह्रस्वनामानि ॥ २ ॥

**ह्रस्वनामान्युत्तराण्येकादश ॥ ३ ॥**

बहुनामसम्बन्धेनैव "ह्रस्वनामानि उत्तराणि" ॥ कियन्ति ? "एकादश" ११ ॥ कतमानि पुनस्तानि ? "कुवित्, रिहेम्, ह्रस्वः"—इत्येवमादीनि । कुत्सितमिव हि

---

१ 'कुवित्' इत्यस्य बहुनामसु द्वादशत्वेन निघण्टौ ( ३ अ. १ खं. ) तृतीयाध्याये समाप्तौ खण्डप्रारम्भसूचककाण्डिकायाम् 'ऊर्बृहन्महद्–' इत्येवम् 'ऋहन्' शब्दत एव खण्डप्रारम्भस्य दृश्यमानत्वेन ह्रस्वनामसु पाठः प्रामादिकः । तत्र तेनैव द्वादशसंख्यापूरणात् । अत्र तत्पाठमन्तरैवैकादशसंख्यापूरणात् । दुर्गाचार्यानुसारेण तु ह्रस्वनामसु द्वादशसंख्या बहुनामसु एकादशसंख्यापत्तिः स्यात् ॥ २ 'ऋहत्' इत्येवमजादितकारान्तपाठो निघण्टौ ( ३ अ. २ खं. ) "बृहन्तं चिदृहते रन्धयानि (ऋ. सं. ७ । ७ । २१ । ३ )" निगमे चोपलभ्यते । तथा च दुर्गाचार्यसंमतपाठोदाहरणनिगमोऽन्वेषणीयः ॥

तद् विज्ञायते अल्पत्वादिति कुवित् । लीढमिव हि तदल्पत्वाद् भवतीति रिहम् ॥ ३ । १३ । ३ ॥

ह्रस्वो ह्रसतेः ॥ ४ ॥

आह—"ह्रस्वः" कस्मात् ? उच्यते—"ह्रसतेः" ह्रसितो हि भवति सः, महतः सकाशात् ॥ ३ । १३ । ४ ॥

( अथ महन्नामानि )

मुहत् । ब्रुध्नः । ऋष्वः । बृहत् । उक्षितः । तुवसः । तुविषः । मुहिषः । अभ्वः । ऋभुक्षाः । उक्षा । विहायाः । युह्वः । ववक्षिथ । विवक्षसे । अंभृणः । माहिनः । गुभीरः । कुकुहः । रभुसः । ब्राधन् । विरप्शी । अद्भुतम् । बंहिष्ठः । बर्हिषदिति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

महन्नामान्युत्तराणि पञ्चविंशतिः ॥ ५ ॥

ह्रस्वसम्बन्धेनैव "महन्नामान्युत्तराणि पञ्चविंशतिः" । ह्रस्वापेक्षयैव हि महत्त्वं भवति ॥ कियन्ति पुनस्तानि ? पञ्चविंशतिः २५ ॥ कतमानि पुनस्तानि ? "महत्, ब्रध्नः, ऋष्वः"—इत्येवमादीनि [ बृहत्त्वात् बृंहणत्वाद्वा ब्रध्नः । ऋष्वः रेषणवान् । इत्यादि योज्यम् ] ॥ ३ । १३ । ५ ॥

महान् कस्मान् मानेनान्याञ्जहातीति शाकपूणिः ॥ मंहनीयो भवतीति वा ॥ ६ ॥

आह—"महान् कस्मात्" ? उच्यते—"मानेन" "अन्यान्" ह्रस्वान् "जहाति" "इति शाकपूणिः" आचार्यो मन्यते ॥ अथ "वा" "मंहनीयः" पूजनीयो "भवतीति" महान् ॥ ३ । १३ । ६ ॥

तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासाद् ॥ ७ ॥

---

१ यद्यप्ययं कोष्ठकान्तर्गतः पाठोऽग्रे 'अथवा महनीयः पूजनीयो भवतीति महान्' इत्युत्तरमुपलभ्यते प्राचीनपुस्तकेषु, तथापि पूर्वोत्तरग्रन्थलेखसंवादादत्रास्माभिः स्थापितः ॥

"तत्र" तस्मिन् महन्नामगणे "ववक्षिथ १४ विवक्षसे १५"—इत्येते आख्याते। ते पुनरुभे वक्तेर्वा वहतेर्वा धातोः "साभ्यासात्" ॥ ३ । १३ । ७ ॥

( अथ गृहनामानि )

गयः । कृदरः । गर्तः । हर्म्यम् । अस्तम् । पुस्त्यम् । दुरोणे । नीळम् । दुर्याः । स्वसराणि । अमा । दमे । कृत्तिः । योनिः । सद्म । शरणम् । वरूथम् । छर्दिः । छदिः । छाया । शर्म । अज्मेति द्वाविंशतिर्गृहनामानि ॥ ४ ॥

गृहनामान्युत्तराणि द्वाविंशतिः ॥ ८ ॥

य एव महान्तस्त एव गृहिणो भवन्तीति महन्नामभ्यः "उत्तराणि गृहनामानि" ॥ कियन्ति पुनस्तानि ? "द्वाविंशतिः" २२ ॥ कतमानि पुनस्तानि ? "गयः, कृदरः, हर्म्यम्"—इत्येवमादीनि । गम्यत इति गयः । कृतदरः कृदरः । हर्म्यं हरणम् । इत्येवमादीनि ॥ ३ । १३ । ८ ॥

गृहाः कस्माद् गृह्णन्तीति सताम् ॥ ९ ॥

आह—"गृहाः कस्मात्" ? उच्यते—ते हि यावदेव किञ्चिदाह्रियते, तत् सर्वमेव "गृह्णन्ति" दुष्पूरत्वात् ॥ ३ । १३ । ९ ॥

( अथ परिचरणकर्माणः )

इरज्यति । विधेम । सपर्यति । नमस्यति । दुवस्यति । ऋध्नोति । ऋणद्धि । ऋच्छति । सपति । विवासतीति दश परिचरणकर्माणः ॥ ५ ॥

परिचरणकर्माण उत्तरे धातवो दश ॥ १० ॥

गृहेष्वेवावस्थिताः परिचर्यन्ते परिचरन्ति चेति गृहनामभ्यः "उत्तरे परिचरणकर्माणः धातवः" समाम्नाताः ॥ कियन्तः पुनस्ते ? "दश" १० ॥ कतमे पुनस्ते ? "इरज्यति, विधेम, सपर्यति"—इत्येवमादयः ॥ ३ । १३ । १० ॥

( अथ सुखनामानि )

शिंबाता । शतरा । शातपन्ता । शर्म । स्यूमकम् ।

शेवृधम् । मयः । सुग्म्यम् । सुदिनम् । शूषम् । शुनम् । शग्मम् । भेषजम् । जलाशम् । स्योनम् । सुम्नम् । शेवम् । शिवम् । शम् । कमिति विंशतिः सुखनामानि ॥ ६ ॥

सुखनामान्युत्तराणि विंशतिः ॥ ११ ॥

परिचर्यमाणानामेव हि सुखं भवतीति परिचरणकर्मभ्यः "उत्तराणि सुखनामानि" ॥ कियन्ति पुनस्तानि ? "विंशतिः" २० ॥ कतमानि पुनस्तानि ? "शिम्बाता, शतरा, शातपन्ता"—इत्येवमादीनि । शिम्बाता, सुखानुसम्बन्धाद्धि हृदमग्नानामिव शरीरं शीतीभवति । शतरा, शीतलतरमिव हि जलादपि सुखम् । शातपन्ता, शान्ततापमेव हि सुखम् । एवमादि ॥ ३ । १३ । ११ ॥

सुखं कस्मात् सुहितं खेभ्यः ॥ १२ ॥

आह—"सुखं कस्मात्" ? उच्यते—"सुहितम्" सुष्ठु हितमेतत् "खेभ्यः" इन्द्रियेभ्यः ॥ ३ । १३ । १२ ॥

खं पुनः खनतेः ॥ १३ ॥

"खं पुनः" इन्द्रियम्, "खनतेः" धातोः । अवदीर्णमेव हि तस्य केर्णाद्यायतनं भवति ॥ ३ । १३ । १३ ॥

( अथ रूपनामानि )

निर्णिक् । वव्रिः । वर्पः । वपुः । अमतिः । अप्सः । प्सुः । अप्नः । पिष्टम् । पेशः । कृशनम् । प्सुरः । अर्जुनम् । ताम्रम् । अरुषम् । शिल्पमिति षोडश रूपनामानि ॥ ७ ॥

रूपनामान्युत्तराणि षोडश ॥ १४ ॥

"रूपनामान्युत्तराणि षोडश" । य एव हि सुखिनस्त एवाहि प्रायो रूपवन्तो भवन्तीति सुखनामभ्यः उत्तराणि रूपनामानि ॥ कियन्ति पुनस्तानि ? षोडश षट् च

---

१ इतः प्राक्—"श्रोत्रादेः" इत्यधिकः पाठः ॥

दश च १६ ॥ कतमानि पुनस्तानि ? "निर्णिक्, वव्रिः, वर्पः"—इत्येवमादीनि । निर्णिक् निर्णिक्तमिव हि तद् भवति तैजसत्वात् । विवृणोत्याश्रयामिति वव्रिः । इत्येवमादि ॥ ३ । १३ । १४ ॥

## रूपं रोचतेः ॥ १५ ॥

आह—"रूपं" कस्मात् ? उच्यते—"रोचतेः" दीप्यमानमिव हि तत् प्रकाशं भवति ॥ ३ । १३ । १५ ॥

## ( अथ प्रशस्यनामानि )

**अस्रेमाः । अनेमाः । अनेद्यः । अनवद्यः । अनभिशस्ताः । उक्थ्यंः । सुनीथः । पाकः । वामः । वयुनमिति दश प्रशस्यनामानि ॥ ८ ॥**

## प्रशस्यनामान्युत्तराणि दश ॥ १६ ॥

"प्रशस्यनामान्युत्तराणि दश" य एव हि रूपवन्तस्त एव प्रशस्या भवन्तीति रूपनामभ्यः उत्तराणि प्रशस्यनामानि ॥ कियन्ति पुनस्तानि ? दश १० ॥ कतमानि पुनस्तानि ? "अस्रेमाः, अनेमाः, अनेद्यः, अनवद्यः"—इत्येवमादीनि ॥ अस्रेमाः, 'स्रिवु गतिशोषणयोः ( दि० प० )' न स्रीव्यति गच्छत्यकीर्त्तिमित्यस्रेमाः, अपाप इत्यर्थः, क्षमारहितो वा । न नीयते दुर्मार्गमित्यनेमाः । अनेद्यः, अनिन्दार्हः । इत्येवमादि योज्यम् ॥ ३ । १३ । १६ ॥

## ( अथ प्रज्ञानामानि )

**केतः । केतुः । चेतः । चित्तम् । क्रतुः । असुः । धीः । शचीं । माया । वयुनम् । अभिख्येत्येकादश प्रज्ञानामानि ॥ ९ ॥**

## प्रज्ञानामान्युत्तराण्येकादश ॥ १७ ॥

"प्रज्ञानामान्युत्तराण्येकादश" य एव हि प्रज्ञावन्तस्त एव हि प्रशस्या भवन्ति, य एव च प्रशस्यास्त एव हि प्रज्ञावन्तो भवन्तीति प्रशस्यनामभ्यः उत्तराणि प्रज्ञानामानि॥ कियन्ति पुनस्तानि ? एकादश एकश्च दश च एकादश ११ ॥ कतमानि पुनस्तानि ? "केतः, केतुः, चेतः"—इत्येवमादीनि ॥ 'कित ज्ञाने ( भू० प० )', तस्य केतः । केतुरपि तस्यैव ॥ ३ । १३ । १७ ॥

## ( अथ सत्यनामानि )

**बट् । श्रत् । सत्रा । अद्धा । इत्था । ऋतमिति षट् सत्यनामानि ॥ १० ॥**

**सत्यनामान्युत्तराणि षट् ॥ १८ ॥**

"सत्यनामान्युत्तराणि षट्" । य एव हि प्रज्ञावन्तः, त एव हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्यः उत्तराणि सत्यनामानि ॥ कियन्ति पुनस्तानि ? षट् ६ ॥ कतमानि पुनस्तानि ? "बट्, श्रत्, सत्रा"—इत्येवमादीनि । बद्धमिव सम्बद्धं सत्यभूतेनार्थेन भवतीति बट् । श्रवणार्हमेतद् भवतीति श्रत् । एवमादि ॥ ३।१३।१८ ॥

**सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा ॥ १९ ॥**

आह—"सत्यं कस्मात्" ? उच्यते—"सत्सु तायते" सत्स्वेव हि तत्तायते विस्तीर्यते । न हि सतां समीपे शक्यमनृतं वक्तुम् ॥ अथ "वा" "सत्प्रभवं भवति" य एव हि सन्तस्त एव हि सत्यं वदन्ति ॥ ३ । १३ । १९ ॥

## ( अथ पश्यतिकर्माणः )

**चिक्यत् । चाकनत् । आचक्ष्म । चष्टे । विचष्टे । विचर्षणिः । विश्वचर्षणिः । अवचाकशदित्यष्टौ पश्यतिकर्माणः ॥ ११ ॥**

**अष्टा उत्तराणि पदानि पश्यतिकर्माण उत्तरे धातवश्चायतिप्रभृतीनि च ॥ नामान्यामिश्राणि ॥ २० ॥**

"अष्टौ" यानि "उत्तराणि पदानि" चिक्यदित्येवमादीनि, ते "पश्यतिकर्माणः" पश्यत्यर्थाः "धातवः" । "चायतिप्रभृतीनि च" तान्येव "नामानि" भवन्ति । तानि पुनरेतानि "आमिश्राणि" संसृष्टानीत्यर्थः । तेषां प्रकरणोपपदाभ्यां विशेषावधारणं भवति । तत्र—कुत्र किञ्चिन्नाम, कुत्र किञ्चिदाख्यातम्,—इत्येवमेके मन्यन्ते ॥

अन्ये पुनः [ किम् ? ]—"चिक्यत् १", "विचर्षणिः ६", "विश्वचर्षणिः ७",—इत्येतानि नामानि, यान्यन्यानि परिशिष्टानि ते धातवः, तानि पुनरेतानि पूर्वाचार्यप्रामाण्यात् आमिश्राणि पठ्यन्ते इत्येवं मन्यन्ते[1] ॥ ३ । १३ । २० ॥

---

१ एतस्य—'मन्यंते' इति समाधिर्मतोऽस्तरम् ।

## ( अथ सर्वपदसमाम्नातम् )

**हिकम् । नुकम् । सुकम् । आहिकम् । आकीम् । नकिः । माकिः । नकीम् । आकृतमिति नवोत्तराणि पदानि सर्वपदसमाम्नाये ॥ १२ ॥**

**नवोत्तराणि पदानि सर्वपदसमाम्नानाय ॥ २१ ॥**

"नव" यानि "उत्तराणि पदानि" "हिकं, नुकं, सुकम्"—इत्येवमादीनि, आकृतमित्येवमन्तानि, "सर्वपदसमाम्नानाय"। कथं नाम सर्वं चतुर्विधं पदप्रकारमेतस्मिन् समाम्नाये समाम्नातं स्यादित्येवमर्थमेष्वेव हि नवसु समाम्नातेषु उभये निपातोपसर्गाः, दर्शिता भवन्ति ॥ ३ । १३ । २१ ॥

## ( अथोपमाः )

**इदमिव । इदं यथा । अग्निनये । चतुरश्चिद्ददमानात् । ब्राह्मणाव्रतचारिणः । वृक्षस्य नु ते पुरुहूत वयाः । जार आभगम् । मेषोभूतो३ऽभियं नयः। तद्रूपः । तद्वर्णः । तद्वत् । तथेत्युपमाः ॥ १३ ॥**

**अथात उपमाः ॥ यदतत्तत्सदृशमिति गार्ग्यः ॥ २२ ॥**

"अथात उपमाः"। अथ इदानीम्, अतः अनन्तरम्, उपमाः भवन्ति । तद्यथा,— "इदमिव" 'इदं यथा,' "अग्निर्नये," "चतुरश्चिद् ददमानात्,' 'ब्राह्मणा व्रतचारिणः,' 'वृक्षस्य नु ते पुरुहूत वयाः', 'जार आ भगम्', 'मेषो भूतोऽभि यन्नयः,' 'तद्रूपः,' तद्वर्णः, तद्वत्, तथा"—एता उपमाः ॥

सामान्यलक्षणमासां ब्रवीति,—"यदतत्तत्सदृशमिति गार्ग्यः" । यत् किञ्चित् अर्थजातम् अतत् भवति, तत् सदृशमिति सरूपं च, यथा—अनग्निः खद्योतः, अग्निसरूपश्च सोऽग्निनोपमीयते—'अग्निरिव खद्योतः' इति एवम् अतत्सरूपेण गुणेन गुणसामान्यात् उपमीयते,—इत्येवं गार्ग्यः, आचार्यो मन्यते ॥ ३ । १३ । २२ ॥

**तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वोपमिमीते ॥ २३ ॥ १३ ॥**

"तदासां कर्म" स आसामुपमानामर्थः, यदप्रसिद्धतरगुणस्य कस्यचित् प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम् ॥ क्वचित् पुनरात्मनाप्युपमानं भवत्येव । तद्यथा—"वायुरात्मोपमगतिः" "तथा करोति सैन्यानि यथा कुर्य्याद् धनञ्जयः" इति । "ज्यायसा वा गुणेन, प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वोपमिमीते" । ज्यायसा वा उत्कृष्टेन गुणेन यो यस्मिन् द्रव्ये उत्कृष्टो गुणः तेन, कनीयांसम् अनुत्कृष्टगुणम् उपमिमीते । तद्यथा,—सिंहो माणवकः । सिंहे शौर्यमुत्कृष्टम्, अनुत्कृष्टं माणवके, माणवकमेतेनोपमिमीते, सिंह इव माणवको विक्रान्त इति । प्रख्याततमेन वा अप्रख्यातम् उपमिमीते । प्रख्याततमश्चन्द्रमाः, अप्रख्यातो माणवकः, तं तेनोपमिमीते—'चन्द्र इव कान्तो माणवकः' इति ॥ ३ । १३ । २३ ॥

## अथापि कनीयसा ज्यायांसम्—

"अथापि" क्वचित् "कनीयसा" गुणेन "ज्यायांसम्" अपि सन्तम् उपमिमीते[1] । तदेतच्छन्दस्येव द्रष्टव्यम्—

"तुनूत्यजेव तस्करा वनुर्गू रशुनाभिर्दशभिरभ्यधीताम् ।"
तनूत्यक् तनूत्यक्ता । वनर्गू वनगामिनौ ॥ अग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते ॥
तस्करस्तत्करो भवति, करोति यत् पापकमिति नैरुक्ताः । तनोतेर्वा स्यात् सन्ततकर्मा भवति । अहोरात्रकर्मा वा । 'रशनाभिर्दशभिरभ्यधीताम्' इति अभ्यधाताम् ॥ज्यायांस्तत्र गुणोऽभिप्रेतः ॥ १ ॥ १४ ॥

आह—किमुदाहरणम् ? उच्यते*—

"तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥ ( ऋ० सं० ७, ५, ३२, ६ )" ।

त्रितस्येयमाप्त्यस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "तनूत्यजा" "तनूत्यक्ता" चौर्याभिप्रायेण हर्त्तव्यं वा मर्त्तव्यं वेति कृताध्यवसायौ तस्करौ "वनर्गू

---

१ 'उपमीयते' ॥ * इतोग्रे त्रयोदशखण्डसमाप्तिर्दृश्यते सा अथापि क्वचित् कनीयसा इत्यतः प्रागुचिता ॥

वनगामिनौ'' मार्गमोषकौ प्रसृतौ, ताभ्यामुपमिमीते[1] । तौ यथा उपमार्थत्वेन सुपुष्टौ भवतः, न तथा ग्रामतस्करौ । तौ यथा कञ्चिदध्वगं बध्नीयातां रज्ज्वा । एवम् एतौ अस्मद्बाहू ''रशनाभिः'' अङ्गुलीभिः ''दशाभिः'' दशसंख्यायोगिनीभिः ''अभ्यधीतां'' प्रतिनिबध्नीतोम्[2] । अभिनिबध्य च अग्निमन्थनयोक्त्रेण अधरारण्युत्तरारणीभूतं त्वां तस्कराविव कञ्चिदध्वगं गाढं बद्ध्वा सुभृशमाकर्षतः ॥ किमर्थं पुनरेवं साध्यसेऽस्माभिः[3] ? हे 'अग्ने !' 'इयं' यस्मात् 'नव्यसी' नवतरा, अन्यैः स्तोतृभिः अदृष्टपूर्वा, युष्मद्गुणैः संस्कृत्य विवक्षिता, 'ते' तव 'मनीषा' स्तुतिः प्रधानसंयुक्ता । स त्वमेतज्ज्ञात्वा एव-मभिमथ्यमानोऽस्माभिः[4] 'युक्ष्व' योजय आत्मानमरणी प्रति । अरणिभ्यां 'शुचयद्भिः' दीप्यमानैः स्वैः 'अङ्गैः' ज्वालाख्यैः ॥ कथं पुनर्योजय ? 'रथं न' यथा कश्चित् कुत-श्चित् आजिगमिषुः शीघ्रं रथं योजयेत्, एवमेवावतरणाय त्वमात्मानमाभ्यामरणीभ्यां-योजय[5] मा नो यज्ञे विघ्नं कार्षीरित्यभिप्रायः । ''तनूत्यक् तनूत्यक्तौ'' इत्यर्थः । वनर्गू वनगामिनौ तत्र हि तयोश्चौर्यं सिध्यति । एवमस्यामृचि ''अग्निमन्थनौ'' ''बाहू'' प्रशस्तौ ''तस्कराभ्याम्'' अप्रशस्ताभ्याम् ''उपमिमीते'' मन्त्रदृक् ॥

''तस्करः'' ''तत्करः'' तस्य एव कर्ता ''भवति'' यतः सः ''यत्तः'' एव ''करोति'' तत् ''पापकम्'' भवति ''इति नैरुक्ताः'' मन्यन्ते ।

वैयाकरणानां पुनरन्यथापि स्यात् । स हि ''सन्ततकर्मा भवति'' रात्रौ ग्रामे मुष्णाति, दिवा अरण्ये ॥

एवम् ''अहोरात्रकर्मा वा'' एतदेव च तत् सन्ततकर्मत्वम् । ''रशनाभिर्दशभिरभ्य-धीताम्'' इत्येव ''तत्र'' बाह्वोः ''ज्यायान्'' ''गुणोऽभिप्रेतः'' तयोः प्रशस्तत्वात्, अप्रशस्तत्वाच्च तस्करयोः कनीयान् ॥ ३ । १४ । १ ॥

**''कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः । को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥''**

**क्व स्विद्रात्रौ भवथः, क्व दिवा, क्वाभिप्राप्तिं कुरुथः, क्व वसथः, को वां शयने 'विधवेव देवरं' ( देवरः कस्माद् द्वितीयो वर उच्यते ) विधवा विधातृका भवति । विध-**

---

१ 'पमीयते' । २ 'ध्नीतः' ॥ ३ 'वमर्थ्यसेऽस्मा' ॥ ४ 'वमर्थ्यमानोऽस्मा' ॥

५ 'योजयमानो यज्ञे विघ्नं माकार्षीरित्यभिप्रायः' इति मुद्रिते शोधकभ्रमः ।

वनाद्वा । विधावनाद्वेति चर्मशिराः ॥ अपि वा धव इति मनुष्यनाम, तद्वियोगाद्विधवा ॥ देवरो दीव्यतिकर्मा ॥ मर्यो मनुष्यो मरणधर्मा ॥

योषा यौतेः ॥ आकुरुते सहस्थाने ॥ १ ॥

द्वितीयमुदाहरणमेतस्मिन्नेवार्थे "अथापि कनीयसा ज्यायांसम् ( अ० ३. खं० १३ )" इति, *—"कुहस्विद् दोषा ( ऋ० सं ७, ८, १८, २ )" इति । कक्षीवतो दुहिता घोषा नाम, तस्या इयमार्षम् । आश्विनी । जगती । प्रातरनुवाकाश्विनयोः शस्यते ॥ हे आश्विनौ ! "कुह स्वित् दोषा" "क्व" नु युवां "रात्रौ भवथः" ? "कुह वस्तोः" "क्व" वा "दिवा" भवथः युवाम् ? येन नापि रात्रौ अस्माकं दर्शनमुपगच्छथः-नापि दिवा । स्विदिति परिदेवनायाम्, ईर्ष्यायां वा ॥ "कुह" "क्व" च "अभिपित्वम्" "अभिप्राप्तिं" स्नानभोजनाद्यर्थं "कुरुथः" ? "कुह" "क्व" वा "ऊषतुः" "वसथः" ? सर्वथा न विज्ञायते वामागमनप्रवृत्तिः ॥ किंच, "को वां शयुत्रा" कतमो युवां यजमानः शयुत्रा "शयने" ? किं "विधवा इव देवरम्" यथा विधवा मृतभर्तृका काचित् स्त्री शयने रहस्यतितरां यत्नवती देवरमुपचरति, स हि परकीयत्वात् नार्या दुराराध्यतरो भवतीति यत्नेनोपचर्यते, न तथा निजो भर्ता । तस्मात् तेनोपमिमीते अश्विनौ । तथा "मर्यं" मनुष्यं देवरम्, सैव मृतभर्तृका "योषा" "आ" "कृणुते" आभिमुख्येन कुरुते । को वाम् एवम् आभिमुख्येन "सधस्थे" "सहस्थाने" समाने सहयोगिनावात्मना कृत्वा परिचचार ? येनेह नोपगतवन्तौ स्थोऽस्मद्दर्शनमिति ॥ एवमस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते, विधवया च यजमानः ॥

अथैकपदनिरुक्तम् ।—"विधवा विधातृका भवति" धाता धारयिता, स तस्याः पोषयिता वा भर्ता, विगत इति विधवा ॥ "विधवनाद्वा" सा हि भर्तृमरणेन विधूता कम्पितेव भवति ॥ "विधावनाद्वा" सा हि भर्तुरभावादनिरुध्यमाना तत्र तत्र विधावत्येव ॥ "इति" एवं 'चर्मशिराः' आचार्यो मन्यते ॥ "अपि वा धव इति मनुष्यनाम, तद्वियोगाद् विधवा" ॥

---

* इतोग्रे चतुर्दशखण्डसमाप्तिर्दृश्यते सा 'द्वितीयमुदाहरणमे' इत्यतः प्रागुचिता ॥

१ "विधवेव देवरम्" इति मन्त्रस्य निरुक्ते ( अ० ३, खं० १५. ) 'अपि वा धव इति मनुष्यनाम, तद्वियोगाद् विधवा । देवरो दीव्यतिकर्मा' इति लेखने क्रीडामात्रासक्तोऽत्र स्वोदरपूर्त्युपायज्ञानविकलो बालः स्तनंधयोऽपत्यमेव गृह्यते देवरशब्दार्थः । तथा च तादृशं बालापत्यं पालयितुमस्मिन्नेव लोके तिष्ठेत्, नैव मृतपतेरनुगमनेन

"देवरः"–इत्येष शब्दो "दीव्यतिकर्मा"दीव्यत्यर्थः । स हि भर्तुर्भ्राता नित्यमेव तया भ्रातृभार्य्यया देवनार्थं व्रियत इति 'देवर' इत्युच्यते ॥

---

लोकान्तरं गच्छेदित्येकोऽर्थः । एवं च **'बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति ।'** इत्यादिस्मृतिषु प्रामाण्यं दर्शयत्ययं शब्दः । मातुश्च स्तनंधयापत्येन सह स्वापमुपमया बोधयति ॥

यद्वा–'येन पत्याऽस्मिँल्लोके क्रीडिता तेनैव सह क्रीडार्थं भर्त्तारमनुगच्छेत्' इत्यर्थ-सूचनेन **"व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् । तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥ तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः । क्रीडते पतिना[1] सार्द्धं यावदिन्द्राश्चतुर्दश॥'** इत्यादिस्मृतिषु प्रामाण्यं दर्शयन् अन्वा-रोहणमेवाह ॥

यद्वा–**'दिविरैश्वर्यवचनः'** इति "**पङ्क्तिविंशति–**" इति सूत्रे भाष्यप्रामाण्येन देवर-शब्द ईश्वरार्थकः । तथा च 'यस्तद्धरणे समर्थः पिता भ्राता पुत्रो वा तमाश्रयेत' इत्यर्था-श्रयणेन **"पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः । हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत्"** इत्यादिस्मृतिषु प्रामाण्यं दर्शितवान् ॥

यद्वा–देवरशब्दस्य परमेश्वरार्थकत्वेन 'परमेश्वरभक्तिपरायणा ब्रह्मचर्येण कालं क्षपयेत्' इत्यर्थं सूचयन् **"आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एक-पत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कौमारब्रह्मचारि-णाम् । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥"** इत्यादिस्मृतिषु प्रामाण्यं सूचयन् ब्रह्मचर्यमुपदिशति ॥ इत्येवं सर्वथाऽनवद्योऽयं मार्गः ॥

**"देवरः कस्मात्? द्वितीयो वर उच्यते"** इति निरुक्ताश्रयणे तु भिन्नैव व्यवस्था-तथाहि **'तद्वियोगात्'** इत्यत्रत्यस्य विशब्दस्यापि व्याख्याऽग्रे **'विजामातुः–असु-समाप्ताज्जामातुः । विजामातेति शश्वद् दाक्षिणात्याः क्रीतापतिमाचक्षते । असुसमाप्त एव वरोभिप्रेतः'** इति ( ६ । ९ । १ ) निरुक्तदर्शितैव प्राह्येति 'तस्य पत्युरसुसमाप्तयोगाद् विधवा कथ्यते । योगश्च वधूवरयोश्चतुर्थीकर्मण्येव भवति न तु ततः प्राक्' तथा चोक्तम्–गृह्यसूत्रेषु–**'तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ॥ ऊर्द्ध्वं त्रिरात्रात्संभवः"** इति । एवं च चतुर्थीकर्मणि क्षतात्वं न ततः प्राक् ॥ तथा च चतुर्थीकर्मणः प्राक् तस्याः पतिगोत्राद्य-

---

१ पतिनेति 'विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्यः' इति वार्तिकेन पूर्वपदभूतस्य नीतपदलोपेन 'स्वर्नीतपतिना' इत्यर्थस्यैवोपक्रमोपसंहाराभ्यामवश्यमङ्गीकरणीयत्वेन न घिसंज्ञा ऽनुपपत्तिरिति व्यक्तं व्याकरणमर्मविदाम् ॥

"मर्यः मनुष्यः" स हि "मरणधर्मा" ॥

---

प्राप्त्याऽनन्यपूर्वात्वमेव निर्णीयते । तस्या विवाहे **'अनन्यपूर्विकाम्'** इत्यनेनापि न विरोधः ॥ तथाच स्मृतयः–

**"विवाहे चैव निर्वृत्ते चतुर्थेऽहऽनि रात्रिषु । एकत्वमागता भर्तुः पिण्डे गोत्रे च सूतके ॥ चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः । भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत् ॥ अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि । न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥ पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता । सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति॥कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा नाम पुनः संस्कारमर्हति ॥ देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥ असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते । सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥"**

**'असत्सु देवरेषु'** इत्यनेन 'देवरसत्त्वेऽन्यस्मै नैव देया' इति वैदिकदेवरशब्दस्याश्रयणेन सूच्यते–

**'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।**
**तामनेन विधानेन निजो विन्देत देवरः ॥'**

विवाहोत्तरं चतुर्थरात्रौ वधूवरयोः संयोगसंभवो विहितः । तदन्यथाऽनुपपत्त्या **त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।'** इति मनूक्तविवाहकालाङ्गीकार एव सर्वस्मृतिगृह्यसंवादः । नत्वष्टवर्षादिविवाहे । अष्टवर्षाशब्द एकशेषाङ्गीकारस्तु राममिश्राणां प्रौढिवादेनैव, एकशेषसूत्रस्थभाष्यविरोधात् । 'त्र्यष्टवर्षः' इत्यत्र त्रिशब्दोच्चारणवैयर्थ्याच्च ॥

निजदेवरासंभवे तु निरुक्तोपदर्शितयोगार्थोऽङ्गीकार्यः–तथा चोक्तं पराशरेण–

**'नष्टे मृते प्रव्रजिते क्लीबे च पतितेऽपतौ।पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते'**

अत्र चासुसमासपदोत्तरपदभूतसुसमासपदलोपेन 'अपतौ' इत्यत्र निरुक्तसंवादाङ्गीकाराय समासाङ्गीकारे विसंज्ञापि निर्बाधैवेति तत्त्वम् ॥ चि-

दाक्षिणात्यमते तु पूर्णप्रतिज्ञातमूल्यालाभे कन्या द्वितीयं पूर्णमूल्यदातारं वरमाश्रयत्येवेति वैश्यादिजातौ वेश्यादिव्यभिचारिणीषु दृश्यत एव तादृशो व्यवहारः । तत्र किं परोक्षं व्यवहारनिपुणानामिति दिक् ॥ एवं च चतस्रो गतयो विधवानां प्रतिभान्ति तत्र पत्यौ प्रेते ब्रह्मचारिणी उत्तमा । ब्रह्मचर्ये स्थातुमसमर्था पतिमनुगच्छन्ती मध्यमा । ब्रह्मचर्यपत्यनुगमनयोरसमर्था पुनर्भूत्वमङ्गीकुर्वती अधमा। पुनर्भूत्वमप्यनङ्गीकुर्वती व्यभिचारजातगर्भादि निःसारयन्ती भ्रूणहत्यादिदोषाधिक्याद् अधमाधमा ॥ एवं चतुर्विधासु विधवागतिषु तिस्रो गतीरुत्तममध्यमाधमा उपदिदेशायं मन्त्रः । न त्वधमाधमगतिं चतुर्थीमिति सर्वमनवद्यम् ॥

"योषा यौतेः" मिश्रणार्थस्य, सा हि मिश्रयत्यात्मानं पुरुषेण साकम् ।: "आ कुरुते[1] सहस्थाने" समानस्थाने आभिमुख्येन आत्मने[2]: कुरुते परिचरणाय ॥ ३ । १५ । १ ॥

**अथ निपाताः पुरस्तादेव व्याख्याताः ॥ यथेति कर्मोपमा—**

**"यथा वातो यथा वनं यथा समुद्र एजति ।"**

**"भ्राजन्तो अग्नयो यथा ।"**

**"आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ।"**

**आत्माऽततेर्वाप्तेर्वापि वाप्त इव स्याद् यावद्व्याप्ति-भूत इति ॥ २ ॥**

"अथ निपाताः" ज्यायसा कनीयान्कनीयसा च ज्यायानुपमीयते इति सामान्यमुक्तम्, अथ अनंतरं ये निपाताः समाम्नाताः । यथा—"अग्निर्नये[3]" इत्येवमादयः, ते स्वार्वसरप्राप्ताः[4] । ते च पुनः "पुरस्तादेव व्याख्याताः" १ । ४ ॥ (सामान्यतः[5], विशेषतः) इदानीमुदाहरणतो व्याख्यायन्ते ॥ तत्र "यथा इति" एषा "कर्मोपमा"। किमुदाहरणम् ?

"यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥" इति (ऋ० सं० ४, ४, २०,४)" ।

सप्तवध्रिरात्रेयोऽपश्यत् एतामनुष्टुभम् । गर्भानुमन्त्रणे विनियुक्ता । यथा वातवनसमुद्राः एजन्ते कम्पन्ते, 'एवा' एवं 'त्वं' हे 'दशमास्य' दशमाससम्भूत ! गर्भ ! एतस्मात् मातुरुदरात् अदुःखयन् एताम्, एजन् चलन् 'अवेहि' अर्वाङ् एहि, 'सह' 'जरायुणा' उल्बेन प्रजायस्व, मा स्थाः त्वमेतस्मिन्नुदरे इत्यभिप्रायः ॥

अपरमुदाहरणम्,—

"अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥" इति (ऋ० सं० १, ४, ७, ३) ।

---

१ 'कृणुते' ॥ २ 'आत्मना' ॥ ३ 'अग्निरिव' इत्येवं पाठो भवेत् । 'अग्निर्नये' इत्यस्य पूर्वमनुदाहृतत्वात् ॥ ४ 'ते' चत्वारोऽवरोऽ ॥ ५ कोष्ठकान्तार्गतपाठस्य स्थाने समाम्नायविशेषत इत्येव पाठो भवेत् अभिमसंवादात् ॥

प्रस्कण्वस्यार्षम् । गायत्री । सौर्योऽनयातिग्राह्यो गृह्यते पृष्ठ्यस्य पष्ठेऽहनि । 'अदृश्रम्', 'अस्य' 'केतवः' रश्मयः 'वि' विविधाः दृश्यन्तेऽस्य भगवतः सूर्य्यस्य प्रज्ञानसतत्त्वाः, ते हि तमोऽपहत्य सर्वप्राणिनां प्रज्ञानमभिव्यञ्जयन्तीति त एव केतव इत्युच्यन्ते लक्षणया ॥ अथवा प्रकाशसतत्त्वास्त इति साक्षादेव केतुशब्दस्तेषु स्यात् । केतुरिति विज्ञानमुच्यते, विज्ञानं च पुनः प्रकाशः, प्रकाशसतत्त्वाश्चैत इति केतव इत्युच्यन्ते । अथवा केतव इव सर्वतो दिशमुच्छ्रिता आदित्यमण्डले, ध्वजो हि केतुरित्युच्यते ॥ के पुनस्ते ? इति, 'रश्मयः' । ते किं कुर्वन्ति य एवमुच्छ्रिताः ? इति, उच्यते—'जनान् अनु' तिष्ठन्ति गच्छन्ति तमांस्यपहन्तुमन्यांश्चोपकारान् कर्त्तुमोपधिपाकादीन् ॥ कथं पुनरनुतिष्ठन्ति ? "भ्राजन्तः" दीप्यमानाः ॥ कथम् ? "अग्नयो यथा" येन प्रकारेण अग्नयो भ्राजन्ते, तथा भ्राजन्तोऽनुतिष्ठन्ति ॥

अपरमुदाहरणम्,—

"यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ (ऋ० सं० ८, ५, १०, १)" इति ॥

आथर्वणो भिषक्, तेनेयमोषधिसूक्ते दृष्टा । अनुष्टुप् ॥ एतेन पुनरुपततो दीक्षित एकविंशतिभिर्दर्भपिञ्जूलीभिश्चाभिरद्भिरभिषिच्यते । उपतापशान्त्यर्थमनेनैव सूक्तेनाभिचयनार्थं क्षेत्रं ग्राम्यारण्याभिरोषधिभिर्व्युप्यते । 'यत्' यदा 'अहम्' 'इमाः' 'ओषधीः' 'हस्ते' 'आदधे' आधाय च सन्निकर्षेऽपि तिष्ठामि रोगिणः—एताः ओषधीः 'वाजयन्' पूजयन् स्तुवन्नित्यर्थः । अथ तदैव तदनन्तरमेव 'पुरा' एव तासामोषधीनां प्रयोगात् अस्मात् सुनीतम् ओषधिवीर्यम्, असह्यं मन्वानः "आत्मा" "यक्ष्मस्य" यक्ष्मणः "नश्यति" रोगस्यापुनरागमनाय ॥ कथं पुनर्नश्यति ? "जीवगृभः यथा" यथा जीवग्राहस्य, पुरैव हननात्, अहतस्यैव जीवो नश्येत् विपदो दैवात्, एवमात्मा रोगस्यापि पुरैवौषधिप्रयोगात् नश्यतीत्यभिप्रायः ॥

निगमप्रसक्तमुच्यते—"आत्मा अततेर्वा" सर्वमेव हि तेनाततं भवति सर्वगतत्वात् ॥ "आप्तेर्वा" सर्वमेव हि तेन व्याप्तं भवति सर्वगतत्वादेव ॥ "अपि वाप्त इव" सङ्घाते ह्यसौ कार्यकारणस्थः "यावद् व्याप्तिभूत इति" अपि चैवमन्यथा "स्यात्" आप्तो व्याप्त इव ह्यसौ कार्यकरणसंघातेन स्यात् । किंच, सर्वगतत्वेऽपि सति यावन्मात्रमेव तस्य कार्यकरणसङ्घातेन व्याप्यते, तावन्मात्रभूत एवासौ लक्ष्यते, तावन्मात्रे हि प्रदेशे तस्य चैतन्यशक्तिरभिव्यज्यते, तप्तायसि दर्भमुष्टिप्रक्षेपात् अग्न्यभिव्यक्तिवदिति ॥ सूक्ष्मेण हि स्थूलं व्याप्यते, न स्थूलेन सूक्ष्मम्, स्थूलं च कार्यकरणम्, सूक्ष्म आत्मा, तस्मादिवशब्दः ॥ ३ । १५ । २ ॥

"अग्निर्न ये भ्राजसा रुक्मवक्षसः ।" अग्निरिव ये मरुतो भ्राजमाना रोचिष्णूरस्का भ्राजस्वन्तो रुक्मवक्षसः॥ ३।१५॥

"इदं यथा (२)", "अग्निर्न ये (३)", "चतुरश्चिद् ददमानात् ( ४ )"—इत्येष समाम्नायानुक्रमः ( निघण्टौ ३ । १३ ) । अग्निर्न य इत्यस्य निघण्टुसूत्रस्य "दुर्मदासो न सुरायाम्" इत्यनेनैव गतार्थतेति मन्यमानाः केचिदत्र निगमं नाधीयते, अपरं पुनः समाम्नायानुक्रमोऽयमिति मन्यमाना एवमेवं निगममधीयते—

"अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतंयते॥(ऋ०सं०८,३,१२,२)"॥

भार्गवस्य त्रसदस्योरियमार्षम्[1] । मारुती । जगती ॥ "अग्निरिव य मरुतः" "भ्राजमानाः" भ्राजिष्णुतया रोचनाः, यथा केनचित् प्रकर्षेण "रुक्मवक्षसः" रोचिष्णूरस्काः, मरुतः । किंच, 'वातासो न स्वयुजः सद्य ऊतयः' वाता इव स्वयुजः । स्वेनस्वेनानुग्रहेणानुरूपेणानुग्राह्याणां स्तोतॄणां योजयितारो ये ते स्वयुजः ॥ किं तेषाम् ? वाता इव ते सद्यऊतयः शीघ्रगतय इत्यर्थः । किंच, 'प्रज्ञातारो न ज्येष्ठाः सुनीतयः' यथा केचित् प्रकर्षेण ज्ञातारः सुनीतयः स्युः प्रशस्तया नीत्यान्विताः, एवमेतेऽपि मरुतः । बलप्रधाना हि ते इत्यतः प्रज्ञावद्भिरुपमीयन्ते । 'सुशर्माणो न सोमा ऋतंयते । सुसुखाः सुबन्धव इव सन्तः सोमाः सोम्याः ऋतंयते ऋतं यज्ञं कर्त्तुमिच्छते यजमानाय । ये एतद्गुणयुक्ता मरुतो भवंति तान् वयम् अभिप्रेतार्थसिद्धये स्तुम इति वाक्यशेषः ॥ ३ । १५ । ३ ॥

"चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ।"
चतुरोऽक्षान् धारयत इति तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद् बिभीयान्न दुरुक्ताय स्पृहयेत् कदाचित्॥ १—३॥

चिदित्ययमपरो निपात उपमार्थीयो भवति, पुरस्तादप्ययमुक्तः ( १ अ० ४ खं० ) "दधिचिदित्युपमार्थे" । इदानीं तु समाम्नायविशेषव्याख्यानावसरप्राप्तस्य च्छान्दसमुदाहरणमस्य प्रदर्श्यते । कतमत् पुनस्तत् ? इति, उच्यते—* "चतुर०—स्पृहयेत् ( ऋ० सं० १, ३, २३, ४ )" । मित्रावरुणार्यम्णतृचे घोरपुत्र एतां गायत्रीमपश्यत्[2] ॥

---

१ 'ण्टुतन्त्रस्य' ॥ २ 'स्यूमरश्मेरि' ॥ * इतोऽग्रे पञ्चदशखण्डसमाप्तिर्दृश्यते तत्र 'चिदित्ययमपरो निपातः' इत्यतः प्रभृति ॥

"चतुरोऽक्षान्" धारयमाणात् "कितवात्" योऽन्यः कितवो "विभीयात्" किमपि पतिष्यते तदन्यद्वा किञ्चिद् येन मामयं जेष्यतीति । निहितेषु न तथा भयं संभवति यथा कितवस्य प्राङ् निधानात् । "एवं" सर्वदा "एव" "दुरुक्तात्" "बिभीयात्" उद्विजेदित्यर्थः । तथातथा वर्तेत यथायथा दुरुक्तं न शृणुयात्, न ब्रूयात् । दुरुक्ते हि वरुणो देवता, तस्मात् "न दुरुक्ताय स्पृहयेत्" "कदाचित्" अपि, किन्तु सूक्तमेव हि शृणुयाद् ब्रूयाच्च, तत्र हि मित्रो देवता अर्यमा च ॥ ३ । १६ । १ ॥

"ब्राह्मणा व्रतचारिणः"—इत्येतदुपरिष्टाद् व्याख्यास्यते—"संवत्सरं शशयाना (ऋ० सं०५,७,३,१)"—इत्येतस्मिन् मन्त्रे, चतुर्दशेऽध्याये (९।६।१।)॥ ३।१६।२ ॥

"वृक्षस्य नु ते पुरुहूत वयाः"—इत्येतत् पुरस्ताद् ( १ । ४ ) व्याख्यातम् ॥३।१६।३॥

## इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः ॥ ४ ॥

"आ इत्याकार उपसर्गः" स पुनरेषः "पुरस्तादेव व्याख्यातः"—"आ इत्यर्वागर्थे" ( १ । ३ ) इति ॥ ३ । १६ । ४ ॥

## अथाप्युपमार्थे दृश्यते—"जार आ भगम् ।" जार इव भगम् ॥ आदित्योऽत्र जार उच्यते—रात्रेर्जरयिता । स एव भासाम् ॥ ५ ॥

"अथापि" अयमाकारः कदाचित् "उपमार्थे" अपि "दृश्यते"। तद्यथा,—"जार आ भगम्" इति ॥ किमुक्तं भवति ? "जार इव भगम्"—इति ॥ आह—कोऽयमत्र जार इत्युच्यते ? "आदित्योऽत्र जारः" इति "उच्यते" अस्मिन् मन्त्रे । स हि "रात्रेर्जरयिता" । तदुदये हि रात्रिर्जीर्यते विपरणमतीत्यर्थः । "स एव भासाम्" चन्द्रादीनां या भासः ता अपि स एव उद्यन् जरयति ॥

"उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त ईष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती॥(ऋ.सं.०७,६,१०,१)"।

अङ्गिरःपुत्रो हविर्धाने एतया जगत्या अग्निमस्तौत् । पितृमेधे विनियुक्ता ॥ हे भगवन्नग्ने ! सर्वगतं सन्तमशेषस्थमात्मानं विशेषात्मलाभाय 'उदीरय' उद्गमयैव । अरणी पितरौ प्रति ॥ अथवा द्यावापृथिव्यौ, पितरौ स्याताम्, "द्यौर्मे पिता माता पृथिवी॥" ( ऋ० सं० २, ३, २०, ३ )" । अहोरात्रे वा, ते प्रति विशेषात्मलाभायोपज्वलय त्वमात्मानम् । कथं च पुनरुदीरय ? 'जार आ भगम्' । जार इव भगम् । जार आदित्यो यथा भगं भजनीयं भौममान्तरिक्षं च रसं स्वं वा ज्योतिरूर्ध्वमीरयति, एवं त्वमात्मानं पितरौ प्रत्युदीरय ॥ कस्मात् पुनरेवमादरवान् ब्रवीमि ? यस्मादेव यजमानः 'इयक्षति'

१ 'अङ्ग' ॥

यष्टुमिच्छति देवान्, 'हर्यतः' हवींषि प्रेप्सतः । न च त्वदृते शक्येज्येयम् । त्वमेव हि प्रतिविशिष्टं यज्ञसाधनं सर्वमन्यत्त्वैव गुणभूतम् । किंच, अयं यजमानः 'हृत्तः' हृदयेन 'इष्यति' इच्छत्यात्मनोऽभिलषितान् कामान् ॥ न च देवाननिष्ट्वा शक्यास्ते प्राप्तुमिति अतो ब्रवीमि—देवयागाय यजमानकामप्राप्तये च उदीरय त्वमात्मानमिति ॥ किंच, अयमपि 'वह्निः' यज्ञवोढा होता 'स्वपस्यते' यजमानाय अभीष्टकामोपपिपादयिषया देवतितर्पयिषया च तृप्तये जगदनुग्रहाय च ऋत्विग्भिः कर्म क्रियमाणमिच्छति 'विवक्ति' च । अतो ब्रवीमि,—आत्मानमभ्युदीरय पितरौ प्रति विशेषात्मलाभाय । किंच, 'मखः' 'तविष्यते' परिसमाप्तिं यास्यति उपक्रमादारभ्यापवर्गात् । अतो ब्रवीमि—उदीरय त्वमात्मानमिति ॥ किंच, अयमप्यध्वर्युः 'असुरः' असुमान् प्रज्ञावान् अतिकुशलः अस्मिन् यज्ञकर्मणि 'वेपते सती' मत्वा वेपते प्रोत्कम्पमानहृदय आस्ते सादरः प्रह्वीभूतः, अपि नामायमुदीरयेदात्मानं ततोऽहमेनयज्ञकर्म तनुयामिति । अतो ब्रवीमि,—उदीरय त्वमात्मानमिति ॥ अपि वा—असुरो ब्रह्मा, स हि त्रयीविद्योपजनितप्रज्ञानः ॥ अपि चोद्गाता असुरः, स हि प्राणेनासुना तद्वान् उद्गीनस्य[1] प्राणवृत्त्यधीनत्वाद् विशेषणम् ॥ अपि वा यज्ञाधिदेवतैवान्वादिश्यतेऽसुर इत्यनेन तस्या आनन्तर्यात् । अपि वा—सर्व एवैते यजमानादयोऽन्वादिश्येरन्, सर्वेषां प्रकृतत्वात् । 'असुरः' असुराः 'वेपते' वेपन्त इति, सर्व एते यजमानादयोऽसुमन्तः मतिभिर्वेपन्ते, प्रोत्कम्पमानहृदया आसते, युष्मदात्मोदीरणप्रतीक्षाः । अपि नाम अयमग्निरुदीरयेदात्मानं ततो नोऽभिप्रेतार्थसाफल्यं स्यादिति । अतो ब्रवीमि,—उदीरय त्वमात्मानमरण्यादीनां पितॄणामन्यतमौ पितरौ प्रति ॥ अपि वैतावेव पितरौ दम्पती पत्नीयजमानौ अग्न्याधेयेन तव जननसम्बन्धेन पितरौ । हे भगवन् ! अग्ने ! तावेतौ यज्ञविपरिणामकाले एतस्मिन् प्रत्युपस्थिते देवयानेन वा पितृयानेन वा मार्गेण उदीरय उद्गमय यथाप्रार्थितफलप्राप्तये । समानमन्यद्वक्षेपं पूर्वेणार्थेन ॥ ३ । १६ । ५ ॥

**तथापि निगमो भवति—"स्वसुर्जारः शृणोतु नः" इति ॥ उषसमस्य स्वसारमाह साहचर्य्याद्वा रसहरणाद्वा ॥ अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्याद् भजतेः ॥ ६ ॥**

यथा आदित्यो जारशब्देनोच्यते, "तथा अपि" अयं "निगमो भवति" । अथान्येऽपि बहवः इत्यपिशब्दः ॥

---

1 'उद्गातृत्वस्य' ॥

"मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।
भ्रातेन्द्रस्य सखा मम ॥ ( ऋ० सं० ४, ८, २१, ५, )" ।

एषा गायत्री । भरद्वाजस्यार्षम् । "एहि वां विमुचो नपादाघृणेः ( ऋ० सं० ४, ८, २१, १ )"—इत्येतस्मिन् पौष्णे सूक्ते । 'मातुः दिधिषुम्' माता रात्रिरादित्यस्य । स हि भगवान् रात्र्या जघने प्रातरुदेति कुमार इव स्त्रियाः प्रसवकाले । तेन ज्ञायते रात्रेरेवासौ जायत इति, अतो रात्रिर्माता । तस्याः स एव धारयिता रोद्धा, तम् मातुर्दिधिषुं धारयितारमहम् 'अब्रवम्' उक्तवानस्मि यन्मेऽभिप्रेतम् । स एव चादित्यः 'मम' 'सखा' समानख्यानः । यथैवाहमेतस्मिन् यज्ञे जगदनुग्राहके कर्मणि अभिप्रवृत्तः, एवमसावपि तापप्रकाशपाकरसादानवर्षादिलक्षणे कर्मणि जगदनुग्राहके अभिप्रवृत्तः, इत्येतस्मादावयोः समानख्यानत्वम् । यतः स य एवं मम समानख्यानः, अतो मध्यमस्य च 'इन्द्रस्य' 'भ्राता' उदकभागहर्त्ता ॥ अथ वा मध्यमस्यैवोदकेन भर्त्तव्यः, तेन ह्यसौ दीप्यते ॥ स पुनः किं करोतु ? यच्च पूर्वमहमब्रवं तच्च साधयतु । साम्प्रतं च यद् ब्रूमः, तच्च 'शृणोतु' 'नः' श्रुत्वा च तदपि साधयत्वित्यभिप्रायः ॥ "स्वसुर्जारः" इति । अस्मिन् मन्त्रे स्वसृशब्देन मन्त्रदृक् "उषसम्" "आह" ॥ केन पुनः सामान्येनेति ? उच्यते—"साहचर्य्याद्वा रसहरणाद्वा" । भ्राता स्वस्रा साकं बाल्ये नित्यमेव चरति, तथा चोषसा साकमादित्य इत्येतत् सामान्यम् । आदित्यो हि पूषा, "अथ यद्रश्मिपोषं पुष्यति, तत् पूषा भवति"—इति हि वक्ष्यति । तस्मात् पौष्णे एतस्मिन् मन्त्रे जारत्वमेतत् आदित्यस्य दर्शितम् । रसहरणाद्वा उषाः स्वसास्यादित्यस्य । भ्रातृस्वस्रोः सहभोजनाभिप्रायं सामान्यम् । "अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात्" अथादित्योऽपि मनुष्यजारः । पारजायिक इत्यपिशब्दः ॥ अयमेवास्मिन् मन्त्रे "उदीरय पितरा जार आ भगम् ( ऋ० सं० ७, ६, १०, १ )"—इत्यभिप्रेतो मन्त्रदृशः, नैरुक्तानां वा स्यात् । "तथा" पुनः सति "स्त्रीभगः" एव "स्यात्" । भगः "भजतेः" सेवनार्थस्य । स हि सेव्यते मैथुनार्थिभिः पुरुषैः । जारो मनुष्यः, स हि परकीयां स्त्रियं भोगेन सार्वाङ्गिकेण निर्दयो भूत्वा जरयति विपरिणामयति, [२]म्लानरूपां करोति, न तथा निजो भर्त्ता । तं च दृष्ट्वा तद्दर्शनेनैवोदीरित एव यथा स्त्रियाः भग उपस्थः, पुरुषशिश्नसंप्रयोगोत्कण्ठतया आर्द्रीभवति, तथैवमरणियोक्रादिहस्तानस्मान् युष्मन्निममन्थिषून् दृष्ट्वोदीरय त्वमात्मानं हे भगवन्ने !—इत्येवं योज्यं जारशब्दे मनुष्यविषये सति॥३।१६।६॥

**मेष इति भूतोपमा—"मेषो भूतो३ भियन्नयः" । मेषो मिषतेः तथा पशुः पश्यतेः ॥ ७ ॥**

---

१ 'ता तस्य स ए' ॥ २ 'ग्लान' ॥

"मेष इति भूतोपमा" मेष इत्येषा भूतशब्देनोपमा । "मेषो भूतो३ भियन्नयः ( ऋ० सं० ५, ७; २४, ५)"—इत्येष निगमः ॥

निगमप्रसक्तमुच्यते,—"मेषो मिषतेः" दर्शनार्थस्य ॥

पर्यायप्रसक्तमुच्यते,—"तथा पशुः पश्यतेः" इति, पश्याति ह्यसौ ॥

"इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् ।
मेषो भूतो३ भि यन्नयः ॥ (ऋ० सं० ५, ७, २४, ५ )" ।

काण्वस्यैव मेध्यातिथेरियमार्षम् । ऐन्द्री । गायत्री । हे 'अद्रिवः' अद्रिवन् ! वज्रिन् ! 'इत्था' अमुना प्रकारेण "मेषो भूतः" । इत्थमनेन शब्देन अमुनेत्येतच्छब्दपर्यायवाचिना अभिगमनप्रकारमेतस्मादेव मन्त्रदृग्दर्शनाद् विज्ञाय अभिनयेन मन्त्रदृग्वर्त्तमानः काण्वो मेधातिथिर्दर्शयति,—हे अद्रिवन् ! एवमन्यकल्पान्तरीणमेव 'मेध्यातिथिं' 'धीवन्तं' कर्मवन्तं वा 'अभियन्' आहूतो याज्ञे कर्मणि आभिमुख्येनाभ्युद्यतैर्महद्भिर्दायैः यन् गच्छन्, आह्वानसमनन्तरमेव आविलम्बमानः 'मेषो भूतः' मेष इव किञ्चिदप्युत्तरमब्रुवन् तं गौरवावगतमित्था अनेन प्रकारेण 'अयः' त्वम् आप्तवानसि । न च तदस्माकमप्रत्यक्षम् । एतस्मादेव मन्त्रदर्शनादखिलं तद् विजानीमो वयं यतोऽतो ब्रूमः । अपवृत्ते तस्मिन् काण्वे मेध्यातिथौ सहान्यमन्वन्तरीणैराधिकारिभिरिदानीमस्य मनोरन्तरे मेधातिथिप्रापकेण कर्मणा मेधातिथिपदम्, तदहं प्राप्तवान् । सोऽहं ब्रुवे,—याः ताः काण्वमेधातिथिद्वारेण स्तुतयः नित्याः प्रादुर्भवन्ति । एतासां प्रत्नत्वमपि वर्त्तते । स त्वमेताः शुश्रूषुः, हवींषि वास्मत्प्रदत्तानि प्रतिजिघृक्षुः, पूर्वकाण्वमेधातिथिवदस्मानप्यभ्येहि, किमर्थं वा नाभ्येषीत्यभिप्रायः ॥ ३ । १६ । ७ ॥

**अग्निरिति रूपोपमा—"हिरण्यरूपः स हिरण्यसन्दृगपान्नपात्सेदु हिरण्यवर्णः" । हिरण्यवर्णस्येवास्य रूपम् ॥८॥**

"अग्निरिति" एषा "रूपोपमा" । "हिरण्यरूपो हिरण्यसंदृक्" इति ॥

"हिरण्यरूपः स हिरण्यसंदृगपांनपात्सेदु हिरण्यवर्णः ।
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥ ( ऋ० सं० २, ७, २३, ५, )" ।

गृत्समदस्येयमार्षम् । त्रिष्टुप् । अपान्नपाद्देवता । कुम्भेष्टकोपाधानेऽग्निचयने विनियुक्ता ॥ 'हिरण्यरूपः' हिरण्यसमानरूपः । अपि च, 'सः' 'अपान्नपात्' मध्यस्थानो वैद्युतोऽग्निरादित्यस्य पुत्रोऽपान्नपात्, प्रावृट्काले घर्मार्त्तानां प्रजानामन्नार्थिनीनां च 'हिरण्यसन्दृक्' हिरण्यमिव सन्दृश्यमानः मनःप्रीतिजनकः ॥ अपि च स एव 'हिरण्यवर्णः' हिरण्यमिव

वरणीयः प्रार्थनीयो भूतानाम् ॥ थ एवंगुणयुक्तोऽपान्नपात्, स किं करोतु ? इति- 'हिरण्ययात्' तेजोमयात् 'योनेः' आदित्यात् विनिर्गत्य 'परिनिषद्य' सर्वतो निषद्य मध्यस्थाने अभ्रजालेनान्तरिक्षलोकं व्याप्य [ 'हिरण्यदाः'--इत्येकं पदं विसर्जनीयान्तम् ] 'हिरण्यदाः' हिरण्यदाता । सोऽपान्नपात् परिपद्य 'ददाति' ददतु 'अन्नम्' अन्नहेतूदकम् 'अस्मै' यजमानाय इति । "समुद्रादूर्मिर्मधुमाँ उदारत् ( ऋ० सं० ३, ८, १०, १ )"–इत्यादित्यमुक्तं मन्यन्ते, इत्येतस्माद् दर्शनादपां पुत्र आदित्यः । "आदृतो अग्निर्मभरद् विवस्वतः" ( ऋ० सं० ४, ५, १०, ४ )"–इत्यतश्चादित्यस्यापि वैद्युतोऽग्निः पुत्रः, इत्येवमसावपान्नपात् अपां नप्ता ॥ ३ । १६ । ८ ॥　इत्यर्थे खण्ड्

**था इति च–"तं प्रत्नथा पूर्वथा विश्वथेमथा" । प्रत्न इव पूर्व इव विश्व इवेम इवेति अयमेततरोऽमुष्मात् । असावस्ततरोऽस्मात् । 'अमुथा' यथासाविति व्याख्यातम् ॥ ९ ॥**

'था'--इत्ययं चोपमाशब्दः ॥ आह–किमुदाहरणम् ? उच्यते–

"तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।

प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्द्धसे ( ऋ० सं० ४, २, २३, १ )" । इति

अवत्सारः पञ्चदशर्चं सूक्तमपश्यद् वैश्वदेवम्, तस्मिन् वैश्वदेवे सूक्ते प्रथमामेवैतां जगतीमपश्यत् ॥ वैश्वदेवेषु च सूक्तेषु एकदेवता अपि मन्त्रा भवन्त्येव । बाहूवृच्ये वाजपेये सप्तदशे शस्त्रे विनियुक्तेयम् । चरकाध्वर्यवः पुनरनया मन्थिनं गृह्णन्ति । तेषां पुनः श्रुतिः,–"प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनौ, असावादित्यः शुक्रः, चन्द्रमा मन्थी" इत्येवं चन्द्रदैवतोऽयं मन्त्रः।अपि वा"तस्मै सूर्याय हविराजुहोत"— इति हवनमन्त्रे सूर्यश्रवणात् सूर्यदेवतोऽयम् ॥ शौनकस्तु दाशतये समाम्नाये मन्त्रदेवता अनुक्रममाणः "को नु वां मित्रावरुणौ ( ऋ० सं० ५, ३, ९ सू० )"–इत्यत आरभ्य वैश्वदेवान्येकादशसूक्तान्यवोचत् । तेषां "तं प्रत्नथा ( ऋ०सं०५, ३, १२,सू० )" इत्येनचतुर्थं सूक्तम् । तेन तन्मत्या वैश्वदेव एष मन्त्रः स्यात् । वाजसनेयिनां पुनरनया शुक्रो गृह्यते । स च सा प्रथमा संस्कृतिरित्यनेनैन्द्रेण हूयेत, तेन तेषामप्ययमैन्द्र एव । चारके पुनराध्वर्यवे श्रुतिः शुक्रामन्थिनोः, तस्मादेतावन्यदेवतौ गृह्येते–'अथेन्द्राय हूयेते' इति ॥ तेन ज्ञायते–यद्यपि हवनमन्त्र ऐन्द्रो मन्थिनः, तथापि ग्रहणमन्त्रो नैन्द्र इति । स एव सर्वथाप्येवं दुरवधारदेवतो मन्त्रः, अनिरुक्तदेवतालिङ्गत्वात् ॥ शण्डामर्कस्त्वसुरपु-

१ 'क्तोऽय' ॥　　२ 'सुतमाजुहो' ॥

शौक्तो: सम्मोहनार्थमनेनानिरुक्तदेवतालिङ्गेन मन्त्रेणान्यतरः शुक्रामन्थिनोर्गृह्यते। "शण्डामर्कौ वा असुराणां पुरोहितावास्ताम्"—इत्युपक्रम्य "तावेतौ शुक्रामन्थिनावावृणेथाम्" इत्युक्त्वा "तावपनुद्यात्मेन्द्रायाजुहवुः"—इत्युक्तम्। तस्मात्तावनेनानिरुक्तदेवतालिङ्गेन मन्त्रेण सम्मोह्येते। सौम्यो वा स्यादयम्, सोमो ह्युच्यते मन्थिपात्रेण शुक्रपात्रेण गृह्यमाणः, गृहीतो वा सप्तदशशस्त्रशंसनाभिप्रायेण। हे भगवन्! सोम! तमिन्द्रं वा वैश्वदेवं गणं वा 'ज्येष्ठराजं' ज्येष्ठदीप्तिम्। अथ वा ज्येष्ठ: श्रेष्ठः सर्वेषां देवानामिन्द्रः, स यस्य राजा, सोऽयं ज्येष्ठराट् वैश्वदेवगणः, तं ज्येष्ठराजम्। बर्हिष्याहूतो ऋत्विग्भिः यः सीदति, स बर्हिषत् तं 'बर्हिषदम्'। स्वरिव यो दृश्यते, सः स्वर्दृक्, तं 'स्वर्दृशम्' सूर्यसमानदर्शनमित्यभिप्रायः। 'आशुं' शीघ्रम्। 'जयन्तं' जेतव्यानसुरादीन्। तमेवङ्गुणसंयुक्तमिन्द्रं वैश्वदेवं सगणं हे सोम! 'यासु' क्रियासु 'अनुवर्द्धसे' पुनःपुनः संस्क्रियसे। स त्वं क्रियासु तासु तथावस्थितस्त्वं 'गिरा' स्तुत्या सहितः त्वं 'प्रतीचीनं' यज्ञाभिमुखम् इन्द्रं वैश्वदेवं वा गणम् अवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मै यजमानाय 'वृजनं' धनं 'दोह्से' धोक्षि प्रक्षारयसि। कथं पुनः धोक्षि इन्द्रं वैश्वदेवं वा गणम्? 'प्रत्नथा' चिरन्तना इव। ये महर्षयो भृग्वादयः, तेषां यथा दुग्धवानसि, तथा अस्माकमपि धोक्षि। अपि च 'विश्वथा' ऋषिपुत्रकाणामृषीणां च सर्वेषां यथा दुग्धवानसि, तथास्माकमपि धोक्षि। अपि च 'इमथा' यथा वर्त्तमानकालीनानां यजमानानां धोक्षि, तथैवास्माकमपीति। एवमेष यथाभिमतदेवतं योज्यः॥

इमथेत्येतस्मात् प्रसक्तमुच्यते,—"अयम्" इत्यस्य शब्दस्य का व्युत्पत्तिरिति? उच्यते—"एततरः" हि आगततर आसन्नतरः "अमुष्मात्" दूरस्थात् भवति, सोऽयमित्युच्यते॥

"असावित्यस्य का व्युत्पत्तिरिति! उच्यते,— "असौ अस्ततरः" अस्मात् क्षिततर इव विप्रकृष्टत्वाद् भवति। आह—कुतः क्षिततरः? उच्यते—"अस्मात्" एततरात्॥

असावित्येतस्मात् प्रसक्तमुच्यते,—"अमुथा, यथा असौ इति व्याख्यातम्" 'अमुथा' इत्येतद् यथासौ इत्यनेन व्याख्यातम्। य एवार्थो यथाऽसावित्यनेन शब्देनोक्तो भवति, स एवार्थः अमुथेत्यनेनाप्युक्तो भवति॥ ३। १६। ९॥

**वदिति सिद्धोपमा—ब्राह्मणवद्, वृषलवत्। ब्राह्मणा इव वृषला इवेति॥**

**वृषलो वृषशीलो भवति वृषाशीलो वा॥ १०॥ १६॥**

"वदिति" एषा "सिद्धोपमा" सिद्धैवैषोपमा लोके । आह—कथं कृत्वा ? उच्यते— "ब्राह्मणवत्, वृषलवत्" । ब्राह्मणवदधीते, वृषलवच्चाक्रोशतीति ॥ ३ । १६।१० ॥*

"प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥"

प्रियमेधः, प्रिया अस्य मेधा । यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् ॥

प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रम् ॥

अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे ॥

अङ्गारेष्वङ्गिराः । अङ्गारा अङ्कनाः ( अञ्चनाः ) ॥

अत्रैव तृतीयमृच्छतेत्यूचुस्तस्मादत्रिर्न त्रय इति ॥

विखननाद्वैखानसः ॥

भरणाद्भारद्वाजः ॥

विरूपो नानारूपः ॥

महिव्रतो महाव्रत इति ॥ १ ॥ १७ ॥

इति तृतीयाध्यायस्य तृतीयः पादः ॥ ३, ३ ॥

छान्दसमुदाहरणं ब्रवीति, "प्रियमेधवत्"—इति । एषा प्रस्कण्वस्यार्षम् । अनुष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते ॥ हे "जातवेदः !" "महिव्रत" ! महाव्रत ! महाकर्मन् ! महद्ध्यस्य भगवतोऽग्नेर्जातवेदसः कर्म, हविर्वहणादिलक्षणम्, तेनैवमामन्त्र्यते महिव्रत ! इति । "यथैतेषामृषीणां" प्रियमेधादीनां श्रुतवानसि पूर्वमाह्वानम्, शृणोषि वा, "एवं" ममापि "प्रस्कण्वस्य" "शृणु" आ—"ह्वानम्" इत्याशीः ॥ एष समस्तार्थः ॥

अथैकपदनिरुक्तम् । "प्रियमेधः, प्रिया अस्य मेधाः" यज्ञाः इत्यर्थः । यष्टुमिति वाक्यशेषः ॥

---

* अत्रैव षोडशखण्ड समाप्तिर्द्रष्टव्या ॥

"प्रस्कण्वः, कण्वस्य पुत्रः" प्रपदस्य तद्धितार्थत्वं निराह, "कण्वप्रभवः" कण्वस्यापत्यमित्यर्थः । "यथा" प्रगतमग्रं "प्राग्रम्" इत्युच्यते, गतशब्दलोपं कृत्वा, एवमिहापि कण्वप्रभवः इति वक्तव्ये भवशब्दलोपं कृत्वा व्यत्ययेन च प्रस्कण्व इत्युक्तम् ॥

"भृगुः, भृज्यमानो न देहे" प्रजापतिना किल शुक्रमात्मीयमादाय अग्नौ हुतम्, ततः "आर्चिषि" ज्वालायां "भृगुः" नाम महर्षिः "सम्बभूव" ॥

व्यपगतेऽर्चिषि यः "अङ्गारेषु" सम्बभूव सः "अङ्गिराः" नाम अभवत् ॥

विग्रहप्रसक्तमुच्यते,–"अङ्गारा अङ्कनाः" ते हि यत्र निधीयन्ते तदङ्कितं भवति ॥

तस्मिन्नुत्पन्ने द्वितीये "अत्रैव तृतीयमृच्छत"–"इत्यूचुः" ये पूर्वोत्पन्नाः ते । "तस्मात्" अत्रैव तृतीय इत्येतस्मादनुव्याहारात् "अत्रिः" अभवत् ॥ अथवैवमन्यथा स्यात्,– अत्रिः प्रतिषेधार्थोऽत्राकारः । कथम् ? "न त्रयः" एवात्र, किन्तर्हि ? । खन्यतामेतदग्निस्थानं चतुर्थोऽप्यत्र भविष्यतीत्येवमनुव्याहारादत्रिरभवत् ॥

व्युदुह्याग्निं तस्मिन्नग्निस्थाने खाते य उत्पन्नः सः "विखननाद् वैखानसः" एव नाम्ना अभूत्, "बभूव अर्चिःषु, अङ्गारेषु, अत्रैव तृतीयम् । विखननाद् वैखानसः" इति अनयैवानुपूर्व्येतानि निर्वचनान्युपपादयितुं शक्यन्ते, तस्मान्मन्त्रपाठविपर्यासेनैतानि निरुक्तानि ॥

"विरूपो नानारूपः" इति ऋज्वेव ॥

व्रतमिति कर्मनाम । "महिव्रतो महाव्रतः" "इति" अर्थः ॥ ३।१७।१ ॥ * ॥

## अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते ॥ १ ॥

"अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते" । उपमाधिकारो वर्त्तते । 'यदतत् तत्सदृशमिति'–एतदुपक्रान्तम् । तत्र शब्दवत्यश्चोपमा भवन्ति, लुप्तोपमाशब्दाश्च । तत्र "अग्निर्न ये" इत्येवमादिभिः शब्दैरुपमित्सितानामर्थानां समानरूपैरर्थैरुपमानं क्रियत इत्येतदनुक्रान्तम् ॥ अथ इदानीं येषु पदेषु लुप्यन्ते उपमाशब्दा इवादयः, तान्यवसरप्राप्तानि व्याख्यास्यामः, तानि पुनरिमानि अर्थोपमानीत्येवमाचक्षते आचार्याः । निरूढा हि क्रियते तेषु संज्ञेत्यभिप्रायः । तानि च पुनरसमाम्नातान्येव निघण्टुसमाम्नाये, तेषु हि वक्तुरभिप्रायगता एत एवोपमाशब्दा अर्थत उपमीयन्ते ( लिङ्ग्यन्ते ) इत्यर्थोपमा इत्युच्यन्ते ॥ ३ । १८ । १ ॥

---

१ 'प्रशब्दस्य' ॥ * अत्रैव सप्तदशखण्डसमाप्तिर्द्रष्टव्या ॥ "इति निरुक्तवृत्तौ तृतीया-( अष्टमा )ऽध्यायस्य तृतीयः पादः ॥ ३, ३, ॥" इति तूपलभ्यते ॥ २ 'सेतानि' ॥

## १सिंहो व्याघ्र इति पूजायाम् ॥ २ ॥

तान्येतानि भाष्यस्य विस्तरविषयत्वादसमाम्नातान्यपि सन्ति, अवसरप्राप्तानि प्रदर्श्यन्ते । तद्यथा,– "सिंहो व्याघ्र इति पूजायाम्" । यो हि पूज्यो भवति स उच्यते–'सिंहो देवदत्तः' इति । अत्र न सिंह एव देवदत्तः । किं तर्हि ? सिंहगुणस्तत्र कश्चिदस्ति शौर्य्यादिः, अतस्तदभिप्रायाभिधानीयं वाक्यं कृत्वोपमाशब्दानामिवादीनामन्यतममनुच्चारयन्नेवं ब्रवीति 'सिंहो देवदत्तः' इति । यत्तदनुच्चारणमुपमाशब्दस्य स एव लोप इत्युच्यते ॥ ३ । १८ । २ ॥

## श्वा काक इति कुत्सायाम् ॥ ३ ॥

"श्वा काक इति कुत्सायाम्" । यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति, स एवमुच्यते– 'श्वा अयम्' इति । अत्रापि श्वेवायामिति इव–शब्दस्य लोपो द्रष्टव्यः ॥

धाष्टर्यादिदोषैसमन्वयेन यः कुत्स्यते, सः 'काकोऽयम्' इत्युच्यते ॥३।१८।३॥

## काक इति शब्दानुकृतिः ॥ ४ ॥

काकादिशब्दान् उदाहरणप्रसक्तान् निर्ब्रवीति,–"काक इति शब्दानुकृतिः" । अनुकरणमनुकृतिः, शब्दस्यानुकृतिः,यादृशमेवासौ शब्दं करोति तथैवानुकृत्या तस्य नामापि भवति शब्दस्यानुकृतिः । स हि काकुकाकु इति वाश्यते, तस्मात् स काक इत्युच्यते ॥ ३ । १८ । ४ ॥

## तदिदं शकुनिषु बहुलम् ॥ ५ ॥

"तदिदम्" एवं शब्दानुकृतिहेतुकं नाम "शकुनिषु" एव तान्येषु सत्त्वविशेषेषु "बहुलं" प्रायेणेत्यर्थः ॥ ३ । १८ । ५ ॥

## न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः ॥ काकोऽपकालयितव्यो भवति ॥ ६ ॥

"न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः" शकुनिष्वपि न शब्दानुकृतिहेतुकं नाम विद्यते, इत्यौपमन्यव आचार्यो मन्यते । किं कारणम् ? व्याभिचारित्वात् । श्यामा, दर्वी, पुच्छप्लवः, हंसः,–इत्येवमादिषु शब्दानुकरणहेतुको नामधेयप्रतिलम्भो नास्ति । शकुनिपक्षेऽपि शब्दानुकारो न विद्यते । बहवो ह्येवंप्रकारा अन्याक्रियार्थैर्नामभिरन्विताः शकुनयः । तत्र, यदुक्तं "तदिदं शकुनिषु बहुलम्" इति । एतदयुक्तम् । आह–कथं

१ 'भिधानेनोपमार्थं कृत्वोपमाश' ॥ २ 'न्नेव' ॥ ३ 'षसमुच्चये' ॥ ४ 'तयैवा' ॥
५ 'पुच्छः, प्लवः' ॥ (?) ॥ ६ 'वोऽप्ये' ॥

तर्हि काकस्यान्यक्रियाहेतुको नामधेयप्रतिलम्भ इति ? उच्यते—स हि "काकः अपकालयितव्यो भवति" उपघातभयात् स हि यद्यत् स्पृशति तत्तदुपहन्तीति अपकाल्यते तस्मात् काक इत्युच्यते ॥ ३ । १८ । ६ ॥

## तित्तिरिस्तरणात्तिलमात्रचित्र इति वा ॥ ७ ॥

शकुनित्वसामान्यप्रसक्तमुच्यते,—"तित्तिरिस्तरणात्" । 'तॄ प्लवने ( भू० प० )' । उत्प्लुत्यासौ गच्छति ॥ "तिलमात्रचित्र इति वा" । अथ वा तिलमात्रचित्रः स भवतीति तित्तिरिः ॥ ३ । १८ । ७ ॥

## कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा गमनीयं शब्दं पिञ्जयतीति वा ॥ ८ ॥

"कपिञ्जलः कपिरिव जीर्णः" यादृशो हि कपिः मर्कटः, जीर्णः सन् वर्णतो भवति, तादृशोऽसावपि कपिञ्जलः इत्युच्यते । अथ "वा" "कपिरिव जवते" कपिञ्जलः "ईषत्पिङ्गलः" कपिञ्जलः इत्यर्थः । अथ "वा" "गमनीयं" प्रार्थनीयं माङ्गल्यं मधुरं वा "शब्दं" "पिञ्जयति" अभिव्यनक्तीति कपिञ्जलः । एवमादीनि शकुनिनामधेयानि एवमादिना प्रकारेण अशब्दानुकृतिपूर्वकत्वे सति निर्वक्तव्यानि ॥ ३।१८।८ ॥

## श्वा शुयायी शवतेर्वा स्याद्गतिकर्मणः श्वसितेर्वा ॥ ९ ॥

"श्वा शुयायी" । शु इति क्षिप्रनाम । क्षिप्रमसौ शीघ्रत्वादेतीति श्वा । "शवतेर्वा गतिकर्मणः" स हि नित्यमेव गच्छति । "श्वसितेर्वा" वधकर्मणः एव ॥ ३।१८।९॥

## सिंहः सहनाद्धिंसेर्वा स्याद् विपरीतस्य सम्पूर्वस्य वा हन्तेः संहाय हन्तीति वा ॥ १० ॥

"सिंहः सहनात्" अभिभवति ह्यसौ अन्यान् प्राणिविशेषान् ॥ "सम्पूर्वस्य वा हन्तेः" उपसर्गस्येत्वेन ॥ "संहाय हन्तीति वा" वैयाकरणानामेषा व्युत्पत्तिः॥ ३।१८।१०॥

## व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा ॥ ११ ॥ १८ ॥

"व्याघ्रो व्याघ्राणात्" विविधमसौ जिघ्रतीति व्याघ्रः । तस्य हि घ्राणेन्द्रियं पटु भवतीति स हि घ्नन् आघ्राय हन्ति, घ्राणेन्द्रिये हि तस्य विशिष्टं ज्ञानम् ॥ "व्यादाय हन्तीति वा" स किल व्यादाय वक्त्रं विवृतं कृत्वा ततो हन्ति ॥ अथवा "व्यादाय

हन्तीति" यः किल प्रथमे ग्रहे [ न[1] ] शङ्कितः[2] तेन हन्तुं भवति मृगोऽन्यो वा कश्चित्, तमसावमर्षाद् विकृष्य तस्मिन्नेव प्रदेशे प्रथमग्रहस्थाने आनीय ततो हन्ति ॥ 'सिंहो व्याघ्रः, श्वा काक' इत्येवमनुक्रम्यार्वाचीनान्येतानि पदानि निरुक्तानि, अयमपि निर्वचनप्रकारोऽस्तीति प्रदर्शनार्थम् । सिंहव्याघ्रशब्दयोस्तु अनुलोममेव निर्वचनमनुलोमव्याख्योपप्रदर्शनार्थम्, एवं हि उभे अपि प्राप्ती दर्शिते भवतः ॥ ३ । १८ । ११ ॥ *

## ( अथार्चतिकर्माणः )

अर्चति । गायति । रेभति । स्तोभति । गूर्धयति । गृणाति । जरते । ह्वयते । नदति । पृच्छति । रिहति । धमति । कृपायति । कृपण्यति । पनस्यति । पनायते । वल्गूयति । मन्दते । भन्दते । छन्दति । छदयते । शशमानः । रञ्जयति । रजयति । शंसति । स्तौति । यौति । रौति । नौति । भनति । पणायति । पणते । सपति । पपृक्षाः । महयति । वाजयति । पूजयति । मन्यते । मदति । रसति । स्वरति । वेनति । मन्द्रयते । जल्पतीति चतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

### अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत् ॥ १ ॥

"अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत्" । अर्चतिकर्माणः अर्चत्यर्थाः पूजयत्यर्थाः पूजायामवश्यं भवितुं युज्यते उपमेति उपमाशब्देभ्योऽनन्तरम् अर्चतिकर्माणः समाम्नाताः कियन्तः पुनस्ते ? चतुश्चत्वारिंशत् ४४ ॥ कतमे पुनस्ते ? "अर्चति, गायति" इत्येवमादयः ॥ ३ । १९ । १ ॥

---

१ अनुक्तेऽपि नकारेऽर्थसाङ्गत्यादप्रयोजकोऽयमतः कोष्ठके निवेशितः । २ 'शकितः' इत्यग्रिमपाठे तु नकारस्यावश्यकतैव ।

* अत्रैवाष्टादशखण्डसमाप्तिर्दृश्यते ।

## ( अथ मेधाविनामानि )

**विप्रः । विग्रः । गृत्सः । धीरः । वेनः । वेधाः । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मन्धाता । विधाता । विपः । मनश्चित् । विपश्चित् । विपन्यवः । आकेनिपः । उशिजः । कीस्तासः । अद्धातयः । मतयः । मतुथाः । वाघत इति चतुर्विंशतिर्मेधाविनामानि ॥ १९ ॥**

**मेधाविनामान्युत्तराणि चतुर्विंशतिः ॥ २ ॥**

य एतेऽर्चतिकर्माणः, एतैर्हि मेधाविन एवार्चन्ति, एत एवाधिक्रियन्ते तैः, त एव हि स्तोतुं शक्नुवन्ति, नेतरे अमेधसः ॥ तस्मात् "मेधाविनामान्युत्तराणि चतुर्विंशतिः"। अर्चतिकर्मभ्यः उत्तराणि मेधाविनामानि ॥ कियन्ति पुनस्तानि ? चतुर्विंशतिः २४ ॥ कतमानि पुनस्तानि ? "विप्रः, विग्रः गृत्सः धीरः,"—इत्येवमादीनि ॥ विविधानर्थानस्य प्राप्तुं धातीति विप्रः । धीः प्रज्ञा, तद्वान् धीरः, रो मत्वर्थे । विगृह्य सदसि कथयतीति विग्रः इत्येवमादि ॥ ३ । १९ । २ ॥

**मेधावी कस्मान्मेधया तद्वान् भवति ॥ मेधा मतौ धीयते ॥ ३ ॥**

आह—"मेधावी कस्मात् ?" उच्यते—स हि "मेधया तद्वान् भवति" ॥ आह—"मेधाः" । कस्मात् ? सा हि "मतौ धीयते" । मतिर्बुद्धिः, तस्यां या पुरुषशक्तिरभिव्यज्यते, सा मेधा इत्युच्यते ॥ ३ । १९ । ३ ॥

## ( अथ स्तोतृनामानि )

**रेभः । जरिता । कारुः । नदः । स्तामुः । कीरिः । गौः । सूरिः । नादः । छन्दः । स्तुप् । रुद्रः । कृपण्युरिति त्रयोदश स्तोतृनामानि ॥ १६ ॥**

**स्तोतृनामान्युत्तराणि त्रयोदश(स्तोता स्तवनात्) ॥ ४ ॥**

य एव मेधाविनः, त एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्यः "उत्तराणि" "स्तोतृनामानि" ॥ कियन्ति पुनस्तानि ? "त्रयोदश" १३ ॥ कतमानि पुनस्तानि ? "रेभः, जरिता, कारुः"—इत्येवमादीनि । रेभो रेभते स्तुत्यर्थस्य । जरिता जरतेः स्तुत्यर्थस्यैव । कारुः कर्त्ता स्तोमानाम् । इत्येवमादि योज्यम् । प्रत्यक्षवृत्तित्वादस्य शब्दस्य नोक्तम्—स्तोता कस्मादिति ॥ ३ । १९ । ४ ॥

## ( अथ यज्ञनामानि )

**य॒ज्ञः । वे॒नः । अ॒ध्व॒रः । मे॒धः । वि॒दथः । नार्यः । सव॑नम् । होत्रा॑ । इ॒ष्टिः । दे॒वता॑ता । म॒खः । विष्णुः । इन्दुः । प्र॒जाप॑तिः । घर्म इति पञ्चदश यज्ञनामानि ॥ १७ ॥**

**यज्ञनामान्युत्तराणि पञ्चदश ॥ ५ ॥**

यज्ञेष्वेव हि अतिशयेन देवतानां स्तुतयः प्रयुज्यन्त इति स्तोतृनामभ्यः "उत्तराणि" "यज्ञनामानि" ॥ कियन्ति पुनस्तानि ? "पञ्चदश" १५ ॥ कतमानि पुनस्तानि ? "यज्ञः, वेनः, अध्वरः, मेधः"—इत्येवमादीनि ॥ ३ । १९ । ५ ॥

**यज्ञः कस्मात् प्रख्यातं यजति कर्मेति नैरुक्ताः ॥ याच्ञ्यो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वा ॥ ६ ॥**

आह— "यज्ञः कस्मात्" ? उच्यते—यदेतत् "प्रख्यातं यजतिकर्म" लोकवेदयोः । एतदेव भावसाधनेन शब्देनोच्यते यजनं यज्ञ इति ।

अथ "वा" "याच्ञ्यो भवतीति" यज्ञः, याच्यते ह्यत्र । "यज्ञो वै देवानामन्नं समभूत् तं भृत्याः समभावयन्निति ह विज्ञायते" [ इति ब्राह्मणे ] तस्माद् याचनाद् यज्ञः ॥

---

१ एत ( ) स्कोष्ठकान्तर्गतः पाठो बहुषु पुस्तकेषु न दृश्यते । 'प्रत्यक्षवृत्तित्वादस्य शब्दस्य नोक्तम्—स्तोता कस्मादिति' इत्युक्त्या टीकाकारस्यापि नायं सम्मत इति भाति ।

अथ "वा" "यजुर्भिः" अयम् "उन्नः" इव संक्लिन्न इव "भवति" बहुत्वादत्र यजुषाम् । अथवा "बहु कृष्णाजिन इत्यौपमन्यवः" यद्यदत्र दृश्यते प्रतिविशिष्टं साधनं किञ्चित्, तत्तत् कृष्णाजिनमिति यज्ञः । सोमे तावदजिनद्वयम्, यजमानेऽप्य-जिनद्वयम् । अवहन्यमानेषु हि हविःषु अजिनं धर्मपात्रेष्वप्यजिनम्, एवं बहुकृष्णाजिनः। अथ "वा" "यजूंष्येनम्" उपक्रमादारभ्यान्तं "नयन्तीति" यज्ञः । [* वेनातिः कान्त्यर्थः काम्यन्ते हि यज्ञाद् ग्रामपशुस्वर्गादयः तस्मात् स वेनः यज्ञ इत्युच्यते । ममेदं दास्य-तीति एवं यज्वभिः तस्मात् फलं प्रार्थ्यते इति मेधः । इत्येवमादि ] ॥ ३ । १९ । ६॥

## ( अथर्त्विङ्नामानि )

**भारताः । कुरवः । वाघतः । वृक्तबर्हिषः । यतस्रुचः । मरुतः । सबाधः । देवयव इत्यष्टावृ-त्विङ्नामानि ॥ १८ ॥**

### ऋत्विङ्नामान्युत्तराण्यष्टौ ॥ ७ ॥

यज्ञसम्बन्धेनैव "ऋत्विङ्नामानि उत्तराणि अष्टौ" । ऋत्विजां नामानि ऋत्विङ्-नामानि ॥ कियन्ति पुनस्तानि ? अष्टौ ८ ॥ कतमानि पुनस्तानि ? "भारताः, कुरवः"— इत्येवमादीनि ॥ भ्रियन्ते दक्षिणाभिस्ते इति भारताः । कुर्वन्ति कर्माणीति कुरवः इत्येवमादि ॥ ३ । १९ । ७ ॥

### ऋत्विक् कस्मादीरणः ॥ ८ ॥

आह—"ऋत्विक् कस्मात्" ? उच्यते—"ईरणः" ईरयिता हि स स्तुतीनां भव-तीति ऋत्विक् ॥ ३ । १९ । ८ ॥

### ऋग्यष्टा भवतीति शाकपूणिः ॥ ९ ॥

"ऋग्यष्टा भवतीति शाकपूणिः" ऋग्भिर्ह्यसौ योगकारी भवतीति ऋत्विक्॥ ३।१९।९॥

### ऋतुयाजी भवतीति वा ॥ १० ॥

"ऋतुयाजी भवतीति वा" स हि कालेकाले देवतां यजतीति वा । ऋतौ याजय-तीति वा, स हि कालेकाले एव याजयते, नाकाले ॥ ३ । १९ । १० ॥

---

* अयं कोष्ठकान्तर्गतः पाठः "यज्ञः वेनः अध्वरः मेधः इत्येवमादीनि" इत्येतदुत्तरमेव योजनीयः पूर्वोत्तरसंवादात् ॥ १ 'अग्ना' ॥ २ 'यजतीति ऋ' ॥

( अथ याच्ञाकर्माणः )

ईमहे । यामि । मन्महे । दद्धि । शग्धि । पूर्धि । मिमिड्ढि । मिमीहि । रिरिड्ढि । रिरीहि । पीपरत् । यन्तारः । यन्धि । इषुध्यति । मदेमहि । मनामहे । मायत इति सप्तदश याच्ञाकर्माणः ॥ १९॥

याच्ञाकर्माण उत्तरे धातवः सप्तदश ॥ ११ ॥

ऋत्विक्सम्बन्धेनैव "याच्ञाकर्माण उत्तरे धातवः सप्तदश" १७ ॥ कतमे पुनस्ते ? इति—"ईमहे, यामि, मन्महे"—इत्येवमादयः ॥ ३ । १९ । ११ ॥

(अथ दानकर्माणः )

दाति । दाशति । दासति । राति । रासति । पृणक्षि । पृणाति । शिक्षति । तुञ्जति । मंहत इति दश दानकर्माणः ॥ २० ॥

दानकर्माण उत्तरे धातवो दश ॥ १२ ॥

याच्ञासम्बन्धेनैव "दानकर्माण उत्तरे धातवो दश" १० ॥ कतमे पुनस्ते ? इति—"दाति, दाशति, दासति"—इत्येवमादयः ॥ ३ । १९ । १२ ॥

( अथाध्येषणाकर्माणः )

परिस्रव । पवस्व । अभ्यर्ष । आशिष इति चत्वारोऽध्येषणाकर्माणः ॥ २१ ॥

अध्येषणाकर्माण उत्तरे धातवश्चत्वारः ॥ १३ ॥

दानसम्बन्धेनैव "अध्येषणाकर्माण उत्तरे धातवश्चत्वारः" ४ ॥ कतमे पुनस्ते ? इति—"परिस्रव, पवस्व"—इत्येवमादयः । सत्कृत्य दातृभिर्दातुं प्रतिग्रहीतॄणां प्रार्थना अध्येषणेत्युच्यते ॥ ३ ॥ १९ । १३ ॥

(अथ स्वपितिकर्माणौ)

## स्वपिति । सस्तीति द्वौ स्वपितिकर्माणौ ॥ २२ ॥

### स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ ॥ १४ ॥

याच्यमानो हि सर्वोऽपि स्वपितीति अध्येषणाकर्मभ्य उत्तरौ "स्वपितिकर्माणौ"। कतमौ पुनस्तौ? "स्वपिति, सास्ति"—"इति" स्वशब्देनैवोच्चार्य द्विग्रहणमवधारणार्थम्, एतौ एव "द्वौ" निगमे न पुनस्तृतीयोऽस्तीति, अल्पत्वाद्वा द्विग्रहणम् ॥ ३ । १९ । १४ ॥

(अथ कूपनामानि)

## कूपः । कातुः । कर्तः । वव्रः ॥ काटः । खातः । अवतः । क्रिविः । सूदः । उत्सः ऋश्यदात् । कारोतरात् । कशयः । केवट इति चतुर्दश कूपनामानि ॥ २३ ॥

### कूपनामान्युत्तराणि चतुर्दश ॥ १५ ॥

"कूपनामान्युत्तराणि चतुर्दश" कूपमेव हि आश्रित्य मरौ सुप्यते, सुप्तः कूप इव पतितो भवतीति वा, स्वपितिकर्मभ्यामनन्तराणि कूपनामान्युच्यन्ते । कियन्ति पुनस्तानि? चतुर्दश १४ ॥ कतमानि पुनस्तानि? "वव्रः, कातुः, खातः"—इत्येवमादीनि । व्रियते ह्यसावुदकार्थमिति वव्रः । कमुदकमत्रेति कातुः—इत्येवमादि ॥ ३ । १९ । १५ ॥

### कूपः कस्मात् कु पानं भवति कुप्यतेर्वा ॥ १६ ॥

आह—"कूपः कस्मात्"? उच्यते,—"कु पानं भवति" यत्र ह्यसौ भवति तत्र कुत्सितं पानं भवति, साधनापेक्षत्वात् । "कुप्यतेर्वा" यत्सम्बाधादुदकार्थिनः कुप्यन्ति ॥ ३ । १९ । १६ ॥

(अथ स्तेननामानि)

## तृपुः । तक्वा । रिम्भ्वा । रिपुः । रिक्वा । रिहायाः । तायुः । तस्करः । वनर्गुः । हुरश्चित् ।

---

१ टीकाकर्त्रैवमेव पाठः समुपलब्ध इति प्रतिभाति । एवमग्रेऽपि सति भेदे बोध्यम् ।

## मुषीवान् । मलिम्लुचः । अघशंसः । वृक इति चतुर्दशैव स्तेननामानि ॥ २४ ॥

### स्तेननामान्युत्तराणि चतुर्दशैव ॥ १७ ॥

"स्तेननामान्युत्तराणि चतुर्दशैव" । कूपमेव ह्याश्रित्य मुष्णन्ति स्तेना इत्यतः कूपनामभ्यः उत्तराणि स्तेननामानि ॥ कियन्ति पुनस्तानि ? चतुर्दशैव १४ ॥ कतमानि पुनस्तानि ? "तृपुः, रिपुः" इत्येवमादीनि । परेभ्यो धनान्यपहृत्यातिशयेनासावात्मानं भृत्यांश्च तर्पयतीति तृपुः । लिम्पत्यसावात्मानं पापेनेति रिपुः । इत्येवमादि ॥ ३ । १९ । १७ ॥

### स्तेनः कस्मात् संस्त्यानमस्मिन् पापकमिति नैरुक्ताः॥ १८॥

आह—"स्तेनः कस्मात्" ? उच्यते—"संस्त्यानम्" संहतम् "अस्मिन्" "पापकम्" कर्म भवति "इति" एवं "नैरुक्ताः" मन्यन्ते ॥ वैयाकरणानामन्यथापि स्यादित्यभिप्रायः ॥ ३ । १९ । १८ ।

### ( अथ निर्णीतान्तर्हितनामानि )

## निण्यम् । सस्वः । सनुतः । हिरुक् । प्रतीच्यम् । अपीच्यमिति षण्निर्णीतान्तर्हितनामानि ॥ २५ ॥

### निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् ॥ १९ ॥

"निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्" । निर्णीतस्य च अन्तर्हितस्य नामधेयानि निर्णीतान्तर्हितनामधेयानि । उत्तराणि प्रकृतेभ्यः स्तेननामभ्यः । स्तेना एव ह्यन्तर्हिता भवन्तीत्येष सम्बन्धः स्तेननाम्नामन्तर्हितनाम्नां च ॥ कियन्ति पुनस्तानि ? षट् ६ ॥ कतमानि पुनस्तानि ? "निण्यम्, सस्वः, सनुतः"—इत्येवमादीनि । निर्णीतमिव निण्यम् । सुप्तमिव सस्वः । सन्ततमिव सनुतः,—इत्येवमादीनि ॥ ३ । १९ । १९ ॥

### निर्णीतं कस्मान्निर्णिक्तं भवति ॥ २० ॥

॥ ३ । १९ । २० ॥

२

( अथ दूरनामानि )

# आके । पराके । पराचैः । आरे । परावत इति पञ्च दूरनामानि ॥ २६ ॥

## दूरनामान्युत्तराणि पञ्च ॥ २१ ॥

"दूरनामान्युत्तराणि पञ्च" ५ ॥ अन्तर्हितं यद् भवति, दूर इव हि तद् भवतीत्येष सम्बन्धः ॥ कतमानि पुनस्तानि ? "आके, पराके, पराचैः"—इत्येवमादीनि ॥ आ कियतो देशात् एतद् वर्त्तते इति विज्ञातव्यमेतद् भवतीत्याके । पराके पराक्रान्ते । पराङ्मुखमञ्चितं पराचैरित्येवमादि । यथैव श्रुतानि च्छन्दसि, तथैवैतानि समाम्नातानि ॥ ३ । १९ । २१ ॥

## दूरं कस्माद् द्रुतं भवति दुरयं वा ॥ २२ ॥

आह—"दूरं कस्मात्" ? उच्यते—"द्रुतं" हि तत् "भवति" अध्वनो महत्त्वात् । "दुरयं वा" दुःखं हि तद् गम्यते प्राप्यत इत्यर्थः ॥ ३ । १९ । २२ ॥

( अथ पुराणनामानि )

# प्रत्नम् । प्रदिवः । प्रवयाः । सनेमि । पूर्व्यम् । अह्नायेति षट् पुराणनामानि ॥ २७ ॥

## पुराणनामान्युत्तराणि षट् ॥ २३ ॥

दूरसम्बन्धेनैव "पुराणनामान्युत्तराणि षट्" ६ ॥ समानं हि कालाध्वनोर्महत्त्वं दूरपुराणयोः ॥ कतमानि पुनस्तानि ? "प्रत्नम्, प्रदिवः, प्रवयाः"—इत्येवमादीनि ॥ प्राक्तनं प्रत्नम् । प्राग् द्युतिमदासीदिति प्रदिवः । प्रकृष्टवयाः प्रवयाः-इत्येवमादि । ३ । १९ । २३ ॥

## पुराणं कस्मात् पुरा नवं भवति ॥ २४ ॥

आह—"पुराणं कस्मात्" ? उच्यते,—तद्धि "पुरा नवं भवति" न वर्त्तमानकाले ॥ ३ । १९ । २४ ॥

( अथ नवनामानि )

# नवम् । नूत्नम् । नूतनम् । नव्यम् । इदा । इदानीमिति षळेव नवनामानि ॥ २८ ॥

नवनामान्युत्तराणि षळेव ॥ २५ ॥

"नवनामान्युत्तराणि षळेव" ६ ॥ पुराणसम्बन्धेनैव । कतमानि पुनस्तानि ? "नवम्, नूतनम्, नूतनम्"—इत्येवमादीनि ॥ ३ । १९ । २५ ॥

नवं कस्मादानीतं भवति ॥ २६ ॥ १९ ॥

आह—"नवं कस्मात्" ? उच्यते,—तद्धि सद्य एव कुतश्चित् "आनीतं भवति" क्षिप्रोत्पन्नं नूतनमित्येवमादि ॥ ३ । १९ । २६ ॥ *

( अथ द्विश उत्तराणि नामानि )

प्रपित्वे । अभीके । दभ्रम् । अर्भकम् । तिरः । सतः । त्वः । नेमः । ऋक्षाः । स्तृभिः । वम्रीभिः उपजिह्विका । ऊर्दरम् । कृदरम् । रंभः । पिनाकम् । मेना । ग्नाः । शेपः । वैतसः । अया । एना । सिषक्तु । सचते । भ्यसते । रेजत इति षड्विंशतिर्द्विश उत्तराणि नामानि ॥ २९ ॥

द्विश उत्तराणि नामानि षड्विंशतिः ॥ १ ॥

"द्विश उत्तराणि नामानि षड्विंशतिः" २६ ॥ द्वेद्वे द्विश उत्तराणीति । "प्रपित्वे, अभीके" इत्येवमादीनि । व्याख्यातानि पृथिवीनामभ्य आरभ्य एकैकस्यार्थस्य बहूनि नामधेयानि, इदानीमेकैकस्य द्वेद्वे नामनी वाचके भवत इति तान्येतानि समाम्नायेते—प्रपित्वे, अभीके—इत्येवमादीनि, आद्यावापृथिवीनामभ्यो यावत् ॥ ३ । २० । १ ॥

प्रपित्वेऽभीक इत्यासन्नस्य । प्रपित्वे प्राप्ते । अभीकेऽभ्यक्ते ॥
"आपित्वे नः प्रपित्वे तूयमागहि"॥
"अभीके चिदु लोककृत्" ॥
इत्यपि निगमौ भवतः ॥ २ ॥

---

१ अत्रैव एकोनविंशखण्डसमाप्तिर्दृश्यते ॥

अधुनैवमुक्त्वा सामान्यतो विशेषेण एकैकं व्युत्पाद्य उदाहरणैरेव दर्शयति । तद्यथा,— "प्रपित्वे, अभीके"— "इति" एते नामनी "आसन्नस्य" भवतः ॥ इत्येवमादि । "प्रपित्वे प्राप्ते" इत्यर्थः । "अभीके अभ्यक्ते" आभिमुख्येनाञ्चिते । अभ्यागते ॥ इदानीमुदाहरणे ब्रवीति,— "आपित्वे नः०" "अभीकेचित्०"— "इत्यपि निगमौ (ऋ० सं० ५, ७, ३०, ३–८, ७, २१, १) भवतः" ॥

"यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम् । आपा कृतमिति द्वे पदे ।
आपित्वे नः प्रपित्वे तूयमागहि कण्वेषु सचा पिब ॥" (ऋ० सं० ५, ७, ३०, ३)"

ऐन्द्रेयषा । बृहती । देवातिथिः काण्वस्यार्षम् । महाव्रते बृहतीसहस्रे शस्यते ॥ हे इन्द्र! 'यथा' येन प्रकारेण 'गौरः' गौरमृगः, 'अवेरिणम्' अपगतार्णम् अपगतोदकं मरुदेशं गत्वा 'तृष्यन्' तृषा बाध्यमानः 'अपाकृतम्' अपानीयम्, पानं योग्यं यत्र नास्ति, स्वल्पोदकत्वात्, तत्र कृतम्, उदकेन वा कृतं, जलाशयस्थानम् तडागमन्यद् वा शीघ्रम् 'एति' एवं त्वमप्येतस्मिन् 'आपित्वे' आपानकाले 'प्रपित्वे' प्राप्ते 'तूयं' क्षिप्रम् 'आगहि' आगच्छ । आगत्यं च य एषः सोमः 'कण्वेषु' एष्त्रृत्विक्षु वर्त्तते, तमेभिरेव ऋत्विग्भिः 'सचा' साकं 'सु' सुष्ठु सह स्थित्वा 'पिब' इति [ संयोगेन तुष्यन् ] इति ॥

"प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीकेचिदु लोककृत्सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधिधन्वसु ॥ (ऋ० सं० ८, ७, २१, १)"।

सुदासः पैजवनस्येयमार्षम् । अतिच्छन्दाः । सर्वपृष्ठायां मैत्रावरुणीयकं देवताव्यत्यययागे शाकरस्यैन्द्रस्य चरोर्याज्यैषा, रैवतस्य पुरोऽनुवाक्या, बाह्वृच्ये पुनरियमेव षोडशिशस्त्रे शस्यते ॥ हे स्तोतारः ! 'प्रो' प्रकर्षेण 'सु' प्रशस्ताभिः स्तुतिभिः 'अस्मै' 'इन्द्राय' तुष्ट्यर्थं 'पुरोरथम्' अग्रतो रथम् एतत् 'शूषम्' बलम् 'अर्चत' स्तुत । कं च पुनरर्थमभिसन्धायार्चत ? इति । 'अभीकेचित् उ लोककृत्' । अभीके अभ्यागते एतस्मिन् 'सङ्गे' सङ्ग्रामकाले प्राप्तेऽप्येषु 'समत्सु' सम्भक्षयितृषु उद्यतायुधेषु शत्रुषु लोककृत् स्थानकृत् । एषु 'वृत्रहा' शत्रुहन्ता इन्द्रो भविष्यतीति एतमर्थमभिसन्धाय प्रार्चत अस्मै यूयमिन्द्राय पुरोरथं शूषमिति । एवमन्यान् स्तोतॄन् सम्बोध्य आत्मनापि प्रवर्त्तते वक्तुम्,— हे भगवन्निन्द्र ! 'अस्माकं' 'बोधि' बुध्यस्व एताः स्तुतीः, मा परेषाम्, बुध्वा चैताः 'चोदिता' अनुज्ञाता जनस्य भव । किंच, 'नभन्ताम्' हिंस्यन्ताम्, 'अन्यकेषाम्' अन्येषां 'ज्याकाः' ज्याः 'अधिधन्वसु' धनुःष्वधिरोपिताः, अवततज्या धनुषो हतसर्वोद्यमा एते अस्मद्विषो युष्मदनुग्रहाद् भवन्त्वित्यभिप्रायः ॥ ३ । २० । २ ॥



१ अधिकोऽयं पाठः ।

दभ्रमर्भकमित्यल्पस्य । दभ्रं दभ्नोतेः सुदम्भं भवति ॥
अर्भकमवहृतं भवति ।
"उपोप मे परामृश मा मे दभ्राणि मन्यथाः ॥"
"नमो महद्भ्यो नमो अर्भकेभ्यः" ॥
इत्यपि निगमौ भवतः ॥ ३ ॥

"दभ्रम्, अर्भकम्"—"इति" एते "अल्पस्य" नामनी । "दभ्रं दभ्नोतेः" वधार्थस्य । तद्धि "सुदम्भं भवति" सुच्छेदं भवति, अल्पत्वात् ।

"अर्भकमवहृतं भवति" ह्रस्वमित्यर्थः । "उपोपमे परामृश०" "नमोमहद्भ्यो नमो०"—"इत्यपि निगमौ ( ऋ० सं० २, १, ११, ७–१, २, २४, ३ ) भवतः" ॥

"उपोप मे परामृश मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥ ( ऋ० सं० २, १, ११, ७)" ।

भावयव्यस्येयमार्षम् । अनुष्टुप् । भावयव्यमेव सा भर्त्तारं तेनानुपेयमाना ब्रवीति ॥ हे राजन् !"उप"गम्य"उप"श्लिष्य च"मे"मम "परामृश"यः प्रदेशः पुरुषेण स्त्रियाः परामृष्टव्यः । किंच, "मा मे दभ्राणि मन्यथाः" अल्पकानि लोमानि मा मन्यथाः । जानेऽहमेतत्, यथा अलोमिकाया उपगमः प्रतिषिद्धः स्मृतौ,—"नाजातलोम्न्योपहासमिच्छेत्" इति । यतस्ते वेदयामि 'सर्वाहमस्मि रोमशा' सर्वेष्वेवावयवेषु ममोत्पन्नानि रोमाणि येषु स्त्रीणामुत्पद्यन्ते ॥ कथं च पुनरहमस्मि रोमशा ? 'गन्धारीणामिवाविका' गन्धारदेशजातानामविकानां मध्ये या सुष्ठु रोमशा भवेत्, तथाहमस्मि रोमशा, निःशङ्को मामुपगच्छेत्यभिप्रायः ॥

"नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ॥
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंस मा वृक्षि देवाः ॥ ( ऋ० सं० १, २, २४, ३ )" ॥

त्रिष्टुप् । शुनःशेपस्यार्षम् । होतृजपे विनियुक्ता[1] ॥ "नमोमहद्भ्यः" नमो महत्परिमाणेभ्यो देवेभ्यः । "नमो अर्भकेभ्यः" अल्पपरिमाणेभ्यः । 'नमो युवभ्यः' यौवनवद्भ्यः । 'नम आशिनेभ्यः' व्यापिभ्यः । 'यजाम' 'देवान्' एतस्मिन्नुपस्थिते यागकाले । 'यदि' 'शक्नवाम' । अल्पश्रुतविज्ञाना वयम् । अत एव ब्रूमो यदि शक्नवामेति । वयमीदृशाः सन्तो युष्मान् ब्रूमहे,—हे 'ज्यायसः' ज्यायांसः ! देवाः ! युष्माकमेव 'शंस' शंसितारं सन्तमल्पे वा महति वा कस्मिंश्चिद् दुःशस्ते 'मा वृक्षि' मा अस्मान् छिन्त यज्ञफलात्, को हि नाम नापराध्यति ? इत्यभिप्रायः ॥ ३ । २० । ३ ॥

---

१ 'विनियोगः' ॥

तिरः सत इति प्राप्तस्य । तिरस्तीर्णं भवति । सतः संसृतं भवति ।

"तिरश्चिदर्य॒या परि॑ वर्ति॒र्या॑तमदाभ्या" ।

"पात्रे॑व भि॒न्दन् स॒त ए॑ति र॒क्षसः॑" ॥

इत्यपि निगमौ भवतः ॥ ४ ॥

"तिरः, सतः"—"इति" एते "प्राप्तस्य" नामनी भवतः । अप्राप्तस्यैके अधीयते यथापि योऽयम् । "तिरः तीर्णं" हि तत् "भवति" दूरमध्वानम् । "सतः संसृतं भवति" एकीभूय सृतं भवति । "ति॒रश्चि॒दर्य॒या०","पात्रे॑व भि॒न्दन् स॒तः०"—"इत्यपिनिगमौ ( ऋ० सं० ४, ४, १६, २, —५, ७, ९, १ ) भवतः" ॥

"आश्वि॑ना॒वेह ग॑च्छतं॒ नास॑त्या॒ मा वि वे॑नतम् ॥

"ति॒रश्चि॒दर्य॒या परि॑ व॒र्त्ति॒र्या॑तमदाभ्या॒ माध्वी॒ मम॑ श्रुतं॒ हव॑म् ॥ ( ऋ० सं० ४, ४, १६, २ )" ॥

पङ्क्तिराश्विनी । अवस्योरात्रेयस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ॥ हे 'अश्विनौ' 'नासत्या' ! नासत्यौ 'आगच्छतम्' युवाम् 'इह' अस्मिन् यज्ञे सोमं पातुम् मम । किञ्च, 'मा वि वेनतम्' मा विगतकामौ भूतम्, युवामाहूयमानौ मया । किंच, "तिरश्चिदर्यया" तिरोऽपि अप्राप्तेऽपि दूर एव स्थाने यद्यवस्थितौ स्थः, तथापि अर्यया ईश्वरयापि रथगत्या दैवगत्या शीघ्रया "आयातम्" [ द्विवचनं वा सावग्रहत्वात् पदस्य ] किंच, "परिवर्त्तिः यातम्" यद्यपि कचिदनिवृत्तौ स्थः, तथापि परिवर्त्तनं कृत्वा तत आयातम् । हे "अदाभ्या" अहिंस्यौ ! अनुपहिंसितौ ! अथवा अदाभ्यया अदब्धया । अनुपहिंसितया गत्या आयातम् । हे 'माध्वी' ! मधुसोममिश्रं पेयं ययोस्तौ । 'मम' 'श्रुतं' शृणुतम् 'हवम्' आह्वानम् । श्रुत्वा च अविलम्बमानौ शीघ्रमायातमित्यभिप्रायः ॥

"इन्द्रो॑ यातू॒नाम॑भवत्पराश॒रो ह॑वि॒र्मथी॑नाम॒भ्या॒३॑ विवा॑सताम् ।

अभी॒दु॑ श॒क्रः प॑र॒शुर्यथा॒ वनं॒ पात्रे॑व भि॒न्दन्स॒त ए॑ति र॒क्षसः॑ ॥ ( ऋ० सं० ५, ७, ९, १ )" ।

यातुः = यातुधानः।

वसिष्ठस्यार्षम् । जगती । 'इन्द्रः' 'यातूनां' यातुधानानाम् 'अभवत्' 'पराशरः' पराशातयिता ॥ कीदृशानां पुनर्यातूनामभवत् पराशातयिता इति ? उच्यते—'हविर्मथीनाम्' हवींषि ये मथ्नन्ति, तेषाम् । 'अभ्याविवासताम्' अभ्युद्वासयतां, यज्ञोत्पादकानामित्यर्थः अथवा विवासति, परिचर्य्यार्थो स्यात् ॥ ये अमिदं परिचरन्ति तेषां ये यातवः, तेषामेव

प्रशातयितेति । योऽयमेवंलक्षण इन्द्रः, सोऽस्माभिराराधितः परिचर्यया 'अभि एति' अभ्येतु, अस्मान् प्रति । 'शक्रः' शक्तः, सर्वयातूनां यातने । कथं पुनरभ्येतु ? 'परशुः' परशुहस्तः 'यथा' कश्चित् 'वनं' छिन्दन् अभ्येयात्, यथा "पात्रा" पात्राणि कौलालानि लकुडेनाप्रतिषिध्यमानः "भिन्दन्" कश्चिदभ्येयात्, एवमभ्येतु "रक्षसः" रक्षांसि भिन्दन् "सतः" प्रदेशात्, दरादित्यर्थं ॥ ३ । २० । ४ ॥

**त्वो नेम इत्यर्द्धस्य । त्वोऽपततः । नेमोऽपनीतः । अर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवति । ऋध्नोतेर्वा स्यादृद्धतमो विभागः ॥**

**"पीयति त्वो अनु त्वो गृणाति।" "नेमे देवा नेमेऽसुराः" इत्यपि निगमौ भवतः ॥ ५ ॥**

"त्वः, नेमः"—"इति" एते नामनी "अर्द्धस्य" । "त्वः अपततः" अपेत्य ततः अपततः, "नेमः अपनीतः" अपभज्य नीतः, पृथक् कृत इत्यर्थः । "अर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यात्" "उद्धृतं" हि तत् "भवति" । "ऋध्नोतेर्वा स्यात्" "ऋद्धतमः" अभिसम्पन्नतमः "विभागः" भवति । "पीयति त्वो अनु त्वो गृणाति"— "नेमे देवा नेमेऽसुराः"—"इत्यपि निगमौ ( ऋ० सं० २, २, १६, २—य० मै० ब्रा० ) भवतः" ।

"बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वंदे अग्ने ॥ इति ( ऋ० सं० २, २, १६, २ )"

त्रिष्टुप् । दीर्घतमस आर्षम् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते ॥ हे भगवन् ! 'अग्ने !' 'यविष्ठ' युवतम ! 'बोध' बुध्यस्व 'मे' मम 'अस्य' 'वचसः' 'मंहिष्ठस्य' दातृतमस्य, पूजयितृतमस्य वा, महत्तमस्य वा, 'प्रभृतस्य' प्रकृष्टैर्भगवद्गुणैः सम्भृतस्य । हे 'स्वधावः' अन्नवन् ! ये गुणा अस्य वचसः, तान् बोध । किंच, इदमपरं शृणु,— उभयेषां प्राजापत्यानां देवासुराणां द्वेधा विभक्तानां "पीयति त्वः" हिनस्ति एकमर्द्धमसुराख्यम् "अनु त्वः" अनु "गृणाति" एकमर्द्धं देवाख्यमनुष्टौतीत्यर्थः । तत्रैवं सत्युभयथा विप्रतिपन्नेषु प्राजापत्येषु 'वन्दारुः' वन्दनशीलः अहं, दैवं पक्षमाश्रितः, हित्वा आसुरं, तवैतां 'तन्वं' तनुं ज्वलनदहनप्रकाशीकरणसमर्थां नित्यकालमेव प्रातर्म-

ध्यन्दिने सायं च 'वन्दे' स्तौमीत्यर्थः ॥ तथास्य ममैवं भक्तस्य बुध्यस्व अस्य वचसो ये गुणास्तांश्च बुद्ध्वा प्रसादमभिमतेनार्थेन नः कुरुष्वेत्यभिप्रायः ।

"नेमे देवा नेमेऽसुराः"—इति ब्राह्मणवाक्यमेवेदं वाजपेये मैत्रायणीयानाम् । अर्द्धतो देवा अर्द्धतोऽसुरा आसन्नित्यर्थः ॥ ३ । २० । ५ ॥

ऋक्षाः स्तृभिरिति नक्षत्राणाम् । नामनी इति शेषः।

नक्षत्राणि नक्षतेर्गतिकर्मणः ।

नेमानि क्षत्राणीति च ब्राह्मणम् ।

ऋक्षा उदीर्णानीव ख्यायन्ते ।

स्तृभिस्तीर्णानीव ख्यायन्ते ।

"अमी य ऋक्षा निहितास उच्चा" ।

"पश्यन्तो द्यामिव स्तृभिः" ।

इत्यपि निगमौ भवतः ॥ ६ ॥

"ऋक्षाः, स्तृभिः"—"इति" एते "नक्षत्राणाम्" नामनी ॥

नक्षत्रशब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति,— "नक्षत्राणि नक्षतेर्गतिकर्मणः" गत्यर्थे वर्त्तमानस्य, तानि हि नित्यमेवागच्छन्ति ॥

"नेमानि क्षत्राणीति च ब्राह्मणम्" । नेमानि, क्षत्राणि धनानि । क्षत्रमिति धननाम । किं तर्हि ? धनसरूपाण्येतानि, सूर्यरश्म्यनुवेधात् दीप्यमानानि सन्ति हिरण्ययानीव भ्राजन्ते इति तु ब्राह्मणम्, तुशब्दार्थे चशब्दः ॥

"ऋक्षाः" "उदीर्णानीव" उदीरितानीव, केनचिदूर्द्ध्वं गमितानीव "ख्यायन्ते" दृश्यन्त इत्यर्थः॥

"स्तृभिस्तीर्णानीव" "ख्यायन्ते" दृश्यन्ते ॥

"अमी य ऋक्षाः"—"पश्यन्तो द्यामिव स्तृभिः"—"इत्यपि निगमौ ( ऋ० सं० १, २, १४, ५, –३, ५, ६, ३ ) भवतः" ॥

"अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद्दिवेयुः ॥

"अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ (ऋ० सं० १, २, १४, ५ )"

शुनःशेपस्यार्षम् । त्रिष्टुप् । वारुणी ॥ वरुणश्चास्यां सूर्य उच्यते । "अमी ये ऋक्षाः" अमूनि यानि नक्षत्राणि "निहितासः" निहितानि "उच्चा" उच्चैरित्यर्थः किंच, तानि 'नक्तं ददृश्रे' रात्रावेवैतानि दृश्यन्ते । 'कुहचिद् दिवेयुः' न विज्ञायन्ते हि क्वचिद् दिवैतानि गच्छन्तीति ॥ किमेतत् स्यात् ? 'अदब्धानि' अनुपहिंसितानि 'वरुणस्य' आदित्यस्य एतानि 'व्रतानि' कर्माणि आश्चर्यभूतानि स्युः ॥ किमन्यद् भविष्यति ? स हि भगवानादित्यः, एतानि कुतश्चिदानयन्निवास्तं गच्छति, पुनश्चैतानि अपनयन्निवोदेति, तदेवं दर्शनमदर्शनं वा तेषां सूर्यकृतमेव। यदपि चैतत् 'विचाकशत्' दीप्यमानः 'चन्द्रमाः' 'नक्तम् एति' तदप्यस्यैव भगवतः सूर्यस्य कर्म, अयमेव हि चन्द्रमसि दीप्तिमादधान इवास्तं याति, पुनश्चाक्षिपन्निव चन्द्रमसो दीप्तिमुदेति । योऽयमेवंस्वभावो वरुणः तं वयमभिप्रेतार्थसिद्धये स्तुमः, स इदं मामास्माकं करोत्विति ॥

"ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।
विश्वेषामध्वराणां हस्कर्त्तारं दमेदमे ॥ ( ऋ० सं० ३, ५, ६, ३ )" ॥

गौतमपुत्रस्य वामदेवस्यार्षम् । अनुष्टुप् । आग्नेयी ॥ 'ऋतावानं' यज्ञवन्तं 'विचेतसं' विभूतप्रज्ञानं 'विश्वेषां' सर्वेषाम् 'अध्वराणाम्' यज्ञानां 'हस्कर्त्तारं' हसनकर्तारम् । उपज्वलिते हि तस्मिन् प्रहसित इव यज्ञश्चारुरूपो भवति ॥ अथवा—हस्कर्तारं स्पर्द्धाकर्त्तारम् । उपज्वलिते हि तस्मिन् भ्रातृव्ययज्ञैः संस्पर्द्धन्त इव यज्ञाः, तमेवं गुणविशिष्टम् अग्निं "पश्यन्तः" वयमनेकधा विहृतं 'दमेदमे' यज्ञगृहेयज्ञगृहे तासुतासु क्रियासु व्यापृतं स्तुमः । किंच, योऽनेकधा दीप्यमानः "द्याम् इव स्तृभिः" नक्षत्रैः पृथिवीं चित्ररूपां, वेदिं वा करोति, स नोऽभिष्टुतोऽभिप्रेतानर्थान् साधयत्वित्यभिप्रायः ॥ ३ । २० । ६ ॥

**वम्रीभिरुपजिह्विका इति सीमिकानाम् । वम्र्यो वमनात् ॥**
**सीमिका स्यमनात् ॥** सीमिका = सेंक इति भाषायाम्
**उपजिह्विका उपजिघ्र्यः ।**
**"यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति" ॥**
**इत्यपि निगमो भवति ॥ ७ ॥**

"वम्रीभिः, उपजिह्विका"—"इति" एते "सीमिकानाम्" नामनी भवतः । याः एताः 'पिपीलिका' इत्युच्यन्ते लोके, ता इमाः सीमिकाः ॥ "वम्र्यो वमनात्" ता हि वमन्त्युदकं येन मृदार्द्रीभवति ॥

१ 'गच्छति' ॥

"सीमिकाः स्यमनात्" स्यमन्ति हि ता नित्यमेव गच्छन्ति—इत्यभिप्रायः ॥

"उपजिह्विका उपजिघ्र्याः" उपजिघ्रन्ति हि ताः, पटु ह्यासां घ्राणेन्द्रियं भवति । द्वयोरपि * नाम्नोरेक एव "निगमः"—यदत्त्युपजिह्विका ( ऋ० सं० ६, ७, १२, ६ )"—"इति" "भवति" ॥

"यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति ॥
सर्वं तदस्तु ते घृतम् ॥ ( ऋ० सं० ६, ७, १२, ६, )" ॥

भार्गवस्य प्रयोगस्येयमार्षम् । उक्थेऽग्नौ समिदनया हूयते ॥ "यत्" "अत्ति" भक्षयति "उपजिह्विका" अन्तरनुप्रविश्य, "यत्" च "अतिसर्पति" आर्द्रया मृदा परिवेष्टयन्, "वम्रः" वहिर्न शक्नोत्यत्तुं खदिरसारादि, 'सर्वं' तदुभयजातीयमपि 'ते' तव हे भगवन् ! अग्ने ! 'घृतम्' अस्तु ॥ ३ । २० । ७ ॥

## ऊर्दरं कुदरमित्यावपनस्य ॥
## ऊर्दरमुद्दीर्णं भवन्ति ऊर्जे दीर्णं वा ।
## "तमूर्दरं न पृणता यवेन"
## इत्यपि निगमो भवति ।

---

* वस्तुतस्तु—
वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आजभर्थ ।
व्यन्धो अख्यदहिमाददानो निर्भूदुखच्छित्समरन्त पर्व ॥ (ऋ०सं०३,६,२,४)

इत्ययं निगमो लेखकप्रमादाद् भ्रष्टो भवेत् । अस्य व्याख्या सायणकृतैव दर्श्यते—हे 'हरिवः !' हरिसंज्ञाश्वोपेत इन्द्र ! त्वं "वम्रीभिः" उपजिह्विकाभिः "अदानम्" अद्यमानम् "अग्रुवः" अग्रूनामिका काचित्, तस्याः 'पुत्रं निवेशनात्' वल्मीकाख्यात् स्थानात् 'आजभर्थ' आहृतवानसि । 'आददानः' इन्द्रेणाह्रियमाणः अग्रुवः पुत्रः पूर्वम् "अन्धः" सन् 'अहिं' सर्पं 'व्यख्यत्' विशेषेणापश्यत् । ततो 'निर्भूत्' वल्मीकात् निर्गतोऽभवत् 'उखच्छित्' वल्मीकाख्याया उखायाश्छेदकानि 'पर्व' पर्वाणि अस्य सर्वाणि अङ्गानां शिथिलानि पर्वाणि 'समरन्त' समगच्छन्त, उपजिह्विकाभिः शिथिलीकृतानि अग्रुवः पुत्रस्य पर्वाणि इन्द्रेण समधीयन्तेर्थः ॥

१ इतोग्रे-'ता' तत् च वृतीभूतं, त्वं 'जुषस्व' संसेवस्व हे 'यविष्ठ्य' युतवतम ! इति लिखितं मुद्रितं चास्ति, परं तस्य क्वापि संबंधो नावगम्यते । एतेन तर्क्यते—मध्ये कश्चिन्मन्त्रः सव्याख्यानः खण्डितो जात इति ॥

**तमूर्दरमिव पूरयति यवेन ॥ कृदरं कृतदरं भवति ।**
**"समिद्धो अञ्जन् कृदरं मतीनाम्"** — = आवपनम्
**इत्यपि निगमो भवति ॥ ८ ॥ २० ॥**

"ऊर्दरम्, कृदरम्"—"इति" एते "आवपनस्य" नामनी भवतः । उप्यते यस्मिन् यवादि धान्यं कुशूलेऽन्यत्र वा वैणवादौ कस्मिंश्चित्, तदूर्दरमिति कृदरमिति च, यदावपनमाहुः प्राकृतेन लौकिकास्तदावपनमित्युच्यते ॥

"ऊर्दरम्" "उद्दीर्णम्" ऊर्ध्वं हि तद् दीर्णं "भवति" । अथ "वा" "ऊर्जे" तदर्थाय "दीर्णं" भवति । ऊर्गित्यन्ननाम, तदूतये[1] हि तत्सुषिरीभूतं भवति, शुषिरमित्यर्थः ॥

"तमूर्दरं न पृणता" "समिद्धो अञ्जन्"—इति निगमौ ( ऋ० सं० २, ६, १४, ५—य० वा० सं० २९, १ )" भवतः ॥

"अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।
तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥ ( ऋ० सं० २, ६, १४, ५ )" ॥

गृत्समदस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री ॥ हे 'अध्वर्यवः' ! 'यः' इन्द्रः 'दिव्यस्य' द्युलोकाश्रयस्य, 'वस्वः' वसुनः धनस्य, 'यः' च 'पार्थिवस्य' अन्तरिक्षलोकाश्रयस्य ( पृथिवीत्यन्तरिक्षनामसु पठितम् ), यश्च 'क्षम्यस्य' भूम्याश्रयस्य, 'राजा' अधिपतिः, "तम्" एवंगुणयुक्तम् "इन्द्रम्" "ऊर्दरं न" ऊर्दरमिव "पृणत" पूरयत "यवेन" । यथा कश्चिन्मनुष्यः उर्दरं पूरयेत्, तथा यूयमिन्द्रं 'सोमेभिः' सोमैः पूरयत । 'तद् अपः वः अस्तु' तद् वः कर्मास्तु, सर्वमन्यन्मुक्त्वेत्यभिप्रायः ॥

"समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः ।
वाजीन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥
( य० वा० सं० २९, १ ) ॥"

आप्रीसूक्तम् आध्वर्यवेऽश्वमेधे । तत्रेयं प्रथमा आप्री ॥ हे भगवन् 'अग्ने' ! "समिद्धः" सन्दीप्तः, त्वम् "अञ्जन्" गमयन्नात्मानं प्रति । "कृदरम्" आवपनं "मतीनां" देवानां हि सर्वेषां 'घृतम्' आवपनं मतीनाम्, ते हि तत्र सर्वा मतीः प्रक्षिपन्ति ममेदं स्यादिति । तदेवङ्गुणयुक्तं घृतं 'मधुमत्' मधुस्वादयुक्तम् 'पिन्वमानः'

---

१ 'तदूगुप्तये'

पिपर्ण्णित्यर्थः । अथवा देवान् प्रति 'वहल' 'वाजी' आत्मना वेजनवान् बलवान्, परेभ्यो वा भयदाता । हे 'जातवेदः' ! वहन्नेनमाश्वमेधिकं वाजिनमुच्यसे—अस्माभिः, 'प्रियम्' एनं 'वाजिनं' 'देवानां' 'सधस्थं' समानस्थानम् 'आ' आभिमुख्येन, शीघ्रतरं 'वक्षि' वह प्रापयेत्यर्थः ॥ ३ ॥ २० । ८ ॥*

रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् ।

"आ त्वा रम्भं न जिव्रयो ररम्भ" ॥

इत्यपि निगमो भवति ।

आरभामहे त्वा जीर्णा इव दण्डम् ॥

पिनाकं प्रतिपिनष्ट्येनेन ।

"अवतत धन्वा पिनाकहस्तः कृत्तिवासाः" ।

इत्यपि निगमो भवति ॥ १ ॥

"रम्भः, पिनाकम्"—"इति" एते "दण्डस्य" नामनी । "रम्भ आरभन्त एनम्" अस्खलनार्थम् । "आ त्वा रम्भं न०"—"पिनाकहस्तः कृत्तिवासाः"—इति निगमौ ( ऋ० सं० ६, ३, ४५, ५—य० वा० सं० ३, ६१ ) ॥

"आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते ।

उश्मसि त्वा सधस्थ आ ॥ ( ऋ० सं० ६, ३, ४५, ५ )"

काण्वस्य त्रिशोकस्येयमार्षम् । ऐन्द्री । गायत्री । अतिरात्रे महाव्रते च शस्यते ॥ हे भगवन्निन्द्र ! "आरभामहे" वयं "त्वा" त्वां "रम्भं न" "दण्डमिव" "जिव्रयः" "जीर्णाः" इत्यर्थः । यथा वृद्धाः केचित् दंडमारभेरन्नवष्टम्भनार्थमेवमारभामहे त्वाम् ! हे भगवन् ! 'शवसस्पते' बलस्य पते ! त्वं न आश्रय इत्यभिप्रायः । किंच, 'उश्मसि त्वा' कामयामहे त्वां नित्यमेव 'सधस्थे' समाने एव एकस्मिन् स्थाने यज्ञायतनेऽवस्थितं त्वामाभिमुख्येन यष्टुं स्तोतुं वेत्यभिप्रायः ॥

"पिनाकं" "प्रतिपिनष्ट्येनेन" हन्तीत्यर्थः ।

"एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि ॥

---

* अत्रैव विंशखण्डसमाप्तिर्दृश्यते ॥ १ अयं कोष्ठकान्तर्गतः—समाप्यो मन्त्रः—मूलोदाहरणतयात्रापेक्षितः, टीकाकारेण तु कृष्णयजुर्वेदान्मन्त्रो व्याख्यातः, अतोऽस्माभिर्महीधरभाष्यान्वितोऽयं मन्त्रोऽत्र कोष्ठकान्तर्निवेश्य प्रदर्शितो बोद्धव्यः ।

अवततधन्वा पिनाकावसः कृत्तिवासा अहिं सन्नः शिवोऽतीहि ॥ (शु० य० वा० सं० मा० शा० अ० ३ क० ६१.)"

महीधर भाष्यम् रौद्रयास्तारपङ्क्तिः—यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ साऽऽस्तारपंक्तिः । (का० ५, १०, २१) मूतयोः कृत्वा वेणुयष्ट्यां वा कूपे वा सज्जो भवतः, स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासज्जत्येतत्त इतीति । व्रीहिय-वादीन्वद्ध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूत इत्युच्यते तयोरुभयोर्मूतयो-स्त्र्यम्बकान्हविःशेषान्प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्ट्यामग्रद्वये तन्मूतद्वय-मवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति । ततो गोभि-राघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः । अथ मंत्रार्थः ॥ मूजवान्नामकश्चित्पर्वतो रुद्रस्य वासस्थानम् । अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते । हे 'रुद्र' ! 'एतत्ते' तव 'अवसं' हविशेषाख्यं भोज्यं 'तेन' सहि-तस्त्वं 'मूजवतः' पर्वतात् 'परः' परभागवर्ती सन् 'अतीहि' अतिक्रम्य गच्छ। कीदृशस्त्वम् "अवततधन्वा" अवरोपितधनुष्कः । अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तम् । तथा—"पिनाका-वसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः । यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं धनुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः ॥ (का० ५, १०, २२, २३) "कृत्तिवासाः" इत्यनवेक्षमेत्योपस्पृशन्त्यप इति । उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्तमाना मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः । मंत्रार्थस्तु हे रुद्र ! त्वं कृत्तिवासाः चर्मा-म्बरः 'नः'अस्मान् 'अहिंसन्' हिंसामकुर्वन् 'शिवः' अस्मदीयपूजया संतुष्टः कोपरहितो भूत्वा अतीहि" पर्वतमतिक्रम्य गच्छ ॥ ६१ ॥

"एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीहि ।
अवततधन्वा पिनाकहस्तः कृत्तिवासाः (कृ० य० सं०)"

एष ते रुद्र भागस्तम् इति, त्रैय्यम्बकाः पुरोडाशा अनेन मन्त्रेण वृक्षे आसज्यन्ते ॥ हे भगवन् ! 'रुद्र' ! 'एषः' 'ते' तव 'भागः' 'तम्' 'जुषस्व' 'तेन' 'अवसेन' तेन पथ्यदनेन 'परः' परस्तात् 'मूजवतः' पर्वतात् 'अतीहि' अतिगच्छ, मा अत्रैव स्थाः ॥ कथं च पुनरतीहि ? "पिनाकहस्तः" भूत्वा, "कृत्तिवासाः" चर्मवासाः, "अवततधन्वा" चैवमतीहि ॥ ३ । २१ । १ ॥

मेना ग्ना इति स्त्रीणाम् ॥
स्त्रियः स्त्यायतेरपत्रपणकर्मणः ॥
मेना मानयन्त्येनाः ।
ग्ना गच्छन्त्येनाः ।
"अमेनांश्चिज्जनिवतश्चकर्थ"।"ग्नास्त्वाकृन्तन्नपसोऽत-
न्वत" इत्यपि निगमौभवतः ॥ २ ॥

"मेनाः, ग्नाः"—"इति" एते "स्त्रीणां" नामनी ।

पर्यायाभिधानप्रसक्तमुच्यते,—"स्त्रियः स्त्यायतेरपत्रपणकर्मणः" लज्जार्थस्य । लज्जन्तेऽपि हि ताः ॥

"मेनाः" "मानयन्त्येनाः" पुरुषाः ॥

"ग्नाः" "गच्छन्ति" हि "एनाः" मैथुनेन धर्मेण ॥

"अमेनांश्चित्",—"ग्नास्त्वा कृन्तन्"—"इति" "निगमौ" ( ऋ०सं०४, १, २९, २—सा० वे० कौ० ब्रा० ता० ब्रा० १, १, ८ ) "भवतः" ॥

"आ प्र द्रव हरिवो मा विवेनः पिशङ्गराते अभि नः सचस्व।
नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ ( ऋ० सं० ४, १, २९, २ )" अन्यद् देवतान्तरम्

अवस्योरात्रेयस्यार्षम् । त्रिष्टुप् । ऐन्द्री ॥ हे 'हरिवः' !'आ' आभिमुख्येनास्मान् 'प्र' प्रकर्षेण 'द्रव' । किञ्च, 'मा विवेनः' मा विगतकामो भूरस्मत्तः । हे 'पिशङ्गराते, शोभनदान ! 'अभि' 'सचस्व' 'नः' । किञ्च 'नहि' 'अन्यत्' देवतान्तरं 'त्वत्' त्वत्तः प्रतिविशिष्टतरम् 'अस्ति' यत् प्रतिपद्येमहि । हे भगवन् ! 'इन्द्र' ! ' वस्यो' वसुमन् !॥ किं कारणम् ? "अमेनांश्चित्" अस्त्रीकानपि स्तोतॄन् "जनिवतः" एव स्त्रीमत एव "चकर्थ" करोषीत्यर्थः । यस्मात् त्वमेवङ्गुणविशिष्टः, तस्मात् च त्वामेव स्तुम इत्यभिप्रायः ॥

"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ०–० । ग्नास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्योऽवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय मयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ०–० । क इदं

कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥ "

वासःप्रतिग्रहणमन्त्रेऽनुषङ्ग एषः, मैत्रायणीयके[1], ताण्ड्यब्राह्मणे ( सा० कौ० शा० १, १, ८ ) च, अन्यास्वपि शाखासु च । तद् वास उच्यते,—हे 'वासः !' 'देवस्य' 'सवितुः' आदित्यस्य 'प्रसवे' तेन प्रसूनः अभ्यनुज्ञातः अहं त्वां 'प्रतिगृह्णामि' । 'अश्विनोः' देवयोः बाहुभ्यां प्रतिगृह्णामि । नैताभ्यामेव 'बाहुभ्याम्' स्वाभ्याम्, अपि च 'पूष्णः' देवस्य 'हस्ताभ्याम्' प्रतिगृह्णामि । किञ्च, "ग्नास्त्वा कृन्तन्" स्त्रीभिस्त्वं कर्त्तितः तन्तुकरणाभिप्रायेण[2] । "अपसः" अल्पकाः अनुपजातपुंस्त्वाः जननायासमर्थाः कुविन्दपुत्रकाः त्वाम् "अतन्वत" । ते हि कुविन्दानां परिकर्मकराः, 'धियः' धीमत्यः बुद्धिमत्यः, कुशलाः 'वयित्र्यः' त्वाम् 'अवयन्' कुविन्दस्त्रियः कृतवत्यः । तदेवमभिनिष्पन्नं त्वां 'मह्यं' 'बृहस्पतये' बार्हस्पत्ये आत्मव्यवस्थिताय 'वरुणः' देवताविशेषः 'ददाति' उदकपूर्वकं त्वं दीयसे । सोऽहम् एवङ्गुणयुक्तः त्वां प्रतिगृह्य 'अमृतत्वम्' अमृतभावं यथाभिसंहितमेव[3] 'अशीय' अश्नुयाम् त्वं प्रतिगृह्यमाणं वासः, तव प्रसादात् ममैवमेतत् स्यात्,—अमृतभावान्मम मा खण्डनं कार्षीरित्यभिप्रायः ॥ किंच, 'मयः' सुखं 'दात्रे' 'भूयात्' भवतु । 'मयः' सुखं 'मह्यं' 'प्रतिग्रहीत्रे' च । किंच, 'कः' प्रजापतिरयं 'कस्मै' प्रजापतये एव 'अदात्' ददाति । योऽप्ययं ददाति सोऽप्ययं दाता, अयमपि प्रजापतिरेवेत्यभिप्रायः । वक्ष्यति हि,—"क ईषते तुज्यते कः—( ऋ० सं० १, ६, ८, २ )"इति किंच, 'कामः' 'कामाय' एव 'अदात्' तद्ददाति । पुण्यं भविष्यतीत्यनेन 'कामेन' 'दाता' ददाति, आच्छादनं भविष्यति इति इतरः प्रतिगृह्णाति । एवं 'कामो दाता' 'कामः प्रतिग्रहीता' । स एव काम उच्यते,—हे 'काम' । 'एतत् ते' 'वासः' सकामो भव—इति ॥ ३ । २१ । २ ॥

**शेपो वैतस इति पुंस्प्रजननस्य ।**
**शेपः शपतेः स्पृशतिकर्मणः ।**
**वैतसो वितस्तं भवति ।**
**"यस्यामुशन्तः प्रहराम शेपम्" ।**
**"त्रिः स्म माह्नः श्नथयो वैतसेन" ।**
**इत्यपि निगमौ भवतः ॥ ३ ॥**

---

१ 'मैत्रावरुणीयके' ॥ २ 'सूत्रकर' ॥ ३ 'भिलषितमे' ॥

"शेपः, वैतसः"–"इति" एते नामनी "पुंस्प्रजननस्य" ॥

"शेपः शेपतेः" "स्पृशतिकर्मणः" स्पृशत्यर्थस्य । स्पृश्यते हि तेन स्त्री ॥

"वैतसो वितस्तं भवति" । उपक्षीणं तद् भवति प्रागनुस्मरणात् स्त्रियाः ॥

"यस्यामुशन्तः"–"त्रिः स्म माह्नः"–"इति" "निगमौ ( ऋ० सं० ८, ३, २७, २–८, ५, १, ५ ) भवतः ॥"

"तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ ( ऋ० सं० ८, ३, २७, २ )" ।

सूर्य्याया आर्षम् । कन्याप्रथमोपगमे विनियोगः ॥ हे भगवन् ! 'पूषन् !' 'ताम्' योनिम्, 'ईरयस्व' 'यस्यां' योनौ 'बीजं' शुक्रम् 'मनुष्याः वपन्ति' त्वत्कृतयोनिपोषे बीजमेतस्यामर्थवत् स्यात्, त्वदधीनो हि योनिपोष इत्यभिप्रायः ॥ 'या' इयम् 'नः' अस्माकम् 'ऊरू' 'उशती' कामयमाना स्त्री 'विश्रयाते' नानाप्रकारमाश्रयते । तस्या या योनिः, ताम् ईरयस्व उद्गमय बीजग्रहणाय सुपुष्टां कुरुष्व । "यस्यां" योनौ "उशन्तः" पुत्रजन्म कामयमानाः "प्रहराम" प्रक्षिपेम इमं "शेपम्" ॥

"त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि ।
पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१ स्तदासीः ॥ ( ऋ० सं० ८, ५, १, ५ )" ।

उर्वश्या आर्षम् । त्रिष्टुप् । सा पुरूरवसा मा गास्तिष्ठेत्युक्ता सती अनयर्चा पुरूरवसं प्रत्यब्रवीत् । हे 'पुरूरवः !' "त्रिः स्म माह्नः" त्रिरह्नो माम् "श्नथयः" अताडयः[३] त्वम् "वैतसेन" शिश्नदण्डेन पूर्वम् । 'उत स्म मे' अपि च यावान् कश्चिदभिलाषो मम मनस्यासीत् तं सर्वमेव त्वम् 'अव्यत्यै' 'पृणासि' व्यतिपूरितवानेवासि । अतस्तवाहम् 'अनु आयम्' अनुगतवती । 'केतम्' चेतसा अनुकूला तवाहमभवमित्यर्थः । किंच, हे 'वीर!' तदा तथानुकूलायाः सत्याः 'राजा' ईश्वरः त्वम्, अस्याः 'तन्वः' मच्छरीरस्य 'तदा आसीः' तदानीं त्वम्, सम्प्रति न तथा वर्त्तसे, यथा पूर्वम्, अतस्त्वयेदानीं नाहं समेष्ये–इत्यभिप्रायः ॥ ३ । २९ । ३ ॥

## अयैनेत्युपदेशस्य ।

## "अया ते अग्ने समिधा विधेम" इति स्त्रियाः ।

१ 'पशतेः ॥ २ त्यर्थे वर्तमानस्य' ॥ ३ 'अताडीः' ॥

"एना वो अग्निम्" इति नपुंसकस्य ।
"एना पत्या तन्वं १ संसृजस्व" इति पुंसः ॥ ४ ॥

"अया, एना"—"इति" एते नामनी "उपदेशस्य"।
स पुनरुपदेशः स्त्रीपुन्नपुंसकेषु भिन्नो[1] भवति, अतस्त्रिष्वपि प्रदर्श्यते ॥

तत्र—

"अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्य१स्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥ ( ऋ० सं० ३, ४, २५, ५ )"

इति "स्त्रियाः" उपदेशः ॥ वामदेवस्येयमार्षम् । त्रिष्टुप् । रक्षोघ्ने कर्मणि विनियोगः ॥ हे भगवन् "अग्ने!" "अया" अनया "समिधा" "ते" तव "विधेम" परिचर्य्यां कुर्मः । स त्वमेवमस्माभिः परिचर्य्यमाणः शृणु यत् कुरुष्व 'प्रतिगृभाय' प्रतिगृह्य[2] इमं 'स्तोमं' स्तोत्रम्, अस्माभिः 'शस्यमानम्' उच्चार्यमाणम् । 'दह' एतान् 'अशसः' अशंसितॄन् अस्तोतॄन्, आत्मनः 'द्रुहः' च दोग्धॄन्, 'अस्माकम्' । एतान् 'रक्षसः' राक्षसान् 'निदः' निन्दितॄंश्च । किंच, 'पाहि' रक्ष 'अस्मान्' हे 'मित्रमहः' मित्राणां पूजयितः! 'अवद्यात्' अवन्दनीयात् कर्मणः, पापादित्यर्थः ॥

"एना वो अग्निं नमसोर्जो नपातमाहुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ (ऋ० सं० ५, २, २१, १)" ॥

इति "नपुंसकस्य" उपदेशः । वसिष्ठस्यार्षम् । बृहती । प्रातरनुवाकाश्विनयोः शस्यते ॥ "एना वः" अनेन युष्माकं 'नमसा' अन्नेन अभ्युद्यतेन 'ऊर्जोनपातम्' अपां पौत्रम्, अथवा अन्नानां पौत्रम्, आहुतिभ्यः आपः, अद्भ्यः अग्निः एनया प्रणालिकया अन्नस्य पौत्रोऽग्निः । तम् 'ऊर्जोनपातम्' "अग्निम्" 'आहुवे' आह्वये । किंलक्षणम्? 'प्रियम्' इष्टम्, देवानां मनुष्याणां च 'चेतिष्ठम्' अतिशयेन चेतनावन्तम्, 'अरतिम्' अलमतिं पर्य्याप्तमतिम्, 'स्वध्वरं' शोभनयज्ञम्, 'विश्वस्य' यजमानगणस्य, एष योऽधिकृतः कर्मणि, तस्य 'दूतम्' 'अमृतम्' अमरणधर्माणम् । हे ऋत्विग्यजमानाः! तं वः आशासमृद्धये अहमाह्वये । स चाहूतो देवान् प्रति दौत्यं करिष्यतीत्यभिप्रायः ॥

"एना पत्या तन्वं १ संसृजस्व (ऋ० सं० ८, ३, २५, २ )"—"इति" "पुंसः" उपदेशः ।

---

१ 'भिन्नलिंगो' २ 'प्रतिगृहाण' ॥

"इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं सं सृजस्वाधा जिव्री विदथमा वदाथः ॥ ( ऋ० सं० ८, ३, २५, २ )"

इति सूर्याया आर्षम् । जगती । वधूरनया गृहान् प्रवेश्यते, सोच्यते । हे वधु ! 'इह' एव 'अस्मिन् गृहे' 'प्रजया' युक्तायाः सत्याः 'ते' तव यत् 'प्रियं' तत् 'समृद्ध्यतां' । किञ्च, अस्मिन् गृहे त्वं 'गार्हपत्याय जागृहि' गृहपतिभावाय अवहिता भवेत्यर्थः । किञ्च, "एना पत्या" अनेन भर्त्रा सह "तन्वं" तनुं "संसृजस्व" मिश्रीकुरु । अथैवं सौमनस्ये वर्तमानौ "जिव्री" जीर्णौ यावत् तावत् अवियुज्यमानौ परस्परेण 'विदथं' यज्ञम् 'आ' आभिमुख्येनावस्थितौ सन्तौ यज्ञसम्बन्धीनि वचांसि वदतम्-इत्याशीः ॥

"एना वो अग्निं नमसा", "एना पत्या"—इति समानेऽप्येना शब्दे स्वरान्ते एकस्मिन्नुपपदविशेषादेकस्य नपुंसकविषयत्वमेकस्य पुरुषविषयत्वम् । एकत्र नम इत्युपपदम्, एकत्र पतिशब्दः ॥ ३ । २१ । ४ ॥

**सिषक्तु सचत इति सेवमानस्य ।**
**"स नः सिषक्तु यस्तुरः ।" सेवतां यस्तुरः । "सचस्वा नः स्वस्तये ।" सेवस्व नः स्वस्तये ।**
**स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः सु अस्तीति ५॥**

"सिषक्तु, सचते"—"इति" एते नामनी "सेवमानस्य" ।

"स नः सिषक्तु",—"सचस्वा नः"—इति निगमौ ( ऋ० सं० १, १, ३४, २–१, १, २, ४ ) भवतः" ॥

"यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्द्धनः ।
स नः सिषक्तु यस्तुरः ॥ ( ऋ० सं० १, १, ३४, २ ) ।"

मेधातिथेरार्षम् । अग्न्युपस्थाने विनियुक्ता । "सोमानं स्वरणम् ( ऋ० सं० १, १, ३४, १ )"—इत्यस्या ब्राह्मणस्पत्याय इयमनन्तरा, तेनेयमपि ब्राह्मणस्पत्यैव स्यात् । उक्तं चाह्वरकाणां ब्राह्मणस्पत्याभिरग्निमुपतिष्ठेतेति ! हे भगवन् ! ब्रह्मणस्पते ! 'यः' 'रेवान्' रयिमान्, धनवान्, 'अमीवहा' अभ्यमनहा, रोगहा, 'वसुवित्' च वसुनो धनस्य अपूर्वस्यापि लब्धा, यश्च 'पुष्टिवर्द्धनः' धनपोषस्य वर्द्धयिता, "सः" "नः" अस्मान् "सिषक्तु" "सेवताम्" पुत्रः शुभमस्मत्सकाशात् 'यः' च 'तुरः' तूर्णकारी पटुरित्यर्थः ॥

"स नः पितेव सूनवेऽग्ने सूपायनो भव ।

"सचस्वा नः स्वस्तये ॥ ( ऋ० सं० १, १, २, ४ )" ।

मधुच्छन्दस आर्षम् । अग्न्युपस्थाने विनियुक्ता[1] । हे भगवन् ! 'अग्ने!' यं त्वां वयं परिचराम, 'सः' 'नः' अस्माकं 'सूनवे' पुत्राय 'सूपायनः' सूपगमनः, सूपचारः 'भव' सूपचीर्णश्च "आसचस्व" "नः" "स्वस्तये" स्वस्त्ययनाय ।

निगमप्रसक्तमुच्यते,–"स्वस्तीति" एतत् "अविनाशिनाम" अविनाशिनः अर्थस्य नाम । अन्ये त्वधीयते,–"अविनाशनाम" इति । तेषाम् अविनाशस्यैव नाम ।

तत्त्वमुक्तम्, अधुना व्युत्पत्तिं ब्रवीति–"अस्तिः" अयम् "अभिपूजितः" सुपूर्वः समुच्यते "सु अस्ति"–"इति" ॥ ३ । २१ । ५ ॥

**भ्यसते रेजत इति भयवेपनयोः ।**
**"यस्य शुष्माद्रोदसी अभ्यसेताम्" ।**
**"रेजते अग्ने पृथिवी मखेभ्यः"**
**इत्यपि निगमौ भवतः ॥ ६ ॥**

"भ्यसते, रेजते"–"इति" एते नामनी "भयवेपनयोः" ।

"यस्य शुष्माद्रोदसी"—"रेजते अग्ने पृथिवी"—"इति" "निगमौ" ( ऋ० सं० २, ६, ७, १—५, १, ८, ४ ) "भवतः" ॥

"यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ॥

यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ ( ऋ० सं० २, ६, ७, १ ) ।"

उपरिष्टाद् व्याख्येयः ॥

"प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।

ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ( ऋ० सं० ५, १, ८, ४ ) ।"

भरद्वाजस्येयमार्षम् । त्रिष्टुप् । चातुर्मास्ये वैश्वदेवे पर्वणि याज्या । "अग्निमारुतीं पृश्निमालभेत वृष्टिकामः"—इत्यस्य पशोः षडर्चे चेयम् ॥ हे स्तोतारः ! 'चित्रम् अर्कम्' चायनीयं स्तोमं 'गृणते' स्तुवते, स्तनयित्नुशब्देन कृत्स्नं जगत् उपशब्दायते ।

---

[1] 'विनियोगः' ॥

'तुराय' त्वरमाणाय 'स्वतवसे' स्वात्मबलावष्टम्भिने 'मारुताय' मरुतां गणाय 'प्रभरध्वं' प्रहरध्वम् । कीदृशानां पुनर्मरुतां गणाय यस्मै प्रभरध्वम् इति? 'ये'मरुतः 'सहसा' स्वेन बलेन 'सहांसि' परेषां बलानि 'सहन्ते' अभिभवन्ति, "रेजते" बिभेति, कम्पते वा ॥ केभ्यः मरुद्भ्यः? 'पृथिवी मखेभ्यः' मरुद्भ्य इत्यर्थः । य एवङ्गुणयुक्ता मरुतः, तेषां यो गणः, तस्मै प्रभरध्वम् चित्रमर्कम् । त्वमपि हे 'अग्ने'! वहैतद् द्रव्यं तेभ्यः यदा तावन्मारुतमेव केवलं हविस्तदैवमग्निरप्रधानः,यदा पुनराग्निमारुतं तदा भरध्वं चित्रमर्कम् अग्नये मारुताय च गणायेति स्तोतॄन् सम्बोध्य ततोऽग्निं ब्रवीति,—हे भगवन्नग्ने! शृणु त्वमप्येतमर्कमेवङ्गुणयुक्तैर्मरुद्भिः सह गृहाणेति ॥ ३ ॥ २१ ॥ ६ ॥

## ( अथ द्यावापृथिव्योर्नामधेयानि )

स्वधे । पुरंधी । धिषणे । रोदसी । क्षोणी । अंभसी । नभसी । रजसी । सदसी । सद्मनी । घृतवती । बहुले । गभीरे । गंभीरे । ओण्यौ । चम्वौ । पार्श्वौ । मही । उर्वी । पृथ्वी । अदिती । अह्नी । दूरेअन्ते । अपारे अपारे इति चतुर्विंशतिर्द्यावापृथिव्योर्नामधेयानि ॥ ३० ॥

उर्वं[1]ह्नन्मुहद्भ्यं इरज्यति शिबातां निर्णिगंस्त्रैमाकेतुर्बट्ठचिक्यद्धिकंमिदमिवाचंतिविप्रोरेभोयज्ञोभरताईमहेदातिपरिस्रवस्वापतिकूपस्तृपुर्निण्यभाकेप्रत्नंनवंप्रपित्वेस्वधेत्रिंशत ॥

इति निघण्टौ तृतीयोऽध्यायः ॥ ३ ॥

---

१ 'महद्भ्य इ' ॥

द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः ॥ ७ ॥ २१ ॥

"द्यावापृथिवीनामधेयानि" एभ्यः "उत्तराणि" द्विसम्बन्धेनैवोच्यन्ते ॥ कियन्ति पुनस्तानि ? "चतुर्विंशतिः" २४ । कतमानि पुनस्तानि ? स्वधे । पुरन्धी—इत्येवमादीनि । सर्वस्यास्य भूतग्रामस्य धारयित्र्यौ स्वधे । पुरन्धी पुरु बहूनि धारयित्र्यौ इत्येवमादि योज्यम् ॥ ३ । २१ । ७ ॥

तयोरेषा भवति—

द्विवचनेन युक्तानि द्यावापृथिव्योर्नामानि, "तयोः" साहचर्याख्यायिका "एषा" ऋक् "भवति" साहचर्ये हि सति द्विवचनयोग उपपन्नरूपो भवति नाम्नाम्— *

"क॒त॒रा पूर्वा॒ क॒त॒राप॑रा॒योः क॒था जा॒ते क॑वयः॒ को वि वे॑द । विश्वं॒ त्मना॑ बिभृतो॒ यद्ध॒ नाम॒ वि व॑र्तेते॒ अह॑नी च॒क्रिये॑व ॥"

कतरा पूर्वा कतरापरा । एनयोः कथं जाते कवयः क एने विजानाति । सर्वमात्मना बिभृतो यद्धैनयोः कर्म विवर्त्तेते चैनयोरहनी अहोरात्रे चक्रियेव चक्रयुक्ते इवेति द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे ॥ १ ॥

"कतरा पूर्वा कतरा"०—इति ( ऋ० सं० २, ५, २, १ ) अगस्त्यस्यार्षम् । त्रिष्टुप् । पृष्ठ्याभिप्लवयोः षष्ठेऽहनि महाव्रते च तृतीये सवने वैश्वदेवे शस्त्रे शस्यते ॥ स्वयमेव तावद्वितर्कयन्नुत्पन्नसंशयो मन्त्रदृग् ब्रवीति—"कतरा" अनयोः द्यावापृथिव्योः "पूर्वा" "कतरा" तु "अपरा" ? न हि पौर्वापर्यमनयोः स्फुटं लक्षयितुं शक्यते । "कथा" केन प्रकारेण एते "जाते" स्याताम् ? किं पौर्वापर्येण, उत युगपद् भवेताम् ? अपि तावत् हे 'कवयः' ! "कः विवेद" ? कश्चिदपि विस्पष्टं न जानाति । अहं त्वेतावच्छक्नु-

* अत्रैवैकविंशखण्डसमाप्तिर्दृश्यते, सा 'द्विवचनेन युक्तानि' इत्यतः प्रागुचिता ॥

यामागमाद् वक्तुम्,—तस्मादुद्भूतस्य हिरण्मयस्याण्डस्यैते शकले इति । एवं ह्याह— "ते अण्डकपाले रजतं च सुवर्णं चाभवताम्, तद्यत् रजतं, सेयं पृथिवी, यत् सुवर्णं, सा द्यौः"—इति। तेन ज्ञायते युगपदेवैते उत्पन्ने स्यातामिति । किंच "विश्वं" सर्वं "त्मना" आत्मनैव "बिभृतः" धारयतः "यद्ध नाम" यदर्थमनयोर्नाम नमनम्, यस्माद् भूतग्रामधारणार्थम् एतेन विपरिणामत्वेन, तत् सर्वमेते बिभृतः । किंच, "विवर्त्तेते" "च" विपर्ययेण वर्त्तेते च "एनयोः" एव अन्तर्भूते "अहनी" "अहोरात्रे" "चक्रियेव" "चक्रयुक्ते इव" चक्रयुगलमिव अवियोगेन संयुक्ते, सम्बद्धे इत्यर्थः ॥

मन्त्रव्याख्यानेन गतार्थमेतदभाष्यामिति ॥

"द्यावापृथिव्योर्महिमानमाचष्टे"—इति । एतदनेन मन्त्रेण द्यावापृथिव्योर्महिमानं महाभाग्यं मन्त्रदृगाचष्टे ॥ ३ । २२ । १ ॥

एवमेतन्नैघण्टुकं प्रकरणं परिसमाप्तम्, अतःपरमैकपदिकं भवति । तस्यायमादिः,— "एकार्थमनेकशब्दमिति"—इत्येवमादि ॥ *

## कर्म[1]नामानिपरिषद्य[2]न्नह्रि[3]भ्रभायशासद्ध[4]ह्वि[5]रभ्रातेवन[6]जाम-ये[7]मनुष्यनामानि[8]तद्य[9]दशावनिभ्यो[10]ऽभीदंत्वया[11]वयं[12]यत्रासुप-र्णा[13]बहुनामानि[14]तनूत्यजेव[15]कुहस्वि[16]च्चतुरश्चि[17]त्प्रियमेधव[18]दथलुप्तो-पमान्य[19]र्चतिद्विषो[20]रम्भः[21]कतरापूर्वा[22] द्वाविंशतिः ॥

## इति निरुक्ते पूर्वषट्के तृतीयोऽध्यायः ॥ ३ ॥

इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ

॥ तृतीयो ( अष्टमो ) ऽध्यायः समाप्तः ॥ ३ ॥

इति नैघण्टुकं काण्डं समाप्तम् ॥

---

१ 'यस्या' ॥ * इतोऽग्रे द्वाविंशखण्डसमाप्तिरवसेया ॥ "इति निरुक्तवृत्तौ तृतीया- ( अष्टमा ) ध्यायस्य चतुर्थः पादः ॥ ३, ॥ ४ ॥" इति चोपलभ्यते ॥

# अथ नैगमं काण्डम् ।

## अथ चतुर्थाध्यायः ४.

ॐ । एकार्थमनेकशब्दमित्येतदुक्तम् ॥ १ ॥

मङ्गलाचरणम्[1] ।

पुनःपुनः पादयुगार्दनाय प्रवर्तमानस्य सरोजबुद्ध्या ।
हंसस्य नित्यं निकटस्थितस्य निषेधनिष्ठां प्रणमामि वाणीम् ॥ १ ॥

"एकार्थमनेकशब्दमित्येतदुक्तम्" । :किमर्थमिदमुच्यते ? न हि यद्यद् वृत्तं तत्तद् वक्तव्यम्, इदं वृत्तमिदं वर्त्तिष्यत इति । यद्यद् वृत्तं तत्तदनुक्तमपि प्रतीयते, यच्च वक्ष्यमाणमिति । आह—सङ्क्षेपतो निगमनाय यदुक्तं यद्वा वक्तव्यं प्रतिजानीथ, समासविस्तराभ्यां हि सुखमाधस्त्यं प्रकरणमवधारयिष्यामहे, गृहीतार्थं संक्षेपाच्च विस्तरेणोत्तरग्रन्थमुच्यमानं सुखमवभोत्स्यामहे । अपि चोक्तमन्यत्रापि,—

"विस्तीर्यं हि महज्ज्ञानमृषिः[2] संक्षेपतोऽब्रवीत् ।
इष्टं हि[3] विदुषां लोके समासव्यासधारणम् ॥"

शृणु—समासतो यदुक्तं यच्च वक्तव्यम् एकार्थमनेकशब्दमिति—एतत् पुरस्तात् सूचितम्—'एतावन्तः समानकर्माणो धातवः, एतावन्त्यस्य सत्त्वस्य नामधेयानि—'इत्यनेन वाक्येन । यदेतत् "गौरिति पृथिव्या नामधेयम्"—इत्यत आरभ्य नामाख्यातोपसर्गनिपातानां प्रपञ्चनं च, तत्त्वभेदपर्यायसङ्ख्यासन्दिग्धोदाहरणतन्निर्वचनव्याख्याप्रविभागेनोक्तम् । स एष नैघण्टुकस्य प्रकरणस्य निगमव्याजेन सर्वथाऽप्यर्थः सङ्क्षेपत उक्तः।शास्त्रसम्बन्धश्चैवमनुसृतो भविष्यति । प्रकरणद्वयस्य चास्यैवमपुनरुक्तता प्रदर्शिता भविष्यतीत्यनेनाभिप्रायेण एकार्थमनेकशब्दमित्युक्तम् । एकोऽर्थः पृथिव्यादिः, अनेकेषां गवादिशब्दानाम्, यत्र तत्त्वभूतः कथ्यते, अनेके च गवादिशब्दाः पृथिव्यादेरेकस्यार्थस्य यत्राभिधायिनः कथ्यन्ते, तदिदमेकार्थमनेकशब्दं प्रकरणम् । अत्रैकेनार्थेनानेके शब्दा लक्ष्यन्ते, अनेकैश्च शब्दैरेकोऽर्थः । ततो लक्षितलक्षणया वृत्त्या प्रकरणं लक्ष्यते । अत्र पुनर्यद्यपि गतिकर्मणां द्वाविंशतिशतसंख्यानामविशिष्टं गमनमेकोऽर्थ उक्तः, तथापि प्रसिद्ध्यनुरोधाय

१ ग्रन्थमध्ये इदं मङ्गलाचरणं व्याख्याकर्त्तुः, महाभाष्यानुज्ञानुस्मरणात् । २ 'तमज्ञानम्' ॥ ३ 'इत्थं हि' ॥

"कसति", "लोठते", "श्रोतते"—इत्येवमादयः प्रतिनियतसत्त्वगमनविषया एव द्रष्टव्याः । तद्यथा—य एवोत्कटिक उरसा वा गच्छति, स एव कसतीत्युच्यते, नेतरो य ऊर्द्ध्वो गच्छति । तथा च—य एव निम्नेन प्रदेशेन कश्चिदचेतनो लोष्ठादिरन्यो वा चेतनः पुरुषादिः अकामकारेण गच्छति, स एव लोठत इत्युच्यते, नान्यः । तथा च—यदेव द्रवद्रव्यं किञ्चित् स्रवति, तदेव श्रोतत इत्युच्यते, नान्यत् । एवं गच्छतिकर्मणामेकार्थत्वेऽपि सति प्रसिद्धिसामर्थ्याद् गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः । देशान्तरप्राप्तिस्तु चलनपूर्विका, सर्वेषां समानं कार्यम्, इत्यत एकार्थत्वमेषामुक्तम् । सामान्यशब्दाश्च क्वचिद् विशेषवाचिनो भवन्ति, विशेषशब्दाश्च क्वचित् सामान्यवाचिनः, तदप्युपेक्षितव्यम् ॥ ४ । १ । १ ॥

## अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः ॥२॥

एकार्थमनेन समासतो नैघण्टुकं प्रकरणमनुसृतम्, "अथ" इदानीं यद्व्याख्यातव्यं, तत् समासतः प्रतिज्ञायते—"यानि अनेकार्थानि एकशब्दानि" पुरस्तात् समासतः सूचितानि, एतावतामर्थानामिदमभिधानमित्येवम्, "तानि" "अतः" परम् "अनुक्रमिष्यामः" व्याख्ययेत्याभिसम्बन्धः । किंलक्षणा पुनरिह व्याख्या ? इति । तदुच्यते—

"तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि ।
निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे ॥"

यान्येतानि दयत्यकूपारादीनि पदानि अनेकैरर्थैरुपदयादानदहनहिंसादिभिरर्थवन्ति, यानि चैतान्यर्थजातान्युपदयादानदहनहिंसादीनि, एकशब्दवाच्यानि, तान्येवमितरेतरविशेषणविशेष्यभावलक्षणोपलक्षितानि एकप्रकरणतामुपगतानि, एवम्प्रकारया ऐकपदिकप्रकरणव्याख्यया अनुक्रमिष्यामः वर्णयिष्याम इत्यर्थः, अत्रार्थस्याप्रतीयमानस्य पर्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या, शब्दस्यापि व्युत्पादनं व्याख्या । एवमेते द्वे व्याख्ये । तयोरर्थपरिज्ञानमेकस्याः कार्यम्, शब्दपरिज्ञानमेकस्याः । तदेतदुभयमप्येकैकस्मिन् नैगमे पदे यथासम्भवं व्याख्यास्यते ॥ ४ । १ । २ ॥

## अनवगतसंस्कारांश्च निगमान् ॥ ३ ॥

आह—किमनेकार्थान्येव केवलानि अस्मिन् प्रकरणे व्याख्यायन्ते ? नेत्युच्यते—"अनवगतसंस्कारांश्च निगमान्" । अनवगतसंस्कारान् अविज्ञातसंस्कारानित्यर्थः । येषां प्रकृतिप्रत्ययादिसंस्कारो न साकल्येन ज्ञायते, तांश्च निगमान् अत्रैव व्याख्यास्यामः । पूर्वाणि चानेकार्थानि अनवगतसंस्कारांश्चेति चशब्दः ॥ ४ । १ । ३ ॥

---

१ 'तुद्रुतम्' ॥ २ 'ज्ञामितः' ॥ ३ 'तत्रै' ॥

तदैकपदिकमित्याचक्षते ॥ ४ ॥ १ ॥

तदेतदेवम्प्रकारं प्रकरणं, यत्रैतदुभयं व्याख्यायते "ततः" "ऐकपदिकम्" "इति" अनेन नाम्ना अन्येऽप्याचार्य्याः "आचक्षते" निरूढा हीयमस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः । पूर्वस्मिन् प्रकरणे गणशः पदानां विरचनामपेक्ष्यैतदैकपदिकमुच्यते, अत्र त्वेकैकमेव पदं समाम्नातम् । तद्यथा,—"जहा, निधा"—इत्येवमादीनि । यत्र पुनः क्वचिदनेकान्यपि समाम्नातानि, तद्यथा—"देवो देवाच्या, कृपा" "सोमो अक्षाः"—इत्येवमादीनि, तत्रैव तत्प्रयोजनं वक्ष्यामः ॥ ४ । १ । ४ ॥

# अथ निघण्टुचतुर्थोऽध्यायः ४.

## ( अथ द्विषष्टिः पदानि )

## ॥ हरिः ॐ ॥ जुहा ॥ १ ॥

जहा जघानेत्यर्थः—

एवं प्रकरणार्थं संक्षेपतः प्रतिज्ञाय क्रमेण वर्णवृत्तित्वाच्च प्रथमं यत् पदं, तदुपादीयते,—"जहा ( १ )"—इति । आह—किमेतदनवगतसंस्कारमुतानेकार्थम् ? उच्यते—अनवगतसंस्कारम् । कथम् ? 'जघान' इत्येवमवस्थितेन अनवगतसंस्कारेण योऽर्थ उच्यते स च जहेत्यनेनानुपपन्नसंस्कारेणोक्तो भवति । अत्र हन्तेर्जहातेश्च सन्देह इति भाष्यकारेणावधृतं "जघानेत्यर्थः"—इति ॥ आह—कुतः पुनर्विशेषावधारणम्—हन्तेरेवात्र रूपम्, न पुनर्जहातेः ? इति । उच्यते—निगमात्—

"को नु मर्या अमिथितः सखा सखायमब्रवीत् । जहा को अस्मदीषते ।"

मर्या इति मनुष्यनाम । मर्यादाभिधानं वा स्यात् ।
मर्यादा मर्यैरादीयते । मर्यादामर्यादिनोर्विभागः ॥
मेथतिराक्रोशकर्मा ।
अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते ॥ १ ॥ २ ॥

कतमः पुनरसौ निगमः ? इत्याह, *—"को नु मर्याः० ( ऋ० सं० ६, ३, ४९, २ )"—इति । त्रिश्लोकस्येयमार्षम् । गायत्री । महाव्रते महदुक्थे तृचाशीतिषु शस्यते ॥ अस्यामृचि जहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरणशब्दसारूप्यार्थोपप-

१ 'ध्येकै' ॥ * अत्रैव प्रथमखण्डसमाप्तिर्दृश्यते, सा 'एवं प्रकरणार्थम्' इत्यतः प्रागुचिता ॥

त्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः ॥ कथम् इति, शृणु—

"मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु ।
वधीर्मा शूर भूरिषु ॥ (ऋ० सं० ६, ३, ४८, ४)" ।

'मा' 'नः' 'एकस्मिन् आगसि' 'वधीः' हे 'शूर !' 'मा' 'द्वयोः' आगसोः वधीः। 'उत' अपि च 'त्रिषु' अपि आगस्सु मा वधीः । 'भूरिषु' अपि च बहुतरेषु अपि अपराधेषु 'मा वधीः' इति । एतस्मिन् प्रकरणे ब्रवीति—"को नु मर्याः"—इति । हे मर्याः मनुष्याः ! युष्मानेव तावत् पृच्छामि,—"अमिथितः" अनाक्रुष्टः, परुषमपि वा किञ्चिदनुक्तः, अपि च "सखा" समानख्यानः, "सखायम्" एव समानख्यानमेव सन्तम् यथा भवतामहं यज्ञे समानख्यानः, एवं सन्तम् "अब्रवीत्" । को न्वेवमाह ?— अमिथितः अनाक्रुष्टो ब्रूयाद् यः कश्चित्, यथा यूयमनाहताः सन्तो मा ब्रूत-'मा वधीः' इति । "जहा को अस्मदीषते" । अपापकशब्दोऽत्र भाष्यकारेणाध्याहृतः प्राक् जहाशब्दस्य अर्थोपद्योतनार्थम्,—"अपापकं"सन्तं"कमहं" "जघान"हतवान्"जातु"कदाचिदित्यर्थः। "अपापकं""कम्""अहम्""जातु"—इति सर्वमेतत् अध्याहृतं भाष्यकारेण जहाशब्दस्य निराकाङ्क्षीकरणार्थमधस्ताच्चोपरिष्टाच्च । एवं हि जहाशब्दः परिसमाप्तार्थो भवति । न कदाचिदपि कश्चिदपापको मया हतपूर्व इति, पापकारिणं तु हन्मीत्यभिप्रायः । ते यूयमपापा एवाजस्रं भूयास्थ, न वो हनिष्यामि । यत् पुनरेतदुक्तं भवद्भिः 'भूरिष्वप्यागस्सु मास्मान् वधीः—इति, कथमागस्कारी न हन्यते ? 'श्वा पुरोडाशमवलिह्यात्' न च कस्यचित् कस्मिंश्चिदपि स्वता स्यात्, सर्वं वा असमञ्जसमेव स्यात्, यदि पापकारिणो न हन्येरन्, अथ मनुष्यानपापानपि त्वं हंस्येवेति । अत्र ब्रूमः,— "कः" "अस्मत्" अस्मत्तः अपापकारी सन् "भीतः" ईषते "पलायते" इत्यर्थः । न कश्चिदप्यपापकारी मत्तः उद्विजमानः पलायते, स हि शुद्धेन चेतसा अभिमुख एव मामभ्येति, य एव तु पापकारी भवति, स एवात्मापराधशङ्कितया बुद्ध्या अस्मत्तो भीतः पलायते—इत्यभिप्रायः ॥ अत्रापि कोऽस्मदित्येतस्मात् पञ्चमीयोगात् ईषतेर्गमनमात्रसामान्यवाचिनः सतो गमनविशेषे पलायनेऽवस्थानम् । यो हि यस्माद् बिभेति, स तस्मात् पलायते । भीतशब्दश्चाध्याहृतः । न ह्यभीतः कश्चित् पलायते ॥ इत्येष समस्तार्थः ॥

अथैकपदनिरुक्तम्—"मर्या इति" मनुष्यनामसु पठितम् । इहापि चैतत् "मनुष्यनाम" एव । तस्योक्ता व्युत्पत्तिः,—"मर्यो मनुष्यो मरणधर्मा" इति ॥ अथ "वा" "मर्यादाभिधानम्" एवं अत्र "स्यात्" न मनुष्यनाम । यदा मर्यादाभिधानमेतदभिप्रेतं भवति, तदैवमर्थवत्तास्य योजयितव्या,—"मर्यादा, मर्यैरादीयते" । का नु एषा

१ 'एतद्' ॥

मर्यादा,—यतो धर्मज्ञाः सन्तो यूयमनाहता अनाकृष्टाश्च असदभियोगं सखायः सन्तो मम सख्युर्दत्तं मा वधीः ? इति, नैतन्न्याय्यमित्यभिप्रायः ॥ "मर्यादामर्यादिनोर्विभागः" । संश्रिता या भूमिरुपक्षीणा, सा मर्येत्युच्यते—विषयान्त इत्यर्थः । आदिरन्यस्य विषयस्योपक्रम उच्यते । संश्रितायाश्च[1] भूमेरादेश्च विभागकारिणी या भूमिः, सा मर्यादेत्युच्यते ॥

"मेथतिराक्रोशकर्मा" । चतस्रः पत्न्योऽश्वमभिमेथन्तीति प्रसिद्धमश्वमेधे मेथतेराक्रोशकर्मत्वम् । लोकेऽपि च 'शालो मेथनकः' इत्युच्यते, स ह्यभीक्ष्णमाक्रुश्यते, आक्रोशति च सः ॥

"अपापकम्"—इत्यस्य भाष्यपदस्यापरो व्याख्यामार्गः,—को न्वेवं ब्रूयात् 'अपापकं सन्तं मा वधीः' इति ? जघान कमहं जातु पापकमपापकं वा ? कोऽस्मद्भीतः पलायते ? न कश्चिदपि, सौम्योऽहमित्यभिप्रायः ॥ वलकृतिसम्बन्धादिन्द्र एवायं त्रिशोकः स्याद् यस्येयमार्षम् ॥

एवमेतस्मिन् मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसारूप्यार्थोपपत्तिभिर्हन्तेरेव विशेषणार्थोऽवतिष्ठते न जहातेः । जहातौ ह्येतस्मिन् कल्प्यमाने प्रकरणं पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि सति । तस्मान्नात्र जहातेरवकाशोऽस्ति, पारिशेष्यात् हन्तेरेतद्रूपमित्युपपन्नं भवति ॥

एवमेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम् ॥ ४ । २ । १ ॥

## निधा ॥ २ ॥

**निधा पाश्या भवति ।**

**यन्निधीयते ।**

**पाश्या पाशसमूहः । पाशः पाशयतेर्विपाशनात्—**

"निधा ( २ )"इत्येतत् पदमनवगतसंस्कारावसरप्राप्तं व्याख्यानीयमैकपदिकव्याख्याधर्मेण प्रकृतानुवृत्त्या स व्याख्यातव्य इति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रकृतानुवृत्त्या ब्रूमः,—"निधा पाश्या भवति"—इति पर्याये [ ण ] तत्त्ववचनम् । यो वालमयः स्नायुमयो वा पाशसमूहः पक्षिग्रहणार्थः, स पाश्येत्युच्यते । अधुना द्वावप्येतौ शब्दौ निर्वक्ति, निधाशब्दं पाश्याशब्दं च ।—"यत्" यस्मात् इयं "नीधीयते" नीचैर्धार्यते पक्षिग्रहणार्थम्, तस्मात् निधिरिति प्राप्ता, निधानीति वा । सेयमेवं प्राप्ता, सती निधेत्यनवगतसंस्कारेणोच्यते ।

---

1 'मृतायाश्च' ॥

पाश्याशब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति प्रत्ययोत्पादनार्थम्—"पाश्या पाशसमूहः" इति। पदान्निष्कृष्य तद्धितार्थो निरुक्तः॥

अधुना पदार्थं निर्ब्रवीति—"पाशः पाशयतेः" बन्धनार्थस्य। "विपाशनात्" येन हि विविधमतिशयेन वा पाश्यते बध्यत इत्यर्थः—

"वयः॑ सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः।
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒॑स्मान्नि॒धये॑व ब॒द्धान्॥"

वयो वेर्बहुवचनम्। सुपर्णाः सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमानाः। अपोर्णुह्याध्वस्तं चक्षुः। चक्षुः ख्यातेर्वा चष्टेर्वा। पूर्द्धि पूरय देहीति वा। मुञ्चास्मान् पाशैरिव बद्धान्॥ १॥

अधुना यस्मिन् मन्त्रे निधाशब्दः पाशसमूहवाची, तमानीय ब्रवीति, निधाशब्दनिगमार्थम्। कतमः पुनरसौ मन्त्रः? इत्याह,—* "वयः सुपर्णा॰ (ऋ॰ सं॰ ८। ३। ४। ६)" इति। शाक्त्यस्य गौरिवीतेरियमार्षम्। त्रिष्टुप्। अग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते॥ "वयः" "आदित्यरश्मयः"। "वेः" गत्यर्थस्य (अदा॰ प॰) नामीभूतस्य "बहुवचनम्" विः, वी, वयः इति। "सुपर्णाः" "सुपतनाः" एत एव "उपसेदुः" उपसीदन्ति व्युष्टायां रात्रावहन्यहनि। कमुपसेदुः? "इन्द्रम्" आदित्यम्। "प्रियमेधाः" प्रिययज्ञाः। त एव यज्ञसहचारित्वात् उद्गतेषूदितेषु हि तेषु यज्ञास्तायन्ते। "ऋषयः" त एव, अर्षणात्, प्रकाशकत्वात्। "नाधमानाः" त आदित्यमुपसेदुः। कमर्थं "याचमानाः"? इति। "अपोर्णुहि" अपावृणु जनानामेतत् "ध्वान्तम्" "आध्वस्तम्" आच्छादितं तमसा। "चक्षुः" "पूर्द्धि" "पूरय" युष्मदननुगृहीतमसकेलमिवैतेषां जनानामेतच्चक्षुः, तत् पूर्द्धि, सकेलं कुर्वित्यर्थः। अथवा पूर्द्धि "देहि" इति। यदुक्तं स्यात् अस्तं हि गच्छता त्वया एतेषां जनानामात्तमिव यच्चक्षुः, तत् पुनरुद्यंस्त्वमेतेभ्यो जनेभ्यो देहि॥ कथं च पुनर्देहि? "मुमुग्धि अस्मान्" "मुञ्चास्मान्" "निधया" "पाशैः" पाशसमूहेन पक्षिणः "इव" एतस्मिन् मण्डले "बद्धान्"। यावदेतत्तावदशेषं तमो नाशयित्वा एतेषां जनानामेतच्चक्षुर्दद्मः, सकलं वा कुर्मः। एवं ह्येतत् त्वयैव दत्तं भविष्यतीत्यभिप्रायः। एतमर्थं याचमाना उपसेदुः॥

* अत्र **द्वितीयखण्ड**समाप्तिर्दृश्यते, सा '**निधेत्येतद्**' इत्यतः प्रागुचिता॥

१ 'मसफलमि'॥ २ 'सफलं'।

"चक्षुः" "ख्यातेर्वा" दर्शनार्थस्य, "चष्टेर्वा" दर्शनार्थस्यैव । एवमेतस्मिन् मन्त्रे "मुमुग्ध्यस्मान्निधयेव बद्धान्"-इत्येतेषां पदानां मध्ये वर्त्तमानस्य तृतीयान्तस्य निधाशब्दस्य पाशसमूहादन्यः कोन्वर्थः स्यात्?—मुमुग्धि बद्धान्—इत्येतौ शब्दौ येन बद्धाः, यस्माच्च मुच्यन्ते, तदर्थाभिधायिनं शब्दमाकांक्षतः । तत्रैवं सति परमविद्यमानस्याध्याहाराद् विद्यमानस्य निधाशब्दस्य अनयोः शब्दयोर्मध्ये वर्त्तमानस्य आकांक्षितार्थाभिधायकत्वकल्पना इति निधाशब्दः पाशसमूहाभिधायित्वेऽवतिष्ठते । इतरथा ह्ययमितरैः पदैरसम्बध्यमानोऽनर्थक एव स्यात् । तस्मादेवं सर्वत्रानवगतसंस्काराणामप्रसिद्धार्थानां पदानां सामर्थ्यादाकांक्षितरूप एवार्थेऽवस्थानं भवति, तदुपपाद्यं सर्वत्र, ग्रन्थातिगौरवभयात् तु संक्षेपतोऽत्र दर्शयिष्यामः ॥ ४ । ३ । १ ॥

## शिताम ॥ ३ ॥

"पार्श्वतः श्रोणितः शितामतः" ।

पार्श्वं पर्शुमयमङ्गं भवति ।

पर्शुः स्पृशतेः संस्पृष्टा पृष्ठदेशम् ।

पृष्ठं स्पृशतेः संस्पृष्टमङ्गैः ।

अङ्गमङ्गनादञ्चनाद्वा ।

श्रोणिः श्रोणतेर्गतिचलाकर्मणः । श्रोणिश्चलतीव गच्छतः ।

दोः शिताम भवति ।

दोर्द्रवतेः ।

योनिः शितामेति शाकपूणिर्विषितो भवति ।

श्यामतो यकृच्च इति तैटीकिः । श्यामं श्यायतेः ।

यकृद् यथा कथा च कृत्यते ।

शितिमांसतो मेदस्त इति गालवः ।

शितिः श्यतेः ।

**मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा। मेदो मेद्यतेः ॥ २ ॥ ३ ॥**

"शिताम (३)"—इत्येतदनवगतम् । अनुपन्यस्यैव पदम्, अभिधेयं चानुक्त्वैव निगममेव प्रथमं पठत्याचार्यः । विप्रतिपत्त्यानेकार्थत्वमस्येति । "पार्श्वतः श्रोणितः शितामतः" इति निगमः ( य० मा० सं० २१, ४३ ) । पशुहविषः प्रैषेऽयं मन्त्रशेषः ॥ कतमः पुनरसौ प्रैषः ?

"होता यक्षदि॒न्द्राग्नी छाग॑स्य ह॒विष॒ आत्ता॑म॒द्य म॑ध्य॒तो मेद॒ उद्भृ॑त॒म्पु॒रा द्वेषो॑भ्यः पु॒रा पौरु॑षेय्या गृ॒भो घस्तां॒ नू॒नं घा॒से—अ॒ज्राणां॒ यव॑सप्रथमाना॒ᳪ सु॒मत्क्ष॑राणा॒ᳪ श॒तरु॑द्रियाणाम॒ग्निष्वा॒त्ताना॒म् पीवो॑पवसनानां पार्श्व॒तः श्रो॑णि॒तः शि॑ताम॒त उ॑त्साद॒तोऽङ्गा॑दङ्गा॒दव॑त्तानां॒ कर॑त ए॒वाश्विना॒ जु॒षेता॒ᳪ ह॒विर्होत॒र्यज॑ ॥" ( य० मा० सं० २१, ४३ )"—इति ॥

सर्व एव गद्यः । वामदेवस्यार्षम् । मैत्रावरुणो ब्रवीति । 'होता यक्षत्' होता यजत्वित्यर्थः । तेन चेज्यमानौ 'इंद्राग्नी' अस्मात् 'हविषः' पश्वाख्यात् 'मध्यतः' यदेतत् 'मेदः' 'उद्धृतम्' उद्धृतम् अस्यां स्रुच्यां हितम् । तस्मान्मेदः पर्यस्यति, श्रपयति, त्रेधा मेदः करोतीति ह्युक्तम् । एतन्मेदः 'अद्य' एतस्मिन्नहनि सद्यः उद्धृतम् 'आत्ताम्' भक्षयेताम् । 'पुरा द्वेषोभ्यः' हविर्मथिभ्यः पिशाचादिभ्यः । 'पुरा पौरुषेय्या गृभः' अर्वागिडावदानात्, इडा हि पुरुषार्थं गृह्यते, प्राक् तस्माद् ग्रहणात् । इन्द्राग्नी 'घस्तां' भक्षयेतां, 'नूनं' निश्चयेन । एतस्मिन् 'घासे' घसनकाले भक्षणकाले प्राप्ते 'अज्राणाम्' अनभिभूतानां रक्षोभिः आदरेण प्रतिविशिष्टैर्मन्त्रैः संस्कृतानाम् । अथवा 'घासेअज्राणाम्' इत्येकं पदम् । तदायमर्थः,—घासे हि सति पशवो न जीर्यन्त इतिः घासेअज्राः । 'यवसप्रथमानां' यवसः अशनम्, तस्य अनेकप्रकारस्य श्रेष्ठत्वादेतान्येव देवतृप्तये प्रथमानि, तेषां यवसप्रथमानाम् । 'सुमत्क्षराणाम्' स्वयमेवैतानि भक्ष्यमाणानि स्वादुत्वादुदरं प्रति क्षरन्तीति सुमत्क्षराणि एषां सुमत्क्षराणाम् । 'शतरुद्रियाणाम्' बहुस्तुतीनाम्[२] । अथवा 'शतरुद्रियाणां' बहुशो रुग्णानाम् । 'अग्निष्वात्तानाम्'[३] अग्निपाकेन मृदुत्वात् स्वादूकृतानाम् । 'पीवोपवसनानाम्' पीव्ना छागेन उपवस्तानाम्, अथवा पीवानं छागमुपगम्योषितानाम् । "पार्श्वतः" अङ्गात् 'अवत्तानाम्' "श्रोणितः" अवत्तानाम् । "शितामतः" अवत्तानाम् । 'उत्सादतः' च उच्छेदन

---

१ 'दश्विनौ'—इति पाठ एव संहितापुस्तके महीधरभाष्यपुस्तके चास्ति 'दिन्द्राग्नी' :पाठो नास्ति । २ 'बहुस्तुतीनाम्' ॥ ३ एतस्मादग्रे—अग्निष्वात्तादीनाम्—इति पाठः प्रामादिकः ॥

स्थानात् 'अङ्गादङ्गात्' अवत्तानाम् । 'करतः' कुरुताम्, इन्द्राग्नी ! तृप्तिम्—एतेषाम् एवंलक्षणानामवदानानाम् । हे 'होतः !' यथैताविन्द्राग्नी 'जुषेताम्' आसेवेताम्, एतत् 'हविः' तथा त्वमपि 'यज' ॥

निगमप्रसक्तमुच्यते,—"पार्श्वं पर्शुमयमङ्गं भवति" । पर्शवो वङ्क्रय उच्यन्ते, तन्मयं हि तद् भवति पार्श्वपदलक्षणम्[1] ॥

आह—पर्शुः कस्मात् ? उच्यते—"पर्शुः स्पृशतेः" ॥ आह—किमनया स्पृष्टम् ? इति। उच्यते—"संस्पृष्टा पृष्ठदेशम्" प्रति भवति ॥

आह—"पृष्ठं" कस्मात् ? उच्यते—"स्पृशतेः" ( तु० प० ) एव, तद्धि "संस्पृष्टमङ्गैः" ॥

आह—"अङ्गम्" कस्मात् ? उच्यते—"अङ्गनात्" अङ्गितं हि तत् कालेन[2] भवति, गतमित्यर्थः ( भू० प० )। "अञ्चनाद्वा" । अञ्चतिरपि गत्यर्थ एव ( भू० प० ) । धात्वन्यत्वमर्थैकत्वम् ॥

पार्श्वशब्दप्रसक्तानुप्रसक्तमुक्तम् ॥ अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति,—"श्रोणिः श्रोणतेः" धातोः "गतिचलाकर्मणः" ( भू० प० ) । गतिनिमित्तं चलनं यस्य कर्म, सोऽयं गतिचलाकर्मा, तस्य गतिचलाकर्मणः । किं कारणम् ? "श्रोणिश्चलतीव" स्थानात् पशोः "गच्छतः" ॥

शितामशब्दस्य तत्त्वमाचष्टे,—"दोः शिताम भवति" बाहुरित्यर्थः ॥

आह—दोः कस्मात् ? उच्यते—"दोः" "द्रवतेः" ( भू० प० ) । तस्य हि प्राणेन पशुर्द्रवति । श्रितमंसभावेन एतत्कार्य्ये भवतीति शिताम । यदा दोर्विषये शितामशब्दः तदैवं निर्वक्तव्यः ॥ आह—कयोपपत्त्या दोः शितामशब्देनोच्यते ? शृणु—पशोर्हि बाह्यानि चावदानानि, आभ्यन्तराणि च भवन्तीति । तत्र, पशोः पार्श्वे श्रोण्यावंसाविति बाह्यानि, जिह्वाहृद्यकृदादीनि आभ्यन्तराणि । तत्रैवं सति पार्श्वतः श्रोणितः—इत्येतयोर्बाह्ययोरन्तरा वर्त्तमानः शितामशब्दः किमन्यद्दोष्णोऽभिदध्यात्। प्रायोऽपि हि नियामको भवति। एवं बाह्यावदानप्राये च शितामशब्दो वर्त्तते इति दोर्विषयः कल्प्यते ॥

"योनिः शितामः"—"इति" "शाकपूणिः" आचार्यो मन्यते । तत्र योनिः अनवदानीया एव । योनिसमानदेशस्तु गुदो नामावदानमस्ति, स योनिशब्देनोच्यते । स च गुदः "विषितो भवति" । 'विष्लृ व्याप्तौ' ( जु० उ० ), व्याप्तः स पुरीषेण भवति । अथवा विषितमांसो विपुषितमांसः, विस्रस्तमांसः, स भवति । आह—कयोपपत्त्या शाकपूणेर्मते योनिः शितामशब्देनोच्यते ? इति । शृणु—स हि श्रोण्य-

---

१ 'पार्श्वपटलम्' ॥ २ 'कार्येण' ॥

नन्तरो भवति, श्रोण्यनन्तरं च शितामशब्द उच्यते,—श्रोणितः शितामत इति। शब्द-सारूप्यमपि च किञ्चिदस्ति,—विषितो भवति, शितामेति। अनयोपपत्त्या अनेन च शब्दसा-रूप्येण योनिः शिताम इति शाकपूणिर्मन्यते ॥

"श्यामतो यकृत्तः"—"इति" "तैटीकिः" आचार्यो मन्यते ॥ यदुक्तं भवति श्यामत इति, तदुक्तं भवति शितामत इति। एवं हि बहुतरं शब्दसारूप्यं लक्ष्यते एवं च सति यकृत्त एतदवदानं चोदितं स्यादिति गम्यते ॥ किं कारणम्? तद्धि "श्यामं" "श्यायतेः" ( भू० आ० ) धातोः, तद्धि सम्पर्कादुपपद्यते ॥

आह—"यकृत्" कस्मात्? उच्यते—तद्धि मृदुत्वात् "यथा कथा च" अयत्नेनैव "कृत्यते" छिद्यत इत्यर्थः ॥

"शितिमांसतो मेदस्तः"—"इति" "गालवः" आचार्यो मन्यते। श्वेतान्मांसात् शितिमांसतः ॥ कतमत् पुनस्तत् श्वेतं मांसमिति? उच्यते—मेदस्तः। तस्मात् यदुक्तं भवति शितिमांसत इति, तदेवोक्तं भवति शितामत इति। एवमपि बहुतरं शब्दसारूप्यमस्ति ॥

"शितिः" "श्यतेः" तनूकरणार्थस्य ( दि० प० ), परो हि विवेकस्तेजसो मेदस्येवावतिष्ठते[1] ॥

"मांसं" "माननं वा"य एव हि मान्यो भवति, तदर्थमेतत् संस्क्रियते। "मानसं वा" सुमनसा हि तदुपादीयते। अथ वा य एव हि मनस्विनो भवन्ति, तैरुपादीयते। "मनोऽस्मिन् सीदतीति वा" सर्वस्यैव हि मांसे मनः सीदति ॥

"मेदः" "मेद्यतेः" स्नेहनार्थस्य ॥

एवमेष शितामशब्दोऽनवगताभिधेयोऽनवगतसंस्कारोऽपि। एवमेतस्मिन् प्रकरणे अन्यान्यनवगतसंस्काराणि उपेक्षितव्यानि। उक्तं हि,—

"शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः।
सर्वमेतदनेकार्थे दशानवगमे गुणाः ॥"—इति।

कतमे पुनस्ते? इति—पदजात्यभिधेयस्वरसंस्कारगुणविभागक्रमविक्षेपाध्याहारव्यवधानानि। तेषु चाभिधेयमपेक्ष्य निर्वचनं कर्त्तव्यम्। उक्तं हि—

"धातूपसर्गावयवगुणसत्त्वं हि धातुजम्।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम् ॥
धातुजं धातुजाज्जातं समर्थार्थजमेव च।
वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् ॥" इति।

---

१ 'मेदस्येवा' ॥

(१) पदजात्यनवगतम्,—"त्व" इति यथा, नाम, निपातो वा ?
(२) अभिधेयानवगतम्,—"शिताम" इति यथा ।
(३) स्वरानवगतम्,—"वने न वायो" इति यथा ।
(४) संस्कारानवगतम्,—"ईर्मान्तासः" इति यथा ।
(५) गुणानवगतम्,—"करूलती" इति यथा ।
(६) विभागानवगतम्,—"मेहना" इति यथा ।
(७) क्रमानवगतम्,—"उपरमध्वं मे वचसे" इति यथा ।
(८) विक्षेपानवगतम्,—"द्यावा नः पृथिवी" इति यथा ।
(९) अध्याहारानवगतम्,—"दानमनसो नो मनुष्यान्" इति यथा ।
(१०) व्यवधानानवगतम्,—"वायुश्च नियुत्त्वान्" इति यथा ।

एकमपि पदं पदद्वितयं क्रियते—"पुरुषादः, पुरुषानदनाय" इति यथा ।
पदद्वितयमपि चैकं पदं क्रियते,—"गर्भनिधानीं सनितुः" इति यथा ।
आख्यातमपि च नाम क्रियते,—"सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः" इति यथा ॥

एवमेषु निगमेषु शब्दार्थसङ्करोऽनेकप्रकार उपेक्ष्यः, दृष्टानुविधानात् छन्दांसि यथासम्भवमनुविधेयः ॥ ४ । ३ । २ ॥ *

## मेहना ॥ ४ ॥

"यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः । राधस्तन्नो विदद्वस उभया हस्त्याभर ।" इदानीन्तनशब्दव्यवहार...

यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि, त्वया नस्तद्दातव्यम् । अद्रिवन् । अद्रिरादृणात्येतेन । अपि वात्तेः स्यात् । 'ते सोमाद इति ह विज्ञायते'

राध इति धननाम राध्नुवन्त्यनेन । तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहर । उभौ समुद्धौ भवतः ॥ १ ॥ ४ ॥

---

* अत्रैव तृतीयखण्डसमाप्तिर्दृश्यते ॥

"मेह्ना ( ४ )" इत्येतदनवगतम् । "मंह्नीयम्" इति अवगमः । "यदिन्द्र चित्र मेह्ना"–इति निगमः । अत्रेर्भौमस्यार्षम् । अनुष्टुप् । ऐन्द्री । स्वरपृष्ठानां स्वरसाम्नां
१ २र ३
प्रथमे स्वरसाम्नि "यज्जायथा अपूर्व्य" इति स्तोत्रियः, स्वरपृष्ठानां "यदिन्द्र चित्र
१ २ ३ २ ३ १ २।३क
मेह्ना" इति द्वे, "या इन्द्र भुज आभर" इति तृतीयानुरूपस्येति विनियोगः।हे "इन्द्र" "चित्रम्" "चायनीयम्" पूजार्हम्, "यत्" "मेह्ना" "मंह्नीयं" पूजार्हम्, तव "राधः" "धनम्" "अस्ति" किञ्चित्, "त्वादातं" "त्वया" च "दातव्यम्" एवावश्यं सुचिरमपि स्थित्वा "नः" अस्मभ्यम् "तत्" यतः, अतो ब्रूमः,–हे "अद्रिवः" वज्रिन् ! "तत्" नः राधः हे "विद्द्वसो" आप्तधन ! साम्प्रतमेव "उभाभ्यां हस्ताभ्याम्" अकृपणम् "आभर" "आहर" मा चिराय इत्याभिप्रायः ॥ अथ "वा", "यन्म इह नास्तीति" एतस्मिन् वाक्यैकदेशे "त्रीणि" "पदानि" "मध्यमानि" मध्ये भवन्तीत्यर्थः । कथं मेह्ना इत्येषा संहिता,–'मे–इह–न' इति ? एतान्यस्याः संहितायाः पदानि । एवमेष वाक्यावयवः पञ्चपदो भवति । अत्र 'यत्'–इति प्रथमं पदम्, अतः परं 'मे' 'इह' 'न'–इत्येतानि त्रीणि मध्यमानि पदानि, 'अस्ति'–इति पञ्चमं पदम् । एवमभिप्रेत्य "इन्द्र चित्र"–शब्दादपकृष्योक्तं त्रीणि मध्यमानि पदानि–इति । आह–यद्येवं पदविभागः, तदा कोऽर्थः ? इति, उच्यते–यत् मे मम गृहे नास्ति धनम्, तव च तत् अस्ति धनम्, दातव्यं च त्वया तावत् स्तोतृभ्यः, तद्धस्ताभ्यामस्मभ्यमाभरेति । बह्वृचानां 'मेह्ना'–इत्येकं पदम् । छन्दोगानां त्रीण्येतानि पदानि 'म, इह, न'– इति । तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ–एवञ्जातीयनिर्वचनोपप्रदर्शनार्थमुभयोश्च प्रामाण्यख्यापनार्थम् ॥

आह–पदकारयोः पदविकल्पे कोऽभिप्रायः ? इति । उच्यते–विद्यावान् विद्यमानधनो वा प्रतिविशिष्टतरं प्रार्थयते–यच्च यस्य गृहे नास्ति, स तद्विशिष्टमविशिष्टं वा प्रार्थयेत, न चानयोरुभयोरपि विशेषलिङ्गमस्ति, तस्मान्मंहनीयमित्येतयार्थमत्या मेहनेत्येवमेकं पदमभिप्रेतं शाकल्यस्य । गार्ग्यस्य पुनर्यन्म इह ( गृहे ) नास्ति तदाहरेत्याभिप्रायः । एवमत्र विशेषलिङ्गाभावाद्विप्रतिपत्तिः । एवमन्येष्वपि शाखान्तरपदविकल्पेषु अनुविधानमर्थाविरोधेन कर्त्तव्यम् । एवमयं मेहनाशब्दो राधःशब्दसामानाधिकरण्ये वर्त्तमानो यन्महनीयं राधः, यद्वा मद्गृहे नास्तीति धनविशेषणत्वात् कमन्यमर्थं ब्रूयात् ? तस्मान्मेहनेति सामर्थ्याद्धनविशेषणमेतादित्युपपत्तिः ॥

अधुना निगमप्रसक्तानि निरुच्यन्ते,–"अद्रिरादृणात्येतेन" अद्रिसारमयमेव ह्यायुधं भवतीति–अद्रिर्वज्र उच्यते ॥ आह–अद्रिः कस्मात् ? उच्यते–आदृणाति आदरयती–

त्यर्थः । अथवा सोमाभिषवग्रावभिस्तद्वान् अद्रिवान् स्यात् । तैरपि हि सोम आदार्यते ॥ "अपि वा" "अत्तेः स्यात्" अद्रिः । कुत एतत् ? निगमात् । कतमोऽसौ निगम इति "ते सोमाद इति ह विज्ञायते" "ते सोमादो हरी इन्द्रस्य निंसते ( ऋ० सं० ८, ४, ३०, ४ )"—इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायतेऽत्तेरद्रिः स्यादिति । व्याख्यात एव शेषः ॥

"राधः" "इति" एतत् "धननाम" स्मारयति । व्यभिचारित्वाद्वा शब्दानां धन-नामसु पठितमपि सदेतदवधारयति,—इहाप्येतद्धननामैव, नात्र व्यभिचारोऽस्तीति । पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ । "वित्तधन" इति प्राप्तधन ! । "उभौ समुब्धौ भवतः" संपूर्णावित्यर्थः ॥ ४ । ४ । १ ॥

## दमूना: ॥ ५ ॥

दमूना दममना वा, दानमना वा, दान्तमना वा । अपि वा दम इति गृहनाम तन्मनाः स्यात् । मनो मनोतेः—

"दमूनाः (५)"—इत्येतदनवगतम् । "दममनाः" दमूना स्यात्, दमे हि नित्य-मस्य मनः, अक्रूरमना इत्यर्थः । "दानमना वा" दातव्यं मयेति यस्य मनसि स वा दमूनाः । "दान्तमना वा" दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः, स वा दमूनाः । अथवा "दम इति" एतद् "गृहनाम" एतद् यस्य मनसि ममेदमिति, स दमूनाः "स्यात्" गृहपतिरग्निः—।

"जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोज-नानि ॥"

अतिथिरभ्यतितो गृहान् भवति। अभ्येति तिथिषु परकु-लानीति वा, पर गृहाणीति वा [ अयमपीतरोऽतिथिरे-तस्मादेव ] ।

दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः ॥ इमं नो यज्ञमुपयाहि विद्वान् सर्वा अग्ने अभियुजो विहत्य

**शत्रूयतामाभर भोजनानि विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा। धनानीति वा ॥ १ । ५ ॥**

निगमः,* "जुष्टो दमूनाः"—इति। वसुश्रुतस्यात्रेयस्येयमार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते स्विष्टकृत्पुरोनुवाक्या चेयं चातुर्मास्येषु साकमेधे ॥ हे भगवन्नग्ने! "जुष्टः" आसेवितस्त्वमस्माभिः स्तुतिभिः "दमूनाः" दममनाः, अक्रूरमनाः भूत्वा, ततः "उपयाहि"। अथवा गृहं ममेदमिति चेतोऽवस्थाप्य, तत उपयाहि। अथवा दानमना भूत्वा, दातव्यमेभ्यो मयेत्येवं चेतोऽवस्थाप्य, तत उपयाहि। अथवा दान्तेष्वेव हि तव मनो वयं च दान्ताः, "अतिथिः" च त्वमग्निहोत्रिणां दान्तमनसां प्रातः सायं च उद्बोध्यमानो भवसि। स्वभाव एवैष तवाग्निहोत्रिणामातिथित्वेनोपस्थातव्यमिति। अतो ब्रूमः—वयमपि दान्तमनसोऽग्निहोत्रिणश्च, अस्माकमपि य एषः "दुरोणे" यज्ञगृहे यज्ञस्तन्यते, तं त्वमुपयाहि, तमागच्छ, "विद्वान्" जानानः स्वमधिकारं भक्ततां चास्माकम्। किंच, "विश्वाः" "सर्वाः" "अभियुजः" अभितः सर्वतो युजः, अभियोक्त्र्यः, शत्रुसेनाः त्वदागमनप्रतिबन्धेन वर्त्तमानाः, "विहत्य" नानाप्रकारं हत्वा, तत उपयाहि। किंच—एवमागच्छंस्त्वं शृणु यत्कुरुष्व,—"शत्रूयतां" येऽस्माकं शत्रुत्वं कामयन्ते कर्त्तुम्, तान् विहत्य, तेषां बलानि, ततो यानि तेषां "भोजनानि" अन्नानि, धनानि वा, तानि अस्मभ्यम् "आभर" "आहर" इति समस्तार्थः ॥

निगमप्रसक्तोऽतिथिशब्दो दुरोणशब्दश्च। आह—अतिथिः कस्मात्? उच्यते—"गृहान्" "अभि" आभिमुख्येनासौ "अतितो भवति" गत इत्यर्थः। "अतति—पतति" इति गतिकर्मसु पठितम् ॥ अथवैवमन्यथा स्यात्, "अभ्येति" अभ्यागच्छति "तिथिषु" पौर्णमास्याद्यासु "परकुलानि" यजमानकुलानीत्यतिथिः। "अयमपीतरोऽतिथिरेतस्मादेव" ॥

"दुरोण इति" एतत् "गृहनाम" ॥ आह—किं कारणम्? उच्यते—ते हि गृहाः "दुरवा भवन्ति" अवतिस्तर्पणार्थः, "दुस्तर्पाः" इत्यर्थः। उक्तं च,—'कुटुम्बतन्त्राणि हि दुर्भराणि'—इति ॥ एवमेतस्मिन्मन्त्रे, जुष्टः, दमूनाः, अतिथिः, विद्वान्, हे अग्ने! यज्ञमुपयाहि—इत्येतस्मिन्नधिकारे वर्त्तमानः 'दमूनाः' शब्दः कमन्यमग्निविशेषणादर्थं ब्रूयात्?, न कञ्चिदपि। परिशेषाद्दमूना इत्येतदग्निविशेषणमेवेति सिद्धम् ॥ ४। ५।१॥

## मूषः ॥ ६ ॥

**मूषो मूषिका इत्यर्थः।**

---

१ निहत्यान्येषां' ॥ * अत्र चतुर्थखण्डसमाप्तिर्दृश्यते सा 'दमूनाः—इत्येतद्—' इत्यतः प्रागुचिता ॥

**मूषिकाः पुनर्मुष्णातेः । मूषोऽप्येतस्मादेव—॥**

"मूषः ( ६ )" इत्येतदनवगतम् । बहुवचनं चैतत्, मूट्, मूषौ, मूषः—इत्येवम् ॥ आह—कुत एतत् ? उच्यते—"व्यदन्ति" इत्येतस्मिन्नाख्याते बहुवचननिर्देशात्, 'मूषो व्यदन्ति'—इत्येतत् सम्बध्यते । "मूषिकाः—इति" अनेनावगतसंस्कारेण यः "अर्थः" उक्तः स्यात्, स एव मूष इत्युक्तः प्रसिद्धार्थेन अभिधानेन ॥

मूषः—शब्दस्य तत्त्वमाख्यातम्, अधुनाऽऽख्यातप्रसक्तस्य मूषिकाशब्दस्य निर्वचनं करोति,—"मूषिकाः पुनर्मुष्णातेः" । "मुष स्तेये ( क्र्या० प० )" इत्यस्य ॥

"मूषः अपि" च "एतस्मात् एव" ते हि हरन्ति धान्यादीनि—॥ * ॥

**"सं मा॑ तप॒न्त्य॒भितः॑ स॒पत्नी॑रिव॒ पर्श॑वः । मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्यः॑ स्तो॒तारं॑ ते शतक्रतो वि॒त्तं मे॑ अ॒स्य रोद॑सी ॥"**

**सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति वा सन्तपन्ति माध्यः कामाः 'स्तोतारं ते शतक्रतो', 'वित्तं मे अस्य रोदसी' जानीतं मेऽस्य द्यावापृथिव्याविति ॥**

**त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ ॥**

**तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति ॥**

**त्रितस्तीर्णतमो मेधया बभूव अपि वा संख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ १ ॥ ६ ॥**

"सं मा तपन्ति"—इति निगमः,—"सं मा तप०—रोदसी"—इति । आप्त्यस्य त्रितस्य, कुत्सस्य वेयमार्षम् । पङ्क्तिः । ऐन्द्रयेषा ॥ "संतपन्ति" "माम्" "अभितः" सर्वतोऽवस्थिताः, कूपे पतितस्य एताः, "कूपपर्शवः" कूपेष्टकाः, सङ्कटेऽवस्थितम् ॥ कथं

---

* अत्रैव पञ्चमखण्डसमाप्तिर्दृश्यते सा 'मूष इत्येतदन—' इत्यतः प्रागुचिता ॥

पुनः संतपन्ति मामभितः ? "सपत्नीरिव" यथा समानभर्तृका योषितः एकं भर्तारमभिसन्तपेयुः दुर्वचोभिः, इदमस्याः त्वया कृतम्, इदं मम न कृतमिति, (परस्परं वा पीडयन्ते) एवं मामेताः कूपपर्शवः सन्तपन्ति, ताभिः कूपेष्टकादिभिः अहं पीड्ये । किंच, "मूषो न" "मूषिका इव" "शिश्ना" "शिश्नानि" "व्यदन्ति" अदन्ति तानि । अन्नवेष्टितानि, अन्नमिश्राणि, अन्नमिश्रोदकपायितानि, "सूत्राणि" "व्यदन्ति" । सूत्रशब्दोऽध्याहृत उपपत्तिं दृष्ट्वा भाष्यकारेण । विविधमदन्ति भक्षयन्ति ॥ अथ "वा" "स्वाङ्गाभिधानम्" एतत् "स्यात्" स्वाङ्गाभिधानमिति शेषोऽभिप्रेतः। भवति हि तिरश्चामेष स्वभावः—यच्छेपं भक्षयन्ति ॥ अथवा लाङ्गूलमपि सादृश्यात् शिश्नमुच्यते, भवति हि मूषिकाणामेव स्वभावः,—स्नेहभाण्डे स्वलाङ्गूलं मुक्त्वा तदुद्धृत्य "व्यदन्ति" आस्वादयन्ति । उपपद्यत उपमार्थ एवायमपीति शिश्नशब्दो विकल्प्यते । एवमेते मदुक्ताः "सन्तपन्ति मा आध्यः" । आधयः "कामाः" सोमेन यक्ष्ये, दास्ये, भोक्ष्ये—इत्येवमादयः। मां भक्षयन्ति, पीडयन्ति, असम्पूर्यमाणाः ॥ 'आधिः'—इति मानसं दुःखमुच्यते। "स्तोतारं ते शतक्रतो" हे शतक्रतो ! तव नाम स्तोतारं सन्तम् एते कामाः, एताश्च कूपपर्शवः, मा उभयपार्श्वीकृतं सबाह्यान्तरं सन्तापयन्ति । न च नाम त्वमस्मानेतस्या आपदः त्रायसे, समर्थः सन्? अहो न युक्तम्, भक्तपरित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्यभिप्रायः । यदा एवमर्थ्यमानो न शुश्राव इन्द्रः, तदा द्यावापृथिव्यौ आह,—यदि नायमिन्द्रः शृणोति मन्दभागधेयत्वादस्माकम्, युवामपि तावत् हे "रोदसी !" "वित्तम्" "जानीतम्" "अस्य" वचसः स्तुत्याख्यस्य यत् प्रयोजनम्, यदर्थमहं रोरवीमि, युवामपि चैतस्मात् अतिभयाकारात् कूपात् उद्धरतम् । यदि नायमिन्द्रोऽभ्युद्धरति युवयोरपि स्तोतैवाहमित्यभिप्रायः ॥

आह—पर्शवः इति एतावति श्रूयमाणे कुत एतत् कूपपर्शव एताः ? इति । उच्यते—"त्रितः कूपेऽवहितः"—इत्येतस्मिन् सूक्ते विशेषलिङ्गात् । तदेव भाष्यकारेण ख्यापितम् ॥ अत एव सूक्तगताद्विशेषलिङ्गात् उपलभ्य "त्रितं कूपेऽवहितमेतत् सूक्तं प्रति बभौ" यत्रेयमृक् । तस्मात् कूपपर्शव एता इति ॥

सूत्राणि व्यदन्तीति सूत्रशब्दो भाष्यकारेणाध्याहृतः शिश्न इत्यस्य शब्दस्य शेषभूतो मूषकसम्बन्धेन, ते ह्यन्नगन्धेन सूत्राणि व्यदन्तीति । स्वाङ्गाभिधानपक्षे तु अध्याहारो नास्त्येवेति ॥

"तत्र ब्रह्मेतिहासमिश्रम्" । तत्र तस्मिन् सूक्ते ब्रह्म, इतिहासमिश्रम्, इतिहासयुक्तमित्यर्थः । तद् यथा,—"त्रितः कूपेऽवहितो देवान् हवत ऊतये—इत्येवमादि (ऋ०सं०१,१०,५,१७)"। "ऋग्मिश्रं" "गाथामिश्रं" च "भवति" । स पुनरितिहासः

ऋग्बद्धो गाथाबद्धश्च । ऋक्प्रकार एव कश्चित् गाथेत्युच्यते, गाथाः शंसति, नाराशंसीः शंसतीति ह्युक्तं गाथानां कुर्वीतेति । स एष सूक्तानां स्वभावः प्रदर्शितः,—इतिहाससम्बन्धान्यपि सूक्तानि भवन्ति । तेषु प्रकरणादपि सन्दिग्धस्य पदस्यार्थोऽध्यवसेयः, यथेह पर्शुशब्दो भाष्यकारेणाध्यवसित इति ॥

भाष्यप्रसक्तं त्रितशब्दं निर्ब्रवीति,—"त्रितः तीर्णतमो मेधया" एकताद्वितयोः सकाशात् "बभूव" । "अपि वा" संख्यानिमित्तमेव एतत् "नाम" "अभिप्रेतं स्यात्" । कथम् ? "एकतः, द्वितः, त्रितः इति त्रयः" हि ते भ्रातरः "बभूवुः" तस्मात् संख्यानिमित्तमप्युपपद्यत एव । उक्तं च,—"भार्यांगारेणाभ्युपादयत् तत एकतोऽजायत, द्वितीयं ततो द्वितः, तृतीयं ततस्त्रितः" इति ॥ ४ । ६ । १ ॥ *

## इ॒षि॒रेण॑ ॥ ७ ॥

"इ॒षि॒रेण॑ ते॒ मन॑सा सु॒तस्य॑ भ॒क्षी॒महि॒ पित्र्य॑स्येव रा॒यः । सोम॑राज॒न्प्र ण॒ आयूं॑षि तारी॒रहा॑नीव॒ सूर्यो॑ वास॒राणि॑ ॥"

ईषणेन वैषणेन वार्षणेन वा, ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्द्धय च न आयूंषि सोमराजन् । अहानीव सूर्य्यो वासराणि ।

वासराणि वेसराणि विवासनानि गमनानीति वा ॥ १ ॥

"इषिरः (७)"—इत्येतदनवगतम् । "ईषणेन वा एषणेन वा ऋषणेन वा" इत्येतौ[4] शब्दसमाधयः ॥ "इषिरेण ते मनसा" इति समानविभक्त्यन्तत्वात् इषिरशब्दस्य प्रतीयत एवमतो विशेषणत्वमित्याभिधेयमनुक्त्वा निगममेव पठति,— "इ॒षि॒रेण॑ ते॒ मन॑सा॰ वास॒राणि॑ ( ऋ० सं० ६, ४, १२, २ )"—इति ॥

प्रगाथस्येयमार्षम् । त्रिष्टुप् । सौमी ॥ हे भगवन् ! सोम ! "इषिरेण मनसा" त्वां प्रति सर्वात्मना गतेनेत्यर्थः । "ईषति, फणति"—इति गतिकर्मसु पठितम् । "एषणेनेति वा" स्यात्, इच्छावता फलप्रार्थनावतेत्यर्थः । "ऋषणेनेति वा" दर्शनवता । ईदृशेन मनसा किं कुर्मः ? "ते" तव योऽस्माकं स्वांशः, तं "भक्षीमहि" तं भक्षयेमहि ॥ कथं पुनः भक्षयेमहि ? "पित्र्यस्येव रायः" यथा पित्र्यो धनांशः अविघ्नेन भक्ष्यते, भक्षितश्च

१ 'प्रहरणाद' ॥ २ 'अपेक्षया' इत्यर्थः ॥ ३ 'यांङ्गारे' ॥ * अत्रैव षष्ठखण्डसमाप्तिर्दृश्यते ॥ ४ 'इत्येते' इति तूचितं समाधिशब्दस्य पुंलिङ्गत्वात् ॥

सुखपरिणामो भवति, एवं तव वयं स्वमंशमविघ्नेन भक्षयेमहि, भक्षितश्च सुखपरिणामो मे अस्तु, मातीव भिद्येमहीत्यभिप्रायः ॥ किंच, हे "सोमराजन् !" "प्र" "न" "आयूंषि" "तारीः" तारय च प्रवर्द्धय च नः आयूंषि ॥

कथं पुनः प्रवर्द्धय ? "अहानि इव सूर्यः वासराणि" यथा सूर्यः वासराणि वासन्तिकान्यहानि ॥

"वासराणि" इति "वेसराणि"। शीतोष्णाभ्यां हि द्वाभ्यां तानि सरान्ति, तेषु हि शीतोष्णं भवति, रात्रौ शीतम्, दिवा उष्णम्। अथवा "विवासनानि" स्युः, तानि हि तत् शीतं विवासयन्ति नाशयन्तीत्यर्थः। "गमनानीति वा" विसृतानि विस्तीर्णानि सन्ति वासराणीति उच्यन्ते। यथा तानि सूर्यः वर्द्धयति मन्दगतित्वात्, एवमस्माकं त्वमायुः प्रवर्द्धयेत्याशीः ॥ ४।७।१ ॥

## कुरुतन ॥ ८ ॥

### कुरुतनेत्यनर्थका उपजना भवन्ति कर्त्तनहन्तनयातनेति ॥ २ ॥ ७ ॥

"कुरुतन ( ८ )" इति। "अनर्थका उपजना भवन्ति" य एवार्थः कुरुतेत्युक्ते भवति, स एव कुरुतनेति, नात्र नकारस्यार्थोऽधिकोऽस्ति। अधुना एवमुक्त्वा अन्यान्यपि दर्शयति,—"कर्त्तनहन्तनयातनेति" ॥

"शुन ँ सुफाला विकृषन्तु भूमि ँ शुनं कीनाशा अभियन्तु वाहैः।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्त्तनास्मे ॥ ( य० वा० सं० १२, ६९ )" इति ॥

अग्निचयने क्षेत्रकर्षणे विनियुक्ता ॥ त्रिष्टुप्। 'शुनं' 'सुफालाः' सुखं शोभनाः फालाः, 'विकृषन्तु' वितुदन्तु 'भूमिम्'। सुखं 'कीनाशाः' भूमिं कीणनाशाः, खिलोत्कर्त्तारः, कर्षुकाः, 'अभियन्तु' 'वाहैः' अनडुद्भिः। अयं तावदेवं कृषीवलः कृषिं करोतु, युवामपि हे 'शुनासीरौ !' 'हविषा' उदकेन 'तोशमानौ' निघ्नन्तौ भूमिं 'सुपिप्पलाः' सुफलाः, एताः 'ओषधीः' 'कर्त्तन' कुरुत, 'अस्मे' अस्मभ्यमित्यर्थः ॥

"यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति।
द्रुहः पाशान्प्रति संमुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ॥ ( ऋ० सं० ५, ४, ३०, २ )" इति ॥

वसिष्ठस्येयमार्षम्। सान्तपनस्य चरोः याज्यैषा। 'यः' 'नः' अस्माकं हे 'मरुतः !' 'दुर्हृणायुः' पापक्रोधः 'तिरश्चित्तानि' अन्तर्हितानि चित्तानि कृत्वा सम्मोह्य ततो हन्तु-

मस्मानिच्छति । हे 'वसवः' सर्वभूतवासयितारः । तस्येदंलक्षणस्य 'द्रुहः' अस्मद्द्रोग्धुः उपरि 'पाशान्' 'प्रति संमुचीष्ट' प्रतिसम्मोचयत । पाशैः एवं बद्ध्वा 'तपिष्ठेन' तापयितृतमेन 'हन्मना' हननेन, वधेन 'हन्तन' हतेत्यर्थः ॥

"को न्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः ।
मन्मानि चित्रा अपि वातयन्त एषां भूत नवेदा म ऋतानाम् ॥ (ऋ० सं० २, ३, २६, ३)" इति ॥

इन्द्रागस्त्यमरुतां संवादः । कयाशुभीयं सूक्तम् । तत्रेयमगस्त्यस्यार्षम् । महाव्रते व्यूढस्य च दशरात्रस्य सप्तमेऽहनि सूक्तं शस्यते । हे 'मरुतः !' 'कः' अन्यः युष्मानेवमेतस्मिन् जगति 'मामहे' पुनःपुनः महयति, पूजयति ? यथा अहं, तथा न कश्चिदित्यभिप्रायः । यत एवमतो ब्रवीमि,—अस्मान् एव 'सखीन्' आभिमुख्येन 'प्रयातन' प्रयात, हे 'सखायः!' । किंच, 'मन्मानि' मननानि स्वानि चेतांसि 'चित्रा' चित्राणि अस्मान् प्रति 'अपि वातयन्तः' निगमयन्तः 'एषाम्' 'ऋतानां' यज्ञानां प्रापयितारः 'भूत' भवत, हे 'नवेदाः' मेधाविनः ! इत्यर्थः ॥ ४ । ७ । २ ॥

जठरे ॥ ९ ॥

जठरमुदरं भवति जग्धमस्मिन् ध्रियते, धीयते वा— ॥

"जठरम् (९)"—इत्येतदनवगतम् । "उदरं भवति"—इति अभिधेयवचनम् । "जग्धम्" भुक्तमन्नम् "अस्मिन्" अवस्थितं "ध्रियते" इति जग्धधरं 'जठरम्' । अन्नं "वा" जग्धमस्मिन् "धीयते" इति जग्धधानं वा स्यात् । एतौ[3] शब्दसमाधी— ॥

"मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥"

मरुत्वानिन्द्र मरुद्भिस्तद्वान्, वृषभो वर्षितापाम्, रणाय रमणीयाय संग्रामाय, पिब सोममनुष्वधमन्वन्नं मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं माद्यतेः । इदमपीतरन्मध्वेतस्मादेव । त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ १ ॥ ८ ॥

१ 'स्यैवंल' ॥ २ 'हतेत्य', 'घ्नते' ॥ ३ 'एते' इति मुद्रितम् ॥

"मरुत्वाँ इन्द्र"—इति निगमः * । मरुत्वाँ इन्द्र वृषभः ०—० सुतानाम् (ऋ० सं० ३ । ३ । ११ । १ )" । इति विश्वामित्रस्येयमार्षम् । त्रिष्टुब् । महाव्रते पृष्ठ्यस्य चतुर्थेऽहनि शस्यते । "मरुत्वान्" मरुत्संयुक्तो भूत्वा "पिब" । हे "इन्द्र !" यः त्वं "वृषभः" "वर्षिता" । "अपाम्" इत्यध्याहृतं भाष्यकारेण वृषभसम्बन्धात् । यः त्वमेवं कर्मकारी तं त्वां ब्रवीमि,—"रणाय" "रमणीयाय संग्रामाय" रमणीयं संग्रामं करिष्यामीति एतमर्थमुद्दिश्य पिब एतं "सोमम्" अस्मत्प्रदत्तम् । "अनुष्वधं" स्वधेति अन्ननाम, सवनीयपुरोडाशाद्यभिप्रायेण । "अनुष्वधम्" "अन्वन्नम्" । "मदाय" "मदनीयाय" पानाय, युष्मदर्थमस्माभिः संस्कृतम् । "जैत्राय"—इत्यध्याहृतं भाष्यकारेण ॥ द्विविधो हि मदः,—सम्मोहकरो जैत्रश्च, तयोः जैत्र इष्टः संग्रामे ॥ कथं च पुनः पिब?—किमीषत् ? नेत्युच्यते—"आसिञ्च स्वजठरे" उदरे ये "मध्वः" "मधुनः" "मधुसोममिति, औपमिकम्"—इत्येतदुक्तं सोमस्य मधुत्वम् । "माद्यतेः" धातोः । तृप्तिर्हि समाना, सोमेन मध्वा चेत्यौपमिकत्वम् । "इदमपीतरत् मधु" माक्षिकम् "एतस्मादेव" माद्यतेः । यत्तु सोमस्योपचारत्वेन, तत् माध्वीकम् । "ऊर्मिम्" सङ्घातम् । तावत् तं सोममासिञ्च स्वजठरे, यावता जैत्रो मद उपजायते ॥ कस्मात् पुनरेवं ब्रवीमि ? इतः—यस्मात् "त्वं राजासि प्रादिवः सुतानाम्" त्वमेव राजा ईश्वरः "पूर्वेष्वपि अहःसु सुतानाम्" अभिषुतानाम्, न केवलमाधुनिकानाम्, एवं ते समुचितं सोमपानमित्यभिप्रायः ॥ ४ । ८ । १ ॥*

## तितउ ॥ १० ॥

**तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा—**

"तितउ ( १० )" इत्येतदनवगतम् । "परिपवनं भवति"—इति अभिधेयवचनम् । सक्तवः परिपूयन्ते येन द्रव्येण, तत् परिपवनमुच्यते । ततेन चर्मणा नद्धं "तितउ" । तुन्नैर्वा छिद्रैः तद्वत् तितउ । तिलमात्राणि वा तुन्नानि तस्मिन्निति तितउ । यथासम्भवमेतेः शब्दसमाधयः— ॥ *

**"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥"**

---

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते सा 'जठरमित्येतदनवगतम्' इत्यतः प्रागुचिता ॥ १ 'तस्मात्'॥ २ 'सर्वेष्वपि' ॥ * अत्रैवाष्टमखण्डसमाप्तिर्द्रष्टव्या ॥ 'इति निरुक्तवृत्तौ चतुर्था ( नवमा ) ध्यायस्य प्रथमः पादः ॥ ४, १ ॥' इति तूपलभ्यते ॥ ३ 'तद्वद्धं'॥ * अत्रैव नवमखण्डसमाप्तिर्दृश्यते सा "शिप्रे ( ११ )" "इति" "एतत्" इत्यतः प्रागुचिता ॥

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेर्दुर्धावो भवति। कसतेर्वा स्याद्विपरीतस्य विकसितो भवति यत्र धीरा मनसा वाचमक्रुषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखायः सख्यानि संजानते भद्रैषां लक्ष्मीर्निहिताधि वाचि इति । भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा।लक्ष्मीर्लाभाद्वालक्षणाद्वा (लप्स्यनाद्वा) लाञ्छनाद्वा लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः ॥ १ ॥ ९ ॥

निगमः—"सक्तुमिव तितउना"—इति । विद्यासूक्ते बृहस्पतेरार्षम् । "सक्तुः सचतेः" स हि सूक्ष्मत्वात् सचति संश्लिष्यति अङ्गे । ततः "दुर्धावो भवति"—इति उपपत्तिः । दुःखं धाव्यते प्रक्षाल्यत इत्यर्थः।"कसतेः वा स्यात् विपरीतस्य" स हि "विकसितः" विपुष्पितः "भवति" । यथा सक्तुं कश्चित् परिपवनेन पुनाति, एवं "मनसा" परिपवनस्थानीयेन परिपूय विनिश्चित्य शब्दार्थन्याययुक्तां "वाचं" "यत्र" यस्मिन् समाजे यज्ञे वा "धीराः" धीमन्तः, मेधाविनः "अक्रत" "अक्रुषत" कुर्वन्तीत्यर्थः । अत्र केचित् 'अक्रुषत प्रज्ञानम्' इत्यभिधीयते, प्रज्ञानार्थत्वात् वाचः॥ तत्र किम् ? इति "तत्र सखायः" समानख्यानाः समानख्यानानामेव समानेषु शास्त्रेषु कृतश्रमाणाम्, तद्यथा,—वैयाकरणानां वैयाकरणा एव, नैरुक्तानां नैरुक्ता एव । "सख्यानि" सखिभावान् "सञ्जानते" विज्ञानानि सञ्जानते, इतरेतरस्य यो विज्ञानप्रकर्षः, तं जानते ॥ किं कारणम् ? यस्मात् "भद्रा" भन्दनीया "एषां" "लक्ष्मीः" विज्ञानाख्या "निहिताधि वाचि" वाचम् अधि उपरि, निहिता अवस्थापिता । तया लक्ष्म्या इतरेतरस्य विज्ञानश्रमं जानते, इतरो ह्यविद्वान् किं विज्ञास्यत इत्यभिप्रायः ॥

"भद्रम्" । "भगेन व्याख्यातम्" स्त्रीभगः तथा स्यात्, भजतेः (१। ७।) इति । "भजनीयम्" इति । "भूतानाम्" "अभिद्रवणीयम्" अभिगमनीयमित्यर्थः । "भवद्रमयतीति वा" यस्य हि तद् भवति, स रमते । "भाजनवद्वा" सन्ति हि कल्याणरूपाः पुरुषाः, ये तस्य भाजनम्, तैः तद्वत् ॥

"लक्ष्मीः" । "लाभाद्वा" लक्ष्मीवन्त एव लभन्ते, नेतरे । "आलक्षणाद्वा" आलक्षित एव हि लक्ष्मीवान् । "लाञ्छनाद्वा" तथा हि लञ्छित इव भवति । "लषतेः (भू०उ०)वा स्यात्, प्रेप्साकर्मणः" सर्व एव हि तामभिलषन्ति । "लग्यतेः (भू०प०)वा स्यात्, आश्लेषकर्मणः" आश्लिष्य इव हि सा वर्त्तते पुरुषम् । "लज्जतेः(तु०आ०)वा स्यात्, अश्लाघाकर्मणः" ये हि लक्ष्मीवन्तो भवन्ति, ते स्वयमात्मानं न श्लाघन्ते ॥४।९।१॥ *

## शिप्रे ॥ ११ ॥

शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः ॥ १ ॥ १० ॥

"शिप्रे ( ११ )"—"इति ।" एतत् "उपरिष्टात् व्याख्यास्यामः"—"शिप्रे हनू नासिके वा"—( ६ । १७ । २ ) इत्यत्र ह्येतन्निगमप्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टम् ॥ ॥ ३ ।१० । १ ॥

## मध्या ॥ १२ ॥

"तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्वितंतं सञ्जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥"

तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते । यदाऽसावयुक्तं हरणानादित्यरश्मीन् । हरितोऽश्वानिति वा । अथ 'रात्री वासस्तनुते सिमस्मै' वेसरमहरवयुवती सर्वस्मात् ॥

अपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति ॥

तथापि निगमो भवति "पुनः समव्यद्विततं वयन्ती ।" समनात्सीत् ॥ १ ॥ ११ ॥

"मध्या ( १२ )"—इत्येतदनवगतम् ॥ "मध्ये"—इत्यवगमः * ॥ "तत् सूर्यस्य देवत्वं तन्महित्वं॰ सिमस्मै"—इति निगमः ( ऋ० सं० १, ८, ७, ४ ) । आङ्गिरसस्य कुत्सस्येयमार्षम् । त्रिष्टुप् । सौर्यस्य पशोः षडर्चे वपाया याज्या, सूत्रितं च,—"चित्रं देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्यस्योपांशु ( आ० ३,

* अत्रैव नवमखण्डसमाप्तिरुचिता ॥ *. अत्र दशमखण्डसमाप्तिर्दृश्यते । सा "मध्या ( १२ )" इत्यतदनवगतम्—इत्यतः प्रागुचिता ॥

८, )" इति ॥ "तत्" अहं "सूर्यस्य" भगवतः "देवत्वं" देवताभावं, "तन्महित्वं" तच्च महत्त्वं माहाभाग्यं मन्ये ( जाने ) तत् किम् ? इति—"मध्या" "मध्ये" "यत्" "कर्मणां क्रियमाणानाम्" अनेकेषाम् अविगणय्य सर्वान् कर्मकर्तॄन् मिषतां तेषां "विततम्" एतत् प्रकाशजालम् । एवमतिमहत् । महतापि कालेन तत् दुरुपसंहारमन्यैर्यदेकेन मुहूर्त्तेनायत्नेनैव भगवता सूर्येण "संह्रियते" तत् अस्य देवत्वं तच्च महत्त्वमहं मन्ये । किंच, "यदासौ" भगवान् सूर्यः, "अयुक्त" युनक्ति, "हरितः" "हरणान्" रसहरणान् "आदित्यरश्मीन्" आत्मन्यस्तं गच्छन् "सधस्थात्" पृथिवीलोकादाकृष्य । पृथिवी हि तेषां रसादानार्थं सहस्थानम् । इतो हि ते सर्व एव रसानाददते । "आत्" अथेत्यर्थः।"अथ" तदैवमुपसंहृतसर्वरश्मिजाले भगवति सूर्ये, "रात्री" "वासः" "वेसरमरहवयुवती"अवमिश्रयन्ती"सिमस्मै" सिमस्मात्, "सर्वस्मात्"लोकात् अहरपकृष्य, सा तमः "तनुते" । तदेवमेतदपि सूर्यस्यैव माहाभाग्यं यदस्य सन्निधौ तमो नश्यति, यश्चानेनोत्सृष्टो देशः स तमसाऽऽच्छाद्यत इत्यभिप्रायः । "हरितोऽश्वानिति वा" ऐतिहासिकपक्षमतेन ॥

"अपि वोपमार्थे स्यात्, रात्रीव वासस्तनुत इति" वास इव रात्री तमः तनुत इत्यर्थः । पूर्वत्र वेसरमहरवयुवती तमस्तनुत इति नास्त्युपमा, इह पुनर्वास इव तमस्तनुत इत्येवमुपमा ॥

यथा च उपमार्थोऽपि युज्यते, "तथा" च "निगमः" "अपि" अयं "भवति"—

"पुनः समव्यद्विततं वयन्ती मध्या कर्त्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्वि१ ऋतूँरदर्धररमतिः सविता देव आगात्॥ (ऋ०सं० २,८,२,४)"॥

गृत्समदस्येयमार्षम् । सावित्री । त्रिष्टुप् । पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे शस्यते तृतीये सवने । "पुनः समव्यद्विततं वयन्ती" "समनात्सीत्"—इति निर्वचनम् । समवेष्टयदित्यर्थः । यथा योषित् काचिद् वासो वयन्ती, पुनः संवेष्टयत्यस्तमयकाले, पुनश्च वितनोत्यादित्य उदिते, एवमियं रात्रिः पुनरेव तमः संवेष्टयति, योषिदिव वासो वयन्ती ॥ कदा पुनः संवेष्टयति ? यदा [ था ] 'मध्या' मध्ये 'कर्त्तोः' कर्मणां क्रियमाणानां लौकिकवैदिकानां "विततम्" एतद्रश्मिजालम्, 'शक्म' स्वात्मप्रसवादपत्यभूतं 'न्यधात्' न्यदधात्, नीचैर्धत्ते, लोकानां प्रकाशनाय ॥ अथवा शक्मेति कर्मनाम स्यात्, यदा स्वं प्रकाशं पुनः कर्म निधत्ते, निदधाति, उदेति 'धीरः' धीमानादित्यः, तदा अहनि अभ्युपस्थिते पुनः संवेष्टयति रात्रिस्तम इति । अस्तमयं प्रति पुनर्वास इव तनोतीति । एवमेतस्मिन्नपि मन्त्रे सामर्थ्यादसत्यप्युपमाशब्दे वाससा तम उपमीयते ॥ यथेह तथा पूर्वस्मिन्नपि, निगमेऽपीत्येवमेके मन्यन्ते ॥ अपरे पुनः अपिवोपमार्थे स्यादित्-

१ 'अथेह' ॥

त्रैवं वर्णयन्ति,-रात्रीव वासस्तनुत इत्यत्र वासःशब्दोऽहःशब्दपर्यायवाची, तस्योक्ता व्युत्पत्तिः-वेसरमहारीति। सा रात्रिः वासस्तनुते, अहस्तनुत इत्यर्थः। रात्रिप्रान्ते हि शुक्लमहर्लक्ष्यते, तेन ज्ञायते रात्र्यैवेदं ततमिति। एवमुपमार्थत्वमेके मन्यन्ते-यदा चोपमर्थः, तदा "पुनः समव्यद्विततं वयन्ती"-इत्येत्र पुनः समवेष्टयदहो रात्रिः, विततमिव[3] वासो वयन्ती॥ कदा? यदा मध्ये कर्मणां 'न्यधात्' निदधाति अस्तं गच्छन् आदित्यः स्वमण्डले 'शक्म' रश्मिजालं यदा च 'उदस्थात्' उत्तिष्ठति, 'संहाय' स्वरश्मीनुपसंहृत्य 'व्यदर्धः' विदधाति 'ऋतून्' अहोरात्रलक्षणान्। यदा एवम् एषः 'सविता देवः' 'अलमतिः' पर्याप्तमतिः, 'आगात्' आगच्छति। तदा रात्रिः तनुते वासः अहर्लक्षणम्, 'पुनः' 'सं' वेष्टयतीत्येवं मन्यन्ते। यदत्रार्थाविरोधि तत् प्रतिपत्तव्यम्॥ ४। ११। १॥

## मन्दू॥ १३॥

"इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा।
मन्दू समानवर्चसा॥"

इन्द्रेण हि सन्दृश्यसे सञ्जग्मानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थः।

अपि वा मन्दुना तेनेति स्यात्।

समानवर्चसेत्येतेन व्याख्यातम्॥ १॥ १२॥

"मन्दू (१३)"-इत्येतदनवगतम्। "मदिष्णू, मन्दुनेति वा" शब्दसमाधी॥ * "इन्द्रेण सं हि"-इति निगमः। मधुच्छन्दस इदमार्षम्। महाव्रते महदुक्थे तृचाशीतिषु शस्यते, सात्रिकेषु चाहःसु स्तोमातिवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे इन्द्र उच्यते॥ हे भगवन्! इन्द्र! त्वम् "इन्द्रेण" ईश्वरेण, दीप्तेन वा मरुद्गणेन, नित्यमेव "सञ्जग्मानः" "संदृक्षसे" "सन्दृश्यसे"। "अबिभ्युषा" अभयवता। "गणेन"-इत्यध्याहारः। तौ च "युवां" मरुद्गणः त्वं च, एकत्र सङ्गतौ। "मदिष्णू" हर्षशीलौ, नित्यप्रमुदितावित्यर्थः। "समानवर्चसौ" च, समानदीप्ती इत्यर्थः। एवं "मन्दू समानवर्चसा"-इत्येतेन द्विवचनेन मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः।

---

१ 'वाय' २ त्येवं पु'॥ ३ 'तमेव वा'॥ * अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "मन्दू (१३)" इत्येतदनवगतम्-इत्यतः प्रागुचिता॥

"अपि वा" एवमन्यथा "स्यात्" । मन्दु इत्यस्य तृतीयैकवचनान्तत्वेन विपरिणामः, एवं च सति मरुद्गणविशेषणमेतद्भवति ॥ कथम्? "मन्दुना" मरुद्गणेन, हे इन्द्र! सन्दृश्यसे सङ्गच्छमानः ॥

"समानवर्चसा" "इति" एतत् पदं, मन्दुनेति "एतेन" पदेन "व्याख्यातम्" यथैव हि मन्दू इत्येतत् द्विवचनमेकवचनं वा, एवमेतदपि,—समानवर्चसाविन्द्रमरुद्गणाविति द्विवचनमथवा मन्दुना समानवर्चसा च मरुद्गणेन इत्येवं तृतीयैकवचनम्।अपि वा एवं मरुद्गण उच्यते,—त्वमिहेन्द्रेण सङ्गच्छमानो नित्यमेवं सन्दृश्यस इति । समानमन्यत् ॥४।१२।१॥

## ई॒र्मान्ता॑सः ॥ १४ ॥

"ई॒र्मान्ता॑सः सिलि॑कमध्यमासः॒ संशू॑रणासो दि॒व्यासो॒ अत्याः॑ । ह॒ंसा इ॑व श्रेणि॒शो य॑तन्ते॒ यदाक्षि॑षुर्दि॒व्यमज्ममश्वाः॑ ॥"

ईर्मान्ताः समीरितान्ताः ( सुसमीरितान्ताः ) पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । संशूरणासः ( दिव्यासो अत्याः ) शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानं (श्रेणिश इति) श्रेणिः श्रयतेः समाश्रिता भवन्ति । यदाक्षिषुर्यदापन् दिव्यमज्ममजनि माज़िमश्वाः । अस्त्यादित्यस्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति ॥

"सूरा॑दश्वं॑ वसवो॒ निर॑तष्ट ॥"

इत्यपि निगमो भवति ॥ १ ॥ १३ ॥

"ईर्मान्तासः ( १४ )" इत्येवदनवगतम् । "समीरितान्ताः"—"पृथ्वन्ता वा",

इति यथासम्भवं शब्दसमाधी । * "ईर्मान्तासः"–इति निगमः । दीर्घतमस आर्षम् ॥ "यमेन दत्तम्"–इतीयं च । द्वे अप्येते अश्वस्तोमीये सूक्ते । तेन चाश्वः स्तूयतेऽश्वमेधे । आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्ते "ईर्मान्तासः" तेषां सतानां येऽश्वाश्चत्वारः, ते "समीरितान्ताः" विक्षिप्तान्ताः, प्रसृतान्ताः, प्रविरला इत्यर्थः । "पृथ्वन्ता वा" तेषामेवाश्वानां पृथवोऽन्त्राः, पृथुरस्काः, पृथुजघना वा इत्यर्थः । "सिलिकमध्यमाः, संसृतमध्यमाः" संश्लिष्टमध्यमा इत्यर्थः । तेषां हि सतानां ये मध्यमास्त्रयः इतरेतरमुत्पीड्य संश्लेषेणावस्थिताः । अथवा–पृथुजघनोरस्कानां सतां मध्यमाः शरीरप्रदेशाः, सतानामपि संश्लिष्टाः संलग्नास्तनवः, निरुदरास्तेऽश्वा इत्यर्थः । तथापि हि स्तुतिरुपपद्यत एव। "शीर्षमध्यमा वा" सिलिकमध्यमा वा । एवमपि हि शब्दे सारूप्यमस्ति, यो हि तेषां सतानां मध्यमः, स शिरोभूतः प्रधान इत्यर्थः ॥ "अपि वा" एवमन्यथा स्यात् । "शिर आदित्यः" एव "भवति" सर्वभूतप्राधान्यात् । "मूर्द्धा, राजेति वा अहमेतमुपासे,–इति ह विज्ञायते" । यस्माचासावनुप्रविश्य प्राणभावेन सर्वभूतानि "शेते" आस्ते, तस्मात् सर्वभूताश्रयणात् शिर आदित्यः । स चैतेषामश्वानां "मध्ये तिष्ठति" "इति" शीर्षमध्यमास्त एते शीर्षमध्यमा इत्युक्ताः सन्तः सिलिकमध्यमा इत्युच्यन्ते। "इदमपीतरच्छिर एतस्मादेव"–इति प्रासङ्गिकम् । "समाश्रितानि" हि "एतत्" उत्तमाङ्गम् "इन्द्रियाणि" चक्षुरादीनि "भवन्ति" इति शिरउपपत्तिः॥ "संशूरणासः" सङ्गताः शूरेण भगवतादित्येन संशूरणाः । "शूरः शवतेर्गतिकर्मणः" स हि परानभिमुखो गच्छत्येव, न पर्यावर्त्तते । "दिव्यासः" ते हि "दिव्याः" दिविजाताः। "अत्याः" "अतनाः" ते हि अतन्त्येव, मुहूर्त्तमपि नावतिष्ठन्ते । य एवंलक्षणा अश्वास्ते किं कुर्वन्ति ? इति । उच्यते–"हंसा इव श्रेणिशो यतन्ते" हंसा इव श्रेणीकृताः पंक्तीकृताः यतन्ते गच्छन्ति ॥ "हंसा हन्तेः" ते हि "घ्नन्त्यध्वानम्" ॥ कदा पुनरेवं यतन्ते ? "यदाक्षिषुः" यत् "यदा" यस्मिन् काले आक्षिषुः "आपन्" आप्नुवन्ति ॥ किम् ? "दिव्यम्" "अज्मम्" "अजनिम्" । अज्यतेऽस्यां गम्यत इति अजनिः, वाहिका, स्वर्गपथ इत्यर्थः । यदा ते आप्नुवन्ति–उदयादारभ्य यावदस्तमिति, तदैवं यतन्ते ॥ के पुनस्ते ? इत्युच्यते–"अश्वाः" ॥ एवमेतानि ईर्मान्तास इत्येवमादीनि अश्वविशेषणानि, अश्वशब्देन समानविभक्त्यन्तत्वात् । आत्मैवैषां रथो भवत्यात्माश्वा इत्येवं प्रक्रमेण सूर्यदैवत एष मन्त्र उक्तः।स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह,–"अस्त्यादित्यस्तुतिरश्वस्य" इति, अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्यर्थः ॥ आह–कयोपपत्त्या ? इति। उच्यते-

* अत्र द्वादशखण्डसमाप्तिर्दृश्यते, सा "ईर्मान्तासः (१४)" इत्येतदनवगतम् इत्यतः प्रागुचिता ॥

"आदित्यादश्वो निस्तष्ट इति" अनयोपपत्त्या सूर्यात्मना अश्वः स्तूयते ॥ आह—कुत एतत्सूरादश्वो निस्तष्ट ? इति । उच्यते—"सूरादश्वं वसवो निरतष्ट—इत्यपि निगमो भवति"।

"यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥ (ऋ० सं० २, ३, ११, २, ) ।"

इति 'यमेन' 'एनम्' अस्माकं 'दत्तम्' अश्वम् 'त्रितः' त्रिस्थानो वायुः 'आयुनक्' युनक्ति । यत्रायं योक्तव्यः, तत्र वायुना युक्तम् 'इन्द्रः' 'एणम्' एनमश्वं 'प्रथमः' सर्वदेवानां मुख्यः 'अध्यतिष्ठत्' कोऽन्यः एवमास्थातुं शक्नुयादित्याभिप्रायः॥ वायुना युक्तस्येन्द्रेणाधिष्ठितस्य 'अस्य' 'गन्धर्वः' गन्धर्वराजः 'रशनामगृभ्णात्' नियमेन रज्जुं गृह्णाति ॥ कुतः पुनरयमश्वः ? इत्युच्यते—'सूरात्' सूर्यादेतमेवंलक्षणम् 'अश्वं' 'वसवः' 'निरतष्ट' निस्तष्टवन्तः । एवमेतस्मिन् मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते। "कारणाच्च कार्यमनन्यत्"—इत्युपपद्यते सौर्येण मन्त्रेणाश्वस्य स्तुतिरिति ॥ ४ । १३ । १ ॥

## कायमानः ॥ १५ ॥

"कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥"

कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातॄरपोऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत् सन्निह भवसि जायमानः ॥ १ ॥

"कायमानः (१५)"—इत्येतदनवगतम् । "चायमानः"—इत्यवगमः, "कामयमान इति वा" ॥ * "कायमानो वना त्वम्"—इति निगमः (ऋ० सं० ३, १, ५, २)। विश्वामित्रस्येयमार्षम् । बृहती । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन् ! "अग्ने"! "कायमानः" "चायमानः" पश्यन्नित्यर्थः । अथवा "कामयमानः" । किम् ? स्वां योनिम् ॥ कतमाम् ? "वना" "वनानि" दारूणि । दारुभ्योऽग्निर्जायते तदेतत् प्रसिद्धमेवोक्तम्, यदा चाग्निरनुगच्छति अरणीवावगच्छति । "मातॄः" वा सर्वभूतनिर्मात्रीः "अपः" सापि योनिरेवाग्नेः । "आपो वा अग्नेर्योनिः,—इति ह

* अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा "कायमानः (१५) इत्येतदनवगतम्—इत्यतः प्रागुचिता ॥

विज्ञायते" । अनयोर्योन्योरन्यतरां योनिं "यत्" यदा "अजगन्" "आगमः" "त्वम्" ॥ कदा पुनरगमः ? "उपशाम्यन्"—इत्यध्याहृतं भाष्यकारेण, अनुगच्छन्नित्यर्थः ॥ तस्य तवैवमनु गच्छतः किम् ? इति । उच्यते "न" "तत्" "ते" "अग्ने" । "प्रमृषे" "निवर्त्तनम्" "न प्रमृष्यते" न प्रमृज्यते, निवर्त्तनं, वर्त्म, मार्गो न लुप्यत इत्यर्थः । कथं गम्यते न प्रमृज्यते मार्गः ? इति "दूरे" अपि "सन्" अदृश्योऽपि भूत्वा यस्मात् "इह" पुनः "भवसि" एव । कदा ? "जायमानः" "यत्" यदा अद्भ्यो जायसे वैद्युतात्मना, यदा वा अरणिभ्यां जायसे मथ्यमानः, तदा ॥४।१४।१॥

## लोधम् ॥ १६ ॥

### "लोधं नयन्ति पशु मन्यमानाः" ।

### लुब्धमृषिं नयन्ति पशुं मन्यमानाः ॥ २ ॥

"लोधम् (१६)"—इत्येतदनवगतम् । "लुब्धम्"—इत्यवगमः ॥

"न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।
नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति ॥ (ऋ० सं० ३, ३, २३, ३)" इति ॥

यस्मिन् निगमे एष शब्दः सा वसिष्ठद्वेषिणी ऋक् । अहं च कापिष्ठलो वासिष्ठः । अतस्तां न निर्ब्रवीमीति ॥४।१४।२॥

## शीरम् ॥ १७ ॥

### "शीरं पावकशोचिषम्" ।

### पावकदीप्तिम् । अनुशायिनमिति वाशिनमिति वा ॥ ३ ॥ १४ ॥

"शीरम् (१७)"—इत्येतदनवगतम् । अग्निरभिधेयः । "अनुशायिनमिति वा"—इति, अनुप्रविश्य सर्वभूतानि शेते इत्यनुशायी, तमनुशायिनम् । अश्नोति व्याप्नोति वा सर्वभूतानीति "आशिनम्" ॥

"शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा ॥
दीदाय दीर्घश्रुत्तमः ॥ (ऋ० सं० ६, ७, ११, १)" इति निगमः ॥

भार्गवस्य प्रउगस्येयमार्षम् ॥ प्रातरनुवाकाश्विनयोः शस्यते ॥ "शीरम्" "अनुशायिनं" व्यापिनं वा अग्निं स्तौमि । "पावकशोचिषम्" पावयित्री यस्य शोचिर्दीप्तिः, तं पावकशोचिषम् । किंच, 'ज्येष्ठः' श्रेष्ठः, 'यः' प्रधानः 'दमेषु' यज्ञगृहेषु 'आदीदाय'

आदीप्यते, परिचर्यमाणोऽग्निहोत्रिभिः । किंच, 'दीर्घश्रुत्तमः' यः, दीर्घश्रोतृभ्यः यो दीर्घश्रुत्तमः । तमग्निं स्तौमि ॥ ४ । १४ । ३ ॥ *

## विद्रुधे ॥ १८ ॥ द्रुपदे ॥ १९ ॥

"कुनीनुकेव विद्रुधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥"

कनीनके कन्यके । कन्या कमनीया भवति । क्वेयं नेतव्येति वा । कमनेनानीयत इति वा । कनतेर्वा स्यात्कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि, सप्तम्या एकवचनानीति शाकपूणिः ॥

विद्रुधयोर्दारुपाद्वोः ॥

दारु दृणातेर्वा द्रूणातेर्वा । तस्मादेव द्रु । नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते बभ्र्वोरश्वयोः संस्तवः ॥ १ ॥

"विद्रुधे ( १८ ), द्रुपदे ( १९ )"—इत्येते पदे एकनिगमे । द्वे अप्यनवगते, पक्षेण चानेकार्थे । 'विद्रुधे' विद्धे, 'द्रुपदे' द्रुममये पदे इत्यवगमः । दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते । कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते । द्वयोरपि पदयोरेक एव निगमः,—"कुनीनुकेव विद्रुधे०—शोभेते— ( ऋ० सं० २, ६, ३०, ७ )" इति । वामदेवस्यार्षम् । "कन्या कमनीया भवति" सर्व एव हि तां प्रार्थयन्त एव ॥ अथवा "क्वेयं नेतव्येति वा" दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या । "कमनेनानीयत इति वा" ॥ "कनतेर्वा स्यात् कान्तिकर्मणः" "कनति ( १७ ), कानिषत् ( १८ )"—इति कान्तिकर्मसु पठितम् । "इव" इति उपमायाम् । "विद्रुधे" "नवे" "द्रुपदे" "अर्भके"—इत्येतानि चत्वारि पदानि "कन्ययोरधिष्ठानप्रवचनानि" "सप्तम्या एकवचनानीति" एवं "शाकपूणिः" आचार्यो मन्यते । एकस्मिन् दारुमये पादपीठे यस्मिन् समधिरूढेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढे "शोभेते" यथैवं "बभ्रू" बभ्रुवर्णे अश्वे "यामेषु" आजिस्थानेषु

* अत्रैव चतुर्दशखण्डसमाप्तिर्दृश्यते ॥ १ 'ठेऽस्मि' ॥

श्रमनस्थानेषु, "कन्यके" शालभञ्जिके वा । तदेतैश्चतुर्भिः पदैरुच्यत इति शाकपूणि-राचार्यो मन्यते ॥

यास्कस्तु—"विद्रध्योः" विकुषिताधोभागयोः "दारुपाद्वोः" अधिरूढयोः कन्ययो-रभिधानपदान्यभिधायकान्येतानि द्विवचनानीति मन्यते । ताभ्यां ह्यश्विन्योः खुराकारत्वेन सारूप्यमस्तीत्येवमुपमानम् ॥

दारुपाद्वोरित्येतस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तौ दारुशब्दो निरुच्यते,—"दारु दृणातेर्वा" विदारणार्थस्य ( क्रा० प० ) । "द्रूणातेर्वा" हिंसार्थस्य । तस्मा-देव धातुद्वयादन्यतरस्य "द्रु"—इत्येतदभिधानं भवति । द्रुपदे इत्येतदपेक्ष्य "तस्मा-देव द्रु"—इत्येतदुक्तम्, द्रुम इत्यर्थः ॥ "नवे नवजाते" ॥ "अर्भके अवृद्धे" अल्पके इत्यर्थः । "ते" कन्यके एवम्प्रकारेषु "तदधिष्ठानेषु" तेषु पादुकाख्येषु अधिष्ठानेषु आधिरूढे "शोभेते" यथा "एवं" "बभ्रू" बभ्रुवर्णे अश्वे "यामेषु" आजिस्थानेषु श्रमनस्थानेषु वा बन्धनस्थानेषु मन्दुराख्येषु, वर्त्तमाने शोभेते । ते एवमेव "बभ्र्वोरश्वयोः संस्तवः" ॥ ४ । १५ । १ ॥

## तुग्वनि ॥ २० ॥

**इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह ॥**

**"सुवास्त्वा अधि तुग्वनि ॥"**

**सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति ॥ २ ॥**

"तुग्वनि ( २० )"—इत्येतदनवगतम् । "तूर्णमेतदायन्ति"—इति शब्दस-माधिः । "तीर्थम्" अभिधेयम् । "सुवास्त्वा अधि तुग्वनि—( ऋ० सं० ६, १, ३५, ७ )" इति निगमः । अस्य ऋक्पादस्य ऋक्छेषापेक्षो निर्णयः । सर्वस्या अपि च तस्या ऋचो यथायं पादः, तस्या या अन्या आधस्त्या ऋक्, तदपेक्षो निर्णयो यतः, अतस्तस्या ऋचः आधस्त्यायाः सङ्क्षिप्यार्थमाह भाष्यकारः—"इदं च मेऽदादिदं च मेऽ-दादित्यृषिः प्रसङ्ख्यायाह"—इति । इदं च द्रव्यजातं, मम दत्तवानसौ राजेत्येवं प्रसङ्ख्याय परिसङ्ख्यानं कृत्वा, ऋषिराह उक्तवानित्यर्थः ॥ कतमा पुनरसौ आधस्त्या ऋक्, यस्यायमर्थः सङ्क्षिप्यते ? इति । उच्यते—

"अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम् ।
मंहिष्ठो अर्यः सत्पतिः ( ऋ० सं० ६, १, ३५, ६ )" ।

---

१ 'विद्रधयोः' ॥ २ 'सुपादान' ॥ ३ 'यस्यायमयं' ॥ ४ 'मर्थसंक्षेपः ? इति' ॥

सौभरेः काण्वस्येयमार्षम्, परा च, दानप्रशंसा । यः 'अदात्' 'मे' मम, 'पौरुकुत्स्यः' बहुशत्रुकर्त्तितुः पुत्रः 'त्रसदस्युः' दस्युत्रासनः । किमदात् ? 'पञ्चाशतं वधूनाम्' पञ्चाशतं वोढव्यानां कन्यानाम् । 'मंहिष्ठः' पूज्यतमः । 'अर्यः' ईश्वरः । 'सत्पतिः' च सतां पालयिता च । एवंलक्षणः पौरुकुत्स्यः त्रसदस्युः, मम दत्तवान् पञ्चाशतं वधूनाम् । आह—किमेतदेवादात् ? नेत्युच्यते,—इदं च यदुक्तम्, उत्तरं च यद् वक्ष्यते । कतरा पुनरसावुत्तरा ऋक् ? इति । उच्यते—

"उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि ।
तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः ॥ (ऋ० सं० ६, १, ३५, ७)" इति ।

अप्येतत्,—यदुक्तम्, अपि च यदेतत् वक्ष्यमाणमिति 'उत'—शब्द एवमुभयं सम्भावयति । 'मे' मम 'प्रयियोः' प्रगम्यते येन, तत् प्रयियुः, धनम्—अश्वादि, तस्य प्रयियोः धनस्य, बहुदात् । ताभिः कन्याभिः सह 'वयियोः' ऊयत इति वयियुः वस्त्रादि, तस्य च बहुदात् । 'तिसृणां सप्ततीनां' गवाम् । 'श्यावः' श्यामवर्णः वृषः, श्यामवर्णानां 'प्रणेता' प्रकर्षेण नेता, अग्रतोगामी । 'भुवद्वसुः' भावयिता वसूनाम् । 'प्रशस्तः' पूजितलक्षणः । 'दियानां' दानार्हाणाम्, देया याः तासां 'पतिः' । ताश्च गा एतत्संख्यायुक्ताः, एतद्गुणयुक्ताश्च मह्यमदात् । क्व पुनरसावदात् ? ॥ "सुवास्त्वा" सुष्ठुनिवासाया नद्याः "अधितुग्वनि" तीर्थेऽधि, एतत् अदात् मह्यम् । "सुवास्तुः नदी" "तुग्व तीर्थं भवति" "तूर्णं" हि "एतत्" अवगाहनार्थम् "आयन्ति" अत्र दानसम्बन्धात् सुवास्तुशब्दो नद्याभिधानम्, प्रसिद्धं हि नद्यां दानम्, नदीसम्बन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः । निगमार्थप्रकाशनायैवं सूक्तगतोऽपि अन्वीक्षितव्य एवार्थ इत्येतत् प्रदर्शितमाचार्येण ॥ ४ । १५ । २ ॥

## नंसन्ते ॥ २१ ॥

### "कुविन्नंसन्ते मरुतः पुनर्नः ॥"
### पुनर्नो नमन्ते मरुतः ॥ ३ ॥

"नंसन्ते (२१)"—इत्येतदनवगतम् । "नमन्ते" इत्यवगमः । "कुविन्नंसन्ते" इति निगमः ॥

"ताँ आ रुद्रस्य मीह्लुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।
यत्सस्वर्त्ता जिहीलिरे यदाविरव तदेन ईमहे तुराणाम् ॥ (ऋ० सं० ५, ४, २८, ५)" इति ॥

वसिष्ठस्येयमार्षम् । 'तान्' अहं 'मीह्ळुषः' मरुतः वर्षस्य सेक्तॄन् धनवतः, बलवतः च 'आविवासे' अभिमुख्येन स्थित्वा परिचरामि । किंलक्षणान् पुनः मरुतः आविवासे ? 'रुद्रस्य' इन्द्रस्य स्वभूतान्, आप्तान् वा । अथवा मीह्ळुष इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात्, मीह्ळुषो रुद्रस्य स्वभूतानिति ॥ कस्मात् पुनस्तानहं परिचरामि ? यस्मात् ते 'मरुतः' "कुवित्" बहु "नंसन्ते" "नमन्ते" "पुनः" वर्षाद्युपकारेण अस्मान् प्रति नमन्ते, प्रह्वीभवन्ति । किंच, 'यत्सस्वर्त्ता' यच्छरीरगतम् 'एनः' 'जिह्वीळिरे' लज्जयन्ति, यच्च 'आविः' प्रकाशम्, 'तत्' एवम्प्रकारमुभयलक्षणमपि एनः अस्मान् जिह्वीळिरे लज्जयन्ति । तदेषां मरुतां 'तुराणां' त्वरमाणानां प्रसादेन उभयलक्षणमपि "अव-यजेमहि' निर्णुदेमाहि,-इत्येतत् 'ईमहे' अनेन परिचारेण आराध्यैतान् मरुत इति ॥ ४ । १५ । ३ ॥

## नसंन्त ॥ २२ ॥

### नसन्त इत्युपरिष्टाद्व्याख्यास्यामः ॥ ४ ॥

"नसन्त ( २२ ) इत्येतदुपरिष्टात्" द्वादशाध्याये "व्याख्यास्यामः"-"अभि प्रवन्त सम॑नेव॒ योषाः ( ऋ० सं० ३, ८, ११, ३ )" इति व्याख्याने "नसतिराप्तिकर्मा वा नमतिकर्मा वा"-इति ॥ ४ । १५ । ४ ॥

## आहनसः ॥ २३ ॥

### "ये ते॒ मदा॑ आह॒नसो॒ विहा॑यस॒स्तेभि॒रिन्द्रं॒ चोदय॒ दात॑वे म॒घम् ॥"

### ये ते मदा आहननवन्तो वञ्चनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ ५ ॥ १५ ॥

"आहनसः ( २३ )" इत्येतदनवगतम् । "आहननवन्तः"-इत्यवगमः ॥

"ये ते॒ मदा॑ आह॒नसः॒"-इति निगमः, ॥

"परि॑ सोम॒ प्र ध॑न्वा स्व॒स्तये॒ नृभिः॑ पुना॒नो अ॒भि वा॑सया॒शिर॑म् ॥

ये ते॒ मदा॑ आह॒नसो॒ विहा॑यस॒स्तेभि॒रिन्द्रं॒ चोद॑य॒ दात॑वे म॒घम् ॥ ( ऋ० सं० ७, ३, २३, ५ )" इति ॥ 

पावमानी सौमी । कवेर्भार्गवस्येयमार्षम् । जगती ॥ हे भगवन् ! 'सोमः !' 'परिप्रधन्व' परिप्रक्षर, एतस्मात् दृशापवित्रात् । 'स्वस्तये' स्वस्त्ययनाय अस्माकम् । 'नृभिः' एतैः ऋत्विग्भिः, 'पुनानः' पूयमानः । किंच, 'अभिवासय' अभिप्रच्छादय, अभिभावय वा । 'आशिरम्' तृतीयसवने । किंच, "ये ते मदा आहनसः" ये ते मदाः तव "आहननवन्तः" "वञ्चनवन्तः" सम्मोहयितारः, "विहायसः" महान्तः, "तैः" "इन्द्रं" "चोदय" प्रेरय, "दातवे" "दानाय" "मघं" धनम् । यथास्माकं तैर्मदैरनभिहतचेताः सन् दद्यात् मघं धनमित्यर्थः ॥ ४ । १५ । ५ ॥ *

## अक्ष्नसत् ॥ २४ ॥

"उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ॥ अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम्" ॥

उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासाध्यूढमिदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये । शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्यव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा ॥

"ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ।"
स्वपतो बोधयन्ती शाश्वतिकतमाऽऽगात् पुनरेयुषीणां पुनरागामिनीनाम् ॥ १ ॥

"अद्मसत् ( २४ )"—इत्येतदनवगतम् । "अद्मसादिनीति वा अन्नसानिनीति वा" शब्दसमाधी । "उपो अदर्शि शुन्ध्युवः०"—इति निगमः ( ऋ० सं० २,

१ 'पारंभा' ॥　　* अत्रैव पञ्चदशखण्डसमाप्तिः ॥　　२ 'सोऽध्यूढमिदम' ॥

१, ७, ४) । कक्षीवत आर्षम् । औषसी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "उपो अदर्शि" उपश्लिष्टा दृश्यत इयमुषाः ॥ कस्य ? "शुन्ध्युवः" शोधयितुरादित्यस्य, आदित्यो हि यदप्यशुचि भवति, तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोति । "सूर्यः पवित्रमुच्यते"—इति वक्ष्यति । तमांसि वा शोधयतीति शुन्ध्युः, तस्य शुन्ध्युवः ॥ कथं पुनरुपश्लिष्टा दृश्यते ? "वक्षो न" वक्ष इव, यथा तस्य स्वभासः स्वप्रकाशजालं वक्षोभूतमेतस्मिन् मण्डलेऽध्यूढम्, एवमियमुषा एतस्मिन् मण्डले उपश्लिष्टा दृश्यते, सन्निकर्षात् ॥ प्रासङ्गिकमुच्यते शब्दसामान्यात्—"इदमपीतरत्" "वक्षः" पुरुषवक्षः, पशुवक्षो वा अङ्गम् "एतस्मादेव" वहतेर्धातोः (भू० प०), इदम् "अध्यूढम्" अधिप्रवेशितमेव "काये" शरीरे भवति । "शकुनिरपि" य एष मद्गुर्नाम, अयमपि "शुन्ध्युरुच्यते" "शोधनादेव" यो हि "उदकचरो भवति" नित्यशुद्ध एवेति शुन्ध्युः । "आपोऽपि शुन्ध्यव उच्यन्ते" ता अपि हि शोधयन्ति । एवं तावदियम् उषाः आदित्यस्य वक्ष इवोपश्लिष्टा दृश्यते । किञ्च, इयमेवोषा "नोधा इवाविरकृत प्रियाणि" "नोधा ऋषिर्भवति" स हि "नवनं" स्तोत्रं देवताः प्रति "दधाति" । "स यथा" स्वमुखोद्गीर्णया "स्तुत्या" प्रियाण्यात्मनः "कामान्" स्वानि कामाख्यानि "आविष्कुरुते" आविष्कृणोति, प्रकाशयति देवताः प्रति । "एवम्" इयम् "उषाः" स्वात्मन एवोद्गीर्णेन प्रकाशेन "रूपाणि" जनानाम् "आविष्कुरुते" प्रकाशीकुरुते । किञ्च, इयमेवोषाः "अद्मसद्म ससतो बोधयन्ती" "अद्म अन्नम्" तत् प्रतिकर्त्तव्यतया सीदति, तद्वा सनोति, सम्भजत इति अद्मसत् गृहाधिकारे नियुक्ता अन्नसाधिका स्त्री । सा यथा प्रातरेव क्षीरादुपादानार्थं ससतः "स्वपतः" जनान् दोहकादीन् बोधयन्ती अन्नं साधयिष्यन्ती, एवमुषा अपि जनान् बोधयन्ती । तत्काले हि ते इतिकर्त्तव्यार्थं जनाः प्रतिबुध्यन्ते । तेनैतयैव बोधिता भवन्ति ॥ आह—कदा पुनरेतद्भवति ? इति । उच्यते—यदा "शश्वत्तमागात्" "शाश्वतिकतमा" नित्यतमा "आगात्" आगच्छति, तदैव जनान् बोधयति, एवमुषा रूपाण्याविष्कुरुते । एवं च वक्ष इवोषा आश्लिष्टा आदित्यस्य दृश्यते । आह—का वा सा शश्वत्तमा इयमुषाः ? इति । उच्यते—"पुनरेयुषीणाम्" "पुनरागामिनीनाम्"—इत्यर्थः । या एताः काश्चिद्गत्वा पुनरागच्छन्ति, ताः पुनरेयुष्यो गावः, अन्या वा, तासां पुनरेयुषीणामिति निर्धारयति । एषैव शश्वत्तमा शाश्वतिकतमा । एवमेतस्मिन् मन्त्रे, सामर्थ्याद्द्मसदित्यन्नसाधिका स्त्री उच्यते, सा हि तत्काले जनान् दोहकादीन् बोधयति, उषा अपि च तत्काल एवागच्छतीति, एवमुपमानमुपपद्यत इत्युपपत्तिः ॥ अन्ये तु मक्षिकामद्मसदं मन्यन्ते, सापि ह्यन्ने सीदति, सनोति वान्नं तत्काले, च प्रतिबुध्यमाना अन्यान् बोधयतीति ॥ ४ । १६ । ३ ॥

## इष्मिणः ॥ २८ ॥

"ते वाशीमन्त इष्मिणः ।"
ईषणिन इति वैषणिन इति वार्षणिन इति वा ।
वाशीति वाङ्नाम वाश्यत इति सत्याः ॥ २ ॥

"इष्मिणः ( २५ )"—इत्येतदनवगतम् । "ईषणिन इति वा, एषणिन इति वा, आर्षणिन इति वा" [ इति ] शब्दसमाधयः ।

"श्रियसे कं भानुभिः संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ॥
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ ( ऋ० सं० १, ६, १३, ६ )" इति निगमः ॥

राहूगणस्य गोतमस्येयमार्षम् । जगती । मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या, तत्र ह्युक्तम्—"प्रियवती याज्या पुरानुवाक्ये भवतः"—इति ॥ 'श्रियसे कम्' श्रियोऽर्थाय यजमानाय आत्मने वा, कमित्यनर्थकमेव, कामये इति वा अस्यार्थः । 'भानुभिः' दीप्तिभिः सूर्यरश्मिभिः, येऽन्तरिक्षे मरुतः 'संमिक्षिरे' सङ्गच्छन्ते, 'ते' एव 'रश्मिभिः' सर्वलोकनियन्तृभिः, संमिमिक्षिरे—इत्येतदेवानुवर्तते । 'ते' एव च 'ऋक्वभिः' रसहर्तृभिः संमिमिक्षिरे । 'सुखादयः' सुखदातारः जनानाम् । शोभनानां वा हविषां खादितारः, अत्तारः, सुखादयः । "ते" एव "वाशीमन्तः" वाग्मिनः । "इष्मिणः" "ईषणिनः" उपगमनवन्तः, "एषणिनो वा" इच्छावन्तः, "आर्षणिनो वा" आभिमुख्येन सर्वार्थानां द्रष्टारः, 'अभीरवो विद्रे' विदारयितव्ये शत्रौ प्राप्ते विगतभयाः ॥ अथवा विद्रे वेद्मि, जाने । य एवंलक्षणा मरुतः, तेषां मरुतां यत् स्थानम् अन्तरिक्षलोकः, तस्य 'प्रियस्य' इष्टस्य 'मारुतस्य' मरुतां स्वभूतस्य 'धाम्नः' स्थानस्य प्राप्तये, तानेव मरुतः स्तौमि, इत्यध्याहारः ॥ एवमेतस्मिन् मन्त्रे 'वाशीमन्त इष्मिणः'—इत्येतस्मादेकवाक्यसम्बन्धात् 'इष्मिणः'—इत्येतन्मरुद्विशेषणम् । "वाशीति वाङ्नाम" । "वाशी ( ११ ), वाणी ( १२ )"—इति पठितं वाङ्नामसु । वाश्यत इति कारकावधारणम् ॥ ४ । १६ । २ ॥

## वाहः ॥ २६ ॥

"शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।"
अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्त ऐन्द्रीत्येव शस्यते ॥ ३ ॥

---

१ 'वद्वा' ॥

"वाहः ( २६ )"—इत्येतदनवगतम् । पक्षेण चानेकार्थम् ॥

"शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।

एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम् ॥ ( ऋ० सं० ३, ३, १९, ३ )"—इति निगमः ॥

विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । होता ब्रवीति—हे "अध्वर्यो !" एहि "प्रति गृणीहि" "शंसाव" आवामुभावपि, न ह्यप्रतिगीर्यमाणं शस्यते, नाप्यशस्यमानं प्रतिगीर्यते, एवमितरेतरोपकारकत्वमभिप्रेत्योक्तं द्विवचनम्—शंसाव—इति । एवमितरेतरगुणसम्पन्नमेतत् "वाहः" स्तोत्रं "कृणवाव" आवाम् । स्तोम एव हि देवानां वोढा भवति । "वाहिष्ठो वां हवानां स्तोमः । ( ऋ० सं० ६, २, २९, १ )"—इति, "वोढृतमो हानानां स्तोमः"—इति हि वक्ष्यति । एवमियमभिवहनस्तुतिः ॥ एवमेतच्छस्त्रमभिवोढृ आभिमुख्यगामि "इदम्" "इन्द्राय" इन्द्रार्थम्, "जुष्टम्" प्रियम्, तस्य यथा स्यात् तथा कुर्वः ॥ अन्ये त्वेनाम् "अधिषवणप्रवादां" सोमाभिषवणप्रवादिनीं "स्तुतिं" "मन्यन्ते" वाहःशब्दो हि उदकवाहाभिधानसारूप्यात् तत्र युक्तरूपतर इति कृत्वा यदा पुनरेवं, तदैवमर्थो योज्यः,—इन्द्राय इदं वाहः सोमोदकपूर्णमाधिषवणफलकाख्यं वाहः जुष्टं प्रियं यथा स्यात् तथा कुर्वः । तद्धि सु 'शस्तं' सुप्रतिगीर्णं च इन्द्रस्य प्रीतिजनकं भवति । एतदेवं[२] कर्त्तव्यमावाभ्यां यतः, अतो ब्रवीमि,—'एदं बर्हिः यजमानस्य सीद' एतद् बर्हिः, यदेतदग्रतस्तीर्णमग्रेण होतारं बर्हिः सीद "स प्रतिगरायोपविशति"—इति ह्युक्तम्, यजमानस्य अभिप्रेतकामावाप्तये आसीद । मा अवमंस्थाश्चिरेणैतच्छस्यत इति, उपविष्टश्चेत् त्वं ममाग्रतः । 'अथ' अनन्तरमेव 'भूत्' भवति । 'उक्थं' शस्त्रमेतत्, 'इन्द्राय' इन्द्रार्थं 'शस्तम्' नात्र मम वाङ्[३] मृषेत्यभिप्रायः ॥ एवमियमभिवहनस्तुतिः, अथवा अधिषवणप्रवादा स्तुतिः, उभयथापि तु इयम् "ऐन्द्री त्वेव शस्यते" इदमेवैकमभिधानमत्र व्युत्पाद्यत इत्यभिप्रायः ॥ ४ । १६ । ३ ॥

# परीतक्म्या ॥ २७ ॥

## परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः ॥ ४ ॥ १६ ॥

"परितक्म्या (२७)"—"इति" एतत् "उपरिष्टाद् व्याख्यास्यामः" षोडशाध्याये, तत्र हि एतत् "किमिच्छन्ती सरमा प्रेद मानट् ( ऋ० सं० ८, ६, ५, १ )"—इत्येतस्मिन् मन्त्रे प्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टमिति ॥ ४ । १६ । ४ ॥ *.

---

१ 'कुर्युः' ॥ २ 'एतदेवं' ॥ ३ 'वाक्संगोस्तीत्य' ॥ * अत्र षोडशखण्डसमाप्तिः ॥ "इति निरुक्तवृत्तौ चतुर्था ( नवमा ) ध्यायस्य द्वितीयः पादः ॥ ४,२ ॥" इति तृपलभ्यते ॥

## सुविते ॥ २८ ॥

### सुविते सु इते सूते सुगते प्रजायामिति वा ॥
### "सुविते मा धा" इत्यपि निगमो भवति ॥ १ ॥

"सुविते ( २८ )"—इत्येतदनवगतम् । अनेकार्थं च । "सु इते"—इति, "सूते"—इति शब्दसमाधी । अत्र यदा सु इते—इति विपरिणामः, तदा "सुगते" इत्यर्थः । यदा सूते—इति तदा "प्रजायाम्" सूते देवदत्ता पुत्रमिति प्रजायत इत्यर्थः । एवं "सुविते"—इत्यस्य सु इते, सूते शब्दसमाधी । तयोरेतद् यथासङ्ख्येनार्थवचनम्, "सुगते, प्रजायामिति" । "सुविते मा धाः"—इत्यपि निगमः ।

"अनाधृष्टमस्यनाधृष्यं देवानामोजो अभिशस्तिपाः ।

अनभिशस्त्य(न्यम् । अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिर—)ञ्जसा सत्यमुपगेषं सुविते मा धाः"—( तैत्तिरीये ) इति ।

अनेन तानूनप्त्रं संस्पृश्यते । हे तानूनप्त्र ! 'अनाधृष्टमसि' अनाधर्षितमसि, त्वयि स्पृष्टे समयोपयन्त्रिता ह्येते नान्योन्यस्मै[१] द्रोहमुपयास्यन्त्यृत्विजः । कुतः पुनरेतत् सामर्थ्यं तव ? इति । इतः—यस्मात् 'अनाधृष्यं देवानामोजः' अनाधर्षणीयं त्वम् । ओजो बलमित्यर्थः । किंच, 'अभिशस्तिपाः' अभिशंसनात् पासि त्वम् । आत्मना वा 'अनभिशस्ति' नाभिशंसनीयं केनचित्, अनवद्यमित्यर्थः । ( 'अनु मे' 'इदं व्रतं व्रतपतिः' 'मन्यताम्' अनुमन्यताम् "इदं व्रतं" कर्म, "व्रतपतिः" अग्निः । स च 'मे' मयोपेयमानाम् एनां 'दीक्षाम्' 'अनुमन्यताम्' 'दीक्षापतिः' सोमः ।) किंच, 'अञ्जसा' अनन्तर्हितम्, अहम् 'सत्यम्' 'उपगेषम्' उपगतवान् । योऽहमेतदस्पृशम्, स त्वं हे तानूनप्त्र ! एवमुपगतवन्तं मां "सुविते" सुगते स्थाने, यत्र गतानां शोभनं गतं भवति, तत्र धेहि, अथवा प्रजायां जनयितव्यायां धेहि, यथा बह्वपत्याः स्याम तथा कुर्वित्यर्थः ॥ ४ ॥ १७ ॥ १ ॥

## दयते ॥ २९ ॥

### दयतिरनेककर्मा ॥
### "नवेन पूर्वं दयमानाः स्याम" इत्युपदयाकर्मा ॥

---

१ 'नान्योन्यस्मिन्' ॥

"य एकु इद्विदयंते वसु" इति दानकर्मा वा विभाग-
कर्मा वा ॥

"दुर्वर्तुर्भीमो दयते वनानि" इति दहतिकर्मा ।
दुर्वर्त्तुर्दुर्वारः ॥

"विदद्वसुर्दयमानो विशत्रून्" इति हिंसाकर्मा ॥

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना
तान् ॥ अयं हि वां मूतये वन्दनाय मां वायसो दोषा
दयमानो अबूबुधत् ॥"

दयमान इति ॥ २ ॥

"दयति ( २९ )"—इत्येष शब्दः "अनेककर्मा" अनेकार्थः, न त्वनेकविकल्पप्र-कृतिः,—यथा सुवितेशब्दस्य अन्येनान्येन धातुना विगृह्यानेकार्थत्वमुक्तम्,—इणा विगृह्य "सु इते"—इति गत्यर्थत्वम्, सूतिना विगृह्य "सूते"—इति च प्रजार्थत्वम्, नैवमिह । किं तर्हि ? एकप्रकृतिरेवायं शब्दोऽनेकार्थो भवतीत्यस्य विशेषस्योपद्योतनार्थ-मुदाहरति । एवमुच्यमानेऽप्यनेकार्थत्वे दयतिरनेककर्मैवेत्येवमुक्तम् ॥ अन्ये तु ब्रुवते,— यथा सुवितेशब्दोऽनेकार्थोऽनवगतसंस्कारश्च,नैवमयम् । किं तर्हि? अनेकार्थ एवायमिति॥

एवमनेकार्थत्वं प्रतिज्ञाय उदाहरणेनैवोपपादयति,—"नवेन पूर्वं दयमानाः स्याम"— "इति" एतस्मिन् मन्त्रे दयतीत्येष शब्दः "उपदयाकर्मा" । उपदयेति रक्षणमुच्यते । "नवेन" धान्येन "पूर्वं" पुराणं "दयमानाः" रक्षन्तः "स्याम" पुराणेन च नवम्, इष्टं हि नवेन पुराणस्य च रक्षणं, पुराणेन च नवस्य, प्रसिद्धं च लोके । तस्मादिहायमु-पपद्यते उपदयाकर्मा । 'चतुर्दशेऽध्याये' इत्यस्य शेषः ॥

"य एक इद्विदयते वसु"—"इति" एतस्मिन् मन्त्रे "दानकर्मा वा, विभाग-कर्मा वा" ।

"य एक इद्विदयते वसु मर्त्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ।( ऋ० सं० १, ६, ६, २ )" इति ।

राहूगणस्य गोतमस्यार्षम् । ऐन्द्री । उष्णिक् ॥ "यः" इन्द्रः "एकः इद्" एक एव स्वतन्त्रः "वि" विविधं "वसु" धनं "दयते" ददाति । कस्मै ? 'मर्त्ताय' मनुष्याय । किंलक्षणाय ? 'दाशुषे' दत्तवते हवींषि[1] ॥ अथवा विभागकर्मा—दाशुषे वसु विदयते विभजते इत्यर्थः ॥ किंलक्षणः पुनरिन्द्रो ददाति, विभजते वा ? इति । उच्यते— 'ईशानः' ईश्वरः, 'अप्रतिष्कुतः' अप्रतिस्खलितः संग्रामेषु । 'इन्द्रः' 'अङ्ग' क्षिप्रं धनं ददाति, विभजते वा, दाशुषे यजमानाय ॥ तमहं स्तौमि, सोऽस्माकमेतत् करोत्वित्यभिप्रायः । ईशानः, इन्द्रः, अन्यत्र दानविभागाभ्यां दाशुषे यजमानाय वस्वेकवाक्ये श्रूयमाणं किमन्यत् कुर्यात्? तस्माद् वाक्यसामर्थ्यादत्र "दानकर्मा वा विभागकर्मा वा" इत्युपपद्यते ॥

"दुर्वर्त्तुर्भीमो दयते वनानि"—"इति" एतस्मिन् मन्त्रे "दहतिकर्मा" दहनकर्मा ।

निगमप्रसक्तं निर्ब्रवीति,—"दुर्वर्त्तुः दुर्वारः" दुर्वारणीय इत्यर्थः ।

"अध जिह्वा पापतीति प्रवृष्णो गोषुयुधो नाशनिः सृजाना ।

शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥ (ऋ० सं० ४, ५, ८, ५)" इति ।

आग्नेयी । भरद्वाजस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ उपज्वलितस्याग्नेः 'अध' अथ, अनन्तरमेव तस्य 'जिह्वा' ज्वाला दारुषु 'पापतीति' पुनःपुनः पतति, 'प्रवृष्णः' प्रवर्धितुः इन्द्रस्य 'गोषुयुधः' गवार्थे वादे देवपपणिभिः सह असुरैर्युध्यतः ॥ अथवा गोषु अप्सु, मेघेन सह युध्यत इत्यर्थः । 'न'—इत्युपमा, इन्द्रस्य गोषु युध्यत इव । 'अशनिः' 'सृजाना' तेनैव सृज्यमाना यथा पतति, अशनिर्वज्रः, तथा अग्नेर्ज्वाला दारुषु पापतीति । किंच, 'शूरस्येव प्रसितिः क्षातिरग्नेः'। यथा कस्यचित् शूरस्य विक्रान्तस्य वा अप्रतिहतगतेः प्रसितिः प्रसहनं संग्रामानुप्रवेशमार्गः छिन्नभिन्नावरुग्णैः शत्रुभिः प्रकीर्णः[2] स्यात्, एवमस्य अग्नेः क्षातिः दहनमार्गः, ईषत्प्लुष्टार्द्धदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्यते । कदा पुनरेतद् भवति ? "दुर्वर्त्तुः" "दुर्वारः" दावाग्नीभूतः, "भीमः" सर्वप्राणिभयङ्करो यदायमग्निः "दयते" दहति ॥ किम् ? "वनानि" । एवमयमाग्नेये मन्त्रे वनशब्दसन्निकर्षे श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात् ? तस्मात् सामर्थ्यादिहायं दहनकर्मा—इत्युपपत्तिः ।

"विदद्वसुर्दयमानो विशत्रून्"—"इति" एतस्मिन् मन्त्रे "हिंसाकर्मा" ।

"इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो विशत्रून् ।

---

१ 'धन्वं' ॥ २ इतोग्रे—'इन्द्रस्यानम्यवा'—इति पाठाधिक्यं वर्तते, तदर्थः प्रकरणोपनिवद्धो यथावन्नावबुध्यते ॥ ३ 'अर्कै' ॥

ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे ॥ ( ऋ० सं० ३, २, १५, १ )" इति ।

विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । उद्भिद्बलभिदोर्निष्कैवल्ये निविद्धानीयस्य सूक्तस्य प्रथमैवेयम् ॥ 'इन्द्रः' 'पूर्भित्' असुरपुरां मेघानां वा भेत्ता, अद्भिः पूर्णा अपो वा पालयन्तीति मेघाः, पुरः, "पॄ पालनपूरणयोः ( क्र्या० प० )"—इत्येतस्य । 'आतिरत्' आभिनत् । 'दासं' दासयितव्यं मेघम् ॥ कैः सहायैः सह ?, 'अर्कैः' वृक्षैः [वा,] देवैर्माध्यमिकैर्वा ॥ किंलक्षणः पुनरसाविन्द्रः, य आतिरत् ? "विदद्वसुः" प्राप्तधनः । किं कुर्वन् आतिरत् दासम् ? "विदयमानः" विविधं हिंसन् "शत्रून्" ये मेघवधप्रतिबन्धिनः ॥ आह—किं विदद्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्रः, स एतदकरोत् ? नेत्युच्यते- 'ब्रह्मजूतः' च ब्रह्मणा स्तुतिलक्षणेन जूतः प्राप्तः, प्रीतो वा, ब्राह्मणतन्वा शरीरेण 'वावृधानः' वर्द्धमानः 'आपृणत्' आपूरयति । 'रोदसी' द्यावापृथिव्यौ उभे अपि 'भूरिदात्रः' बहुदानश्च इन्द्रो दासमातिरत् । एवमत्र विदद्वसुर्दयमानो विशत्रून्- इति शत्रुसन्निधौ दयतेः किमन्यत् सामर्थ्यमुपपद्येतान्यत्र वधात् ? ॥

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विनातान् ।
अयं हि वा मूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्"—इति।[1]

"दयमान इति" । अत्र दयतिर्गत्यर्थः । दयमानः उड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मां सुप्तं "दोषा" दोषायामबोधयत् । मृग्योऽत्र शेषः ॥ ४ । १७ । २ ॥

## नूचित् ॥ ३० ॥ नूच ॥ ३१ ॥

नूचिदिति निपातः पुराणनवयोर्नूचेति च ॥

"अद्या चिन्नूचित्तदपो नदीनाम् ।"

अद्य च पुरा च तदेव कर्म नदीनाम् ।

"नूच पुरा च सदनं रयीणाम् ।"

अद्य च पुरा च सदनं रयीणाम् ।

रयिरिति धननाम रातेर्दानकर्मणः ॥ ३ ॥ ४ ॥ १७ ॥

---

१ 'अहं हि वा' इति पाठान्तरं पुस्तकद्वये ।

"नूचित् (३०)"—"इति" एषः "निपातः" अनेकार्थत्वेनेह समाम्नातः। न हि निपातानां प्रकृतिप्रत्ययादिसंस्कारोऽस्ति, यस्यानवगमः स्यात्। स च पुनरयं "पुराणनवयोः" अर्थयोर्वर्त्तते। प्रकरणोपपदवशात् पुराणतां कस्यचिदर्थस्यावद्योतयाति, नवतां च कस्यचित्॥

"नूच (३१)"—"इति च"। अयमपि च पुराणनवयोरर्थयोर्वर्त्तते। अयं तु नूचिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नायान्त एवोदाहृतः॥

नूचिदित्यस्योदाहरणम्,—

"अद्याचिन्नूचित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र।
निपर्वता अद्मसदो न सेदुस्त्वया दृह्ळानि सुक्रतो रजांसि॥ (ऋ० सं० ४, ७, २, ३)" इति।

भरद्वाजस्येयमार्षम्। त्रिष्टुप्। उक्थपर्यायेष्वच्छावाकस्य शस्त्रे माध्यन्दिने सवने विनियुक्ता॥ "अद्याचित्" अद्य "नूचित्" पुरापि "तदपः नदीनां" संबन्धिकं तदपः कर्म वर्तते। "आभ्यो" नदीभ्यः 'गातुं' मार्गम् 'अरदः' प्रवहणार्थं व्यलिखः इति यत् कर्म तत् सर्वमनुपक्षीणं वर्तते इत्यर्थः। अपि च त्वदाज्ञया 'पर्वताः' गिरयः 'निषेदुः' निषण्णाः। उत्पन्नं परित्यज्य क्वचिदेव स्थाने नैश्चल्येनोपविष्टा बभूवुः 'अद्मसदो न' अद्मसदनीयमन्नं तदर्थं सीदन्तः पुरुषा इव यथा ते भोजनार्थं नैश्चल्येनासते इत्यर्थः। अतः कारणात् हे 'सुक्रतो!' शोभनकर्मन् 'इन्द्र'! त्वया 'रजांसि' सर्वे लोकाः 'दृह्ळानि' दृढीकृतानीत्यर्थः। "अद्य [ च ]" "पुरा च" "तदेव कर्म" 'नदीनां' वर्त्तते॥ कतमत्? 'यत्' उद्दिश्य वहनं कर्म। कथं नाम? अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति। 'गातुं' गमनमार्गम् 'आभ्यः' नदीभ्योऽर्थाय त्वम् 'अरदः' अखनस्त्वम्। किं? गमनम् गच्छन्त्यनेनेति गमनम्। हे 'इन्द्र!' तदेव कर्माद्यापि वर्त्तते, तासां नदीनाम्, यथा व्यादिष्टमेव त्वया। ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः। यदुक्तं पुरस्तादपि—"इन्द्रो अस्माँ अरदत्"—इत्यत्र। एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः॥ किंच, 'निपर्वता अद्मसदो न सेदुः'। य एते पर्वताः पर्ववन्तो मेघाः, अद्मसदः निष्पादयितव्यमन्नमस्माभिरित्येतमर्थमुद्दिश्यान्तरिक्षलोके[1] सीदन्ति, अवतिष्ठन्ते, गच्छन्ति वा, तेऽपि युष्मद्वीर्योपमृदिता एवोदकभूताः, नीचैर्भूम्यासन्ननिष्पत्त्यर्थं सेदुः सीदन्तीत्यर्थः। तदेवं कृत्वा [ किं बहुना ] सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि, हे सुकर्मन्! 'दृह्ळानि' दृढीकृतानि 'रजांसि' लोका इत्यर्थः। त्वं चेदेषामेवमन्नमुदकं च

१ 'रिक्षे लो'॥

न व्यधास्यः, सर्व एवैते लोका नाभविष्यन्नित्यभिप्रायः ॥ इहाप्येतस्य सन्निधौ वर्त्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते ॥ इह पुराणनवयोरित्युक्तम्, तत्र पुराणाभिधायित्वस्यैतदुदाहरणम्, नवाभिधायिमः–"नूचिन्न वायोरमृतं वि दस्येत्" अत्र हि वक्ष्यति—"नवं च पुराणं चेति" ॥

नूचेत्यस्योदाहरणम्,–

"नूचं पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्।
सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदाम् ॥ (ऋ० सं० १,७, ४, २)" इति।

कुत्सस्येयमार्षम्। त्रिष्टुप्। पृष्ठ्यस्य षष्ठेऽहनि आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्येते[1] ॥"नूच पुरा च सदनम्" अद्य च पुरा च सदनम् :। कस्य ? "रयीणां" धनानाम्। किंच, 'जातस्य' उत्पन्नस्य 'जायमानस्य' 'च' अभिनिष्पद्यमानस्य भूतजातस्य 'क्षाम्' निवासमित्यर्थः।"तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति विज्ञायते"। "यत्र गां शयानां निर्जगाति मृतामेतामद्विद्वान् मन्यतेऽन्वग्नौ ह्येवैते प्रविशन्तीति च विज्ञायते"। तस्माद्युपपद्यते स्थानत्वं निवासत्वं चाग्नेः।'सतश्च' निष्पन्नस्य भूतजातस्य 'गोपां' गोप्तारम्, 'भवतश्च' उत्पद्यमानस्य 'भूरेः' बहुनः, गोप्तारमित्यनुवर्त्तते। य एवंलक्षणोऽग्निस्तं 'द्रविणोदां' धनस्य दातारम्, 'देवाः' 'धारयन्' धृतवन्त इत्यर्थः। क्व ? हविर्वहनकर्मणि। "अथा देवा दधिरे हव्यवाहम्"–इति वक्ष्यति। एवमिह पुरा चेत्यस्य सन्निधौ नूचेत्येष शब्दो वर्त्तमानो नवाभिधायीत्युपपद्यते। पुराणाभिधायित्वे पर्येष्यमस्योदाहरणम्[2] ॥ ४। १७। ३,४॥ *

## दावने ॥ ३२ ॥ अकूपारस्य ॥ ३३ ॥

### "विद्यामु तस्य ते वयमकूपारस्य दावने ॥"

### विद्याम तस्य ते वयमकुपरणस्य दानस्य ॥ १ ॥

"दावने (३२)"–इत्येदनवगतम्। "दानस्य"—इत्यवगमः ॥

"अकूपारस्य (३३)"—इत्येतदनवगतम्। अनेकार्थम्। "अकुपरणस्य"—इत्यवगमः ॥ द्वयोरप्येतयोरेक एव निगमः,—

यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदाभर।
विद्याम तस्य ते वयमकूपारस्य दावने ॥—(ऋ० सं० ४,२,१०,२)" इति।

---

[1] 'शस्येते' ॥ [2] पर्येष्यम्–अन्वेषणीयम्–इत्यर्थः। अस्माकं न मिलितमनवकाशत्वात्–इत्यभिप्रायः ॥ * अत्र सप्तदशखण्डसमाप्तिः ॥

अत्रेभौमस्येयसार्पम् । अच्छावाकस्य तार्तीयसवनिके अत्रापे विनियुक्ता, "यदिन्द्र-न्चित्र"—इति, इयं च ॥ हे 'इन्द्र !' 'यत्' 'मन्यसे' जानीषे त्वं 'वरेण्यं' वरणीयम्, एतद्धनमिति, 'द्युक्षं' च, यत् द्युतिनिवासभूतम्, द्युतिमदित्यर्थः । 'तत्' अस्मभ्यम् 'आभर' । कदाचित् त्वमाहृत्यापि न दद्याः ? अतो ब्रूमः,—"तस्य" त्वयाहृतस्य धनस्य "विद्याम" लभेमहि "ते" तव स्वभूतस्य ॥ किंलक्षणस्य ? "अकूपारस्य" "अकुपरणस्य" अकुत्सितपूरणस्येत्यर्थः । येन लब्धेन सुपूर्णमात्मानं मन्यामहे पर्याप्तमैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः । "दावने" "दानस्य" इत्यर्थः । ईदृशस्य भावत्कस्य धनस्य वयमेव लब्धारः स्यामेत्यभिप्रायः । एवमिह यन्मन्यसे वरेण्यं, द्युक्षं च तदाभरेति इन्द्र उच्यमानो धनसन्निधानाद् दानादन्यत् किमुच्यते ? धनमेव हि प्रायेण मनुष्यैः प्रार्थ्यते, तस्मादत्राश्रूयमाणेऽपि धनशब्दोऽध्याहृतः । तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते । तस्मादकूपारस्येत्येष शब्दोऽतिपरोक्षवृत्तिः। अकुपरणस्य—इत्येवं परोक्षवृत्तित्वे नावस्थाप्य, ततः 'अकुत्सितपूरणस्य' इत्येवं, प्रत्यक्षवृत्तित्वेन व्याख्यायते । अत्र कुरिति कुत्सार्थः, परणं पूरणमुच्यते, कुत्सितं परणं कुपरणम्, न कुत्सितं परणम् अकुपरणम्, तस्य अकुपरणस्य प्रभूतस्येत्यर्थः॥ दानसम्बन्धादेव दावने—इत्येव शब्दो दानार्थ इत्युपपत्तिः॥

एतस्मिन् मन्त्रे 'अकूपारस्य, दावने'—इत्ययमनयोः पदयोरनुक्रमः, समाम्नाये पुनः 'दावने, अकूपारस्य'—इति मन्त्रपाठव्यतिक्रमेणानुक्रमः।तेन ज्ञायतेऽन्यैरेवायमृषिभिः समाम्नायः समाम्नातः, अन्य एव चायं भाष्यकार इति, एको हि समाम्नानं भाष्यं च कुर्वन् प्रयोजनस्याभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत् । अविवक्षितार्थाश्चैते मन्त्रे निगमाः, तेषु सम्पत्त्या काकतालीयन्यायेन कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे अगच्छतस्ते यथोपागते एव भाष्यकारो व्याचष्ट—इत्यदोषः ॥ ४ । १८ । १ ॥

**आदित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः ॥**

**समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः ॥**

**कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति ॥**

**कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा ॥**

**कच्छः खच्छः खच्छदः ॥**

**अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकं तेन छाद्यते ॥ २ ॥**

"आदित्योऽप्यकूपारः"—इति "उच्यते"। किं कारणम् ? स हि अकुत्सितस्य महतोऽध्वनः पारयिता भवति, उदयादारभ्य यावदस्तमिति ॥

"समुद्रोऽप्यकूपार उच्यते" असावपि ह्यकुत्सितपारः आत्मनैव भवति । "महापारः"—इति पर्यायेणार्थवचनम्, विस्तीर्णपार इत्यर्थः ॥

"कच्छपोऽप्यकूपार उच्यते" स हि "न कूपमृच्छति" अल्पोदकत्वात् । किं तर्हि ?, यत्र बहु प्रकीर्णमुदकम्, तत् स्थानं गन्तुमिच्छति, समुद्रं नदीं वा ।

आख्यानप्रसक्तमुच्यते,— "कच्छपः", "कच्छम्" आत्मनो मुखसम्पुटं "पाति" रक्षति । स हि किञ्चिद् दृष्ट्वा स्वशरीरे एव मुखसम्पुटं प्रवेशयति, सम्पुटे हि कच्छशब्दः प्रसिद्धः, प्राणिवाच्यः कच्छपुट इति च ॥ "कच्छेन" कटाहेन इतराण्यङ्गानि "पातीति वा, स हि किञ्चिद् दृष्ट्वा सर्वाण्यङ्गानि कटाह एवानुप्रवेश्य कूर्मत्वेनैवावतिष्ठते । अथ "वा" "कच्छेन" मुखसम्पुटेन "पिबतीति" कच्छपः ॥

विग्रहप्रसक्तः कच्छशब्दो निरुच्यते,—य एष "कच्छः" मुखसम्पुटः कटाहो वायं कच्छः, आह—किमुक्तं भवति ? "खच्छः"—इत्युच्यते, स हि "खच्छदः" खम् आकाशं छादयति, स हि मध्ये सुस्थिरो भवति ।

"अयमपीतरो नदीकच्छ एतस्मादेव" कसंज्ञकेन उदकेन "छाद्यते" इति कच्छः ॥

आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपारः—इत्येतेषु निगमाः पर्येष्याः ॥ ४ । १८ । २ ॥

## शिशीते ॥ ३४ ॥

"शिशी॑ते शृ॒ङ्गे रक्ष॑से वि॒निक्षे॑ ॥"

निश्यति शृङ्गे रक्षसो विनिक्षणनाय ॥

रक्षो रक्षितव्यमस्माद् ॥ रहसि क्षणोतीति वा । रात्रौ नक्षत इति वा ॥ ३ ॥

"शिशीते ( ३४ )"—इत्येतदनवगतम् । "निश्यति"—इत्यवगमः ॥

"वि ज्योति॑षा बृह॒ता भा॑त्य॒ग्निरा॒विर्विश्वा॑नि कृणुते महि॒त्वा ।
प्रादे॑वीर्मा॒याः स॑हते दु॒रेवा॑ः शिशी॑ते शृ॒ङ्गे रक्ष॑से वि॒निक्षे॑ ॥ ( ऋ० सं० ३, ८, १५, ३ )"—इति निगमः ।

वृषो नाम जनपुत्रस्तस्येयमार्षम्, आत्रेयस्य वा कुमारस्य, उभयोर्वा । प्रातरनुवाकाश्विनयोः शस्यते ॥ 'वि भाति' 'अग्निः' नानाप्रकारं भाति । केन ? 'बृहता ज्योतिषा'

स एवं विभासमानः किं करोति ? 'आविर्विश्वानि कृणुते' आविः कृणुते आविष्करोति प्रकाशीकरोति विश्वानि सर्वाणि भूतानि । 'महित्वा' महत्त्वेनेत्यर्थः । किंच, 'प्रादेवीर्मायाः सहते' प्रसहते प्रकर्षेणाभिभवति । किम् ? अदेवीर्मायाः आसुरीरित्यर्थः । 'दुरेवाः' दुरवाः, दुस्तर्पा वा, न ह्यग्नेस्तृप्तिरस्ति । किञ्च, "शिशीते शृङ्गे" यथा हि वृषभस्तटानिघ्नन् शृङ्गे तीक्ष्णीकरोति, एवमग्निरपि दारूणि दहंस्तीक्ष्णीकरोति ज्वालाः । कमर्थं पुरस्कृत्य ?—"रक्षसे विनिक्षे" "रक्षसो विनिक्षणनाय" विहिंसनायेत्यर्थः ॥ अत्र शृङ्गशब्दसन्निधानात् शिशीते—इत्यस्य तीक्ष्णार्थत्वम्, तीक्ष्णीकृतैर्ह्यर्चिर्भिर्विनिक्षणनमुपपद्यत इति ॥

निगमप्रसक्तमुच्यते,—"रक्षः रक्षितव्यम्" हि शरीरम् "अस्मात्" भवति, तद्धि रक्षो मानुषान् भक्षयति । "रहसि वा" विविक्ते प्रदेशे रक्षः "क्षणोति" हिनस्तीत्यर्थः। "रात्रौ नक्षते" गच्छति—"इति वा" रक्षः ॥ ४ । १८ । ३ ॥

## सुतुकः ॥ ३५ ॥

**"अग्निः सुतुकः सुतुकेभिरश्वैः ॥"**

**सुतुकनः सुतुकनैरिति वा । सुप्रजाः सुप्रजोभिरिति वा ॥४॥**

"सुतुकः (३५)" इत्येतदनवगतम् । पक्षेण चानेकार्थम् । "सुतुकनः"—इत्यवगमः, "सुतुकनैरिति वा" ॥

"स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।
अग्निः सुतुकः सुतुकेभिरश्वैरभस्वद्भी रभस्वा[१] एह गम्याः ॥ (ऋ०सं० ७, ५, ३१, ७)" इति निगमः ॥

त्रितस्येयमार्षम् आप्त्यस्य । प्रातरनुवाकाश्विनयोः शस्यते ॥ यस्त्वं 'दिवस्पृथिव्योः' 'युवत्योः' सम्मिश्रीभवन्त्योः यानि भूतानि अन्तरा वर्त्तन्ते, तेषां सर्वेषाम् 'अरतिः' त्वमेवालमतिः, पर्याप्तमतिरित्यर्थः । 'सः' एवंलक्षणस्त्वमस्माकम् 'आवक्षि' आह्वयसि देवान्, 'महि' महत इत्यर्थः । स एवम् 'आसत्सि च' आसीदसि च होतृत्वे । "अग्निः"—इत्येतत् पदं सम्बोधनत्वेन विपरिणम्यते, आ वक्षि—आ च सत्सि—इति मध्यमपुरुषयोगान्मन्त्रस्य । हे 'अग्ने !' यस्त्वमेवङ्गुणयुक्तः "सुतुकः" "सुतुकनः" सुगमन इत्यर्थः, अथवा "सुप्रजाः" । तुगित्यपत्यनामसु पठितम् । हिरण्यमपत्यमभिप्रेतमग्नेः' 'हिरण्यरेता अग्निः'—इति श्रूयते, 'अग्नेरपत्यं प्रथमं सुवर्णम्'—इति च। "सुतुकनैः" एव सुगमनैः 'अश्वैः' अथ "वा" "सुप्रजोभिः" कुलजैरित्यर्थः । अथवा शोभना प्रजा येषां



[१] 'संबोधनार्थत्वेन' ॥

ते सुप्रजाः, शोभनानामेवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेण चाश्वा एवैते श्रूयन्ते, अश्वद्वारेण चाग्निः स्तूयते ॥ अथवा स एवाग्निः सुतुकः सुप्रजाः अपत्यं चास्य सर्वाः प्रजाः, ताश्च प्रति कल्याण इति सुप्रजाः । 'रभस्वद्भिः' त्वरितैः 'रभस्वान्' स्वयं च त्वरितः 'एह गम्याः' आगच्छेस्त्वमिह मम कर्मणि, नित्यं हवींषि वोढुम्, कर्मैव तवेदमित्यभिप्रायः । एवमेतदिह सुतुकः–इत्यग्निविशेषणम्, सुतुकनैरश्वैरित्ये तस्मात् तृतीयासम्बन्धादित्युपपत्तिः ॥ ४ । १८ । ४ ॥

## सुप्रायणाः ॥ ३६ ॥

## "सुप्रायणा अस्मिन् यज्ञे विश्रयन्ताम् ॥"

## सुप्रगमनाः ॥ ५ ॥ १८ ॥

"सुप्रायणाः ( ३६ )"–इत्येतदनवगतम् । "सुप्रगमनाः"–इति शब्दप्रतीतिः ॥ यज्ञगृहद्वारोऽभिधेया यास्कमतेन, शाकपूणेस्तु अर्चिषः ॥

"होता यक्षद्दुर ऋष्वा कवष्योऽकोषधावनीरुदाताभिर्जिहतां वि पक्षोभिः श्रयन्तां सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ॥ ( य० का० सं० वा० सं० २८, ५ )"इति निगमः ।

मैत्रावरुणो ब्रवीति,–'होता यक्षत्' होता यजतु । किम् ? एताः 'दुरः' यज्ञगृहद्वारः, अथवैता अग्न्यर्चिषः । 'ऋष्वाः' महत्यः ॥ अथवा हिंस्राः, द्वार्येव हि यो निवारणीयः, स हिंस्यते, अर्चिषां तु हिंस्रत्वमुपपद्यत एव । 'कवष्यः' विकर्त्तिताः, विकृपिताः सुषिरा इत्यर्थः, कपाटवत्यो वा यज्ञगृहद्वारः । 'अकोषधावनीः' अकोशधावनीः, तासु हि संवृतासु द्रव्यकोशाः सुरक्षा भवन्ति, अर्चिःष्वपि हविः प्रक्षिप्तं नान्यतो धावति । किं तर्हि? देवानेव प्राप्नोति, एतदकोशधावनीत्वमर्चिषाम् । एवंलक्षणा एता द्वारः, अर्चिषो वा "उदाताभिर्जिहताम्" उज्जिहताम् उत्तिष्ठन्तु, आताभिः दिग्भिः, 'विश्रयन्ताम्' च 'पक्षोभिः' विव्रियन्ते कपाटसंवरणैः द्वारः, अर्चिषस्तु हविषोऽनुप्रवेशार्थम् पक्षोभिः स्वैरेवावयवैर्विश्रयन्ताम् । विवृताश्च सत्यः "सुप्रायणाः" "सुप्रगमनाः" भवन्तु ऋत्विजं प्रति द्वारः ॥ अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु । सामान्यमेवेदमाशास्तं यत्, पुनस्तेस्मिन्नेव वर्त्तमाने कर्मण्याशास्ते,–"अस्मिन् यज्ञे" "विश्रयन्तां" विव्रियन्ताम् 'ऋतावृधः' यज्ञवर्द्धयित्र्यः । या एता एवंलक्षणा द्वारः, अर्चिषो वा, ता अस्याः 'आज्यस्य व्यन्तु' य आसां स्वांशः, तं पिबन्तु । हे 'होतः !' त्वमपि मया प्रेषितः 'यज' एताः ॥ एवमेष सुप्रायणाः–इति दुरामर्चिषां वा सन्निधौ श्रूयमाणः सुप्रगमनाभिधायीत्युपपद्यते ॥ ४ । १८ । ५ ॥ *



१ 'दशोकधाव' २ 'नरस्मि' ॥ * अत्राष्टादशखण्डसमाप्तिर्द्रष्टव्या ॥

## अप्रायुवः ॥ ३७ ॥

"देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥"

देवा नो यथा सदा वर्द्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि ॥ १ ॥

"अप्रायुवः (३७)" इत्येतदनवगतम् । "अप्रमाद्यन्तः"—इत्येवमर्थप्रतीतिः ॥

"आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ॥

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ (ऋ० सं० १, ६, १५, १)" इति निगमः ॥

गोतमस्येयमार्षम् । अग्निष्टोमे महाव्रते तृतीयसवने वैश्वदेवशस्त्रे शस्यते ॥ 'आ यन्तु' उपयन्तु, अस्माकं 'भद्राः' भन्दनीयाः, स्तुत्याः । 'क्रतवः' सोमक्रतवः, कामा वा । 'विश्वतः' सर्वतः, सर्वदैव यथाविहितेषु कालेषु । 'अदब्धासः' अनुपहताः, अविगुणाः, कैश्चिदपि दस्युभिः 'अपरीतासः' अपरिप्राप्तपूर्वाः, अस्मच्छत्रुभिः[१] ॥ 'उद्भिदः' च उद्भेत्तारः, एषां त्रयाणामपि लोकानाम्, येषां फलेनैतान् त्रीनपि लोकान्विन्देमहि, तेऽत्र आगच्छन्तु । किंच, तथा च तेऽत्यर्थमविगुणा आगच्छन्तु, 'यथा' तैः परितोषिताः सन्तः "देवाः" 'सदम्' 'इत्' "सदा" एव नित्यमेवास्माकं "वर्द्धनाय" उद्यताः 'असन्' स्युरित्यर्थः, भाष्येऽपि "स्युः"—इत्येष पाठः 'असन्'—इत्येष प्रमादपाठः ॥ "अप्रायुवः" "अप्रमाद्यन्तः" प्रमादमकुर्वाणाः, असन्मुह्यमाना इत्यर्थः । वर्द्धयितारः "रक्षितारः" च । "दिवेदिवे" अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः, सगुणाः कामा वा आगच्छन्तु । अत्र अप्रायुवो रक्षितारः—इति रक्षितृशब्देन समानार्थसन्निवेशादप्रायुवशब्दस्याप्रमादार्थत्वम्, रक्षणे हि सत्यप्रमादस्येष्टत्वात् ॥ ४ । १९ । १ ॥

## च्यवनः ॥ ३८ ॥

च्यवन ऋषिर्भवति च्यावयिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति ।

"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।"



१ 'कानुद्भिन्दीम' ॥

**युवं च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुः ॥**

**युवा प्रयौति कर्माणि ॥**

**तक्षतिः करोतिकर्मा ॥ २ ॥**

"च्यवनः ( ३८ )"–इत्येतदनवगतम् । "ब्यावनः"–इत्येवमर्थप्रतीतिः "ऋषिर्भवति"–इत्यभिधेयवचनम्, "च्यवानम्"–"इति" एवम् "अप्यस्य" ऋषेर्भृगुपुत्रस्य च्छन्दसि "निगमाः" सन्ति । च्यवन इति प्रसिद्धमेवेति कृत्वा निगमं न पठति । इतरथा त्वप्रसिद्धमल्पप्रयोगं चैतादिति कृत्वा पठति—

"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या ॥ (ऋ० सं० ७, ८, १५, ४)"–इति ।

काक्षीवत्या घोषाया इयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । अश्विनावुच्येते,–हे अश्विनौ ! "युवां" "च्यवानम्" ऋषिं च्यावयितारं स्तोमानाम् । "सनयं" वृद्धं गमनासमर्थं सन्तम् "यथा" चिरन्तनं "रथं" गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्यात्, एवं "पुनः युवानम्" च्यवनमृषिं "चरथाय" "चरणाय" गमनार्थम् "तक्षथुः" कृतवन्तौ स्थ इत्यर्थः । किंच, 'निष्टौग्र्यमूहथुः' निरूहथुः, निर्हृतवन्तौ स्थः, तौग्र्यं तुग्रयाणामपां संघातं मेघानाम् । क्व पुनः निरूहथुः ? 'अद्भ्यस्परि' चिरन्तनीनामन्यासामपामुपरि, अनुपक्षीणास्वेवान्यासु वार्षिकास्वप्सु, तासामेवोपरि लोकानुग्रहार्थमन्यमुदकसंघातं निरूहथुः । 'ता' तान्येवमादीनि कर्माणि 'विश्वा' विश्वानि, सर्वाणि । 'वां' युवयोः 'सवनेषु' यज्ञेषु, प्रातःसवनादिषु वा 'प्रवाच्या' प्रकर्षेण वचनीयानि स्तोतॄणाम् ॥ एवमेतस्मिन् मन्त्रे "च्यवाना"—शब्देन च्यवन एव ऋषिरुक्तः, स हि श्रूयते सौकन्ये आख्याने,–जीर्णः सन्नश्विभ्यां पुनर्युवा कृत इति । तस्मादुपपद्यते ॥

निगमप्रसक्तमुच्यते–"युवा, प्रयौति कर्माणि" मिश्रयति ।

"तक्षतिः करोतिकर्मा" करोतीत्यर्थः ॥ ४ । १९ । २ ॥

## रजः ॥ ३९ ॥

**रजो रजतेर्ज्योती रज उच्यते । उदकं रज उच्यते लोका रजांस्युच्यंते ।**

**असृगहनी रजसी उच्येते ॥**

**"रजांसि चित्रा विचरन्ति तान्यवः" इत्यपि निगमो भवति ३ ॥**

"रजः (३९)"—इत्यनेकार्थम् । "रजतेः"—इति व्युत्पत्तिः ॥ "ज्योती रज उच्यते" तद्धि अनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन । "या ते अग्ने रजःशया तनूः"—इत्येवमाद्युदाहरणं द्रष्टव्यम् । भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान् न पठति ॥

"उदकं रज उच्यते" तदपि हि स्वेन स्नेहाख्येन गुणेनानुरञ्जयति ।

"भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ (ऋ० सं० ७, ६, ४, १,)" इति निगमः ॥

हे 'अग्ने!' त्वमेवास्य 'यज्ञस्य' 'भुवः' पृथिवीलोकादमुम् अन्तरिक्षलोकं 'नेता' 'रजसः' उदकस्य च नेता, "अग्निर्वा इमां वृष्टिं समीरयति"—इति हि वक्ष्यति । क्व पुनर्नेता ? 'यत्र' यस्मिन् लोके 'नियुद्भिः' अश्वजातिभिः 'शिवाभिः' सुखतमाभिः सहितं 'वायुम्' अन्तरिक्षस्थानं 'सचसे' संसेवसे त्वम्, तत्र नेता, मध्यस्थानानां देवानां स्थितये । किंच, त्वमेव 'दिवि' अवस्थितः सर्वभूतमूर्द्धानं 'दधिषे' धारयसि । यज्ञाभिनिष्पन्नेनेतो लोकादूढेन हविषा 'स्वः' स्वराख्यमादित्यम् । किंच, त्वमेव एतां 'जिह्वां' ज्वालाम् अत्यद्भुताम्, आत्मनः सकाशात् 'चकृषे' पुनःपुनः करोषि । या अस्मत्प्रत्तानि हवींषि उपक्षपयति, यस्त्वमेवङ्गुणयुक्तस्तं त्वां वयमेतस्मिन् कर्मणि 'हव्यवाहं' हविषां वोढारम्, अनेन पुरोडाशाख्येन हविषा यजामः । पौर्णमासस्याग्नेयस्य हविषो याज्यैषा ॥

"लोका रजांस्युच्यन्ते" तेष्वपि हि प्राणिनो रज्यन्ते । "त्वया दृळ्हानि सुकृतो रजांसि (ऋ० सं० ४, ७, २, ३)"—इति व्याख्यातो निगमः ॥

"असृगहनी, रजसी उच्येते" । असृग् रुधिरम्, असृक् च अहश्च असृगहनी ते अपि रजसी उच्येते । "मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति"—इति रुधिरस्योदाहरणम् । "अहश्च कृष्णमहरर्जुनं च"—इत्यह्न उदाहरणम् ॥ ४ । १९ । ३ ॥

**हरः ॥ ४० ॥**

**हरो हरतेर्ज्योतिर्हर उच्यते ॥**

**उदकं हर उच्यते ॥**



१ 'इतो वृ' ॥ २ 'वस्थितं स' ॥ ३ 'काहतेन' ॥

लोका हरांस्युच्यन्ते ॥

असृगहनी हरसी उच्येते ।

"प्रत्यग्ने हरसा हरः शृणीहि" इत्यपि निगमो भवति ॥ ४ ॥

"हरः (४०)"—इत्येतदप्यनेकार्थम् । "हरतेः"—इति व्युत्पत्तिः । "ज्योतिर्हर उच्यते" तद्धि ह्रियते, हरति वा स्नेहम्, विरूक्षीकरोति । हरति वा तम इति हरः । "या ते अग्ने हरःशया तनूः" "अग्ने यत्ते हरस्तेन तं प्रति हर"—इत्येवमादयः प्रचुरा एव निगमा इति अत्रापि भाष्यकारो न पठति ॥

"उदकं हर उच्यते" तद्धि ह्रियते प्राणिभिः जीवनाय ॥

"लोका हरांस्युच्यन्ते" तेभ्यो हि क्षीणपुण्याः प्राणिनो ह्रियन्ते ॥ ४ । १९ । ४ ॥

## जुहुरे ॥ ४१ ॥

"जुहुरे विचितयन्तः ॥"

जुह्विरे विचेतयमानाः ॥ ५ ॥

"जुहुरे (४१)"—इत्येतदनवगतम् । "जुह्विरे"—इत्यवगमः ।

"जुहुरे विचितयन्तोऽनिमिषं नृम्णं पान्ति ।
आ दृह्ळां पुरं विविशुः ॥ (ऋ० सं० ४, १, ११, २)" इति ।

वव्रेरात्रेयस्यार्षम् ॥ "जुहुरे" "जुह्विरे", जुह्वति । येऽग्नि "विचितयन्तः" "विचेतयमानाः" कर्मकर्तृसाधनानां याथात्म्यं वेददर्शनेन जानानाः, ये च नराः 'अनिमिषम्' आदरवदवस्थानमात्मनः कृत्वा युक्तात्मानो 'नृम्णं' योगबलमात्मनः कर्मणि वर्त्तमाने 'पान्ति' रक्षन्तीत्यर्थः । आह—ये एवंगुणयुक्ताः, किं तेषाम् ? इति उच्यते—'आ दृह्ळां पुरं विविशुः' ते दृढां नित्यम्, अनावृत्तये परब्रह्ममयीं पुरम् इमामदृढां शरीरपुरं पापिष्ठां हित्वेत्यभिप्रायः ॥ विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत् कुर्युः ? येन दृढां पुरमाविशेयुः । शब्दसारूप्यमपि च जुहुरे-इत्येतस्मिञ्छब्देऽस्त्येव । प्रकरणाच्चेयमाग्नेयी ऋक् । तस्मात् 'जुहुरे'—इत्येष शब्दो हवनार्थ एवेत्युपपद्यते ॥ ४ । १९ । ५ ॥



१ 'याथार्थ्यं वेदान्तदर्श' ॥

व्यन्तः ॥ ४२ ॥

व्यन्त इत्येषोऽनेककर्मा ॥

"पदं देवस्य नमसा व्यन्तः" इति पश्यतिकर्मा ॥

वी "व्रीहिं शूर पुरोळाशम्" इति खादतिकर्मा ॥

"वीतं पातं पयस उस्रियायाः ।" अश्नीतं पिबतं पयस उस्रियायाः ॥

उस्रियेति गोनाम । उस्राविणोऽस्यां भोगाः । उस्रेति च ॥ ६ ॥

"व्यन्तः (४२)"—"इत्येषोऽनेककर्मा ।" यस्माद्धातोरयं शब्दो निष्पद्यते, स धातुरनेककर्मा, अनेकार्थः । "वी गतिप्रजननकान्त्यसनखादनेषु (अदा० प०)"—इति । तद्यथा,—

"पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ (ऋ० सं० ४, ४, ३५, ४)" इति ।

"इति" अत्र "पश्यतिकर्मा" । भरद्वाजस्येयमार्षम्[1] । प्रातरनुवाकाश्विनयोः शस्यते, पशौ च विनियुक्ता । "पदं" स्थानम्, अवस्थानं याथात्म्यम्[2], अग्नेः "देवस्य" दानादिगुणयुक्तस्य "व्यन्तः" पश्यन्तो जानानाः । केन ? "नमसा" नमस्कारेण, 'स्तुत्या' मन्त्रेणेत्यर्थः । मन्त्रार्थपरिज्ञानादेव ह्यग्नेराध्यात्माधिदैवाधिभूताधियज्ञेष्ववस्थानं याथात्म्यतो दृश्यते । पदशब्दो हि स्थाने प्रसिद्धः, पदस्थोऽयमिति हि वक्तारो भवन्ति लोके । अथवा नमसा अन्नेन, हविराख्येनाभ्युद्यतेनेति योज्यम् । 'श्रवस्यवः' श्रव इच्छमानाः, अन्नमात्मनः प्रार्थयमानाः । यम् एवमग्नेः स्तुतिभिर्विद्वांसो याथात्म्यम्, अन्नैर्वा अभ्युद्यतैः श्रव इच्छमानाः पश्यन्तोऽग्निमुपासते । किं तेषाम् ? इति । उच्यते—'श्रव आपन्' । किंलक्षणं पुनराप्नुवन्ति ? 'अमृक्तम्' अमृदितम्, अनुपभुक्तमन्यैः । किंच, 'नामानि चित्' ये चैते ग्रन्थमात्राध्येतारः केवलच्छान्दसाः, नामान्यपि च मन्त्रभावेनावस्थितानि धारयन्ति, अनर्थज्ञाः, 'यज्ञियानि' यज्ञार्हाणि, 'ते'अपि 'भद्रायां' भन्दनीयायाम्, अग्नेः 'सन्दृष्टौ' सन्दर्शने 'रणयन्त' रमयन्त्येवात्मानम् । तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः ॥



१ 'षेय' ॥ २ 'थार्थ्यम्' ॥

एवमेतस्मिन् मन्त्रे "पदं, देवस्य, नमसा, व्यन्तः, श्रवस्यवः, श्रवः, आपन्"-इत्येतेषां पदानामेकवाक्ययोगात् "व्यन्तः"-इत्यस्य शब्दस्य पश्यत्यर्थतोपपद्यते ॥

"इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद ।

व्रीहि शूर पुरोळाशम् ॥ (ऋ० सं० ३, ३, ३, ३)" इति ॥

"इति" अत्र "खादतिकर्मा" । विश्वामित्रस्येयमार्षम् । रात्रिपर्यायेषु महारात्रिके पर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । 'इमाः' इमानि, 'ब्रह्म' ब्रह्माणि, ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि, अस्माभिः ब्रह्मणोऽस्य हविषः वहनसमर्थानि, त्वां प्रति "क्रियन्ते" उच्यन्त इत्यर्थः । यतो ब्रवीमि,-हे इन्द्र ! 'आ बर्हिः सीद' आसीदेदं बर्हिः प्रति । आसीनश्चैतस्मिन् बर्हिषि, "व्रीहि" भक्षय एतमस्मत्प्रदत्तं हे "शूर" ! "पुरोळाशम्"॥ एवमेतस्मिन् मन्त्रे व्रीहि शूर पुरोळाशम्-इत्येतस्मादेकवाक्यसंयोगात् व्रीहि-इत्येषशब्दः खादनार्थः प्रतीयते । किमयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्यात् ? । प्रसिद्धं च लोके कठिनद्रव्यस्य भक्षणम्, भक्षयति मोदकादीनि । तस्मात् समाथ्यार्द्भक्षणार्थोऽयमित्युपद्यते ॥

"वीतं पातं पयसः"-इत्यत्राशनार्थः ॥

"उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ॥

उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥ (ऋ० सं० २, २, २३, ४)" इति ॥

मैत्रावरुण्येषा । त्रिष्टुप् । दीर्घतमस आर्षम् । मित्रावरुणावुच्येते,-'उत वाम्' अपि युवयोः, एतासु 'विक्षु मद्यासु' एतेषु मनुष्येषु मदयितृषु वर्त्तमानमेतत् 'अन्धः' हविर्लक्षणम्, यदेतदेतस्मिन्नहनि एभिर्मनुष्यैः भवद्भ्यां देयं पयस्याख्यम् आज्याख्यं च । तदेव 'गावः' एताः 'च आपः' 'देवीः' दानादिगुणयुक्ताः । आसां गवामुपकारं कुर्वत्यः, 'पीपयन्त' वर्द्धयन्तीत्यर्थः । यदेतदशनपानयोग्यम्, आज्यं सान्नाय्यलक्षणम् आभिरद्भिर्गोभिश्च युवयोरन्धो वर्ध्यते । 'उतो नो अस्य' अप्यस्य हविषोऽस्मत्पूर्वो यजमानः पतिः । पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति, तदनन्तरं स तद् ऋत्विग्भ्यः समर्पयति-'देवतायै संस्कुरुतैतत्'-इति, ततस्ते तस्य हविषः पतयो भवन्ति । तानपेक्ष्य यजमानः पूर्व्यः पतिः । तदपेक्षयैवमृत्विज आहुः,-योस्मत्तः ? 'पूर्व्यः पतिः' अस्य हविषः, सः 'दन्' भवति,दददित्यर्थः । तेनाप्येतद् भवन्तावेवोद्दिश्य अस्मान् प्रत्युत्सृष्टम् । एवमपि स दन् भवत्यपि वयं यथा व्यादिष्टमेव तेन पूर्वेण हविष्पतिना भवद्भ्यामेतदन्नः । तौ युवामस्य हविषः, "पयसः" पयस्याख्यस्य, "उस्रियायाः" पयसा निष्पन्नस्य,

१ 'त्यर्थोऽप्युपप' ॥ २ 'मन्त्रो ब्रवीति' ॥

नातिकठिनस्य अशनयोग्यस्य स्वं भागमस्माभिर्दीयमानं "वीतम्" अश्नीतं युवामित्यर्थः "पातं" पिबतं च यदेतदाज्यस्य स्वं भागम् उपस्तरणाभिधारणसम्बद्धम् । एवमस्मिन् मन्त्रे 'उस्रियायाः पयसा निष्पन्नस्य'—इति श्रूयमाणे पयस्याज्ये प्रतीयेते, तयोराज्यं पेयम्, तत् 'पातम्'—इत्यनेन सम्बध्यते, पारिशेष्यात् 'वीतम्'—इत्यस्य शब्दस्य पयस्यया सह सम्बन्धः, सा च नातिकठिना, नातिद्रवा, अशनयोग्या, तस्मात् 'वीतम्'—इत्येष शब्दोऽशनार्थं इत्युपपद्यते । लोकेऽपि हि नातिकठिने नातिद्रवे अश्नातिशब्दः प्रसिद्धः,—'अश्नाति पायसम्'—इति ॥

निगमप्रसक्तमुच्यते,—"उस्रियेति गोनाम" "उत्स्राविणः" हि तस्याः सकाशात् क्षीरादयः "भोगाः" भवन्ति ॥ "उस्रा" "इति" अपि "च" गोनाम ॥४।१९।६॥

## क्राणाः ॥ ४३ ॥

"त्वामि॑न्द्र म॒तिभि॑ः सु॒ते सु॒नी॑थासो॒ वसू॒यव॑ः ।
गोभि॑ः क्रा॒णा अ॑नूषत ॥"

गोभिः कुर्वाणा ( गाः ) अस्तोषत ॥ ७ ॥ इन्द्र त्वां मतिभिः सुते कुर्वाणाः ।

"क्राणाः ( ४३ )"—इत्येतदनवगतम् । "कुर्वाणाः"—इत्यर्थप्रतीतिः "गोभिः क्राणा अनूषत"—इति निगमः । "गोभिः कुर्वाणा ( गाः ) अस्तोषत"—इति निर्वचनम्, त्वामिन्द्रेति शेषः ।

"त्वामि॑न्द्र म॒तिभि॑ः सु॒ते सु॒नी॑थासो॒ वसू॒यव॑ः ।
गोभि॑ः क्रा॒णा अ॑नूषत ॥"—इति ।

हे "इन्द्र!" "त्वाम्" अस्मिन् सोमे "मतिभिः" मतिमद्भिः "सुते" मेधाविभिरभिषुते सोमे, य एव हि मतिमन्तः, त एव हि सोममभिषोतुं शक्नुवन्ति, नेतरे मतिहीनाः । "सुनीथासः" सुष्ठु ये स्तोतुं शक्नुवन्ति, ते सुनीथाः । 'वसूयवः' वसुकामाः । आह-किमेते कुर्वन्ति, मतिभिः सुते मेधाविभिरभिषुते सोमे ? उच्यते—"गोभिः" वाग्भिः, स्तुतिलक्षणाभिः । अस्मिन्नभिषुते सोमे आभिमुख्येन "कुर्वाणाः" "अनूषत" "अस्तोषत" स्तुवन्तीत्यर्थः ॥ आभिषुतेषु तेषु सोमेषु किमन्यदाभिमुख्येन करणाद् इन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्युः, तस्मात् "क्राणाः"—इत्येष शब्दः, "कुर्वाणाः" इत्येवमुपपद्यते ॥ ४ । १९ । ७ ॥

वाशी ॥ ४४ ॥

"आ तु षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ॥"

'आसिञ्च हरिं द्रोरुपस्थे' ॥

द्रुममयस्य हारिः सोमो हारितवर्णः ॥ अयमपीतरो हरिरेतस्मादेव ॥

'वाशीभिस्तक्षताश्मन्मयीभिः' ॥

वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा ॥ ८ ॥

"वाशीभिः ( ४४ )"—इत्येतदनवगतम् । पक्षेण च अनेकार्थम् । "वाशीभिरश्ममयीभीरिति वा, वाग्भिरिति वा"—इति शब्दसमाधी । "वाश्यः" एवाभिधेयाः, वाचो वा ।

"आ तु षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।

परिष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ ( ऋ० सं० ८, ५, १९, ४ )"—इति ।

बुधस्य सोमपुत्रस्यार्षम् । "आसिञ्च" प्रक्षिप, एतं "हरिं" हरितवर्णं सोमम् । क्व ? "द्रोरुपस्थे" द्रुममयस्याधिषवणफलकद्वयस्योपारि । एवं तावदध्वर्युरुक्तः, स हि सोममुपावहरति । अधुनेतरानभिषवकर्तॄन् ब्रवीति,—यूयमपि अनेनाध्वर्युणोपावहृतमेनं सोममधिषवणफलकयोरुपरि "वाशीभिः" एताभिः "अश्मन्मयीभिः" "अश्ममयीभिः" "तक्षत" संस्कुरुत, अभिषुणुतेत्यर्थः, "ग्रावभिरभिषुण्वन्ति"—इति ह्युक्तम् ।

अथवाऽयमन्योऽस्यार्द्धस्यार्थः,—हे उन्नेतः ! आसिञ्च प्रक्षारय, तं हरितवर्णं सोममनेन कलशेन । क्व ? द्रोरुपस्थे द्रोणकलशस्योपारि । यूयमपि च हे होतारः ! आसिच्यमानम् एनं सोमं वाशीभिः वाग्भिः स्तुतिलक्षणाभिः तक्षत संस्कुरुत, यदस्यायज्ञियमपूतं, तत् स्तुतिभिः पुनीतेत्यभिप्रायः । अश्मन्मयीभिः व्यापनसमर्थाभिरित्यर्थः ॥

१ 'वाच्याः वा' ॥ २ 'मभिषवणफ' ॥

यूयमपि च हे अध्वर्य्यवः ! पूतमेतमुद्गातृभिः, सोमं 'परिष्वजध्वं' ग्रहेषु, स्थालीषु च। 'कक्ष्याभिः' अंगुलीभिः, अंगुलीभिरेव हि पात्रस्थः सोमो गृह्यते । यदेव चेदं ग्रहणमेष एव तस्य परिष्वङ्गः। परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्द्धान-'धुरौ' 'प्रति' 'वह्निम्' इव, वोढारमिव, अनड्वाहं 'युनक्त' एनं सोमं सादयतेत्यर्थः। स हि सोमो हविर्द्धानधुरोः अधस्तात् खरे साद्यते । एतस्मादेव चानडुद्योजनदेशं प्रति सामान्याद्वह्निमिव युनक्तेति लुप्तोपमत्वमुपपद्यते । अत्र "वाशीभिस्तक्षते"—इति लक्षणयोगात् अश्ममय्यो वाश्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः ॥ एतस्मिन्नर्थे 'आ तू षिञ्च'—इत्यासेकशब्दो गौणः, न हि सोमांशूनाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात्, तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः । अथवा 'आसिञ्चत हरिं द्रोरुपस्थे'—इत्यतोऽनन्तरं वाशीशब्दः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपपद्यते एव, सोमो हि द्रोणकलशस्योपरि आसिच्यमानो वाग्भिः स्तूयते । एवमर्थद्वयमभिप्रेत्य उभयथा भाष्यकारेणोक्तम्,—वाशीभिरश्ममयीभिरिति वा, वाग्भिरिति वा—इति ॥

"अयमपीतरो हरिः" मर्कटः, "एतस्मादेव" इति, हरितवर्णत्वाद्धरिरुच्यते, "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः"—इति वानराः स्तूयन्ते रामायणे ॥ ४ । १९ । ८ ॥

## विषुणः ॥ ४५ ॥

"स शर्द्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋत नः ।"

स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः ॥

शिश्नं श्नथतेः ॥

'अपिगुर्ऋतं नः ॥'

सत्यं वा यज्ञं वा ॥ ९ ॥ १९ ॥

"विषुणस्य (४५)"—इत्येतदनवगतम् । "विषमस्य"—इत्यवगमः ।

"न यातव इन्द्र जूजुवुर्नो न वन्दना: शविष्ठ वेद्याभिः ।
स शर्द्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋतं नः ॥ (ऋ० सं० ५, ३, ३, ५)"—इति ।

---

१ 'जनप्रदेशसामा' ॥

वसिष्ठस्येयमार्षम् । त्रिष्टुप् । उन्नीयमानसूक्तं माध्यन्दिने सवने शस्यते ॥ हे भगवन् 'इन्द्र !' तथा कुरु, यथा 'न' इममस्मद्यज्ञं 'यातवः' यातयितारः, यज्ञविघ्नकर्त्तारः, केचिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः । किंच, हे 'शविष्ठ' बलिष्ठ ! ये एते 'वन्दनाः' वन्दितारः, लाडगौडादयः, जानपदीभिः 'वेद्याभिः' आकृतिभिर्युक्ताः, किं ब्राह्मणाः एते स्युः, उतान्यजातीयाः केचिदिति ? अथवा—आवेदितव्याभिः प्रवृत्तिभिः युक्ताः, न हि तासां प्रवृत्तीनामन्तोऽस्ति, याभिस्ते प्रवर्त्तन्ते चपलत्वात् ॥ किंच, येऽपि चैते श्रोत्रिया अपि सन्तः "शिश्नदेवाः" शिश्नेन नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीडन्त आसते, श्रौतानि कर्माणि उत्सृज्य, तेऽपि युष्मदनुग्रहादिदमस्माकम् "ऋतं" यज्ञम् "मा अपिगुः" मा आगच्छन्तु, नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः ॥ आह—कीदृशास्तर्हि यज्ञमागच्छन्त्विति ? उच्यते—"स शर्द्धत्" स एवोत्सहतामिमम-स्मद्यज्ञमागन्तुम्, य एव "अर्यः" ईश्वर आत्मीयानामिन्द्रियाणाम्, जितेन्द्रिय इत्यर्थः । यश्च "विषुणस्य" "विषमस्य" यज्ञविध्वंसयितुः "जन्तोः" मनुष्यस्य निग्रहाय समर्थः, येन परिपाल्यमाना एतं यज्ञमविघ्नेन समापयेमहीत्यभिप्रायः ॥ एवमेतस्मिन् मन्त्रे यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु—इति प्रतिषिद्धेष्वेतेषु अनिष्टत्वा-देतेषां स शर्द्धदर्यः—इति श्रूयमाणमर्यवृत्तमनुष्याभ्यागमनविषयमेतद्भवति, तस्येष्टत्वात्, स चाभ्यागतः सन्नवश्यं विषुणस्य विषमस्य मनुष्यस्य निग्रहं करोति, तस्मात् 'विषुणस्य'—[ इति ] शब्दो विषमस्येत्युपपद्यते । यदा तु ऋतशब्दस्य सत्यं वा—इत्येतदर्थवचनं भवति, तदाऽस्माकम् ऋतं सत्यम्, एवंलक्षणाः पापकर्माणः मा अपिगुः—इत्येवं योज्यम् । अपिगुरिति चैष गमिस्तदा ज्ञानार्थः । एवमप्युपपद्यत इत्यतो भाष्य-कारेणोक्तम्,—"सत्यं वा यज्ञं वा"—इति ॥ ४ । १९ । ९ ॥ *

## जामिः ॥ ४६ ॥

"आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्न-जामि । उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥"

आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करि-ष्यन्त्यजामिकर्माणि । जाम्यतिरेकनाम ।

बालिशस्य वा ।

* अत्रैकोनविंशखण्डसमाप्तिः ॥

**असमानजातीयस्य वोपजनः । उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ १ ॥ २० ॥**

"जामिः (४६)"—इत्येतदनेकार्थम् । भगिनी, बालिशः,पुनरुक्तं चास्याभिधेयानि। प्रकरणादेवैतेषामन्यतममस्मिन्नवतिष्ठते ॥ यथानेन तावद्भगिन्युच्यते, तथेदमुदाहरणम्,—"आ घा ता०—मत्—( ऋ० सं० ७, ६, ७, ५ )" इति । इयं यमी किल यमं प्रार्थयाञ्चकार,—"एहि मैथुनाय सङ्गच्छावहै" इति, तामकामयमानोऽसावनयर्चा प्रत्युवाच,—"आ घा ता गच्छान् ।" घा—इत्यनर्थक एव, आगच्छान् आगमिष्यन्तीत्यर्थः ॥ आह—कानि ? उच्यते—"ता" "तानि" "उत्तरा" "उत्तराणि" "युगानि आगमिष्यन्ति" तेऽपि काला न तावत् साम्प्रतं वर्त्तन्त इत्यभिप्रायः ॥ येषु किम् ? "यत्र" येषु "जामयः" भगिन्यः भ्रातॄणाम् "अजामि"—योग्यानि मैथुनसम्बन्धानि "कर्माणि" "करिष्यन्ति" कलियुगान्ते हि तादृशः सङ्करो भवति, न चेदं कलियुगं वर्त्तत इत्यभिप्रायः ॥ यतो न तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः, स्वाचारा एव तावत् प्रजाः । अतो ब्रवीमि,—"उप बर्बृहि" "उपधेहि ।" कस्मै ? "वृषभाय" तवोपरि रेतःसेक्तुमन्यकुलजो योग्यः तस्मै । किमुपबर्बृहि ? इति "बाहुम्" । शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न भविष्यामीति । यतो ब्रवीमि,—"अन्यमिच्छस्व" अन्यमन्वेषयस्व । हे "सुभगे !" "पतिं" "मत्" मत्त इत्यर्थः ॥ एवमेतस्मिन् मन्त्रे, सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते ॥

"जामिः"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरेकनाम" भवति, पुनरुक्तनामेत्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, तद् यत् समान्यामृचि समानाभिव्याहारं भवति, तद् "जामि भवति"—इति पुनरुक्ताभिधानत्वेन । जामिशब्दस्य पर्येष्यो निगमः ॥

"बालिशस्य वा" बालिशस्यैतदेव नाम । बालिशो मूर्खः, स हि बाल इव शेते, प्रमादित्वाद्धर्मकार्येषु । एतस्यापि पर्येष्यो निगमः ॥

"असमानजातीयस्य वा" असमानजातीयो हि पुरुषस्य भगिन्याख्यो भ्राता, सा हि स्त्रीत्वादेवातुल्यजातीयैव पुरुषस्य भवति । जामिरित्येतस्मिन् शब्दे 'मिः'—इत्येषः "उपजनः" यदेवोक्तं भवति जा—इति, तदेव जामीति । उभयथापि मन्त्रेषु प्रयोगो द्रष्टव्यः ॥ "अन्यमिच्छस्व सुभगे ! पतिं मत्—इति व्याख्यातम्" । निगदसिद्धमेवैतदित्यर्थः । अथैवतानि पदान्यधस्तात् तत्रतत्र व्याख्यातानि, तद् यथा,—"अन्यो नानेयः"—इत्येवमादि उपेक्षितव्यम् ॥ ४ ॥ २० ॥ १ ॥

पिता ॥ ४७ ॥

"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥"

द्यौर्मे पिता पाता वा पालयिता वा जनयिता नाभिरत्र बन्धुर्मे माता पृथिवी महतीयं बन्धुः सम्बन्धनान्नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते सम्बन्धव इति च ज्ञातिः संज्ञानात् ।

उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान उत्ततान ऊर्ध्वतानो वा तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः ॥ १ ॥

"पिता ( ४७ )"-इत्येतदनवगतम् । "पाता वा पालयिता वा"-इत्यवगमः । * "द्यौर्मे पिता-( ऋ० सं० २, ३, २०, ३ )" इति ॥ इयमस्यवामीयं दीर्घतमस आर्षम् । तृतीयसवने वैश्वदेवे शस्यते ॥ "द्यौर्मे पिता" येयं द्यौः, उपरि स्थिता द्युलोकाख्या, एषैव मम पिता । द्यौरहमित्येवं वैवाहिके कर्मणि द्युलोकभावेन पित्रा आत्मानमभिसम्पाद्यमानं दृष्ट्वैवमाह मन्त्रदृक्-'द्यौमे पिता'-इति । "जनिता", "जनयिता" उत्पादयितेत्यर्थः । आह-कथम् ? उच्यते-"नाभिरत्र" नहनमेव नाभिः, अत्र एतस्मिन् द्युलोकलक्षणे पितर्युदकदानेनानुग्रहीतरि सति सन्तानोत्पत्त्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यते,-इत्येवमभिसमीक्ष्योक्तम्-'द्यौर्मे पिता, जनिता, नाभिरत्र'-इति । "बन्धुः मे" अङ्गसम्बन्धकारणाद् बन्धुः मे । "माता पृथिवी महीयम्"-इति । मातुर्मन्त्रेण पृथिवीत्वं सम्पाद्यमानं दृष्ट्वैवमाह-बन्धुर्मे माता पृथिवी महीयम्-इति । उदकं हि द्युलोकात् पतितम्, पार्थिवेन धातुना सम्पृक्तम्, ओषधीभावमागम्य, शरीरभावेनावतिष्ठते,-इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरौ उच्येते तत्रतत्र । तद्यथा,-

* अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "पिता ( ४७ )" इत्येतदनवगतम्-इत्यतः प्रागुचिता ॥

"द्वे स्रुती अंशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ॥

ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥ ( ऋ० सं० ८, ४, १२, ५ )" ॥

इत्येवमादि । तत्कृतस्य ह्युपकारस्याभावे सतीतरौ मातापितरावकिञ्चित्करावेव भवतः । तस्मादुपपद्यते द्यावापृथिव्योर्मातृपितृभावः । आह–किमेते द्यावापृथिव्यौ अन्यत् किञ्चिदनपेक्ष्यैव सर्वभूतानां मातृपितृभावं बिभृतः, उत अन्यदपि किञ्चिदपेक्षेते ? इति । उच्यते-अनयोः "चम्वोः" द्यावापृथिव्योः "उत्तानयोः" ऊर्ध्वमेव ह्येनयोः अन्तरा च प्रतिधारणीयोऽन्तः प्राणः तत इति उत्ताने द्यावापृथिव्यौ, प्राणेन हीमे वायुना सूत्रभूतेन विधृते तिष्ठतः, एतयोः द्यावापृथिव्योरुत्तानयोः य एषोऽन्तरिक्षाख्यः "अन्तः" मध्ये "योनिः" "अत्र" एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति "पिता" "पर्जन्यः" द्युलोकाख्यः, द्यौरेव हि रसान् प्रार्जयति, तस्मात् सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता । "दुहितुः" "पृथिव्याः" उपरि "गर्भं" सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् "आधात्" आदधाति, ददातीत्यर्थः । अत्र पृथिव्येव दुहितृशब्देनोक्ता, सा हि द्युलोकात् 'दूरे निहिता' ॥ अथवा सा हि द्युलोकं दोग्धीति दुहिता,–सा हि द्युलोकात् पतितमुदकमुपजीवत्येवादूरे निहिता, दोग्धि वा ॥ एवं द्यावापृथिवीभ्यामन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येतान्यस्मदादीनि भूतान्युत्पद्यन्त इति एतदनेन मन्त्रेण मन्त्रदृशा ख्यापितम् । अत्र मातृपितृसम्बन्धात् पितृशब्दः पितर्येवेत्युपपत्तिः । पिता माता चायमेतदाशासनं मन्येत ॥ ४ । २१ । १ ॥

## शंयोः ॥ ४८ ॥

( शंयुः सुखंयुः ) "अथा नः शंयोररपो दधात ।"

रपो रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् ।

अथापि शंयुर्बार्हस्पत्य उच्यते ।

"तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ २ ॥ २१ ॥

"शंयोः ( ४८ )"–इत्येतदनवगतम् । पञ्चम्यन्तं वा षष्ठ्यन्तं वा सत् । निगमश्चैषः,– "बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।

त आ गृतावंसा शन्तमेनाथा नः शंयोरंरपो दधात ॥ ( ऋ० सं० ७, ६, १७, ४ )" इति ॥

न चैवं यजमानोऽर्थात्तस्माद् बृहस्पतिपुत्रान्ममैतेः पितरः किंचिदर्थं विदध्युरित्यर्थमपेक्षते, किं कारणम् ? स्वत एव हि ते विधातुं समर्थाः । न च बृहस्पतिपुत्रस्य शंयोः किञ्चिदेभिः पितृभिः विधीयेतेति । एवं पञ्चम्यर्थासम्भवं षष्ठ्यर्थासम्भवं च पश्यन् भाष्यकारः, "शंयोः"–इत्येकं पदं,द्वितीयान्ते द्वे पदे चकार, 'शम्'–इति, 'योः'–इति च । शमित्यस्य "शमनम्" अर्थं निराह, योरित्यस्य "यावनम्"–इति । एवं द्वितीयान्तेन परिणामं कृत्वा अर्थं निराह,–तथाहि वाक्येन सम्बध्यत इति ॥ कस्य शमनं कस्य वा यावनम् ? इति, पुनः पर्यनुयोगे प्राप्ते "रोगाणाम्" "भयानाम्" "च" इत्यध्याजहार भाष्यकारः । रोगशमनं च "दधात", भययावनं च, शान्तरोगा यथा स्याम, प्रहीणसर्वभयाश्च, तथा कुरुतेत्यभिप्रायः । किमेतावदेव ? नेत्युच्यते,–यदपि चान्यत् किञ्चित् 'अरपः' अपापम्, तदपि चास्मभ्यमेव "दधात" दत्तेत्यर्थः ॥ एवमेतत् पदम् एकम्, अर्थासम्भवाद् द्विधा प्रविभज्य भाष्यकारेण निरुक्तम् । इत्थमप्यर्थासम्भवे सति निर्वचनप्राप्तिरस्तीत्यस्यार्थस्य ख्यापनाय। ब्राह्मणेऽपि चेयं निर्वचनप्राप्तिरस्त्येव, तद्यथा उद्गीथशब्दे,–

"प्राण एवोत्प्राणेन ह्युत्तिष्ठति, वाग् गीः वाचो ह गिर इत्याचक्षतेऽन्नं थम् अन्नेन हीदं सर्वं स्थितम् ( छा० ब्रा० ३, ३ )"–इत्येवमादि, तस्मादुपपद्यते । प्रथमान्तमेव सत् कस्माद् द्वितीयान्तत्वेन विपरिणम्यते शंयुमिति ? एवमपि न विरुध्यते, तथापि हि न कश्चिदर्थं उपपद्यते, तस्माद् युक्तमिति ॥ "रपो रिप्रम्"–इति, अत्र रिप्रशब्दस्य रपःशब्देनार्थसामान्यात् तत्त्वमुक्तम् । यदेवास्य रिप्रम् अमेध्यम्, तच्छुध्यतीति ह विज्ञायते ॥

"अथापि शंयुर्बार्हस्पत्य उच्यते" अपि 'शं, योः,'–इत्यनेन पदद्वयेन शमनयावने रोगभययोः उच्येते, द्वेधा प्रविभक्तेन, अपि यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते, तस्याप्येतदेव नामेत्यपिशब्दः ॥

"तच्छं योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शन्नोऽअस्तु द्विपदे शं चतुष्पदे ॥"–इति॥

[ "ओमानं शंयोर्ममकाय सूनवे ( ऋ० सं० १, २, ४, ६ )" इति, "तच्छंयोः सुम्नं मीमहे ( ऋ० सं० १, ३, २६, ४ )"–इति च निगमौ । ]

इयं शक्वरी । शंयोरेव बृहस्पतिपुत्रस्यार्षम् । शंयोर्वाके विनियुक्ता ॥ शंयोरात्मानमभिसम्पाद्य । अथवा–शंयोः सकाशादिति केचिन्मन्यन्ते । अनेन कर्मणा शंयोर्वाकाख्येन

१ अयं कोष्ठकान्तर्गतः पाठो लिखितपुस्तके नोपलभ्यते ॥

"तत्" तदा आभिमुख्येन "वृणीमहे"। किं पुनस्तत् ? "गातुं यज्ञाय" "गमनम्" अस्मै "यज्ञाय" देवान् प्रति, "गातुं यज्ञपतये" "गमनं" चास्मै "यज्ञपतये" देवान् प्रति । किंच, 'दैवी स्वस्तिरस्तु नः' देवानुग्रहादस्माकं स्वस्तिरस्तु, मा नो देवाः काञ्चिदापदमुत्पादयन्त्वित्यभिप्रायः ॥ 'स्वस्तिः मानुषेभ्यः' मनुष्येभ्योऽपि सकाशात् मा नः काचिदापदस्तु । 'ऊर्द्ध्वं जिगातु भेषजम्' गच्छत्वेतद्भेषजम्, भयसादयितृ कर्म, यावज्जीवमनवच्छिन्नमविगुणं चोर्द्ध्वगमनयोग्यम् अस्माकमस्त्वित्यभिप्रायः । किंच, 'शन्नो अस्तु' शं सुखं नोऽस्माकं भवतु, 'द्विपदे' मनुष्यादिकाय 'चतुष्पदे' गवादिकाय च ॥ शंयुः बृहस्पतिपुत्रः—इति, एतस्मिन् मन्त्रे विशेषलिङ्गमस्ति, तदन्यस्मात् श्रुतिलिङ्गात् कुतश्चिदुपलभ्यमानाद्वा एतावदेव त्वेतस्मात् मन्त्रात् सिद्धम्,—एकमेवेदं पदमविभक्तं निरुच्यते, पञ्चम्यन्तं वा षष्ठ्यन्तं वा, न यथा पूर्वस्मिन् मन्त्रार्थासम्भवाच्छंयुशब्दो विभक्त इति ॥ ४ । २१ । २ ॥ *

## अदितिः ॥ ४९ ॥

### अदितिरदीना देवमाता ॥ १ ॥ २२ ॥

"अदितिः ( ४९ )"—इत्येतदनवगतम् । "अदीना"—इत्यवगमः । "देवमाता" अभिधेया, ऐतिहासिकपक्षेण, नैरुक्तपक्षेण पुनर्यान्येतस्यामृचि वक्ष्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते एतान्येवादितिशब्देनोच्यन्ते ॥ ४ । २२ । १ ॥ *

**"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥" इत्यदितेर्विभूतिमाचष्टे, एनान्यदीनानीति वा ॥ १ ॥**

"अदितिर्द्यौः०—०मदितिर्जनित्वम् ( ऋ० सं० १, ६, १६, ५ )"। राहूगणस्य गोतमस्येयमार्षम् । तृतीयसवने सर्वस्तोमेष्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयैषा ॥ "अदितिः" एव देवमाता "द्यौः" "अदितिः" अदितिरेव च "अन्तरिक्षम्" "अदितिः" एव "माता" सर्वभूतनिर्मात्री, "सः" एव च "पिता" पालकः, "सः" एव हि "पुत्रः" सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात् त्रायते, अथवा सैव निपृणाति, सर्वभूतानां यन्निपर्वत्तव्यं दातव्यमित्यर्थः येऽपि चैते "विश्वेदेवाः" सर्वे

---

* अत्रैकविंशखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ चतुर्था ( नवमा )—ऽध्यायस्य तृतीयः पादः ॥ ४, ३ ॥" इति तूपलभ्यते ॥ * अत्र द्वाविंशखण्डसमाप्तिरवदस्यते, सा "इरिरे ( ५० )" इत्यनवगतम् । इत्यतः प्रागुचिता । परं त्वध्यायान्तखण्डलेखानुसारेणात्रैव कृतेति सर्वत्र बोध्यम् ॥

देवाः, एतेऽपि "अदितिः" एव । "पञ्चजनाः" गन्धर्वादयः "अदितिः" एव । सर्वथापि किं बहुना, यावदेतत् किञ्चित् "जातं" च "जनित्वं" च जनिष्यमाणं च सर्वमप्येतत् "अदितिः" एव ॥

"इति" एवमनेन मन्त्रेण मन्त्रदृक् "अदितेर्विभूतिमाचष्टे" देवमातुस्तत् सर्वमप्युपपद्यत एव, महाभाग्याद्देवतायाः । तदुत्तरत्र वक्ष्यामः । एवमैतिहासिकपक्षेण, नैरुक्तपक्षेण पुनः "एतानि" द्युलोकादीनि सर्वाणि "अदीनानि" अनुपक्षीणानि इति योज्यम्, न ह्येषां क्षयोऽस्तीति ॥ ४ । २३ । १ ॥

## एरिरे ॥ ९० ॥

## "यमेरिरे भृगवः ।"

## एरिर इतीर्त्तिरुपसृष्टोऽभ्यस्तः ॥ २ ॥ २३ ॥

"एरिरे (९०)"–इत्येतदनवगतम् । "आ ईरिरे"–इत्यवगमः ।

"यमेरिरे भृगवो विश्ववेदसं नाभापृथिव्या भुवनस्य मज्मना ।
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥
(ऋ० सं० २, २, १२, ४)" इति ।

दीर्घतमस इयमार्षम् । जगती । प्रातरनुवाकाश्विनयोराग्निमारुते च शस्यते ॥ "यम्" अग्निमाभिमुख्येन ईरितवन्तः, प्रेरितवन्तः, स्थापितवन्त इति यावत्, आत्माभिप्रेतार्थसिद्धये "भृगवः" । 'विश्ववेदसं' सर्ववेदसं, सर्वस्य वेत्तारं, सर्वधनं वा ॥ क्व पुनः एरिरे? 'नाभापृथिव्याः' नाभौ अवस्थितम्, उत्तरवेदिमध्यगतायां पृथिव्यां वेद्या उपरि । केन पुनरेरिरे ? 'भुवनस्य' उदकस्य 'मज्मना' मननीयेन वीर्येणान्नेन हविर्लक्षणेन । किं तस्य ? 'समग्निं' हे यजमान ! त्वमपि 'गीर्भिः' वाग्भिः स्तुतिलक्षणाभिः आभिमुख्येन स्थित्वा 'हिनुहि' प्रेरय । तस्मिंस्तस्मिन् कर्मणि वर्त्तमानमग्निहोत्रादौ, यथा भृगवः ईरितवन्तः, तथा 'स्वे दमे' स्व एव गृहे, मा कस्यचिदार्त्विज्येऽवस्थित इत्यभिप्रायः । किंलक्षणं पुनरग्निमाहिनुहि ? 'य एको वस्वः' एक एव यो वसुनो धनस्य दाता । 'वरुणो न' वरुण इव, यथा वरुणः समुद्रान्तर्गतानां धनानाम् ईष्टे, एवं यः सर्वस्यैव धनस्य 'राजति' ईष्टे इत्यर्थः । राजतिरैश्वर्यकर्मसु पठितः,–"क्षियति (३), राजति (४)"–इति । "एरिरे–इति" "ईर्त्तिः" अयं धातुर्गतिकर्मा,–"ईर्त्ते (७९), त्रयति (८१)"–इति एतिकर्मसु पठितम् । स पुनरयमाङोपसर्गेण "उपसृष्टोऽभ्यस्तः" च, पुनःपुनरीरितवन्त इत्यर्थः ॥ ४ । २३ । २ ॥ *

अत्र त्रयोविंशखण्डसमाप्तिरवगन्तव्या ॥

जसुरिः ॥ ८१ ॥

"उत स्मैनं वस्त्रमथिं न तायुमनुक्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥"

अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् ॥

वस्त्रं वस्तेः ॥

तायुरिति स्तेननाम, संस्त्यानमस्मिन् पापकमिति नैरुक्ताः । तस्यतेर्वा स्यात् ॥

अनुक्रोशन्ति क्षितयः संग्रामेषु । भर इति संग्रामनाम । भरतेर्वा हरतेर्वा ।

नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितं भवति जस्तमिव श्येनम् ।

श्येनः शंसनीयं गच्छति ।

'श्रवश्चाच्छा पशुमच्च यूथम् ।'

श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा ।

यूथं यौतेः । समायुतं भवति ॥ १ ॥

"जसुरिः (८१)"—इत्येतदनवगतम् । "जस्तम्" इत्यवगमः । "उत स्मैनं० (ऋ० सं० ३, ७, ११, ५)"—इति निगमः । वामदेवस्येयमार्षम् । त्रिष्टुप् । दधिक्राव्णो सूक्ते । दधिक्रावा चेन्द्र एव, वायुर्वा मध्यस्थानत्वात् । "उत स्मैनम्" अप्येनमिन्द्रम् "अनुक्रोशन्ति" आभिमुख्येन क्रन्दन्ति, आह्वयन्ति । "क्षितयः" मनुष्याः । क्व ? "भरेषु" संग्रामेषु । कथं पुनराभिक्रन्दन्ति ? "वस्त्रमथिं न" वस्त्रापहर्त्तारमिव "तायुम्" यथा केचिज्जनाः कञ्चिद्वस्त्रापहर्त्तारं तायुं दृष्ट्वा कञ्चिदन्यमात्मनस्त्राणार्थमाभिक्रन्देयुः, एवमेतमिन्द्रम् अभिक्रन्दन्ति संग्रामेषु, परैरभ्यर्द्यमानास्त्राणार्थमात्मनः । किंच, अपि चैनं तायुं "नीचायमानं" नीचैर्गच्छन्तं "जसुरिं न" जसुरिमिव, "जस्तमिव" "श्येनं" बद्धम्, स्नायुतन्तुना, य एष याजिक इति प्रसिद्धो राज्ञाम्, स हि बद्धत्वादुत्पतितुमत्यर्थं

न शक्नोति, नीचैरेव गच्छति, गत्वा च शशकादीनि हिनस्ति सत्त्वानि । स यथा जनैर-भिक्रन्द्यते, तथा चैनमभिक्रन्दंति । आह–कमर्थमभिसन्धाय ? इति । उच्यते–"श्रवश्च अच्छ" कीर्त्तिं चाभिसन्धाय, कथं नाम श्रूयेमहि ? प्रशस्येमहि जितमेभिरित्येतमर्थम-भिसन्धाय । "पशुमच्च यूथम्" अनेकपशुजातिसंयुक्तं पशुयूथमभिसन्धायैतदस्माकं स्यादि-त्येवमभिक्रन्दतीत्येष समस्तार्थः ॥

अथैकपदनिरुक्तम्–"वस्त्रं वस्तेः" आच्छादनार्थस्य ( अदा– आ० ), तद्ध्याच्छाद्यते॥

"तायुरिति"–एतत् "स्तेननाम" "संस्त्यानं" संहतम् "अस्मिन् पापकं" भवति "इति" एवं "नैरुक्ताः" मन्यन्ते॥"तस्यतेः वा स्यात्" शयार्थस्य ( दि०प० ), उप-क्षीणो ह्यसौ भवति, अधार्मिकत्वात्, परलोकमपेक्ष्य कल्पयति कर्माणि ॥

क्षितयो मनुष्याः । "भर इति संग्रामनाम" भ्रियन्ते तस्मिन् योद्धारः "हरतेः वा" ह्रियन्त ह्रि तास्मन् जीवितानि, वसूनि च ॥

"श्येनः शंसनीयं गच्छति" शीघ्रत्वात् ॥

"यूथं यौतेः" तद्धि "समायुतं भवति" एकत्र मिश्रीभूतं स्त्रीपुरुषबालवृद्धैः पशुभिः॥ एवमिह नीचायमानं श्येनमित्यनेन सम्बन्धाज्जसुरिर्बद्ध इत्युपपद्यते, न ह्यबद्धः, श्येनो नीचैरयते ॥ ४ । २४ । १ ॥

## जरते ॥ ९२ ॥

## "इन्धान एनं जरते स्वाधीः ।" गृणाति ॥ २ ॥

"जरते ( ९२ )"–इत्येतदनवगतम् । धातोरस्वार्थे प्रवृत्तिरेवानवगमः ॥

"दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।

तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ ( ऋ० सं० ७, ८ २८, १ )" इति ।

वत्सप्रीर्नाम भालंदनः, तस्येयमार्षम् । उक्थस्याग्नेरुपस्थाने विनियुक्ता ॥ 'दिवस्परि' दिवः द्युलोकादित्यर्थः । 'प्रथमम्' अयम् 'अग्निः' 'जज्ञे' आदित्यात्मना । 'द्वितीयम्' 'अस्मत् परि' अस्मदधि, अस्मत्तो जायते, पार्थिवात्मना । 'तृतीयम्' 'अप्सु' अन्तरि-क्षलोके वैद्युतात्मना जायते । "आपः"–इति ह्यन्तरिक्षनामसु पठितम् । नृणां मनस्यव-स्थितः 'नृमणाः' नृषु वा मनोऽस्य, स नृमणाः । योऽयमेक एव त्रिषु स्थानेषु जायते, तमेवङ्गुणयुक्तमग्निं "स्वाधीः" शोभनधीः "इन्धानः" 'अजस्रं' नित्यं "जरते" स्तौति यः, स एव स्वाधीः सुप्रज्ञ इत्यर्थः ॥ इन्धानो हि किमन्यत् स्तुतेः कुर्यात् ? तस्मात् "जरते"–इत्यस्य शब्दस्य "गृणाति"–इत्यर्थ उपपद्यते ॥ ४ । २४ । २ ॥

---

१ 'मनपेक्ष्य' ॥ २ 'मुत्सारयां' ॥ ३ 'मन्यत्र स्तुतेरन्यत्क' ॥

## मुन्दिने ॥ ५३ ॥

**मन्दी मन्दतेः स्तुतिकर्मणः ।**

**"प्र मुन्दिने पितुमदर्चता वचः ।"**

**प्रार्चत मन्दिने पितुमद्वचः ॥ ३ ॥ २४ ॥**

"मन्दिने (५३)"—इत्येतदनवगतम् । "मन्दतेः" स्तुत्यर्थस्य । मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः । "मन्दति (१८), शंसति (२५)"—इति स्तुतिकर्मसु पठितम् ॥

"प्र मुन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मुरुत्वन्तं सुख्याय हवामहे ॥ (ऋ० सं० १, ७, १२, १)" इति ।

कुत्सस्येयमार्षम् । छन्दोगेषु तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैषा । हे स्तोतारः ! "प्रार्चत" प्रकर्षेणोच्चारयत, पूजयत । "मन्दिने" मन्दनीयाय, स्तुत्याय, स्तुतिमते वा, इन्द्राय । "पितुमत्" अन्नसंयुक्तं "वचः" । 'यः' इन्द्रः, किं करोति ? "कृष्णगर्भाः" कृष्णस्य मेघस्य गर्भभूता अपः 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः । केन ? 'ऋजिश्वना' ऋजुरेवावक्षिप्तो लक्ष्ये यः श्वति गच्छति इति ऋजिश्वा वज्रः, तेन निरगमयत् । हे 'अवस्यवः' अवनमात्मनो रक्षणमिच्छन्तः, तर्पणं वा । योऽयमेवम्प्रभाव इन्द्रः, तमिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं' वज्रेण हननायोत्साहवन्तम्, अथवा वज्रदक्षिणं वज्रबाहुम्, 'मरुत्वन्तं' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासुतासु क्रियासु आह्वयामहे इत्यर्थः ॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत"—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते ॥ ४ । २४ । ३ ॥

## गौः ॥ ५४ ॥

**गौर्व्याख्यातः ॥**

"गौः (५४)"—इत्येतदनेकार्थत्वादिह समाम्नातम् । यथा चैतदनेकार्थं[2] तथा पुरस्तात् "व्याख्यातम्" ॥ *

---

१ 'स्वन' ॥ २ 'नेकार्थत्वं' ॥ अत्र चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा 'गौरित्येतदने'—इत्यतः प्रागुचिता ॥

"अत्रा ह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म् ।
इ॒त्था च॒न्द्रम॑सो गृ॒हे" ॥

अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमप-
चितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे ॥ १ ॥

यत्तूक्तम्,—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते ( २ । ६ । ३ ) सोऽपि गौरित्युच्यते,—'अत्रा ह गोरमन्वतेति' तदुपरिष्टाद्व्याख्यास्यामः—( २ । ६ । ४ ) इति, तदिदमुच्यते,—"अत्रा ह"—इति । गोतमस्य राहूगणस्येयमार्षम् । अग्निचयने इष्टकोपधाने विनियुक्ता । "अत्रा ह" अत्रैव, एतस्मिंश्चन्द्रमण्डले "गोः" सुषुम्णस्यैकस्य सूर्यरश्मेः, इतरे सूर्यरश्मयः "अमन्वत" अमन्यन्त, समनुज्ञातवन्त इत्यर्थः । किं पुनस्तत् सममन्यन्त "नाम" नमनं प्रह्वत्वमवस्थानामित्यर्थः । कुतः ? "त्वष्टुः" आदित्यस्य मण्डलात् । अथवा—त्वष्टुः आदित्यस्य स्वभूता रश्मयः सममन्यन्त । कथं तस्य नमनं तत् सममन्यन्त ? इति—"अपीच्यम्" "अपगतं" तत्रैव चन्द्रमण्डलेऽनुप्रविष्टस्य यदवस्थानान्तरं तत् सममन्यन्त । अथवा—अपीच्यमिति "अप" एत्य सूर्यमण्डलात् चन्द्रमण्डले "चितम्" अपीच्यम् । अथवा—अपीच्यम् "अन्तर्हितम्" इत्यर्थः, "प्रतीच्यम् (५), अपीच्यम् ( ६ )"—इति हि अन्तर्हितनामसु पठितम् । क्व पुनरन्तर्हितस्यान्यत्रावस्थानम् ? इति "इत्था चन्द्रमसो गृहे" अमुष्मिंश्चन्द्रमण्डले इत्यर्थः ॥ ४ । २५ । १ ॥

## गातुः ॥ ९५ ॥

गातुर्व्याख्यातः ।

"गा॒तुं कृ॑ण्वन्नु॒षसो॒ जना॑य" इत्यपि निगमो भवति ॥ २ ॥

"गातुः (९५)"—इति । "व्याख्यातः" "गमनं यज्ञपतये ( ४ । २१ । २ )" इत्यत्र ॥ ४ । २५ । २ ॥

## दं॒सयः॑ ॥ ९६ ॥

दंसयः कर्माणि दंसयन्त एनानि ।

"कुत्सा॑य॒ मन्म॑न्न॒ह्य॑श्च दं॒सयः॑" इत्यपि निगमो भवति ॥ ३ ॥

---

१ 'लेऽन्तः प्र' ॥

"दंसयः (५६)"—इत्येतदनेकेषां कर्मणाम् अभिधानम् । तानि हि दंसयन्त्युपक्षयन्ति कर्मकराः ।

· "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् ।
यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः ॥– ( ऋ० सं० ८, ७, २६, १ )" इति ।

अङ्गस्यौरवस्येयमार्षम् । हे 'इन्द्र' 'तव' 'त्ये' ते 'वह्नयः' वोढारोऽश्वाः, 'सख्येषु' समानख्यानेषु कर्मसु वर्त्तमानाः, इदमेव हि भवतः कर्म, मेघो विदारयितव्य इति, एतदेव तेषामपि एतत् समानख्यानत्वम् । 'ऋतम्' उदकमस्मिन्नस्तीति, एवमेतं 'मन्वानाः' । किमकुर्वन् ? 'व्यदर्दिरुः' विदारितवन्तः 'वलं' मेघं कालेकाले । 'यत्र' यस्मिन् मेघे विदारिते 'दशस्यन्' दशस्यन्ति 'उषसः' माध्यमिकाः एकस्या एव पूजनार्थे बहुवचनम्। किं दशस्यन् ? 'अपः' "अह्यः च" अहिनिवासिन्यः, मेघनिवासिनीरित्यर्थः । ताश्च दीर्यमाणाः 'रिणन्' आगच्छन्, पृथिवीलोकम् । तदेतत् सर्वमपि युष्मदश्वैः क्रियते । कं[2] पुनरर्थमुद्दिश्य त एवं कुर्वन्ति ? "मन्मन्" मन्यमानाः, "कुत्साय" पृथिवीं कृन्तते, कृषीवलाय, "दंसयाः" कृषिकर्मणि सफलानि कर्त्तुम् । अत्र "दंसयः"—इत्येतेन शब्देन "कर्माणि" उक्तानि । दासैः कर्मकरैः, 'दस्यन्ते'—इति कृत्वा कर्मकरा दासा इति । बाहुल्याद् भाष्यकारेण निगमोऽत्र नोदाहृतः ॥ ४ । २५ । ३ ॥

## तूताव ॥ ५७ ॥

## "स तूताव नैनमश्नोत्यंहतिः ।"

## स तुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् विपरीतात् ॥ ४ ॥

"तूताव ( ५७ )"—इत्येतदनवगतम् । "तुताव" इत्यवगमः ॥

·"यस्मै त्व मा यजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामावयं तव ॥ ( ऋ० सं० १, ६, ३, २ )" इति ॥

कुत्सस्येयमार्षम् । महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते । हे भगवन् ! 'अग्ने !' 'यस्मै' यजमानाय 'त्वम्' 'आ' आहूय 'यजसे' देवान्, होतृत्वेऽवस्थितः

---



१ 'नश्चीत्येवमे' ॥ २ 'कथं पुनर', 'किं पुनर' ॥

'सः' एव 'साधति' साधयत्यात्मनोऽभिप्रेतार्थम् । किञ्च, स एव 'अनर्वा' अप्रत्यृतः, अनाश्रितः कञ्चिदन्यम्, स्वेनैव महिम्ना युक्तः । 'क्षेति' निवसति, युष्मदनुग्रहात् । स एव 'दधते' धारयते 'सुवीर्यं' शोभनमात्मनो वीर्यम् । "सः" एव "तूताव" वर्द्धते, प्रजाधनयशोभिः, "न" च "एनम्" "अंहतिः" अपि पापमपि सम् "अश्नोति" आप्नोति । हे भगवन्नग्ने ! यः त्वमेवमतिमहानुभावः, तस्य 'तव' 'वयं' 'सख्ये' सखिभावे, परिचरणकर्मणि वर्त्तमानाः 'मा रिषाम' मा केनचिच्छिद्येमहि ॥ एवमयमत्र तूताव–इति शब्दः यस्मै त्वमा यजसे–इत्येवमादीनां पदानां मध्ये श्रूयमाणो वृद्ध्यर्थ उपपद्यते ॥

"अंहतिश्च अंहश्च अंहुश्च"–इत्येते शब्दाः "हन्तेः" धातोः "निरूढोपधात् विपरीतात्" अकारमुपधातोर्निष्कृष्यादौ कृत्वा, ततो हकारनकारौ विपर्ययेण भवतः ॥ ४ । २५ । ४ ॥

## चयसे ॥ ९८ ॥

### "बृहस्पते चयस इत्पियारुम् ।"

### बृहस्पते यश्चातयसि देवपीयुम्, पीयतिर्हिंसाकर्मा ॥ ५ ॥

"चयसे ( ९८ )"–इत्येतदनवगतम् । "चातयसि"–इत्यर्थप्रतीतिः ॥

"ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः ।
न दूढ्ये अनु ददासि वामं बृहस्पते चयस इत्पियारुम् ॥ ( ऋ० सं० २, ५, १२, ५ )"–इति ॥

अगस्त्यस्य मैत्रावरुणस्येयमार्षम् । हे "बृहस्पते !" 'देव' दानादिगुणयुक्त ! 'ये' यजमानाः 'त्वा' त्वाम् 'उस्रिकम्' उत्स्राविणं भोगानां 'मन्यमानाः' दातैव केवलं भोगानाम्, अयमार्जवेन न प्रत्युपकारार्थीत्येवं मन्यमानाः, 'पापा' अप्रत्युपचिकीर्षवः 'उपजीवन्ति' एव केवलं, न क्रियया प्रत्युपकारं कुर्वन्ति, 'भद्रं' भन्दनीयं स्तुत्यम्, अपि च 'पज्राः' प्रार्जितधनाः सन्तः, न दरिद्राः । किं तेभ्यः ? इति–'न दूढ्ये' न ( न ) तेभ्य एवंलक्षणेभ्यः, दुर्धीभ्यः, पापबुद्धिभ्यः, स्वार्थप्रधानेभ्यः त्वम् 'अनुददासि' 'वामं' वननीयं धनम् । किं तर्हि ? यस्तादृशो जनः "पियारुः" "देवपीयुः" देवहिंसिता, स्वभोगप्रधानः, न यष्टा देवानाम्, तं "चयसे" "चातयसि" नाशयसि । य एव श्रद्दधानो यष्टा, तस्मै देवान् यजते अनुददासि वामम् ॥ यस्मात् त्वमेवं करोषि, तस्मात् न ते पापबुद्धयः त्वां सम्यक् पश्यन्तीत्यभिप्रायः । यो हि दुर्बुद्धिः देवपियारुः तस्य किमन्यत् चातनादृते स्यात् ? नाश एवासौ, तस्मात् "चयसे"–इत्येष शब्दः, "चात-

यतिः" नाशने इत्येवमवस्थापिते नाशनार्थो भवतीत्युपपद्यते ॥ "चातयतिर्नाशने"—इति हि वक्ष्यति । लोकेऽपि च प्रसिद्धं देशादुच्चातित इति । तस्मादुपपद्यते ॥ ४ । २५ । ५ ॥

## वियुते ॥ ५९ ॥

वियुते द्यावापृथिव्यौ वियवनात् ।

"सुमान्या वियुते दूरे अन्ते ।"

समानं सम्मानमात्रं भवति मात्रा मानाद् दूरं व्याख्यातमन्तोऽततेः ॥ ६ ॥

"वियुते ( ५९ )"—इत्येतदेकमेव समस्तयोर्द्वयोरपि द्यावापृथिव्योरभिधानम् । "वियवनात्"—इति निर्वचनम् । यौतिर्मिश्रणार्थः ( अदा० प० ) तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति, विमिश्रीभूते इत्यर्थः ॥

"इमे वै सहास्तां ते शम्यामात्रं व्यैतामिति ह विज्ञायते" ।

"समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके ।

उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ( ऋ० सं० ३, ३, २५, २ )" इति ॥

विश्वामित्रस्येयमार्षम् । वैश्वदेवे सूक्ते । "समान्या" समान्यावेते द्यावापृथिव्यौ, समानपरिमाणे । "वियुते" च विमिश्रीभूते । "दूरे अन्ते" च, महत्त्वाद् दूरे अन्ते च, न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति । 'ध्रुवे पदे' सप्तम्येकवचनम्, अन्तरिक्षविषयम्, ध्रुवं शाश्वतम्, एतस्मिन् पदे आधारभूते [अन्तरक्षय्ये]अन्तरिक्षस्य क्षयो नास्ति, प्रतिद्वन्द्वयभावात् । तच्चैतयोर्द्यावापृथिव्योः प्रतिष्ठा, तस्मिन्नेते 'तस्थतुः' स्थितवत्यौ । सर्गादारभ्य 'जागरूके' जागरणशीले, स्वंस्वमधिकारं प्रति । 'उत' अपि चैते 'स्वसारा' स्वसारौ भगिन्यौ, सहोत्पन्नत्वात् । 'युवती भवन्ती' सम्मिश्रीभवन्त्यौ, परस्परसम्भोगेन । 'आद् उ ब्रुवाते मिथुनानि नाम' इति । अथैवमेते वियुते च सम्मिश्रीभूते च सत्यौ द्यावापृथिव्यौ, ब्रुवाते इव, प्रकथयत इव, स्तोतॄणां नाम नामानि, आत्मनः मिथुनानि द्विवचनसम्बद्धानि स्तुतिनामाभिः,—"स्वधे ( १ ), पुरन्धी ( २ )"—इत्येवमादिभिरिति॥ एवमेतस्मिन् मन्त्रे "वियुते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्, द्यावापृथिवीशब्दश्चात्राध्याहार्यः, "दूरे अन्ते"—इत्येवमादीनां तथोपपत्तिदर्शनात् ॥ ४ । २५ । ६ ॥

१ 'नावगतार्थो भवतीत्यु' ॥

**ऋधक् ॥ ६० ॥**

**ऋधगिति पृथग्भावस्य प्रवचनं भवति ।**

**अथाप्यृध्नोत्यर्थे दृश्यते-।**

**"ऋधगया ऋधगुताशमिष्ठाः ।"**

**ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति च ॥ ७ ॥**

"ऋधक् ( ६० )"-इति अनेकार्थम् । "ऋधगिति पृथग्भावस्य प्रवचनं भवति" पृथक्त्वमेव पृथग्भावः, तस्येदं प्रवचनं भवति, सोऽनेन प्रोच्यत इत्यर्थः ।

"यदिन्द्र दिवि पार्ये यदृधग्यद्वा स्वे सदने यत्र वासि ।
अतो नो यज्ञमवसे नियुत्वान्त्सजोषाः पाहि गिर्वणो मरुद्भिः ॥ ( ऋ० सं० ४, ७, १२, ५ )"-इति ।

भरद्वाजस्येयमार्षम् । पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते । हे भगवन् ! 'इन्द्र !' 'यत्' यदि त्वं 'दिवि' द्युलोके 'पार्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् पृथग् दिव इत्यर्थः । 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽवस्थितः । 'यत्र वासि' क्वचिदन्यत्रैव स्थानेऽवस्थितः । को हि तत्त्वतो वेद, तव स्थानं यत्रासीति । किं वहुना, यत्रयत्रासि अवस्थितः, 'अतः' ततः आगत्य 'यज्ञम्' 'अवसे' रक्षसि । त्वं 'नियुत्वान्' वायुर्भूत्वा । यस्त्वमेवम्प्रभावः, तं त्वां ब्रवीमि,-हे 'गिर्वणः' गीर्भिः सम्भजित ! स हि स्तुतीः सम्भजति, स्तुतिभिर्वा सम्भेज्यते, 'सजोषाः' सहजोषणः सहप्रीतिः, 'मरुद्भिः' पिवैतं सोममस्मत्प्रत्तम् । एवमेके पृथग्भावोदाहरणमेतामृचं व्याचक्षते ॥

अपरे पुनर्य एवैष भाष्यकारेण निगमः पठितः,-"ऋधगयाः"-इति, अत्रैवैतौ द्वावप्यर्थाविति मन्यन्ते, तथापि दर्शयिष्यामस्तस्यामेवार्चि "अथापि" अयमेवमृधगिति शब्दः कदाचित् "ऋध्नोत्यर्थे" अपि "दृश्यते" तद्यथा-"ऋधगया ऋधगुताशमिष्ठाः" इत्यस्मिन् मन्त्रे ।

"वयं हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहा ॥ (य० वा० सं० ८, २० )" इति ।

समिष्टयजुःषु सौमिकेषु विनियुक्ता । तत्र चोक्तम्,-" एतौ विश्वामित्रो यज्ञस्यारणी अपश्यत् "-इति । हे भगवन् ! 'अग्ने !' यत् प्रयोजनमुद्दिश्य

१ 'सम्बध्यते' ॥ २ 'तत्रैवैतौ' ॥

अद्य 'प्रयति' प्रोत्सर्पति 'अस्मिन्' 'यज्ञे' 'वयम्' 'अवृणीमहि' वृतवन्तः 'होतारं' 'त्वा' त्वाम् । "अग्निर्देवो दैव्यो होता"—इति श्रूयते । किं पुनस्तत् प्रयोजनम् ? इति । कथं नामाल्पमप्यवदानमात्रं हुतं देवतातृप्तिसमर्थं बहु कुर्यादशान्तमपि च यद् विगुणं यज्ञस्य किञ्चित् तच्छमयित्वा समृद्धमेव कुर्यात् ? इति, तच्चोभयमपि यथाशास्त्रमेवास्माकं त्वया कृतम्, अत इदानीं परिसमाप्ते एतस्मिन् यज्ञे प्रत्याभाष्यसे अस्माभिः,—"ऋधगयाः" त्वम्, अल्पमपि हुतम् अस्माभिः सद्धविः,ऋधक् एव ऋद्धमेव, देवतातृप्तिसमर्थं बहु कुर्वन् अयाः त्वं यागमकार्षीरित्यर्थः । किञ्च, "ऋधगुताशमिष्ठाः" अपि च यदपि किञ्चिद्विगुणम् अकार्ष्म वयमेतस्मिन् यज्ञे, तदपि सर्वमेवासमृद्धं समृद्धगुणमेव कुर्वन् पापस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि । यस्त्वमेतदकार्षीरस्माकमेतस्मिन् यज्ञे, तं त्वां ब्रवीमि,—एतदेव मयैतेषां कर्त्तव्यमित्येतत् 'विद्वान्' 'प्रजानन्' प्रकर्षेण जानन् अस्माकमात्मन उपरि भक्तिं पुनःपुनः 'उपयाहि' उपागच्छ 'यज्ञम्' ॥ एवं तावदेकेषाम् "ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि ऋधक्शब्दौ ऋध्नोत्यर्थावेव ॥ एतस्मिन्नर्थे, ऋधक्छब्दस्य पृथग्भावार्थत्वे "यदिन्द्र दिवि पार्ये यदृधक्" इत्येतदुदाहरणम् ॥

अन्ये पुनर्मन्यन्ते,—"ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतयोरेव ऋधक्छब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति । तदेतदुपपद्यते, मिश्राण्यपि हवींषि हुतानि सन्ति, त्वमग्ने ऋधक् पृथगेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः । 'ऋधगुताशमिष्ठाः"—इत्येष यथाव्याख्यात एव । पूर्वस्त्वर्थः साधीयान्,यत्र द्वावप्येतावृध्नोत्यर्थावेव,- "ऋधगयाः" "ऋधगुताशमिष्ठाः"-इति । किं कारणम् ? "अथाप्यृध्नोत्यर्थे दृश्यते"—इति एवमुपन्यस्य भाष्यकारेण ततोऽयमुपात्तो निगमः,—"ऋधगया ऋधगुताशमिष्ठाः"—इति। एवञ्च निरुक्तम्—"न पुनः पृथक्कुर्यान्न याक्षीः ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठाः"—इति । तस्मात् द्वावप्येतावृध्नोत्यर्थावित्येतदेव साधीयः ॥ ४ । २५ । ७ ॥

## अस्याः ॥ ६१ ॥ अस्य ॥ ६२ ॥ इति द्विषष्टिः पदानि ॥ १ ॥

अस्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे ।

तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम् ॥

"अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ॥"

अस्यै नः सातय उपभवाहेळमानोऽक्रुध्यन्नरिवान्नातिरभ्य-स्तोऽजाश्वेति पूषणमाहाजाश्वाजा अजननाः ।

अथानुदात्तम्-

"दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ।"

दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतम् ।

शरच्छृता अस्यामोषधयो भवन्ति । शीर्णा आप इति वा ॥ ८ ॥ २५ ॥

"अस्याः ( ६१ )"-इति, "अस्य ( ६२ )"-"इति च" पदद्वयं स्त्रीपुंसविषयम्, स्वरकृतात् विशेषात् प्रधानाभिधायि वा भवति गुणाभिधायि वा । आह-कथम्? इति, उच्यते-"उदात्तं प्रथमादेशे"। प्रथम इति मुख्यनाम, मुख्यश्च प्रधान इत्युच्यते, प्रधानं कञ्चिदर्थमभिदधत् एतत् पदद्वयमुदात्तं भवति ॥ "अनुदात्तमन्वादेशे"। प्रधानमर्थमनु यो वर्त्तते गुणभावेन तस्यैतत् पदद्वयमन्वादेशे वर्त्तमानमनुदात्तं भवति। आह-कस्मादेतत् पुनरुदात्तं प्रधाने वर्त्तमानम्, अनुदात्तमप्रधाने? इति। उच्यते-लोकेऽपि हि यत् "तीव्रार्थतरम्" उत्कृष्टार्थप्रधानतरं तत् "उदात्तम्"-इति प्रसिद्धम्, तद्यथा,-'उदात्तमेतत् कुलम्' इति । "अल्पीयोऽर्थतरमनुदात्तम्" अल्पीयसार्थेन यद्युक्तं भवति तदनुदात्तमुच्यते, अप्रधानमित्यर्थः । उदाहरणैरेवानयोर्विभागं दर्शयति-

"अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँऽअजाश्व श्रवस्यतामजाश्व ।
ओषु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।
न हि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥ ( ऋ० सं० २, २, २, ४ )"-इति ॥

परुच्छेपस्यार्षम् । अतिच्छन्दाः । "ऊ"-इति, "षु"-इति, "ण"-इति पदानि । "अस्या" "अस्यै" "सातये" लब्धये ॥ कथं नाम वयमर्थमभिप्रेतं लभेमहि? इत्येतमर्थमुद्दिश्य, हे 'पूषन्!' अस्माकं सुष्ठु "उप" समीपे "भुवः" "भव" । त्वयि सन्निकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः । कथं पुनरुपभव? "अहेळमानः" "अक्रुध्यन्" सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः । "ररिवान्" दानवान्, अजाश्वदानाभिप्रायसंयुक्तेन चेतसा उपभव । "अजाश्व" अजनाश्व गमनाश्व, छागाश्व वा "श्रवस्यताम्" अस्माकं धनमिच्छतां भव, "अजाश्व" छागाश्वेत्यर्थः । किञ्च, 'ओषु त्वा ववृतीमहि' । आ, उ,

सु–इति पदानि । आ ववृतीमहि त्वां सुष्ठु आभिमुख्येन आत्मनो वर्त्तयामहे । केन ? 'स्तोमेभिः' स्तोत्रैः । 'दस्म' हे दस्म ! दर्शनीय ! अथवा दान्त ! "साधुभिः" शोभनैरित्यर्थः । किञ्च, 'न हि त्वा' नैव त्वां दर्शनीयम् अतीत्य साधुतरां काञ्चिदप्यन्यामहं देवतां मन्ये, हे 'आघृणे' आगतदीप्ते ! त्वद्भक्त एवाहमस्मीत्यभिप्रायः । किञ्च, 'न ते' न चाहं तव 'सख्यं' सखिभावं कदाचिदपि 'अपह्नुवे' कृतज्ञो ह्यहमित्यभिप्रायः । एवमत्र सातिः प्रधानेति कृत्वा "अस्याः"–इत्येतत् पदमन्तोदात्तम् । अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेण, एकदेशस्योदात्तत्वात् ॥

"अथ" पुनर्यस्मिन् "अनुदात्तम्" एतत् पदं गुणभूतार्थाभिधायि भवति । तस्यैव निगमः,–

"पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ (ऋ० सं० ८, ३, २७, ४)" इति।

सूर्याया आर्षम् । विवाहे विनियुक्ता । पित्रा पूर्वमेतां दत्तां सतीं कन्यां पत्नीं पुनरग्निरदात्, 'आयुषा सह वर्चसा' तेन सह एतस्मिन् वैवाहिके कर्मणि अग्निसन्निधिसंस्काराद् हि भार्यात्वमुपजायते इत्येतदपेक्ष्य पूर्वदानात् पुनर्दातृत्वमुच्यते । तदेवमस्या दत्ताया एतदाशास्महे,–"योऽस्याः पतिः" सः "दीर्घायुः" अस्त्विति । यतो विशेषयन् ब्रवीमि,–"जीवतु स शरदः शतम्"–इति । शरद्धि दुर्जीवा, रोगभूयस्त्वात्, अत एवमाशास्यते शरच्छतं जीवत्विति ॥ एतस्मिन् मन्त्रे भर्तृकन्यासंयोगे सति भर्त्तैव प्रधानः, तस्य ह्यायुराशास्यते । तस्य लक्षणार्था पत्नी । तस्मात् दीर्घायुः अस्या यः पतिः–इति, एतदनुदात्तम् ॥

निगमप्रसक्तमुच्यते,—"शरत्" "अस्यां" हि "शृताः" पक्वाः "ओषधयो भवन्ति"–इति, "शीर्णा आप इति वा" वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्य छिद्यन्ते ॥ ४ । २५ । ८ ॥

## अस्येत्यस्या इत्येतेन व्याख्यातम्–॥

"अस्य–इति" एतत् पदं पुंविषयं षष्ठ्यन्तम् "अस्याः–इत्येतेन" स्त्रीविषयेण पदेनैव "व्याख्यातम्"—॥ *

**अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।**
**तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥"**

१ 'अन्नेन सह ॥ २ 'नमु' ॥ * अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा "अस्य–इति" एतत्पदम्–इत्यतः प्रागुचिता ॥

अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हर्तिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता संख्या सप्तादित्यरश्मय इति वदन्ति ॥ १ ॥ २६ ॥

यदेवोक्तम् :"उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्षणमित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते,—"अस्य वामस्य०—सप्तपुत्रम्"। अस्य वामियमेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्त्रे शस्यते। "अस्य" सूर्यस्य"वामस्य" "वननीयस्य" स्तुतिभिः, "पलितस्य" "पालयितुः" अयं हि सर्वमेवेदं जगत् पालयति। "होतुः" "ह्वातव्यस्य" आह्वानार्हस्य। आह—तस्य किम्? इति। उच्यते—योऽयमेवंलक्षणः "तस्य" "भ्राता" भागहर्त्ता "भर्त्तव्यो वा" उदकेन, "मध्यमः" मध्य [ म ] स्थानः "अस्ति" विद्यते। कतमः? योऽयम् "अश्नः" "अशनः" व्यापनो वायुरित्यर्थः, स हि द्युलोकादादित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात्। "तृतीयः" "अस्य" वायोः "भ्राता" हविर्भागहर्त्ता वा, ऐन्द्राग्ने हविषि संस्तुतौ वा "घृतपृष्ठः" घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथिवीस्थानः। "सहस्रिणः" वायोः, सर्वस्माद्धि वायुः बलवान्। अथवा—सहस्रमस्य नियुक्तमश्वानामस्तीति सहस्री वायुः, "आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिः ( ऋ० सं० २, १, २४, ३ )" इति।

श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परिसंख्याय वायोस्तृतीयोऽग्निर्भवति, वायुरपि च ज्योतिरेव, "वायुना ज्योतिषा—इति ह विज्ञायते।" "तत्र" एतस्मिन् त्रेधा विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहम् "अपश्यम्" इति। "विश्पतिं" विश्वस्य "सर्वस्य" जगतः "पालयितारम्"। कतमम्? य एषः सप्तपुत्रः सूर्यः। एतमेवाहमत्र प्रधानत्वेनापश्यमित्येवमेतस्मिन् मन्त्रे सूर्यः प्रधानः, सूक्ते सूर्याधिकारात्, तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः। वायुरत्राप्रधानम्,

१ 'अस्य' ॥

तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इत्येषः "अस्य"—शब्दोऽनुदात्तः ॥ एवमेकस्मिन्नैवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ अस्य—शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम् ॥

आह—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य"—शब्देन सूर्य एव कस्मान्न सम्बध्यते ? अपि च "तृतीय"—शब्दस्य प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति । उच्यते—'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्यत् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इति समानरूपमेव सत् पूर्वेणानुदात्तमिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते । आदित्यसंस्तवात् सूक्ते वायुश्चात्राप्रधानः प्रकृतादादित्यात् । तस्माद्वायुविषयमेवेदम् अस्येति द्वितीयं पदमनुदात्तं सम्पद्यते । अतः सुतरामुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्तमन्यादेशे"—इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति ॥

अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतरमुदात्तमित्यनेनैव लक्षणेन । तद्यथा,—

"अस्या ऊ षु णः ( ऋ० सं० २, २, २, ४ )", "अस्य वामस्य ( ऋ० सं० २, ३, १४, १ )"—इति ॥ अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः, तत्र वर्त्तमानमनुदात्तं भवति । पदात् परस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते । तथानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भवति । तद्यथा,—"दीर्घायुरस्या यः पतिः ( ऋ० सं० ८, ३, २७, ४ )" "तृतीयो भ्राता घृतपृष्ठो अस्य ( ऋ० सं० २, ३, १४, १ )"—इति ॥

आह—कथं सप्तमपुत्र आदित्यः ? इति । उच्यते—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते । ब्राह्मणेऽपि च,—"मृतपितरमण्डमवापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इति ह विज्ञायते" ॥ अथवा—सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः ॥ अथवा—नैव संख्याभिप्रायमेतत् सप्तपुत्र इति । आह—कथं तर्हि ? इति । उच्यते—"सर्पणपुत्रमिति" एवं सर्पणा हि तस्य रश्मयो मुहूर्त्तमप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः । "सप्तसृप्ता संख्या" षड्भ्यः सकाशात् । एवं सप्तसंख्योपेताः, सर्पणक्रियायोगिनो वा एत एव "आदित्यरश्मयः" अस्य आदित्यस्य पुत्राः "इति" मन्त्रविदः "वदन्ति" मन्यन्ते ॥ ४ । २६ । १ ॥ *

"सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ॥

१ 'प्रधानरू' ॥ २ 'तत्रा' ॥ ३ 'योगया वा' ॥ * अत्रैव षड्विंशखण्डसमाप्तिरुपलभ्यते ॥

त्रिनाभिचक्रमुजरमनुर्वं यत्रेमा विश्वा भुवनाधि तुस्थुः॥"

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैकोऽश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वा। इदमपीतरन्नामैतस्मादेवाभिसन्नामात्॥

संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति—॥

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेव सूक्ते "सप्त युञ्जन्ति०—अधि तस्थुः ( ऋ० सं० २, ३, १४, २ )"—इति।

"सप्त" सङ्ख्योपेताः सर्पणा वा "युञ्जन्ति" योजयन्त्यात्मना रश्मयः "रथं" रंहणमादित्यम्, उद्यन्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहणश्चासौ मुहूर्त्तमप्यनवस्थायित्वात्। "एकचक्रम्" एक एव ह्यसावन्तरिक्षे चरति, इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। "एकोऽश्वः" एक एवाश्वः, अशनो व्यापनः सर्वभूतानाम् "वहति" गच्छति "सप्तनामा" सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्तसंख्यायुक्ताः स्तुतयोऽस्य। अथवा "सप्तास्मै रश्मयो रसानभिसन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथवा "सप्तैनमृषयः [नमन्ति] स्तुवन्ति इति वा" सप्तनामा। "इदमपीतरत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि स्वमर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सततचारी व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्तमिति॥ तदैवं वहन् किमभिनिर्वर्त्तयति ? इति, उच्यते—"त्रिनाभिचक्रमजरमनर्वम्" त्रिनाभिसंयुक्तं कालचक्रम्, चकनधर्मिकम्, चकनं चलनमुच्यते, चरणधर्मि, क्रमणधर्मि वा।•"अजरम्" "अजरणधर्माणम्"। "अनवम्" "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः।

"त्रिनाभिचक्रं" "त्र्यृतुः" हि "संवत्सरः"—"ग्रीष्मो वर्षा हेमन्त इति" अनेन ऋतुप्रविभागेन एतदेवास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि असौ संवत्सरो नह्यते सन्नह्यते इत्यर्थः॥ "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" नादित्यप्रधानः॥

संवत्सरः संवसन्तेऽस्मिन् भूतानि॥

ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसाः॥

---

१ 'एकाचारी'॥

**वर्षा वर्षत्यासु पर्जन्यः ॥**

**हेमन्तो हिमवान् ॥**

**हिमं पुनर्हन्तेर्वा । हिनोतेर्वा । अजरमजरणधर्माणमनर्वम-प्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते—॥**

"संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति । मैथुनाभिप्रायो वाँ स्यात् 'संवासः'—॥

"ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्येण ॥

"वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव ॥

"हेमन्तः, हिमवान्" तत्र हि वहु भवति हिमम् ॥

"हिमं पुनर्हन्तेर्वा" तद्धि हन्त्योषधिवनस्पतीन् प्रक्रिरति ॥ "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि । अजरं तत् संवत्सरचक्रम् अजरणधर्मि, न हि संवत्सरस्य जरा नाम धर्मोऽस्ति । अनर्वं च तत् अप्रत्यृतम् अप्रतिगतमनाश्रितमन्यत्र क्वचित् । आह—यत्र किम् ? इति । उच्यते,-"यत्र" यस्मिन् "इमाः" "इमानि" "विश्वा" "सर्वाणि" "भुवना" "भूतानि" "अधि" उपरि "तस्थुः" "अभि सान्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति । विनाशोऽपि हि संस्थोच्यते, संस्थितः पिता मम, इत्युक्ते 'मृतः' इति गम्यते । तदेवंलक्षणं त्रिनाभिकालचक्रमजरम्, य आदित्योऽभिनिर्वर्त्तयति, यच्चेदमभिनिर्वर्त्यते कालचक्रम्, तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्द्धर्चे आदित्यप्रधानः, उत्तरः संवत्सरप्रधानः ॥

आह—कथं गम्यते संवत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न हि संवत्सरग्रहणमत्रास्ति ? । उच्यते—"त्रिनाभिचक्रम्"—इत्येतस्मादृतुसम्बन्धात् ॥ आह—एतदपि विशेषलिङ्गमत्र नास्त्येव, त्रय ऋतवो नाभिशब्देनोच्यन्ते इति ? तस्मादेतदप्ययुक्तमेवेति । उच्यते—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्येणाभिनिर्वर्त्यते संवत्सरः, यस्मिंश्च सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे च प्रकृत्य मन्त्रदृक् त्रिनाभिचक्रम्—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः "पञ्चारे चक्रे" "षळरे" त्रीणि शतानि षष्टिश्च सप्तशतानि विंशतिश्च—इत्येवम्प्रकारैः "स्तौति" । तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते । षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्—॥

---



१ 'अस्मिं' ॥ २ 'मंत्रकृत्' ॥

तं संवत्सरं सर्वमात्राभिः स्तौति ॥

"पञ्चारे चक्रे परिवर्त्तमाने" ॥

इति पञ्चर्तुतया पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्त-शिशिरयोः समासेन ॥

"षळर आहुरर्पितम्" ॥

इति षळृतुतया अराः प्रत्यृता नाभौ ॥

षट् पुनः सहतेः—॥

अथैवमुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" । अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—

"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते स नाभिः ॥ ( ऋ० सं० २, ३, १६, ३ )"—इति ॥

"इति पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः । "पञ्चारे चक्रे" ऋतवः अत्र अरत्वेनाभिप्रेताः । "परिवर्त्तमाने" परिगृह्येदं जगद् वर्त्तमाने । आह—किम् ? इति । उच्यते—'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढानि । कानि ? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि ॥ कालचक्रे हि सर्वमेवेदं जगदाधिरूढं बम्भ्रमीति ॥ अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य 'तस्य' कालचक्रस्यैवमपि 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः । अपि च 'सनादेव' चिरन्तन एव 'सः' अक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्यते' नश्यति । आह—यद्यक्षो न तप्यते शीर्यते वा, किमेवमतिबलीयसाक्षेण घृष्यमाणा नाभिः तप्यते शीर्यते वा ? इति । नेत्युच्यते—'( स ) नाभिः' अक्षो न शीर्यते न तप्यते । नाभिरादित्य एवाभिप्रेतः ॥ आह—कथमेतद्गम्यते पञ्चारे चक्रे—इत्यत्र अरशब्देन ऋतवोऽभिप्रेता इति ? न ह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति, अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम् ? इति । उच्यते—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते । "पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणम्, हेमन्तशिशिरयोः समासेन" एकत्वेनेत्यर्थः । तस्मादुपपद्यते एव पञ्चत्वम्, ऋतूनाम् अरत्वे चावयवस्तुत्यभिसम्बन्धादिति ॥

"पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥ ( ऋ० सं० २, ३, १६, २ )"—इति ॥

"षळर आहुरर्पितमिति षडृतुतया" संवत्सरस्य स्तुतिः । 'पञ्चपादं' संवत्सरम्, ऋतवो हि संवत्सरस्य पादाः, तैरसौ पतति गच्छति । 'पितरं' पालकं सर्वभूतानामुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासाः संवत्सरस्य" इति च ब्राह्मणम्, 'दिवः' द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽयमवस्थित आदित्यः, एतस्मिन् पञ्चपादं पितरं द्वादशाकृतिं 'पुरीषिणम्' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः । तस्मात् सर्वं ऋतवो वृष्टिमन्त इति ह विज्ञायते । तस्मात् संवत्सरस्योदकवत्त्वमुपपद्यते । 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्यवस्थिताः, 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमेतमादित्यं 'चक्रे षळरे' षडरे तस्मिन् संवत्सराख्ये अर्पितमाहुः । अथवा—सप्तचक्र आदित्यः, स हि सप्तभी रश्मिभिश्चकते दीप्यते, 'सप्तचक्रे'—इत्येकं पदं तस्मादेवमपि भवति ॥ एवमेके संवत्सरमादित्यप्रतिष्ठमाहुः[1], अपरे पुनरादित्यं संवत्सरप्रतिष्ठमित्येष समस्तार्थः ॥ एवमेतस्यामृच्चि आदित्यसंवत्सरौ स्तूयेते । वक्ष्यति, हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः" । संवत्सरस्य चक्ररूपकेण नाभ्यादिभिः स्तुतिरुपपद्यते ॥ "अराः प्रत्यृता नाभौ" प्रतिगता इत्यर्थः ॥

"षट् पुनः सहते:" ते हि पञ्चसंख्यामभिभूय वर्त्तन्ते—॥

"द्वादशारं नहि तज्जराय ॥"

"द्वादश प्रधयश्चक्रमेकम्" इति मासानाम् ॥

मासा मानात् ।

प्रधिः प्रहितो भवति ॥

"तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥"

"षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः" इति च ब्राह्मणं समासेन ॥



१ 'त्यप्रविष्टमा' ॥

"सप्त शतानि विंशतिश्च तस्थुः ॥"

"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः" इति च ब्राह्मणं विभागेन विभागेन ॥ १ ॥ २७ ॥

"द्वादशारं नहि तज्जराय"—इति । "द्वादश प्रधयश्चक्रमेकम्" इति । "इति मासानाम्" 'एतौ पादौ भवतः' इति वाक्यशेषः ॥

"द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।

तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ ( ऋ० सं० २, ३, २३, २ )"—इति ॥

"मासा मानात्" मीयते हि तैः संवत्सरः ॥

"प्रधिः प्रहितः" प्रश्लेष्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते । "द्वादशप्रधयः" मासाख्याः, संहताः सन्तः "चक्रमेकं" भवति । तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति । यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तद् याथात्म्येन विजानाति ? "तस्मिन्" चक्रे "साकं" सह "त्रिशता न शङ्कवोऽर्पिताः" त्रिशतान्यहोरात्राणि शङ्कव इवार्पितानि । "षष्टिर्न" षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि । द्वितीयो नकारः समुच्चयार्थे । "चलाचलासः" चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चन्ति । आह—कथं गम्यते अहोरात्राण्येतानीति ? उच्यते—संवत्सरस्तुतिप्रायसम्बन्धाच्च । "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन" अहोरात्रयोरेकत्वेनेत्यर्थः ॥

"द्वादशारं नहि तज्जराय ववर्त्ति चक्रं परि द्यामृतस्य ।

आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ ( ऋ० सं० २, ३, १६, १ )"—इति ॥

"न हि" "तज्जराय" "तज्जीर्यते" किं तर्हि ? अन्यानि भूतानि जरयत् 'ववर्त्ति चक्रं' पुनःपुनर्वर्त्तते । 'परिद्यां' परिगृह्य द्यां च पृथिवीं च ततो ववर्ति । 'ऋतस्य' उदकस्य सम्पूर्णम् । अथवा—ऋतस्य आदित्यस्य स्वभूतम् । अथवा—ऋतस्य यज्ञस्याङ्गभूतम् 'आतस्थुः' पुत्राः । एतस्मिंश्चक्रे 'मिथुनाः' द्वन्द्वा इत्यर्थः । कस्य ? 'अग्ने' अग्नेः । अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणम्यते, अग्नेः पुत्रा आतस्थुरिति । अग्निश्चात्रादित्य एवाभिप्रेतः, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम् ।

---

१ 'याथार्थ्यतो वि' ॥

आह—कियन्तस्ते पुत्राः ? इति । उच्यन्ते—"सप्तशतानि विंशतिश्च" । ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः—इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति ॥ एवमेतस्मिन् सूक्ते संवत्सरं सर्वमात्राभिः सर्वैरवयवैः स्तौति । तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामृचि संवत्सरप्रधानस्त्रिनाभिचक्रमित्येषोऽर्द्धर्चः ॥ ४ । २७ । १ ॥

तदेतत् सर्वमपि 'सप्तपुत्रं' सर्पणपुत्रमित्येतस्मात् पदात् प्रसक्तानुप्रसक्तमुक्तम्, प्रकृतमिदानीं वर्णयिष्यामः ॥ किं पुनः प्रकृतम् ? ऐकपदिकसमाम्नायव्याख्यानम् । तत्र यदुक्तं तदुक्तमेव, यदनुक्तं तद्वक्तव्यमितीदमारभ्यते,—"सस्निमविन्दच्चरणे नदीनाम्"—इति ॥ *

ऐकार्थकोनुवयःसुपर्णायदिन्द्रजुष्टोदमूनाः सम्मातपन्तीषिरेणर्मरुत्वाँतितउसक्तुंमिवर्तत्सूर्यस्येन्द्रेणसमीर्मान्तासःकाय्रमानः कनीनकेवोपोअदर्शिसुवितेविद्यामदेवानआवोद्यौर्मेऽदितिर दितिरुतस्मात्रोहास्यवामस्यसप्तयुञ्जन्ति सप्तविंशतिः ॥

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

इति जंबूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ चतुर्थो ( नवमो )ऽध्यायः समाप्तः ॥ ४ ॥

---

( अथ चतुरशीतिपदानि )

सस्निम् ॥ १ ॥

# अथ पञ्चमाध्यायः ५.

ॐ "सस्निमविन्दच्चरणे नदीनाम् ।" सस्निं संस्नातं मेघम् ॥ १ ॥

"सस्निम् ( १ )"—इत्येतदनवगतम् । अर्थाप्रतीतिरप्यनवगम इत्युच्यते । लक्षणासम्पन्नश्च संस्कारः खल्वपि अविज्ञानमित्युच्यते । तत्रैवं सति, क्वचित्प्रकृत्यादेः संस्कार-

---

* अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा 'तदेतत् सर्वमपि' इत्यतः प्रागुचिता ॥ "इति निरुक्तवृत्तौ चतुर्था ( नवमा ) ध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥" इति चोपलभ्यते ॥

स्यानवगमः, क्वचिदर्थाप्रतीतिरेव, क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्निमिति न विज्ञायते ॥ किमप्युक्तं भवति ? प्रकरणादत्र मेघाभिधेयम्। अन्यत्रान्योऽपि कश्चित् स्यात् प्रकरणविशेषादेव । एवं सर्वत्रैवोपेक्षितव्यम् । प्रकरणसामर्थ्याच्छब्दोप्यर्थान्तरं भजते ।

"सस्निमविन्दच्चरणे नदीनामपावृणोदुरो अश्मव्रजानाम् ।

प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम् ॥ ( ऋ० सं० ८, ७, २७, ६ )"–इति ॥

विश्वावसोर्देवगन्धर्वस्येयमार्षम् । घर्मोत्सादने विनियुक्ता । तत्रोक्तम्–परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्त ऋत्विजो यजमानश्चेति । तासामुपस्थानर्चामियं मध्ये मैत्रायणीयके । "सस्निं" "संस्नातम्" अद्भिः परिवेष्टितं, सर्वतः परिप्लुतं, धौतं वा "मेघम्" "अविन्दत्" अलभत 'इन्द्रः' । क्व पुनरलभत ? "चरणे नदीनां" यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत, अन्तरिक्षलोके इत्यर्थः । आह—लब्ध्वानन्तरं किमकरात् ? इति । उच्यते–'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः । 'दुरः' द्वारः । आह–कस्य? उच्यते–'अश्मव्रजानाम्' अपामश्मा मेघः, तमाधिरूढा या व्रजन्ति, स च यासां व्रजभूतो गोष्ठभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृणोत् । या एता एवंलक्षणा आपः, 'आसाम्'तासाम्, अस्य च इन्द्रस्य 'गन्धर्वः'विश्वावसुः 'प्रावोचत्'–'अमृतानि' नामानि, छान्दसस्तुतियुक्तानि, तानि हि नित्यत्वादमृतानि । आह–कस्मात् पुनरस्येन्द्रस्यामृतानि प्रावोचदासाञ्चापाम् ? इति । उच्यते–इतः–यस्मादसाविन्द्रः'दक्षं'दातारं मेघम् । अयम् आसाम् 'अहीनाम्' अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भविष्यति–इत्येवं'परिजानात्'परिज्ञातवान्।परिज्ञाय च अपावृणोत् दुरोऽश्मव्रजानाम्। तस्मादस्येन्द्रस्यामृतानि नामानि प्रावोचदद्भिश्चानेन प्रकारेणेन्द्रेण दत्ताभिः सर्वमेवेदं जगद् भ्रियत इति आसामपि अपाम् अनेन हेतुना प्रावोचदिति ॥ एवमेतस्मिन् मन्त्रे चरणे नदीनाम् अविन्दत्, अपावृणोच्च दुरोऽश्मव्रजानाम्, दक्षञ्च परिजानात्–इत्येकवाक्यतार्थसम्बन्धात् सस्निशब्दो मेघविशेषणम् उपपद्यते ॥

अथवा–अयमप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्,–संस्नातं मेघमविन्ददलभतेन्द्रः पर्येष्यमाणः ॥ क्वाविन्दत् ? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके । लब्ध्वा च स एव इन्द्रः, तं मेघं, दक्षं दातारम्, अहीनाम् अपां परिजानात् । परिज्ञाय च समर्थोऽयमिति ततस्तस्य दुरः द्वाराण्यपावृणोत् । अश्मव्रजानामपामधो निर्गमनाय । तत एतानि निर्गतानि, अमृतानि उदकानि, सस्यसम्पत्कराणि प्रावोचदिव प्राकथयदिव,–असाविन्द्रो गन्धर्वः, आसां प्रजानां जीवनमेभिरुदकैरस्मदत्तैरिति । "इन्द्रो गन्धर्वः,

तस्य मरुतोऽप्सरसः"—इति श्रूयते । तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव । स च गोः वज्रस्य धारयिता इति गन्धर्वः ॥ ५ । १ । १ ॥

## वाहिष्ठः ॥ २ ॥ दूतः ॥ ३ ॥

"वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।"

वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ ।

नरा मनुष्या नृत्यन्ति कर्मसु ॥

दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा ।

("दूतो देवानामसि मर्त्यानाम्" इत्यपि निगमो भवति)॥ २॥

"वाहिष्ठः ( २ )"इत्येतदनवगतम् । "वोढृतमः"—इत्यवगमः ॥

"वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।
युवाभ्यां भूत्वश्विना ॥ ( ऋ० सं० ६, २, २९, १ )"—इति ॥

गायत्री । विश्वमनसो वैयश्वस्येयमार्षम्, पितुर्वा व्यश्वस्य । प्रातरनुवाकाश्विनयोः शस्यते ॥ 'नरा' हे नरौ ! सर्वेषामेव वोढणां स्तोमानाम्, आह्वातॄणाञ्च । य एव एषः "वाहिष्ठः" अतिशयेन वोढा, आह्वातृतमः, अयमेव "दूतः" इव युवां "हुवत्" आह्वयादित्यर्थः । योऽयमेवंलक्षणः "स्तोमः" अस्मत्प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः । हे 'अश्विना' अश्विनौ ! इति सम्बोधनम् । स्तोमो दूतः—इत्येताभ्यां समानविभक्त्यन्तत्वात् वाहिष्ठशब्दः स्तोमविशेषणमित्युपपद्यते ॥

निगमप्रसक्तमुच्यते,—"मनुष्याः" अपि हि "नराः" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनःपुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमानाः ॥

"दूतो ( ३ ) जवतेर्वा" गत्यर्थस्य । स हि गच्छति । "द्रवतेर्वा" गत्यर्थस्यैव । "वारयतेर्वा" स हि वारयत्यनर्थान् ॥ ५ । १ । २ ॥

## वावशानः ॥ ४ ॥

वावशानो वष्टेर्वा वाश्यतेर्वा ।

"सप्त स्वसॄरारुषीर्वावशानः"इत्यपि निगमो भवति ॥ ३ ॥

"वावशानः( ४ )"—इत्यनवगतम् । "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात् ॥

"सप्त स्वसॄरारुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ( ऋ० सं० ७, ५, ३३, ५ )"–इति ॥

त्रितस्याप्त्यस्येयमार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "सप्त" "स्वसॄः" स्वसारो भगिन्य इव या ह्यर्चिषः समानजन्मत्वात् । अथवा–सह सर्पणात् स्वसारः, ता हि सह सर्पन्ति "आरुषीः" आरोचनाः, दीप्ता इत्यर्थः। या एवंलक्षणाः अर्चिषः, ताः, अग्निः "वावशानः" कामयमानो वावश्यमानो वा, शब्दं कुर्वाणः सः 'विद्वान्' आत्मीयमाधिकारं जानानः, 'मध्वः' घृतस्य हविषः पूर्णः, 'उज्जभार' ऊर्द्ध्वं हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः । एवं ता ऊर्द्ध्वं हृत्वा दर्शनमभिव्यज्य जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रोपनियमितवान् तद्धविः 'पुराजाः' अग्निः, स हि सर्वदेवेभ्यः प्रथम एव जातः। 'इच्छन्' 'वव्रिं' रूपम्। कस्य ? 'पूषणस्य' पूष्णः, आदित्यस्य । कथं नामासावादित्यो दीप्तरूपः स्यात् ? अतोऽन्तरादित्यस्य येमे । तं चासावेतमर्थम् 'अविदत्' अलभत इत्यर्थः। स एव दीप्तरूप आदित्यः संवृत्त इत्यभिप्रायः ॥ एवमत्र स्वसॄर्वावशानः–इत्यनेन सामानाधिकरण्याच्छब्दसारूप्याच्च वावशान–इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च उपपद्यते ॥ ५ ॥ १ ॥ ३ ॥

## वार्यम् ॥ ९ ॥

**वार्यं वृणोतेरथापि वरतमम्।**
**"तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।"**
**तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारो यूयं स्थ युष्मभ्यमिति वा ॥ ४ ॥**

"वार्यम् (९)"–इत्यनवगतम्। "वृणोतेः"। यद्वरयितव्यं भवति, तद्वार्यमित्युच्यते। "अथापि" कदाचिद् वार्यशब्देन यद् "वरतमं" श्रेष्ठतमं किञ्चिद्भवति, तदुच्यते।

"तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।
मित्रो यत्पान्ति वरुणो यदर्यमा ॥ ( ऋ० सं० ६, २, २३, ३ )"–इति।

विश्वमनस इयमार्षम्। मैत्रावरुणे सूक्ते। "तद्वार्यं वृणीमहे" वरयितव्यं वरणार्हं धनं वृणीमहे। हे स्तोतारः ! "वरिष्ठं" "गोपयत्यं" "गोपायितव्यं" यद्रक्षणार्ह-

१ 'वरिष्ठं' ॥

मित्यर्थः । अथवा–गोपयत्यं "गोपायितारो" यस्य धनस्य "यूयं" "स्थ" भविष्यथ, तद् वृणीमहे । अथ "वा" "युष्मभ्यं" यौष्माकीणं यद्भवति, तद् वृणीमहे । किञ्च, नित्यकालमेव मित्रावरुणार्यमणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद् वृणीमहे । एवमत्र च मित्रावरुणार्यमणो यत् पान्ति–इत्यनेन सम्बन्धात् वार्य–शब्दो धनविशेषणमित्युपपद्यते ॥ ५ । १ । ४ ॥

## अन्धः ॥ ६ ॥

अन्ध इत्यन्ननामाध्यानीयं भवति ।

"आमंत्रेभिः सिञ्चता मद्यमन्धः" ।

आसिञ्चतामत्रैर्मदनीयमन्धः ॥

अमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति पात्रं पानात् ।

तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति । न दर्शनमन्धन्तम इत्यभिभाषन्ते ।

अयमपीतरोऽन्ध एतस्मादेव ।

"पश्यदक्षुण्वान्न विचेतदन्धः" इत्यपि निगमो भवति ५॥ १॥

"अन्धः ( ६ )"–इत्यनेकार्थमनवगतं च । "आध्यानीयम्" इत्यर्थप्रतीतिः । प्रार्थनीयमन्नं भवति सर्वस्यैव ।

"अध्वर्यवो भरतेन्द्राय सोममामंत्रेभिः सिञ्चता मद्यमन्धः ।
कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥ ( ऋ० सं० २, ६, १३, १ ) इति ॥

गृत्समदस्येयमार्षम् । रात्रिपर्याये शस्यते । होतुः शस्त्रे विनियुक्ता । अस्यैव च[1] शस्त्रस्य याज्यैषा ॥ हे 'अध्वर्यवः !' 'भरत' प्रापयतेमं 'सोमम्' । एतस्माद्धविर्धानादुत्तरवेदिम्, "इन्द्राय" इन्द्रार्थम् । अथवा–भरत धारयताग्नेरुपरि । ततश्चैनम् "आमत्रेभिः" "अमत्रैः" पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते "आसिञ्चत" तस्मिन्नग्नौ । "मद्यं" मदनीयम्, एतत्सोमाख्यम् "अन्धः" । कस्मात् पुनरेवं ब्रवीमि ?

---

[1] 'अस्त्येव च' ॥

इतः—यस्मात् 'कामी हि वीरः' कामयत एव वीरः इन्द्रः 'अस्य' सोमस्य 'सदं' सदैव, नित्यकालमेव 'पीतिं' पानमित्यर्थः । तस्मात् कारणात् 'जुहोत' तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम् । किमेतमेव केवलं सोममेव कामयते ? नेत्युच्यते,—'तदिदेष वष्टि' तत्तत्सोमप्रदानमेव इन्द्रो वष्टि कामयत इत्यर्थः, न केवलं रात्रिपर्यायेष्वित्यर्थः । तस्मादासिञ्चत इमं सोमं मा विलम्बध्वमित्याभिप्रायः । एवमत्र दानसम्बन्धात् अन्धः शब्दोऽन्नार्थ उपपद्यते । पठितमपि चान्ननामसु, अनेकार्थत्वात् तु सन्दिह्यते इत्येष निगम उपात्तः ॥

निगमप्रसक्तमुच्यते,—"अमत्रं पात्रम्, अमा अस्मिन् अदन्ति" अश्नन्तीत्यर्थः । "अमा"–शब्देन "पुनः" यद् "अनिर्मितम्" अपरिमाणं किञ्चिद् "भवति", तदुच्यते, न हि तेषां परिमाणमस्ति, यावन्तस्तस्मिन्नदन्ति । "पात्रं पानात्" पीयते हि तेन ॥

"तमोऽप्यन्ध उच्यते" । किं कारणम् ? "नास्मिन्" "ध्यानं" दर्शनं कृतं "भवति" चक्षुषो दृष्टिनिरोधात् ॥ लौकिका अपि दर्शननिरोधे सति "अन्धन्तम इत्यभिभाषन्ते" ॥

"स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत् ॥ ( ऋ० सं० २, ३, १७, १ )" इति ।

अस्य वामीये । त्रायतेः पालनार्थस्यात्र स्त्री–शब्दो निरुच्यते । पालयित्र्यः एवैताः सत्यः कृत्स्नस्य जगतः । एत एव रश्मयो नाडीभिः अध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति, ततः स्थितिरुपजायते, एत एव वर्षप्रदानेन कृत्स्नं जगत् त्रायन्ते, तस्मात् त्राणात् 'स्त्रियः' एताः । 'तान्'—इति नकारान्तं पदम् । 'उ'—इति पदपूरणे एव । तानेवंलक्षणानस्मिन् पालयितॄन् सतः । 'मे' ममेति मन्त्रदृगात्मानं निर्दिशति । ममैतान् 'पुंस आहुः ।' एत एव रश्मयो 'बहुप्रज्ञानाः' इत्येवं ब्रह्मविदः आहुः । एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति जगत्त्रायन्ते । एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः । आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता, तदवयवभूताश्च रश्मयः, ते ह्यन्तर्गता अध्यात्मपुरुषस्य विज्ञानम् उपहरन्ति । अतस्तेषां बहुप्रज्ञानत्वमुपपद्यते ॥ आह—कः पुनरेतान् रश्मीनेवङ्गुणयुक्तान् पश्यतीति ? 'पश्यदक्षण्वान्न विचेतदन्धः" यो हि अक्षण्वान् भवति, दर्शनवान्, विज्ञानवान्, वेदार्थविज्ञानवान्, वेदार्थविज्ञानेनोपजनितप्रज्ञः, स एव ताभ्यां गुणाभ्यां युक्तान् पश्यन्नास्ते नित्यकालं,

१ 'णिनां शरीराण्यन्नप' ॥

नित्ययुक्तत्वात् । इतरस्तु योऽन्धः अध्यानवान्, अश्रुतवेदोपनिषत्कः, स मन्दबुद्धित्वात् न विचेतत् नैतान् याथात्म्यतः पश्यति, न विजानातीत्यर्थः । "यः" पुनः एवम् एतान् याथात्म्यतः पश्यति, "सः" एव 'कविः' क्रान्तदर्शनो भवति, परिनिष्ठितविद्य इत्यर्थः । स च परिनिष्ठितविद्यत्वेनैव 'पुत्रः' पुरुणो बहुनोंऽहसस्त्राता । "यः"चायमेवङ्गुणयुक्तः, "सः" 'ईम् आचिकेत्' । ईम्—इति पदपूरणः । आचिकेत स एवैतानेवम् आभिमुख्येन यथावत् पश्यति, नेतरो मूढः । यश्चैतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः ॥ स हि आधिदैविकम् आत्मानम् अभिसम्पन्नो भवति, न हि तस्य पिता नाम कश्चित्, स एव हि सर्वेषां जाननं पिता भवतीत्यभिप्रायः । एवमेतस्मिन् मन्त्रे य एवाक्षण्वान् भवति, स एव पश्यतीत्यस्य सन्निधौ न विजानात्यन्धः इत्यंध्र-शब्दप्रयोगात् अदर्शनलक्षणं तमः अन्धं-शब्देनोच्यत इत्युपपद्यते ॥ ५ । १ । ५ ॥*

## असंश्चन्ती ॥ ७ ॥

**"असंश्चन्ती भूरिधारे पयस्वती ।"**

**असज्यमाने इति वा । अव्युदस्यन्त्याविति वा ।**

**बहुधारे उदकवत्यौ ॥ १ ॥**

"असश्चन्ती (७)"—इत्यनवगतम् । "असज्यमाने इति वा"—इत्यर्थप्रतीतिः, "अव्युदस्यन्त्याविति वा"—इति ।

"असंश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते ।
राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥ ( ऋ० सं० ५, १, १४, २ )" इति ॥

भरद्वाजस्येयमार्षम् । अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निविद्धानीये सूक्ते शस्यते ॥ "असश्चन्ती" असज्यमाने असंश्लिष्यमाणे परस्परतः, एते द्यावापृथिव्यौ । "भूरिधारे" बहूदकप्रक्षरणस्वभावे एव, अथवा—बहु भूतं धारयित्र्यौ । "पयस्वती" "उदकवत्यौ"। 'घृतम्' उदकम्, द्वे अप्येते 'दुहाते' प्रपूरयेते' इतरेतरसम्भोगेन । 'सुकृते' शोभनकृते, अथवा—शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ । 'शुचिव्रते' शुक्लकर्मणी इत्यर्थः । 'राजन्ती' दीप्यमाने स्वैःस्वैः तेजोभिः ।

---

१ 'याथार्थ्यम्' ॥ २-३ 'अन्धः' इति सकारान्तपाठश्चिन्त्यः प्रथमाविसर्गस्य प्रातिपदिकावयवत्वाभावात् ॥ 'अन्धतमः' इत्युक्तत्वादकारान्त एवायमर्शआद्यजन्तः ॥ अन्नवाचि तु सान्तं क्लीबमेव ॥ * अत्रैव प्रथमखण्डसमाप्तिरवगन्तव्या ॥

'अस्य' 'भुवनस्य' भूतजातस्य 'रोदसी' रोधसी, रोधयित्र्यौ । ये एते एवंलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्मभ्यं 'रेतः'उदकं 'सिञ्चतम्' अभिमते काले । किंलक्षणं पुनः सिञ्चतम्? 'यत्' 'मनुर्हितम्' मनुष्यहितम्, अक्षारं, सस्यसम्पत्करमित्यभिप्रायः । एवमेतस्मिन् मन्त्रे "भूरिधारे"—इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्ती"—इति द्यावापृथिवीविशेषणमुपपद्यते ॥

"असज्यमाने इति" न हि ते सज्येते परस्परतः ॥ "अभ्युदस्यन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्यस्यन्त्यौ वा, न हि ते उपक्षीयेते विपर्यस्येते वेति ॥ ५ । २ । १ ॥

वनुष्यति ॥ ८ ॥

वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति ।

"वनुयाम वनुष्युतः" इत्यपि निगमो भवति ।

"दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ।"

दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियम् ।

पापः पाताऽपेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् ॥ २ ॥

"वनुष्यति ( ८ )"—इति "हन्तिकर्मा" हन्त्यर्थे वर्त्तमानः, "अनवगतसंस्कारो भवति" ।

"यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतः ।
वनुयाम वनुष्यतो नभन्तामन्यके समे ॥( ऋ० सं० ६,३,२५,१ )"—इति ॥

नाभाकस्यार्षम् । महाव्रते महदुक्थे शस्यते । अस्याः पुनरष्टाक्षराः षट् पादाः । छन्दसां पुनरनुक्रमण्यां शौनकेन "अग्निमस्तोषि" इत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि, तेषामपीयं मध्ये ॥ हे 'इन्द्राग्नी !' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च ते उभयेऽपि 'विह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया । 'तना' सन्ततया 'गिरा' वाचा, अथवा—तना धनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते ।

तदा युवाम् 'अस्माकेभिः' अस्मदीयैः 'नृभिः' मनुष्यैः संहितौ भूयास्तम् ते 'वयं' युवाभ्यां सहिताः'सासह्याम'पुनःपुनरभिभवेम। कान्? य एते'पृतन्यतः'पृतनामस्माभिः सह कर्तुम् इच्छन्ति, तानभिभवेम। किञ्च, "वनुयाम वनुष्यतः" ये च एतेषाम् अस्माभिः सह संयत्ता एव सम्प्रहारीभूता वनुष्यन्त्यस्मान् घ्नन्त्येव, एनांश्च वनुष्यतः वनुयामो वयं हन्म इत्यर्थः। कथं पुनर्हन्म? उच्यते–यथा,–'नभन्तामन्यके समे' मा भूवन्नन्यके सर्वे युवयोरनुग्रहाद्धन्म इत्यभिप्रायः। एवमेतस्मिन् मन्त्रे "सासह्याम पृतन्यतः"–इत्येतस्मिन् संग्रामाधिकारे वनुष्यतेर्हन्त्यर्थत्वमुपपद्यते॥ न हि संग्राममेत्य हननादन्यत् कर्त्तव्यमस्ति, यत् क्रियते॥

"इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम्।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः॥ (ऋ० सं० ५, ६, २, १)"–इति॥

वसिष्ठस्येयमार्षम्। जगती। तार्त्तीयसवनिकीये मैत्रावरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'युवम्' युवामित्यर्थः। 'अध्वराय नः' यज्ञाय अस्माकं 'विशे' 'जनाय' सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय 'महि' महत्, 'शर्म' सुखं 'यच्छतम्' दत्तमित्यर्थः। "दीर्घप्रयज्युं" "दीर्घप्रततयज्ञं" नित्ययायजूकम्, अग्निहोत्रिणम् "अति यो वनुष्यति" "अभि जिघांसति" यो निहन्तुमिच्छति। किं तस्य? इत्युच्यते–"वयं जयेम" "पृतनासु" संग्रामेषु "दूढ्यः" "दुर्धियं" "पापधियं", पापया धिया हि दीर्घप्रततयज्ञमभिजिघांसति। एवमत्रापि प्रकरणात् "वनुष्यति" हन्त्यर्थः। अल्पप्रयोगविषयत्वाद् भाष्यकारेण निगमद्वयं पठितम्॥

व्याख्यानप्रसक्तमुच्यते,–"पापः पाताऽपेयानाम्" अपेयान्यलेह्यानि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः। "पापत्यमानः" पुनःपुनः पात्यमानः, तेनैव पापेन कर्मणा। "अवाङेव" नरकमेव प्रति "पतति" असौ, तस्मात् "वा" पापः॥५।२।२॥

## तरुष्यति ॥९॥

### तरुष्यतिरप्येवङ्कर्मा।

### "इन्द्रेण युजा तरुषेम वृत्रम्" इत्यपि निगमो भवति॥ ३॥

"तरुष्यतिः (९), अप्येवङ्कर्मा" हन्तिकर्मेत्यर्थः।

---

१ 'संहितौ'॥ २ 'संपन्ना ए'॥ ३ 'ऽभिहन्तुमि'॥ ४ "दुर्धियः" पापधियः, पापया धिया हि दीर्घप्रततयज्ञोऽभिजिघांस्यते–इत्यन्यत्र पाठान्तरम्॥

"ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवन्तु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम् ॥ (ऋ० सं० ५, ४, १५, २)"—इति ॥

वसिष्ठस्येयमार्षम् । त्रिष्टुप् । अविवाक्ये तृतीयसवने, वैश्वदेवे शस्त्रे, आर्भवे सूक्ते निविद्धानीये शस्यते ॥ हेशत्रवः ! 'ऋभुः'ऋभवः उरुभासो वयम्,उरुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि वः स्याम' अभिभवेम युष्मान् वयम् । हे 'विभ्वः !' 'विभुभिः' प्रभूतबलैः युष्माभिः सहिताः 'शवसा' स्वेन बलेन, एतेषामभिभवितॄणां 'शवांसि' बलान्यभिभवेम । किञ्च, 'वाजः' अश्वाः 'अस्मान्' 'अवन्तु, रक्षन्तु । कस्मिन् ? 'वाजसातौ' संग्रामे, "इन्द्रेण" च "युजा" संयुक्ताः सन्तो वयं "तरुषेम" हन्मैनं "वृत्रं" शत्रुमित्यर्थः । अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ उपपद्यते ॥ ५ । २ । ३ ॥

## भन्दनाः ॥ १० ॥

**भन्दना भन्दतेः स्तुतिकर्मणः ।**
**"पुरुप्रियो भन्दते धामभिः कविः" इत्यपि निगमो भवति ॥**
**"स भन्दना उदियर्त्ति प्रजावतीः" इति च ॥ ४ ॥**

"भन्दना (१०), भन्दतेः स्तुतिकर्मणः" स्तुत्यर्थे वर्त्तमानस्य ।

"पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥ (ऋ० सं० २, ८, २० ४)"—इति ॥

विश्वामित्रस्येयमार्षम् । पृष्ठयस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते ॥ 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगतः, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते । 'वयुनञ्च' प्रज्ञानमयमेव । 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निः विशिष्टं यज्ञसाधनमित्येवं मन्यन्ते । योऽयमेवंलक्षणोऽग्निः 'आविवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' पार्थिववैद्युतादिवहुरूपत्वेन, तमेवंगुणयुक्तमग्निं "पुरुप्रियः" बहुकामप्रियः स्तोता, "भन्दते" स्तौति, "धामभिः" नामभिः अनेकैः प्रकारैः, "कविः" क्रान्तदर्शन इत्यर्थः । पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतेः कुर्यात् ? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य ॥

"स भ॒न्दना॒ उदि॑यर्त्ति प्र॒जाव॑तीर्वि॒श्वायु॒र्विश्वाः॑ सु॒भरा॒ अह॑र्दिवि ।
ब्रह्म॑ प्र॒जाव॑द्र॒यिमश्व॑पस्त्यं पी॒त इ॑न्द॒विन्द्र॑म॒स्मभ्यं॑ याचतात् ॥ ( ऋ० सं ७, ३, २०, १ )"—इति ॥

मौमोऽत्रिः, तस्येयमार्षम्¹ । जगती । "प्र त॒ आश्व॑: पवमान धी॒जव॒:"—इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमो पावमानसौमी² । यदि मम याज्ञं कर्मोपनमेत्तत्सुनुयामहमेतं सोमं तत्रेति, य एवं नित्यकालमाशास्ते "सः" एष साम्प्रतमस्मिन्स्तोमकर्मणि उपनते³ हे सोम ! तव "भन्दनाः" स्तुतीः "उदियर्ति" उदीरयति । "प्रजावतीः" प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः । 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः, सर्वतो वा विश्वायुः । 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बद्धाः स्तुतीः, नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ह्युक्तम् । 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः । 'अहर्दिवि' अहनि च रात्रौ च, रात्रिपर्यायाभिप्रायेण नित्यकालमेवेत्यभिप्रायः । कं पुनरर्थमुपेत्य स्तुतीरुदीरयति ? 'ब्रह्म प्रजावत्' अन्नं प्रजासंयुक्तं भोक्तृसहितम् । अपि च 'रयिम्' धनं गोहिरण्यादि । 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम् । 'पीतः' त्वमस्माभिरस्मिन् कर्मणि । हे 'इन्दो' सोम ! 'इन्द्रम्' अस्मदर्थं 'याचतात्' याचस्वेत्यर्थः । एतमर्थमभिप्रेत्य स्तुतीरुदीरयति । "भन्दना उदियर्त्ति" इत्युदीरणसम्बन्धात् स्तुतय एताः "भन्दना"—शब्देनोच्यन्त इत्युपपद्यते । पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पु॒रु॒प्रि॒यो भन्द॑ते॒ धाम॑भिः (पृ० ३५४ पं० १३)", इति—इदं तु नामरूपसम्बद्धम्, "स भ॒न्दना॒ उदि॑यर्त्ति प्र॒जाव॑तीः"—इति च । उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च ॥ ५ । २ । ४ ॥

## आ॒ह॒नः ॥ ११ ॥

"अ॒न्येन॑ मदा॑हनो याहि॒ तूय॑म्" । आहन इति सकारान्तम्।

अन्येन मदहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यात् ॥ ५ ॥

"आहनः (११)"—इत्येतत् पदं सम्बोधनमनवगतम्, अप्रतयिमानार्थत्वात् । "आहंसि"—इत्यर्थप्रतीतिः ॥

---

१ 'वासिष्ठो मृडीको नाम अस्यस्तस्येयमार्षम्' ॥ २ 'पावमानी सौ ॥ ३ उपनीते' ॥

"न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति।

अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥ (ऋ० सं० ७, ६, ७, ३,)"—इति ॥

यमस्य यम्याश्च संवादसूक्तम्, तत्र यमस्येयमार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति,—हे यमि! मा मंस्थाः साम्प्रतं रहो वर्त्तत इति, किंतु, 'न तिष्ठन्ति' मुहूर्त्तमपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त इत्यभिप्रायः। के पुनस्ते? इत्युच्यते—'एते देवानां' स्वभूताः, 'ये' 'इह' एतस्मिन् लोके 'स्पशः' स्पाशयितारः, कृताकृतानां कर्मणां चिह्नयितारः। 'ग्रहानध्वर्युः स्पाशयेत' इत्यत्रापि स्पाशयतिश्चिह्नार्थः श्रूयते ॥ के पुनस्ते? इति। उच्यते—अहश्च, रात्रिश्च, उभे च सन्ध्ये, सूर्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च—इत्येवमादयः, न ह्येतेषां किञ्चिदविदितं परोक्षमस्ति—इत्यभिप्रायः। अतो ब्रवीमि,—"अन्येन" अन्यकुलजेन केनचित् पुरुषेण, "मत्" मत्तः, त्वं हे "आहनः!" मैथुनं "याहि" "तूयं" "क्षिप्रम्"। "आहंसि इव" असभ्यमेतत् "भाषमाणा" त्वम्, नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किं पुनः कर्तुम्? तस्मान्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'विवह' अभ्युद्यच्छस्व आत्मानं मैथुनकर्माणि। 'रथ्येव चक्रा' रथचक्रे इव, यथैकमक्षं रथचक्रे द्वे अभ्युद्यच्छतः, एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसा अक्षेणैवोभे अपि शरीरे, त्वं च तस्य कामिनः सक्तम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति, न मया सार्द्धमेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मां शक्ष्यसे कम्पयितुमित्यभिप्रायः। एवमेतस्मिन् मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य "आहनः"—इत्येतद् यमीविषयं संबोधनम्। आहन्यत इव हि स यमस्तयाऽनेन दुर्वचनेन। तस्मात् सैव सम्बोध्यते आहनः! इति "एतस्मात्" एव कारणात् "आहनः स्यात्" योऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्यते, स आहन्यत इव असभ्यत्वात् तस्य ॥ "अयज्ञियो वै पुरुषोऽमेध्य आहनः स्याज्जायत इति विज्ञायते" ॥ ५।२।५॥

## नदः ॥ १२ ॥

ऋषिर्नदो भवति नदतेः स्तुतिकर्मणः ॥

"नदस्य मा रुधतः काम आगन् ॥"

नदनस्य मा रुधतः काम आगमत्। संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ ६ ॥ २ ॥

"नदः ( १२ )"—इत्येतदनवगतम् । "ऋषिः नदो भवति"—इति शब्दस्य पर्यायेण तत्त्ववचनम् । "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः । नदिता वा नदतीवेत्यर्थप्रतीतिः ॥

"न॒दस्य॑ मा रुध॒तः काम॒ आग॑न्नि॒त आजा॑तो अ॒मुत॒ः कुत॑श्चित् ।

लो॒पा॑मु॒द्रा वृष॑णं॒ नीरि॑णाति॒ धीर॒मधी॑रा धयति श्व॒सन्त॑म् ॥ ( ऋ० सं० २, ४, २२, ४ )" इति ॥

अगस्त्यलोपामुद्राब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम् । सा अब्रवीदगस्त्यं भर्त्तारमभिप्रेत्य "नदस्य" "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य "रुधतः" संरुद्धवतः इन्द्रियग्रामं "मा" माम् अयं "कामः" "आगन्" आगतवान्, येनाहं साम्प्रतं पीड्ये । सा पुनरेवं न जाने । किम् 'इतः' एव 'आजातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीडनाय, अथवा—'अमुतः' अगस्त्यशरीरात् ? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात् । अतएव "स्मरः"—इति काम उच्यते । तस्माद्वुपपद्यते इतो वास्मच्छरीरात्,—अमुतो वा नदशरीरात्, कुतः ? इति, न जाने इति । अथवा—अन्यत एव 'कुतश्चित्' अयमागतः स्यात् ? इत्येतदपि तत्त्वतो न जाने । इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम् अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति, यदि न ममासावुपरि प्रजननं न्यरोत्स्यत्, ततो नायं कामो मामागमिष्यत्—इत्येवं दोषेण गच्छति । "रिणाति"—इति गतिकर्मसु पठितम् । अथवा-चेतसा नीरिणाति उपगच्छतीत्यर्थः, इष्टपुरुषानुचिन्तनं हि कामार्त्तायाः स्त्रियाः स्वभाव एव । तस्मादेवमप्युपपद्यते । 'धीरं' स्थिरबुद्धिं ब्रह्मचर्यें 'अधीरा' सङ्क्षुब्धसर्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति । 'श्वसन्तं' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्यें कृतबुद्धिं तथापि धयत्येव । "श्वसति, नदति"—इत्येवं गतिकर्मसु पठितम् । एवं लोपामुद्रावाक्ये "नदस्य रुधतो मामागमत् कामः"—इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते । "संरुद्धप्रजननस्य ब्रह्मचारिणः इत्यृषिपुत्र्या विलपितं वेदयन्ते"—इति निदानप्रख्यापनम् ॥ ५ । २ । ६ ॥ *

## सोमो अक्षाः ॥ १३ ॥

"न यस्य॒ द्यावा॑पृथि॒वी न धन्व॒ नान्तरि॑क्षं॒ नाद्र॑यः

सोमो॑ अक्षाः ।"

* अत्रैव द्वितीयखण्डसमाप्तिरवगन्तव्या ॥

**अश्नोतेरित्येवमेके ।**

**"अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।**
**लोपाशः सिंहं प्रत्यञ्चं मत्साः ।"**

**क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके अनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः ॥ १ ॥**

'सोमो अक्षाः (१३)"–इत्येते द्वे पदे। अत्र अक्षा इत्येतत् पदम् अनवगतम्, पक्षेण चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः ॥ कथंनाम "न यस्य द्यावापृथिवी"–इत्येतदेवोदाहरणमत्र उपलक्षितं स्यात्? अत्र हि अक्षा इत्येष शब्दः, सोमशब्देन सम्बद्धः, यथा भूतशब्देन मेषशब्दः–"मेषो भूतोऽभियन्नयः"–(३।१६।५) इत्यत्र, यथा वा–"अग्निर्नये" (३ । १५ । ३)–इत्यत्राग्निशब्दः। अत्र चाश्नोतिपक्षे अक्षा इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादयमनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाने प्राप्ते सति ॥

सोम एवाश्नोते मान्यः॥

"न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि ॥ (ऋ० सं० ८, ४, १५, १)"–इति ॥

रेणुर्नाम विश्वामित्रस्य पुत्रः, तस्येयमार्षम्। ऐन्द्रे सूक्ते सूर्यस्तुन्नाभिकाहः, तत्रेयं निष्कैवल्ये शस्त्रे निविद्धानीये शस्यते ॥ "न यस्य द्यावापृथिवी" न यस्य इन्द्रस्य द्यावापृथिवी द्यावापृथिव्यौ महिमानम् 'अश्नुवाते' व्याप्नुत इत्यर्थः। "न" "धन्व" नोदकम्, तद्धि धन्वत्यन्तरिक्षलोकात्। "न अन्तरिक्षम्" "न" "अद्रयः" पर्वताः अश्नुवन्ति महिमानम्। किं तर्हि? सोम एवाक्षाः महिमानमश्नोतीत्यर्थः ॥ कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमानमश्नोतीति? इतः–'यत् अस्य मन्युः अधिनीयमानः' यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदसामर्थ्यादुपरि शत्रूणां नीयमानः प्राप्यमाणः 'शृणाति'। 'वीळु'। यदपि वीळु दृढं सन्नद्धं शत्रुबलं भवति, तदपि शृणात्येव, हिनस्तीत्यर्थः। 'रुजति' च 'स्थिराणि' अपि दृढानि मेघवृन्दानि भिनत्तीत्यर्थः। एवमेतस्मिन् मन्त्रे व्याप्त्यर्थस्य "अश्नोतेः" अक्षा इत्येष शब्दो निरुच्यते "इत्येवमेके" मन्त्रार्थविदो मन्यन्ते ॥

"अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।

समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ ( ऋ० सं० ७, ५, १३, ४ )"—इति ॥

सप्तर्षीणामार्षम् । बृहती । पावमानी सौमी ॥ "अनूपे" देशे "गोमान्" "गोभिः" सहितो "यदा" "अक्षाः" "क्षियति" निवसति, "अथ" तदा सुयवसत्वात् तस्य देशस्य "सोमो दुग्धाभिः" पुनःपुनः "दुग्धाभ्यः" अपि गोभ्यः "क्षरति" एव ॥ कथं पुनः क्षराति ? इति । उच्यते—'समुद्रं न संवरणानि' समुद्रमिव संवरणान्युदकानि, उदकानि हि देशान्तरात् संवृण्वंति, तानि यथा सर्वेभ्यो देशेभ्यः संसृत्य समुद्रमाभिमुख्येन 'अग्मन्' गच्छन्ति, एवं दुग्धोख्यः सोमः सर्वेभ्यो गात्रेभ्यः संस्रुत्य ऊधः प्रति क्षरति 'मदाय' इन्द्रस्य । अथ यदैवं प्रक्षरति, तदा तेन सोमेनामावास्यायां सान्नायेन तृप्त इन्द्रः 'मन्दी' हर्षशील:, यजमानस्य शत्रून् 'तोशते-हिनस्तीत्यर्थः । "नितोशयति, निवर्हयति"—इति हन्तिकर्मसु पठितम् । एवमेतास्मिन् मन्त्रे "क्षियति-निगमः पूर्वः"—"अनूपे गोमान् गोभिरक्षाः"—इत्येषः "क्षरति—निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र एवम् "एके" मन्त्रार्थविदो मन्यन्ते । तच्च तथैवोपव्याख्यातम् । "सर्वे" एवैते त्रयोऽपि "क्षियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते । न यस्य द्यावापृथिव्यौ निवासः, न धन्व, न अन्तरिक्षं निवासः, किं तर्हि ? सोम एव इन्द्रस्य निवासः । तस्य सोमस्य किम् ? इति । उच्यते—यदस्य मन्युरधि शत्रूणां नीयमानः, शृणाति वीळु रुजति स्थिराणि । समानमन्यत् पूर्वेणैवार्थेन । "अनूपे गोमान्गोभिरक्षाः"—इत्यत्र निवासार्थतैव पूर्वस्मिन्नेवार्थे । अथ सोमो दुग्धास्वपि गोषूधः निवसति, न निर्दुग्धाः कर्तुं शक्यन्ते इत्यभिप्रायः । एवमेते सर्वे त्रयोऽपि "क्षियतिनिगमाः"—इति "शाकपूणिः" आचार्यो मन्यते ॥ ५ । ३ । १ ॥

## श्वात्रम् ॥ १४ ॥

श्वात्रमिति क्षिप्रनामाशु अतनं भवति ।

"स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ।"

स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत्क्षिप्रमग्निरकरो-ज्जातवेदाः ॥ २ ॥

---

१ 'दुग्धाभ्यः' ॥

"श्वात्रम् ( १४ )"-इत्येतदनवगतम् । "आशु अतनं भवति"-इति शब्दसमाधिः । "क्षिप्रनाम"-इत्यभिधेयवचनम् ॥

"यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येनावृणानाः ।

स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ ( ऋ० सं० ८,४,१०,४ )"-इति ॥

इयं हविष्पाङ्क्तीये सूक्ते । तत्रेयमेवैका जगती । तत् पुनर्मूर्द्धन्वताङ्गिरसेन दृष्टम्, वामदेव्येन वा । पृष्ठ्यस्य पञ्चमेऽहनि अग्निमारुते शस्त्रे निविद्धानीयं तद्भवति ॥ 'यः' अग्निः 'होतासीत्' आह्वाता देवानाम्, 'प्रथमः' प्रधानः मनुष्यहोतुः सकाशात् । 'देवजुष्टः' देवैरासेवितः । 'यं' 'समाञ्जन्' समुक्षितवन्तः । केन ? 'आज्येन' 'आवृणानाः' सेवमानाः, संभजमाना इत्यर्थः । तस्य किम् ? इति । उच्यते-"सः पतत्रीत्वरम्" सोऽग्निः पतत्रिः,-यदेतदितश्चेतश्च पतति, इत्वरञ्च पक्ष्यादि, "स्था", स्थावरञ्च वृक्षादि, "जगत्" "यत्" एतज्जङ्गमगवादि, । तस्य किम् ? इति । उच्यते- "तत्" सर्वं प्रलयकाले "श्वात्रं" "क्षिप्रम्" आत्मसात् "अकृणोत्" "अकरोत्" "जातवेदाः" अग्निः । एवमेतस्मिन् मन्त्रे "श्वात्रमिति" इत्येतत् "क्षिप्रनाम"। पतत्रि-स्थावर-जङ्गमानां क्षिप्रदहनादग्निः किमन्यत् कुर्यात् ? तस्मादुपपद्यते क्षिप्रनामेति ॥ ५ । ३ । २ ॥ + इत्यध्याहृतम् ।

## ऊतिः ॥ १५ ॥

### ऊतिरवनात् ।

### "आ त्वा रथं यथोतये" इत्यपि निगमो भवति ॥ ३ ॥

"ऊतिः ( १५ )"-इत्यनवगतम् । "अवनम्"-इत्यर्थप्रतीतिः । "अवनात्" रक्षणादित्यर्थः ॥

"आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि ।

तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥ ( ऋ० सं० ६; ५, १, १ )"-इति ॥

प्रियमेधस्यार्षम् । मरुत्वतीये शस्त्रे प्रतिपदेष हे इन्द्र ! "त्वा" त्वाम् वयम् 'आवर्त्तयामसि' आवर्त्तयामहे स्तुतिभिः । किमर्थम् ? आत्मनः "ऊतये" अवनाय । रक्षणाय, 'सुम्नाय' सुखाय च । कथं पुनरावर्त्तयामहे ? इति । उच्यते-"रथं यथा" शक्तो हि कश्चिद् यथा रथमावर्त्तयेत्, एवमावर्त्तयामहे वयं त्वां स्तुतिभिः । किंलक्षणं पुनर्भवन्तमावर्त्तयामहे ? उच्यते-'तुविकूर्मिम्' बहूनामनेकप्रकाराणां कर्मणां कर्त्तारम् । 'ऋतीषहम्' च, आर्त्तानामभिभवितारम् । हे "इन्द्र !" 'शविष्ठ' बलिष्ठ ! 'सत्पते'



ऋतीर्दुःखम् ।

सतां पते ! एवमावर्त्तनेनैकवाक्याभिसम्बन्धेन "ऊति"—शब्दो रक्षणार्थ इत्युपपद्यते ॥ ५ । ३ । ३ ॥

## हासमाने ॥ १६ ॥

**हासमाने इत्युपरिष्टाद्व्याख्यास्यामः ॥ ४ ॥**

"हासमाने ( १६ )"—"इति" एतत्पदम् "उपरिष्टाद् व्याख्यास्यामः" "प्रपर्वतानामुशती उपस्थात्"—इत्यत्र ॥ ५ । ३ । ४ ॥

## पुड्भिः ॥ १७ ॥

**"वम्रकः पड्भिरुपसर्पदिन्द्रम् ॥"**

**पानैरिति वा स्पाशनैरिति वा ( स्पशनैरिति वा ) ॥ ५ ॥**

"पड्भिः ( १७ )"—इत्यनवगतम् । "पानैरिति वा स्पाशनैरिति वा"—इति शब्दसमाधी ॥

"एवा महो असुर वक्षथाय वम्रकः पड्भिरुपसर्पदिन्द्रम् ।
स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥ ( ऋ० सं० ८, ५, १५, ६ )" इति ॥

वम्रो नाम वैखानसः, तस्येयमार्षम् । ऐन्द्री । य एषः एतस्मिन् सूक्ते स्तुतिप्रकारोऽधिकृतः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान ! हे इन्द्र ! 'असुर' असुमन् ! प्रज्ञानवन् ! बलवन् ! वा । 'वक्षथाय' स्तुतिवक्त्रे, महते यजमानाय, पूर्वकल्पान्तरीणाय, पूर्वकल्पान्तरीण एव "वम्रकः" "पड्भिः"सोमपानैरभ्युद्यतैः, अथवा—गुणस्पाशनैः स्तुतिगतैः, "उपसर्पत्" उपसृप्तवान्, अन्यकल्पान्तरीणम् "इन्द्रम्" । 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्त्रियमाणः 'करति' कृतवान् । किम् ? 'स्वस्तिम्' स्वस्त्ययनम् । 'अस्मै' यजमानाय । यतो ब्रवीमि,—साम्प्रतमहमेतास्मिन् कल्पे वम्रकः, त्वञ्चेन्द्रः, ता एवैताः स्तुतयः, याभिरहमुपासर्पं साम्प्रतं भवन्तम्, स त्वमेवं विज्ञाय, अस्मै वर्त्तमानाय यजमानाय स्वमधिकारं जानानः, कुरु स्वस्त्ययनम् । किञ्च, 'इषमूर्जम्' अ इषम् अन्नं व्रीहियवादि, ऊर्जम् क्षीरादि, 'सुक्षिति' च, शोभननिवासञ्च । 'विश्वम्' एतत् सर्वम् 'आभाः' आभिमुख्येनास्मै यजमानाय भावयस्व ॥ एवमेतास्मिन्मन्त्रे शब्दसारूप्यात् प्रकारणाच्च "पड्भिः"—इत्येतत् पानाभिधानं स्पाशनाभिधानं वेत्युपपद्यते ॥ ५ । ३ । ५ ॥

## सुसम् ॥ १८ ॥

"सुसं न पुक्कमविदच्छुचन्तम् ॥"

स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तदिवाविदज्ज्वल्यमानम् ॥ ६ ॥

"ससम्" (१८)"–इत्यनवगतम् । "स्वपनम्"–इत्यवगमः ।

"प्रमातुः प्रतरं गुह्यमिच्छन्कुमारो न वीरुधः उपसर्पदुर्वीः ।

सुसं न पुक्कमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ (ऋ० सं० ८, ३, १४, ३)"–इति ॥

अग्नेर्वैश्वानरस्य, अग्नेर्वा सूचीकस्य, सप्तेर्वा जम्भरस्य इयमार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । 'प्रमातुः प्रतरं गुह्यम्' प्रकर्षेण गततरं गह्वरं, मातुः सर्वनिर्मातुः भूमेः, अग्निः 'वीरुधः' दग्धुम् 'उपसर्पत्' उपासर्पत् 'उर्वीः' ऊर्णुवत्यः, प्रच्छाद्य भूमेर्निर्झरप्रदेशम्, तस्मिन् निर्झरप्रदेशे वर्त्तमानाः, तत्र हि ताः सुविवृद्धाश्च भवन्ति । कथं पुनरुपासर्पत् ? इति । उच्यते–प्रमातुः प्रतरं गुह्यम् 'इच्छन् कुमारो न' स्तनपानाय मातुः यथा कुमारः, प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशम्, स्तनपानम् इच्छन् उपसर्पेत्, एवं योऽग्निः बह्वोषधिके भूमेर्निर्झरप्रदेशे कुमार इव मातुः स्तनपानाय स्तनप्रदेशमिवोपासर्पत् । तत्रैव च निर्झरप्रदेशे 'रिरिह्वांसं' पुनःपुनरास्वादयमानम्, ओषधीः 'रिपः' अस्या एव भूमेः 'उपस्थे' उपस्थाने, निर्जरे निर्झरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्झर एवोपस्थो भूमेः । तस्य एव 'अन्तः' मध्ये इत्यर्थः । तस्मिन्नेवंलक्षणे प्रदेशे, तमग्निम् "अविदत्" कश्चित् ऋषिः अन्यो वा । ओषधीरास्वादयन्तम् ॥ कथं पुनरविदत् ? इति । उच्यते–"ससं न पक्कम्" अविदत्, यथैव स्वपनशीलं "माध्यमिकं ज्योतिः" वैद्युताख्यं पक्कमभिव्यक्तम्, वर्षासु उपर्यवस्थानादयत्नेनैव दृश्यते, एवं निर्झरान्तःप्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविदद्देवापश्यत् । "शुचन्तं" दीप्यमानमित्यर्थः । निर्झरेऽन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्झरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः । य एवंगुणयुक्तोऽग्निः स इदं नाम करोतु–इत्येवमाशीर्योज्या । तद्यदष्टौ मासान् माध्यमिकं ज्योतिर्न दृश्यते, ततः "अनित्यदर्शनम्" तस्मादनित्यदर्शनात् "स्वपनम्"–इत्युच्यते, पक्कं नामाभिव्यक्तमित्युच्यते ॥ एवमिह शब्दसारूप्यात् अर्थोपपत्तेश्च "ससम्"–इत्यनेन शब्देन स्वपनमुच्यत इत्युपपद्यते ॥ ५ । ३ । ६ ॥

---

१ 'न ह्यष्टौ मासान्माध्यमिकं ज्योतिर्दृश्यते' ॥

## द्विता ॥ १९ ॥

"द्विता च सत्ता स्वधया च शम्भुः ॥"

द्वैधं सत्ता मध्यमे च स्थान उत्तमे च । शम्भुः सुखभूः ॥ ७ ॥

"द्विता (१९)"—इत्यनवगतम् । "द्वैधम्"—इत्यवगमः ॥ सदेस्त्र

"यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शम्भुः ।
तस्यानुधर्म प्रयजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥ (ऋ० सं० ३, १, १७, ५)"—इति ॥

ऋतस्य वैश्वामित्रस्येयमार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ हे भगवन् ! 'अग्ने !' पृथिवीस्थान ! 'त्वत्' त्वत्तः, 'यः' 'पूर्वः' 'होता' मध्यमस्थानो वायुः, असावपि हि दूतो देवानामिति श्रूयते,—"आ दूतो अग्निमभरद् विवस्वतः"—इति वैद्युतोऽग्निरिति केचिन्मन्यन्ते । 'यजीयान्' यष्टृतरः । "द्विता च सत्ता" "द्वैधं" च यस्य विद्यमानता,—"मध्यमे च स्थाने" वैद्युतभावेन, "उत्तमे च" स्थाने सूर्यभावेन । "स्वधया च" अन्नेन, सर्वभूतानां वर्षणद्वारेण । यः 'शम्भुः' "सुखभूः" सुखस्य भावयिता । तस्य किम् ? इति । उच्यते—'तस्य अनुधर्म' तस्य वायोर्वृत्तिलाभमन्वात्मनो दीप्तिलक्षणां वृत्तिमतिलाभमाप्नुवन्,[1] "वायुर्वा अग्नेस्तेजः, तस्माद् वायुरग्निमन्वेति—इति ह विज्ञायते" । हे अग्ने ! 'प्रयज' प्रकर्षेण यज, देवान् । हे 'चिकित्वः' चिकित्वन् ! ज्ञानवन्नित्यर्थः । 'अथ' एवम्, 'नः' अस्माकं यागं कुर्वन्, त्वं[3] शृणु, यत् कुरुष्व । 'धा अध्वरं' धारय यज्ञम् । 'देववीतौ' देवतर्पणायेत्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "द्विता"—इत्ययं द्वैधमित्येवमुपपद्यते ॥ ५ । ३ । ७ ॥

## व्राः ॥ २० ॥

"मृगं न व्रा मृगयन्ते ॥"

मृगमिव व्रात्याः प्रैषाः ॥ ८ ॥ ३ ॥ व्रात्यो लुब्धकः।

"व्राः (२०)"—इति, अनवगतम् । "व्रात्याः"—इत्यवगमः ॥

"गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयन्ते ।
अभित्सरन्ति धेनुभिः ॥ (ऋ० सं० ५, ७, १८, १)"—इति ॥

---

१ 'मपि' ॥ २ 'त्तिं प्रति' ॥ ३ 'त्वं शृणु, यत्कुरु' ॥

काण्वश्च मेधातिथिः, प्रियमेधश्चाङ्गिरसः, ऐन्द्रं सूक्तं ददृशतुः । तत्रैषाभिप्लवस्य षडहस्य द्वितीयेऽहनि मरुत्वतीये शस्त्रे अनुचरतृचे शस्यते । हे भगवन्निन्द्र ! 'यद् ईम्' यद्यपि त्वाम् 'अन्ये' यजमानाः 'गोभिः' वाग्भिः स्तुतिलक्षणाभिः, 'धेनुभिः' च तर्पयित्रीभिराहुतिभिः 'अभित्सरन्ति' अभिगच्छन्ति, अभिव्याप्नुवन्ति, तथाप्यस्मानेव प्रत्यभ्येहि । किं कारणम् ? इतः—यस्मादेतेऽस्माभिरतिरिक्तया भक्त्यान्येभ्यो यजमानेभ्यः सकाशात् "व्रा" "व्रात्याः" "प्रैषाः" युष्मत्संस्तवसंयुक्ताः त्वां प्रति प्रहिताः 'मृगं न' "मृगमिव" इतरे लुब्धकाः व्रात्याः "मृगयन्ते" मार्गयन्ते त्वाम्, तस्माद् भक्त्यतिरेकात् विशेषहेतोरस्मानेव प्रत्यभ्येहि ॥ एवमेतस्मिन्मन्त्रे मृगसम्बन्धात् "व्राः"—इति शब्देन लुब्धका उच्यन्ते इत्युपपत्तिः ॥ ५ । ३ । ८ ॥*

## व॒रा॒हः ॥ २१ ॥

वराहो मेघो भवति वराहारः "वरमाहारमाहार्षीः" इति च ब्राह्मणम् ।

"विध्य॑द्व॒रा॒हं ति॒रो अद्रि॒मस्ता॑" इत्यपि निगमो भवति ।

अयमपीतरो वराह एतस्मादेव । बृहति मूलानि वरं वरं मूलं बृहतीति वा ॥

"व॒रा॒हमि॑न्द्र ए॒मु॒षम्" इत्यपि निगमो भवति ॥ १ ॥

"वराहः (२१)"—इत्येतदनवगतमनेकार्थं च । "मेघः" तावद् "वराहः" उच्यते, स हि "वराहारो भवति" तस्य हि वरमुदकमाहारः । "वरमाहारमाहार्षीः इति च ब्राह्मणम्" निर्वचनस्य दृढप्रतीत्यर्थं ब्राह्मणमाचार्येण प्रदर्शितम् । यथा मेघो वराहशब्देनोच्यते, तथैष निगमः,—

"अ॒स्येदु॑ मा॒तुः सव॑नेषु स॒द्यो म॒हः पि॒तुं प॑पि॒वाञ्चार्वन्ना॑ ।
मु॒षा॒यद्विष्णुः॑ पच॒तं सही॑या॒न्विध्य॑द्व॒रा॒हं ति॒रो अद्रि॒मस्ता॑ ॥ (ऋ० सं० १, ४, २८, २)" इति ॥

नोधा नाम गोतमपुत्रस्तस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । अभिजिद्विश्वजिन्महाव्रतादिषु आहीनिकेषु अहःसु अहीनसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ॥ 'अस्य इत् उ मातुः' अस्य जगन्निर्मातुः यज्ञस्य 'सवनेषु' प्रातःसवनमाध्यन्दिनसव-

---

१ 'अ' ॥ * अत्रैव तृतीयखण्डसमाप्तिरवगन्तव्या ॥

नतृतीयसवनेषु, 'महः' महतः यज्ञस्य, 'पितुं' महान्तं सोमभागं 'पपिवान्' पीतवान् । पीत्वा 'चार्वन्ना' चारूणि च शोभनान्यन्नानि, अन्यान्यपि हवींषि भक्षयित्वा, तैर्हविर्भिः, तेन च सोमेन विवृद्धवलः, 'सद्यः' एव 'पचतम्' परिपक्कमुदकदानसमर्थं मेघं हि 'विष्णुः' इन्द्रः, सर्वभूतानां वेवेष्टा प्राणभावेन 'मुषायत्' अमुष्णादित्यर्थः । 'सहीयान्' अभिभवितृतमः । कथं पुनरमुष्णात्? इति । उच्यते—"विध्यद्वराहं तिरो अद्रिमस्ता" । वराहं मेघं विध्यत् । कथं पुनः विध्यद्वराहं? इति । उच्यते—तिरः अद्रिम् अस्ता दूरे एवावस्थितस्य अद्रिं वज्रम् अस्ता क्षेप्तेत्यर्थः । एवमेतस्मिन् मुषायच्छब्दसम्बन्धात् "वराहः मेघः"—इत्युपपत्तिः ॥

"अयमपीतरो वराह एतस्मादेव" असौ अपि हि वरं मूलाख्यमाहारमाहरत्येव । "वरं वरं मूलं बृहति"—उद्यच्छतीत्यर्थः ॥

यथा अयमपीतरो वराहशब्दः छन्दसि वराह इत्युच्यते, तथैष निगमः—

"विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ॥ (ऋ० सं० ६, ५, ३०, ४)"—इति ॥

काण्वस्य कुरुसुतेरार्षम् । ऐन्द्री । 'विश्वा इत् ता' विश्वानि एव तानि 'विष्णुः आभरत्' । 'उरुक्रमः' बहुविक्रान्तः, 'त्वेषितः' सन्दीपितः इन्द्रवाक्येन । [दुर्गो द्वा त्वा आहर्ता इति अवोचथाः—एतदाहरेति । अनेन त्वा इषित इति पदविभागः ] यदि त्वा, इषितः—इति पदविभागः, तथापि तु त्वेषितः—इत्येकं पदं कृत्वैव निरुक्तम् । परोक्षकृतत्वान्मन्त्रस्य, नान्यथार्थं उपपद्यते । कानि पुनस्तानि वसूनि आहरत्? इति । उच्यते—'शतं महिषान्' बहून् महतो यज्ञान् आहरत् । किंलक्षणान्? इति । उच्यते—'क्षीरपाकम् ओदनम्' प्रायणीयाख्यमादितः, कृत्वा ये क्रियन्ते तान्, सोमक्रतूनित्यभिप्रायः । कुतः पुनराहरत्? इति । उच्यते—"वराहम्" असुरम्, वराहरूपेणावस्थितम् । सर्वेषामसुराणां मध्ये "एमुषम्" मोहस्थानीयम् ॥

"मायया यमिन्द्रो जघान, तस्य मध्यादाहरत्, यदयं वराहमिन्द्र एमुषमेकविंशत्याः पुरां पार इत्युच्यते"—इति ॥

एवं ब्राह्मणं मैत्रायणीयके, तदनुवादिनी चैषा ऋक् । तस्मादत्र वराहशब्देन वराह एवोच्यत इत्युपपद्यते ॥ ५ । ४ । १ ॥

---

१ 'रात् एव स्थित' ॥ २ 'पुरुसु' ॥ ३ 'इन्द्रो वाक्येन' ॥ ४ अयं कोष्ठकान्तर्गतः पाठः पुस्तकान्तर उपलब्धः, तत्रापि—तृतीयपुस्तके—'दुर्गो द्वा आहर्तावोचथा एतमाहेति । अने' इत्येवमशुद्धंपाठांतरं दृश्यते ॥

## अङ्गिरसोऽपि वराहा उच्यन्ते ।

## "ब्रह्मणस्पतिर्वृषभिर्वराहैः" ॥ २ ॥

"अङ्गिरसोऽपि वराहा उच्यन्ते" ।

"स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं विधनसैरदर्दः ।

ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ( ऋ० सं० ८, २, ३६, १ )"—इति ॥

अयास्यस्याङ्गिरसस्येयमार्षम् । ब्राह्मणस्पत्यस्य काम्यस्यापशोः षडर्चे विनियुक्ता मैत्रावरुणीयके ॥ 'सः' "ब्रह्मणस्पतिः" 'सत्येभिः' सत्यवादिभिः, 'सखिभिः' समानख्यानैः, 'शुचद्भिः', दीप्तिमद्भिः, 'विधनसैः' विविधधनवद्भिः "वृषभिः" वर्षद्भिः वर्षितृभिः, "वराहैः" 'घर्मस्वेदिभिः' घर्मतापयितृभिः, प्रवर्ग्यकर्मणि । अथवा-यज्ञस्वेदिभिः, यज्ञस्वादयितृभिः, यज्ञसद्भिर्वा । एवङ्गुणविशिष्टैरङ्गिरोभिः सहितो ब्रह्मणस्पतिः 'गोधायसं' गोः वाचः धायितारम्, अपां वा, मेघम् । 'अदर्दः' अदारयदिति विपरिणामः परोक्षकृतत्वान्मन्त्रस्य । दारयित्वा च 'द्रविणम्' उदकं 'व्यानट्' व्याप्नोतीत्यर्थः । एतस्यामृचि अङ्गिरसां विशेषलिङ्गं नास्ति वराहशब्दवाच्यत्वे, सूक्ते तु एतस्मिन्नङ्गिरसो लिङ्गमस्तीत्यर्थः—।

"ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः ।

विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त ॥ ( ऋ० सं० ८, २, ३५, २ )"—इति ॥

'ऋतं शंसन्तः' ऋतं सत्यं वा यज्ञं वा शंसन्तः, अपि च 'ऋजु' अकुटिलम् अजिह्मम् नित्यकालमेव 'दीध्यानाः' ध्यायमानाः, सर्वभूतानामुपरि समचेतस इत्यभिप्रायः । 'दिवस्पुत्रासः' द्योतनवतः अग्नेः 'असुरस्य' प्रज्ञावतः पुत्राः, 'वीराः' विविधानामर्थानां वक्तार ईरयितारो वा, मेधावित्वात् । 'विप्रं पदं' विप्राप्तं सर्वतः प्राप्तम् 'अङ्गिरसो दधानाः' । यत्पदं स्थानं ज्ञानसहितस्य कर्मणः परा फलकाष्ठा, तामङ्गिरसो दधानाः धारयन्तः चेतसा, विवृद्धप्रज्ञत्वात् । "यज्ञस्य धाम प्रथमं मनन्त" यज्ञस्य यत् प्रथमं मुख्यं परमात्माख्यमनावृत्तिलक्षणं धाम स्थानं तत्त्वेन मनन्त जानत इत्यर्थः ॥ एतदेवैतस्यामृचि अङ्गिरोलिङ्गं दृष्ट्वा एष निगमो भाष्यकारेणोदाहृतः,—"अङ्गिरसोऽपि वराहा उच्यन्ते"—इति ॥ ५ । ४ । २ ॥

---

१ 'अतिका' ॥

अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते।

"पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून्" ॥ ३ ॥

"अथापि एते माध्यमका देवगणा वराहव उच्यन्ते" "मरुतः, रुद्राः" (निघण्टु ५।५।८)—इत्येवमादयः आङ्गिरसो ह्यृषिसमाख्यामपि लभन्ते, तस्मान्माध्यमकत्वेऽपि सति पृथगुद्धृत्योक्ताः। यथा तावन्मरुतो वराहशब्देनोच्यन्ते, तत्रैष निगमः,—

"एतत्त्यन्न योजनमचेति सस्वर्ह्यन्मरुतो गोतमो वः॥

पश्यन् हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥ (ऋ० सं० १, ६, १४, ५)"—इति ॥

राहूगणस्य गोतमस्येयमार्षम् "अविद्युन्मद्भिर्मरुतः"—इतीयञ्चैतस्मिन्नेव सूक्ते ॥ हे 'मरुतः!' 'एतत्' 'त्यत्' बलं यौष्माकीणं 'न योजनमचेति' न योगमागच्छति, विजितारित्वात् भवतां न युज्यते इत्यर्थः। तस्य बलस्य किम्? इति। उच्यते—'सस्वर्ह्यन् मरुतो गोतमो वः'। अन्तर्हितं यत् सर्वेषां मनुष्याणाम्। यस्य च मध्ये युष्मान् "वराहून्" परेषां शत्रूणां उद्बर्हितॄन्, उद्बर्हणान्, "हिरण्यचक्रान्" सुवर्णविकृतचक्रान्, "अयोदंष्ट्रान्" अयोमयान् रथानाधिरूढान् "विधावतः" वि नानाप्रकारं धावतः, "पश्यन्" स्तौति, 'गौतमः'। तदेतन्न योजनमचेति। अचेतिर्गत्यर्थः, अञ्चतेर्गत्यर्थस्य सारूप्यात्। एवमत्र प्रकरणे मरुतो वराहव उच्यन्ते इत्युपपत्तिः। मरुदादयो हि सर्व एव माध्यमका देवगणा वराहव उच्यन्ते। तेषां शाखान्तरेषु मृग्या निगमाः। निगमानुपलब्धौ च "माध्यमका देवगणा वराहव उच्यन्ते"—एतद् बहुवचनं मरुत्स्वेव योज्यम्, तेषां सप्तसप्तका गणा ब्राह्मणे हि श्रूयन्ते—"ते सप्तसप्त मरुतां गणाः"—इति, तस्मादेवमप्युपपद्यत एव बहुवचनं भाष्यकारस्य ॥ एकदेवताविषयोऽपि कदाचिद् वराहशब्दो भवत्येव, तदप्युपेक्षितव्यम्। तद्यथा,—"दिवो वराहमरुषं कपर्दिनम्॥ (ऋ० सं० १, ८, ५, ५,)"—इति रुद्र उक्तः ॥ ५।४।३ ॥

स्वसंराणि ॥ २२ ॥

स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा ॥

स्वरादित्यो भवति स एनानि सारयति ॥ तर्हि स्वयं सारीणीत्युक्तिर्व्यर्थम् (?)

"उस्रा इव स्वसंराणि" इत्यपि निगमो भवति ॥ ४ ॥

"स्वसराणि (२२)"—इत्येतदनवगतम् । "स्वयं सारीणि"—इत्यवगमः ॥ "अहानि"—इत्यभिधेयवचनम् । तानि हि स्वयमेव सरन्ति गच्छन्ति इति "स्वसराणि" ॥ "अपि वा स्वर् आदित्यो भवति" । अत्र उच्यते—"स एतानि सारयति" गमयति तेनैतानि स्वसराणीत्युच्यन्ते ॥

"विश्वेदेवासो अप्तुरः सुतमागन्त तूर्णयः । अप्तुर इत्यनेन तूर्णय इति गतार्थम् ।
उस्रा इव स्वसराणि ॥ ऋ० सं० १, १, ६, २)"—इति ॥

मधुच्छन्दस इयमार्षम् । अग्निष्टोमे प्रउगे शस्त्रे गायत्रे तृचे वैश्वदेवे शस्यते । हे 'विश्वेदेवासः !' 'अप्तुरः' कर्म प्रति त्वरमाणाः, ते हि याज्ञिकं कर्म प्रत्यागन्तुं त्वरन्ते । अत एवमामन्त्र्यते 'सुतम् आगन्त' अस्माभिः सुतं अभिषुतमेतं सोमं प्रति आगन्त आगच्छत हे 'तूर्णयः' त्वरणशीलाः ! । कथं पुनरागच्छत ? "उस्रा इव स्वसराणि" यथा उस्राः रश्मयः, स्वसराणि अहानि प्रति शीघ्रमागच्छन्ति, एवमागच्छत ॥ एवमस्मिन् रश्मिसम्बन्धात् "स्वसराण्यहानि" इत्युपपद्यते ॥५।४।४॥

## शर्याः ॥ २३ ॥

शर्या अंगुलयो भवंति [ सृजन्ति कर्माणि ] ॥
शर्या इषवः शरमय्यः ॥
शरः शृणातेः ॥
"शर्याभिर्न भरमाणो गभस्त्योः"
इत्यपि निगमो भवति ॥ ५ ॥

"शर्याः" (२३)"—इत्यनवगतम् । "शरमय्यः"—इत्यवगमः । "इषवः"—अभिधेयाः ॥

"शरः, शृणातेः" हिंसार्थस्य (क्रया० प०), हिंस्यन्ते हि तेन ॥

"अभ्यर्षसि हि श्रवसा ततर्दिथोत्सं न कञ्चिज्जनपानमक्षितम् ॥
शर्याभिर्न भरमाणो गभस्त्योः ॥ (ऋ० सं० ७, ५, २२, ५)"—इति ॥

त्र्यरुणः त्रसदस्युश्च "पर्यूषु प्रधन्व वाजसातये"—इति पावमानं सौम्यं सूक्तं ददृशतुः । पिपीलिकमध्यास्तिस्रोऽनुष्टुभः षडूर्ध्वबृहत्यः, तासामियं द्वितीया ।

१ अयं पाठो लिखितपुस्तके नोपलभ्यते । २ अत्र हि लिखितपुस्तके—तस्यान्ते विराजस्तिस्रः, तासामियं द्वितीया' इत्येतावन्मात्र एव पाठ उपलभ्यते ।

'अभिः' ततर्दिथ' एतं सोमं हे अभिषोतारः ! पुनःपुनरभिहतेत्यर्थः । 'श्रवसा'श्रवणीयेन मन्त्रेण ॥ कथं पुनरभिततर्दिथ ? इति—'शर्याभिः न भरमाणः' शरमयीभिः इषुभिः यथा कश्चित् कंचिद् अभितर्दयेत् धनुर्धारयमाणः, एवमेतं सोमम् एभिः ग्रावभिः 'गभस्त्योः' बाह्वोरवस्थितैरभिततर्दिथ यूयम् । किञ्च, एवमेतं सोमम् अभितर्दयन्तो यूयं वसतीवरीभिरद्भिराप्याय्य 'उत्सं न कञ्चित्' कूपमि कञ्चित् 'जनपानं' महतो जनौघस्य पानार्हम् 'अक्षितम्' अक्षीणं कुरुत, मह देवजनौघस्य पानार्हं प्रभूतं कुरुतेत्यभिप्रायः ॥ एवमिहाभितर्दनक्रियासम्बन्धात् "शर्या"—शब्देन इषव उच्यन्त इत्युपपद्यते ॥ ५ । ४ । ५ ॥

## अर्कः ॥ २४ ॥

अर्को देवो भवति यदेनमर्चति ।
अर्को मन्त्रो भवति यदनेनार्चन्ति ।
अर्कमन्नं भवत्यर्चति भूतानि ।
अर्को वृक्षो भवति संवृत्तः कटुकिम्ना—॥

"अर्कः ( २४ )"—इत्यनेकार्थम् । "देवः" तावत् सर्व एवार्क इत्युच्यते । आह—किं कारणम् ? इति । उच्यते—"यत्" यस्मात् "एनम्" देवम् "अर्चन्ति" स्तोतारः ॥

"अर्को मन्त्रो भवति" । किं कारणं ? "यत्" यस्मात् "अनेन" मन्त्रेण "अर्चन्ति" स्तोतारः तस्मादर्कः ॥

"अर्कमन्नं भवति" । किं कारणम् ? तद्धि "अर्चति भूतानि" यो हि पूज्यः, तस्यान्नमपि संस्कारविशेषेण संस्कृतं पूजायां क्रियते, पूज्यं च सर्वस्यैवान्नम् ॥

"अर्को वृक्षो भवति" य एष प्रसिद्धः । आह—किं कारणम् ? इति । उच्यते—"संवृत्तः" हि सङ्गतः, संव्याप्तः, "कटुकिम्ना" कटुकभावेन भवति—॥

"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥"

गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रतो उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वा ॥ ६ ॥ ४ ॥

---

१ 'भिन्नतेत्य' ।

यथा तावद्देवोऽर्कशब्देन उच्यते, तथैष निगमः,–

"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। (१।१०।१)

ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ (ऋ० सं० १, १, १९, १)"–इति ॥

मधुच्छन्दस आर्षम्। अनुष्टुप्। ऐन्द्री। हे भगवन्निन्द्र! "गायन्ति त्वा गायत्रिणः" स्तुवन्ति त्वां सामगाः, सामभिः। "अर्चन्त्यर्कमर्किणः" पूजयन्ति त्वाम् ऋग्भिः होतारो मन्त्रिणः। एवमनेन प्रकारेण सर्वे एते "ब्राह्मणाः" याज्ञे कर्मणि हे "शतक्रतो!" "उद्वंशमिव येमिरे" "उद्येमिरे" "वंशमिव" त्वां स्तुतिभिः हविर्भिश्च, यज्ञेषु तवैव महिमानं वर्द्धयन्तीत्यर्थः॥ "वंशो वनशयो भवति" वने शयित इवास्ते, "वननाच्छ्रूयत इति वा" सम्भजनाद् वा वह्निभिः॥ एवमत्र देवः "अर्क"– शब्देनोच्यते॥

मन्त्रस्यार्कशब्दवाच्यत्वे "अर्चन्त्यर्कमर्किणः"–इत्येष एव निगमः, अर्किणो हि मान्त्रिण एवाभिप्रेताः॥

वृक्षस्तु[1] प्रसिद्ध एव, तेन निगमस्तदभिधायको नैवास्ति ॥ ५।४।६॥ *

## पविः ॥ २५ ॥

**पवी रथनेमिर्भवति यद्विपुनाति भूमिम्।**

**"उत पव्या रथानामद्रिं भिन्दन्त्योजसा"।**

**"तं मरुतः क्षुरपविना व्ययुः" इत्यपि निगमौ भवतः॥ १॥**

"पविः (२५)"–इत्यनवगतम्। "रथनेमिर्भवति"–इत्यभिधेयवचनम्। "यद् विपुनाति भूमिम्" सा हि विपुनाति भूमिमिति पविः॥

"उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः॥

उत पव्या रथानामाद्रिं भिन्दन्त्योजसा ॥ (ऋ० सं० ४, ३, ९, ४)"–इति॥

श्यावाश्वस्येयमार्षम्। हे मरुतः! येषां वः तिरोभवितुमाविर्भवितुं च काले शक्तिरस्ति, 'ते' यूयम् 'उत स्म' अपि च कस्मिंश्चित् काले 'शुन्ध्यवः' मद्वात्र इव 'परुष्ण्यां' नद्यां, माध्यमिकायां वाचि पर्ववत्यां यूयमेव शुन्ध्यवः शोधयितारः[2] 'ऊर्णाः' च्छिन्नाः[3], तिरोहिताः 'वसत' वसथ एतस्मिन्नन्तरिक्षलोके। "उत" अपि च, कस्मिंश्चिदभ्युद्गमनकाले प्राप्ते युष्माकं "रथानां पव्याः" या रथनेमयः, ता एव[4] "अद्रिम्" मेघं "भिन्दन्ति" "ओजसा" बलेन, किमुत यूयमित्य-

---

१ वृक्षस्तु–अर्काख्यो वृक्षस्तु–इत्यर्थः॥ * अत्र चतुर्थखण्डसमाप्तिरवगन्तव्या॥

२ 'शोभयि'॥ ३ 'छिन्नाः'॥ ४ 'एवम्' इति मुद्रितमासीत्, तत्प्रामादिकम्॥

भिप्रायः ॥ एवमेतस्मिन्नर्थसंयोगात्पविशब्देन रथचक्रनेमिरभिसम्बध्यते । ब्राह्मणमपि चैतस्मिन्नेवार्थे चातुर्मास्येषु सान्तपनं हविरधिकृत्य—"देवा वै वृत्रस्य मर्म नाविदन्—तं मरुतः क्षुरपविना व्ययुः सं वा एनं तदतपंस्तस्मात्सान्तपनाः"—इति । एतस्मिन्नपि च ब्राह्मणे चक्रनेमिः क्षुरधाराकृतिस्तीक्ष्णपाविरित्युच्यते, तस्मादुपपद्यते अल्पप्रयोगविषयत्वादुदाहरणद्वयम् ॥ ५ । ५ । १ ॥

## वक्षः ॥ २६ ॥

**वक्षो व्याख्यातम् ॥ २ ॥**

"वक्षः ( २६ )"—इति, "व्याख्यातम्" । "उपो अदर्शि शुन्ध्युवः"—इत्यत्र ॥ ५ । ५ । २ ॥

## धन्व ॥ २७ ॥

**धन्वान्तारिक्षं धन्वन्त्यस्मादापः ।**

**"तिरो धन्वाति रोचते" इत्यपि निगमो भवति ॥ ३ ॥**

"धन्व ( २७ )" इत्यनवगतम् । "धन्वन्ति"—इत्यवगमः । "अन्तरिक्षम्"—इत्यभिधेयवचनम् । "धन्वन्त्यस्मादापः"—इति नामप्राप्तौ हेतुनिर्देशः—॥

"यः परस्याः परावतस्तिरो धन्वाति रोचते ।

स नः पर्षदति द्विषः ॥ ( ऋ० सं० ८, ८, ४५, २ )"—इति ॥

अग्निपुत्रस्य वत्सस्येयमार्षम् । व्यूढस्य दशरात्रस्य नवमेऽहन्याग्निमारुतस्य शस्त्रस्य जातवेदस्ये सूक्ते निविद्धानीये शस्यते। 'यः' अग्निरादित्यात्मनावस्थितः 'परस्याः परावतः' परस्यामपि परावति वर्त्तमानः, "तिरः" तीर्णतममेतन्महदन्तरिक्षं "धन्व" स्वेन प्रभावेन दीप्त्या "अति" अतीत्य, अस्मान् प्रति "रोचते" एव, प्रकाशत एव । नानेनैवमतिमहता तिरोधीयत इत्यभिप्रायः । तस्य किम् ? इति । उच्यते—'स नः' सोऽस्माकं 'पर्षत्' 'अति' सर्वतः सादयतु नाशयतु 'द्विषः' द्वेष्टॄन् इत्यर्थः ॥ एवमास्मिन्नादित्यस्तुतिसम्बन्धात् "धन्व" शब्दोऽन्तरिक्षाभिधानमित्युपपद्यते ॥ ५ । ५ । ३ ॥

## सिनम् ॥ २८ ॥

**सिनमन्नं भवति सिनाति भूतानि ।**

**"येन स्मा सिनं भरथः सखिभ्यः" इत्यपि निगमो भवति॥ ४ ॥**

---

१ 'अनेनैवमतिमहतापि तिरोधी' ॥

"सिनम् ( २८ )"—इत्यनवगतम् । "सिनाति"—इति शब्दयुक्तिः । "अन्नं भवति"—इत्यभिधेयवचनम् । "सिनाति भूतानि" बध्नातीत्यर्थः, अन्नेन हि सर्वाणि भूतानि बध्यन्ते ॥

"इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ।
क्व१ त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः ॥ ( ऋ० सं० ३, ४, ९, १ )"—इति ॥

विश्वामित्रस्येयमार्षम् । तार्तीये सवनेषु उक्थपर्यायेषु स्तोमाभिशंसने मैत्रावरुणस्य शस्त्रे विनियुक्ता ॥ हे 'इन्द्रावरुणौ !' 'इमा उ वाम्' इमा एव युवयोः 'भृमयः' स्तुतयः यायास्तैस्तैः स्तोतृभिरुदीरिताः युवामेव मार्गमाणा भ्रमन्तीव ता एता यथापूर्वमेव अस्माकम् अभिमतफलदायिन्यो भविष्यन्तीति 'मन्यमानाः' वयमुदीरयामहे, ताः पुनरेता अस्मै 'युवावते' युष्मद्वते, भवद्भ्यां तद्वते यजमानाय 'न' यथापूर्वं 'तुज्या' दानायाभिमतानामर्थानाम् 'अभूवन्' बभूवुः । यतो ब्रवीमि,—हे इन्द्रावरुणौ ! 'क्व त्यत्' क्व तत् युवयोः 'यशः' माहाभाग्यं गतम् ? "येन" माहाभाग्येनैताभिः स्तुतिभिः अभिष्टुतौ सन्तौ "सिनम्" अन्नं "भरथः" धत्थः । सुपूज्यं वा कुरुथः "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः ॥ अन्नमेव हि प्रायेण यजमानैः प्रार्थ्यत इति "सिन"—शब्देनात्रान्नमभिधीयत इत्युपपत्तिः । व्यभिचारित्वादभिधानानां "धन्व" "सिनम्"—इत्यादीनि स्वेस्वेऽभिधानवर्गे पठितान्यपि सन्ति नैघण्टुके प्रकरणे, समाम्नातान्येतास्मिन्नैकपदिके प्रकरणेऽनवगतसंस्काराभिप्रायेण, कानिचिदनेकार्थाभिप्रायेण ॥५।५।४॥

## इत्था ॥ २९ ॥

### इत्थाऽमुथेत्येतेन व्याख्यातम् ॥ ५ ॥

"इत्था ( २९ )"—इत्येष निपातः, "अमुथा"—"इत्येतेन व्याख्यातम्" तृतीयेऽध्याये ( ३ । १६ । ८ ) ॥ ५ । ५ । ५ ॥

## सचा ॥ ३० ॥

### सचा सहेत्यर्थः ।

### "वसुभिः सचा भुवा ।" वसुभिः सह भुवौ ॥ ६ ॥

"सचा ( ३० )"—इत्यप्रतीतार्थो निपातः । "सह"—इत्यर्थप्रतीतिः ॥

"अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचा भुवा ।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥ (ऋ० सं० ६; ३, १४, १ )"—इति ॥

श्यावाश्वस्यात्रेयस्येयमार्षम् । त्रिष्टुप्, उपरिष्टात् ज्योतिष्मती॥ हे 'अश्विनौ !' एताभिः अग्न्याद्याभिः देवताभिः "सचा भुवौ" सहिता भूत्वा, 'सजोषसौ च' सहप्रीतौ, इमं 'सोमं' 'पिबतम्' युवाम् । पीत्वा चैतं नामास्माकमर्थमभिप्रेतं कुरुतमित्येवमाद्यायोज्या ॥ एवमिहाग्न्यादिदेवताभिः सम्बन्धात् "सचा" इत्येष सहयोगे भवतीत्येतदुपपद्यते ॥ ५ । ५ । ६ ॥

## चित् ॥ ३१ ॥

चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातः ।
अथापि पशुनामेह भवत्युदात्तः ।
"चिदसि मनासि धीरसि"
चितास्त्वयि भोगाश्चेतयस इति वा ॥ ७ ॥

"चित् ( ३१ )"—"इति" एष "निपातः" "अनुदात्तः"। तद्यथा,—"सद्यश्चिद्यः शवसा पञ्च कृष्टीः ( ऋ० सं ८, ८, ३६, ३ )"—इति ॥ स "पुरस्तादेव व्याख्यातः" "चिदित्येषोऽनेककर्मा ( १ । ४ । ८ )"—इत्यत्र ॥

"अथापि" अयमेव "उदात्तः" आद्युदात्तो भवति, ततः "पशुनाम भवति", तद्यथा,—"चिदसि मनासि धीरसि"—इति राजक्रयणीगोस्तुतौ । सैवोच्यते,—"चिदसि मनासि"—इति । अतः पुनरेतद् ब्राह्मणे व्याख्यायते,—"चिदसीति यद्वाव विचिकित्सते"—इत्येवमादि आध्वर्यवे ॥ ५ । ५ । ७ ॥

## आ ॥ ३२ ॥

आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः ।
अथाप्यध्यर्थे दृश्यते ।
"अभ्र आँ अपः ।" अभ्रे आ अपोऽपोऽभ्रेऽधीति ॥ ८ ॥

"आ ( ३२ )"—"इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः"—"आ इत्यर्वागर्थे" ( १ । ३ । ७ । )—इति ॥ "अथाप्युपमार्थे दृश्यते" निपातत्वेन "जार आ भगम्" ( ३ । १६ । ४ )—इति ॥

१ 'तामिसंव' ॥

"अथापि" अयमेव कदाचित् "अध्यर्थे दृश्यते"—"अधीत्युपरिभावमैश्वर्ये वा" (१।३।२१)—इति।यथायमध्यर्थेऽपि भवति, तथा "अभ्र आँ अपः"—इत्येष निगमः ॥

"कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् ।
आमेन्यस्य रजसो यदभ्र आ अपो वृणाना वितनोति मायिनी ॥ (ऋ० सं० ४, ३, २, १)"—इति ॥

अधुना पदविभागमस्य भाष्यकारः करोति, उपसर्गविभागोपप्रदर्शनार्थम्,—"अभ्रे, आँ अपः"—इति । अधुना "आङ्" इत्यस्यार्थं ब्रवीति,—"आपोऽभ्रेऽधीति" यदुक्तं स्यात्तदेवोक्तं भवति ; अभ्र आँ अपः—इति । प्रतिभानोरात्रेयस्येयमार्षम् । वैश्वदेवस्य प्रथमैव । जगती । अत्र पुनः प्रायेणाप एव स्तूयन्ते । "आपो वै विश्वेदेवाः, सर्वा एव वा देवताः"—इत्यनेन ब्राह्मणदर्शनेनापां विश्वेदेवत्वमुपपद्यते । तत् पुनः सूक्तम् अभिप्लवस्य षडहस्यं पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे शस्यते । "कदु प्रियाय धाम्ने मनामहे" कत् उ प्रियाय सुखाय प्रियाय च धाम्ने स्थानाय वैश्वदेवाय, तत्प्राप्त्यर्थम् । तानेव च विश्वान् देवान् अपः 'मनामहे' त एव ह्युपास्यमानाः तत् स्थानं प्रापयितुं समर्था इत्यर्थं मनामहे । स्थानविशेषणान्येवोत्तराण्यपि स्वक्षत्रादीनि ॥ 'स्वक्षत्राय' च धाम्ने स्वबलायेत्यर्थः । यत्र स्वमेव बलं भवति, न तत्र परकीयं बलमाशास्यते, यथेह लोके । 'स्वयशसे' यत्र स्वमहिमकृतमेव यशो भवति, न सांयौगिकद्रव्यकृतम् । 'महे' महते धाम्ने । तत्प्राप्त्यर्थमेव ता एवापः 'वयं' मनामहे, मत्वा चोपास्महे इत्यभिप्रायः ॥ 'आमेन्यस्य' मेना माध्यमिका वाक्, सा यत्र, तस्य 'रजसः' रजोलोकः, अन्तरिक्षलोक इत्यर्थः, तस्य 'आँ' उपरि । 'यत् अभ्रे' यो मेघः, तत्र या आपः अवस्थिताः, ताः 'अपः' । 'वृणाना' सम्भजमाना 'वितनोति' विस्तृणाति वर्षभावेन । 'मायिनी' प्रज्ञावती, माध्यमिका वाक् । ताः अपो वयम् एवमादिगुणयुक्ताः, तासामेव सर्वगतस्य धाम्नः प्राप्त्यर्थं मनामहे याचामहे ॥ अभ्रे एव हि अधि आपः वर्त्तन्ते इति आङ् अध्यर्थे इत्युपपद्यते ॥

अथवैवमन्यथास्य मन्त्रस्यार्थः स्यात्,—'कदुप्रियाय' सुखाय प्रियाय चैतस्मै 'धाम्ने' स्थानाय, यत्र वयं वर्त्तामहे । कथं नामैतत् स्थानं सुखं च प्रियं च स्वक्षत्रञ्च स्वमहत्त्वञ्च स्यादित्येवमर्थं विश्वान् देवान् मनामहे । "मदेमहि, मनामहे"—इति याच्ञाकर्मसु पठितम् । कतमाः पुनरपो याचामहे ? इति । उच्यते—'आमेन्यस्य रजसः' आभिमुख्येन मननीयस्य रजसोऽन्तरिक्षलोकस्य यदभ्रमुपरि वर्त्तते, तस्मिन्नभ्रे 'अपः' 'वृणाना' सम्भजमाना 'मायिनी' माध्यमिका वाक् 'वितनोति' वृष्टिभावेन, ताः 'मनामहे' याचामहे ॥ ५ । ५ । ८ ॥

---

१ 'तस्या यत् रजः लोकः अन्तरि' ॥

## द्युम्नम् ॥ ३३ ॥

द्युम्नं द्योततेर्यशो वा अन्नं वा। "अस्मे द्युम्नमधि रत्नं च धेहि।" अस्मासु द्युम्नं च रत्नं च धेहि ॥ ९ ॥ ५ ॥

"द्युम्नम् ( ३३ )"–इत्यनेकार्थम् । "यशो वा अन्नं वा"–इत्यभिधेयवचनम् ॥

"शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।

जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥ ( ऋ० सं० ५, ३, ९, ३ )"–इति ॥

वसिष्ठस्येयमार्षम् । त्रिष्टुबेव । महाव्रते महदुक्थे दक्षिणे पक्षे शस्यते । हे 'शिप्रिन्!' इन्द्र ! 'शतं' 'ते' तव 'ऊतयः' आगमनानि सन्तु । क्व ? 'सुदासे' सुदाने कल्याणदाने, एतस्मिन् यजमाने, तथैनमनुगृहाण, यथा नित्ययोज्येवायं यजमानः स्यादित्यभिप्रायः । आगतस्य च सतः तव 'सहस्रं शंसाः' बहूनि स्तोत्राणि सन्तु 'उत रातिः अस्तु' अपि च हविर्दत्तिरस्त्वित्येतदेवानुवर्त्तते । एवञ्च त्वमागत उपसन्नः सन् शृणु, यत् कुरुष्व । हे 'वधः' वधयितः ! 'वनुषः मर्त्यस्य' योऽस्मान् हन्तुमिच्छति मर्त्यो मनुष्यः, तस्य यद् वीर्यम्, तत् 'जहि' हत्वा च तस्य वीर्यम्, निरुद्यमं कृत्वा "अस्मे" अस्मासु "द्युम्नम्" अन्नं यशो वा 'महि' महत् "रत्नं च" "धेहि" निधेहि देहीत्यर्थः । 'रत्नं' च धनम् । एवमेतस्मिन्, मन्त्रे शत्रुवधसम्बन्धात् द्युम्नशब्देन यशो वा अन्नं वा उच्यत इत्युपपत्तिः, हते हि शत्रौ यशोऽन्नं च भवतीति ॥

"द्युम्नं[2] द्योततेः"–इति, अन्नमेव हि भुञ्जानस्य दीप्तिर्भवतीति । द्युम्नम् अन्नं द्योतयितृ च यशस्तु दीप्तं प्रकाशस्वभावत्वादिति ॥ ५ । ५ । ९ ॥ *

## पवित्रम् ॥ ३४ ॥

पवित्रं पुनातेः । मन्त्रः पवित्रमुच्यते ॥

"येन देवाः पवित्रेणात्मानं पुनते सदा" इत्यपि निगमो भवति[1] ॥

"पवित्रम् ( ३४ )"–इत्यनेकार्थम् । "पुनातेः"–इति धातुनिर्देशो निर्वचनाभिप्रायः । "मन्त्रः पवित्रमुच्यते"–इत्याभिधेयवचनम् ॥

---

१ 'नित्ययज्वैवा' ॥ २ अयं "द्युम्नं द्योततेः"–इत्यारभ्य–"स्वभावत्वादिति"–इत्यन्तः पाठः–"यशो वान्नं वा"इत्यभिधेयवचनम्–इत्यस्मादग्रेऽपेक्षितः॥ * अत्रैव पञ्चमखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ पञ्चमा [ दशमा ] ध्यायस्य प्रथमः पादः ॥ ५, १ ॥" इति तूपलभ्यते ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
"येन देवाः पवित्रेणात्मानं पुनते सदा ।
१ २ ३ १ २ ३ १ २
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥ ( सा० सं० उ० आ० ५, २, ८, ५ )"—इति ॥

मन्त्रस्य पवित्रत्वप्रख्यापको निगमः । पवित्रस्य वसिष्ठसहितस्य वा आर्षम्[1] । पावमानी सौमी । "येन" "पवित्रेण" पावयित्रा मन्त्रेण "देवाः" ऋत्विग्यजमानाः "आत्मानं" "पुनते" "सदा" सततमेव । प्रस्तुते कर्मणि यस्य मन्त्रस्य तत् सामर्थ्यम्, 'तेन' मन्त्रेणैवं वीर्यवता 'सहस्रधारेण' बहुप्रक्षरेण प्रविरलेन[2] 'पवमानः' पूयमानः, सोमो मां पुनातु ॥ मन्त्रेणैवं देवा ऋत्विग्यजमाना आत्मानं पुनन्ति । तस्मादुपपद्यते तेषां देवत्वमिति । न हि इतरेषां देवानां पापमस्ति, यत् पूयेत । "न ह वै देवान् पापं गच्छति—इति ह विज्ञायते" । तस्माद्देवशब्देनात्र ऋत्विग्यजमाना उच्यन्ते । ते हि हविषां दातारः, याचनेन च अर्थिनः तस्मादुपपद्यते तेषां देवत्वम् ॥ ५ । ६ । १ ॥

## रश्मयः पवित्रमुच्यन्ते ।
## "गभस्तिपूतः", "गभस्तिपूतो नृभिरद्रिभिः सुतः"
## इत्यपि निगमौ भवतः ॥ २ ॥

"रश्मयः पवित्रमुच्यन्ते"—ते हि स्पर्शनेनैव पावयन्ति ।

"वाचस्पतये पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः ।
देवो देवेभ्यः पवस्व येषां भागोऽसि"—इति ॥

एषा उपांशुग्रहग्रहणे विनियुक्ता । हे सोम ! वाचस्पतिरिन्द्रः, त्वां पास्यतीत्येतमर्थं पुरस्कृत्य 'वृष्णः' वर्षितुः, अग्नौ प्रास्ताहुत्या वृष्टिं कर्तुरादित्यस्य चार्थे 'पवस्व' पूयस्व, यावेतावंशू अन्तर्हितौ सन्तौ सकलयज्ञं व्याप्नुवानौ निषिच्यमानस्यैव ताभ्यां 'अंशुभ्यां' 'पवस्व' अपि च त्वं प्रागप्यभिषवात् "गभस्तिपूतः" एव रश्मिपूतः । किञ्च, 'देवः' त्वं दानादिगुणयुक्तः । देवानामेव दानादिगुणयुक्तानां पवित्रमसि पावयितासि । किं सर्वेषामेव ? नेत्युच्यते,—'येषां भागोऽसि' ये त्वामभिषवादिक्रियया भजंते ऋत्विग्यजमानाः, ते ह्यत्र देवत्वेनाभिप्रेताः पावनसम्बन्धात्, न हीतरेषां देवानां पापमस्ति पूर्ववत्किञ्चित् ॥ केचित्तु—

"पवमान महार्णो विधावसि सूरो न चित्रो अव्ययानि पव्यया ।
गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि ॥ ( ऋ० सं० ७, ३, १८, ४ )"—इति ॥

---

१ 'नियमः' ॥ २ 'विप्रचलेन' ॥ ३ 'एव दे' ॥ ४ 'पावनेन' ॥

एतं मन्त्रं व्याचक्षते । ऋषिगणैरकृष्टमायादिभिर्व्यस्तैः समस्तैश्च त्रिभिः "प्र त आशवः"—इत्येतस्याष्टाचत्वारिंशदृचस्य सूक्तस्य चत्वारिंशतामृचां दशदशर्चो दृष्टाः, तत्रैषा चतुस्त्रिंशत्तमी । हे 'पवमान' पूयमान ! सोम ! 'अव्ययानि' 'पव्यया' पविमयेन, और्णेन पवित्रेण पूयमानः, त्वम् 'महि' महत् 'अर्णः' उदकम्, उदकत्वेनाभिसम्पन्नः, तत्स्वभावमुपगतः, निर्ऋजीषः, स्वच्छो भूत्वा ततो द्रोणकलशं प्रति 'विधावसि' । कीदृशः पुनः पूर्वं भूत्वा एतां रसावस्थामापद्यसे त्वम् ? इति, उच्यते—पूर्वं तावदरण्येऽवस्थितः, "गभस्तिपूतः" रश्मिपूतः सन् । ततः आहृत्य क्रीत्वा सोमक्रयविक्रयविधानेन, "नृभिः" ऋत्विग्यजमानैः "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः । ततो 'महे' 'वाजाय' अन्नाय 'धन्याय' 'धन्वसि' कृत्स्नं जगद्धारयित्रेऽर्थाय । कथं नाम कृत्स्नजगदुपकारित्वमभिनिष्पद्येत ? वृष्टिनिमित्तेनेत्येतमर्थं पुरस्कृत्य रसभावमापन्नो द्रोणकलशं प्रति धन्वसि प्राप्नोषीत्यर्थः । 'सूरो न चित्रः' सूर्य इव पूजनीयः ॥ एवमत्र "गभस्तिपूतः"—इत्येतस्मात् पावनसम्बन्धाद्रश्मीनां पवित्रत्वमुपपद्यते ॥ केश्चित् "पवित्रवन्तः परि वाचमासते ॥ ( ऋ० सं ७, २, २९, ३ )" इत्येष निगमो विधीयते ॥ ५ । ६ । २ ॥

**आपः पवित्रमुच्यन्ते । "शतपवित्राः स्वधया मदन्तीः" बहूदकाः ॥ ३ ॥**

"आपः पवित्रमुच्यन्ते"—ता अपि हि पावयन्ति ॥

"शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।
ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥ ( ऋ० सं० ५, ४, १४, ३ )"—इति ॥

अब्देवत्या । त्रिष्टुप् । वसिष्ठस्यार्षम् । "शतपवित्राः" बहुपावयित्र्यः, याः देव्यः, "स्वधया" अन्नेन सहिता भूत्वा "मदन्तीः" 'देवीः' दानादिगुणयुक्ताः, 'देवानां' दानादिगुणयुक्तानामेव 'पाथः' पानं सोमाख्यम् 'अपि यन्ति' अपि गच्छन्ति । ताः, एवंलक्षणा आपः, 'इन्द्रस्य न मिनन्ति' न हिंसन्ति । व्रतानि कर्माणि, येनाभ्रवधानन्तरमविलम्बमाना वर्षभावेन प्रक्षरन्तीत्यभिप्रायः । या एता एवङ्गुणयुक्ता आपः, ताभ्योऽद्भ्यः 'सिन्धुभ्यः' स्पन्दमानाभ्यः 'हव्यं' हविः, 'घृतवत्' घृतमिश्रम् 'जुहोत' हे ऋत्विजः ! अर्हन्ति ता हविरित्यभिप्रायः । एवमत्रापः "पवित्र"—शब्देनोच्यन्ते, अब्दैवतत्वादस्य मन्त्रस्य ॥ ५ । ६ । ३ ॥

---

१ क्वचित्पुस्तके तु—'ऋषिगणैस्त्रिभिर्दशर्चमेतत्सूक्तं दृष्टं तत्रैषा" इत्येवं पाठोऽस्ति ॥ २ 'आत्मत्वेनाभि' ॥ ३ 'सोमस्तूपविक' ॥ ४ 'पवमानसम' ॥

अग्निः पवित्रमुच्यते वायुः पवित्रमुच्यते सोमः पवित्र-मुच्यते सूर्य्यः पवित्रमुच्यते इन्द्रः पवित्रमुच्यते। "अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु" इत्य पिनिगमो भवति ॥ ४ ॥

अग्न्यादयोऽपि ह्येते पवित्रशब्देनोच्यन्ते, तेऽपि हि सर्वं एव पावयन्ति ॥
"अग्निः पवित्रं स मा पुनातु, वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु ॥"
"इत्यपि निगमो भवति"। निगद [ प्र ] सिद्ध एवैष निगमः ॥ ५ । ६ । ४ ॥

तोदः ॥ ३९ ॥

तोदस्तुद्यतेः ॥

"तोदः ( ३९ )"—इत्यनवगतम्। "तुदः" इत्यवगमः। "तुद्यतेः" व्यथनार्थस्येति (तु० उ०) धातुनिर्देशः। भूमेर्बिलं तोद इत्युच्यते, तद्धि तुन्नं भवति दीर्णत्वात् ॥ कूप इत्येके ॥ *

"पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा।
तोदस्येव शरण आ महस्य ॥"

बहुदाश्वांस्त्वामेवाभिह्वयामि ॥

अरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरेतस्मादेव। यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद् दृष्ट्वैवमवक्ष्यत् ॥
"तोदस्येव शरण आ महस्य।" तुदस्येव शरणेऽधि महतः ॥ १ ॥

"पुरु त्वा दाश्वान् वोचे० महस्य ( ऋ० सं० २, २, १९, १ )"—ज्ञात।
दीर्घतमस आर्षम्। उष्णिक्। प्रातरनुवाकाश्विनयोः शस्यते। "पुरु त्वा दाश्वान्" बहुदानवान् अहं भूत्वा हे अग्ने! त्वामहं "वोचे" त्वामाह्वयामीत्यर्थः। किं पुनः कारण-

* अत्रैव षष्ठखण्डसमाप्तिर्दृश्यते, सा 'तोद इत्यनवगतम्' इत्यतः प्रागुचिता ॥

मन्या देवता उत्सृज्य त्वामाह्वयामि ? इति, उच्यते—इतः यस्मात् "अरिः अग्ने! तव स्वित् आ"—इत्येतद् विवक्षार्थं सुचिरमपि विचार्य तवाहमरिरेव स्तोमानामुच्चारणे। अर्यः ईश्वर एव, समर्थोऽहमाह्वयामि त्वां स्तोतुं बहु च दातुमित्यभिप्रायः । किं पुनः कारणमन्या देवता उत्सृज्य त्वामेवाभिह्वयामि ? इति, उच्यते—इतः,—यस्मात् "तोदस्य इव शरणे आ महस्य"तुन्नस्येव विदीर्णस्य कस्यचिच्छ्वभ्रस्य कूपस्योपरि । आङ् अध्यर्थः महस्य महत इत्यर्थः । शरणे बिले । "शॄ—हिंसायाम् ( क्र्या० प० )," तस्य शरणं बिलम्, तद्विदारितं भवति, यथा हि श्वभ्रे बिले कस्मिंश्चिद् बह्वय आपो गच्छन्ति, न च तस्य श्वभ्रस्य महतो ग्रहणशक्तिपरिहाणं भवति, एवं तवानेकाश्चानेकदेवताश्चाहुतीरस्माभिः प्रदत्ताः प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति, अतो देवतानामस्माकं त्वमेवातिविशिष्टोपकारे प्रवृत्तः, अतः त्वामेवाह्वयामि ॥ एवमत्र शब्दसारूप्यादुपमार्थोपपत्तेश्च "तोद"—शब्दः तुन्नस्य भूप्रदेशस्याभिधायक इत्युपपद्यते । तथा चोक्तम्,—"तोदमध्ये निर्हृत्यार्द्धचतुर्दशशंकुं निखन्यात्"—इति सदसो निर्माणे ॥

स्त्रिया अपि च असत्प्रदेशः तोद इत्युच्यते । तस्मादेतदपि तुन्नस्य भूप्रदेशस्याभिधायकमित्युपपद्यते ॥

"अरिः, अमित्रः, ऋच्छतेः"—इति निगमप्रसक्तम् । ऋच्छतेः हिंसार्थस्य ( भू० प० ) । "ईश्वरोऽप्यरिः एतस्मादेव" धातोः । "यदन्यदेवत्या अग्नावाहुतयो हूयन्ते" यस्मादन्यदेवत्याश्च अन्यदेवताश्चापरिसङ्ख्येया अग्नावाहुतयो हूयन्ते, न चाग्नेस्तासां ग्रहणशक्तिपरिहाणमस्ति, न च ज्ञायते श्वभ्रे बिल इव निषिक्ता आपः क्वापि गच्छन्ति, ता आहुतय इत्येतत् सामान्यं दृष्ट्वैवमवोचन्मन्त्रदृक्,—तोदस्येव शरण आ महस्य—इति, "तुदस्येव शरणेऽधि महतः"—इत्यर्थः ॥ ५ । ७ । १ ॥

## स्वश्वाः ॥ ३६ ॥

## स्वश्वाः सु अश्वनः ॥

## "आजह्वानो घृतपृष्ठः स्वश्वाः" इत्यपि निगमो भवति॥ २॥७॥

"स्वश्वाः ( ३६ )"—इत्यनवगतम् । "सु—अश्वनः"—इत्यवगमः ॥

"सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वश्वाः ॥
तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह ॥ ( ऋ० सं ४, २, ८, १ )"—इति ॥

अत्रेरार्षम् । ऐन्द्री । त्रिष्टुप् ॥ यस्य यजमानस्य नित्ययायजूकत्वात् तेषुतेषु कर्मसु ज्वलितः अग्निः "आजुह्वानः" आहूयमानः, अभिहूयमानो वा, "घृतपृष्ठः" घृताक्त-

पृष्ठः "स्वश्चाः" शोभनगमनः, स्वेन प्रकाशेन 'भानुना' भास्वता सूर्येण 'संयतते' सङ्गच्छते, संस्पर्द्धते वा, सूर्येण अतिदीप्तत्वात् । तस्य यजमानस्य किम् ? इति, उच्यते-'तस्मै' एव 'अमृध्राः' अमृताः, अम्लानाः, 'उषसः' 'व्युच्छान्' विभान्तीत्यर्थः । यस्यैवमभिहूयमानोऽग्निः नित्यकालमेव सूर्येण संयतते, तस्यैव पुण्यकृतः सुप्रभाता रात्रयो भवन्ति-नेतरस्यायज्वन इत्यभिप्रायः । अपि च य एवम् 'आह' ब्रवीति अयज्वापि श्रद्धाद्वितीयो दरिद्रः कश्चित् 'इन्द्राय' इन्द्रार्थं 'सुनवाम' अभिषुणुमः सोमम् 'इति' तस्यापि कल्याणाभिव्याहारिणः सुप्रभाता एवोषसः,-किमुत यः सुनोतीत्यभिप्रायः ॥ एवमस्मिन् "सूर्येण संयतते"-इत्यनेन सम्बन्धात् "स्वश्चाः-सुअश्चनः=स्वश्चनः" अञ्चतेः ( भू० प० )गत्यर्थस्य रूपदर्शनादित्युपपद्यते॥५।७।२॥

## शिपिविष्टः ॥ ३७ ॥ विष्णुः ॥ ३८ ॥

**शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥**

"शिपिविष्टः ( ३७ )", "विष्णुः ( ३८ )"-"इति" एते "विष्णोः" एव "द्वे नामनी भवतः" । अत्र शिपिविष्ट-इत्येतद्गुणपदमनवगतम्, पक्षेण चानेकार्थम् । शिपिविष्टः शेप इव निर्वेष्टित इत्यर्थप्रतीतिः । अस्य सम्बन्धादत्र विष्णु-शब्दः समाम्नातः । यथा "अक्षाः"-इत्यस्य सम्बन्धात् सोम-शब्दः "सोमो अक्षा"-इति । न ह्यत्र प्राधान्येन विष्णु-शब्दः समाम्नातः, देवतापरत्वात् । अनयोर्द्वयोरपि नाम्नोः यत् "पूर्वं" तत् "कुत्सितार्थीयं भवति"-"इति" "औपमन्यवः" आचार्यो मन्यते । यथा च कुत्सितार्थीयं तथोदाहरणार्थमेव निर्ब्रुवन् दर्शयिष्यति ॥ *

**"किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ ॥"**

**किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसाना-**

---

१ 'सता' ॥ २ 'पदत्वा' ॥ * अत्र खण्डसमाप्तिर्दृश्यते । सा 'शिपिविष्टो विष्णुरित्येते' इत्यतः प्रागुचिता ॥

मैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति ।

"मा वर्पो अस्मदप गूह एतत् ।"

वर्ण इति रूपनाम वृणोतीति सतः । यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः ॥ १ ॥ ८ ॥

"किमित् ते विष्णो", "प्रतत्ते अद्य", ( ऋ० सं० ५, ६, २५, ६–५ )–इति वसिष्ठस्यैते आर्षे । विष्णोः शिपिविष्टस्यान्वारम्भणीये चरुः, तस्यैते याज्यानुवाक्ये, वाजपेये च सप्तदशे शस्त्रे शस्येते, सोमातिरेकशस्त्रे च तृतीयसवने च ॥ किंरूपः त्वम् ? इति पृष्टः शिपिविष्टोऽस्मीत्युक्ते अनन्तरं प्रक्रियते,–"किमित् ते विष्णो"–इति ! किमेतदेवैकं विगतरश्मिरूपं 'परिचक्ष्यं' परि [ ख्या ] ख्यापनीयं "भूत्" भवति, नान्यानि रूपाणि तव सन्ति, येनैवं "प्रववक्षे" पुनःपुनर्ब्रूषे अस्माकमग्रतः "शिपिविष्ट-अस्मि"–इति, "शेप इव निर्वेष्टितोऽस्मीति" "अप्रतिपन्नरश्मिः" हि सूर्यः, उदयकाले निर्वेष्टितः शेपस्वरूपो भवति, तस्य तद्रूपगुणयोगित्वमकुत्सितार्थमित्युपपद्यते ॥ "अपि वा" "प्रशंसानामैवाभिप्रेतं स्यात्" प्रशंसायुक्तगुणमेवैतन्नाम स्यात् "शिपिविष्टः"–इति । आह–कथम् ? इति, उच्यते–"शिपयः" "अत्र" अस्मिन् प्रशंसानामपक्षे "रश्मयः उच्यन्ते" । स च सूर्यो मुहूर्त्तोदितः "तैः" शिपिसञ्ज्ञैः बालरश्मिभिः "आविष्टः" "भवति" तस्मात् शिपिविष्टः–इत्युच्यते । एवमेतद् व्युत्पाद्यमानं प्रशंसानामैव भवति, नाश्लीलोपमासम्बद्धमित्यभिप्रायः । हे 'विष्णो !' किमेतदेवैकं रूपं तव परिचक्ष्यं "प्रख्यापनीयम्" अस्ति, यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु नान्यानि रूपाणि प्रख्यापनीयानि सन्ति । "यदुत" एवं "प्रब्रूषे–शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः" प्रतिपन्नमात्रेषु रश्मिष्विति । विजानीमस्त्वेवैतद्रूपद्वयम् । अतो ब्रूमः,– "मा वर्पो अस्मदपगूह एतत्" । मा एतत् वर्पः रूपम् अस्मत् अस्माकमग्रतः प्रख्यापय । किं तर्हि ? अपगूह एतत् संवृतं कुरुष्वैतद् शिपिविष्ट–शब्दवाच्यमुपमेयं रूपम्, अथवा–बालरश्मिसंयुक्तम् । किं तर्हि ? "यदन्यरूपः" येनान्येन रूपेण "समिथे" "संग्रामे" "बभूथ" "भवसि" । "संयतरश्मिः" सम्बद्धानेकरश्मिजालः, तदेव नो माध्यन्दिनं रूपमनेकरश्मिविकत्त्नं प्रकाशयस्वेत्यभिप्रायः । तद्ध्यनाधृष्यं संग्रामेषु भवति ॥ ५ । ८ । १ ॥

१ 'धुष्टं सं' ॥

तस्योत्तरा भूयसे निर्वचनाय-॥

"तस्य" एवार्थस्य प्रकृतस्य यथा प्रशंसानामैतदिति, "उत्तरा" ऋगस्या एव प्रकृतायाः ऋचः "भूयसे निर्वचनाय" अत्र हि स्वशब्देनैवास्य प्रशंसानामत्वमुच्यते-॥*

"प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तन्त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥"

तत्तेऽद्य शिपिविष्टनामार्यः प्रशंसाम्यर्योऽहमस्मीश्वरः स्तोमानामर्यस्त्वमसीति वा तन्त्वा स्तौमि तवसमतव्यान् । तवस इति महतो नामधेयम् । उदितो भवति । निवसन्तमस्य रजसः पराके पराक्रान्ते ॥ १ ॥

"प्र तत् ते अद्य शिपिविष्ट (ऋ० सं० ५, ६, २५, ५,)"-इति । हे "शिपिविष्ट !" विष्णो ! "तत्" अहं "ते" तव "नाम" "प्रशंसामि" तत्प्रशंसार्थीयमेव पश्यामि, यदन्ये कुत्सितार्थीयं पश्यन्ति । "वयुनानि" युष्मद्विषयाणि प्रज्ञानानि "विद्वान्" जानानः । किञ्च, "अर्योऽहमस्मि" यस्मादीश्वरः स्तुतीनामुदीरणे, युष्मद्गुणाभिज्ञः, तस्मादहं प्रशंसामि तत्ते नाम । अथ "वा" "अर्यस्त्वमसि" अर्य ईश्वरः, मदनुग्रहाय समर्थः, तस्मात् प्रशंसामि "तत्ते" नामेति विस्फुटतरं प्रशंसानामत्वमिति । यस्त्वं सर्वगुणसम्पन्न ईश्वरः, 'तं' 'त्वा' त्वामहं 'गृणामि' स्तौमि । 'तवसं' महान्तम् । 'अतव्यान्' अमहानहम्, आत्मनिन्दया स्तूयते । क्व वर्त्तमानं निवसन्तम् ? "अस्य रजसः" अन्तरिक्षलोकस्य "पराके" "पराक्रान्ते" स्थाने, दूराद् दूरतरे "निवसन्तं" स्तौमि ॥ ५ । ९ । १ ॥

## आघृणिः ॥ ३९ ॥

आघृणिरागतहृणिः ।

"आघृणे संसचावहै ।" आगतहृणे संसेवावहै ॥ २ ॥

---

* अत्रैवाष्टमखण्डसमाप्तिर्दृश्यते,सा "वस्यैवार्थस्य" इत्यतः प्रागुचिता ॥ १ 'अभि'॥

"आघृणिः ( ३९ )"–इत्यनवगतम् । "आगतहृणिः"–इत्यवगमः । आगतदीप्तिरागतक्रोधो वाऽभिधेयः ॥

"एहि वां विमुचो नपादाघृणे संसचावहै ॥
रथीर्ऋतस्य नो भव ॥ ( ऋ० सं० ४, ८, २१, १ )"–इति ॥

भरद्वाजस्येयमार्षम् । गायत्री । पौष्णे सूक्ते । 'एहि' आगच्छ । हे 'विमुचः' विमोचयितः ! प्रजानाम् तमोभ्यः, पूषन् ! सूर्य ! 'नपात्' नप्तः ! अद्भ्योऽग्निर्जायते, अग्नेरादित्यः–इत्यनयापेक्षयापां नपात्त्वं सूर्यस्य । अथवा–मनुष्याणामेव नप्ता स्यात्, नृभ्य ऋत्विग्भ्यो मनुष्येभ्यो जायतेऽग्निः, अग्नेरपि च सूर्यो जायते, यदुक्तमप्युपस्थाने,–"एष प्रातः प्रसुवति"–इति । "आघृणे" आगतदीप्ते ! "संसचावहै", "संसेवावहै" । 'वाम्' आवां परस्परतः । 'रथीन् ऋतस्य' रंहयिता, गमयिता, प्रोत्सर्पयिता 'नः' त्वं यज्ञस्य 'भव' । त्वदुदयप्रतीक्ष एवाहं यज्ञप्रारम्भं प्रत्याशासे । स त्वमुदिहि, त्वय्युदिते प्रोत्सर्पतामयं यज्ञ इत्यभिप्रायः । स एवमयमत्र सूर्यसम्बन्धात् आघृणि–शब्दो दीप्तिवाचकः । दीप्तिकर्मसु च पठित एवायं "हरः ( ९ ), हृणिः ( १० )" इति । क्रोधोऽपि हृणिरित्युच्यते,–"हेळः ( १ ), हरः ( २ ), हृणिः ( ३ )"–इति, तदपि प्रकरणवशादुपेक्षितव्यम् ॥ ५ । ९ । २ ॥

## पृथुज्रयाः ॥ ४० ॥

### पृथुज्रयाः पृथुजवः ।

### "पृथुज्रया अमिनादायुर्दस्योः ।" प्रामापयदायुर्दस्योः ॥ ३ ॥ ९ ॥

"पृथुज्रयाः ( ४० )" –इत्यनवगतम् । "पृथुजवः"–इत्यवगमः ।

"यं नु न किः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ॥
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥ ( ऋ० सं० ३, ३, १३, २ )"–इति ॥

विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते ॥ 'यं नु न किः' यमिन्द्रं न कश्चिदपि 'पृतनासु' संग्रामेषु 'स्वराजम्' अपराधीनराज्यं 'द्विता' द्विविधेनापि बलेन सांयौगिकेन औरसेन च, 'तरति' जयति, सर्वथा यो जेतुं न शक्यत इत्यर्थः । अथवा–'द्विता तरति' द्विधैकधा वा, बहुधा वा वर्तमानं पृतनासु यं नु न किः यं न कश्चित् हन्तुं शक्नोति 'नृतमं' मनुष्यतमं 'हरिष्ठां' हर्योः आस्थातारम् । 'इनतमः' ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः, 'सत्वभिः यो ह

१ 'यत्' ॥

शूषैः' अनेकसत्त्वसंयुक्तैः हस्त्यश्वरथपदातिलक्षणैः सांयोगिकैः बलैः, शूषैश्च बलविशेषैरेव। अथवा—सत्त्वशब्दविशेषणमेव शूषशब्दः स्यात्,—सत्त्वयुक्तैः शूषैः बलैरिति। "पृथुज्रयाः" विस्तीर्णजवः "अमिनात् आयुः" ॥ कस्य ? "दस्योः" मेघस्य, असुरस्य, तमहं स्तौमि। स इदं नाम करोत्वित्यभिप्रायः ॥ एवमत्र शब्दसारूप्यात् वधाधिकाराच्च "पृथुज्रयाः—पृथुजवः"—इत्युपपद्यते ॥ ५। ९। ३ ॥ *

## अथर्युम् ॥ ४१ ॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्। दूरेदृशं गृहपतिमथर्युम् ॥"

दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृत एने। अग्निः समरणाज्जायत इति वा। हस्तच्युती हस्तप्रच्युत्या। जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् ॥ १ ॥ १० ॥

"अथर्युम् (४१)"—इत्यनवगतम्। "अतनवन्तम्"—इत्यवगमः ॥

"अग्निं नरोदीधितिभि०—मथर्य्युम् ॥ (ऋ— सं० ५, १, २३, १)"—इति ॥

वसिष्ठस्येयमार्षम्। विराट् त्रिष्टुप्। महाव्रते आग्नेये सूक्ते प्रथमैवेयम्। व्यूढस्य दशरात्रस्य चतुर्थेऽहनि आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते च प्रथमैव। "नरः" मनुष्याः "दीधितिभिः" अङ्गुलिभिः योक्त्रं परिगृह्य, उत्तरारणिं च "हस्तच्युती" "हस्तप्रच्युत्या" हस्ताभ्यां प्रच्यावयन्तः "अरण्योः" सकाशादग्निं "जनयन्त"। "प्रशस्तं" प्रशस्यमित्यर्थः। "दूरेदृशं" दूरेदर्शनम् "गृहपतिम्" "अथर्य्युम्" "अतनवन्तम्" गमनवन्तमित्यर्थः ॥ एवमत्र अततेः गत्यर्थस्य (भू० प०) सारूप्यादग्न्यधिकाराच्चापि "अथर्युः" अतनवानित्युपपद्यते। "दीधितयोऽङ्गुलयो भवन्ति" ता हि "धीयन्ते" "कर्मसु" अनुष्ठीयमानेषु। "अरणी" "प्रत्यृतः" प्रतिगतः "एने" "अग्निः" तात्स्थ्याद् अग्नेः "समरणाज्जायते—इति वा" अरण्योः हि समरणात् समागमनादग्निर्जायते ॥ ५। १०। १ ॥*

---

* अत्रैव नवमखण्डसमाप्तिर्दृश्यते ॥ १ 'वा स्यात्' ॥ * अत्रैव दशमखण्डसमाप्तिरवगन्तव्या ॥

काणुका ॥ ४२ ॥

"एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका ॥"

एकेन प्रतिधानेनापिबत् साकं सहेत्यर्थः । इन्द्रः सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा ॥

इन्द्रः सोमस्य कान्त इति वा कणे घात इति वा कणे हतः कान्तिहतः ।

तत्रैतद्याज्ञिका वेदयन्ते—त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते ।

त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः । तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति—

"यमक्षितिमक्षितयः पिबन्ति" इति ।

तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति—

"यथा देवा अंशुमाप्याययन्ति" इति ॥ १ ॥

"काणुका ( ४२ )"—इत्यनवगतम्, अनेकार्थं च । "कान्तकानीति वा, क्रान्तकानीति वा, कृतकानीति वा"—इत्येवमाद्याः शब्दसमाधयः । "एकया प्रति०—काणुका ( ऋ० सं० ६, ५, २९, ४ )"—इति काण्वस्य कुरुसुतेरिषमार्षम् । गायत्री । ऐन्द्री । "एकया प्रतिधा" "एकेन प्रतिधानेन" सकृत्गीर्णहितेनैव चेतसा "पिबत्" पिबति "इन्द्रः" "साकं" "सहेत्यर्थः" कानि पुनः

१ 'प्रतिहि' ॥

पिबति ? "सरांसि"। कियन्ति ? "त्रिंशतम्" कस्य पूर्णानि पिबति ? "सोमस्य"। किङ्गुणयुक्तानि ? "काणुका" "कान्तकानि" प्रियाणीत्यर्थः । अथ "वा"–सोमस्य "क्रान्तकानि" अखिलं सरांसि अविलात् सोमस्य पूर्णानीत्यर्थः । अथ "वा"– "कृतकानि" संस्कृतानि, ऋत्विग्भिः इन्द्रार्थमेव ॥

अथ "वा"–"इन्द्रः" यस्मात् "सोमस्य कान्तः" तस्मात् "अपिबत्"। अ (थ-वैवम्) न्यथेन्द्रविशेषणमेव स्यान्न सरोविशेषणम् । आह–कथम्? इति, उच्यते— "आघात इति वा" आ कणे घातं पिबतीति यावत्, कणे हन्यत इत्यर्थः, "कणे हतः" "कान्तिहतः"–कान्तिरभिलाष इत्यर्थः । कामः, प्रार्थना, कणे,–इति समानार्थाः, कामे योऽभिहतः स कणे हतः–इत्युच्यते, हतपानाभिलाष इत्यर्थः।एवमेतत् काणुकेति सरोविशेषणमिन्द्रविशेषणं वा ? पानविशेषणं वा ? सर्वेषामस्मिन्मन्त्रे प्रकृतत्वात् । एवं चास्य विकल्प्यमानस्यानेकार्थतापि दर्शितैव भवति ॥

यदेतदुक्तमस्मिन्मन्त्रे "सरांसि त्रिंशतम्"–इति, अस्याभिधेयविषयप्रख्यापनप्रसक्तमिदमुच्यते,–"तत्रैतद्याज्ञिका वेदयन्ते" तत्रैतस्मिन् त्रिंशच्छब्दे एतदभिधेयमर्थवस्तु याज्ञिकाः,–वेदयन्ते कथयन्ति–"त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि"–इति, तत्र हि माध्यन्दिने सवने उक्थपर्यायाः त्रयस्त्रयोऽप्यैन्द्रा एव भवन्ति, त्रिष्वपि चैतेषु दशदश चमसाः, तदभिप्रायेण त्रिंशत्सरांसीत्युक्तं मन्त्रदृशा। ते ह्यत्रेन्द्रस्य सरका अभिप्रेताः। सीधुसरका इवेतरस्य कस्यचित् क्षत्रियस्य यानि "तानि" उक्थसम्बद्धानि च सोमपात्राणि "एकेन" प्रतिधानेन "पिबन्ति" पीयन्ते, "तान्यत्र सरांस्युच्यन्ते"–इत्येष याज्ञिकानामभिप्रायः ॥

"त्रिंशदपरपक्षस्याहोरात्राः, त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः"। "तत्" तत्रैवं सति "याः एताः" "चान्द्रमस्यः" चन्द्रमसि भवाः चान्द्रमस्यः, "आगामिन्यः" प्रतिपद्द्वितीयाद्यासु तिथिष्वागच्छन्तीति । किं तासाम् ? इति, उच्यते–"रश्मयस्ता अपरपक्षे पिबन्ति"। यथा चैतदेवं "तथापि" तथैव "निगमः"–"यमक्षितिमक्षितयः पिबन्ति"–इति । चन्द्रमसमपरपक्षे पीत्वा ते सूर्यरश्मयः "पूर्वपक्षे" प्राप्ते पुनः "आप्याययन्ति" आपूरयन्ति । यथा चैतदेवं "तथापि" तथैव निगमः– "यथा देवा अंशुमाप्याययन्ति"–इति ॥

"यथा॒ दे॒वा अं॒शुमा॒प्याय॑य॒न्ति य॒मक्षि॑ति॒मक्षि॑तयः॒ पिब॑न्ति ॥
तेन॒ चेन्द्रो॒ वरु॑णो॒ बृह॒स्पति॑रा॒प्याय॑यन्तु॒ भुव॑नस्य॒ गो॒पाः ॥"–इति ॥

राजयक्ष्मगृहीतस्य वैश्वदेवश्चरुर्निरुप्यते,तत्र प्राक् स्विष्टकृतोऽनेयाज्याहुतिर्हूयते। "यथा"

१ 'ष्टकृतोऽनेन याज्याहु' ॥

येन प्रकारेण, "देवाः" सूर्यरश्मयः "अंशुं" सोमम् "आप्याययन्ति" पूर्वपक्षे। एवमनेन प्रकारेण हे यजमान ! त्वाम् 'इन्द्रः' 'वरुणः' 'बृहस्पतिः' 'च' एते 'भुवनस्य' भूतजातस्य 'गोपाः' गोप्तारः। 'आप्याययन्तु' आयुषा धनेन च । किञ्च, 'यथा' येन प्रकारेण 'अक्षितिम्' अक्षीणं सोमम्, 'अक्षितयः' सूर्यरश्मयः 'पिबन्ति' तथा त्वामपि हविर्दातारं सन्तं पिबन्तु, उपजीवन्तु एते देवा इति। येषां तु "यमक्षुतिम्"–इति पाठः, तेषां यमक्षतिमक्षितयः पिबन्ति, स च त्वामाप्याययत्वित्येवं योज्यम् ॥

आह–"एकया प्रतिधापिबत्"–इत्येतस्मिन्मन्त्रे "साकं सरांसि त्रिंशतमिन्द्रः" पिबतीत्युक्तम्। नैरुक्तपक्षेणोक्तम्,–"तद् या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयः,ता अपरपक्षे पिबन्ति"इति, तदेतद्रश्मिषु पात्रेषु, चन्द्रमसि च पीयमाने, सर्वमेवेदमसम्बद्धं भवति ? इति॥ "एकया प्रतिधापिबत्"–इत्येतस्य मन्त्रस्यैन्द्रत्वात्। इतरस्मिन् "यमक्षितिमक्षितयः पिबन्ति"–इति रश्मीनां पानसम्बन्धादादित्य उच्यते, आदित्योऽपि हि इन्द्रशब्देनोच्यत एव–"असावादित्य इन्द्रः–इति ह विज्ञायते"। तदवयवभूताश्च रश्मयः, आदित्येन सह समासव्याससस्तुतिभाजः। सरःशब्दः खल्वपि उदके एव वर्त्तते, "पयः ( ३७ ), सरः ( ३८ ), भेषजम् ( ३९ )"–इत्युदकनामसु पठितम्। तत्रैवं सति यानि तान्युदकानि सरांसि पञ्चदशाहःसम्भृतानि साकमवस्थितानि भवन्ति चन्द्रमसि, तानि सूर्यः–इन्द्रो रश्मिभिरपरपक्षे पिबतीति। एवमेतत् सर्वमुपपद्यते एव नैरुक्तपक्षे ॥ ५ । ११ । १ ॥

## अध्रिगुः ॥ ४३ ॥

**अध्रिगुर्मन्त्रो भवति गव्यधिकृतत्वादपि वा प्रशासनमेवाभिप्रेतं स्यात्तच्छन्दवत्त्वादध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगविति ॥ २ ॥**

"अध्रिगुः ( ४३ )"–इत्यनवगतम्, अनेकार्थञ्च। "अध्रिगुर्मन्त्रो भवति"। आह-किं कारणम् ? उच्यते–"गवि अधिकृतत्वात्"। सोऽयमधिगुः सन् अध्रिगुरित्यर्थः। गवि योऽधिकृतो मन्त्रः स अध्रिगुः । "अपि वा" गोरनित्यत्वात् "प्रशासनमेव" एतत् "अभिप्रेतं" स्यात्। अध्रिगुर्नाम कश्चिदस्ति दैव्यः शमिता, तस्यैतत् प्रशासनं स्यात्, सम्प्रेषणमित्यर्थः। किं कारणम् ? "तच्छन्दवत्त्वात्"। तथा ह्यस्य मन्त्रस्य अधिगुशब्दवत्त्वं तदेतदुक्तमुपपद्यते। तदनेनैव निगमेन "अध्रिगो शमीध्वम्"–इति। हे

---

१ 'नसंयोगादादि' ॥　२ 'यदेतद्' ॥

अध्रिगो ! सर्वं एव यूयं शमीध्वम् "शमयध्वम्" एनं पशुमिति । "दैव्याः शमितार आरभध्वम्०—आशासाना मेधपतिभ्यां मेधम्०—नेद्वस्तोके तनये रवितारवच्छमितारः०—अध्रिगो शमीध्वम्"—इति प्रैषः । हे 'दैव्याः !' 'शमितारः !' अपि च हे 'मनुष्याः !' 'आरभध्वम्' 'उपनयत' च एनं पशुम् । एताः 'मेध्याः' 'दुरः' यज्ञगृहद्वार इत्यर्थः । 'आशासानाः' प्रार्थयमानाः, 'मेधपतिभ्याम्' आभ्यामग्नीषोमाभ्यां मेधम् एनं पशुं शमयितुम् । किञ्च, 'प्र अस्मै अग्निं भरत' प्रभरतास्मै पशवे सञ्ज्ञप्यमानाय अग्निमुल्मुकम्, पुरस्ताद्धारयतेत्यर्थः । किञ्च, 'स्तृणीत बर्हिः' अस्मै पशवे सञ्ज्ञप्यमानाय, उपाकरणमेनं दर्भमपास्यतेत्यर्थः। किञ्च, 'अन्वेनं माता मन्ताम्'एनं सञ्ज्ञप्यमानं माता अनुमन्यताम् । 'अनु' मन्यतां 'पिता' । 'भ्राता सगर्भ्यः' 'अनु' मन्यतां सहगर्भीयः, सहोदर इत्यर्थः । 'अनुमन्यतां' चैनं 'सखा सयूथ्यः' सहयूथचारी, 'अनु' मन्यताम्, अनुमतमेनमेभिः सञ्ज्ञपयतेत्यभिप्रायः । किञ्च, 'उदीचीनाम् अस्य पदो निधत्तात्' उदक्पादमेनं सञ्ज्ञपयेत्यर्थः । किञ्च, सूर्यप्रभवमस्य चक्षुः, ततः 'सूर्यम्' एव 'गमयतात्' । 'वातम्'अनु 'प्राणम्' अन्ववसृजतात् । 'असुं' शरीरविधारकं प्राणम् 'अन्तरिक्षम्' अन्ववसृजत । 'दिशः' 'श्रोत्रम्' अन्ववसृजत । किञ्च, 'उपाकरणेन' दर्भेण 'सह' साकम् 'एकधास्य त्वचम्' 'आच्छथतात्' आच्छतेत्यर्थः । ततोऽनन्तरमेव 'पुरा' 'नाभ्या अपि शसः' तस्माच्छसः प्रशस्तात् प्रदेशात् 'वपाम्' 'उत्खिदतात्' उद्धरत । किञ्च, 'अन्तरेव' अभ्यन्तरत एव, 'ऊष्माणम्' अस्य शम्यमानस्य 'वारयध्वात्' । 'श्येनमस्य' श्येनाकृति श्येनवर्णं वा पाकेन 'वक्षः' उरः 'कुरुत' । 'प्रशसा बाहू' 'शला दोषणी'—इति बाह्वोरेवैतदभिधानम् अवयवशः, अत्र बाहुशब्दः प्रायेणावाग्ंसयोः वर्त्तते, आ आरत्निसन्धानौ बाहू प्रशस्तौ कुरुत । स्वधित्याकृती, इत्येके । शलाशब्दः अरत्न्यामेव वर्त्तते । तौ च शलादोषणी द्रवणसमर्थौ प्रशस्तौ कुरुत । शलाकाकृती निर्माणौ कुरुतेत्येके । "श्येनशलाकाकश्यपा–कवषा–स्रेकपर्णेष्वाकृति–विशेष–वचनं–सिद्धसाधनं स्यात्"—इति हि नैयाकिकाः पठन्ति । 'कश्यपेवांसा' कच्छपाविव अंसौ कुरुत । किञ्च, 'अच्छिद्रे श्रोणी' अविकले कुरुत । 'कवषोरू' कवषे गतिसमर्थे उरू कुरुत, कवतिर्गत्यर्थः, "च्यवते, कवते, गवते"—इति गतिकर्मसु पाठात् । पिण्डिकाख्ये उरू अच्छिद्रे एव कुरुतेत्यर्थः । 'स्रेकपर्णा' करवीरपत्राणीव 'अष्ठीवन्तः' अस्थिसंयुक्ते कुरुत । 'षड्विंशतिरस्य वङ्क्रयः', ता अनुष्ठ्योऽच्यावयतात्' या एता वङ्क्रयः पर्शवः, तौ अनुष्ठ्या अनुष्ठानक्रियया प्रच्यावनसमर्थयैव प्रच्यावयत । किञ्च, 'गात्रम्' 'अस्य' 'अनूनम्' अविकलं 'कृणुतात्'

---

१ 'मेतं' ॥ २ 'चनं प्रसिद्धिसामर्थ्याद्–इ' ॥

कुरुत । किञ्च, 'ऊवध्यगोहम्' ऊवध्यं यः पार्थिवो गर्त्तः, प्रकृष्टं संवृणोति, तन्, उत्तरघ्वात्वालस्य 'खनतात्' । 'अस्ना रक्षः संसृजतात्' असृग्भाञ्जि रक्षांसि कुरुतेत्यर्थः । किञ्च, 'वनिष्ठुम्' दृष्ट्वा 'मा राविष्ट' मा शब्दं करिष्यथ । 'उलूकं मन्यमानाः' उलूकवन्तं वनिष्ठुं मन्यमानाः, उलूको हि भयङ्करत्वात् दृष्ट्वा जनैः विराव्यते,—अयमुलूकोऽयमुलूक इति । तदाशङ्कया उलूकसारूप्याद्वनिष्ठोर्मा राविष्टेत्युच्यते । हे शमितारः ! 'नेद्वस्तोके तनये रवितारवच्छमितारः' नैतत् कर्म कुर्वतां रवितारवत्, पुत्रेषु पौत्रेषु वः स्यात्, अरवणशीलं वः पुत्रपौत्रं भविष्यतीत्यभिप्रायः । हे "अध्रिगो !" "शमीध्वम्" एनं पशुं "सुशमि शमीध्वम्" यथा चायं सुशमितः स्यात्तथैनं शमीध्वं हे अध्रिगो ! मा प्रमादं करिष्यथ ॥ एवमेतस्मिन् दैव्यस्य शमितुः अध्रिगोः प्रशासनमित्येतदुपपद्यते, तस्य सम्बोध्यत्वादस्मिंश्च प्रैषे यथासम्भवं प्रशासनानि द्रष्टव्यानि,— "प्रास्मा अग्निं भरत"—इत्येवमादीनि ॥ ५ । ११ । २ ॥

## अग्निरप्यध्रिगुरुच्यते । "तुभ्य श्चोतन्त्यध्रिगो शचीवः।" अधृतगमनकर्मवन् ॥ ३ ॥

"अग्निरप्यध्रिगुरुच्यते" अधृतगमनोऽसावित्यध्रिगुः ।

"तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ (ऋ० सं० ३, १, २१, ४)"—इति ॥

गाथिनः कुशिकपुत्रस्यार्षम् । विराड्रूपा त्रिष्टुप् । स्तोके सूक्ते विनियुक्ता । हे "अध्रिगो" अधृतगमन ! "शचीवः" कर्मवन् ! 'तुभ्यं' त्वदर्थमेते 'स्तोकासः' बिन्दवो वपामसीत्य श्चोतं क्षरन्ति । 'मेदसः' च 'घृतस्य' च । यस्य तवैतद्वर्त्तते, स त्वं 'कविशस्तः' प्रक्षरणेप्रक्षरणे कविभिरभिष्टुतः, 'बृहता' महता 'भानुना' 'भासा' 'आगाः' आगच्छ । आगत्य चेमानि 'हव्या' हवींषि यानि स्तोकाख्यानि, त्वदर्थमेव क्षरन्ति तानि 'जुषस्व' संसेवस्व । हे 'मेधिर' यज्ञवन् ! इत्यर्थः । एवमत्र "अध्रिगो"- इत्यग्निरुक्तः, तस्मादग्नेरध्रिगुत्वमुपपद्यते ॥ ५ । ११ । ३ ॥

## इन्द्रोऽप्यध्रिगुरुच्यते ॥ "अध्रिगव ओहमिन्द्राय" इत्यपि निगमो भवति ॥ ४ ॥

"इन्द्रोऽप्यध्रिगुरुच्यते" । तस्यापि न कश्चिद् गमनधारयितास्ति ॥

"अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।

ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥ (ऋ० सं० १, ४, २७, १)"—इति ॥

नोधस इयमार्षम् । अहीनसूक्ते शस्यते । 'अस्मै' इन्द्राय 'प्र हर्मि' प्रभरामि 'स्तोमम्' 'प्रयो न' प्रय इव, अन्नमिव, यः स्तोमः तृप्तिं करोति, तं प्रभरामि । 'तवसे' महते 'तुराय' त्वरमाणाय 'माहिनाय' मंहनाय दात्रे[1] । किञ्च, 'ऋचीषमाय' ऋक्समाय, स्तुतिसमाय, यावती स्तुतिरुदीर्यते तावानेवासौ भवति, माहाभाग्यात् "अध्रिगवे" अधृतगमनाय, अप्रतिहतगमनाय, एवंलक्षणाय "इन्द्राय" "ओहम्" अहं प्रापयामि 'ब्रह्माणि' हवींषि 'राततमा' दातव्यतमानि यान्यसावेवार्हति, तानीत्यभिप्रायः ॥ एवमस्मिन्नध्रिगु—शब्दे इन्द्रविशेषणत्वादिन्द्राभिधानमित्युपपद्यते ॥ ५ । ११ । ४ ॥

## आङ्गूषः ॥ ४४ ॥

**आंगूषः स्तोम आघोषः । "एनाङ्गूषेण वयमिन्द्रवन्तः ॥"**

**अनेन स्तोमेन वयमिन्द्रवन्तः ॥ ५ ॥ ११ ॥**

"आङ्गूषः (४४)"—इत्यनवगतम् । "स्तोमः"—अभिधेयः । "आघोषः"—इति शब्दसमाधिः ॥

"एनाङ्गूषेण वयमिन्द्रवन्तोऽभिष्याम वृजने सर्ववीराः ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ (ऋ० सं० १, ७, २३, ४)"—इति ॥

त्रिष्टुप् । कुत्सस्य त्रितस्य वा कूपे पतितस्यार्षम् । वैश्वदेवस्य चरोर्भ्रातृव्यवतो याज्यैषा । "एना" "अनेन" "वयम्" 'आङ्गूषेण' आघोषणीयेन "स्तोमेन" "इन्द्रवन्तः" इन्द्रसंयुक्ताः 'स्याम' वयम् । 'तत्' ततो विश्वे 'सर्वे' एव अनवखण्डिताः सन्तः, सर्वान् भ्रातृव्यान् 'अभि' भवेम जितीकृत्येव गमनमात्रेणैव । तदेतत् 'नः' सर्वमपि 'मित्रः' 'वरुणः' च 'मामहन्ताम्' पुनःपुनर्महयन्तां पूजयन्तु । 'अदितिः' च पूजयतु । 'सिन्धुः' च पूजयतु । 'पृथिवी' च पूजयतु । 'उत द्यौः' पूजयत्वित्येतदेवानुवर्त्तते ॥ एवमत्र स्तोमोऽयम् "आङ्गुष"—शब्देनोक्तः,—शब्दसारूप्यादर्थोपपत्तेश्च ॥५।११।५॥*

---

१ 'दात्रे' ॥ * अत्रैवैकादशखण्डसमाप्तिरवगन्तव्या ॥

## आपान्तमन्युः ॥ ४५ ॥

"आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः॥"

आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी (सृप्रप्रहारी) सोमो वेन्द्रो वा ॥

धुनिर्धुनोतेः ॥

शिमीति कर्मनाम । शमयतेर्वा शक्नोतेर्वा ॥

ऋजीषी सोमो यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमः ॥

अथाप्यैन्द्रो निगमो भवति—"ऋजीषी वज्री" इति ॥

हर्योरस्य स भागो धानाश्चेति ॥

धाना भ्राष्ट्रे हिता भवन्ति फले हिता भवन्तीति वा ॥

"बब्धां ते हरीधाना उप ऋजीषं जिघ्रताम् ॥"

इत्यपि निगमो भवति ॥

आदिनाभ्यासेनोपहितेनोपधामादत्ते ॥

बभस्तिरत्तिकर्मा । सोमः सर्वाण्यतसानि वनानि नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैनमप्राप्य विनश्यन्तीति ॥

इन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मोभयप्रधानेत्यपरम् ॥ १ ॥

"आपान्तमन्युः (४५)"—इत्यनवगतम्, पक्षेण चानेकार्थम् । "आपातितमन्युः"—इत्यवगमः । "आपान्तमन्युः० ( ऋ० सं० ८, ४, १४, ५ )"—इति ॥

वैश्वामित्रस्य रेणोरियमार्षम् । त्रिष्टुप् । सूर्यस्तुत्यैकाहे निष्केवल्ये विनियुक्ता । आपा-

दितदीप्तिः, उत्पादितमन्युर्वा शत्रुभिः संग्रामे, "तृपलप्रभर्मो" "तृप्रप्रहारी क्षिप्रप्रहारी, सोमो वेन्द्रो वा" । "धुनिः" धूनयिता कम्पयिता शत्रूणां पात्राणां वा। "शिमीवान्" स्वाधिकारविनियतेन कर्मणा कर्मवान् । "शरुमान्" हिंसावान् । "ऋजीषी" यदि सोमोऽभिप्रेतः, तस्य ऋजीषित्वमुपपद्यते, अथेन्द्रोभिप्रेतः, तस्य हर्योरश्वयोः ऋजीषं भाग इत्यनयापेक्षया ऋजीषित्वम् । एवमयमर्द्धर्चः, सोमस्येन्द्रस्य वा । यस्मिंश्च पक्षे सौम्य एषोऽर्द्धर्चः, तस्मिन् पक्षेऽयं तृतीयः पादः, एवं सोमेनाभिसम्बन्धयितव्यः,—य एवङ्गुणयुक्तः "सोमः" स एतानि "विश्वानि" सर्वाणि "अतसा" अनुपक्षीणानि "वनानि" उदकानि, इतराणि वा वनानि वनस्पत्याख्यानि, स्वेन महिम्ना व्याप्नोति, स हि तेषामधिपतिः । एवमेते त्रयोऽपि पादाः सौम्यां भवन्ति । उत्तरं ऐन्द्र एव,—"नार्वागिन्द्रं प्रतिमानानि देभुः"—इति । "नैनं" इन्द्रं "प्रतिमानानि," यैः प्रतिमीयन्ते स्तोत्राणि, न तानि दभ्नुवन्ति, नाभिभवितुं शक्नुवति । किं तर्हि ? "अर्वागेवं" तान्यूनान्येव तस्मादिन्द्राद् भूत्वा "एनम्" इन्द्रम् "अप्राप्य" एव "विनश्यन्ति" नोपमार्थं कुर्वन्ति, स हि तेषां विनाशः । एवमेष पाद ऐन्द्रः । एवमुभयप्रधानत्वमस्या ऋचः ॥

अथवैवमन्यथास्या ऋच उभयप्रधानत्वम् । द्वौ प्रथमौ पादावैन्द्रत्वेन व्याख्यायेते—तृतीयपादमुत्कृष्य चतुर्थः पाद आद्याभ्यामभिसम्बन्धयितव्यः । योऽयमेवङ्गुणविशिष्ट इन्द्रः, आपातितमन्युः तृप्रप्रहारी, धुनिः, शिमीवान्, शरुमान्, ऋजीषी, च तमेनमिन्द्रमेवम्प्रभावं न प्रतिमानानि दभ्नुवन्ति । किं तर्हि ? अर्वागेवैनमप्राप्य वर्त्तमानानि विनश्यन्ति । एवमेते त्रय ऐन्द्राः पादाः,—द्वावाद्यौ चतुर्थश्च । अयं तृतीयः, सौम्यः,—"सोमो विश्वान्यतसा वनानि"—इति । यः "सोमः, सर्वाण्यतसानि वनानि" महिम्ना व्याप्नोति, यश्च "इन्द्रं न प्रतिमानानि दभ्नुवन्ति" तौ सोमेन्द्राविदं नाम कुरुतामित्याशीर्योज्या ॥

"एके" पुनः "इन्द्रप्रधाना" एवेयमृक् "इति" एवं मन्यन्ते,—"नैघण्टुकम्" अस्यां "सोमकर्म"—इति, तेषामियं योजना,—य इन्द्र आपादितमन्युः, तृप्रप्रहारी, धुनिः,शमीवान्,शरुमान्,ऋजीषी च, स सोम इव अतसानि वनानि इदं सर्वं व्याप्नोति । न चैनं प्रतिमानानि दभ्नुवन्ति । किं तर्हि ? एनमिन्द्रमप्राप्यैव विनश्यति । एवमिन्द्रप्रधानैव भवति । एवमस्या ऋचः त्रिधा समासार्थो बोद्धव्यः । तथाहि भाष्यकारेण दर्शितम् । सोमस्य ऋजीषित्वोपपादनार्थमाह भाष्यकारः,—"यत्सोमस्य पूयमानस्यातिरिच्यते"रसादन्यदसारमतिरिच्यते, "तदृजीषम्"—इत्युच्यते । तत् "अपार्जितम्"अपवर्जितं"भवति"किंण्वभूतत्वात्"तेन"संयोगात् "ऋजीषी सोमः" उच्यते ॥

---

१ 'रविहिते' ॥ २ 'कल्कभूत' ॥

"अथ" "अपि" यस्मिन् पक्षे "ऐन्द्रः" अर्द्धर्चो भवति, एतस्मिन् पक्षे इन्द्रस्य ऋजीषित्वाभिधायकं एषः "निगमः भवति"। इन्द्रस्य ऋजीषित्वमनुपपन्नं मन्यमानो निगमं पठति,—

"ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।

युक्त्वा हरिभ्यामुपयासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रः ॥ (ऋ० सं० ४, २, ११, ४)"—इति ॥

अत्रेरियमार्षम् । त्रिष्टुप् । ऋजीषेण तद्वान् "ऋजीषी" वज्रेण तद्वान् "वज्री" 'वृषभः' वर्षिता कामानाम्, 'शुष्मी' बलवान्, 'राजा' अधिपतिः, 'वृत्रहा' शत्रुहा, 'सोमपावा' सोमस्य पातेत्यर्थः। य एवङ्गुणयुक्तः 'इन्द्रः' सः 'युक्त्वा' 'हरिभ्याम्' अश्वाभ्यां रथं तम् अधिरुह्य 'उपयासत्' उपागच्छत् । 'अर्वाङ्' अस्मानाभिमुख्येन, 'माध्यन्दिने सवने' एतस्मिन् प्राप्ते उपगम्य च 'मत्सत्' माद्यताम्,: अस्मत्प्रदत्तेन सोमेनेत्यर्थः ॥

एवमेतस्मिन् मन्त्रे ऋजीषी इन्द्र उक्तः । तत् पुनरेतदृजीषित्वमिन्द्रस्य न विज्ञायते केन कारणेनेत्यतस्तदुपपादनार्थमाह,—"हर्योरस्य स भागः"—इति । हर्योरेवाश्वयोरस्येन्द्रस्य स भागो यदृजीषम् । "धानाश्च" । प्रसङ्गादत्र धाना उक्ताः । यदुक्तम्,—"हर्योर्धाना हरिवतोः"—इति । तेन हरिसंयोगेन ऋजीषेण लक्षितलक्षणया वृत्त्या इन्द्रस्य ऋजीषित्वम् ॥

आह—"धानाः" कस्मात् ? उच्यते—ता हि "भ्राष्ट्रे हिताः" निहिता भवन्ति, अथ "वा" भ्राष्ट्रादवतार्य "फले" फलके "हिताः" निहिताः "भवन्ति"। [अथवा-खले हिता भवन्ति ।] तत्र हि ता विसार्यन्तेऽतिदाहभयात् । यथा ऋजीषं धानाश्च हर्योरश्वयोरिन्द्रस्य च भागस्तथैष निगमः—"बब्धां ते हरी धाना उप ऋजीषं जिघ्रताम्"—इति । अत्र बब्धाम्—इत्येतस्मिन् पदे य एषः "बभस्तिः" धातुः, "अत्तिकर्मा" भक्षणार्थः, सः "आदिनाभ्यासेनोपहितेनोपधामादत्ते" आदावभ्यासेनोपश्लेषि तेनोपधामादत्ते, भकारेण निमित्तभूतेन उपधामकारमादत्ते, लुम्पति । "घसिभसोर्हलि च (पा० ६, ४, १००)"—इत्यकारलोपः, ततो घत्वे कृते, जश्त्वे च कृते, बब्धामित्येतद्रूपं भवति ॥

"धानाः सोमानामिन्द्राद्धि च पिब च बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामा रथचर्षणे सिध्वस्व ॥ यत्त्वा पृच्छाद् वृषन् पत्नी कामीमदथा इत्यस्मिन् सुन्वति यजमाने तस्मै किमरास्थाः सुष्ठु सुवीर्यं यज्ञस्यागुर उद्धुचं यद्यदचीकमतां तत्तथाभूद्धोतर्यज" ॥

---

१ 'प्रकरणेनेत्य' ॥ २ 'पहितेनोप' ॥

हारियोजनस्यायं प्रैषः । हे 'इन्द्र !' 'अद्धि' भक्षय 'धानाः' । 'सोमानाम्' एतेषाम् स्वभूतं रसम् 'पिब च' अस्य हारियोजनस्य सोमस्य । किञ्च, "बब्धाम्" भक्षयतां "ते" तव एतावश्वौ "हरी" एताः "धानाः" "उप ऋजीषं जिघ्रताम्" उपजिघ्रतामृजीषञ्च । 'आ रथचर्षणे सिञ्चस्व' जठरे सोममेनम् । हे रथचर्षणे रथ-गमन ! आसिञ्चस्व । किञ्च, 'यत्त्वा पृच्छात्' यदि त्वां पृच्छेत् गृहमनुप्राप्तमस्मद्य-ज्ञात् हे 'वृषन्' वर्षितः ! 'पत्नी क्वामीमदथाः' क्व पीतवांस्त्वम् ? अतो ब्रूयास्त्वम्-अस्य यजमानस्य नाम गृहीत्वा, 'अस्मिन्' 'सुन्वति' सोममभिषुण्वति 'यजमाने' ततः सा यदि पुनरपि पृच्छेत् 'तस्मै' परितुष्टः त्वं 'किमरास्थाः' किं दत्तवानसि ? ततः तां प्रति ब्रूयाः-'सुष्ठु' 'सुवीर्यं' शोभनं वीर्यम् अहमस्मै दत्तवान् । 'यज्ञस्य आगुर उद्रुचम्' यदसावनेन यज्ञेन आगूर्णवान् प्रार्थितवान् अभूत्, तत् सर्वमहमदाम्, 'यज्ञस्य' चोत्कृष्टां रुचं दीप्तिमहमदामस्मै ॥ किं बहुना, 'यद्यत्' 'अचीकमताम्' यद्यत्कामितवानयं यजमानः फलमस्य कर्मणः, 'तत्' 'सर्वमेतत्' 'तथा' प्रार्थितमेव 'अभूत्' न कश्चिदप्यस्य मृषा कामो बभूवेत्यभिप्रायः । हे 'होतः' ! त्वमपि योऽयमे-वङ्गुणविशिष्ट इन्द्रः, तं सह हरिभ्यां 'यज'-इति ॥ एवमत्र "हरी उपजिघ्रताम्"-इत्येतस्माद् विशेषलिङ्गात् ऋजीषित्वमश्वयोः, अश्वयोगाच्च ऋजीषित्वं लक्षितलक्षणया इन्द्रस्योपपद्यते ॥ ५ । १२ । १ ॥

## श्मशा ॥ ४६ ॥

### श्मशा शु अश्नुत इति वा श्माश्नुत इति वा ॥

### "अवं श्मशा रुधद्वाः ।" अवारुधच्छ्मशा वारिति ॥२।१२॥

"श्मशा" (४६)-इत्यनवगतम् । "श्वाशिनी" "श्माशिनी"-इति वावगमः । श्वाशिनी-शीघ्राशिनी-शीघ्रव्यापिनी कुल्या, नदी वा । श्माशिनी पुनर्नाडी, सा हि श्मं शरीरं व्याप्नोति । एवमेतदिह विगृह्यमाणमनेकार्थमपि भवत्येव ॥

"कदा वसो स्तोत्रं हर्यत आव श्मशारुधद्वाः ।
दीर्घं सुतं वाताप्याय ॥ (ऋ० सं० ८, ५, २६, १)"-इति ॥

कुत्सपुत्रस्य दुर्मित्रस्यार्षम् । उष्णिक् । ऐन्द्रस्य सूक्तस्य प्रथमैवेयम् । हे 'वसो' वसुमन् ! इन्द्र ! 'कदा' कस्मिन् काले 'स्तोत्रम्' एतन्मयोदीरितम् 'अस्य' यजमा-नस्य 'हर्यतः' कामयतः, कामान् प्रार्थयतः, त्वाम् "रुधत्" उपरोत्स्यति । "श्मशा" इव "वाः" कुल्येवोदकं विसर्पमाणम्, नाडीव वा, अथवा आध्यात्मिकी नाडी, शरीरा-श्रितं रसम् । आह-कतमत् स्तोत्रम् ? इति, उच्यते-यदेतत् 'दीर्घं सुतं' सोमं सत्राख्ये

सुतमभिषुतं प्रवर्त्तते, 'वाताप्याय' उदकार्थम् ॥ एवमेतस्मिन् "क्ष्मशा"—इत्येतत् नाड्यभिधानं कुल्याभिधानं "वाः" शब्दोपपश्चत्तेश्च "इति" ॥ ५ । १२ । २ ॥ *

## उर्वशी ॥ ४७ ॥

**उर्वश्यप्सरा उर्वभ्यश्नुत उरुभ्यामश्नुत उरुर्वा वशोऽस्याः॥ अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिः॥ यदप्स इत्यभक्षस्य । अप्सो नामेति व्यापिनः ॥ तद्रा भवति रूपवती तदनयात्तमिति वा तदस्यै दत्तमिति वा ॥ १ ॥ १३ ॥**

× आप्नोतेरप्स इति वा ।

"उर्वशी" (४७)—इत्यनवगतम्। "अप्सराः"—इत्यभिधेयवचनम्। "उर्वभ्यश्नुते"—इति व्युत्पत्तिः । उरु महद् यशोऽभिव्याप्नोति इति । अथवा—"ऊरुभ्यां" मैथुने धर्मे पुरुषम् "अश्नुते" व्याप्नोतीति उर्वाशिनी सती उर्वशीत्युच्यते । अथ "वा" "उरुः" महान् "अस्याः" "वशः" कामः, सेयमुरुवशिनी सती उर्वशीत्युच्यते । एते शब्दसमाधयः ॥

अधुना अप्सराः—इत्येतं शब्दं समाख्यानप्रसक्तं निर्ब्रवीति । आह—"अप्सराः" कस्मात् ? उच्यते—सा हि "अप्सारिणी" भवति, अपः प्रति नित्यमेव सरति, तत्प्रभवत्वात् तदेव तस्याः प्रियमुदकम्, तस्मादप्सराः । अथवा—अद्भ्यः सृतेत्यप्सराः। "अपि" चैवमन्यथा स्यात्,—"अप्सः"—इति एतत् "रूपनाम" । "अप्सातेः" प्रतिषेधपूर्वस्य प्सातेः भक्षणार्थस्य ( अदा० प० ), तद्धि "अप्सानीयम्" अनदनीयं "भवति" न हि तद्भक्ष्यते, किं तर्हि ? "आदर्शनीयं" तदाभिमुख्येन स्थित्वा द्रष्टव्यमेव भवति चक्षुषा, न पुनर्मुखेन भक्षयितव्यमित्यर्थः। "व्यापनीयं वा" व्यापनमर्हति । "आप्लृ—व्याप्तौ (स्वा० प० )" तस्य वा अप्सः, तद्धि नायनेन रश्मिना आत्मनः प्रत्ययाधानार्थं व्यापयितव्यं भवति । "स्पष्टं दर्शनायेति" "शाकपूणिः" आचार्यो मन्यते, न ह्येतदस्पष्टं दर्शनाय, किं तर्हि ? स्पष्टमेवेत्यर्थः । "यदप्सः—इत्यभक्षस्य" पुरस्तादुक्तम्,—"अपि वाप्स इति रूपनाम, अप्सातेः" न हि तद्भक्ष्यते, किं तर्हि ? दृश्यते तदिति । तत्र "अभक्षस्य" अप्सः—शब्दवाच्यत्वप्रख्यापक एष निगमः,—

---

* अत्रैव द्वादशखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ पञ्चमा [दशमा]ध्यायस्य द्वितीयः पादः ॥ ५, २ ॥" इति तूपलभ्यते ॥ १'एताः'

"यदे॒न॑श्चकृ॒मा व॒यं यद॒प्स॑श्चकृमा वयम्"—इति।

"यद् ग्रामे॒ यदर॑ण्ये॒ यत्स॒भाया॒ यदि॑न्द्रि॒ये।

यच्छू॒द्रे यद॒र्ये॑ यदेन॑श्चकृ॒मा व॒यं [ यद॒प्स॑श्चकृमा वयं ] यदे॒क॑स्या॒धि॒ धर्म॑णि॒ एन॒स्ततो॑ व॒यज॑नमसि॒ स्वाहा॑—( य० वा० सं० २० । १७ )"—इति ॥

वरुणप्रघासेषु करम्भपात्रहवने पत्नीयजमानयोर्मन्त्रः। 'यद्ग्रामे' 'वयं' किञ्चित् 'एनः' चकृम, 'यत्' च 'अरण्ये' 'यत्' च 'सभायाम्' 'यत्' च 'इन्द्रिये' प्रजनने निमित्तभूते सति, 'यत्' च 'शूद्रे' 'यत्' च 'अर्ये' वैश्ये, च अन्यत्रापि क्वचिद् ग्रामादिभ्यः 'वयम्' 'एनः' 'चकृम' कृतवन्तः, ['यत्' च 'अप्सः' 'चकृम' यदभक्ष्यभक्षणं कृतवन्तः, 'वयं' किञ्चित्तदेनोऽनेकप्रकारमेकैकस्यापि आवयोश्चेतसि निमित्तभूते उत्पन्नं किञ्चित्, ] 'यदेकस्याधि धर्मणि' यदघं तदनेकप्रकारमेकस्यावयोः 'धर्मणि' कर्मणि निमित्तभूतम्,—यच्च सह कृतम्, यच्च पृथक् कृतम्, यच्च मानसम्, यच्च शारीरम्, तस्य सर्वस्यापि एनसोऽस्माकम् अपनयनं कृत्वा ततः 'अवयजनमसि' मरुतां हे हविः! करम्भपात्राख्यप्रघासान् हवामहे। "मरुतः"—इत्यतो विशेषलिङ्गान्मारुतत्वमस्याध्यवसीयते। यत् "अप्सः"—इत्येष शब्दः अभक्ष्यस्याभिधायको दृष्टः, तस्मात्साधूक्तम्—"अपि वाप्स इति रूपनामाप्सातेः"—इति ॥

अधुना यदुक्तं "व्यापनीयं वा"—इति "आप्लृ व्याप्तौ ( स्वा० प० )" इत्येतस्य "वाप्स इति"—तस्यार्थस्य ख्यापकं निगमं ब्रवीति,—अप्सो नामेति व्यापिनः"—इति। यथा आप्नोतिः अभिव्याप्त्यर्थः, तस्याप्स इत्येतद्रूपनाम भवति, तथैव निगमः,—

"पृ॒थि॒व्याः पुरी॑षम॒स्यप्सो॒ नाम॒ तां त्वा॒ विश्वे॑ अ॒भिगृ॑णन्तु दे॒वाः।

स्तोम॑पृष्ठा घृ॒तव॑ती॒ह सी॑द प्र॒जाव॑द॒स्मे द्रवि॒णा य॑जस्वा॒श्विना॑ध्व॒र्यू सा॑दयता॒मि॒ह त्वा॑ ॥ ( य० वा० सं० १४, ४ )"—इति ॥

अग्निचयने द्वितीयायां चितावाश्विन्यो नामेष्टकाः, तासामेकस्यामयमुपधानमन्त्रः। 'पृथिव्याः' 'पुरीषमसि' पूरयित्र्यसि। हे इष्टके! 'अप्सो नाम' 'तां' 'त्वा' त्वाम् एवङ्गुणयुक्तां सतीं 'विश्वे' सर्वे 'अभिगृणन्तु' अभिष्टुवन्तु 'देवाः'। किञ्च, सा त्वं 'स्तोमपृष्ठा' देवैः उदीरितेन स्तोमेन स्पृष्टा 'घृतवती' उदकवती उदकेन संश्लेषिता 'इह' अग्निचयने 'आसीद'। किंच—'अस्मे' अस्मभ्यं 'प्रजावत्' पुत्रपौत्रादियुक्तानि 'द्रविणा' द्रविणानि धनानि 'आयजस्व' सर्वतो देहि। यजतिर्दानार्थः। किंच, 'अश्विना' अश्विनौ देवौ 'अध्वर्यू' 'सादयताम् इह त्वा' तौ हि संजानीतो[3] यथा त्वं सादयितव्येत्यभिप्रायः। एवमत्रापि व्याप्त्यर्थस्याप्स इत्युपपद्यते, इह भक्षणार्थासम्भवात् ॥

१ 'मणि तस्या वयज' ॥ २ 'म्भपत्रे हव' ॥ ३ 'विजानीतो' ॥

एवं तावदप्सरा इत्यस्याभिधानस्याप्स इत्ययमेकदेश उपपादितः, अधुना 'रा'—इत्येतमेकदेशमुपपादयिष्यन्नाह,—"तद्रा भवति रूपवती" । रो मत्वर्थे, तेनाप्सशब्दवाच्यत्वेन रूपेण तद्वती सा भवत्यप्सराः तद्रा भवतीत्येवमुक्तेऽपि सति रेफस्य मत्वर्थता न गृह्यत इति मन्यमानो भाष्यकारः स्पष्टमेव मत्वर्थमाह—तद्रा भवति रूपवतीति । यदुक्तं रूपवतीति रूपसंयुतेत्यर्थः । तस्या एव सर्वयोषिद्भ्यः प्रतिविशिष्टं रूपमित्यभिप्रायः ॥ अथ "वा" एवमन्यथा स्यात्,—"तदनया" अप्सशब्दवाच्यं रूपम् "आत्तं" गृहीतमेव कुतश्चित् । एतस्मिन् पक्षे 'रा'—इत्ययमादानार्थः ॥ अथ 'वा' एवमन्यथा स्यात्, "तत्" अप्सशब्दवाच्यं रूपमतिरिक्तमिव "अस्मै" तस्यै "दत्तम्" विधात्रा । तथाहि तत्तस्यामतिशयेनानपायि च लक्ष्यते । एतस्मिन् 'रा'—इत्ययं दानार्थः ॥ ५ । १३ । १ ॥

## तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादिन्येषर्ग्भवति—

"तस्याः" एवङ्गुणविशिष्टाया उर्वश्या अप्सरसः "दर्शनात्" "मित्रावरुणयोः रेतः" "चस्कन्द" स्कन्नम् । "तत्" तस्यार्थस्य "अभिवादिनी" "एषा ऋग् भवति"—॥ *

### "उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ॥"

### अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन—॥

"उतासि मैत्रावरुणः"—इति । वसिष्ठस्य सपुत्रस्येयमार्षम् । तस्यैव स्तुतिरिन्द्रस्य वा । "उत"—इत्ययम् अपिशब्दार्थे वर्त्तमानोऽधस्त्यायामृचि ये जन्मनी वसिष्ठस्योक्ते, ते सम्भावयति । सा पुनरियमृक्,—

"विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा । तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार ॥ ( ऋ० सं ५, ३, २३, ५ )"—इति ॥

'विद्युतः' विशेषेण, द्योतते देदीप्यते इति विद्युत्—उर्वशी—इति, अस्मात् । 'ज्योतिः' प्रकाशः । तस्मात् 'परि' परितोऽधिकं 'सञ्जिहानम्' उत्तिष्ठन्तम्, जायमानमित्यर्थः । 'मित्रावरुणौ' देवौ 'यत्' 'अपश्यताम्' 'त्वा' त्वाम् 'तत्' 'ते' तव 'जन्म' 'एकम्'

---

१ 'अप्सः रा' ॥ * अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा 'तस्या एवंगुणविशिष्टायाः' इत्यतः प्रागुचिता ॥

हे 'वसिष्ठ' ! उत अपि च 'यत्' 'त्वा' 'अगस्त्यो विश आजभार' अगस्त्यः ऋषिः विशः मनुष्यान् प्रति, मनुष्यलोकम् आजभार आहृतवान्, तत् ते तव द्वितीयं जन्म ॥

"उतासि" "अप्यसि" अपि चासि "मैत्रावरुणः" हे "वशिष्ठ!"। कथं पुनर्मित्रावरुणयोरुत्पन्नोऽसि–किं सङ्घर्षेण ? न, इत्युच्यते,–"उर्वश्याः" सकाशात् । हे "ब्रह्मन् !" "मनसोऽधिजातः" न सङ्घर्षणेन । किञ्च, निर्बीज एवासि, मनोऽभिध्यानमात्रादुत्पन्नः ? न, इत्युच्यते । किं तर्हि ? "द्रप्सं" शुक्रम्, उर्वशीदर्शनात् "स्कन्नं" "मित्रावरुणयोः" । "ब्रह्मणा" "दैव्येन" देवानां स्वभूतेन, ऋग्यजुःसामाख्येन स्तुवन्तः "विश्वेदेवाः" मा एतद् भूमौ पतेदिति कुम्भस्योपरि "पुष्करे" उदके, अन्तरिक्षे वा "त्वा" त्वाम्, तेन शुक्रेण सहैकतामुपगतम् "अदन्त" अधारयन्तेत्यर्थः ॥ एवमेतस्मिन् "द्रप्सं स्कन्नम्"–इत्येवमादिना सम्बन्धेन "उर्वशी" शब्देन "अप्सराः"–उच्यत इत्युपपद्यते ॥

"रौद्रेण किल तेजसा निर्दग्धो वसिष्ठः मित्रपरिगृहीतायामुर्वश्यामुत्पन्नो वरुणतेजसो जातः"–इति पुराणे श्रूयते, तदप्युपेक्षितव्यम् ॥

अनेकविधो हि मन्त्राणां विषयः, वसिष्ठस्येयमार्षं युष्मदश्चात्र प्रयोगः,–"उतासि"–इति, तदेतद्विरुद्धार्थमिवोपलक्ष्यते ? नैतद्विरुद्धम्, नित्यत्वान्मन्त्राणां भवति–॥

**द्रप्सः संभृतः प्सानीयो भवति सर्वे देवाः पुष्करे त्वाधारयन्त॥ पुष्करमन्तरिक्षं पोषति भूतान्युदकम् । पुष्करं पूजाकरं पूजयितव्यं वा ॥**

**इदमपीतरत् पुष्करमेतस्मादेव पुष्करं वपुष्करं वा ॥**

**पुष्पं पुष्पतेः ॥ १ ॥ १४ ॥**

आह–रेतः कस्मात् "द्रप्सः"–इत्युच्यते ? स हि रेतःसञ्ज्ञको रसः, पुरुषस्याङ्गाङ्गात् "सम्भृतः" स्त्रीयोनेः "प्सानीयो भवति" भक्षणीयो भरणीयश्च । एवं "प्सातेः (अदा० प०) भरतेश्च (भ्वा० उ०)" यथासम्भवं "द्रप्सः"–इत्येष शब्दो द्रष्टव्यः ॥

पुष्करशब्दोऽनेकार्थः, तमिह प्रसक्तं व्याचष्टे,–"पुष्करमन्तरिक्षम्" तद्धि "पोषति भूतानि" पुष्णात्यवकाशदानेनोपकुर्वत् । "उदकम्" अपि "पुष्करम्" तेन हि पूजा क्रियते, देवादिभ्यः तत्पूजाकारकत्वात् पुष्करम् ॥ अथवा–"पूजयितव्यम्" पूजनार्हमात्मन एवेति पुष्करम् । "इदम्" अपि "इतरत्" "पुष्करं" पद्मम् "एतस्मा-

१ 'ऐन्द्रे' ॥

देव" कारणात् "पुष्करम्"—इत्युच्यते, तदपि हि "पूजाकरं" पूजयितव्यं च शोभनत्वात्तस्य । अथ "वा" "पुष्करं" तदिति "वपुष्करम्" आबद्धे हि तस्मिन् वपुष्मान् भवति ॥ वपुष्मान् रूपवान्

पद्मप्रसङ्गात् पुष्पशब्दं निराह,—"पुष्पं पुष्पतेः"—इति । "पुष्पतिः विकसनार्थः (दि० प०)," तद्धि विकसितं भवति ॥ ५ । १४ । १ ॥

## वयुनम् ॥ ४८ ॥

### वयुनं वेतेः कांतिर्वा प्रज्ञा वा—॥

"वयुनम् (४८)"—इति, अनेकार्थम्, अनवगतं च । "वेतेः"—इति धातुनिर्देशः, वेनम्—इति न्याय्यम् । "कांतिर्वा" अभिधेया "प्रज्ञा वा"—॥*

### "स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ।"

### स तमोऽप्रज्ञानं ततन्वत् सूतं सूर्येण प्रज्ञानवच्चकार ॥ १ ॥

"स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार । प्रज्ञानमिति ज्ञायते ।
कदा ते मर्त्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥ (ऋ० सं० ४, ६, ११, ३)"—इति ॥

भरद्वाजस्यार्षम् । त्रिष्टुप् । ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते ॥ यस्त्वमेवङ्गुणविशिष्टो हे भगवन्निन्द्र ! यथागुणं त्वामवोचाम, "सः" त्वम् "इत्" एतत् शार्वरं "तमः" "अवयुनम्" अप्रज्ञानलक्षणं "ततन्वत्" स एव तं सर्वमेवैनं लोकं स्वेन प्रकाशाख्येन रूपेण सन्तनोति "सूर्येण वयुनवत्" "प्राणो हीन्द्रः, तस्मात्सूर्य उदेति, प्राणाद्वा एष उदेति, प्राणेऽस्तमेति"—इति ह्युक्तम् । तस्मात् प्राण इन्द्रः, सूर्यस्योदयहेतुः, स तं सूर्यमुदग (द्ग) मयत् । तेन सूर्येण वयुनवत् "प्रज्ञानवत्" "चकार" एतज्जगत् ज्ञानवत् करोति । तस्मात् स (इन्द्र) एवेन्द्र एवमुच्यते,— सूर्येण त्वमेतज्जगद्वयुनवत्प्रज्ञावत् चकार कृतवानसीत्यर्थः । यस्त्वमेवम्प्रभावः तस्य तव 'कदा' कस्मिन् काले 'मर्त्ताः' मरणधर्माणो मनुष्याः 'अमृतस्य' अमरणधर्मिणः 'धाम' स्थानं 'इयक्षन्तः' यष्टुमिच्छन्तः 'न मिनन्ति' न श्रयन्ति हे 'स्वधावः' अन्नवन् । सर्वदैव तवापरिक्लिष्टं स्थानम्, कृतावकाशस्त्वं यज्ञेष्वित्यभिप्रायः ॥ एवमिह "तमः ततन्वत् सूर्येण" "वयुनवत् चकार"—इति अनेन सम्बन्धात् "वयुन"—शब्देन प्रज्ञानमित्युच्यत इत्युपपत्तिः । कान्त्यर्थत्वमपि क्वचिदुपेक्ष्यम्, इहैव वा पक्षेण योज्यम् ॥ ५ । १५ । १ ॥

---

१ 'व्यवहृते' * अत्र चतुर्दशखण्डः समाप्तिं गम्यते, सा "वयुनम्"(४८)इत्यतः प्रयुक्ता ॥

## वाजपस्त्यम् ॥ ४९ ॥

वाजपस्त्यं वाजपतनम् ।

"सनेम वाजपस्त्यम्" इत्यपि निगमो भवति ॥ २ ॥

"वाजपस्त्यम् ( ४९ )"—इत्येतदनवगतम् । "वाजपतनम्"—इत्यवगमः ॥ ]

"तं सखायः पुरोरुचं यूयं वयं च सूरयः ।
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ ( ऋ० सं० ७, ४, २४, ६ )"—इति ।

पावमानी सौमी । अम्बरीषश्च ऋजिश्वा च सूक्तं ददृशतुः, तत्रैषा । 'तम्' एनं सोमं हे 'सखायः !' ऋत्विजः ! 'पुरोरुचम्' अग्रतो दीप्तम्, 'यूयं वयं च' सम्पृक्ताः सन्तः, हे 'सूरयः !' मेधाविनः ! 'अश्याम' व्याप्नुयाम वयम् 'वाजगन्ध्यम्' प्रतिविशिष्टान्नसमानगन्धम्, अथवा—वाजग्रहीतारम्, अथवा—वाजसम्मिश्रयितारम् । किञ्च, "सनेम" सम्भजेमहि "वाजपस्त्यम्" वाजमन्नम्, एतदस्माकमिति मन्यमानाः सन्तो यं सोममाभिमुख्येन देवाः पतन्ति गच्छन्ति, स वाजपस्त्यः सोमः, तं नित्यकालमेव वयं भजेमहि ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "वाजपस्त्य"—शब्देन सोम उक्तः ॥ ५ । १५ । २ ॥

## वाजगन्ध्यम् ॥ ५० ॥

वाजगन्ध्यं गध्यत्युत्तरपदम् ।

अश्याम वाजगन्ध्यम्" इत्यपि निगमो भवति ॥ ३ ॥

"वाजगन्ध्यम् ( ५० )"—इत्येतदपि पदमेकस्मिन्नेव निगमे निरुक्तम्, केवलं समाम्नायानुक्रमविपर्यासः,—"वाजपस्त्यम्, वाजगन्ध्यम्"—इत्येष समाम्नायानुक्रमः, निगमे पुनः—"अश्याम वाजगन्ध्यम्, सनेम वाजपस्त्यम् ( ऋ० सं० ७, ४, २४, ६ )"—इति ॥ ५ । १५ । ३ ॥

## गध्यम् ॥ ५१ ॥

गध्यं गृह्णातेः ।

"ऋज्रावाजं न गध्यं युयूषन्" इत्यपि निगमो भवति॥ ४

"गध्यम् (५१)"—इत्येतदनवगतम् । ग्रहणीयमित्यर्थप्रतीतिः ।
यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ॥
ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन् पार्याय भूषात् ॥ (ऋ० सं० ३, ५, १९, १)"—इति ॥

वामदेवस्यार्षम् । ऐन्द्री । त्रिष्टुप् । अहीनसूक्ते चतुर्विंश उक्थे माध्यन्दिने सवने मैत्रावरुणस्येयं शस्त्रे शस्यते । हे भगवन्निन्द्र ! 'यासि' 'कुत्सेन' ऋषिणा स्तूयमानः । अथवा कुत्सेन वज्रेणाभ्युद्यतेन, 'सरथं' समानगमनम्, अभिवहनैरथमारुह्य अथवा 'सरथं' रथसंयुक्तं परानीकम् । 'अवस्युः' रिरक्षिषुः आत्मीयाम्, ममर्दिषुश्च परकीयाम् । 'तोदः' तुन्न इव केनचित् 'वातस्य' जवेन यासि । तथापि च गच्छन् 'हर्योः' अश्वयोः 'ईशानः' ईश्वरो न धावति त्वयि अन्यत एव त्वामूहतुः । स त्वं भज "ऋज्रा" ऋजुनैव मार्गेण न काञ्चिदन्यां गतिं धावमानः, "वाजं न गध्यम्" वाजमिव ग्रहणार्हं भोक्तुमाभिमुख्येन । 'युयूषन्' पुनःपुनः सम्मिश्रयिष्यन्, आत्मानं शत्रुभिर्युद्धे । 'कविः' क्रान्तदर्शनः असंमूढः । 'यदहन्' यस्मिन्नहनि 'पार्याय' पारणाय शत्रूणामुपरि चेतः करोषि, पारयितव्या मयैत इति वा, तस्मिन्नेवाहनि तान् सर्वान् 'भूषात्' अतिक्रम्य वर्त्तसे इत्यर्थः । पर्यगृह्णात्, पर्यरक्षत्, अत्यक्रामत्—इत्येते भूपतेरर्थाः ॥ एवमेतस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च "गध्यम्"—इत्येष शब्दः "गृह्णातेः"—इत्युपपद्यते ॥ ५ । १५ । ४ ॥

*तोदः तोदक इति तु सायणः। नाएत्र ध्यायान्, इन्द्रस्य तत्रैव सायणभाष्ये।*

## गधिता ॥ ५२ ॥

### गध्यतिर्मिश्रीभावकर्मा ।

### "आगधिता परिगधिता" इत्यपि निगमो भवति ॥ ५ ॥

"गध्यातिः (५२)"—इत्यप्रतीतार्थः । स पुनरेष "मिश्रीभावकर्मा" ॥
"आगधिता परिगधिता या कशीकेव जङ्गहे ।
ददाति मह्यं यादुरी याशूनां भोज्या शता ॥ (ऋ० सं० २, १, ११, १)"—इति ॥

*कशीका = नकुली*

भावयव्यस्यार्षम् । "आगधिता" आगृहीता आमिश्रिता च । "परिगधिता" चं परिमिश्रीकृता बाहुभ्यां मया परिष्वक्तेत्यर्थः । 'या' 'कशीकेव' प्रतिकशं कशीकेव, या हि नकुलजातिः, कांचिद्दिवे कशामिति श्रूयतेऽश्वमेधे । सा यथा मदकाले प्रतिक-

---

१ 'गध्यम्' इत्येव निघण्टौ निगमे च दृश्यते । अत एवोपलभ्यमानस्यापि 'गन्ध्यम्' पाठस्य स्थाने 'गध्यम्' इत्येव स्थापितम् ॥ २ अभिवहनै रथम् ॥

शर्मतिलरां परिष्वजति, स हि तस्याः परिष्वजनस्वभावः । एवं या माम् 'आजङ्घे' परिगृह्णाति बाहुभ्याम् । परिगृह्य च 'ददाति' । 'यादुरीया' आदरवती, अथवा-यादः रेतःसेकेन तद्वती । "यादः"-इत्युदकनामसु पठितम् । आह-किं ददाति 'मह्यम्' इति, उच्यते-'याशूनां' मैथुनाख्यानां 'शता' शतानि बहुश इत्यर्थः । या एवम्प्रकारा सा मम 'भोज्या' पत्नीत्यभिप्रायः ॥ एवमत्र मैथुनसम्बन्धात् शब्दसारूप्याच्च "गध्यतिः मिश्रीभावकर्मेत्युपपद्यते ॥ ५ । १५ । ५ ॥

## कौरयाणः ॥ ५३ ॥

### कौरयाणः कृतयानः ।

### "पाकस्थामा कौरयाणः" इत्यपि निगमो भवति ॥ ६ ॥

"कौरयाणः ( ५३ )"-इत्यनवगतम् । "कृतयानः"-इत्यवगमः ॥

"यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः ।

विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥ ( ऋ० सं० ५, ७, २१ )"-इति ॥

मेधातिथेः काण्वस्यार्षम् । यानमनया प्रशस्यते । 'यं' 'मे' मम 'दुः' दत्तवन्तः 'मरुतः' 'इन्द्रः' च । "पाकस्थामा" विपक्वप्राणः, "कौरयाणः" संस्कृतयानः 'विश्वेषां त्मना' सर्वेषामपि यानानाम् अन्यप्रतिग्रहीतृशक्तानां[1] मध्ये आत्मना तदेव 'शोभिष्ठं' शोभनतमम् अनेक रत्नविचित्रत्वात् 'दिवि इव' ज्योतिश्चक्रम् 'उपधावमानं' दृश्यते ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "कौरयाणः"-"कृतयानः"-इत्युपपद्यते ॥ ५ । १५ । ६ ॥

## तौरयाणः ॥ ५४ ॥

### तौरयाणस्तूर्णयानः ।

### "स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः" इत्यपि निगमो भवति ॥ ७ ॥

"तौरयाणः ( ५४ )"-इत्यनवगतम् । "तूर्णयानः"-इत्यवगमः ॥

"जातं यत्त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे ।

स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः ॥ ( ऋ० सं० )"-इति

'जातं' जातमात्रं विश्वेदेवाः 'यत्' 'त्वा' त्वां 'पर्यभूषन्' परिगृहीतवन्तः, 'महे' महते 'भराय' भरणाय, महान्तमसुरैः सह संग्रामं करिष्यतीत्यनेनाभिप्रायेण । "स

---

1 'सक्तानां' ॥

त्वं हे "पुरुहूत !" "इन्द्र" ! "तौरयाणः" त्वरितयानो भूत्वा "उपयाहि" उपगच्छैनं "यज्ञम्" "मरुद्भिः" "सखिभिः" सह "सजोषाः" सम्प्रीयमाणः । उपागत्य च अस्माकमाशिषः समर्द्धयेत्यभिप्रायः ॥ एवमत्रागमनसम्बन्धात् "तौरयाणः- तूर्णयानः"–इत्युपपद्यते ॥ ५ । १५ । ७ ॥

## अह्रयाणः ॥ ५५ ॥

### अह्रयाणोऽह्रीतयानः ।

### "अनुष्ठुया कृणुह्यह्रयाण" इत्यपि निगमो भवति ॥ ८ ॥

"अह्रयाणः ( ५५ )"–इत्यनवगतम् । "अह्रीतयानः"–इत्यवगमः ॥

"त्वया वयं सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ॥
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ ( ऋ० सं० ३, ४, २५, ४ )"–इति ॥

वामदेवस्यार्षम् । त्रिष्टुप् । अग्नये रक्षोघ्ने अष्टाकपालः, तत्र स्विष्टकृतः पुरोऽनुवाक्यैषा, मैत्रावरुणीयके । हे भगवन् अग्ने ! 'त्वया वयं' 'सधन्यः' समानधनिनः यदेतदस्मद्गृहे धनमेतदावयोः सहेत्यभिप्रायः । यत एवमतो ब्रूमः,–'त्वोताः' त्वयैव रक्षिताः सन्तः, 'तव' 'प्रणीती' प्रणीत्या तवैव प्रणयनेन 'अश्याम वाजान्' प्राप्नुयामोऽन्नानि । किञ्च, 'उभा शंसा' उभावपि शंसितारौ,–यश्चाग्रतो नः पापानि शंसति, यश्च पृष्ठतः, तावुभावपि 'सूदय' सुष्ठु जहि । हे 'सत्यताते' यज्ञतनितः ! किञ्च, "अनुष्ठुया" अनुष्ठानेन "कृणुहि" कुरु कर्मणैतत्सम्पादय यदहं ब्रवीमि । हे "अह्रयाण !" अलज्जितयानेत्यर्थः ॥ एवमत्र अह्रयाणः–इत्यनेन अह्रीतयानोऽभिरुच्यते देवतेति । उपपद्यते हि देवताया अलज्जितयानत्वम् ॥ ५ । १५ । ८ ॥

## हरयाणः ॥ ५६ ॥

शोभनं नामास्येति सुनामा यजमानः विशेषः

### हरयाणो हरमाणयानः ।

### "रजतं हरयाणे" इत्यपि निगमो भवति ॥ ९ ॥

"हरयाणः ( ५६ )"–इत्यनवगतम् । "हरमाणयानः"–इत्यवगमः ॥

"ऋज्रमुक्षण्यायने रजतं हरयाणे ॥
रथं युक्तमसनाम सुषामणि ॥ ( ऋ० सं० ६, १, २५, २ )"–इति ॥

विश्वमनसो वैयश्वस्येयमार्षम् । उष्णिक् । यानमनया स्तूयते । 'ऋज्रम्' ऋजुगामिनम्, 'रथम्' "रजतम्" रजतमयं रजतविकृतं वा, 'युक्तम्' अश्वैः । 'असनाम' लब्धवन्तो वयम् ॥ क्व पुनर्लब्धवन्तः ? 'उक्षण्यायने' । उक्षण्यायन इति कश्चिदासीत्, तस्मिन् यजमाने, "हरयाणे" हरमाणयाने नित्यकालमेवाभिप्रस्थितयाने, 'सुषामणि' शोभनं सामास्य सुषामा, तस्मिन् यजमाने । तादृशः स महादक्षो दातेत्यभिप्रायः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "हरयाणः—हरमाणयानः"—इत्युपपद्यते ॥ ५ । १५ । ९ ॥

## आरितः ॥ ५७ ॥

### "य आरितः कर्मणि कर्मणि स्थिरः।" प्रत्यृतः स्तोमान् ॥ १० ॥

"आरितः ( ५७ )"—इत्यनवगतम् । प्रतीत्यस्य स्थाने आङ्, "प्रत्यृतः"—इत्यर्थप्रतीतिः ॥

"यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः । वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ॥ ( ऋ० सं० १, ७, १२, ४ )"—इति ॥

कुत्सस्येयमार्षम्।व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते 'यः' 'इन्द्रः' 'अश्वानां' 'गवां' च 'गोपतिः'। किञ्च, "यः" "आरितः कर्मणि कर्मणि स्थिरः" आरितः सर्वान् "स्तोमान्" प्रति योऽवस्थितः । केन ? देवतारूपेण सर्वेषु स्तोमेषु चावस्थानात् । यः कर्मणि कर्मणि अग्निहोत्रादौ स्थिरः नित्यः, यमृते न किञ्चन कर्म प्रवर्त्तत इत्यभिप्रायः । किञ्च, 'वीळोश्चित्' संस्तब्धस्यापि दर्पितस्यापि 'यः' 'इन्द्रः' 'असुन्वतः' अभिषवमकुर्वाणस्य 'वधः' वधयिता । तमेवङ्गुणयुक्तं 'मरुत्वन्तं' मरुत्सहितम्, इन्द्रम्, 'सख्याय' सखिभावाय एतस्मिन् कर्मणि 'हवामहे' आह्वायाम इत्यर्थः ॥ एवमयम् "आरित"—शब्दोऽर्थोपपत्त्या "प्रत्यृतः"—इत्युपपद्यते॥५।१५।१०॥

## व्रन्दी ॥ ५८ ॥

### व्रन्दी व्रन्दतेर्मृदुभावकर्मणः—॥

"व्रन्दी ( ५८ )"—इत्यनवगतम् । "व्रन्दतेर्मृदुभावकर्मणः" धातुरेवायमप्रतीतः—॥ *

---

* अत्रैव पञ्चदशखण्डसमाप्तिर्दृश्यते, सा 'व्रन्दी इत्यनवगतम्।' इत्यतः प्रागुचिता॥

"नियद्वृणक्षिश्वसनस्यमूर्द्धनि शुष्णस्य चिद्व्रन्दिनोरोरुवद्वना ।"

निवृणक्षि यच्छ्वसनस्य मूर्द्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा वधेनेति वा॥

"अव्रदन्तवीळिता" इत्यपि निगमो भवति ।

वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ पूर्वेण संप्रयुज्येते१ ॥

एष एव निगमः–

"नि यद्वृणाक्षि श्वसनस्य मूर्द्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद्वना ।
प्राचीनेन मनसा वर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥ ( ऋ० सं० १, ४, १७, ५ )"–इति ॥

सव्यस्येयमार्षमाङ्गिरसस्य । जगती । ऐन्द्री । स पुनरिन्द्र एवाङ्गिरसः पुत्रत्वमापन्नः ॥ "निवृणाक्षि" निर्वर्णयसि[2] "यत्" यस्त्वं हे भगवन्निन्द्र ! मेघं हत्वा "श्वसनस्य" "शब्दकारिणः" वायोः "मूर्द्धनि" उपरि "शुष्णस्य चित्" "शोषयितुः" अपि भगवतः "आदित्यस्य" "व्रन्दिनः" मृदुभावकर्त्तुः, आदित्येन हि परिपच्यमानं संस्तब्धमपि वदरतिन्दुकादि मृदु भवति, तस्मादसौ व्रन्दी । तस्याप्येवं कर्मकारिणो मण्डलं प्रत्यूर्ध्वं "रोरुवत्" स्तनयित्नुशब्दं कुर्वाणः । "वना" "वनानि" विक्षिपसि । ऊर्द्ध्वमधश्च वनानि उदकानि विक्षिपतो न ते शक्तिप्रतिघातोऽस्तीत्यभिप्रायः । यस्मिंस्तु पक्षे "वधेन"–"इति वा" निर्वचनम्,तस्मिन् पक्षे 'वना'–इत्येष शब्दो मेघवधेनेति प्रयोज्यः । उदकशब्दश्चैतस्मिन् पक्षेऽध्याहार्यो निवर्जनसम्बन्धात् । 'प्राचीनेन' प्रागञ्चितेन, अदीनेन, तस्मिन् कर्मण्यभिमुखेन, 'मनसा' 'वर्हणावता' हिंसावता 'यत्' 'अद्या चित्' अद्यत्वेपि त्वं कर्म 'कृणवः' करोष्येव, असुकरमन्यैः, तस्माद् ब्रवीमि,–'कः त्वा परि'? कोऽन्यस्त्वाम् उपरि वर्त्तते, त्वमेव सर्वभूतानि परिगृह्य वर्त्तस इत्यभिप्रायः ॥ एवमत्र "व्रन्दि"–शब्देनादित्य उक्तः । तत् पुनरेतदस्पष्टं मृदुभावकारणादादित्यस्य व्रन्दित्वमित्यस्य व्रन्दित्वमिति । अतो व्रन्दिशब्दस्य मृदुभावार्थोपपिपादयिषया व्रीडयतिना संस्तम्भार्थवाचिना सह सम्बद्धोऽत्र व्रन्दतेः प्रयोगः ॥

ततो [ निनयेति ] निगमात् व्रन्दतेर्हि मृदुभावार्थता स्पष्टतरेति दर्शयति,–"अव्रदन्त

१ 'एष एवानवगमः' ॥ २ 'निर्जयसि' ॥ ३ 'यतो' ॥

वीळितेत्यपि निगमो भवति" । अपि पूर्वोऽप्ययं स्फुटतर इत्यपिशब्दः ॥ "वीळयतिश्च व्रीळयतिश्च" एतौ द्वावपि "संस्तम्भकर्माणौ" "पूर्वेण" अनेनैव अनन्तरेण व्रन्दिना यस्मात् समानवाक्यतामुपगतौ "संप्रयुज्येते" तस्मात् व्रन्दिशब्दस्य मृदुभावार्थत्वमुपपद्यते ॥

"तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृह्ळाव्रदन्त वीळिता ।
उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥ ( ऋ० सं० २, ७, १, ३ )"—इति ॥

गृत्समदस्यार्षम् । जगती । बार्हस्पत्ये, सूक्ते । 'तत् कर्त्वं' तत् कर्म 'देवानां' 'देवतमाय' देवतमस्य बृहस्पतेः, यत् 'अश्रथ्नन्' श्लथान्यभवन्, 'दृह्ळा' दृढान्यपि सन्ति मेघवृन्दानि । किञ्च, "अव्रदन्त" मृदून्यभवन् । कानि पुनस्तानि मृदून्यभवन् ? इति, उच्यते—"वीळिता" यानि वीडितानिव्रीडितानि सन्नद्धानि दर्पितानि, असुरकुलानि, अन्यानि वा यानि कानिचित्, तानि मृदून्यभवन्निति । किञ्च, 'उद् गाः आजत्' उदाजद् गाः, उदगमयदपः । 'अभिनत्' 'वलम्' मेघम्, 'ब्रह्मणा' स्तूयमानः । किञ्च, 'अगूहत्' अनाशयत् 'तमः' वैद्युतात्मना । किञ्च, 'व्यचक्षयत्' व्यदर्शयत् 'स्वः' आदित्यम् । अव्यवधानकरणेन नभसः ॥ एवमत्राव्रदन्त वीळितेति व्रन्दतेव्रीडयतिना सह प्रयोगात् व्रीडतेरर्थवैपरीत्येन व्रन्दतेर्मृदुभावार्थत्वमुपपद्यते, व्रीडयतेस्तु व्रन्दिना सह प्रयोगोऽन्यत्र क्वचित् द्रष्टव्यः ॥ ५ । १६ । १ ॥

## निष्षपी ॥ ५९ ॥

**निष्षपी स्त्रीकामो भवति विनिर्गतसपः ।**
**सपः सपतेः स्पृशतिकर्मणः ।**
**"मा नो मुघेव निष्षपी परादाः ।" स यथा धनानि**
**बिनाशयति मा नस्त्वं तथा परादाः ॥ २ ॥**

"निष्षपी ( ५९ )"—इत्यनवगतम् । "विनिर्गतपसाः"—इति शब्दसमाधिः । "स्त्रीकामः" पुंश्चलेऽभिधेयः, स हि नित्यं निर्गतशेप एव "भवति" । "सपः सपतेः" "स्पृशतिकर्मणः" स्पृशत्यर्थे वर्त्तमानस्य,—शेपः, तेन हि स्त्री स्पृश्यते ॥

---

१ 'कश्चिद्' ॥ २ "पसः सपतेः", "स्पशः स्पशतेः" ॥

"प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात्।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥ (ऋ० सं० १, ७, १८, ५)"—इति ॥ नीथा स्तुतिः

कुत्सस्यार्षम् । ऐन्द्री । त्रिष्टुप् । हे भगवन्निन्द्र ! 'यत्' यस्मात् 'प्रत्यदर्शि' प्रक्षिपस्यतीव, 'स्या' सा 'नीथा' स्तुतिः । "नीथाविदो जरितारः (ऋ० सं० ३, १, ११, ५)"—इत्येतस्मान्निगमात् स्तुतिर्नीथेति प्रतीयते।'दस्योः' शत्रोः दासयितुस्तव 'ओकोन' ओक इव, निवासमिव । 'अच्छ' आभिमुख्येन, हृदयमनुप्रविश्य । 'सदनं' स्थानम्, यत्र तया नीथया स्तुत्या सेत्तव्यम्,—यस्तवाभिमतो गुणः, अनेन यदि नाम मामेष स्तोता स्तुयात्, साधु स्यादिति, तमर्थमनुप्रविश्यैव भवतो हृद्गतम्, तेनार्थेनात्मानमभिसम्बन्धयित्वा एतन्मम सदनमित्येवं 'जानती' च तदेव 'गात्' नित्यकालमेवागच्छति । यत एवमतः स्तुत्युदीरयितारो वयं भवतः । 'अध' एतस्मात् कारणात् वयं ब्रूमः,—हे 'मघवन् !' 'चर्कृतात्' पुनःपुनः क्रियमाणात् एतस्मात् कर्मणः, आत्मनः । स्तुत्याश्रयभूतान् "मा" "नः" अस्मान् "परादाः" पराङ्मुखान् दधीथाः, उपनामय तत् कर्मसाधनानि । कथं च पुनः कर्मसाधनानि ? कथं च पुनर्मा परादाः ? "मघेव निष्षपी" "स यथा धनानि" नित्यविनिर्गतशेपो "विनाशयति" एवम् "नः" अस्मान् "त्वम्" "मा" "तथा परादाः" अवसादयिष्ठाः, धनभूतास्तव वयमतो रक्षस्वेत्यभिप्रायः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च धननामसम्बन्धात् "निष्षपी—विनिर्गतसपः स्त्रीकामः" इत्युपपद्यते ॥ ५ । १६ । २ ॥

उदकम् इत्यर्थः।

## तूर्णाशम् ॥ ६० ॥

**तूर्णाशमुदकं भवति तूर्णमश्नुते ।**
**"तूर्णाशं न गिरेरधि" इत्यपि निगमो भवति ॥ ३ ॥ १६ ॥**

"तूर्णाशम् (६०)"—इत्यनवगतम् । "उदकं भवति"—इत्यभिधेयवचनम् । "तूर्णं" हि क्षिप्रम्, तत् "अश्नुते" व्याप्नोति, तूर्णाशनमिति न्याय्यम् । अपठितं चैतदुदकनामसु, तेनाप्रतीतार्थम् ॥

"प्रतिश्रुताय वो धृषत्तूर्णाशं न गिरेरधि ।
हुवे सुशिप्रमूतये ॥ (ऋ० सं० ६, ३, १, ४)"—इति ॥ मू

मेधातिथेरार्षम् । गायत्री । ऐन्द्री । रात्रिपर्याये शस्यते । मैत्रावरुणस्य प्रथमे शस्त्रे विनियुक्ता ॥ हे ऋत्विग्यजमानाः ! यन्मया प्रतिश्रुतमार्त्विज्यमुपगच्छता अहमिन्द्रं

१ 'स्मर्त' ॥ २ 'शस्त्रे' ॥

स्तुतिभिराह्वयिष्यामीति, तस्मै 'प्रतिश्रुताय' 'वः' युष्माकमुपकरणार्थमेतस्मिन् कर्मणि 'धृषन्' धृष्टं प्रगल्भम्। 'हुवे' आह्वये। 'सुशिप्रं' सुहनुं सुनसं वेन्द्रमहम् 'ऊतये' तर्पणाय, तर्पयामह इति, अथवा- भवतामात्मनश्च रक्षणायेति स्यात्। कथं पुनराह्वयामि ? "तूर्णाशं न गिरेरधि"। यथा तूर्णाशम् उदकम् गिरेः अधि मेघस्योपरि वर्त्तमानमाह्वयन्ति वर्षार्थिनो जनाः। एवमाह्वयामीति॥ एवमत्र गिरिसम्बन्धात् "तूर्णाशम्-उदकम्" इत्युपपत्तिः॥ ५। १६। ३॥

## क्षुम्पम्॥ ६१॥

### क्षुम्पमहिच्छत्रकं भवति यत्क्षुभ्यते-॥

"क्षुम्पम् ( ६१ )"-इत्यनवगतम्। "अहिच्छत्रकं भवति"-इत्यभिधेयवचनम्। "यत्" यस्मात्तत् स्पृष्टमात्रं "क्षुभ्यते" चलति, तस्मात् क्षुम्पं क्षोभणमिति न्याय्यम्-॥*

**"कदा मर्त्तमराधसं पदा क्षुम्पमिव स्फुरत्।**
**कदा नः शुश्रवद्गिर इन्द्रो अङ्ग।"**
**कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति**
**कदा नः शृणोति च गिर इन्द्रो अङ्ग।**
**अङ्गेति क्षिप्रनाम। अञ्चितमेवाङ्कितं भवति॥ १॥ १७॥**

"कदा मर्त्तमराधसं०-इन्द्रो अङ्ग ( ऋ० सं० १, ६, ६, ३ )"-इति॥ गोतमस्येयमार्षम्। उष्णिक्। ऐन्द्री। तार्त्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। "कदा" कस्मिन् काले "मर्त्त" मनुष्यम् "अराधसम्" "अनाराधयन्तम्" यः तमिन्द्रं नाराधयति, स्तुत्या हविषा च, तम्। "पदा" "पादेन" "स्फुरत्" अवस्फुरिष्यति, अभिहिंसिष्यति स इन्द्रः। "स्फुरति ( १५ ) स्फुलति ( १६ )"-इति वधकर्मसु पठितम्। किञ्च, "कदा नः" कदा अस्माकं परिचरणमानानां स्तुतिभिर्हविर्भिश्च "शुश्रवत्" श्रोष्यति "गिरः" सः "इन्द्रः" "अङ्ग" क्षिप्रमित्यर्थः। कदास्माकं परिचरितृणामिन्द्रः श्रोष्यति गिरः, श्रुत्वा च समर्द्धयिष्यत्याशिषः। अनाराधयितॄंश्च कदा पादेनाभिहनिष्यति ? कदा अनाराधयित्राराधयित्रोर्विशेषं ज्ञास्यतीत्यभिप्रायः। स्वरूपेण तावदेषोऽस्य मन्त्रस्यार्थो मया लक्ष्यते, भाष्यं पुनरत्र लोकः

---

१ 'आह्वास्यामि' इति तूचितम्। 'आह्वाययिष्यामि' इति वा॥ * अत्र षोडशखण्डसमाप्तिर्दृश्यते, सा 'क्षुम्पमित्यनवगतम्' इत्यतः प्रागुचिता॥ २ 'श्रोष्यति च गिरः' ॥

"पादेन क्षुम्पमिवावस्फुरसि"—इत्येवमधीतं, तथा च—"कदा नः शृणोति गिरः"—इति ॥ तदेतत् "क्षुम्पमिवावस्फुरसि"—"शृणोति गिरः"—इत्यनयोर्भाष्य-वाक्ययोः पुरुषवैलक्षण्यात् दुर्योज्यो मन्त्रार्थ इति "गिरः अवस्फुरसि"—इति मध्यम-पुरुषयोगः प्रत्यक्षकृतलक्षणाभिसम्बन्धी मन्त्रस्य । "कदा नः शृणोति च गिरः"—इत्येतत् परोक्षकृतलक्षणमेव । एवमेतन्मन्त्रार्थं दुर्योज्यम्, ॥ यद्येष भाष्यस्य सम्यक् पाठः ? अथ पुनरसम्यक् पाठः ? ततः—सम्यक्पाठोऽन्वेष्टव्यः । अहं तु लक्षये,—यथैष मया मन्त्रो व्याख्यातः, स एव सम्यक् पाठः स्यात्—"पादेन क्षुम्पमिवावस्फुरिष्यति"—"श्रोष्यति च गिरः"—इति, तथाहि मन्त्रार्थस्याविरोधो लक्ष्यते । सूक्तेऽपि चास्मिन् काश्चित् परोक्षकृता ऋचः, काश्चित् प्रत्यक्षकृताः । अतोऽपि दुरवधार्योऽस्य भाष्यकारस्याभिप्रायः । अहिच्छत्रकं हि पादेन स्पृष्टमात्रं शीर्यते । तथात्रानाराधयितुर्विनाशोऽभीष्ट इति । "क्षुम्प"—शब्देनाहिच्छत्रकमभिधीयते इत्युपपद्यते ॥ ५ । १७ । १ ॥

## निचुम्पुणः ॥ ६२ ॥

### निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति—॥

"निचुम्पुणः(६२)"—इत्यनवगतम्, अनेकार्थश्च । "निचुम्पुणः सोमः( भवति)" इत्यभिधेयवचनम् । "निचान्तपृणः"—इति शब्दसमाधिः । स हि निचान्तो भक्षितः न "निचमनेन" भक्षणे "प्रीणाति"—॥ *

**पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये ।**
**अपां जग्मिर्निचुम्पुणः ॥"**

**पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापां गन्ता निचुम्पुणः ॥ १ ॥**

"पत्नीवन्तः सुता इमे०—निचुम्पुणः ।" सुकक्षो नाम आङ्गिरसः, तस्येयमार्षम् । गायत्री । ऐन्द्री । रात्रिपर्यायेषु मध्यमे पर्याये होतुः शस्त्रे विनियुक्ता ॥ "पत्नीवन्तः" पत्नीभिः "अद्भिः", तद्वन्तः । "सुताः" अभिषुताः । "इमे" "सोमाः" । "उशन्तः" "कामयमानाः" इव "यन्ति" देवान् प्रति, "वीतये" "अपां पानाय" कामयमानाः

---

* अत्र सप्तदशखण्डसमाप्तिर्दृश्यते, सा 'निचुम्पुण इत्यनवगतम्' इत्यतः प्रत्युचिता ॥

कथं नामास्मान् देवाः पिबेयुरित्येवमर्थं कामयमाना इव यन्ति । किमेतदेव ? नेत्युच्यते । पुनःपुनरेषः "निचुम्पुणः" सोमो हि "अपां" वीर्येण महितः, तासुतासु क्रियासु प्रदीयमानः अस्माभिर्देवान् प्रति "जग्मिः" एव भवति, गन्तैव भविष्यति ॥ एवमिह सोमाधिकारात् "निचुम्पुण"—शब्देन सोम उच्यत इत्युपपद्यते ॥ ५ । १८ । १ ॥

**समुद्रोऽपि निचुम्पुण उच्यते, निचमनेन पूर्यते ॥ २ ॥**

"समुद्रोऽपि निचुम्पुणः"—इति "उच्यते" । स हि "निचमनेन" उदकेन "पूर्यते" उदकं हि निचम्यत इति निचमनम् । मृग्योऽत्र निगमः ॥ ५ । १८ । २ ॥

**अवभृथोऽपि निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा ।**

**"अवभृथ निचुम्पुण" इत्यपि निगमो भवति ॥ ३ ॥**

"अवभृथोऽपि निचुम्पुण उच्यते" । "नीचैरस्मिन् क्वणन्ति" शब्दं कुर्वन्ति । तत्र ह्युक्तम् अवभृथष्टेयोपांश्वेव चरन्ति इति निचुम्पुणः । अथ "वा" "नीचैः" अस्मिन् यज्ञपात्राणि "दधतीति" निचुम्पुणः, तानि हि तत्राप्सु निधीयन्ते ॥

"अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनो यासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहि ॥ (य० वा० सं० ३, ४८)"—इति ॥

अनेनाभिसाद्याप्सु प्रहीयन्ते सोमपात्राणि । हे "अवभृथ" अवभृथदेव ! हे वरुण ! "निचुम्पुण" नीचक्वणन ! 'निचेरुरसि' नीचैश्चरणशीलोऽसि । 'निचुम्पुणो' नीचक्वणनो भूत्वा गृहेगृहे यज्ञगृहेऽवतिष्ठसे । स त्वमेवंगुणविशिष्टः "अव देवैः देवकृतम् एनः यासिषम्" अव यक्षि नः देवैः सहितो देवकृतम् देवनिमित्तम् देवापराधजमेनः 'अव' यक्षि 'मर्त्यैः' सहितः 'मर्त्यकृतम्' मनुष्यकृतम्, एनः, पुरुराव्णः, पुरोः महतोऽपि 'देवरिषः' देवरोषणादस्मात् 'पाहि' ॥ एवमत्र "निचुम्पुण"—शब्देनावभृथ उच्यते ॥ ५ । १८ । ३ ॥

**निचुम्पुण निचुङ्कुणेति च ॥ ४ ॥ १८ ॥**

निचुंकुणोऽप्यनेनैव व्याख्यातः ॥ ५ । १८ । ४ ॥

## पदिम् ॥ ६२ ॥

**पदिर्गन्तुर्भवति यत् पद्यते— ॥**

"पदिम् ( ६३ )"—इत्यनवगतम् । "गन्तुः" एष निर्देशः कृतः "भवति" । "यत् पद्यते" यस्मादसौ पद्यते गच्छतीत्यर्थः । अभिधेयः पक्षी, स हि नित्यकालमेव पतितो भवति—॥ *

"सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वा यन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति॥"

सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति
यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे ॥
'मुक्षीजयेव पदिमुत्सिनाति ।' कुमारः ।
मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च ॥ १ ॥

"सुगुरसत्०—सिनाति ( ऋ० सं० २, १,१०, २ )"—इति ॥ कक्षीवत आर्षम् । य एव "सुगुः" "भवति", शोभनगुः स एव "सुहिरण्यः" भवति स एव "स्वश्वः" भवति । "बृहत्" च "महच्च" "अस्मै" "वयः" अन्नम् "इन्द्रः" "दधाति" ददाति । आह—तस्य किम् ? इति । उच्यते—"यस्त्वाऽऽयन्तं वसुना प्रातरित्वः" । "प्रातरागामिन्नतिथे !" स हि प्रातःप्रातरन्यानि गृहाण्यभ्येति, तेनैवमामन्त्र्यते—"प्रातरित्वः !"—इति । आयन्तम् अध्वानं वसुना अन्नेन क्षुधा विप्रभ्रश्यमानं प्राणम् । "मुक्षीजयेव" पाश्ययेव, "कुमारः" "पदिं" पतितारं पक्षिणम् "उत्सिनाति" उद्गम्य सिनाति, बध्नाति, प्राणांस्त्वपि सन्नियच्छतीत्यर्थः । यथा हि—अतिथिरध्वगो भवति, स पतन् क्षुधितोऽन्नसंयोगेन कस्यचिद् गृहिणो गृहेऽवतिष्ठते, एवमेतत् स्यात् ॥ एवमत्र पक्षी "पदि"—शब्देनोच्यते, स हि अतिक्रममाणः पाश्यया बध्यत इत्युपपद्यते ॥

"मुक्षीजा मोचनाच्च" सा हि अवमुच्यते पक्षिणः पादे । "सयनाच्च" सीयते बध्यते हि तया पक्षी । "ततनाच्च" सा हि पक्षिणां वधार्थं तन्यते । एताभ्यः क्रियाभ्यो यथासम्भवं "मुक्षीजा"—इत्येतदभिधानं भवति ॥ ५ । १९ । १ ॥

## पादुः ॥ ६४ ॥

पादुः पद्यतेः ।

---

* अत्राष्टादशखण्डसमाप्तिर्दृश्यते । सा 'पदिरित्यनवगतम्' इत्यतः प्रागुचिता ॥

१ 'यस्य' २ 'क्षुधाविप्रभ्रश्यमानं प्राणमन्नेन' इति तु मुद्रितपाठः ॥

आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ।"

आविष्कुरुते भासमादित्यो गूहते बुसम् ।

बुसमित्युदकनाम ब्रवीतेः शब्दकर्मणः । भ्रंशतेर्वा ।

यद्वर्षन्पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते ॥ २ ॥ १९ ॥

"पादुः (६४)"—इत्यनवगतम् । "पद्यते:"—इत्यर्थप्रतीतिः ।

सा ते जीवातुरुत तस्य विद्धि मास्मैं तादृगपगूहः समर्ये ।

आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥ (ऋ० सं० ७; ७, १९, ४)"—इति ॥

वसुक्रस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । महाव्रते मरुत्वतीये शस्त्रे शस्यते ॥ हे यजमान ! 'सा' 'ते' तव 'जीवातुः' जीविका, या अस्य भगवतः सूर्यस्य तापप्रकाशवृष्ट्युदयास्तमयरसादानादिलक्षणा प्रवृत्तिः, अनेन सौर्येण कर्मणा सर्वभूतानि त्वं जीवसि[1] इत्यभिप्रायः । यत एवमथैतस्मात् कारणात् ब्रवीमि,—'तस्य' सूर्यस्य 'विद्धि' विजानीहि, यस्त्वया स्तुतिहविर्दानादिलक्षणः प्रत्युपकारः कर्त्तव्यः । 'मा' त्वम् 'अस्मै' सूर्याय, 'एतादृक्' एतादृशमुपकारम् 'अपगूहः' मा संवृतं कार्षीः । प्रत्युपारकायास्मै त्वमभ्युद्यच्छस्वेत्यभिप्रायः । अपि च 'समर्ये' संग्रामे एतास्मिन्, मृत्युना सह वर्त्तमाने, सर्वभूतानाम्, श्वः अद्य वा म्रियेथाः । को हि तद् वेद ?—कस्य कदा मृत्युरिति । स त्वं तत्कृतानि शोभनकार्याणि मन्यमानः, शीघ्रं प्रत्युपकुरुष्वास्मै सूर्यायेत्यभिप्रायः । आह—का पुनः सूर्यस्य प्रवृत्तिः या जीवातुः ? इति । "आविः स्वः कृणुते गूहते बुसम्" । "आविष्कुरुते" प्रकाशीकरोति स्वभासा सर्वमिदमुपभासितं व्यवहाराय कल्पते, "स्वः" आदित्यः । "गूहते" संवृणोति रश्मिभिः "बुसम्" उदकम् । किञ्च, "सः" "पादुः" तत्पदनं तद्गमनमवभासनेन च रसादानादिकर्त्तुः "अस्य" सूर्यस्य "निर्णिजः" उपनिर्णेजयितुः तमःपङ्कदिग्धानि हि रूपाणि स्वेन प्रकाशोदकेन धौतानीव करोतीति निर्णिक् सूर्यः, तस्य निर्णिजः । 'न मुच्यते' नोपरमत इत्यर्थः । यत एवमयमद्य च श्वश्च तवोपकारि प्रवृत्तः । अतः प्रत्युपकुरुष्वास्मा इत्यभिप्रायः ॥ एवमत्र शब्दार्थोपपत्तेः "पादुः=पदनम्"—इत्युपपद्यते ॥

---

१ 'जीवसे' ॥

"बुसमित्युदकनाम" । "ब्रवीतेः शब्दकर्मणः" शब्दार्थस्य ( अदा० प० ), तद्धि शब्दवद्भवति ॥ "भ्रंशतेर्वा" तद्धि भ्रश्यते ( दि० प० ) मेघात् ॥
· "यद् वर्षन् पातयत्युदकम्" आदित्यः, "तत्" "रश्मिभिः प्रत्यादत्ते"—इति समासतो भाष्यकारेणायमस्यार्द्धर्चस्यार्थ उक्तः ॥ ५ । १९ । २ ॥ *

## वृकः ॥ ६५ ॥

वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा ॥ १ ॥ २० ॥

"वृकः ( ६५ )"—इत्यनवगतम्, अनेकार्थश्च । "वृकः" तावत् "चन्द्रमा भवति" स हि "विवृतज्योतिष्कः" प्रकाशितज्योतिष्को भवति, तस्माद् वृकः । अथ "वा" "विकृतज्योतिष्कः"—इति वृकः, तद्धि तस्य विकृतं ज्योतिः शीतत्वात्, इतराणि उष्णानि ज्योतींषि सूर्यादीनि, तान्यपेक्ष्य । अथ "वा" "विक्रान्तज्योतिष्कः" वृकः, तस्य हि विक्रान्तं ज्योतिः, इतरेभ्यो ग्रहनक्षत्रतारकादिभ्यो ज्योतिर्भ्यः सकाशात् । एते शब्दसमाधयः ॥ ५ । २० । १ ॥ *

अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि ।
उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तं मे अस्य रोदसी ॥"

अरुण आरोचनो मासकृन्मासानां चार्द्धमासानां च कर्त्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येनयेन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी जानीतं मेऽस्य द्यावापृथिव्याविति ॥ १ ॥

"अरुणो मासकृत्०—रोदसी ( ऋ० सं० १, ७, २३, ३ )"—इति ॥ त्रितस्येयमाप्त्यस्य कूपे पतितस्य, कुत्सस्य वा आर्षम् । पङ्क्तिः । वैश्वदेवी । "अरुणः" "आरोचनः" आभिमुख्येन सर्वस्य जगतो रोचयिता स्वया ज्योत्स्नया । "मास-

---

* अत्रैवकोनविंशखण्डसमाप्तिर्द्रष्टव्या ॥ "इति निरुक्तवृत्तौ पञ्चमा ( दशमा )—ध्यायस्य तृतीयः पादः ॥ ५, ३ ॥" इति तूपलभ्यते ॥ १ 'र्यादित्युपेक्ष्य' ॥ *अत्र विंशखण्डसमाप्तिर्द्रष्टव्या ॥

कृत्" "मासानां च अर्द्धमासानां च कर्त्ता" । मासशब्दसम्बन्धादर्द्धमासशब्दोऽध्याहृतः, तानपि ह्यसौ निर्मिमीत इति । "चन्द्रमाः" "वृकः" । आह—किं करोति ? इति, उच्यते—"पथा यन्तं ददर्श हि" नक्षत्रमण्डलस्याधोऽवस्थितः पथा स्वेन मार्गेण यन्तं ददर्श पश्यति "नक्षत्रगणम्"—न मामन्धकूपे पतितं पश्यति, यदि नाम पश्येत् कथञ्चिदवश्यमस्यास्त्रायेतापदो मामित्यभिप्रायः। किञ्च, "उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तम्" । यथा कश्चित् तष्टा तक्षा "पृष्ठरोगी" कश्चिद्वृक्षं "तक्ष्णुवन्" उच्छिन्दन्नास्पदेऽयं योग्यो न वा ?—इत्यनेनोत्करणो भूत्वा निचाययति पश्यति, एवं "चन्द्रमाः" अभ्युजिहीते "येनयेन" नक्षत्रेण "योक्ष्यमाणः" भवति—अमुना मयाद्य योक्तव्यम्—इति । एवं "निचाय्य" दृष्ट्वा स्वेन दृष्टात् दर्शनेन । ततस्तदेव "अभिजिहीते" तेनैव सहोदेतीत्यर्थः । एवमस्य येनार्थः, तमथमादरेणोर्द्धकायो हि भूत्वा पश्यति, मया त्वस्यार्थो नास्तीति मां न पश्यत्यधो वर्त्तमानम् । एवमतो ब्रवीमि,—अपि तावत् हे "रोदसी !" "वित्तं" विजानीतं "अस्य" त्रितस्यार्त्तिप्रलापस्य योऽर्थः विदित्वा उत्तरतं मामस्मात् कूपात् इत्यभिप्रायः ॥ एवमत्र अरुणशब्दात् मासकृच्छब्दाच्च "वृकः—चन्द्रमाः" । चन्द्रमः—शब्दाच्च नक्षत्रगणोऽध्याहृतः, तथार्थोपपत्त्यविरोधात् ॥

येषां तु शाखिनां "मा सकृत्"—इत्येतत् पदद्वयं भवति, तेषां सकृत् मां ददर्श चन्द्रमाः, यदि पुनःपुनः पश्येदवश्यं मोचयेदस्या आपदः, पथा तु यन्तं नक्षत्रगणं पुनः-पुनः पश्यति न मामित्येवमादि योज्यम् ॥ ५ । २१ । १ ॥

## आदित्योऽपि वृक उच्यते । यदावृङ्क्ते—॥

"आदित्योऽपि वृक उच्यते"। "यद् आवृङ्क्ते" यस्मादसौ तम आवृङ्क्ते, तस्माद्वृकः—॥

## "अजोहवीदश्विना वर्त्तिका वामास्नो यत्सीममुञ्चतं वृकस्य"। आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानम् ॥ २ ॥

"अजोहवीदश्विना वर्तिकावामास्नो यत्सीममुञ्चतं वृकस्य ।
विजयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ ( ऋ० सं० १, ८, १६, १ )"—इति ॥

---

१ 'दक्षं' ॥ २ 'उच्छेदनास्पदे वयं योज्यो न वा ?—इत्यनेनोत्कटो भूत्वा' इति हि मुद्रितमासीत् ॥

कक्षीवत आर्षम् । आश्विनी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "अजोहवीत्" "आह्वयत्" आहूतवती "उषाः" । हे "अश्विनौ !" युवाम् । वर्त्तनशीला "वर्त्तिका" ॥ कदा पुनराह्वयत् ? इति, उच्यते—"आस्नः" आस्यादनां "वां" युवाम् "आमुञ्चतम्"। "वृकस्य" आदित्यस्य। "उषाः" किल "आदित्येनाभिग्रस्ता अश्विनौ" आह्वयत् आहूतवती, "तामश्विनौ प्रमुमुचतुः" प्रमोचितवन्तौ "इत्याख्यानम्"—एतस्मिन्नर्थं वेदयन्ते निदानविदो बह्वृचाः, तदप्युपेक्षितव्यं मन्त्रार्थनिर्णयाय—'आस्नो वृकस्य वर्त्तिकामभीके युवं नरा नासत्यामुमुक्तम् ॥(ऋ०सं०१,८,१०,४)"—इति ॥ एतच्च युवयोर्माहाभाग्यम् । किञ्चान्यत् । 'विजयुषा ययथुः सान्वद्रेः । विजयुषा विजयमिच्छन्तौ युवां ययथुः गच्छथः, सानु समुच्छ्रितम् अद्रेः मेघस्य शिखरमारुह्य । किञ्च, युवामेव 'जातम्' उपद्रवं दुर्भिक्षाख्यं कृत्स्नस्य जगतः 'विष्वाचः' विष्वगञ्चनौ, सर्वतो गतौ भत्वा,—मेघजालेनेदं सर्वमभिप्रच्छाद्य, सतः 'अहतं' हतवन्तौ स्थः, 'विषेण' उदकेनेत्यर्थः ॥ यथास्मिन् वृकशब्देनादित्य उच्यते, तथाऽऽख्यानादुपेक्षितव्यम् ॥ ५ । २१ । २ ।

**श्वापि वृक उच्यते विकर्त्तनात् ।**

**"वृकश्चिदस्य वारण उरामथिः" उरणमथिः ॥**

**उरण ऊर्णावान् भवत्यूर्णा पुनर्वृणोतेरूर्णोतेर्वा ॥ ३ ॥**

"श्वापि वृक उच्यते" "विकर्त्तनात्" विविधमसौ कृन्तति तस्माद् वृकः ॥

"वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।

सेमं नः स्तोमं जुजुषाण आगहीन्द्र प्र चित्रया धिया ॥ ( ऋ० सं० ६, ४, ४९, ३ )"—इति ॥

प्रगाथपुत्रस्य कलेरार्षम् । सतो बृहती ऐन्द्री । महाव्रते तृचाशीतिषु विनियुक्ता ॥ "वृकश्चित्" वृकोऽपि, "श्वा" सारमेयः "अस्य" इन्द्रस्य विद्यत एव । "वारणः" वारयिता शत्रूणाम् । किमुतान्यान्युपकरणानि ? "उरामथिः" "उरणमथिः" उरान् मेषान् यो मथ्नाति स उरामथिः । स पुनरस्येन्द्रस्य 'आभूषति' 'वयुनेषु' प्रज्ञानेषु, यदैवासौ विजानीते आभूष [ य ] त्वयं शत्रूनिति, तदैवासौ आभूषति । यस्य तवैवं सर्वोपकरणसम्पन्नत्वम्, हे 'इन्द्र' ! 'सः' त्वम् 'इमम्' 'नः' अस्माकं 'स्तोमम्' उपश्रुत्य 'आगहि' आगच्छेमं यज्ञं 'प्र' प्रकर्षेण 'चित्रया' चायनीयया कमनीयया 'धिया' बुद्ध्या ॥ सरमा हि देवशुनी श्रूयते । तत्पुत्रनप्तृभिश्च देवानां भवितव्यम्, तस्मात्, श्वापि वृक उच्यत इत्युपपद्यते, इतरेषामारण्यकाणां वृकाणां परिग्रहाभा-

वात् अस्य मन्त्रस्य पूर्वोऽर्द्धर्चः परोक्षकृतः,=वृकश्चिदस्येत्यस्मात् षष्ठीयोगात्। उत्तरस्तु प्रत्यक्षकृतः,—आगहीन्द्रेत्यस्मान्मध्यमपुरुषयोगात्, सम्बोधनाच्च। देवता किल परोक्षा स्तूयमाना प्रत्यक्षीभवति। तदेतत् सर्वेष्वेवंलक्षणेषु मन्त्रेपूपेक्षितव्यम् ॥

निगमप्रसक्तमुच्यते,—"उरणः—ऊर्णावान्" ऊर्णया तद्वान् "भवति" ॥

"ऊर्णा पुनर्वृणोतेः" इति विग्रहप्रसक्तम्। ता अपि शीतत्राणार्थं विव्रियन्ते। "ऊर्णोतेर्वा" आच्छादनार्थ स्य। ताभिरभिच्छन्न उरणो भवति ॥ ५। २१। ३ ॥

## वृद्धवाशिन्यपि वृक्युच्यते।
## "शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार"।
## इत्यपि निगमो भवति ॥ ४ ॥ २१ ॥

"वृद्धवाशिन्यपि वृक्युच्यते"यैषा वृद्धं वाश्यते,—शिवा, सापि वृक्युच्यते, विकर्त्तनादेव॥

"शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ (ऋ० सं० १, ८, ११, १)"—इति ॥

अजोहवीदित्यनया समानार्थेयम्। "शतं मेषान्" "वृक्ये" शिवायै, तया वाशिते सति परितुष्टः "चक्षत्"व्यादिष्टवान् "दानम्"।येयमेवं शोभनमभिप्रस्थितानामस्माकमर्थसिद्धये वाश्यते, तस्यै, शतं मेषाणां दीयतामित्येवमाज्ञप्तवान्। "ऋज्राश्वम्" ऋज्राश्वो नाम राजपुत्रः तम्। "तं" च पुनरेवं व्यादिष्टवन्तमतिसाहसिकोऽयमिति "पिता" कुपितः, शापेन "अन्धं" "चकार" कृतवानित्यर्थः। "तस्मै" एवमन्धीभूताय पितुरभिशापेन, 'अक्षी' अक्षिणी, 'नासत्यौ' अश्विनौ देवौ, 'विचक्षे' विगतदर्शनाय 'आधत्तम्'। दस्रौ दर्शनीयौ अश्विनौ। 'भिषजौ' देवभिषजौ, भयसादयितारौ, 'अनर्वन्' चक्षुः आधत्तम् अनाश्रितमन्यत्र क्वचित्, स्वप्रधानमित्यर्थः ॥ एवमत्र मेषसम्बन्धाख्याने च तथार्थतोपपत्तिदर्शनात् "वृद्धवाशिनी वृक्युच्यते"—इत्युपपद्यते ॥ ५।२१।४ ॥

## जोषवाकम् ॥ ६६ ॥

## जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति—॥

"जोषवाकम् (६६) इत्यनवगतम्। "अविज्ञातनामधेयम्"—इत्यभिधेयवचनम्। "जोषयितव्यं भवति"—इति शब्दसमाधिः। जोषयितव्यं विज्ञापयितव्यं परस्मै तद्भवत्यस्पष्टत्वात्—॥ *

* अत्र एकविंशखण्डसमाप्तिर्दृश्यते, सा "जोषवाकम्" "इत्यनवगतम्" इत्यतः प्रागुचिता ॥

"य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥"
य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथोऽथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः ॥ १ ॥

"य इन्द्राग्नी सुतेषु वां०—भसथश्चन (ऋ० सं० ४, ८, २५, ४)"—इति ॥
भरद्वाजस्येयमार्षम् । बृहती । हे "इन्द्राग्नी !" "यः" अयं यजमानः "सुतेषु" अभिषुतेषु "सोमेषु" "वां" युवां "स्तवत्" "स्तौति" "तेषु" कर्मसु "ऋतावृधा" सत्यवर्द्धयितारौ, उदकवर्द्धयितारौ वा । "तस्य" युवाम् "अश्नीथः" स युवयोः बहुमत इत्यभिप्रायः । "अथ" पुनः "योऽयम्" "जोषवाकम्" अविज्ञातं किमपि उपांशु "वदति" "विजञ्जपः" केवलमुदकतीरेऽवस्थितोऽन्यत्र वा जपनशील एव, न कर्मकारीत्यभिप्रायः । तस्य "जोषवाकं वदतः" । "पज्रहोषिणा" हे "प्रार्जितहोषिणौ !" प्रभूतयागौ ! "यदिन्द्रश्च अग्निश्च भूयिष्ठभाजौ देवतानां तस्माद् ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणामिति ह विज्ञायते" । "देवा" हे "देवौ !" "न भसथश्चन" न कदाचिदपि तस्य हवींषि भक्षयथः, तेन युवयोर्नासौ बहुमत इत्यभिप्रायः । अत्र "जोषवाकं वदतः" "न भसथः"—इत्येतद् दृष्ट्वा यः सुतेषु सोमेषु स्तौति तस्य भसथ इत्येतदध्याहृतं भाष्यकारेण ॥ एवमत्र विजञ्जपस्य भक्षयितव्याभावाज्जपस्य चोपांशुस्वाभाव्यात् "जोषवाक"—शब्दोऽविज्ञातनामधेयमित्युपपद्यते ॥ ५ । २२ । १ ॥

कृत्तिः ॥ ६७ ॥

कृत्तिः कृन्ततेर्यशो वा अन्नं वा ॥
"महीव कृत्तिः शरणा त इन्द्र ॥"
सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति ॥
इयमपीतरा कृत्तिरेतस्मादेव सूत्रमयी । उपमार्थे वा ।
("कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥")

---

१ 'यज्ञवर्द्धयितारौ' ॥

"अवततधन्वा पिनाकहस्तः कृत्तिवासाः" ॥

इत्यपि निगमो ( मौ ) भवति ( तः ) ॥ २ ॥

"कृत्तिः ( ६७ )"—इत्यनवगतम्, अनेकार्थञ्च । "कृन्ततेः"—इति[1] धातुनिर्देशः । "यशोऽन्नं वा"—इत्यर्थवचनम् । कर्त्तनमिति न्याय्यम्, यशो हि द्विषतां मर्माणि कृन्तति, अन्नमप्यसम्यगुपयुक्तमायुरेव कृन्तति ॥

"तमु त्वा नूनमसुर प्रचेतन राधो भागमिवेमहे ।

महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवम् ॥ ( ऋ० सं० ६, ६ १३, ६ )"—इति ॥

नृमेधसः प्रियमेधसश्चेयमार्षम् । सतो बृहती । ऐन्द्री । चतुर्विंशादिषु सात्रिकेष्वहःसु माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे स्तोत्रियानुरूपवर्गे विनियुक्ता । 'तम् उ त्वा' हे 'असुर' प्रज्ञावन् ! 'प्रचेतसं' विवृद्धप्रज्ञानं 'राधः' धनं स्वमिव पित्र्यं 'भागम्' उत्पन्नप्रणयित्वात् 'ईमहे' याचामहे तन्नो देहि स्थिरशरीराणां तदेतदस्तु नः । किञ्च, "महीव कृत्तिः"महदिव यशः, महद् वा अन्नम्"शरणा"शरणम्,—गृहम् । "ते"तव हे"इन्द्र !" यत्"अन्तरिक्षलोके"तदहं 'प्राश्नवम्' । किञ्च, 'ते'तव 'सुम्ना' सुम्नानि बलसम्बन्धानि सुखानि, त्वद्भोग्यानीत्यर्थः । यद्वा—सुम्नानि, सुखसाधनानि, अप्सरः प्रभृतीनि प्राश्नुयामहम् । तदहं सोमं सुन्वानः तस्याभिषवकर्मणो माहाभाग्येन, येन त्वत्सायुज्यमश्नुयाम्, देहपातोत्तरकालमिह चामुत्र चैतत् नः फलद्वयमस्तु त्वत्त इत्यभिप्रायः । यशो हि विस्तीर्णं भवति, तेन हि गृहस्योपमानमुपपद्यते । यदनुप्रविष्टानाम् अशनापिपासे न स्तः, तदहं तव गृहं प्राश्नुयामित्येवमन्नेनोपमानमुपपद्यते ॥

"इयम् अपि इतरा कृत्तिः एतस्मादेव सूत्रमयी ।" कन्योति या प्रसिद्धा, साप्येतस्मादेव कृन्ततेः, सा हि वस्त्रावयवैः सूत्रैर्ग्रथिता भवति । "उपमार्थे वा" चर्मापि कृत्तिरित्युच्यते । तयेतरा सूत्रमयी उपमीयते, विकर्त्तनसामान्यात् । कृत्तिरिव कृत्तिः कन्था।"कृत्तिं वसान आचर पिनाकं बिभ्रदागहि"इति हि निगमः। "अवतत धन्वा पिनाकहस्तः कृत्तिवासाः"—इति । व्याख्यातोऽयं तृतीयेऽध्याये निगमः ॥५।२२।२॥

## श्वघ्नी ॥ ६८ ॥

श्वघ्नी कितवो भवति स्वं हन्ति स्वं पुनराश्रितं भवति ॥

---

१ टीकाकर्त्रा मूलग्रन्थेऽदृष्टत्वादव्याख्यातोऽयं निगमः ॥ २ 'ऽयमष्टमेऽध्या' इति पा० तत्क्रमान्तराभिप्रायेण बोध्यम् ॥

"कृतं न श्वघ्नी विचिनोति देवने" ॥
कृतमिव श्वघ्नी विचिनोति देवने ॥
कितवः किं तवास्तीति शब्दानुकृतिः, कृतवान्वाशीर्नामकः ॥ ३ ॥

"श्वघ्नी ( ६८ )"–इत्यनवगतम् । "कितवो भवति"–इत्यभिधेयवचनम् "स्वं हन्ति"–इति शब्दव्युत्पत्तिः । स्वहा इति न्याय्यम् ॥

विग्रहप्रसक्तमुच्यते,–"स्वं पुनराश्रितं भवति" तद्धि स्वामिनमाभिमुख्येन श्रितं भवति स्वत्वेन ॥

"कृतं न श्वघ्नी विचिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥ ( ऋ० सं० ७, ८, २४, ५ )"–इति ॥

कृष्णस्याङ्गिरसस्येयमार्षम् । ऐन्द्री । जगती । तार्तीयसवनिकेषु ऊक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । यथात्र कृतादीनां मायानां[1] मध्ये कितवः "कृतं विचिनोति" "देवने" आस्तारे[2], अपि नामात्र कृतं स्यात् ततो जयेयमहमित्येवम् । 'मघवा' इन्द्रः 'संवर्गम्' उदकसंवर्जयितारम्, अन्तरिक्षे, बहूनां मेघानां मध्ये, 'विचिनोति'–कतमस्त्वेषां मेघानामुदकदाने समर्थः ? इति, तं विज्ञाय 'यद् जयत्' । अजयत् 'यत्' अपः 'सूर्यम्' सुष्ठु ईरयितारमपाम् । 'न' 'तत्' 'ते' तव 'अन्यः' कश्चित् 'अनुवीर्यं शकत्' । तद् वीरकर्म भावत्कम्[3] अन्यः कश्चिदनुकर्तुमप्यशक्तः । 'न' अपि 'पुराणः' 'न उत' नापि 'नूतनः' नव इत्यर्थः । न पूर्वे चक्रुः, नापरे करिष्यन्तीत्यभिप्रायः । कृतसम्बन्धाद् देवनसम्बन्धाच्च "श्वघ्नी–कितवः"–इत्युपपद्यते ॥

अस्य मन्त्रस्य पूर्वोऽर्द्धर्चः परोक्षकृतः, स एव विपरिणमयितव्यः, अत्र चोक्तः समाधिः ॥

निगमप्रसक्तमुच्यते,–"कितवः"–इत्यस्य शब्दस्य "किं तवास्तीति" एषा "शब्दानुकृतिः" स हि नित्यकालमेव दिदेविषुः प्रतिदेवितृभिः, कितवैः पृच्छयते,–किं तवास्तीति, तस्माच्छब्दानुकरणात्कितव एवासौ बभूव । अथवा–"कृतवान्" अयं यथा स्यादित्येवमसौ आशास्यते सुहृद्भिरन्यैः कितवैः, स हि तस्मादेवमाशासनात् "आशीः" निमित्त "नामकः" कितव एवासौ बभूव ॥ ५ । २२ । ३ ॥



१ 'दायानाम्' इति मुद्रितमासीत् ॥ २ 'आस्थुरे' ॥ ३ 'यस्मात्' ॥ ४ 'तावकम्' ॥

## सुमस्य ॥ ६९ ॥

### सममिति परिग्रहार्थीयं सर्वनामानुदात्तम्–॥

"समम् ( ६९ )"–इत्येतत् "परिग्रहार्थीयं सर्वनाम"। तत् पुनरेतत् "अनुदात्तम्"। "त्वत्त्वसमसिमेत्यनुच्चानि"–( १ । ७ । ३ )–इति ह्युक्तम्। विप्रतिपन्नस्वरत्वादत्र भाष्यकारेण स्वरोऽवधृतः, पक्षेण चाप्यनेकार्थताप्यस्य भवतीत्येतत् प्रदर्शितं भाष्यकारेण ॥*

"मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः।
ऊर्मिर्न नावमावधीत् ॥"

मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसो अंहतिरूर्मिरिव नावमावधीत् ॥

ऊर्मिरूर्णोतेर्नौः प्रणोत्तव्या भवति। नमतेर्वा।

तत्कथमनुदात्तप्रकृति नाम स्याद् दृष्टव्ययं तु भवति।

"उतो समस्मिन्नाशिशीहि नो वसो"

इति सप्तम्यां शिशीतिर्दानकर्मा ॥

"उरुष्याणो अघायतः समस्मात्"

इति पञ्चम्यामुरुष्यतिरक्षाकर्मा।

अथापि प्रथमा बहुवचने।

"नभन्तामन्यके समे" ॥ १ ॥ २३ ॥

"मा नः समस्य दूढ्यः परि०–मावधीत्"। ( ऋ० सं० ६, ५, २५, ४ ) विरूप आङ्गिरस एतामाग्नेये सूक्ते ददर्श। गायत्री। आग्नेयी। दशरात्रस्य तृतीयेऽहनि प्रातःसवने आज्यसूक्ते विनियुक्ता। हे भगवन् अग्ने ! युष्मत्प्रसादात् "मा नः" मास्मान्, "समस्य" "सर्वस्य" एव, "दूढ्यः" "दुर्धियः पाप-

---

* अत्र द्वाविंशखण्डसमाप्तिर्दृश्यते, सा 'सममित्येतत्परिग्रहार्थीयम्' इत्यतः प्राक् समुचिता ॥ १ 'रुक्मकः' ॥ २ 'आद्ये सूक्ते' ॥

धियः" "परिद्वेषसः" "सर्वतो" द्वेष्टुः, स्वभूतः, "अंहतिः" वध इत्यर्थः। "ऊर्मिर्न" "ऊर्मिरिव," यथोर्मिर्नावमाभिमुख्येन गत्वा वधयाति, मैवमंहतिरस्मान् द्वेष्यप्रहितो 'बधीत्' आवधीदिति ॥ एवमत्र सर्वस्मादेव द्वेष्टुर्वधानभीष्टत्वात् "समस्य"—इत्येतत् सर्वनामेत्युपपद्यते ॥

"ऊर्मिः, ऊर्णोतेः" आच्छादनार्थस्य, सो ह्याच्छादयति तीरमुदकमध्ये वा यदन्यद् भवति। "नौः प्रणोत्तव्या भवति" पारगमनाय, "नमतेर्वा" स्यात्, सा हि प्रह्वीभूतेव भवति, पारगमनाय ॥

आह—यदेतत् सममिति शब्दरूपम् "अनुदात्तप्रकृतिः" अनुदात्तस्वभावम्, "तत् कथं नाम स्यात्"? अनुदात्तप्रकृतयो हि निपाताः, उदात्तप्रकृतीनि नामानि भवन्तीति। उच्यते—"दृष्टव्ययं तु" एतत्, यस्मादनुदात्तप्रकृतित्वेऽपि सति, तस्मान्नामैवैतत् "भवति" ॥

आह—क्व पुनरस्य व्ययो दृष्टः? इति, उच्यते—"उतो समस्मिन्ना शिशीहि नो वसो—इति सप्तम्याम्" व्ययो दृष्टः ॥

"विद्मा सखित्वमुत शूर भोज्यमा ते ता वज्रिन्नीमहे।
उतो समस्मिन्नाशिशीहि नो वसो वाजे सुशिप्र गोमति ॥ (ऋ० सं० ६, २, २, ३)"—इति ॥

सौभरेरार्षम्। सतो बृहती। ऐन्द्री। आख्यानसूक्ते विनियुक्ता। 'विद्म' विजानीमो वयं 'सखित्वं' सखिभावम्। 'उत' अपि च, हे 'शूर' वज्रिन्! इन्द्र!। 'भोज्यं' भोग्यम् अंशोपजीव्यत्वं मित्राणाम्, यतो वयं 'आ ईमहे' आभिमुख्येन स्थित्वा याचामहे,—'ते' तव यानि धनानि। किञ्च, उतो अपि च समस्मिन् सर्वस्मिन् 'शिशीहि नः' देहि अस्माकं हे 'वसो' वसुमन्! इन्द्र! क्व पुनराशिशीहि नः? इति—'वाजे' अन्ने इत्यर्थः। हे 'सुशिप्र' हे सुनस! अथवा—हे सुहनो! 'गोमति' गोभिस्तद्वति अन्ने, अस्मान् प्रतिष्ठापयेत्यर्थः ॥ एवमत्र समस्मिन्निति सप्तम्यां व्ययो दृष्टः ॥

"उरुष्याणो अघायतः समस्मात्—इति पञ्चम्याम्" व्ययो दृष्टः।

"तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः।
स नो बोधी श्रुधी हवमुरुष्याणो अघायतः समस्मात् ॥ (य० वा० सं ३, २६)"—इति ॥

---

१ 'स ह्याच्छा' इति पाठेऽपि 'सः' ऊर्मिः—इत्येवार्थः स्यात्—ऊर्मिशब्दस्य स्त्रीपुंलिंगत्वात् ॥

श्रुतबन्धोरार्षम् । आग्नेयी । द्विपदा । अग्न्युपस्थाने विनियुक्ता । यः त्वमेव-म्प्रभावः, यथाप्रभावं त्वां वयमवोचाम । 'सः' त्वं हे भगवन्नग्ने ! 'बोधि' बुध्यस्व 'नः' अस्माकमभिप्रायम् । 'श्रुधी' शृणु च 'हवम्' आह्वानमिदम् । आहूतश्च 'उरु-ष्याणः' उपगम्यास्मान्, 'अघायतः' पापमिच्छतः 'समस्मात्' सर्वस्मात् पाहि । एव-मत्र 'समस्मात्' इति पञ्चम्यां व्ययो दृष्टः ॥

तस्मात् व्ययदर्शनाद् दृष्टानुविधिश्छन्दसि भवतीति कृत्वाऽनुदात्तप्रकृतित्वेऽपि सति नामैतद्भवतीत्युपपद्यते ॥ ५ । २३ । १ ॥ *

## कुटस्य ॥ ७० ॥ चर्षणिः ॥ ७१ ॥

"हविषा जारो अपां पिपर्त्ति पपुरिर्नरा ॥
पिता कुटस्य चर्षणिः ॥" (ऋ०१।४६।४)
हविषापां जरयिता ॥
पिपर्त्ति पपुरीरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा ।
पिता कृतस्य कर्मणश्चायितादित्यः ॥ १ ॥

"कुटस्य (७०)" "चर्षणिः(७१)"–इत्येते अनवगते । "कृतस्य" "चायिता"–इत्येतौ शब्दसमाधी । एक एव निगमः–। "हविषा जारो०–चर्षणिः ( ऋ० सं० १, ३, ३३, ४ )"–इति ॥ प्रस्कण्वस्येयमार्षम् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते । हे "नरा" नरौ ! अश्विनौ ! युवाम् । एषः "आदित्यः" "पिता" पाता, कृत्स्नस्य जगतः । "कुटस्य" च "कृतस्य कर्मणः" सार्वभौमस्य साध्वसाधुनः "चर्षणिः" "चायिता" द्रष्टा, बुद्ध्याधिदेवताभावेनावस्थितः सर्वभूतानाम् । "अपां जारः" अपां सर्वभूतान्तर्गतानां प्राणभावेनावस्थितो जरयिता, शोषयिता । "पपुरिः" च पूरयिता च । प्राप्ते काले "हविषा" उदकेन "पिपर्त्ति" पूरयति वा प्रीणयति वा । यौ युवा-मेवङ्गुणयुक्तेनादित्येन पूर्येथे, प्रीण्येथे वा, तौ युवामिमां नामास्माकमाशिषं समर्द्धयतमि-त्येवमाशीर्योज्या ॥ एवमत्र "कुटस्य, चर्षणिः"–इत्येते कृतस्य चायितेत्येवमुपपद्येते ॥ नरावत्र द्यावापृथिव्यावभिप्रेते, तयोश्चोदकेनादित्यः पूरयिता । तस्मादादित्यविषयता चर्षणिशब्दस्य, तस्य च बुद्ध्यधिदेवताभावेन कृतस्य कर्मणो द्रष्टृत्वमुपपद्यते ॥ 'पिपर्त्ति'–'पपुरिः'–इत्येवमेतौ निगमस्थौ शब्दौ "पूरयत्यर्थौ वा प्रीणय-त्यर्थौ वा" ॥ ५ । २४ । १ ॥

---

* अत्रैव त्रयोविंशखण्डसमाप्तिर्दृश्यते ॥ १ 'पृणात्य' ॥

## शंबः ॥ ७२ ॥

### शम्ब इति वज्रनाम, शमयतेर्वा शातयतेर्वा ॥ "उग्रो यः शम्बः पुरुहूतु तेन" इत्यपि निगमो भवति॥२।२४॥

"शम्बः (७२)"—इत्यनवगतम्। "वज्रनाम"—इत्यभिधेयवचनम्। "शमयिता वा शातयिता वा"—इति शब्दसमाधी ॥

आराच्छत्रुमपबाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नम् ॥ (ऋ० सं० ७, ८, २३, २)"—इति ॥

कृष्णस्याङ्गिरसस्यार्षम्। त्रिष्टुप्। माध्यन्दिने सवने स्तोमातिशंसने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। हे "पुरुहूत!" बहुभिराहूत! 'यः' एषः, 'आरात्' समीपे अस्माकं वर्त्तते शत्रुः, तं दूरम् 'अपबाधस्व' नाशयस्वेत्यर्थः। आराच्छब्दो ह्यत्र समीपार्थवाची। अन्यत्रापि चोक्तम्,—"आरात् प्राग्वंशादुदयास्तमयौ"—इति। केन पुनरपबाधस्व? "उग्रो यः शम्बः" उद्गूर्णो यो वज्रः "तेन" अपबाधस्व। किञ्च, तं दूरमपबाध्य ततः 'अस्मे' अस्मभ्यं 'धेहि' देहि 'यवमत्' यवैस्तद्वत्—व्रीहिगोधूमाद्यन्नम्। अपि च, 'गोमत्' गोभिस्तद्वत्—पश्वादिभिः। किञ्च, स त्वमेतदेवङ्गुणकमस्मभ्यमन्नं ददत् 'कृधि' कुरुष्व इमां 'धियम्' एतत् कर्म, 'वाजरत्नां' वाजरमणीयां, प्रचुरेणान्नेन यथैतस्मिन् कर्मणि वर्त्तमाना रमेमहि, तथा कुरुष्वेत्यभिप्रायः। धीरिति कर्मनामसु पठितम्,—"धीः, शची:"—इति। एवमत्रापबाधनसम्बन्धात् "शम्बः"—इत्येतद् वज्रनामेत्युपपद्यते। अपठितमेतद्वज्रनामसु,—इत्यतोऽप्रसिद्धार्थम्, तस्यैवंप्रकरणादर्थसिद्धिर्भवति ॥ ५। २४। २॥

## केपयः ॥ ७३ ॥

### केपयः कपूया भवन्ति कपूयमिति पुनाति कर्म कुत्सितं दुष्पूयं भवति—॥

"केपयः (७३)"—इत्यनवगतम्। "कपूयाः"—ह्येते सन्तः केपय इत्युच्यन्ते। आह—"कपूयम्"—"इति" किमुक्तं भवति? उच्यते,—यदेतत् पापकारी प्रायश्चित्तेन "पुनाति कर्म कुत्सितम्" यच्च तत् "दुष्पूयं" दुष्पावं "भवति" पूयमानमपि, एतत् कपूयमित्युच्यते—॥*

* अत्र चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा 'केपय इत्यनवगतम्' इत्यतः प्रागुचिता ॥

"पृथक्प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा॥
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥"
पृथक् प्रायन् । पृथक् प्रथतेः । प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन् यज्ञियां नावमारोढुमथ ये नाशक्नुवन् यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वा ॥
ईर्म इति बाहुनाम । समीरिततरो भवति ॥ १ ॥

"पृथक् प्रायन्०—केपयः ( ऋ० सं० ७, ८, २७, १ )"—इति ॥

पूर्वयैव समानार्षविनियोगा, इयं तु जगती । "पृथक् प्रायन्" पृथक् भूता [ एव विद्याकर्मानुरूपेण, देवयानेन पथा, पितृयानेन वा प्रायन् । हे इन्द्र ! त्वत्प्रसादाद् देवलोकं गन्धर्वलोकं पुनः स्व उच्यते । "प्रथमाः देवहूतयः" ये मुख्या देवानामाह्वातारो यत् कर्मसु । किञ्च, "दुष्टरा" "अन्यैः" असद्भिर्दुस्तराणि । "श्रवस्यानि" "श्रवणीयानि यशांसि" "अकृण्वत" "अकुर्वत ।" किञ्च, "ये" त्वत्प्रसादरहिताः जनाः, "यज्ञियां नावम्" "आरुहम्" "आरोढुम्" "न शेकुः" नाशक्नुवन् । ] अथ पुनर्ये नाशक्नुवन् यज्ञियां नावमारोढुं किं तर्हि ? विषयप्रधानाः, कपूयमेव दुष्पूयमेव कर्म चक्रिरे, तेनैव कपूयेन कर्मणा प्रेर्यमाणाः "ते" "ईर्मैव" "इहैव" लोके यथा कर्मानुरूपायां योनौ "न्यविशन्त" । तदुक्तम्,—"अथ य इह कपूयचरणा अन्यशो हयंते, ते कपूयां योनिमापद्येरन्,—श्वयोनिं वा, सूकरयोनिं वा, चण्डालयोनिं वा"—इत्येवमादि॥ एवमत्र न ये शेकुः यज्ञियां नावमारोढुमित्येतेन सम्बन्धात्, "केपय—कपूयाः" इत्युपपद्यते ॥

शब्दसारूप्यप्रसङ्गादुच्यते,—"ईर्म इति बाहुनाम"—इति, स हि "समीरिततरो भवति" अन्येभ्योऽङ्गेभ्यः ॥ ५ । २५ । १ ॥

---

१ "एव प्रायन् प्रागच्छन् । के पुनस्त इति ? उच्यते—**प्रथमा देवहूतयः** ये देवानाह्वयन्त याज्ञेषु कर्मसु । किंच, **अकृण्वत** अकुर्वत च । श्रवणीयानि श्रवणार्हाणि यशांसि । **दुष्टरा** दुरनुकराण्यन्यैरयज्वभिः । एवं तावद् ये मनुष्या अत्र **शक्नुवन्** शक्तिवन्तः **यज्ञियां नावमारोढुं** यजनकर्ममयीं नावमारोढुम् । एवं ते पृथग्भूता एव विद्याकर्मानुरूपेण देवयानेन पथा पितृयानेन वा प्रायन्"—इति पाठान्तरं पुस्तकान्तरेषु दृश्यते ।

## तूतुमाकृषे ॥ ७४ ॥

तूतुम् = तूर्णम्

"एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ॥"

एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्व ॥ २ ॥ २५ ॥

"तूतुम्–आकृषे (७४)" इत्येते अनवगते । "तूतुम्"–इत्यस्य "तूर्णम्"–इति शब्दसमाधिः । "आकृषे"–इत्यस्य "उपाकुरुषे"–इति शब्दसमाधिः ॥

"एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥ (ऋ० सं ८, १, ९, ६)"–इति ॥

इन्द्रस्य वैकुण्ठस्येयमार्षम् । ऐन्द्रे सूक्ते निविद्धानीये महाव्रते महदुक्थे शस्त्रे शस्यते ॥ "एता" "एतानि" "विश्वा" विश्वानि, "सर्वाणि स्थानानि" । त्वमुपागम्य तेन–तेन देवतात्मना कुरुष्व, निवर्त्तयेत्यर्थः । आह–कतमानि पुनस्तानि स्थानानि ? उच्यते,–"स्वयं सूनो सहसो यानि दधिषे" । हे सूनो सहसः "बलस्य पुत्र !" "यानि" एतानि 'स्वयम्' एव 'दधिषे' धारयसि, तानि त्वमेव कुरुषे । यत एवं कुरुषे, अत एव त्वमेव धारयिता स्रष्टा चास्य जगतः । अत एतस्मात् कारणात् 'वराय' वरयितव्याय, 'ते' तव, 'पात्रम्' एतत् सोमपूर्णं प्रदिशामः । 'धर्मणे' धारयित्रे । 'तना' च धनं च, सर्वं तवैव । 'यज्ञः' च कृत्स्नः तवैव । 'मन्त्रः' च कर्मकरणः, तवैव । 'ब्रह्म' चान्नं, तवैव । 'उद्यतं' चैतदनेकप्रकारमपि स्तुतिलक्षणं 'वचः' तवैव ॥ एवमत्र शब्दसारूप्यात् "तूतुम्"–इत्येष शब्दः तूर्णमित्येवमुपपद्यते । करणसम्बन्धाच्च, यद्धि कर्तव्यं भवति, तस्य तूर्णमेव करणमिष्यते कर्तृभिः तस्मादुपपद्यते । "आकृषे"–इत्यत्रापि यद्धि क्रियते, तदुपगम्याभिमुख्येनैव स्थित्वा क्रियत इति "उप"–शब्दोऽत्र भाष्यकारेणाध्याहृतः ॥

अत्र "सूनो ! सहसः"–इत्येतस्माद्विशेषलिङ्गादाग्नेयीमेतामृचं कृत्वा केचिद् व्याचक्षते, अग्निर्हि बलेन मथ्यमानो जायत इति । तथाहि प्रकरणविरोधो भवति । सूक्तं ह्येतदैन्द्रम् । ऐन्द्रत्वे त्वस्य "सूनो !"–"सहसः"–इत्येतयोः पदयोरर्थयोजना, अधिदेवताभावेन, प्राण इन्द्रो व्यवस्थितः, तस्येतरो यः प्रज्ञामुत्पाद्याविष्टः

१ 'प्रजासु व्यादिष्टः, प्राणस्तु–पुत्रः, इत्येवमुपप'–इति तु मुद्रितमासीत् ॥

प्राणः स पुत्रः,—इत्येवमुपपद्यते पितृपुत्रभावः । तदुक्तम्,—"प्राणो वा अहमस्मि, प्राणस्त्वं, प्राणः सर्वाणि भूतानि"—इति ॥ ५ । २५ । २ ॥

## अंसत्रम् ॥ ७९ ॥

अंसत्रमंहसस्त्राणं धनुर्वा कवचं वा । कवचं कु अञ्चितं भवति काञ्चितं भवति कायेऽञ्चितं भवतीति वा—॥

"अंसत्रम् ( ७९ )"—इत्यनवगतम् । विकल्पतश्चानेकार्थम् । "अंहसः त्राणम्"—इत्यर्थप्रतीतिः । "धनुर्वा कवचं वा"—इत्यभिधेयवचनम्, ताभ्यां हि पुरुषाः सांग्रामिकोंदंहसस्त्रायन्ते । आख्यानप्रसक्तमुच्यते,—"कवचं, कु-अञ्चितं भवति" कुटिलमञ्चितम्, स हि तस्य स्वभावः । अथवा—"काञ्चितम्" ईषदञ्चितं कुटिलीकृतं "भवति" । अथवा—"कायेऽञ्चितम्" तद्वतं "भवति"—॥ *

"प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥"

प्रीणीताश्वान् सुहितं जयथ जयनं वो हितमस्तु स्वस्तिवाहनं रथं कुरुध्वं द्रोणाहावं द्रोणं द्रुममयं भवति ॥ आहाव आह्वानादावह आवहनादवतोऽवातितो महान् भवत्यश्मचक्रमशनचक्रमसनचक्रमिति वा अंसत्रकोशमंसत्राणि वः कोशस्थानीयानि सन्तु कोशः कुष्णातेर्विकुषितो भवति ।
अयमपीतरः कोश एतस्मादेव सञ्चय आचितमात्रो महान् भवति सिञ्चत नृपाणं नरपाणं कूपकर्मणा संग्राममुपमिमीते ॥ १ ॥ २६ ॥

---

१ 'सांग्रामिकाः अंहसस्त्रा' ॥ * अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा 'अंसत्रमित्यनवगतम्' इत्यतः प्रागुचिता ॥

"प्रीणीताश्वान्०—नृपाणम् ॥ ( ऋ० सं० ८, ५, १९, १ )"—इति ॥ बुधस्य सोमपुत्रस्येयमार्षम् । वैश्वदेवे सूक्ते "प्रीणीत" प्रीणयत यवसोदकादिना । एतान् "अश्वान्" उपस्थितोऽयं संग्राम इत्यभिप्रायः । प्रीणयित्वैतानश्वानेभिरश्वैरुपजातवीर्य्यैः "हितं" "सुहितं" "जयाथ" "जयथ" "जयनं वो हितमस्तु" अहितोऽपि जयः कश्चिद् भवत्येव,—यत्र सुहृद्भ्रातृपुत्रादयो हन्यन्ते । "स्वस्तिवाहम्" अभिपूजितवाहं "रथं" "कृणुध्वम्" "कुरुध्वम्" हे देवाः ! एवमेतां सांग्रामिकीमितिकर्त्तव्यतां कृत्वा, "द्रोणं" "द्रुममयम्" एतम् "आहावम्" आहावस्थानीयं रथं कृत्वा, "अवतम्" एतं संग्रामरूपम् । "अश्मचक्रम्" "अशनचक्रं" व्यापनचक्रं, व्यापयन्ति हि तत्र क्षिप्तानि चक्राणि शत्रूणाम् । अथवा—"असनचक्रम्" अस्यन्ते हि तत्र चक्राणि "अंसत्रकोशम्" "अंसत्राणि" वो धनूंषि, कवचानि वा "कोशस्थानीयानि" तत्र "सन्तु" । तैः "सिञ्चत" उत्सिञ्चतैनं संग्रामकूपम् । "नृपाणं" "नरपाणम्" नरा एव तत्रोदकस्थानीयास्त एवोत्सिच्यन्ते । एवमत्र "कूपकर्मणा" अस्मिन्नुत्तरेऽर्द्धर्चे किञ्चित् साधर्म्येण "संग्राममुपमिमीते" मन्त्रदृक् ॥ एवमत्र संग्रामोपमाधिकारादुत्सेचनसम्बन्धाच्च "अंसत्र"—शब्देन धनुः, कवचं वोच्यत इत्युपपद्यते ॥

ततः "आहावः, आह्वानात्"—इत्येतद्यथावस्थितस्यैव मन्त्रपदस्य निर्वचनम् । आहूयंतेऽस्मिन्नित्याहावः । इदं त्वन्यत्,—"आवहः, आवहनात्"—इति अस्यैव विपरिणतस्य । उह्यतेऽस्मिन्नुदकमित्याहवः । "अवतः" कूपः, स हि खन्यमानः "महानवातितः" अवाङतितो "भवति" गत इत्यर्थः ॥

"अंसत्रकोशम्"—इति कोशशब्दो विग्रहप्रसक्तः "कोशः कुष्णातेः"—इति । "विकुषितः" स हि विविधं कुषितः "भवति" चर्मकोशः, सुषिरत्वात् ॥

"अयमपीतरो द्रव्यकोशः" "एतस्मादेव" कुष्णातेः । "सञ्चयः" सञ्चयकोशः । स हि "आचितमात्रः" मात्राभिः आचितः "भवति" "महत्त्वात्" ॥५।२६।१॥

## काकुदम् ॥ ७६ ॥

काकुदं तात्वित्याचक्षते । जिह्वा कोकुवा सास्मिन् धीयते जिह्वा कोकुवा कोकूयमाना वर्णान्नुदतीति वा कोकूयतेर्वा स्याच्छब्दकर्मणः ॥

जिह्वा जोहुवा ॥

१ इतोऽग्रे—'कूपप्रान्तनिबद्धाश्मसदृशप्रहरायुधवन्तम्' इत्यधिकः पाठः ॥

**ताल तरतेस्तीर्णतममङ्गं लततेर्वा स्याद् लम्बकर्मणो विप-रीताद् यथा तलं लतेत्यविपर्ययः—॥**

"काकुदम् ( ७६ )"—इत्यनवगतम् । "तालु"—"इत्याचक्षते"—इत्यभिधेयवचनम् ॥ "जिह्वा, कोकुवा"—इत्युच्यते, "सा" हि कोकुवाख्या जिह्वा, "आस्मिन्" एतास्मिन् तालुनि वर्णाभिव्यक्त्यर्थं मुहुर्मुहुः "धीयते" तदेतत् कोकुवाधानं सत् काकुदमित्यभिधीयते।"जिह्वा कोकुवा" कस्मात्? इति, उच्यते—शब्दानुकरणनिमित्तं जिह्वायाः कोकुवात्वम् । "कोकूयमाना" तथाविधं हि सा कुर्वाणा शब्दं तालुनि "वर्णान् नुदति" तस्माद्वा कोकुवानुदनात् काकुदं स्यात् ॥ नोदनात्

आह—जिह्वैव तावत् कस्मात् "जिह्वा"—इत्यभिधीयते ? इति, उच्यते—सा हि "जोहुवा" सती जिह्वेत्युच्यते । तया प्राणिनोऽन्नमात्मन्येव जुह्वति, अथवा—तया आह्वयतीति जोहुवा ॥

अथ "तालु" कस्मात् ? उच्यते—"तरतेः" धातोः, तद्धि "तीर्णतरम्" इतरेभ्योऽङ्गभ्यो विस्तीर्णत्वेन भवति। "लततेर्वा स्यात्" "विपरीतात्" आद्यन्तविपर्ययेण,—"यथा तलं"—इति । समानजातीयशब्दोपप्रदर्शनं दृष्टप्रतीत्यर्थम् । अस्यैव लततेर्लवनार्थस्य "लता"—इत्येतच्छब्दरूपम् "अविपर्ययः" अविपर्ययेण भवति ॥*

**"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।**
**अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥"**

**सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण यस्य ते सप्त सिन्धवः । सिन्धुः स्रवणाद् । यस्य ते सप्त स्रोतांसि तानि ते काकुदमनुक्षरन्ति सूर्मि कल्याणोर्मि स्रोतः सुषिरमनु यथा ॥ १ ॥ २७ ॥**

"सुदेवो असि वरुण०—सुषिरामिव ( ऋ० सं० ६, ५, ७, २ )"—इति ॥ प्रियमेधस आर्षम् । अनुष्टुप् । हे "वरुण !" "सुदेवः" शोभनस्त्वम् "असि" देवः । "यस्य" "ते" तव, एताः "सप्त सिन्धवः" अन्तरिक्षनद्यो वा वहुलाह्वेत्येवमाद्याः,

---

१ 'कथं स्यात् ?'—इति तु मुद्रितमासीत् । * अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा 'काकुदमित्यनवगतम्' इत्यतः प्रामुक्ता ॥

"अश्वा नामासि, तितुत्रा नामासि, अभ्रपत्नी नामासि, मेघपत्नी नामासि, वर्षयन्ती नामासि, पुरस्तादरुन्धा नामासि"—इति सिन्धुर्नद्य उच्यन्ते सप्तैताः। समुद्रा एव वा सप्तसिन्धुशब्देनोच्येरन् । "काकुदं" तालु, "अनुक्षरन्ति" "सूर्म्ये", "सुषिरां" नगरोदकनिःसरणभूमिम् "इव" सर्वतः समश्नुवतेत्यभिप्रायः ॥ एवमत्र सिन्ध्वनुक्षरणसम्बन्धात् "काकुदं—तालु"—इत्युपपद्यते । दुर्वचनत्वं सर्वस्य मन्त्रस्य कृत्स्नाध्ययने प्रयोजनम् । अन्यासु हि ऋक्षु या एतस्मिन् प्रकरणे कृत्स्ना अधीताः, तासु समाम्नातेभ्यः पदेभ्योऽन्यान्यपि अनवगतसंस्काराण्यनेकार्थानि वा सन्तीति तदुपप्रदर्शनार्थं कृत्स्नाध्ययनम्, अस्यां पुनस्तदपि नास्तीत्येवं दुर्वाच्यत्वम् । अथवा-काकुदशब्दस्य प्रयत्नान्वेष्यत्वात्कृत्स्नेयमृगधीता स्यात् ॥ ५ । २७ । १ ॥

## बीरिटे ॥ ७७ ॥

**बीरिटं तैटीकिरन्तारिक्षमेवमाह पूर्वं वयतेरुत्तरमिरतेर्वयांसीरन्त्यस्मिन् भांसि वा । तदेतस्यामृच्युदाहरन्त्यपि निगमो भवति—॥**

"वीरिटम् ( ७७ )"—इत्यनवगतम्, पक्षेण चानेकार्थम् । भीरस्मिन् तन्यत इति भीतननम्, "अन्तरिक्षम्", निरालम्बनत्वात् सर्व एव बिभेति । तदेतदेवं भीतननं सद् बीरिटमित्युच्यते । अथवा—भासोऽत्र नक्षत्रादीनां तन्यन्ते, तदेतद्भास्तननं सद् बीरिटमित्युच्यते । गणाभिधानपक्षेऽपि यथासम्भवं योज्यम् ॥*

**"प्रवावृजे सुप्रया बर्हिरेषा मा विश्पतीव बीरिट इयाते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥" प्रवृज्यते सुप्रायणं बर्हिरेषामेयाते सर्वस्य पातारौ वा पालयितारौ वा । बीरिटमन्तरिक्षं भियो वा भासो वा ततिः । अपि वोपमार्थे स्यात् सर्वपती इव राजानौ बीरिटे गणे मनुष्याणां रात्र्या विवासे पूर्वस्यामभिहूतौ वायुश्च नियुत्वान् पूषा च स्वस्त्ययनाय ॥**

---

१ 'नितुन्नामासि' इति पाठः ॥ २ 'सिन्धुशब्देन नद्य इति पाठः ॥ * अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा "बीरिटम् इत्यनवगतम्" इत्यतः प्रागुचिता ॥

## नियुत्वान् नियुतोऽस्याश्वाः । नियुतो नियमनाद्वा, नियोजनाद्वा ॥ १ ॥

"प्रवावृजे सुप्रया बर्हिरेषा०-नियुत्वान् ॥ ( ऋ० सं ५, ४, ६, २ )"-इति ॥ वसिष्ठस्यार्षम् । त्रिष्टुप् । "प्रवावृजे" "प्रवृज्यते" "बर्हिः" प्रस्तीर्यत इत्यर्थः । "सुप्रयाः" "सुप्रायणं" सुप्रगमनं, यत् सुखमभिगच्छन्ति देवताः प्रास्तीर्णे तस्मिन् । "आविश्पतीव बीरिट इयाते" । आ इयाते विश्पती सर्वस्य जगतः "पातारौ वा पालयितारौ वा" धात्वन्यत्वमर्थैकत्वम् । इव पादपूरणः, एवेत्येतस्यार्थे वा । क्व पुनरवस्थितौ एयाते ? इति, उच्यते—बीरिटे अन्तरिक्षे इत्यर्थः । "अपि वा" अथमिवशब्दः "उपमार्थे" एव "स्यात्" विश्पती इवेति सर्वपती इवेति, "सर्वपती इव राजानौ बीरिटे गणे" अवस्थितौ । आह—कस्य पुनः एयाते ? कस्मिन्काल एयाते ? कौ वा एयाते ? कं वा अर्थं पुरस्कृत्य एयाते ? इति, उच्यते—"एषां" "विशां" "मनुष्याणां" तासुतासु क्रियासु आहूयमानौ "अक्तोः" "रात्र्याः" अपगमे सति, "उषसः" च आगमनकाले "पूर्वहूतौ" "पूर्वस्याम्" एव "अभिहूतौ" प्रथमे एवाह्वानकाले। "वायुः" "च" "नियुत्वान्" "पूषा" "च" "स्वस्तये" "स्वस्त्ययनाय" स्वस्त्ययनार्थम्, "एयाते" यजमानस्य ॥ अन्तरिक्षेणैव हि देवता आगच्छन्तीति "बीरिटम्—अन्तरिक्षम्"—इत्युपपद्यते । यस्मिन्नपि पक्षे, गणो बीरिटशब्देनोच्यते, तस्मिन्नपि पक्षे, विश्पती राजानौ सर्वदा गणमध्यगतावेव आगच्छत इत्युपपद्यत एव ॥

आह—"नियुत्वान्" कस्मात् ? इति, उच्यते,—"नियुतोऽस्याश्वाः" । अथ "नियुताः" कस्मात् ? उच्यते—"नियमनात्" । नीचैर्हि ते नियम्यन्ते । "नियोजनाद्वा" नियोज्यन्ते हि रथे । "नियुतो वायोः"—इत्येतस्मात् कारणात् विप्रकृष्टोऽपि नियुत्वच्छब्दो वायुशब्देनैव संयोजितो भाष्यकारेण, न हि पूष्णो नियुद्भिः सम्बन्धोऽस्ति[1] ॥ ५ । २८ । १ ॥

## अच्छ ॥ ७८ ॥

## अच्छाभेराप्तुमिति शाकपूणिः ॥ २ ॥

"अच्छ ( ७८ )"—इत्येष शब्दो "अभेः" अर्थे भवति । "आप्तुम्"—"इति" योऽर्थ उक्तः स्यात्, स एवार्थः अच्छेत्यनेनोक्तो भवति, एवं "शाकपूणिः" आचार्यो मन्यते ॥ ५ । २८ । २ ॥

---

१ 'संबोधोऽस्ति' ॥

**परि ॥ ७९ ॥ ईम् ॥ ८० ॥ सीम् ॥ ८१ ॥**

**परीसीमिति व्याख्याताः ॥ ३ ॥**

"परि ( ७९ )" "ईम् ( ८० )" "सीम् ( ८१ )"–"इति" एते "व्याख्याताः" प्रथमेऽध्याये निपातोपसर्गप्रकरणे ॥ ५ । २८ । ३ ॥

**एनम् ॥ ८२ ॥ एनाम् ॥ ८३ ॥**

**एनमेनामस्या अस्येत्येतेन व्याख्यातम् ॥ ४ ॥**

"एनम् ( ८२ )" "एनाम् ( ८३ )"–इत्येतत् पदद्वयम्, "अस्याः अस्येत्येतेन" पदद्वयेन "व्याख्यातम्" चतुर्थेऽध्याये । निगमाश्चात्र मृग्याः ॥ ५ । २८ । ४ ॥

**सृणिः ॥ ८४ ॥ इति चतुरुत्तरमशीतिः पदानि ॥ २ ॥**

**सृणिरङ्कुशो भवति सरणात् ॥**

अङ्कुशो दात्र मित्यपि केचित्।

**अङ्कुशोऽञ्चतेराकुञ्चितो भवतीति वा ॥**

**"नेदीय इत्सृण्युः पक्वमेयात्" इत्यपि निगमो भवति ॥**

**अन्तिकतममङ्कुशादायात्पक्वमौषधमागच्छत्वित्या-गच्छत्विति ॥ ५ ॥ २८ ॥**

"सृणिः ( ८४ )"–इत्यनवगतम् । "अङ्कुशो भवति"–इत्यभिधेयवचनम् । "सरणात्"–इति व्युत्पत्तिः । सरण इति न्याय्यम् । सरति गच्छत्यसौ हस्तिशिरसि ॥

"अङ्कुशोऽञ्चतेः"–इति पर्यायप्रसक्तम्, अञ्चतीत्यसौ गच्छति हस्तिशिरसि । "आकुञ्चितो भवतीति वा" । स ह्याभिमुख्येन कुटिलभूतो भवति ।

"युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ॥

गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ( य० वा० सं० १२, ६८ )"–इति ॥

बुधस्येयमार्षम् । त्रिष्टुप् । वैश्वदेवी । ऋत्विक्स्तुतिर्वा, अग्नौ मध्यमदान्तयोजने सीरानुमन्त्रणे विनियुक्ता । 'युनक्त' योजयत, हे योजयितारः, 'सीरा' सीराणि, 'वि' 'तनुध्वम्' वितनुत च 'युगा' एतानि युगानि, 'कृते' कृष्टे 'इह' अस्मिन्

---

१ 'षष्ठे' इति मुद्रितमासीत् ॥ ३ 'नवमे' इति मुद्रितमासीत् ।

'योनौ' क्षेत्रे 'बीजं' 'वपत' । तथा 'च' वपत, यथा 'गिरा' वाचा यत् प्रार्थयामः, तत् 'श्रुष्टिः' क्षिप्रमेव 'असत्' भवेत्, 'सभराः' च अतिफलभारवत्य एताः स्युरोषधयः 'नः' अस्माकम् । किञ्च, ''नेदीय इत्सृण्यः'' ''सृणिरङ्कुशो भवति'' यावति प्रदेशेऽवस्थितमाक्रष्टुं शक्नोति, ततोऽपि नेदीयः अत्रै[1] ''पक्कम्'' औषधं प्रचुरत्वात् ओषधीनाम्, ''एयात्'' आगच्छेदस्मान् प्रति, तथा शीघ्रं बहु च वपतेत्यर्थः । एवमत्र नेदीय इत्यनेन सम्बन्धात् ''सृणिरङ्कुशो भवति''–इत्युपपद्यते ॥ अन्ये तु ब्रुवते तथा वपत, यथा प्राग् दात्राकर्षणान्मुष्टिः पूर्येतेति दात्रमेवास्मिन् पक्षेऽङ्कुशशब्देनोच्यते । तदाकृष्टसस्यस्य ''अङ्कुशादायात्'' दात्राकर्षणात् प्राक् ''अन्तिकतमं'' सन्निकृष्टतममौषधं पक्कमागच्छेदिति . युष्माभिरेवमुक्तं भवत्विति । एतत् वयमाशास्महे–''पक्कमौषधमागच्छत्विति'' ॥

अध्यायसमाप्त्युपप्रदर्शनार्थौ द्विरभ्यास इति ॥ ५ । २८ । ५ ॥ *

संस्निमेसश्चन्तीर्नयस्यवराहोगायन्तित्वापवित्रंपुरुत्वाकिमि-
त्तेप्रतत्तेऽग्निन्नरऐकयापान्तमन्युरुर्वश्यप्सराउतासिसंइन्नि-
यत्कंदामर्त्तपत्नीवन्तःसुगुरसद्वृंकश्चन्द्रमाअरुणोमायं-इन्द्रा-
ग्नीमानःसमस्यहविषाजारःपृथक्प्रायन्प्रीणीताश्वान्सुदेवः-
प्रवावृजेऽष्टाविंशतिः ॥

## इति निरुक्ते पूर्वषट्के पञ्चमोऽध्यायः ॥ ५ ॥

जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ पञ्चमो ( दशमो )ऽध्यायः समाप्तः ॥ ५ ॥

---

१ 'अन्नं' ॥ * अत्रैवाष्टाविंशतिखण्डसमाप्तिरवगन्तव्या । ''इति निरुक्तवृत्तौ पञ्चमा [ दशमा ] ध्यायस्य चतुर्थः पादः ॥ ५, ४ ॥'' इति तूपलभ्यते ॥

( अथ द्वात्रिंशच्छतं पदानि )

आशुशुक्षणिः ॥ १ ॥

# अथ षष्ठोऽध्यायः ६.

ॐ । "त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥"

त्वमग्ने द्युभिरह्नोभिस्त्वमाशुशुक्षणिः ॥ आशु शुचा दीप्त्या क्षणोति हिनस्तीति।

आशु इति च शु इति च क्षिप्रनामनी भवतः ॥

क्षणिरुत्तरः क्षणोतेः आशु शुचा क्षणोतीति वा सनोतीति वा—॥

"आशुशुक्षणिः ( १ )"—इत्यनवगतम् । "आशु शुचां सनिता वा" स्यात्, "आशु शुचा क्षणिता वा" । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः०—जायसे शुचिः ॥ ( ऋ० सं० २, ५, १७, १ )"—इति ॥ गृत्समदस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । जगती । आग्नेयी । हे भगवन्! "अग्ने!" "त्वं" "द्युभिः" "अह्नोभिः" निमित्तभूतैः पौर्णमास्याद्यैः एषां मथ्यमानो नृणां जायसे, 'पौर्णमास्याममावस्यायां वादधीत' इत्युक्तम् । किञ्च, "त्वम् आशुशुक्षणिः" । "आशु इति च शु इति च" एते "क्षिप्रनामनी भवतः" । शु—इत्येतदत्र प्रासङ्गिकमन्यत्रोपकारं करिष्यतीति । तद्यथा,—"शुनो वायुः; शु एत्यन्तरिक्षम्"—इत्येवमादौ । आशुशुक्षणिः—इत्येतेषां पञ्चानामक्षराणामाद्यं तावदक्षरद्वयम् आशु—इत्येतत् क्षिप्रनाम । अधुना शु—इत्येतत् तृतीयमक्षरमतिक्रम्य उत्तरमक्षरद्वयं निराह,—"क्षणिः"—इत्येष द्व्यक्षरः शब्दः "क्षणोतेः धातोः ( तना० उ० )" हिंसार्थस्य । "सनोतेः ( तना० उ० )" वा सम्भजनार्थस्य । मध्यमं तु शु—इत्येतदक्षरं 'शुचेः ( भू० प० ) दीप्त्यर्थस्य । अथ कोऽर्थः सर्वैरप्येतैरक्षरैरभिधीयते ? इति, उच्यते—"आशु" "शुचा" दीप्त्या "क्षणोति" हिनस्ति—"इति" आशुशुक्षणिः अग्निः । अथवा—आशु शुचा "सनोति" सम्भजति—इति आशुशुक्षणिः अग्निः । क्षणोतेः सनोतेश्च विकल्पः ।

---

१ 'शुचा सनि', 'शुक्सनि' ॥

**शुक् शोचतेः । पञ्चम्यर्थे वा प्रथमा ।**

**तथा हि वाक्यसंयोग आ इत्याकार उपसर्गः पुरस्ताच्चिकीर्षितज उत्तर आशु शोचयिषुरिति–॥**

"शुक् शोचतेः"–इति । पञ्चानामक्षराणामाशुशुक्षणिशब्दे तृतीयमक्षरं शु–इति, तस्यैतन्निर्वचनम् । एवं तावदयमेको निर्वचनप्रकार आशुशुक्षणिशब्दस्य । अथवैवमन्यथा स्यात् "पञ्चम्यर्थे" इयं "प्रथमा" विभक्तिः । "आशुशुक्षणेः"–इति यदुक्तं स्यात्, एतदुक्तं भवति–आशुशुक्षणिः–इति । आह–किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यते ? इति, उच्यते–"तथाहि, वाक्यसंयोगः" तेन प्रकारेण पञ्चमीत्वेन विपरिणामे पञ्चमीत्वेन विपरिणतस्य शब्दस्यानेन वाक्येन संयोगेऽर्थसङ्गतिर्भवति न यथावस्थितस्य । आह–कथं कृत्वा ?–इति, उच्यते–"त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यः"–इत्येतान्यक्षराणि बहूनि पदानि पञ्चम्यन्तानि, तस्मादनेनापि पञ्चम्यन्तेनैव भवितव्यमित्युपपद्यते पञ्चमीत्वेन विपरिणाम इति । आशुशुक्षणिरित्येतस्याक्षरपञ्चकस्य य एष पुरस्तात् "आ–इति आकारः" एष तावत् "उपसर्गः" । यः पुनरेष शुशुक्षणिरिति "उत्तरः" अनन्तरश्चतुरक्षरः शब्दः, एषः "चिकीर्षितजः" चिकीर्षितादर्थाज्जातः सन्नन्तादित्यभिप्रायः । अथ पुनः समस्तस्य कोऽर्थः ? इति, उच्यते–यः कश्चित् "आशु शोचयिषुः" आदिदीपयिषुः भवति, स आशुशुक्षणिः यजमान इति यावत्, तस्मादाशुशुक्षणेः त्वं हे भगवन्नग्ने ! जायसे । किमेतावदेव? नेत्युच्यते,–त्वम् "अद्भ्यः" जायसे, वैद्युतात्मना । त्वमेव च "अश्मनः" "परि" परितः सर्वतः, इतरेतराभिघाताज्जायसे । "त्वं" "वनेभ्यः" दारुभ्यः । त्वम् "ओषधीभ्यः" शरादिभ्यः । त्वं "नृणां" मनुष्याणां हे "नृपते" मनुष्यपते ! "जायसे" अभिव्यज्यसे । "शुचिः" दीप्त इत्यर्थः ॥

**शुचिः शोचतेर्ज्वलतिकर्मणः । अयमपीतरः शुचिरेतस्मादेव । निष्षिक्तमस्मात् पापकमिति नैरुक्ताः ॥ १ ॥**

"शुचिः शोचतेः"–ज्वलत्यर्थस्य । "अयमपीतरः शुचिः" लौकिकः "एतस्मादेव"–इति वैयाकरणा मन्यन्ते, नैरुक्ताः पुनः निःपूर्वात् सिञ्चतेरितरः शुचिरित्येवं मन्यन्ते, "निः" निष्कृष्य हि "अस्मात्" "पापकम्" अशुचित्वम्, अन्यस्मिन् "सिक्तं" भवतीत्येवम् । अत्राभिर्वाच्य आशुशुक्षणिरन्यो वा यः कश्चिदग्निं मथित्वा तेन किञ्चिदादिदीपयिषुर्भवति, स वा आशुशुक्षणिरिति ॥ ६ । १ । १ ॥

आशाभ्यः ॥ २ ॥

"इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।"
आशा दिशो भवन्त्यासदनात् ।
आशा उपदिशो भवन्त्यभ्यशनात् ॥ २ ॥

"आशाभ्यः ( २ )"—इत्यनवगतमनेकार्थञ्च । "आसदनात्"—इत्यवगमः ॥

"इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।
जेता शत्रून्विचर्षणिः ॥ ( ऋ० सं० २, ८, ९, २ )"—इति ॥

गृत्समदस्येयमार्षम् । गायत्री । ऐन्द्री । अभिप्लवस्य द्वितीयेऽहनि प्रउगे शस्यते ॥ "इन्द्रः" "आशाभ्यः" दिग्भ्यो हि यत् भयमुत्पद्यते जगताम्[1], "सर्वाभ्यः" नानादिङ्निवासिभ्यो भूतेभ्यः "अभयं" "करत्" करोत्वित्यर्थः । आह—किंलक्षणः पुनरसाविन्द्रः ?—इति, 'जेता शत्रून्विचर्षणिः' अधिद्रष्टा सार्वभौतिकानां कर्मणाम् ॥ "आशा दिशो भवन्ति, आसदनात्" आभिमुख्येन हि ताः सर्वत्र सन्ना इव भवन्ति । "आशा उपदिशो भवन्ति, अभ्यशनात्" । अभ्यश्नुवते हि ताः परस्परेणैव ॥ ६ । १ । २ ॥

काशिः ॥ ३ ॥

काशिर्मुष्टिः प्रकाशनात् ।
मुष्टिर्मोचनाद्वा, मोषणाद्वा, मोहनाद्वा ।
"इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते ।"
इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनात् ।
रोधः कूलं निरुणद्धि स्रोतः ।
कूलं रुजतेर्विपरीताल्लोष्टोऽविपर्ययेण ।
अपारे दूरपारे यत्संगृभ्णासि मघवन् काशिस्ते महान् ॥ ३ ॥

"काशिः ( ३ )"—इत्यनवगतम् । "काशयितव्यः"—इत्यवगमः । "मुष्टिः"—इत्यभिधेयवचनम् । "प्रकाशनात्"—इति निर्वचनम् । "मुष्टिः"—इत्येतत् पर्यायप्रसक्तं

1 'जनानाम्' ॥

निरुच्यते,—"मोचनाद्वा" मुच्यते ह्यसौ। "मोषणाद्वा" तेन हि मुष्यते। "मोहनाद्वा" तत्र हि मुह्यति परः। किमेतस्मिन्मुष्टौ? इति॥

"उ॒ता॑भ॑ये पुरुहूत॒ श्रवो॑भि॒रेको॑ दृ॒ळ्हम॑वदो वृत्र॒हा सन्।
इ॒मे चि॑दिन्द्र॒ रोद॑सी अपा॒रे यत् सं॑गृ॒भ्णा म॑घवन्का॒शिरित्ते॑॥ ( ऋ० सं० ३, २, १, ५ )"—इति॥

विश्वामित्रस्यार्षम्। त्रिष्टुप्। ऐन्द्री। पृष्ठ्याभिप्लवयोः द्वितीयपञ्चमयोरह्नोः सम्पातसूक्तं नाम, तत्रेयं शस्यते, अच्छावाकेन माध्यन्दिने सवने॥ "सहदानुम्" "अलातृण" "उद्वृह रक्षः" इत्येताश्च तत्रैव॥ अपि भयवति संग्रामे, 'अभये' अभये इव। हे 'पुरुहूत!' 'एकः' अपि 'सन्' असहायः, 'श्रवोभिः' श्रवणीयैः शब्दैरन्नैर्वा, हविर्भिर्वा, तृप्तः सन् 'दृह्ळं' दृढं समर्थम् 'अवदः' 'वृत्रहा' शत्रुहेत्यर्थः। किमेतावदेव माहाभाग्यम्? नेत्युच्यते, इदं चान्यत्—"इमे चित्" इमे अपि "रोदसी" "द्यावापृथिव्यौ" एवमपि "अपारे" "दूरपारे" सती "यत्" "संगृभ्णा" "संगृभ्णासि" त्वमहो! "काशिः" "ते" "महान्"॥ एवमत्र संग्रहणसम्बन्धात् "काशि"—शब्दो मुष्ट्यभिधायक इत्युपपद्यते॥

प्रसक्तानुप्रसक्तमुच्यते,—ये एते "रोदसी" एते "रोधसी"। किं कारणम्? "विरोधनात्" विविधानि हि भूतान्येते रुन्धः। "कूलम्" कूलम् अपि "रोधः" उच्यते, तदपि हि "स्रोतः" उदकस्रोतांसि "निरुणद्धि"। "कूलं रुजतेः ( तु० प० )" धातोः, तत् पुनः "विपरीतात्" वैपरीत्येन। "लोष्टः" पुनरस्यैव धातोः "अविपर्ययेण"॥ ६।१।२॥

## कुणारुम्॥ ४॥

### "अहुस्तमिन्द्र सम्पिणक्कुणारुम्।"
### अहस्तमिन्द्र कृत्वा सम्पिण्ढि परिक्कणनं मेघम्॥ ४॥१॥

"कुणारुम् (४)"—इत्यनवगतम्। मेघोऽभिधेयः। "कणनम्"—इति शब्दसमाधिः॥

"स॒हदा॑नुं पुरुहूत क्षि॒यन्त॑मह॒स्तमि॑न्द्र॒ सम्पि॑ण॒क्कुणा॑रुम्।
अ॒भि वृ॒त्रं वर्ध॑मानं॒ पिया॑रुमपा॒दमि॑न्द्र त॒वसा॑ जघन्थ॥ ( ऋ० सं० ३, ३, २, ३ )"—इति॥

'सह'—इत्युदकनाम, उदकदातारं मेघम्। हे 'पुरुहूत!' "इन्द्र!" 'क्षियन्तम्' अन्तरिक्षलोके निवसन्तं गच्छन्तं वा "अहस्तम्" अप्रतीकारसमर्थं कृत्वा ततः पुनः "सम्पिणक्" "सम्पिण्ढि" संचूर्णय। "कुणारुं" "परिक्कणनं" शब्दकारिणमित्यर्थः।

एवं तावदेनं कुरु । अथ पुनः योऽयमपरो वृत्रः, वर्षिता मेघः, एनमप्युपरि 'वर्द्धमानं' 'पियारुं' हिंसनशीलम्, 'अपादं' गमनहीनं कृत्वा तत एनं "तवसा" बलेन 'जघन्थ' जहीत्यर्थः ॥ एवमत्र वधाधिकारात् मेघाधिकाराच्च "कुणारुं—क्वणन्तशीलम्"—इत्युपपद्यते ॥ ६ । १ । ४ ॥

## अलातृणः ॥ ५ ॥

"अलातृणो बल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।
सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः" ॥

अलातृणोऽलमातर्दनो मेघो बलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार ॥

"सुगान् पथो अकृणोन्निरजे गाः ॥"   निरजे निर्गमनाय

सुगमनान् पथोऽकरोन्निरजनाय गवाम् ॥

"प्रावन्वाणीः पुरुहूतं धमन्तीः ॥"

आपो वा वहनाद्वाचो वा वदनात् ॥

बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा ॥ १ ॥ २ ॥

"अलातृणः (५)"—इत्यनवगतम् । "अलमातर्दनः"—इत्यवगमः ॥ *

"अलातृणो बल०—धमन्तीः ॥ (ऋ० सं० ३, २, २, ५)"—इति ॥

हे "इन्द्र !" योऽयम् "अलातृणः" "अलमार्तर्दनः" पर्य्याप्तः आतर्दयितुम् । उदकपूर्णः "बलः" मेघः, स हि आवृणोत्युदकम् । "व्रजः" च, स एव "अन्तरिक्षे व्रजति" इति गुणान्तरत्वादजामि । आह—किं तस्य ? इति । एष "गोः" "एतस्याः माध्यमिकाया वाचः" भावत्कायाः शब्दमुपश्रुत्य "पुरा" एव "हन्तोः" "हननात्" भवतो वधात् "भयमानः" बिभ्यत्, असह्योऽयमस्य वध इति मन्यमानः, "व्यार" विश्लथीभवतीत्यर्थः । स त्वमनेनैव प्रकारेण एनं मेघं विदारयन्, "सुगान्" "सुगमनान्" "पथः" मार्गान्, "अकृणोत्" करोषि, कृतवान् वा "निरजनाय" निर्गमनाय एतांसां मेघोदरान्तर्गतानां "गवाम्" अपाम्, विदीर्णे हि तस्मिन्मेघे सुखं ताः तस्मान्मेघोदरान्नि-

* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा 'अलातृण इत्यनवगतम्' इत्यतः प्रागुचिता ॥

गच्छन्ति । किञ्च, निर्गताः सत्यः ताः "वाणीः" आपः "प्रावन्" प्रकर्षेणावन्, रक्षन्ति, "धमन्तीः" गच्छन्त्यः यथानिम्नमभिसरमाणः, 'पुरुहूतम्' उदकम् । यदेतदुदकस्थानं तडागनद्यादि, तत्प्रति धमन्तीः तदेव रक्षन्ति, तद्धि उपदस्येत्, यदि न पतेरंस्ता आपः । एवमापः 'वाणी'–शब्देनोक्ताः, ता हि "वहनात्" वाणीरित्युच्यन्ते । "वाचो वा वदनात्" वाणीरित्युच्यन्ते । यदा विदीर्णात् मेघान्निर्गतमुदकं पुरुहूतं भवति वर्षभावेन, अथ तदा तेषामेव प्राणिनामहो ह्रष्टमिति–एवमाद्या वाणीः वाचो धमन्तीः मुखेभ्यो निर्गच्छमानाः, तदेवोदकं प्रावन् प्रागच्छन्नित्यर्थः ॥ एवमत्र "पुरा हननाद् भयमानो व्यार"–इत्यनेन सम्बन्धात् "अलातृणः=मेघः"–इत्युपपद्यते ॥

"बहुभिः" प्राणिभिः "आहूतः" आहूयते–ममेदं ममेदमिति, तस्मात् पुरुहूतम् "उदकं भवति" ॥ "धमतिः" एषः "गतिकर्मा" एव, नात्र स्तुतिकर्मेत्यभिप्रायः । स्तुतिकर्मस्वपि हि धमतिः पठितः । "धमति ( १२ ), नदति ( ९ ) सरति"–इति ॥

"निरजे गाः"–इत्यत्र केचित् 'पशुगव्य एताः'–इति व्याचक्षते, तासां हि इन्द्रेण विदारितेषु मेघेषु सुगमनाः पन्थानो निर्गमनाय भवन्ति, सुयवसत्वान्नीरजस्कत्वाच्च । 'प्रावन् वाणीः"–इत्यत आरभ्य समानमेव पूर्वेण ॥ ६ । २ । १ ॥

## मुलुलूकम् ॥ ६ ॥

"उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि । आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥"

उद्धर रक्षः सहमूलमिन्द्र । मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा । वृश्च मध्यं प्रति शृणीह्यग्रमग्रमागतं भवत्या कियतो देशात् । सललूकं संलुब्धं भवति पापकमिति नैरुक्ताः । सररूकं वा स्यात्सर्त्तेरभ्यस्तात् । तपुषिस्तपतेर्हेतिर्हन्तेः ॥ १ ॥

"सललूकम् ( ६ )"–इत्यनवगतम् । "संलुब्धम्"–इति शब्दसमाधिः, "सररूकम्"–इति "वा" । *

---

१ 'हो पृष्ठमि' ॥ २ 'मुख्येभ्यो' ॥ * अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, सा 'सललूकमित्यनवगतम्' इत्यतः समुचिता ॥

"उद्वृ॑ह॒ रक्षः॑०—हे॒तिम॑स्य ॥ ( ऋ० सं० ३, २, ४, २ )"—इति "उद्धर" एतत् "रक्षः" "सहमूलम्" हे "इन्द्र !" "वृश्चा" अस्य छिन्धि "मध्यम्" "अग्रं" च अस्य "प्रति शृणीहि" प्रतिजहीत्यर्थः । किञ्च, "आ कीवतः" "आ कियतः" आ कस्मात् "देशात्" एतदुद्धर, यस्मात् वितर्कयमाणा अपि न शक्नुयुर्वितर्कयितुं—कियतोऽपि प्रदेशादेतदुद्धृतमिति । यथा न किञ्चिदप्यस्यावशिष्यते, तथैतदुद्धरेत्यभिप्रायः । तथा चैतदुद्धृत्य "सलल्लूकं" "संलुब्धं" संमूढमप्रतिपक्षं कुरु ॥ अथवा—"पापकं" पापतरमस्मत्तः कुरु—"इति" एतत् "नैरुक्ताः" नैरुक्तपक्षेण । अथवा—"सररूकं" सरणशीलं "वा" अशनशीलं प्रच्युतं स्वदेशात् एतत् कुरु। तत् एतत् उन्मूलं कृत्वा स्थानप्रच्युतायास्मै रक्षसे "ब्रह्मद्विषे" ब्राह्मणद्वेष्ट्रे "तपुषिं" तापयित्रीं "हेतिं" हन्त्रीम्, आयुधजातिम्, मूलमध्याग्रच्छेदनाय पुनःपुनः "अस्य" क्षिपेत्यर्थः ॥ एवमत्र सलल्लूकमिति "लुभेर्मोहनार्थस्य (तु० प०)" शब्दसारूप्यात् संलुब्धमित्युपपद्यते । "सर्त्तेः ( भू० प० )" अप्यत्र सारूप्यमस्तीति "सररूकं वा स्यात्"—इत्युक्तं भाष्यकारेण । रक्षोविशेषणं चैतत्, तस्य हि सम्मोहो वा नाशनं वाऽभीष्टमिति ॥ ६ । ३ । १ ॥

## कुत्पयम् ॥ ७ ॥

### "त्वं चि॑दि॒त्था क॑त्प॒यं शया॑नम् ।"

### सुखपयसम् । सुखमस्य पयः ॥ २ ॥

"कत्पयम् ( ७ )"—इत्यनवगतम् । 'कपयम्'—इत्यवगमः । कपयमित्यवगमे "सुखपयसम्"—इति पर्यायेणाभिधेयवचनम् । मधुरोदको यो मेघः, सोऽभिधेयः ॥ किं कारणम् ? "सुखं" हि सुखोत्पादनम् "अस्य" "पयः" मधुरत्वात् ।

"त्वं चि॑दि॒त्था क॑त्प॒यं शया॑नमसू॒र्ये॑ तम॑सि वावृधा॒नम् ॥
तं चि॑न्मन्दा॒नो वृ॑ष॒भः सु॒तस्यो॒च्चैरिन्द्रो॑ अप॒गूर्या॑ जघान ॥ ( ऋ० सं० ४, १, ३२, ६ )"—इति ॥

गातुर्नामात्रेयः, तस्येयमार्षम् । "त्वं" तं मेघम् "इत्था" अमुना प्रकारेण, अथवा-अमुष्मिन्नन्तरिक्षलोके "कत्पयं" सुखोदकं "शयानम्" 'असूर्ये' तमश्च कृत्वा 'वावृधानं' वर्द्धमानम् । 'मन्दानः' मन्दमानः, 'वृषभः' वर्षिता, 'इन्द्रः' 'सुतस्य' अभिषुतस्य, सोमस्य स्वमंशं पीत्वा । ततः 'उच्चैः' वज्रम् "अपगूर्य" अवगूर्य 'जघान' । य एवङ्गुणयुक्त इन्द्रः, सोऽस्माकमिदं नाम करोत्विति[illegible]योज्या ॥ एवमत्रेन्द्रो

जघानेति अनेन सम्बन्धात् "“कत्पयः—सुखपयः—मेघः”—इत्युपपद्यते, तस्य वधस्याभीष्टत्वात् ॥ ६ । ३ । २ ॥

## विस्रुहः ॥ ८ ॥

### विस्रुह आपो भवन्ति विस्रवणात् ।

### "वया इव रुरुहुः सप्त विस्रुहः" इत्यपि निगमो भवति ॥ ३ ॥

"विस्रुहः (८)"—इत्यनवगतम् । 'विस्रवः'—इत्यवगमः । "आपो भवन्ति"—इत्यभिधेयवचनम् । "विस्रवणात्"—इति हेतुनिर्देशः ॥

"वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।

तस्येदु विश्वा भुवनाधि मूर्द्धनि वया इव रुरुहुः सप्त विस्रुहः ॥ (ऋ० सं० ४, ५, ९, ६)"—इति ॥

भरद्वाजस्येयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । "वैश्वानरस्य" भगवतः, अग्नेः, 'अमृतस्य' अमरणधर्मिणः, 'केतुना' कर्मणा, 'चक्षसा' चक्षुषा दर्शनेन 'दिवः' अपि यानि 'सानूनि' समुच्छ्रितानि स्थानानि, तानि 'विमितानि' विनिर्मितानीत्यर्थः । अग्निप्रकाश्यमानविषयो हि लोकः कर्मणि प्रवर्त्तते साधुन्यसाधुनि वा । साधुभ्यः साधुना च, पापेभ्यः पापेन च सार्वलौकिकेन कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयत इत्यनयापेक्षयोक्तम्,—"वैश्वानरस्य चक्षुषा केतुना च दिवोऽपि सानूनि निर्मितानि"—इति । अग्निरेव हि वाच्यधिदेवताभावेनावस्थितः सर्वमिदं ख्यापयति, ततः कर्म प्रतायते । तदुक्तम्,—"अग्निर्वाग् भूत्वा मुखं प्राविशत्"—इति । किञ्च, 'तस्येदु विश्वा' तस्यैव वैश्वानरस्य पृथिवीभावेनावस्थितस्य । अयं चाग्निर्वैश्वानर इत्युक्तम्, 'विश्वा भुवना' विश्वानि भुवनानि, सर्वभूतभावयितॄण्युदकानि । "भुवनम्"—इति ह्युदकनामसु पठितम् । 'मूर्द्धनि' उपरि "वया इव" शाखा इव "रुरुहुः सप्त विस्रुहः" । सप्त सर्पणाः, विस्रुहः विविधस्रवणाः भूत्वा ततः शाखा इव रुरुहुः अस्यां पृथिव्यां नद्यादिभावेन, ततः शाखा इव ह्येताः पृथिव्या उपरि, यथा निम्नं विस्रवमाणा (विस्रवन्तः) आपो लक्ष्यन्ते—इत्येतद् दृष्ट्वैवमवोचत्,—"तस्येदु विश्वा०—सप्त विस्रुहः"—इति ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "विस्रुहः—आपो भवन्ति"—इत्युपपद्यते ॥ 'भुवन'—शब्देन भूतान्येवोच्यन्त इति केचिद् वर्णयन्ति, चतुर्विधश्च भूतग्रामः, विस्रुहश्च वया इव रुरुहुः पृथिव्या उपरीति । 'सप्त'—शब्देनापि समुद्रानेव केचिद् वर्णयन्ति, ते हि पृथिव्याः शाखा इव लक्ष्यन्ते, विस्रवन्ति च ॥ ६ । ३ । ३ ॥

## वीरुधः ॥ ९ ॥

**वीरुध ओषधयो भवन्ति विरोहणात् ।**

**"वीरुधः पारयिष्ण्वः" इत्यपि निगमो भवति ॥ ४ ॥**

"वीरुधः ( ९ )"–इत्यनवगतम् । "विरोहणात्"–इत्यवगमः । "ओषधयो भवन्ति"–इत्यभिधेयवचनम् । "विरोहणात्"–इति हेतुनिर्देशः ॥

"ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।

अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ( ऋ० सं० ८, ५, ८, ३ )"–इति ॥

भिषज आथर्वणस्येयमार्षम् । ओषधिसूक्ते । अनुष्टुप् । हे 'ओषधीः' ओषधयः ! 'प्रतिमोदध्वम्' इमं रुग्णं प्रति, अस्मान् प्रति वा मोदध्वम् मुदिताः हृष्टाः भवन्तु । कीदृश्यो यूयम् ? 'पुष्पवतीः' पुष्पवत्यः, 'प्रसूवरीः' प्रकर्षेण सूयन्ते उपभोगार्थेति प्रसूवरीः । याश्च पुष्पवत्यो याश्च फलवत्यो याश्चाफला याश्चापुष्पाः, ताः सर्वाः । 'अश्वा इव' वडवा इव, 'सजित्वरीः' सह जेत्र्यः[1], "वीरुधः" सर्वरोगान् जित्वा अस्माकमायुषः "पारयिष्णुः" पारयित्र्यः सन्तु ॥ एवमत्र "पुष्पवतीः प्रसूवरीः"– इत्येतस्मात् विशेषलिङ्गात् "वीरुधः=ओषधयः" "भवन्ति"–इत्युपपद्यते ॥६।३।४॥

## नक्षद्दाभम् ॥ १० ॥

**नक्षद्दाभमश्नुवानदाभमभ्यशनेन दभ्नोतीति ।**

**"नक्षद्दाभं ततुरिं पर्वतेष्ठाम्" इत्यपि निगमो भवति ॥ ५ ॥**

"नक्षद्दाभम् ( १० )"–इत्यनवगतम् । 'न क्षणदाभम्'–इत्यवगमः । "अश्नुवानदाभम्"–इति पर्यायेणाभिधेयवचनम् । "अभ्यशनेन" अभिव्यापनेन यो "दभ्नोति" हिनस्ति, स नक्षद्दाभः ॥

"तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।

नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥ ( ऋ० सं० ४, ६, १३, २ )"–इति ॥

भरद्वाजस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । सम्पातसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे शस्यते "तमीमहे ( ६ । ३ । ६ )–इति", इयञ्च तत्रैव । 'तम्' इन्द्रम् 'नः' अस्माकम्, ये 'पूर्वे' 'पितरः' पितृगणाः, 'सप्त' सप्तसङ्ख्याकाः, ये पुरा-

---

[1] 'जैत्र्यः' ॥

णेषु पठ्यन्ते । अथवा–'सप्त' 'सृप्ताः' पूर्वतरमस्माल्लोकादमुं लोकम्, ते च 'नवग्वा' नवगतयः, अभिनवा हि तेषां गतिः,–अर्द्धमासेऽर्द्धमासे भवति पितृयज्ञं प्रत्यागन्तुम्। अथवा–नवनीतगतयो नवगतयः। नवनीते हि तेषां मनसो गतिर्भवति,–इदमस्माकं स्यादिति, "स्वयं विलीनं पितॄणाम्"–इत्युक्तम्। 'विप्रासः'–इति, विप्राः–प्राप्तप्रज्ञाः, पितृलोकेऽवस्थिताः। 'मतिभिः' 'अभिवाजयन्तः' स्तुवन्त आसते। किंलक्षणं पुनरिन्द्रं मतिभिरभिवाजयन्त आसते? इति। उच्यते–"नक्षद्दाभम्" योऽभिव्यापनमात्रेणापि दभ्नोति, किमुत वेधेन[1]? तम्। "ततुरिम्" यश्च त्वरणशीलः, तम्। "पर्वतेष्ठाम्" यश्च मेघस्थायी, तम्। 'अद्रोघवाचम्' यस्य चाद्रोग्धव्या वाक् अनतिक्रमणीयेत्यर्थः, तम्। 'शविष्ठम्' यश्च बलिष्ठः, तम्। य एवङ्गुणविशिष्ट इन्द्रः तं मतिभिरभिवाजयन्त आसते, सोऽस्माकमिदं नाम करोत्वित्येवमाशीर्योज्या॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च योऽस्म्येशनेन[2] दभ्नोति, स नक्षद्दाभ इत्युच्यते॥६।३।५॥

## अस्कृधोयुः ॥ ११ ॥

**अस्कृधोयुरकृध्वायुः, कृध्विति ह्रस्वनाम निकृत्तं भवति। "यो अस्कृधोयुरजरः स्वर्वान्" इत्यपि निगमो भवति॥ ६॥ ३॥**

"अस्कृधोयुः (११)"–इत्यनवगतम्। "अकृध्वायुः"–इत्यवगमः। "कृधु इति ह्रस्वनाम" तद्धि "निकृत्तम्" इव "भवति" ह्रस्वत्वात्। तस्य अकारेण प्रतिषेधे कृते 'अकृधु'–इति भवति॥

"तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः।
यो अस्कृधोयुरजरः स्वर्वान्तमाभर हरिवो मादयध्यै॥ (ऋ० सं० ४, ६, १३, ३)"–इति॥

'तम्' वयमात्मनः पुत्रम् 'ईमहे' याचामहे। 'हरिवः!' त्वाम्। 'इन्द्रम्' ईश्वरम्। आह–यः किंलक्षणः पुत्रः? इति, उच्यते–सः 'अस्य' 'रायः' धनस्य परिपालने भोगे च समर्थः। किंलक्षणस्य पुनर्धनस्य? इति, 'पुरुवीरस्य' बहुवीरैस्तद्वतः, 'नृवतः' च दासैस्तद्वतः, 'पुरुक्षोः' च बहुनिवासस्य, अनेकप्रकारस्येत्यर्थः। न च परिपालनसमर्थ एव यः केवलमल्पकालः, तमीमहे। किं तर्हि? "यः" च "अस्कृधोयुः" अकृध्वायुः, दीर्घायुरित्यर्थः। "अजरः" च, यो दृढशरीर इत्यर्थः। "स्वर्वान्"

---

[1] 'वधेन'॥ [2] 'भ्यसनेन'॥

च, यः सुष्ठु शत्रूणामीरयिता । यः एवङ्गुणविशिष्टः पुत्रः 'तम्' 'आभर' आहर । 'हरिवो मादयध्यै' अस्माकमात्मनश्च मदनाय तर्पणायेत्यर्थः ॥ एवमत्र "अस्कृधोयुः"-इत्यनेन दीर्घायुरुच्यते, तस्याभीष्टत्वात्, शब्दसारूप्याच्च ॥ ६ । ३ । ६ ॥

## निशृम्भाः ॥ १२ ॥

**निशृम्भा निश्रथ्यहारिणः—॥**

"निशृम्भाः ( १२ )"—इत्यनवगतम् । "निश्रथ्यहारिणः"—इत्यवगमः । निश्लथया दृढया गत्या हरन्तः—॥ *

**"आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् ।**
**देवं वहन्तु बिभ्रतः ॥"**

**आवहन्त्वजाः पूषणं रथे निश्रथ्यहारिणस्ते ।**
**जनश्रियं जातश्रियम् ॥ १ ॥**

"आजासः पूषणं०—वहन्तु बिभ्रतः ॥ ( ऋ० सं० ४, ८, २१, ६ )"—इति ॥ भरद्वाजस्यार्षम् "आवहन्तु" "आजासः" अजाः, अश्वाः । "निशृम्भाः" "निश्रथ्यहारिणः" । य एवंलक्षणा अश्वाः, ते आवहन्तु "पूषणं" देवं "रथे" अवस्थितं "बिभ्रतः" धारयमाणाः । "जनश्रियम्" "जातश्रियम्" उद्भूतश्रियमित्यर्थः । एवमत्र समानविभक्त्यन्तत्वात् "अजासः"—इत्यनेन "निशृम्भाः"—इत्येतदश्वविशेषणम् । सति चाश्वविशेषणत्वे "निश्रथ्यहारिणः" शीघ्रहारिणः, तस्याभीष्टत्वादागमनस्य ॥ ६ ॥ ४ । १ ॥

## बृबदुक्थम् ॥ १३ ॥

**बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थमिति बृबदुक्थो वा ॥**

**"बृबदुक्थं हवामहे" इत्यपि निगमो भवति ॥ २ ॥**

"बृबदुक्थः ( १३ )"—इत्यनवगतम् । "महदुक्थः"—इति, "वक्तव्यम् अस्मै उक्थम्—इति वा" शब्दसमाधी ॥

---

* अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "निशृम्भा इत्यनवगतम्" इत्यतः प्रागुचिता ॥　॥ १ 'व्यवस्थि' ॥ २ 'तुथाभीष्ट' ॥

"बृबदुक्थं हवामहे सृप्रकरस्नमूतये।
साधु कृण्वन्तमवसे ॥ (ऋ० सं० ६, ३, २, ५)"–इति ॥

कश्यपस्यार्षम्। प्रथमे पर्याये मैत्रावरुणस्य शस्त्रे तृचाशीतिषु च महाव्रते शस्यते। उक्थम्–इति शस्त्रमुच्यते, तद् यस्य बृहत् महत्, स बृबदुक्थः, अथवा–तद् यस्य वक्तव्यम्, स बृबदुक्थः। तं "बृबदुक्थम्" इन्द्रम्, "हवामहे" वयमाह्वयामहे, एतस्मिन् कर्मणि। 'सृप्रकरस्नम्' सृप्रबाहुम्, दीर्घबाहुम् 'ऊतये' अवनाय, रक्षणाय आत्मनः। 'साधु कृण्वन्तम्' साधुकारिणम्, नित्यकालमेवास्य जगतः साधु करिष्यामीत्यभिप्रायम्। 'अवसे' तस्यैव तर्पणाय, तमागतं सन्तमेतस्मिन् कर्मणि तर्पयिष्याम इत्येतेनाभिप्रायेणाह्वयामहे ॥ एवमत्र "हवामहे"–इत्यनेन सम्बन्धात् "बृबदुक्थः = महदुक्थः, वक्तव्योक्थो वा"–इत्युपपद्यते। य एव हि महदुक्थो भवति, वक्तव्योक्थो वा स एव सुतरामाहूयत इति ॥ ६।४।२ ॥

## ऋदूदरः ॥ १४ ॥

**ऋदूदरः सोमो मृदूदरो मृदुरुदरेष्विति वा ॥**

**"ऋदूदरेण सख्या सचेय" इत्यपि निगमो भवति ॥ ३ ॥**

"ऋदूदरः (१४)"–इत्यनवगतम्। "मृदूदरः"–इत्यवगमः। "सोमः" इत्यभिधेयः ॥

"ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्य्यश्व पीतः।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ (ऋ० सं० ६, ४, १२, ५)"–इति ॥

प्रगाथस्येयमार्षम्। त्रिष्टुप्। सौमी। सोमेन्द्रस्य श्यामाकस्य चरोः याज्यैषा, सोमवामिप्रायश्चित्तेष्टौ।[1] "ऋदूदरेण" मृदूदरेण सोमेन, मृदु हि सोमस्योदरम्, सुषिरत्वात्। अथवा–मृदुरयमुदरे स्यात्–इत्येवमाशास्यते, पातृभिर्वमनाशङ्कया। तस्मात् मृदूदरः सोमः, स पुनरेष मृदूदरः सन्नृदूदर इत्युच्यते, तेन मृदूदरेण। "सख्या" समानख्यानेनैव केनचित् पुरुषेण, मित्रेण "सचेय" संसचेयम्, संसेवेयम्,। पुनरागामिषु 'यः' सोमः 'मा' मां 'न रिष्येत्' न हिंस्यात्, 'पीतः' सन्। यथाहमेतेन सोमेनाहिंसितः, तथा सचेयम्। हे 'हर्यश्व!' इन्द्र! सोमस्वामिन्! एतदस्तु नः। किञ्च, 'अयं यः सोमः' 'न्यधायि अस्मे' निहितोऽस्मास्वासीत्। येनेमामापदमापादिताः स्मो वमनद्वारेण। 'तस्मै' तदर्थम्। तेनास्माकमायुघ्नो यदव-

---

1 'सोमचायिनः प्रायश्चि'–इति तु मुद्रितमासीत्।

खण्डनं कृतम्, तत्प्रतिपूरणाय । 'इन्द्रम्' 'प्रतिरम्' प्रतीर्णमनवखण्डितं सर्वम् 'आयुः' 'एमि' याचामीत्यर्थः । सोमवमनवैगुण्यात् आयुषश्छेदमाशङ्कमान इन्द्रं दीर्घमायुर्ययाच यजमानाय ॥ एवमस्मिन् "ऋदूदरः—सोमः" प्रकरणात्, शब्द-सारूप्याच्च ॥ ६ । ४ । ३ ॥

## ऋदूपे ॥ १५ ॥

### ऋदूपे इत्युपरिष्टाद् व्याख्यास्यामः ॥ ४ ॥

"ऋदूपे ( १५ )"—"इति, उपरिष्टाद् व्याख्यास्यामः"—"ऋदूपे चिदृदूवृधा"—इत्यत्र ॥ ६ । ४ । ४ ॥

## पुलुकामः ॥ १६ ॥

### पुलुकामः पुरुकामः ॥

### "पुलुकामो हि मर्त्यः" इत्यपि निगमो भवति ॥ ५ ॥

"पुलुकामः ( १६ )"—इत्यनवगतम् । "पुरुकामः"—इत्यगवमः ।

"इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे ।

यत्सीमागश्चकृमा तत्सुमृळतु पुलुकामो हि मर्त्यः ॥ ( ऋ० सं० २, ४, २२, ५ )"—इति ॥

अगस्त्यलोपामुद्रासंवादे अन्तेवासी ब्रह्मचारी इमां सौमीं बृहतीमपश्यत् । 'इमम्' अहम् 'सोमम्' 'अन्तितः' अन्तिके अवस्थितम् 'उप' गम्य चेतसा 'ब्रुवे' । न च बहिरन्तिकेऽवस्थितमुपब्रुवे, किं तर्हि ? 'पीतं' सन्तं 'हृत्सु' एव,स्व एव हृदयेऽवस्थितमुपब्रुवे । "यत् सीमागश्चकृमा" । यत् सीम् सर्वतः सर्वप्रकारम् आगः चकृम पापं कृतवन्तो वयम् । 'तत्' अयं सोमः 'सुमृळतु' सुमृडतु सुष्ठु सुखविधिपरिणामं करोतु । किं कारणम् ? इतः,—यस्मात् "पुलुकामो हि" बहुकामो हि "मर्त्यः" । स बहुकामत्वात् मनुष्यस्वाभाव्यात् अवश्यमागः करोति, तदयं पीतः सोमः शमयत्वित्यभिप्रायः ॥ एवमत्र पुलुकाम—शब्देन पुरुकामो बहुकामः उच्यते, 'मर्त्य'—शब्द-सामानाधिकरण्यात्, सारूप्याच्च ॥ ६ । ४ । ५ ।

## असिन्वती ॥ १७ ॥

### असिन्वती असङ्खादन्त्यौ ॥

### "असिन्वती बप्सती भूर्यत्तः" इत्यपि निगमो भवति ॥६॥

"असिन्वती ( १७ )"—इत्यनवगतम् । "असङ्खादन्त्यौ"—इत्यर्थप्रतीतिः ।

"अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।

नाना हनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः ॥ ( ऋ० सं० ८, ३, १४, १ )"—इति ।

वैश्वानरस्याग्नेः सौचीकस्य वा वाजम्भरस्य वा सप्तेरियमार्षम् । त्रिष्टुप् । आग्नेयी । 'अपश्यम्' अहम् । भगवतः अग्नेः 'महतः' 'महित्वम्' माहाभाग्यम् । 'अमर्त्यस्य' अमरणधर्मिणः । 'मर्त्यासु' मरणधर्मिणीषु, 'विक्षु' मनुष्यप्रजासु इत्यर्थः । आह— किं पुनस्तन्माहाभाग्यम् ? इति, उच्यते—'नाना' भावेनैते 'हनू' हननसमर्थे ज्वाले अवस्थिते 'विभृते' विविधमिव धृते सत्यौ 'संभरेते' एकत्र हरेते हवींषि दारूणि वा । संभृत्य च "असिन्वती" "असंखादन्त्यौ" असंखादन्त्याविव, अथवा—असंचूर्णय-न्त्याविव । अनेन प्रकारेण शीघ्रं "बप्सती" भक्षयन्त्यौ । "भूरि" अपि दारुजातं हविर्जातं वा,—यत् "अत्तः" भक्षयतः, न च श्राम्यतः । एतदस्य माहाभाग्यमहम-पश्यमस्मिन् मनुष्यलोके इति । हनुरूपसम्बन्धात् बह्वीष्वपि ज्वालासु द्विवचनमेव स्थितम् ॥ एवमत्र हनुसम्बन्धात् "असिन्वती=असंखादन्त्यौ"—इत्युपप-द्यते ॥ ६ । ४ । ६ ॥

## कुपनाः ॥ १८ ॥

**कपनाः कम्पनाः क्रिमयो भवन्ति ॥**

**"मोषथा वृक्षं कपनेव वेधसः" इत्यपि निगमो भवति ॥७॥**

"कपनाः ( १८ )"—इत्यनवगतम् । "कम्पनाः"—इति शब्दसमाधिः । 'क्रिमयः भवन्ति"—इत्यभिधेयवचनम् ॥

"अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।

अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥ ( ऋ० सं० ४, ३, १५, १ )"—इति ॥

श्यावाश्वस्यात्रेयस्येयमार्षम् । मारुती । जगती । दाशरात्रिके त्रिवृत्स्तोमे प्रथमेऽह-न्याग्निमारुते विनियुक्ता । "प्रशर्द्धायेत्याग्निमारुतः"—इति सूत्रणात् । 'अभ्राजि' भ्राजते । 'वः' 'मरुतः !' तत् 'शर्द्धः' तद्बलम् । 'यत्' येन बलेन 'अर्णसं' मेघं वृद्धम्, उदकपूर्णम्, अनुप्रविश्य "मोषथ" मुष्णीथ यूयम्, निरुदकं कुरुतेत्यभिप्रायः । कथं पुनर्मोषथ ? इति—"वृक्षं कपनेव वेधसः"। "कपनाः" "कम्पनाः" "क्रिमयः" इव, "वेधसः" वेद्धारः, यथा वृक्षमनुप्रविश्य क्रिमयोऽन्तर्गतं दारुचूर्णं रसं वा मुष्णन्ति, एवं यूयमुदकं मुष्णीथ । अथवा—हे 'वेधसः' मेधाविनः ! इति मरुद्विषयमेतत् सम्बोधनं

स्यात् । यस्माद् यूयमेवमादिना प्रभावेण युक्ताः, अथैतस्मात् कारणात् अस्माकमेताम् 'अरमतिम्' अलमतिम्, पर्याप्तमतिम्, परिसमाप्तविद्यं यजमानं स्वकृतेनैव कर्मणा विद्यया वा यन्तम् इतो लोकादमुं लोकं 'सुगं' शोभनगमनं स्थानम्, यूयमपि 'अनुनेषथ' हे 'सजोषसः' सहप्रीताः ! गमनानुग्रहेऽस्य वर्त्तध्वमित्यभिप्रायः । कथं च पुनर्नेषथ ? 'चक्षुरिव' यथा गच्छतः पुरुषस्य चक्षुर्गमनानुग्रहे वर्त्तते, एवमनुनेषथैनं सुगमिति ॥ एवमत्र वृक्षसम्बन्धात् "क्रिमयः=कम्पनाः" ते हि वृक्षं मुष्णन्ति, मोषयन्ति च कम्पयन्ति च यं खादन्ति, स्वयमेव वा कम्पन्ते चलनस्वाभाव्यात् ॥ ६ । ४ । ७ ॥

## भार्ऋजीकः ॥ १९ ॥

**भार्ऋजीकः प्रसिद्धभाः ॥**

**"धूमकेतुः समिधा भार्ऋजीकः" इत्यपि निगमो भवति ॥ ८ ॥**

"भार्ऋजीकः (१९)—" इत्यनवगतम् । "ऋजुभाः"—इत्यवगमः । "प्रसिद्धभाः"—इति पर्यायशब्देन निर्वचनम् ॥

"देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भार्ऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ॥ ( ऋ० सं० ७, ६, ११, २ )"—इति ॥

आङ्गस्य हविर्धानस्यार्षम् । त्रिष्टुप् । 'देवः' त्वं दानादिगुणयुक्तः । हे भगवन् ! अग्ने ! 'देवान्' 'परिभूः' सर्वतो भवसि । 'ऋतेन' यज्ञेन सहितः । तदुक्तम्,—अग्ने नेमिरराँ इव देवांस्त्वं परिभूरसि आराधश्चित्रमृञ्जसे ॥ ( ऋ० सं० ४, १, ५, ६ )"—इति॥ यस्त्वमेवम्प्रभावः, तं त्वां ब्रवीमि,—'वह' प्रापय 'नो हव्यं' देवान् प्रति । 'प्रथमः' यस्मात् त्वं मनुष्यहोतारमपेक्ष्य, तस्मादेतत् कुरु । 'चिकित्वान्' स्वमधिकारमेतं जानान इत्यभिप्रायः । "धूमकेतुः" धूमप्रज्ञानः, धूमध्वजो वा । "समिधा" समिन्धनेन "भार्ऋजीकः" प्रसिद्धभाः । 'मन्द्रः' मदनः, तर्पयिता देवानाम् । 'होता' आह्वाता 'नित्यः' इतरं मनुष्यहोतारमनित्यमपेक्षामिरेव नित्यो होता । 'वाचा' वागधिदेवताभावेनावस्थितः । 'यजीयान्' यष्टृतरः,—मनुष्यहोतारमपेक्ष्य । एवमत्र "भार्ऋजीकः=प्रसिद्धभाः"—इत्युपपद्यते ॥ ६ । ४ । ८ ॥

## रुजानाः ॥ २० ॥

**रुजाना नद्यो भवन्ति, रुजन्ति कूलानि ॥**

---

१ 'कमेव' ॥　२ 'ऋज्रभाः' ॥

## "संरुजानाः पिपिष इन्द्रशत्रुः" इत्यपि निगमो भवति ॥९॥

"रुजानाः ( २० )"—इत्येतदेकं पदमनवगतम् । 'रुजन्त्यः'[1]—इत्यवगमः । "नद्यो भवन्ति"—इत्यभिधेयवचनम् । "रुजन्ति कूलानि"—इति हेतुनिर्देशः ॥

"अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां संरुजानाः पिपिष इन्द्रशत्रुः ॥ ( ऋ० सं० १, २, ३७, १ )"—इति ॥

हिरण्यस्तूपस्यार्षम् । अग्निष्टोमे निष्केवल्ये शस्यते । 'अयोद्धा इव' यथा कश्चित् अयोद्धा, 'दुर्मदः' दुर्मत्तः—वाङ्मात्रसारः । आह—स यथा किं करोति ? इति, उच्यते—'आ हि जुह्वे' आह्वयतीत्यर्थः । कमाह्वयति ? 'महावीरम्' महाविक्रान्तम्, 'तुविबाधम्' बहूनां शत्रूणां बाधितारम्, 'ऋजीषम्' ऋजीषिणमित्यर्थः । तदुक्तम्—"ऋजीषी वज्री"—इति। तमेवम्प्रभावमिन्द्रमाहूय मेघः 'नातारीत्' इतरवद्दुर्मदः न तर्त्तुं शक्नोति । 'अस्य' इन्द्रस्य 'समृतिं' समागमं 'वधानाम्' प्रहाराणाम्, अतरमाणः या एताः नद्यः, "संरुजानाः" ऊर्मिभिः कूलानि वहन्त्यो रुजन्ति, ताः प्रति विशीर्यमाणः "पिपिषे" "इन्द्रशत्रुः" इन्द्रस्य शातयितव्य इत्यर्थः । एवमत्र शब्दार्थोपपत्तेः "नद्यः—रुजानाः"—इत्युपपद्यते ॥ ६ । ४ । ९ ॥

## जूर्णिः ॥ २१ ॥

## जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा ॥

## "क्षिप्ता जूर्णिर्न वक्षति" इत्यपि निगमो भवति ॥१०॥

"जूर्णिः ( २१ )"—इत्यनवगतम् । जवनाद् वा, द्रवणाद् वा, दवनाद् वा—इति शब्दसमाधयः । शक्तिः अभिधेया । "जवतेर्वा" हिंसार्थस्यैव जूर्णिः, "द्रवतेर्वा" गत्यर्थस्यैव जूर्णिः, "दुनोतेर्वा" हिंसार्थस्यैव जूर्णिः ॥

"प्रप्रा वो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् ।
स्वयं सा रिषयध्यै या न उपेषे अत्रैः ।
हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥ (ऋ० सं० २, १, १७, ३ )"—इति ॥

पुरुच्छेपस्यार्षम् । अतिशक्वर्यतिच्छन्दाः । पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्ये शस्यते । 'प्र' ब्रवीमि हे स्तोतारः ! प्रब्रूत[2] अस्मै । 'स्वयशोभिः' आत्मीयैः यशोभिः संयुक्ताः स्तुतीः । किं कारणम् ? यस्मादेषः 'इन्द्रः' स्तुतः 'ऊती' अविता, रक्षिता 'परिवर्गे' संग्रामे, यत्र हि प्राणाः परिवृज्यन्ते वियुज्यन्ते, तत्र अयमस्माकं रक्षिता भवति ।

1 'रुजन्तः' ॥ 2 'प्रब्रोचत अ' ॥

'दुर्मतीनाम्' पापमतीनामस्मच्छत्रूणां हन्ता भविष्यति । तमेतमेवङ्गुणविशिष्टमिन्द्रम् 'दरीमन्' दारयितृतमं 'दुर्मतीनाम्' पुनःपुनः स्तुतः । आह—कथं पुनरसावस्माकं रक्षिता भविष्यति ? इति, उच्यते—'स्वयं' 'सा' 'रिषयध्यै' रेषणाय भविष्यति, किञ्चिदप्यकृत्वास्माकमिन्द्रप्रभावात् स्वयमेव विनंक्ष्यतीत्यभिप्रायः ॥ का पुनरसौ ? इति—'या न उपेषे अत्रैः' । या नः अस्मान् उपेषे उप आगच्छति अत्रैः अदनैः रक्षोभिः प्रहिता सा । 'हतेमसन्न वक्षति' । ईम्—इत्यनर्थकः । हता सती इन्द्रेण न वक्षति । अस्मान् प्रति "क्षिप्ता" अपि च तैः पुनरादरेणापि रक्षोभिः "जूर्णिः" जवसम्पन्नापि सती शक्तिः, "न वक्षति" अस्मान् प्रति न प्राप्स्यतीत्यर्थः ॥ एवमत्र क्षेपणसम्बन्धात् "जूर्णिः—शक्तिः"—इत्युपपद्यते ॥ ६ । ४ । १० ॥

## ओमना ॥ २२ ॥

"परि घ्रंसमोमना वां वयोऽगात् ॥"

पर्य्यगाद्वां घ्रंसमहरवनायान्नम् ॥ ११ ॥ ४ ॥

"ओमना ( २२ )"—इत्यनवगतम् । "अवनाय"—इत्यवगमः ।

"युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ॥
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयोऽगात् ॥ ( ऋ० सं ५, ५, १६, ४ )"—इति ॥

वसिष्ठस्येयमार्षम् । त्रिष्टुप् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते । हे अश्विनौ ! 'युवोः श्रियम्' युवयोः या श्रीः तां 'परि अवृणीत' सर्वतः सम्भजत 'योषा' । आह—कतमा ? इति, उच्यते—'सूरो दुहिता' सूर्यस्य दुहिता येयमुषःसंज्ञिका इयमवृणीत । कदा तां श्रियमुषःसञ्ज्ञिकाम् इयमवृणीत ? 'परितक्म्यायाम्' रात्र्याम्, ऊर्द्ध्वमर्द्धरात्रात्, स ह्यश्विनोः कालः । किञ्च, "यद् देवयन्तमवथः शचीभिः" यस्मात् देवयन्तं देवान् यष्टुमिच्छन्तम् यजमानम् अवथः—शचीभिः स्वैः कर्मभिः । तेन कारणेन "वां" "परि अगात्" परिगच्छति । सर्वासु दिक्षु यजमानैर्दीयमानं युवां प्रति "वयः" "अन्नं" हविर्लक्षणम्, "घ्रंसं परि" प्रति अहनि प्राप्ते इत्यर्थः । पूर्वाह्णो ह्यश्विनोर्यागकालः । तदुक्तम्,—"प्रातर्यावाणा प्रथमा यजध्वम् ॥ ( ऋ० सं० ४, ४, १८, १ )"—इति ॥ कमर्थं पुरस्कृत्य वयोऽन्नं गच्छति ? "ओमना" "अवनाय" तर्पणायेत्यर्थः । एवमत्राश्विनोर्हविःसम्प्रदानसम्बन्धात् "ओमना"—इत्यस्य शब्दस्य "अवनाय"—इत्येष विपरिणाम उपपद्यते ॥

---

१ 'रवनेनान्नम्' ॥

केचिदत्र,–"अवनेनान्नम्"–इत्येवमधीयते भाष्यम्। तेषां योजना,–"अवनेन" तर्पणेन भवतो निमित्तभूतेन "पर्यगात्" "अन्नम्" इति ॥

केचित् "अनेनान्नम्"–इत्येवमधीयते भाष्यम्। तेषाम्,–"अनेन" मन्त्रेण "अन्नं" परिगच्छतीति योजना स्यादिति ॥ ६।४।११ ॥*

उपलप्रक्षिणी ॥ २३ ॥

उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा ।

इन्द्र ऋषीन् पप्रच्छ–'दुर्भिक्षे केन जीवति'

इति तेषामेकः प्रत्युवाच–

"शकटः शाकिनी गावो जालमस्यन्दनं वनम् ॥

उदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तयः" इति ॥

सा निगदव्याख्याता [ ॥ १ ॥ ]

"उपलप्रक्षिणी (२३)"–इत्यनवगतम् । "सक्तुकारिका" अभिधेया, सा हि "उपलेषु" यवान् "प्रक्षिणाति" हिनस्ति । एवमस्योपलप्रक्षिणीशब्दस्याप्रतीयमानार्थस्य विग्रहेणार्थप्रतीतिरवगमः । अथ 'वा' उपलेषु प्रक्षेपिणी स्यात्, उपलेषु तप्तेषु भर्जनार्थं यवान् प्रक्षिपति, सा हि गौडेषु प्रसिद्धा । उपलान् वा यवेभ्यः प्रक्षिपति, विचिनोतीत्यर्थः । सेयम् 'उपलप्रक्षेपिणी' सती 'उपलप्रक्षिणी'–इत्युच्यते [ ॥ ६।५।१ ॥ ]+

"कारुरहं ततो भिषगुपलप्रक्षिणी नना । (ऋ० ९।११२।३)

नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ॥"

कारुरहमस्मि कर्त्ता स्तोमानाम् ॥

ततो भिषक्, तत इति सन्ताननाम पितुर्वा पुत्रस्य वा ॥

---

* अत्रैव चतुर्थखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ षष्ठा (एकादशा) ध्यायस्य प्रथमः पादः ॥ ६, १ ॥" एवन्तूपलभ्यते ॥ + इहैव खण्डसमाप्तिर्दृश्यते, परं सा "आसीन ऊर्ध्वामुपसि क्षिणाति" इत्यतः प्रागुचिता ॥

**उपलप्रक्षिणी सक्तुकारिका। नना नमतेर्माता वा दुहिता वा॥ नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम् ।**

**'इन्द्रायेन्दो परि स्रव' इत्यध्येषणा ॥ १ ॥ ५ ॥**

"कारुरहं ततो०—मेन्द्रायेन्दो परि स्रव" । शिशुराङ्गिरसः, तस्येयमार्षम् । पङ्क्तिः । ऐन्द्री । स्वदुष्कृताशङ्कया किलापरिस्रवति सोमे पापसङ्कीर्त्तनादात्मशुद्धिर्भविष्यतीति मन्यमान आत्मानमेव निर्दिशन्नाह,—"अहं" तावत् कस्मिंश्चिदनादिकाले परेषां "कारुः" "स्तोमानां" "कर्त्ता" स्तोमकर्त्ता स्तुतीनां प्रयोक्ता यज्ञकर्मणि होतृत्वेनावस्थितो वहिर्वा यज्ञात् प्रियवक्ता लौकिकाभिर्वाचोयुक्तिभिर्जीविकापरतया । "ततः" मम पिता पुत्रो वा "भिषक्" आसीत्, ब्रह्मा, स हि प्रायश्चित्तरोगे उत्पन्ने यज्ञस्य भेषजं करोति । यदुक्तम्,—"भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति" । इतरो लौकिको वा भिषक् । "ततः—इति सन्ताननाम, पितुर्वा पुत्रस्य वा" । पितुर्हि सकाशात् पुत्रः तन्यते । एवमपादाने कारके ततः पिता, पुत्रः पुनः तन्यते अयं ततः कर्मणि कारके । "उपलप्रक्षिणी" सवनीयानां पेष्ट्री, "दासी पिनष्टि"—इति ह्युक्तम् । इतरेषां "सक्तुकारिका" सक्तूनां पेष्ट्री । "नना" "माता" ममासीत्, सा हि स्तनसम्प्रदानाद्युपकारार्थमपत्यं प्रति नता भवति । "दुहिता वा" नना स्यात्, सापि हि परिचर्यार्थं पितुः प्रह्वीभवति । यस्मिन् पक्षे पिता भिषक्, तस्मिन् पक्षे ननाशब्देन मातोच्यते, यस्मिन् पुनः पक्षे पुत्रो भिषक्, तस्मिन् पक्षे ननाशब्देन दुहितोच्यते । ते वयमेवमनादिकाले कस्मिंश्चिद् जीविकाप्रधानाः सन्तः "नानाधियः" "नानाकर्माणः" यथोक्तेन क्रमेण कारुरहमित्येवमादिना "वसूयवः" "वसुकामाः" कथं-नाम वसु लभेमहि, येन प्राणधारणं स्यादिति । एतेनाभिप्रायेण "अनु गा इव तास्थिम" "अन्वास्थिताः स्मो लोकम्" इमम् । कथम्पुनरन्वास्थिताः स्मः ? इति,— "गाव इव" यथानेकैरुपकारप्रकारैर्लोकमन्वास्थिता गावः, एवमन्वास्थिताः स्मो वयमपीमं लोकम् । स त्वम् "इन्दो !" विज्ञायैतदनेन स्वदुरितानुकीर्त्तनेन क्षयितकल्मषाः स्म इति मन्यमानः, एतस्माद् दशापवित्रात् "इन्द्राय" इन्द्रार्थम् "परिस्रव" अस्माभिरेवमध्येष्यमाणः कथं वा न परिस्रविष्यसीत्यभिप्रायः ॥ एवमत्र "उपलप्रक्षिणी = सक्तुकारिका" शब्दार्थोपपत्तेरित्युपपद्यते ॥ ६ । ५ । १ ॥ * परिस्रोष्यसी त्येव साधु।

* अत्र पञ्चमखण्डसमाप्तिकरणे प्रकरणसमाप्तिरपि भवेत् । तथापि खण्डगणनालेखे 'कारुरहम्' इत्यतः प्रागेव खण्डसमाप्तिकरणे कारणं चिन्त्यम् ॥

## उपसि ॥ २४ ॥

"आसीन ऊर्ध्वामुपसि क्षिणाति ।" उपस्थे ॥ १ ॥

"उपसि ( २४ )"—इत्यनवगतम् । "उपस्थे"—इत्यवगमः ।

"पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥ ( ऋ०सं० ७, ७, १७, ३ )"—इति ॥

वसुक्रस्य इन्द्रपुत्रस्य आर्षम् । ऐन्द्री । त्रिष्टुप् । महाव्रते मरुत्वतीये शस्त्रे शस्यते ॥ 'पत्तः' पादतः रश्मिभिः इतः लोकात् यदादित्यः 'जगार' गृह्णात्युदकम्, तत् इन्द्रो मध्यस्थाने "आसीनः" 'प्रत्यञ्चम्' आत्मानं प्रत्यञ्चितं प्राप्तम्, तेन भगवतादित्येन 'शीर्ष्णा' उत्सृष्टम् 'अत्ति' स्वीकरोतीत्यर्थः । तदेवमसौ स्वीकृत्य चतुर्षु वार्षिकेषु मासेषु पृथिवीलोकनिवासिनां जनानां 'शिरः प्रतिदधौ' शिरस उपरि दधाति । 'वरूथं' वरतरमुदकम् । एवमयमिन्द्रो जगदुपकाराय प्रतिसंवत्सरम् एतां द्युलोकाख्यां गाम् आदित्योपसृष्टाम्[1], "ऊर्ध्वाम्" उपर्यवस्थिताम्, अन्तरिक्षलोके आसीनः "उपसि" "उपस्थे" आत्मन उपस्थाने, अन्तरिक्षलोके "क्षिणाति" प्रक्षारयति । यच्च प्रक्षारयति, तदिमं लोकं प्रति पुनरुत्सृजति । तत् तेनोत्सृष्टं 'न्यक्' नीचैर्वर्षभावेन आगच्छति । ततः 'उत्तानां भूमिं' यथानिम्नम् 'अन्वेति' ॥ एवमत्र "उपसि"—इत्यस्य शब्दसारूप्यात् अर्थोपपत्तेश्च "उपस्थे"—इत्येवार्थप्रतीतिः ॥ "अपि वा शिर आदित्यो भवति"—इत्युक्तम्, तस्मात् "शीर्ष्णा"—इत्यत्रोपपद्यते शिरस्त्वमादित्यस्य ॥६।६।१ ॥

## प्रकलवित् ॥ २५ ॥

प्रकलविद्वणिग्भवति, कलाश्च वेद प्रकलाश्च ।
"दुर्मित्रासः प्रकलविन्मिमानाः ॥"
इत्यपि निगमो भवति ॥ २ ॥

"प्रकलवित् ( २५ )"—इत्यनवगतम् । "प्रकलावित्"—इत्यवगमः । "वणिग् भवति"—इत्यभिधेयवचनम् । स हि "कलाश्च वेद प्रकलाश्च" । कलासम्बन्धेनैवेह प्रकला उच्यन्ते, कला एव ह्यपेक्ष्य प्रकला भवन्तीति । यथा,—अधिष्ठानमपेक्ष्य प्रत्यधिष्ठानमिति ॥

---

१ 'त्योपसमुत्थाम्' ॥

"इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥ ( ऋ० सं० ५,२, २६, ५ )"—इति ॥

वसिष्ठस्यार्षम् । त्रिष्टुप् । ऐन्द्री । महाव्रते निष्केवल्ये दक्षिणे पक्षे शस्यते । 'इन्द्रेण' 'एते' 'तृत्सवः' दारयितव्याः मेघाः, 'वेविषाणाः' पुनःपुनः व्याप्यमानाः, 'आपः नं' आप इव 'सृष्टाः' केनचित्, 'अधवन्त' अगच्छन् । 'नीचीः' नीचैरित्यर्थः । उच्चैर्गतय एते सन्तः इन्द्रबलादेषां नीचैर्गतयः संवृत्ता इत्यभिप्रायः । किञ्च, "दुर्मित्रासः" सुमित्राण्यपि सन्तो ये अतिसन्धानपराः, ते पुनर्दुर्मित्राः । के पुनस्ते ? इति—"प्रकलविदः" वणिज इत्यर्थः । ते यथा अभिद्रोहबुद्ध्या किञ्चिद् द्रव्यमल्पं ददाति, एवमेते मेघाः पूर्वमल्पोदकदातारो भूत्वा अधुनेन्द्रबलोद्यताः सन्तः 'जहुः' 'विश्वानि' सर्वाण्यशेषाणि 'भोजना' भोजनान्युदकानि 'सुदासे' राजनि, यजमाने वा कल्याणदाने ॥ एवमल्पोदकाल्पदानोपमासम्बन्धात् "प्रकलवित्—वणिक्"—इत्युपपद्यते ॥ अवयवप्रत्यवयवादिकलाः प्रकलाशब्देनोच्यन्ते, तेषु च वणिगेव निपुणो भवति, गणितकुशलत्वात्, न तथान्य इति ॥ ६ । ६ । २ ॥ तासु

## अभ्यर्द्धयज्वा ॥ २६ ॥

## अभ्यर्द्धयज्वाभ्यर्द्धयन्यजति ॥

## "सिषक्ति पूषा अभ्यर्द्धयज्वा" इत्यपि निगमो भवति ॥ ३ ॥

"अभ्यर्द्धयज्वा ( २६ )"—इत्यनवगतम् । अभ्यर्द्धयन् अभिवर्द्धयन् यो यजति । अभ्यर्द्धयतिरत्र दानार्थः ॥ सचते सेवते सेवनेच भ्वादिः ।

"मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्द्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते ॥ ( ऋ० सं० ४, ८, ८, ५ )"—इति ॥

ऋजिश्वा नाम भारद्वाजः, तस्येयमार्षम् । वैश्वदेवे सूक्ते । त्रिष्टुप् ॥ हे मरुतः ! 'येषु' युष्मासु 'रोदसी' देवी, रुद्रस्य पत्नी 'मिम्यक्ष' पुनःपुनरेकतां गच्छति । "इयक्षति, मियक्षति"—इति गतिकर्मसु पठितम् । यश्च युष्माकं मध्येऽवस्थितः "सिषक्ति" सेवते, "पूषा" सूर्यः रश्मिभिः "अभ्यर्द्धयज्वा" अभिवृद्धदानः । ते यूयमेवङ्गुणयुक्ता उच्यध्वे । 'श्रुत्वा' 'हवम्' आह्वानम् 'यत् हयाथ' यदा यूयमायाथ अस्मान् प्रति, तदा 'भूमा' बहूनि बलानि, ध्वजाग्राणि वा 'रेजन्ते' कम्पन्ते । एतस्मिन् 'अध्वनि' अन्तरिक्षे । 'प्रविक्ते' विविक्ते, विस्तीर्णे इत्यर्थः ॥ एवमत्र "पूषा—अभ्यर्द्धयज्वा" स हि स्वरश्मिपोषं पुष्यन्, भूतान्याभिमुख्येन वृद्ध्या योजयन्नभिमतानर्थान् भूतेभ्यो ददाति ॥ ६ । ६ । ३ ॥

## ईक्षे ॥ २७ ॥

### ईक्ष ईशिषे ।

### "ईक्षे हि वस्वं उभयस्य राजन्" इत्यपि निगमो भवति ॥ ४ ॥

"ईक्षे ( २७ )"–इत्यनवगतम् । "ईशिषे"–इत्यवगमः ॥

"नूवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।

ईक्षे हि वस्वं उभयस्य राजन्धा रत्नं महि स्थूरं बृहन्तम् ॥ ( ऋ० सं० ४, ६, ८, ५ )"–इति ॥

भरद्वाजस्यार्षम् । त्रिष्टुप् । व्यूढस्य दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते । 'नूवत् ते' यथा मनुष्याः केचिदुत्पन्नप्रणयाः कञ्चिदीश्वरं मनुष्यं स्तुतिभिः सम्भजेरन्, एवं वयं त्वां 'नृतमाभिः' मनुष्यतमयोग्याभिः 'ऊती' अवन्तीभिः तर्पयन्तीभिः स्तुतिभिः 'वंसीमहि' सम्भजेमहि । 'वामं पार्थिवं' वननीयं धनम् । 'श्रोमतेभिः' श्रवणीयतमैः शब्दैः । केन पुनरर्थेन वंसीमहि ? इतः,–यस्मात् "ईक्षे" "ईशिषे", त्वम्, "वस्वः" वसुनः, धनस्य, "उभयस्य" उभयलक्षणस्य,–दिव्यस्य पार्थिवस्य च वसुनः । त्वम्, हे राजन् ! 'धाः रत्नम्' देहि धनम् । कीदृशं पुनः देहि ? 'महि' महत्, वस्तुभूतम्, 'स्थूरं' बहु 'बृहन्तञ्च' बहुकालं यत् स्यात्, तत् देहि ॥ एवमत्र वसुसम्बन्धात् "ईक्षे"–इत्येष शब्दः "ईशिषे"–इत्येवमुपपद्यते ॥ ६ । ६ । ४ ॥

## क्षोणस्य ॥ २८ ॥

### क्षोणस्य क्षयणस्य ।

### महः क्षोणस्याश्विना कण्वाय" इत्यपि निगमो भवति ॥ ५ ॥ ६ ॥

"क्षोणस्य ( २८ )"–इत्यनवगतम् । "क्षयणस्य"–इत्यवगमः ॥

"युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।

प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ( ऋ० सं० १, ८, १४, ३ )"–इति ॥

कक्षीवत आर्षम् । आश्विनी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । 'युवं' युवां हे "अश्विनौ !" 'श्यावाय' राज्ञे 'रुशतीं' ज्वलितरूपां श्रियम् 'अदत्तम्' ।

१ 'वसुभू' ॥

युवामेव च "महः" महतः "क्षोणस्य" "क्षयणस्य" निवासस्य दातारौ "कण्वाय" ऋषये । किञ्च, 'प्रवाच्यं' प्रकर्षेण वचनीयं श्रोतव्यं तत् 'वां' युवाभ्यां 'कृतम्' हे 'वृषणौ' ! वर्षितारौ यत् 'नार्षदाय' ऋषये बधिरीभूताय 'श्रवः' श्रोत्रम् 'अध्यधत्तम्' अधिकं दत्तवन्तौ स्थः । एवमत्र दानसम्बधाधिकाराच्छब्दसारूप्याच्च "क्षोणस्य–गृहस्य"–इति प्रतीयते ॥

"क्षीणस्य (२८)"–इत्येवमेके मन्यन्ते । तत् पुनरनुपपन्नम्, "क्षयणस्य"–इति हि भाष्यकारो निराह ॥ ६ । ६ । ५ ॥ *

## अस्मे ॥ २९ ॥

### "अस्मे ते बन्धुः ।" वयमित्यर्थः ॥ १ ॥

"अस्मे (२९)"–इत्येतत् पदं सर्वविभक्त्यन्तम् । तस्मादनेकार्थम् । एकमेव ह्येतच्छब्दरूपं सप्तस्वपि विभक्त्यर्थेषु वर्त्तते, प्रकरणादिवशात् तस्य नियमो भवति । तद्यथा,–प्रथमायास्तावत्,–"अस्मे ते बन्धुः" "वयमित्यर्थः" ।

"तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती । अस्मे ते बन्धुः पुषेयम्"–इति ॥

सोमक्रयणे द्रव्यापाकरणमन्त्रेषु अजाया एषोऽपाकरणमन्त्रः । सोच्यते–हे अजे ! 'तपसः' अग्नेः त्वं 'तनूः' शरीरम् 'असि' "अग्नेर्ह्येषा अजा"–इति ह्युक्तम्, "स एता एभ्यः प्ररोचयत्"–इति च ॥ तस्मादुपपद्यते अग्नेस्तनुत्वमजायाः । 'प्रजापतेः' 'वर्णः' वरणीया त्वम् । 'सहस्रपोषम्' अस्माकम् । 'पुष्यन्ती' एतस्मिन् कर्मणि अङ्गभावमुपेहि । एवमजामभिष्टुत्य अधुना सोमं ब्रवीति,–हे सोम ! अनेन 'परमेण' श्रेष्ठेन 'पशुना' 'क्रीयसे' । किं कारणम् ? "अस्मे" "वयम्" "ते" तव "बन्धुः" बन्धवः, विनियोक्तार इत्यभिप्रायः ॥ एवमत्र प्रथमान्तेन "बन्धु"–शब्देन सामानाधिकरण्यात् "अस्मे"–इत्यस्य "वयम्"–इत्येवं प्रथमया विपरिणाम उपपद्यते ॥ ६ । ७ । १ ॥

### "अस्मे यातं नासत्या सजोषाः ।" अस्मानित्यर्थः ॥ २ ॥

द्वितीयायास्तावत्,–"अस्मे यातं नासत्या सजोषाः" "अस्मानित्यर्थः" ॥

"आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।
हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ ( ऋ० सं० १, ८, १९, ६ )"–इति ॥

* अत्रैव षष्ठखण्डसमाप्तिरवगन्तव्या ॥ 'विषस्य' ॥

कक्षीवत आर्षम् । त्रिष्टुप् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते ॥

"आयातम्" "अस्मे" "अस्मान्" प्रति । हे "नासत्या" नासत्यौ ! 'अश्विना' अश्विनौ ! कथञ्च पुनरायातम् ? 'श्येनस्य' पक्षिणः 'जवसा' जवेन वेगेन, 'नूतनेन' नवतमेन, परिश्रान्तस्य हि श्येनस्यापि मन्दतरो जवो भवति । "सजोषाः" मया सह प्रीयमाणौ, परस्परेण वा । 'वां' युवाम् । कस्मात् पुनरेवं ब्रवीमि ? इतः,– यस्मात् 'हवे हि वाम्' आह्वयामि युवाम् । न वृथैव आह्वयामि, किं तर्हि ? 'रातहव्यः' दत्तहव्यः, युवामुद्दिश्य उत्सृष्टमेतद्धव्यं मया । तौ युवामेतद् विज्ञाय 'शश्वत्तमायाः' शाश्वतिकतमायाः अस्याः 'उषसः' 'व्युष्टौ' व्युच्छेदकाले आहूयमानावागच्छतम् ॥ एवमत्र "आयातम्"–इत्यनेन सम्बन्धात् "अस्मे"–इत्यस्य "अस्मान्"– इत्येवं द्वितीयया विपरिणाम उपपद्यते ॥ ६ । ७ । २ ॥

## "अस्मे समानेभिर्वृषभ पौंस्येभिः ।" अस्माभिरित्यर्थः ॥ ३ ॥

तृतीयायास्तावत्,–"अस्मे समानेभिर्वृषभ पौंस्येभिः" "अस्माभिरित्यर्थः" ।

"भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ॥

भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ ( ऋ० सं० २, ३, २५, २ )"–इति ॥

इन्द्रमरुत्संवादे मरुतामार्षम् । ऐन्द्री । त्रिष्टुप् । महाव्रते च व्यूढस्य दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्त्रे शस्यते । इन्द्र उच्यते,–स त्वं 'भूरि' बहु 'चकर्थ' कृतवानसि कर्म, तस्मिंस्तस्मिन् संग्रामे । तत्पुनः 'युज्येभिः' [ एव ] "अस्मे" "अस्माभिः" एव संयुक्तः, "समानेभिः" समानैः, "पौंस्येभिः" बलैः । हे "वृषभ" वर्षितः ! नैकाकीत्यभिप्रायः । किञ्च, वयमपि 'भूरीणि' बहूनि कर्माणि 'कृणवाम' एव तस्मिंस्तस्मिन् संग्रामे । हे 'शविष्ठ' बलिष्ठ ! 'इन्द्र !' । न च केवलं वाङ्मात्रेणैतद् ब्रूमः, किं तर्हि ? 'क्रत्वा' एव कर्मणैव । तत् सम्पादयामः, 'यत् वशाम' यद्यत् कामयामहे इत्यर्थः ॥ एवमत्र "युज्येभिः"–इत्यनेन सम्बन्धात् "अस्मे"–इत्यस्य "अस्माभिः"–इति तृतीयया विपरिणाम उपपद्यते ॥ ६ । ७ । ३ ॥

## "अस्मे प्रयन्धि मघवन्नृजीषिन् ।" अस्मभ्यमित्यर्थः ॥ ४ ॥

चतुर्थ्यास्तावत्,–"अस्मे प्रयन्धि मघवन्नृजीषिन्" "अस्मभ्यम्" इत्यर्थः ॥

"अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः ।

अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन् ॥ ( ऋ० सं० ३, २, २०, ५ )"–इति ॥

घोरस्याङ्गिरसस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । जातकर्मणि विनियुक्ता । "अस्मे" "अस्मभ्यम्" "प्रयन्धि" देहि । हे "मघवन्" धनवन् ! 'इन्द्र !' "ऋजीषिन् !" 'रायः' धनस्य, 'विश्ववारस्य' सर्वा आपदो यद् धनं वारयति तस्य, 'भूरेः' बहुनः, यस्य अधिपतिः त्वम्, तस्य अभिलषितां मात्रां देहि । किञ्च, 'अस्मे' अस्मभ्यम् 'शतं शरदः' शतं वर्षाणि 'जीवसे' जीवनाय 'धाः' देहि । 'अस्मे' अस्मभ्यम् 'वीरान्' पुत्रान् 'शश्वतः' दीर्घायुषः देहि । हे 'शिप्रिन् !' ॥ एवमत्र "अस्मे प्रयन्धि"—इत्यनेन याच्ञार्थेन सम्बन्धात् "अस्मे"—इत्यस्य "अस्मभ्यम्"—इति चतुर्थ्या विपरिणाम उपपद्यते ॥ ६ । ७ । ४ ॥

## "अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु।" अस्मदित्यर्थः ॥५॥

पञ्चम्यास्तावत्,—"अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु" "अस्मदित्यर्थः" ॥

"तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥ ( ऋ० सं० ४, ७, ३२, ३ )"—इति ॥

गर्गस्य[1] भारद्वाजस्यार्षम् । षष्ठे मण्डले । ऐन्द्री । त्रिष्टुप् । पुनरपि चेयमेव काक्षीवतः सुकीर्त्तिनामा, तेन दशमे मण्डले दृष्टा । षष्ठे चाहनि पृष्ठ्यस्य, विश्वजिति चेयं तृतीये सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ॥

'तस्य' इन्द्रस्य 'यज्ञियस्य' यज्ञार्हस्य 'वयम्' 'सुमतौ' शोभनेऽध्यवसाये 'स्याम' । 'अपि' चास्य 'भद्रे' भन्दनीये स्तुत्ये 'सौमनसे' शोभनसङ्कल्पे मनसि नित्यमेव स्याम । 'सः' 'सुत्रामा' 'इन्द्रः' 'स्ववान्' धनवान्, "अस्मे" "अस्मत्" "आराच्चित्" दूरतरमपनीय "द्वेषः" द्वेषं पापम्, ततः "सनुतः" स्वन्तर्हितं[2] कृतं यथा तं न पश्येम तथा "युयोतु" नाशयात्वित्यर्थः । एवमत्र "द्वेषः"—इत्यनेन सम्बन्धात् "अस्मे"—इत्येतस्य "अस्मत्"—इत्येवं पञ्चम्या विपरिणाम उपपद्यते ॥ ६ । ७ । ५ ॥

## "ऊर्व इव पप्रथे कामो अस्मे ।" अस्माकमित्यर्थः ॥ ६ ॥

षष्ठ्यास्तावत्,—"ऊर्व इव पप्रथे कामो अस्मे" "अस्माकमित्यर्थः" ॥

"आ नो भर भगमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके ।
ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम् ॥ ( ऋ० सं० ३, २, ४, ४ )"—इति ॥

---

१ 'शंयोर्बार्हस्पत्यस्यार्षम्' ॥　२ 'स्वान्तर्हि' ॥

"उद्वहरक्षः"—इत्यस्या एवेयमनन्तरा । 'आ भर' आहर । 'नः' अस्मभ्यम् । हे 'इन्द्र !' 'भगम्' भजनीयं धनराशिम्, 'द्युमन्तं' दीप्तिमन्तम् । आहृत्य चास्मभ्यं देहि । तथा प्रभूतं देहि, यथा भुक्तशेषस्य 'प्ररेके' अतिरेके सति 'निदधीमहि' । 'ते' तव स्वभूतस्य 'देष्णस्य' दानस्येत्यर्थः । कस्मात् पुनरेवं ब्रवीमि,—प्रभूतं देहीति ? इतः,—यस्मात् "ऊर्व इव" यथा वडवामुखेऽवस्थितः ऊर्वोऽग्निः, अपः पिबन् "पप्रथे" प्रथते, एवमयम् "अस्मे" "अस्माकम्" "कामः" प्रथते विस्तीर्यते । 'तम्' 'आ' आभिमुख्येन 'पृण' पूरय 'वसूनाम्' हे 'वसुपते !' ॥ एवमत्र "कामः पप्रथे"—इत्यनेन सम्बन्धात् आत्मविषयत्वात् आशिषः "अस्मे"—इत्यस्य "अस्माकम्"—इत्येवं षष्ठ्या विपरिणाम उपपद्यते ॥ ६ । ७ । ६ ।

## "अस्मे धत्त वसवो वसूनि ।" अस्मास्वित्यर्थः ॥ ७ ॥

सप्तम्यास्तावत्,—"अस्मे धत्त वसवो वसूनि" । अत्र "धत्त"—इत्यनेन सम्बन्धात् "अस्मै"—इत्यस्य "अस्मासु"—इत्येवं सप्तम्या विपरिणाम उपपद्यते ॥ द्वादशेऽध्याये "सुगावो देवाः सुपथाः"—इति शेष उच्यत एव ॥ ६ । ७ । ७ ॥

## पाथः ॥ ३० ॥

## पाथोऽन्तरिक्षं पथा व्याख्यातम् ॥

## "श्येनो न दीयन्नन्वेति पाथः ।" इत्यपि निगमो भवति ॥ ८ ॥

"पाथः ( ३० )"—इत्यनवगतम्, अनेकार्थञ्च । "अन्तरिक्षम्" तावत् पाथ उच्यते । तत् पुनरेतत् "पथा व्याख्यातम्" "पन्थाः पततेर्वा"—इत्यत्र ॥

"यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ॥ ( ऋ० सं ५, ५, ५, ५ )"—इति ॥

वसिष्ठस्यार्षम् । अस्याः प्रथमोऽर्द्धर्चः सौर्य इति प्रतिजज्ञे शौनको मैत्रावरुणो द्वितीय इति । एवं ह्याह,—

"ऋचः सौर्यो हि गीयन्त उद्वेतीत्यर्धपञ्चमाः"—इति ॥

'यत्र' यदा 'अस्मै' सूर्याय 'चक्रुः' कृतवन्तः 'अमृताः' देवाः 'गातुं' गमनमार्गम्, उदयादारभ्य यावदस्तमय इति, यदा चायमारब्धः सूर्यः "श्येनो न" श्येन इव "दीयन् अन्वेति" दीयमानः गच्छन् "पाथः" "अन्तरिक्षं" तेन मार्गेण । अथ तदा आरभ्य 'प्रति विधेम' 'वां' प्रतीत्य चेतसा युवाम् । 'उदिते' 'सूरे' सूर्ये 'विधेम' परिचरेम वयम् । हे 'मित्रावरुणौ !' 'नमोभिः' नमस्कारैः 'उत' अपि च

'हव्यैः' ॥ एवमत्र "श्येनो न दीयन्नन्वेति पाथः"—इत्यनेन सम्बन्धात् "पाथः—अन्तरिक्षम्"—इत्युपपद्यते ॥ अपठितमेतदन्तरिक्षनामसु, इति अप्रतीतार्थम् ॥

अथवैवमन्यथा स्यात्—प्रथमस्यार्द्धर्चस्यार्थः, सूर्य्यप्रधानत्वात् । उत्तरोऽर्द्धर्चो निराकाङ्क्ष एव । 'यत्र' यस्मिन् नभसः प्रदेशे 'गातुं' कृतवन्तः, 'अमृताः' देवाः सूर्यश्च । तेन एव प्रदेशेन "श्येनः" इव "दीयन्नन्वेति" अनुगच्छति "पाथः" न तां मर्यादामीश्वरोऽपि सन्नतिक्रामतीत्यर्थः ॥ ६ । ७ । ८ ।

## उदकमपि पाथ उच्यते पानात् ॥

## "आचंष्ट आसां पाथो नुदीनाम् ।" इत्यपि निगमो भवति ॥ ९ ॥

"उदकमपि पाथ उच्यते" "पानात्" ॥

"अभिवो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ॥

आ चंष्ट आसां पाथो नुदीनां वरुण उग्रः सहस्रचक्षाः ॥ (ऋ० सं ५, २, २५, ९—१०)"—इति ॥

वसिष्ठस्यार्षम् । व्यूढस्य दशरात्रस्य चतुर्थेऽहनि तृतीये सवने वैश्वदेवे शस्त्रे शस्यते । हे ऋत्विजः ! 'अभि' वदामि 'वः'—एतां 'देवीं, 'धियं' यूयम् एतान् विश्वान् देवान् प्रति 'दधिध्वम्' धारयध्वम् । किञ्च, 'प्रवो देवत्रा वाचं कृणुध्वम्' । प्रब्रवीमि च एतत् देवत्रा देवगामिनीम् एतां वाचं स्तुतिलक्षणाम् कृणुध्वम् । किञ्च, "आ चष्ट आसां पाथो नदीनां वरुणः" । वरुणोऽपि देवः आदित्यः, आचष्टे इव, प्रकथयतीव जनानां वर्ष्म्, उत्सृजम् आसां वर्ष्मि नदीनां स्वभूतम्, उदकं पाथः । किंलक्षणः पुनर्वरुणः ? आचष्टे,—'उग्रः' उद्गूर्णः, 'सहस्रचक्षाः' बहुदर्शन इत्यर्थः ॥ एवमत्र "पाथः"—शब्देन "उदकम्"—इत्युच्यते, नदीसम्बन्धात् ॥ ६ । ७ । ९ ॥

## अन्नमपि पाथ उच्यते पानादेव ॥

## "देवानां पाथ उपवक्षि विद्वान् ।" इत्यपि निगमो भवति ॥ १० ॥

"अन्नमपि पाथ उच्यते" "पानादेव" ॥

"वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।

स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥ (ऋ० सं० ८, २, २२, ५)"—इति ॥

---

१ 'सूर्यस्य' ॥

आप्रीसूक्ते वाध्र्यश्वस्य सुमित्रस्येयमार्षम् ॥ हे 'वनस्पते !' 'रशनया' 'नियूय' निबध्य "देवानाम्" एतत् स्वभूतं "पाथः" अन्नं हविर्लक्षणम् "उप वक्षि" समीपं वहसि "विद्वान्" जानानः । कस्मात् पुनरेवं ब्रवीमि ? इतः—यस्मात् 'स्वदाति' स्वादयति, सःसः 'देवः' त्वयोढानि एतानि 'हवींषि'। यानि 'कृणवत्' अकरोत्, एष यजमानः ॥ वनस्पतिमेवमुक्त्वा पुनर्द्यावापृथिव्यावाह,—हे 'द्यावापृथिव्यौ !' 'वां' युवामपि 'अवताम्' अवगच्छताम्, एनं 'हवम्' आह्वानं 'मे' मम । एवमत्र हवन-संबन्धादन्नं "पाथः" इत्युपपद्यते ॥ ६ । ७ । १० ॥

## सवीमनि ॥ ३१ ॥

### सवीमनि प्रसवे ।

### "देवस्य वयं सवितुः सवीमनि ।" इत्यपि निगमो भवति ॥ ११ ॥

"सवीमनि ( ३१ )"—इत्यनवगतम् । "प्रसवे"—इत्यवगमः ॥

"देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने ।

यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥ ( ऋ० सं० ५, १, १५, २ )"—इति ॥ / द्विपदश्चतुष्पद इति [illegible]

भरद्वाजस्यार्षम् । जगती । गवामयने चतुर्विंशं नाम द्वितीयमहः, तत्रेयं तृतीयसवने वैश्वदेवे शस्त्रे शस्यते॥ "देवस्य" "सवितुः"सर्वार्थप्रसवितुस्तस्य "वयम्" "सवीमनि" 'श्रेष्ठे' प्रसवे सर्वार्थाभ्यनुज्ञाने, नित्यकालं वयम् एव 'स्याम' । 'वसुनश्च' धनस्य च 'दावने' दाने श्रेष्ठे प्रवृत्ते, वयमेव लब्धारः स्याम । हे सवितः ! 'यः' त्वं 'विश्वस्य' सर्वस्यास्य 'द्विपदः' मनुष्यादेः, 'यः' 'चतुष्पदः' गवादेः, 'भूमनः' भूम्नः, 'निवेशने' च स्थितौ, 'प्रसवे च' सृष्टौ, प्रभुः 'असि' । तस्य तव एवङ्गुणविशिष्टस्य प्रसवे च दाने च वयमेव अङ्गभूताः स्यामेति ॥ एवमत्र "सवितुः"—इत्यनेन सम्बन्धात् "सवीमनि"-इत्यस्य "प्रसवे"—इत्येवं विपारिणाम उपपद्यते ॥ ६ । ७ । ११ ॥

नायं विपरिणाम इति वक्तव्यं भवति।

## सुप्रथाः ॥ ३२ ॥

### सप्रथाः सर्वतः पृथुः ॥

### "त्वमग्ने सुप्रथा असि" इत्यपि निगमो भवति ॥ १२ ॥

"सप्रथाः ( ३२ )"—इत्यनवगतम् । "सर्वतः पृथुः"—इत्यवगमः ॥

"त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।

त्वया यज्ञं वितन्वते ॥ ( ऋ० सं० ४, १, ५, ४ )"—इति ॥

सुतम्भरस्येयमार्षम् । गायत्री । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते ॥

हे "अग्ने" ! "त्वम्" त्वमेव "सप्रथाः" "सर्वतः पृथुः" विस्तीर्णः । 'जुष्टः' च आसेवितो यजमानैः । 'होता' आह्वाता देवानां भवसि । 'वरेण्यः' वरणीयः सर्वथापि । किं वहुना 'त्वया' एव हेतुभूतेनैते यजमानाः एतं 'यज्ञं' 'वितन्वते' विविधं तन्वते, विस्तारयन्ति । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "सप्रथाः—सर्वतः पृथुः"—इत्येतदुपपद्यते ॥ ६ । ७ । १२ ॥

## वि॒दथा॑नि ॥ ३३ ॥

विदथानि वेदनानि ॥

"वि॒दथा॑नि प्रचो॒दय॑न् ।" इत्यपि निगमो भवति॥१३॥७॥

"विदथानि ( ३३ )"—इत्यनवगतम् । "वेदनानि"—इत्यवगमः ॥

"होता॑ दे॒वो अम॑र्त्यः पु॒रस्ता॑देति मा॒यया॑ ।

वि॒दथा॑नि प्रचो॒दय॑न् ॥ ( ऋ० सं० ३, १, २९, २ )"—इति ॥

विश्वामित्रस्यार्षम् । गायत्री । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । अग्नीषोमप्रणयने विनियुक्ता । 'होता' आह्वाता, 'देवः' अग्निः, 'अमर्त्यः' अमरणधर्मा, 'पुरस्तात्' अस्य यज्ञकर्मणः, सोमस्य वा प्रणीयमानस्य 'एति' गच्छति, 'मायया' स्वया प्रज्ञया । एषाम् ऋत्विजाम् "विदथानि" विज्ञानानि "प्र" प्रकर्षेण "चोदयन्" अनुगृह्णन्नित्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "विदथानि = वेदनानि"—इत्युपपद्यते ॥ ६ । ७ । १३ ॥ *

## श्राय॑न्तः ॥ ३४ ॥

समाश्रिताः

"श्राय॑न्त इव॒ सूर्यं॒ विश्वे॒दिन्द्र॑स्य भक्षत ।

अनिच्छमाने

वसू॑नि जा॒ते जन॑मान॒ ओज॑सा॒ प्रति॑ भा॒गं न दी॑धिम ॥"

न धारयामो ...

समाश्रिताः सूर्यमुपतिष्ठन्ते ॥

अपि वोपमार्थे स्यात्,—सूर्यमिवेन्द्रमुपतिष्ठन्त इति । सर्वाणीन्द्रस्य धनानि विभक्षमाणाः । स यथा धनानि विभजति

* अत्रैव सप्तमखण्डसमाप्तिरुचिताऽवगन्तव्या ॥

जाते च जनिष्यमाणे चातं वयं भागमनुध्यायामौजसा बलेन ॥

ओज ओजतेर्वोब्जतेर्वा ॥ १ ॥

"श्रायन्तः ( ३४ )"-इत्यनवगतम् । "समाश्रिताः"-इत्येवमर्थप्रतीतिः । श्रायन्त इव सूर्य०-न दीधिम ( ऋ० सं० ६, ७, ३, ३, )"-इति । बृहती । नृमेधस्य आङ्गिरसस्येयमार्षम् । अनर्शरातिमितीयमनन्तरैतस्या महाव्रते बृहतीसहस्रे विनियोगः । "श्रायन्त इव सूर्यम्" इवोऽनर्थक एतस्मिन् प्रथमेऽर्थे । "समाश्रिताः" समन्तादाश्रिताः "सूर्यम्" "उपतिष्ठन्ते" रश्मयः । किम्? इति,-"विश्वेदिन्द्रस्य भक्षत" । इत्-इत्यनर्थक एव । विश्वा विश्वानि "सर्वाणि" इन्द्रस्य "धनानि" सूर्यस्य स्वभूतानि, उदकानि, तेन प्रवृत्तानि "विभक्षमाणाः" विभक्तुमिच्छन्तः ।

"अपि वा" इत्-इत्ययम् "उपमार्थे स्यात्" नानर्थकः ॥ आह-कथम्? इति, उच्यते-"सूर्यमिवेन्द्रमुपतिष्ठन्ते", यथा सूर्यमहन्यहनि रश्मय उपतिष्ठन्ते, एवं मध्यस्थानमिन्द्रमुदकेश्वरमुपतिष्ठन्ते । तस्य इन्द्रस्य स्वभूतानि सर्वाणि धनानि उदकानि तेन प्रवृत्तानि, आत्मनो जनानां वा विभक्तुमिच्छन्तः । किञ्च, "वसूनि जाते जनमान ओजसा" । यथेन्द्र आदित्यो वा वसूनि धनानि जाते "च" उत्पन्ने च जनमाने "जनिष्यमाणे च" स्वेन ओजसा ऐश्वर्य-"बलेन" "विभजति" । तथैव यथा विभक्तः तेन, "तं" 'भागं' भूतानि उपजीवन्ति, तदैश्वर्यानुप्रवृत्त्यैव । यत एवमतः "वयम्" अपि "तम्" एव 'भागं' 'प्रति' 'न दीधिम' । अत्र 'न'-इत्यनर्थकः, अनोर्वा स्थाने । "तं वयं भागमनुध्यायामः"-इति भाष्यकारो निराह ॥ एवमत्र श्रायन्त इव सूर्यम्-इति सूर्यसम्बन्धात् रश्मयोऽध्याहृताः, रश्मिसम्बन्धाच्च "श्रायन्तः"-इत्येष शब्दः, समाङावुपसर्गावध्याहृत्य "समाश्रिताः"-इत्येवमुपमार्थे भवतीत्युपपद्यते ॥

"ओजः"-"ओजतेर्वा" वृद्ध्यर्थस्य ( चु० अ० प० ), "उब्जतेर्वा" न्यग्भावार्थस्य ( तु० प० ) ॥ ६ । ८ । १ ॥

## आशीः ॥ ३९ ॥

आशीराश्रयणाद्वाऽऽश्रपणाद्वा ॥

अथेयमितराशीराशास्तेः ॥

"इन्द्राय गाव आशिरम्" इत्यपि निगमो भवति ॥

"सा मे सत्याशीर्देवेषु" इति च ॥ २ ॥

"आशीः (३५)"—इत्यनवगतमनेकार्थं च । "आशिरम्"—इत्येवमर्थप्रतीतिः । या यजमानस्य व्रतधुक्, तामाशिरं दुहन्ति । एतस्मिन् पक्षे दध्यभिधेयम्, तेन हि सोम उपश्रीयते, तस्मात्तदाशिरमित्युच्यते । अथ "वा" "आश्रपणात्" ईषद्धि तच्छृतं भवति दधिभावात् ॥

"अथ" पुनः या "इयम्,—इतरा आशीः"? इयम् "आशास्तेः" आङ्पूर्वस्य शास्तेः ( अदा० प० ) अभिलाषार्थस्य ॥

"इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
यत्सीमुपह्वरे विदत् ॥ ( ऋ० सं० ६, ५, ६, १ )"—इति ॥

प्रियमेधस आङ्गिरसस्येयमार्षम् । मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता "इन्द्राय" 'वज्रिणे' अर्थाय "गावः" "आशिरं" श्रपणार्थं पयः, यज्ञे च पुनःपुनः 'दुदुह्रे' 'मधु' मध्वास्वादम् । 'यत्' 'सीम्' सर्वतः 'उपह्वरे' उपगूढे ऊधःप्रदेशे, दोग्धा 'अविदत्' तत् स्तनैर्दुदुह्रे ॥ एवमत्र गोसम्बन्धात् "आशीः"—शब्देन "आशिरम्" उच्यत इत्युपपद्यते ॥

"अथेयमितराशीराशास्तेः"—इति यदुक्तम्, तत्रेदमुदाहरणम्,—

"सा मे सत्याशीर्देवेषु गम्यात् । शृण्वन्तु ते समर्द्धयन्तु । जुष्टात् जुष्टतरा पण्यात् पण्यतरा । अहेडता मनसा नु गच्छ यज्ञो देवान् गच्छतु" ॥

प्रस्तरे प्रह्रियमाणे यजमानो जपत्येनम् । "सा" "मे" मम "आशीः" "सत्या" यथाप्रार्थितेह "देवेषु" 'गम्यात्' प्राप्नोतु।तां 'शृण्वन्तु' 'ते' देवाः। श्रुत्वा च 'समर्द्धयन्तु' 'जुष्टात्' अपि 'जुष्टतरा' प्रियादपि प्रियतरा,—'पण्यात्' अपि 'पण्यतरा' स्तुतादपि स्तुततरा । किञ्च, 'अहेडता मनसा' अक्रोधवता मनसा प्रहितोऽस्माभिः हे प्रस्तर ! त्वमपि 'देवान्' 'गच्छ' । 'यज्ञः' अपि देवान् 'गच्छतु' । त्वमपि चान्यं यज्ञम् । तद्वयं याचामोऽसावपि देवान् गम्यात् ॥ एवमत्र आशीरेव "आशीः"—शब्देनाभिधीयते, आशिषो हि देवान् प्रति गमनमभीष्टमिति ॥ ६ । ८ । २ ॥

## अजीगः ॥ ३६ ॥

"यदा ते मर्त्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥"
यदा ते मर्त्तो भोगमन्वापदथ ग्रसितृतम ओषधीरगारीः ।
जिगर्त्तिर्गिरतिकर्मा वा गृणातिकर्मा वा गृह्णातिकर्मा वा ॥ ३ ॥

---

१ 'तैव' ॥

"अजीगः ( ३६ )"–इत्यनवगतम् । "अगारीः"–इत्यवगमः ॥

"अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आपदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥ ( ऋ० सं० २, ३, १२, २ )"–इति ॥

दीर्घतमस इयमार्षम् । अश्वमेधेऽश्वस्तुतौ विनियुक्ता ॥ 'अत्र' एतस्मिन् काले 'ते' तव हे अश्व ! 'रूपम्' अहम् 'उत्तमम्' उत्कृष्टम् 'अपश्यम्' । 'जिगीषमाणं' जेतुमिच्छत् 'इषे' अन्ने जेतव्ये निमित्तभूते 'आ पदे गोः' उपरि भूम्याः सरपथे[२] वेद्यां वा । यज्ञेनापि ह्यन्नमेवामुष्मिन् लोके जीयते, तस्माद् वेद्यामित्येवमुपपद्यते । किञ्च, "यदा" यस्मिन् काले "ते" तव "मर्त्तः" मनुष्यः "अनुभोगम्" "आनट्" प्राप्नोति, वाहयन् वा, अथ परिश्रान्तस्त्वम् "ओषधीः अगारीः"[१] ओषधीर्गृह्णासि गिरसि वा । अन्ये हि प्राणिनः परिश्रान्ताः चरितुं न शक्नुवन्ति, त्वं तु सुतरामोषधीर्भक्षयसीत्येतदधिकं तव ॥ एवमत्र ओषध्यश्वसम्बन्धात् "जिगर्त्तिः, गिरतिकर्मा वा गृह्णातिकर्मा वा"–इत्युपपद्यते ॥ ६ । ८ । ३ ॥

## अमूरः ॥ ३७ ॥

**"मूरा अमूर न वयञ्चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ॥"
मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेत्थ ॥ ४ ॥**

"अमूरः ( ३७ )"–इत्यनवगतम् । "अमूढः"–इत्यवगमः ॥

"मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्गवित्से ।
शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन् ॥ ( ऋ० सं ७, ५, ३२, ४ )"–इति ॥

त्रितस्याप्त्यस्यार्षम् । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने ! "अमूर !" अमूढ ! "मूराः" "मूढा वयं स्मः" । भवतो महाभाग्यपरिज्ञानं प्रति मन्दबुद्धित्वात् "न वयं चिकित्वः" न वयं भवतः प्रभावस्यान्तं "विद्मः" विजानीमः । "अङ्ग" हे "अग्ने !" "त्वम्" एव आत्मनो "महित्वम्" महिमानं "महत्त्वम्" माहाभाग्यम् "वित्से" "वेत्थ" वेत्सि, कस्तवान्यो माहाभाग्यस्यान्तं वेत्तुमर्हतीत्यभिप्रायः । किञ्च, 'शये' शयपरिमाणे प्रदेशे उत्तरवेद्याख्ये 'वव्रिः' विशेषात्मा, तव रूपाख्यः 'चरति' समिद्धत्वात् मुहुर्मुहुश्चरति । स त्वमनेन रूपेणोत्तरवेद्यामवस्थितः

१ 'अजागारीः' ॥ २ 'शरपथे' ॥

'जिह्वया' ज्वालया तानितानि हवींषि 'अदन्' भक्षयन् 'रेरिह्यते'। 'युवतिं' तांतामाहुतिं पुनःपुनः आस्वादयसि । 'विश्पतिः' विश्वस्य सर्वस्य पतिः, मनुष्यपतिर्वा 'सन्' यस्त्वमेवं करोषि हितैषित्वाद् यजमानानाम्, सोऽस्माकमिदं नाम कुर्वित्यभिप्रायः॥ एवमत्र 'मूराः'—इत्यात्मनिन्दाद्वारेण अग्निः "अमूढः"—इत्यनेन स्तूयते इत्यस्य "अमूर"—शब्दस्य "अमूढः"—इत्येष विपरिणाम उपपद्यते ॥ ६ । ८ । ४ ॥

## शुशुमानः ॥ ३८ ॥

*श शा स्तुतगतादित्य रूचभिति कुतो न गृहीत?*

शशमानः शंसमानः ।

"यो वां युज्ञैः शंशमानो ह दाशति" इत्यपि निगमो भवति५॥

"शशमानः (३८)"—इत्यनवगतम्। "शंसमानः"—इत्यवगमः॥

"यो वां युज्ञैः शंशमानो ह दाशति कुविर्होता यजति मन्मुसाधनः ।
उपाहुतं गच्छथो वीथो अध्वुरमच्छा गिरः सुमुतिं गन्तमस्मयू ॥ (ऋ० सं० २, २, २१, २)"—इति ॥

दीर्घतमस आर्षम्। जगतीच्छन्दः॥ "यः" अयं यजमानः, "वां" युवां हे मित्रावरुणौ! "यज्ञैः" निमित्तभूतैः "शशमानः" "शंसमानः" स्तुवन् "दाशति" ददाति हवींषि वां युवाभ्याम्। 'कविः' क्रान्तदर्शनः 'होता' आह्वाता 'यजति'। 'मन्मसाधनः' मननसाधनः, विज्ञानसाधन इत्यर्थः। आह—तस्य किम्? इति, उच्यते,—'उपाहृतं गच्छथः' प्रत्युपागच्छथः युवाम्, 'वीथः' च तस्य 'अध्वरम्' अध्वराश्रितानि हवींषि। वयमपि च एवङ्गुणविशिष्टा एव। यतो ब्रूमः,—'सुमतिं' शोभनप्रज्ञं यजमानम् अनुलक्ष्य 'अच्छागिरः' एता अस्मद्गिरः आभिमुख्येन 'गन्तम्' गन्तुमिच्छथो युवाम्। 'अस्मयू' अस्मान् कामयमानावित्यर्थः॥एवमत्र "यज्ञैः शशमानः"—इति यज्ञसम्बन्धात् शब्दसारूप्याच्च "शशमानः = शंसमानः"—इत्येवमुपपद्यते ॥ ६ । ८ । ५ ॥

## दुेवो दुेवाच्या कृुपा ॥ ३९ ॥

"दुेवो दुेवाच्या कृुपा ।"

देवो देवान् प्रत्यक्तया कृपा ।

कृप् कृपतेर्वा कल्पतेर्वा ॥ ६ ॥ ८ ॥

"[देवो]—देवाच्या, कृपा (३९)"—इत्येते अनवगते। [देवशब्दोऽनयोरेव उप-

१ 'देवः' इति पदं निगमस्थमेवोच्चारितम्। अनवगते पदे तु 'देवाच्या, कृपा' इत्येते द्वे एव विज्ञेये। एवं च देवशब्देऽनयोरित्यादिपदानामत्रत्य ग्रन्थस्योपयोगश्चिन्त्य एव॥

लक्षणार्थोऽत्र समाम्नातः । देवः, देवाच्या, कृपा,—इति त्रीणि एतानि पदानि । ]
"देवाच्या"—इत्यस्य "देवान् प्रत्यञ्चितया"—इत्यर्थप्रतीतिः । "कृपा"—इत्यस्यापि "कल्पितया"—इत्येवमर्थप्रतीतिः ॥

"अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु वष्टि शोचिषा जुह्वानस्य सर्पिषः ॥ (ऋ० सं० २, १, १२, १)"—इति ॥

परुच्छेपस्यार्षम् । अतिच्छन्दा अत्यष्टिः । अग्निचयने इष्टकोपधाने विनियुक्ता ॥
'अग्निं' अहं 'होतारम्' आह्वातारम् देवानाम् 'मन्ये' । 'दास्वन्तं' दानवन्तं दातृतमम्, 'वसुं' वासयितारं सर्वस्य जगतः । 'सूनुं'—'सहसः' बलस्य पुत्रम्, 'जातवेदसं' जातप्रज्ञानम् । 'विप्रं न जातवेदसम्' विप्रमिव जातप्रज्ञानम्, यथा हि कश्चित् कश्चिन्मनुष्यं समानपृष्ठोदरपाणिपादं विप्राप्तज्ञानं यथावत् जानीयात्, एवमहमग्निं यथावज्जाने । 'यः' अग्निः, 'स्वध्वरः' शोभनयज्ञः "देवः" 'ऊर्ध्वया' "कृपा" कृपया सामर्थ्याख्यया कल्पितया, "देवाच्या" देवान् प्रत्यञ्चितया गत्या, 'घृतस्य' 'विभ्राष्टिं' विभ्रंसनम् 'अनुवष्टि' आहुतिप्रक्षेपम् । 'शोचिषा' ज्वालया अनुकामयते वाञ्छति । "वष्टि"—इति कान्तिकर्मसु पठितम् । 'आजुह्वानस्य' उपरि हूयमानस्य 'सर्पिषः' सर्पणशीलस्य । यमग्निमहमेवं जाने, यश्चैवङ्गुणयुक्तः, स इदं नामास्माकं करोत्वित्यभिप्रायः ॥ एवमत्र "देवाच्या, कृपा"—इत्येतौ शब्दौ देवान् प्रत्यक्तया कल्पितयेत्येवमुपपद्यते, शब्दसारूप्यादर्थोपपत्तेश्च ॥ ६ । ८ । ६ ॥ *

## विजामातुः ॥ ४० ॥

"अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥"

अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः ॥
विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षते ॥

१ संपदादित्वाद्भावे क्विबिति सूचितम् ॥ २ छान्दसत्वात् 'विष्वग्देवयोः' इत्यद्र्यादेशाभाव इति । लोके तु देवद्रीच्येति भवितव्यमिति सूचितम् ॥ ३ 'विभ्रंशम्' ॥ ४ 'कल्पनयेत्येवम्' *. अत्रैवाष्टमखण्डसमाप्तिरवगन्तव्या ॥

विगतजामातृभाव इवेति दुर्निर्वचनं यास्केन विरुच्यते। किं च तथा स्मृतिप्रमाणमवगतं स्यात् ।

असुसमाप्त इव वरोऽभिप्रेतः ॥

जामाता जा अपत्यं तन्निर्माता ।

'उत वा घा स्यालात्'—अपि च स्यालात् ।

स्याल आसन्नः संयोगेनेति नैदानाः ।

स्याल्लाजानावपतीति वा ।

लाजा लाजतेः ।

स्यं शूर्पं स्यतेः।शूर्पमशनपवनं शृणातेर्वाऽथ सोमस्य प्रदानेन॥

"युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम्"नवतरम्॥ १ ॥

"विजामातुः ( ४० )"—इत्यनवगतम् । उपसर्गस्यापरिसमाप्त्यर्थे वृत्तिरत्रानवगमः । "असुसमाप्त इव वरोऽभिप्रेतः"—इति भाष्यकारो निराह । विगतजामातृभाव इव च, यो ह्यप्राप्तजामातृभावः स विजामातेत्युच्यते, स हि दाक्षिणात्येषु प्रसिद्धः । "अश्रवं हि०—जनयामि नव्यम् ॥ ( ऋ० सं १, ७, २८, २ )"—इति । कुत्सस्यार्षम् । त्रिष्टुप् ॥ "अश्रवम्" "अश्रौषम्" अहम् "वां" युवाम् । हे "इन्द्राग्नी !" "भूरिदावत्तरा" "बहुदातृतरौ" भूरिदातारौ । कुतः ? "विजामातुः" "असुसमाप्तात् जामातुः" यो हि असमाप्तजामातृभावो भवति, स जामातृगुणहीनत्वात् बहुदानेन कन्यापितृनाराध्य तेभ्य आत्मानं रोचयति । ततोऽपि बहुतरस्य धनस्य दातारावहमश्रौषं भवन्तौ । "उत वा घा स्यालात्" । घा—इत्यनर्थकः । स्यालात् अपि बहुदातारौ युवामहमश्रौषं भवन्तौ, स्यालोऽपि हि भगिनीप्रियंचिकीर्षया बह्वेव ददाति । यत एवमहमश्रौषं भवन्तौ, एतस्मात् कारणात् "सोमस्य" "प्रयती" प्रदानेन, हे इन्द्राग्नी ! अहं "युवाभ्यां" "स्तोमं" "जनयामि" उच्चारयामि, "नव्यं" नवतरमन्येभ्यः स्तोमेभ्यः ॥ एवमत्र "विजामातृ"—शब्देन असुसमाप्तजामातृभावः उच्यते, तस्य बहुदातृत्वादित्युपपत्तिः ॥

---

१ असुसमाप्तादिति । अयमेवार्थो 'विधवेव देवरम्' इत्यत्रापि बोध्यः । अत एव पराशरस्मृतौ—'पतितेऽपतौ'इत्येव च्छेदः समीचीनः । व्यवह्रियते सर्वैरास्तिकैरपि ॥ पत्यौ सुसमाप्तत्वं च 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके' इति वाक्यतश्चतुर्थ्युत्तरमेव भवति ॥

"विजामातेति" "शश्वत्" प्रसिद्धमेतत् "दाक्षिणाजाः क्रीतापतिमाचक्षते" से हि विगुणत्वादात्मनः क्रीणाति कन्यामात्मनो भार्यार्थे। तस्मात् "असुसमाप्त इव" असौ "वरोऽभिप्रेतः" ॥

"जामाता" "जा अपत्यम्, तन्निर्माता" जामाता, स्त्रीत्वं हि मैथुनेन व्यवहेरणासौ निर्मिणोति, तेनासौ दुहितुः पतिर्जामाता भवति ॥

"स्यालः आसन्नः संयोगेनेति" "नैदानाः" निदानविदो मन्यन्ते ॥ अथ "वा" "स्यम्"-इति "शूर्पम्" उच्यते, "स्यात्" तस्मादसौ गृहीत्वा विवाहे "लाजानावपति" तस्मात् स्याल इत्युच्यते। "स्यं शूर्पम्" "स्यतेः (दि० प०)" धातोः प्रक्षेपणार्थस्य, तेन हि तुषाः क्षिप्यन्ते ॥ "शूर्पम् अशनपवनम्" तेन ह्यशनं पूयते। "शृणातेः (क्र्या० प०) वा" तद्धि शरमयं भवति ॥ ६। ९। १ ॥

## ओमासः ॥ ४१ ॥

### ओमास इत्युपरिष्टाद्व्याख्यास्यामः ॥ २ ॥ ९ ॥

"ओमासः (४१)"-"इति" एतत् पदम् "उपरिष्टाद् व्याख्यास्यामः" द्वा [ सप्त ] दशेऽध्याये (१२।४०।१) "ओमासश्चर्षणीधृतः"-इत्यत्र ॥६।९।२॥ *

## सोमानम् ॥ ४२ ॥

"सोमानं स्वरणं कृणुहि ब्रह्मणस्पते।
कक्षीवन्तं य औशिजः ॥" (ऋ० १।१८।१)

सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्रः॥ उशिग्वष्टेः कान्तिकर्मणः ॥

अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते ॥ १ ॥ १० ॥

---

१ 'णात्याः' इति तु शोधककृतः पाठः, मूलस्थस्तु यथावस्थित एव सर्वेषु मूलपुस्तकेषु ॥
२ 'तस्य हि निर्गुणत्वा'-इति मुद्रितमासीत् ॥ * अत्रैव नवमखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ षष्ठा (एकादशा) ध्यायस्य द्वितीयः पादः॥ ६, २ ॥" इति तूपलभ्यते ॥

"सोमानम् ( ४२ )"–इत्यनवगतम् । "सोतारम्"–इत्यवगमः । "सोमानं स्वरणं०–य औशिजः" । मेधातिथेः काण्वस्यार्षम् । अग्न्युपस्थाने विनियुक्ता, "सोमानं स्वरणमिति ब्राह्मणस्पत्ययोपतिष्ठेत"–इति सूक्तम्, । "सोमानम्" अनेकेषां "सोमानां" "सोतारम्" अभिषोतारम्, "माम्", "स्वरणं" शब्दयितारम्, सुयशस्विनं "कृणुहि" कुरु हे "ब्रह्मणस्पते !" कथं च पुनः "प्रकाशनवन्तं कुरु" ? इति,–"कक्षीवन्तं य औशिजः" । लुप्तोपममेतत् । यः औशिजः कक्षीवान्, तमिव । अत्र करोतिसम्बन्धात् "प्रकाशनवन्तम्"–इत्येतदध्याहृतं भाष्यकारेण । "कक्षीवान्" "कक्ष्यावान्" कक्ष्यया तद्वान् । "अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्" स हि कक्षे उत्पन्नः, तदुत्पत्तिसंयोगात्तु कक्षीवान्॥ औशिजः"उशिजः पुत्रः"। "उशिक्" पुनः "वष्टेः" कान्त्यर्थस्य । एवमत्र "सोमानम्"–इत्यस्य शब्दसारूप्यात् "सोतारम् सोमानाम्"–इत्येष विपरिणाम उपपद्यते ॥

अपि चैवमन्यथा स्यात्,–योऽहं सोमानां सोता, कक्षीवान् औशिजः, तमेवङ्गुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते ! ॥ ६ । १० । १ ॥ *

## अनवायम् ॥ ४३ ॥ किमीदिने ॥ ४४ ॥

(ऋ० ७।१०४।२) "इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒घं तपु॒र्यय॑स्तु च॒रुर॒ग्निवाँ॑ इ॑व ।
ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑॥"

इन्द्रासोमावघस्य शंसितारम् ॥

अघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति ॥

तपुस्तपतेः ॥

चरुर्मृच्चयो भवति चरतेर्वा समुच्चरन्त्यस्मादापः ॥

ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे । क्रव्यादे क्रव्यमदते । घोरचक्षसे घोरख्यानाय ॥

क्रव्यं विकृत्ताज्जायत इति नैरुक्ताः । द्वेषो धत्तम् । अनवायम् अनवयवम्, यदन्ये न व्यवेयुरद्वेषस इति वा ।

---

१ 'ऽत्र' ॥ *अथ दशमखण्डसमाप्तिपर्यन्तव्याख्या।।

किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा पिशुनाय चरते ॥

पिशुनः पिंशतेर्विपिंशतीति ॥ १ ॥ ११ ॥

"अनवायं ( ४३ )" "किमीदिने ( ४४ )"—इत्येते अनवगते । "अनवायं"—इत्येतस्य "अनवयवम्"—इत्यवगमः । "किमीदिने"—इत्यस्य "किमिदङ्किमिदमित्येवङ्कारी पिशुनः" ॥ "इन्द्रासोमा समघशंस०—मनवायं किमीदिने ॥ (ऋ० सं०५,७,५,२)"—इति॥वसिष्ठस्यार्षम् ॥ हे "इन्द्रासोमौ!" सन्तापयतं भवन्तौ, "अघशंसं" पापस्य "शंसितारम्" "अभ्यघं" पापमेव कर्तुमाभिमुख्येन नित्यकालमेव योऽवस्थितः, तं सन्तापयतम् । स च "तपुः" युवाभ्यां सन्ताप्यमानः, "चरुरग्निवाँ इव" चरुरिव अग्निसंयुक्तः "ययस्तु" क्षयं यात्वित्यर्थः । किञ्च, "ब्रह्मद्विषे" "ब्राह्मणद्वेष्ट्रे" "क्रव्यादे" "क्रव्यमदते"पृष्ठमांसभक्षयित्रे,"घोरचक्षसे"घोरदर्शनाय,"द्वेषः"सर्वलोकद्वेष्यतां "धत्तम्" युवाम् । "अनवायम्" "अनवयवं" सकलमित्यर्थः ॥ अथ "वा" "यदन्ये" "अतद्द्रुहः"तत्सुहृदः "अद्वेषसः"अद्वेष्टारः"न व्यवेयुः"व्यवेतुं वियोजयितुं घटमाना अपि न शक्नुयुः, तादृशं द्वेषो धत्तम् । "किमीदिने" "पिशुनाय"—इत्यर्थः ॥ एवमत्र "अनवायम्"—इत्यस्य "अनवयवम्" अवियोजनं वा—इत्यर्थप्रतीतिः, तथाभीष्टत्वात् ॥

किमीदी च पिशुनः, स हि "किमिदानीम्" वर्त्तते "इति" एवमन्वेषमाणः "चरते" अथ "वा" "किमिदं" वर्त्तते "इति" एवमन्वेषमाणः "चरते" स हि तस्य स्वभावः ॥

"चरुः, मृच्चयो भवति" मृदादिसञ्चितो भवति । "चरतेर्वा" "समुच्चरन्ति" हि "अस्मादापः" ॥

"क्रव्यं" मांसम्, तद्धि "विकृताज्जायते" ॥

"पिशुनः" "पिंशतेः ( जु० प० )" धातोः, स हि स्वल्पमपि पापं "विपिंशति" विपुष्यतीत्यर्थः ॥ ६ । ११ । १ ॥ *

## अमवान् ॥ ४९ ॥

"कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥"

---

१ 'जनीयं' ॥ * अत्रैकादशखण्डः समाप्तिमगमत्तव्या ॥

**कुरुष्व पाजः । पाजः पालनात् ।**
**प्रसितिमिव पृथ्वीम् । प्रसितिः प्रसयनात्, तन्तुर्वा जालं वा ।**
**याहि राजेवामात्यवानभ्यमनवान् स्ववान्वेराभृता गणेन गतभयेन हस्तिनेति वा ।**
**तृष्व्यानु प्रसित्या द्रूणाननः ।**
**तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा ।**
**असितासि विध्यरक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः प्रपिष्टतमैरीति वा ॥ १ ॥**

"अमवान् ( ४५ )"—इत्यनवगतमनेकार्थञ्च । "कृणुष्वपाजः०—रक्षसस्तपिष्ठैः ॥ ( ऋ० सं० ३, ४, २३, १ )"—इति ॥ वामदेवस्यार्षम् । अग्निचयने पुरुषव्याघारणे विनियुक्ता, "राक्षोघ्नेन व्याघारयेत्"—इति ह्युक्तम् ॥

हे भगवन्नग्ने ! "कृणुष्व" "कुरुष्व" एतदात्मीयं "पाजः" बलम्, "प्रसितिं न" "प्रसितिमिव" वागुरातन्तुमिव, जालमिव वा । "पृथ्वीं" विस्तीर्णाम् । ततः एवमेतत् विस्तीर्णं कृत्वा "याहि" त्वं रक्षांस्यभिमुखः । कथं च पुनर्याहि ? "राजा इव" यथा राजा यायात् "अमवान्" "अमात्यवान्" नीतियुक्तो विजयाय, तथा त्वं याहि । अथवा—यथा "अभ्यमनवान्" रोगभूतः परेभ्यो भयदाता यायात्, तथा याहि । अथवा—यथा "स्ववान्" आत्मवित्तवान् सुभृतसैन्यो यायाद् विजयाय, तथा याहि । "इभेन" "इराभृता" अन्नभृतेन "गणेन" सुपुष्टेन युक्तो यथा राजा यायात्, तथा याहि । अथवा—इभेन "गतभयेन" शूरेण "हस्तिना" यथा यायात् तथा याहि । किञ्च, "तृष्वीमनु प्रसितिं द्रूणानः" । क्षिप्रमनु प्रसितया गत्या, सन्ततया गत्या । "द्रूणानः" रक्षांसि हिंसन् याहि । कस्मात् पुनरेवमुच्येते ? इतः,—यस्मात् "अस्ता असि" "असिता" क्षेप्ता त्वं रक्षांसि प्रति दीप्तायाः अर्चिषः । स त्वमेवमागत्य "विध्य" एतान् "रक्षसः" अस्मच्छत्रून् "तपिष्ठैः" "तप्ततमैः" अर्चिर्भिः ॥ एवमत्र राजोपमानसम्बन्धात्[3] "अमवान्=अमात्यवान्"—इत्येवमात्रुपपद्यते ॥

"पाजः"—इति बलनाम, "पालनात्" तेन हि पाल्यते । "प्रसितिः"—"प्रसयनात्"[4] "तन्तुर्वा जालं वा" उभाभ्यामपि ताभ्यामभिभूयन्ते मृगाश्च मत्स्याश्च ॥ ६ । १२ । १ ॥

---

१ 'रीति' ॥ २ 'च्यसे' ॥ ३ 'गजोप' ॥ ४ 'प्रसहनात्' —इत्येवं बहुषु पुस्तकेषु पाठः ॥

## अमीवा ॥ ४६ ॥

"यस्ते गर्भममीवा दुर्णामा योनिमाशये ॥"

अमीवाभ्यमनेन व्याख्यातः ॥

दुर्णामा क्रिमिर्भवति पापनामा ॥

क्रिमिः क्रव्ये मेद्यति, क्रमतेर्वा स्यात्सरणकर्मणः, क्रामतेर्वा ॥ २॥

"अमीवा (४६)"–इत्यनवगतम्। "अभ्यमनेन" "अभ्यमनवान्"–इति यद्धक्रमाधस्त्ये मन्त्रे, (६।१२।१) अनेनैव तत् "व्याख्यातम्" ॥

"यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ (ऋ०सं०८,८,२०,२)"–इति ॥

रक्षोहा नाम ब्राह्मः, तस्येयमार्षम्। पुत्रकामस्य षडाहुतो नाम स्थालीपाकः, तत्रेयं विनियुक्ता। 'यः' "ते" तव हे स्त्रि! "गर्भम्" "अमीवा" रोगभूतः, "दुर्णामा" "पापनामा क्रिमिः" पापप्रदेशे नतः परिणतः उत्पन्नः, "योनिम्" "आ" गत्य "शये" शेते गर्भहिंसिता 'तम् अग्निः' 'ब्रह्मणा सह' 'निर् अनीनशत्' नाशयतु। 'क्रव्याद्' मांसभक्षयितारम् ॥ एवमत्र "अमीवा"–इत्यस्य "क्रिमिः" अभिधेयः, क्रिम्युपहते हि योनौ गर्भो न सम्भवतीत्युपपत्तिः ॥ ६।१२।२ ॥

## दुरितम् ॥ ४७ ॥

"अतिक्रामन्तो दुरितानि विश्वा ॥"

अतिक्रममाणा दुर्गतिगमनानि सर्वाणि ॥ ३ ॥

"दुरितम् (४७)"–इत्यनवगतम्। "दुर्गतिगमनम्"–इति अर्थप्रतिपत्तिः ॥

"वैश्वदेवीं सूनृतामारभध्वं शुद्धा भवन्तो यज्ञियासः पावकाः।
अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम" ॥

'वैश्वदेवीं' वाचं 'सूनृतां' सत्याम् 'आरभध्वम्' उपक्रमध्वम् वक्तुम्। तयैवंलक्षणया वाचा 'शुद्धाः' इह अनभिशस्ताः पूताश्च परलोके भवथ। 'यज्ञियासः' यज्ञियाः यज्ञसम्पादिनः। किञ्च, "अतिक्रामन्तः" अतिक्रममाणा वयम्। तस्या वाचो माहाभाग्येन। "दुरितानि" दुर्गतिप्रापकाणि कर्माणि, "विश्वा" विश्वानि। 'शतं हिमाः' शतं हेमन्तानां 'सर्ववीराः' अनवखण्डितपुत्रपौत्राः 'मदेम' हृष्येमेत्यर्थः ॥ एवमत्रातिक्रमणसम्बन्धात् "दुरितम्=दुष्कृतम्"–इत्युपपद्यते, तस्य हि अतिक्रमणमभीष्टमिति ॥ ६।१२।३ ॥

---

१ 'तेनेव त' ॥ २ 'ब्राह्मणः' ॥ ३ 'र्थप्रतीतिः' ॥

## अप्वे ॥ ४८ ॥

अप्वा यदेनया विद्धोऽपवीयते । व्याधिर्वा भयं वा ।
"अप्वे परेहि" इत्यपि निगमो भवति ॥ ४ ॥

"अप्वा ( ४८ )"—इत्यनवगतम् । "अपव्ययति"—इत्यवगमः । रोगजातिर्वा अभिधेया भयजातिर्वा, तया हि "विद्धः अपवीयते" अपवेष्टयते वा प्राणैः । "अमीषां चित्तं ( प्रतिलोभयन्ती गृहाणांगानि ) ( ऋ० सं० ८, ५, २३, ६ )"—इति॥ उपरिष्टाच्छेषः ॥ ६ । १२ । ४ ॥

## अमतिः ॥ ४९ ॥

अमतिरमामयी मतिरात्ममयी ।
"ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि" इत्यपि निगमो भवति ॥ ५ ॥ १२ ॥

"अमतिः ( ४९ )"—इत्यनवगतम् । "अमामयी मतिः" अमतिः । एवमपि न प्रतीयत इत्याह,—"आत्ममयी"यस्य मतिः असावमतिरित्युच्यते । कश्चासौ ? आदित्यः, तस्य हि आत्मप्रकाशमयी मतिः ॥

३ २ उ  ३ २ ३ १ २ ३ क २ र ३ १ २ ३ १ २ ३ १ २  ३ २ २ २ ३ २ ३ २
"अभि त्यं देव१९सवितारमोण्योः कविक्रतुमर्चामि सत्यसव१९रत्नधामभि प्रियं मतिम्।
३ २ उ ३ २ ३ १ र २ र ३ १ २ ३ १ २  ३ १ २ ३ १ २
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ( सा० छ० आ० ५, २, ३, ८ )"—इति ॥

नकुलस्यार्षम् । अतिच्छन्दाः, अष्टिः । प्रवर्ग्ये शस्यते, सोमसम्माने चाध्वर्यवे विनियुक्ता । 'अभि अर्चामि' 'त्यं' तम् अहम्, 'देवं' 'सवितारम्' । 'ओण्योः' द्यावापृथिव्योः यान्यन्तरा भूतानि वर्त्तन्ते, तेभ्यः सर्वेभ्य सकाशात् । 'कविक्रतुं' क्रान्तप्रज्ञानम्, 'सत्यसवं' सत्याभ्यनुज्ञम्, 'रत्नधां' रमणीयानां धनानां दातारम्, 'अभि मतिम्' अभिमन्तारं सर्वार्थानाम्, ईश्वरत्वात्, 'प्रियं' च सर्वभूतानाम् । "ऊर्द्धा" "यस्य" सवितुः "अमतिः" आत्मप्रकाशमयी मतिः । आह—कतमा पुनरसावूर्द्धा ? इति,—"भा" याः "अदिद्युतत्" अद्योतयत् । तम् अभ्यर्चामि । किञ्च, 'सवीमनि' प्रसवे यस्य सर्वमिदं प्रवर्त्तते, 'हिरण्यपाणिः' रश्मिपाणिः, सर्वमिदं

१ 'वीयेत' ॥ २ 'तत' ॥  सवीमनि प्रसवे ।

जगत् 'अमिमीत' निर्मितवान्। 'सुक्रतुः' सुकर्मा। 'कृपा' स्वया सामर्थ्यकल्पनया। 'स्वः' आदित्यः, सु अरण इत्यर्थः॥ एवमत्र "अमति"—शब्देन आत्मप्रकाशगतम् आदित्यविज्ञानमुच्यते, स हि प्रकाशसतत्त्व एव नान्यत् प्रकाशान्तरमपेक्षत इत्युपपत्तिः॥ ६। १२। ५॥

## श्रुष्टी ॥ ५० ॥ पुंरंधिः ॥ ५१ ॥

### श्रुष्टीति क्षिप्रनाम–आशु अष्टीति–॥

"श्रुष्टी (५०)"–इत्यनवगतम्, "पुरन्धिः (५१)"–इति च। श्रुष्टीत्यस्य 'आश्वशनम्'–इत्यवगमः, पुरन्धिरित्यस्यापि 'पुरां धीः'–इत्यवगमः॥ *

"ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्।"
तानध्वरे यज्ञे, उशतः कामयमानान्, यजाग्ने "श्रुष्टी भगं नासत्यौ" चाश्विनौ।

सत्यावेव नासत्यावित्यौर्णवाभः, सत्यस्य प्रणेताराविस्याग्रायणः, नासिकाप्रभवौ बभूवतुरिति वा।

पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येकम्। इन्द्र इत्यपरं स बहुकर्मतमः पुरां च दारयितृतमः, वरुण इत्यपरं, तं प्रज्ञया स्तौति–
"इमामू नु कवितमस्य मायाम्" इत्यपि निगमो भवति॥ १॥

"ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभिसन्ति देवाः।
ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्॥ (ऋ० सं० ५, ४, ६, ४)"–इति॥ वसिष्ठस्यार्षम्। वैश्वदेवी। त्रिष्टुप्।

'ते' ये 'विश्वेदेवाः' 'यज्ञेषु' 'यज्ञियासः' यज्ञसम्पादिनः, 'ऊमाः' अवितारः रक्षितारः, अवनीया वा तर्पणीयाः, 'सधस्थं' वैश्वदेवं समानं स्थानम् 'अभिसन्ति' अभितिष्ठन्ते। किं तेषाम्? इति,–"तान्" विश्वान्देवान् हे "अग्ने"! एतस्मिन् "अध्वरे" "यज्ञे" "उशतः" स्वमंशं "कामयमानान्" "श्रुष्टी" "क्षिप्रम्" अवि-

---

१ 'त्यस्य वि'॥ * इहैव द्वादशखण्डसमाप्तिर्दृश्यते। परंतु सा 'श्रुष्टी इत्यनवगतम्' इत्यतः प्रागेवावगन्तव्या॥

लम्बमानः "यक्षि" "यज" "भगं" च यज, "नासत्या" "नासत्यौ चाश्विनौ" यज, "पुरन्धिम्" च यज ॥ एवमत्र यागस्य विघ्नभयात् क्षिप्रस्येष्टत्वात् "श्रुष्टि–इति क्षिप्र-नाम"–इत्युपपद्यते ॥ अन्यत्र हि वक्ष्यति "श्रुष्टीवरीः=सुखवतीः" इति, तस्मादे-तदनेकार्थमपि भवति ॥

"सत्यौ एव नासत्यौ-इति" "और्णवाभः"–आचार्यो मन्यते । तौ हि सत्यमेव ब्रूतः, न कदाचिदप्यसत्यम् । तस्मान्नासत्यावित्युच्यते । द्विः प्रतिषेधः प्रकृतिमापा-दयति । अथवा–"सत्यस्य" उदकस्य यज्ञस्य वा "प्रणेतारौ" नासत्यौ, तथाहि "आग्रायणः" आचार्यो मन्यते । अथ "वा" ऐतिहासिकपक्षेण "नासिकाप्रभवौ हि तौ बभूवतुरिति" ॥

"पुरन्धिः" । पुरन्धिशब्दोऽत्र गुणपदत्वात् सन्दिह्यते इति विचार्यते–"तत्कः पुरन्धिः ?"–इति । "भगः" अत्र "पुरस्तात्"–"श्रुष्टी भगम्"–इति, "तस्य" अयम् "अन्वादेशः"–"इत्येकम्" आचार्यमतम् । नासत्यावनन्तरावपि सन्तौ न सन्दि-ह्येते द्विवचनवाच्यत्वात् तयोः,–एकवचनान्तत्वात् "पुरन्धि"–शब्दस्य च । "इन्द्रः" उक्तः स्यात् पुरन्धिशब्देन, "इत्यपरं" मतम् । किंकारणम् ? "सः" हि इन्द्रः "बहुकर्मतमः" अन्येभ्यो देवेभ्यः । "धीः"–इति कर्मनामसु पठितम्, तद्यस्य पुरु बहु स पुरन्धिः, स चेन्द्रः । तस्मात् पुरन्धिः इन्द्रः–इत्युपपद्यते । अथवा–अन्येन पुर-न्धित्वमिन्द्रस्य स्यात्,–"पुरां च दारयितृतमः" मेघपुरो ह्यसावेव दारयति । "वरुणः" पुरन्धिशब्देनोच्यते,–"इत्यपरम्" मतम् । किंकारणम् ? "तं" हि अन्यत्रापि मन्त्रदृक् "प्रज्ञया" बुद्ध्या "स्तौति" । तद्यथा,–

"इमामू नु कवितमस्य मायां महीं देवस्य न किरादधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥ (ऋ० सं० ४,४,२१, १)"–इति ॥

अत्रेरार्षम् । वारुणी । त्रिष्टुप् । "इमां" "मायां" प्रज्ञां "कवितमस्य" मेधावि-तमस्य द्योतमानस्य 'महीं' महतीं मायां 'न किरादधर्ष' न कश्चिदप्याधर्षयितुं शक्नोति । कतमां मायाम् ? इति–'एकम्' एतं सन्तं वरुणम् आदित्यम्, 'यत्' एता 'उद्ना' उदकेन रश्मिना नद्यः 'एनीः' गमनशीलाः सततमुदकमादाय आदित्यमण्डलं गच्छेति[2] एवं नामाहर्निशमेता गच्छन्त्यः 'अवनयः' नद्य इव 'समुद्रं' सिञ्चन्त्यः 'न पृणन्ति' न प्रीणयन्ति बुद्ध्या । तेषां रश्मीनां च मायाम् एवंलक्षणां भगवतो वरुणस्य 'आधर्षयितुम्' अभिभवितुं विज्ञातुं न शक्नोति

१ 'धमनशी' ॥ २ 'गच्छति । ए' ॥

कश्चिदपि कथयितुम् । कथमप्ययं न सम्पूर्यत इति ॥ एवमत्र वरुणः प्रज्ञया स्तूयते, धीरिति च प्रज्ञानाम, सा यस्य पुर्वी बह्वी, स पुरन्धिः । वरुणश्च प्रज्ञया स्तूयते, तस्मात् "वरुणः=पुरन्धिः"—इत्युपपद्यते ॥ ६ । १३ । १ ॥

## रुशत् ॥ ५२ ॥

### रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः ॥

### "समिद्धस्य रुशददर्शि पाजः" इत्यपि निगमो भवति॥ २॥ १३॥

"रुशत् ( ५२ )"—इत्यनवगतम् । "रोचतेर्ज्वलतिकर्मणः"—इति निर्वचनम् । "रोचनम्"—इत्यवगमः ॥

"अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥ ( ऋ० सं० ३, ८, १२, २ )"—इति ॥

गविष्ठिरबुधयोरार्षम् । आग्नेयी । त्रिष्टुप् । अग्निचयने इष्टकोपधाने विनियुक्ता । 'अबोधि होता' बुध्यते होता 'अग्निः' 'यजथाय' यजमानाय, यष्टव्यतया 'देवान्' । 'ऊर्द्ध्वः' ज्वलनक्रियायोगात् । 'प्रातः अस्थात्' अग्निहोत्रिणां गृहेषु यो वितिष्ठते, 'सुमनाः' च शोभनमनाः । "समिद्धस्य" च यस्य "रुशत्" रोचिष्णुर्वर्णः "अदर्शि" दृश्यते । "पाजः" च बलं यस्य 'अप्रमितम्' यश्च प्रभावतः 'महान्' । 'तमसः' च सर्वमिदं 'निरमोचि' निर्मोचयति, बुध्यते देवान् यष्टव्यतया ॥ एवमग्न्यधिकारादत्र शब्दसारूप्याच्च "रुशत्"—"इति" एतत् "वर्णनाम"—इत्युपपद्यते ॥ ६ । १३ । २ ॥

## रिशादसः ॥ ५३ ॥

### "अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।"

### अस्ति हि वः समानजातिता रेशयदारिणो देवाः । अस्त्याप्यम् । आप्यमाप्नोतेः ॥ १ ॥

(रेशयदासिन इतीवा पाठः।)

"रिशादसः ( ५३ )"—इत्यनवगतम् । "रेशयदासिनः"—इत्यवगमः ॥ *

"अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।
प्रणः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे ॥ ( ऋ० सं० ६, २, ३२, ५ )"—इति ॥

---

* इहैव त्रयोदशखण्डसमाप्तिर्दृश्यते, परं तु 'रिशादस इत्यनवगतम्' इत्यतः प्रागेवोचितावगन्तव्या ॥

मनुर्वैवस्वतस्तस्येयमार्षम् । सतो बृहती । वैश्वदेवे सूक्ते । हे "रिशादसः" "रेशयदासिनः" ! "देवासः" देवाः ! यो हि रेशयति हिंसावान् भवति, तस्मै त आयुधान्यस्यन्ति । "रेशयदारिणः"—इति केचिदधीयते निर्वचनम्, तेषां रेशयन्तं हिंसन्तं दारयन्तीत्यर्थः । "अस्ति" "वः" युष्माकं "सजात्यं" "समानजातिता" देवत्वम्, "अस्ति" च युष्माकम् "आप्यम्" आप्तव्यं मनुष्यैः, ईश्वरा यूयमित्यभिप्रायः । यत एवमतो ब्रवीमि,—'प्रवोचत' यूयम् अस्मभ्यमनुजानीत । 'सुविताय' सुगताय, 'सुभोगाय' स्थानाय, 'सुम्नाय' सुखाय च पूर्वस्मै स्वभूताय, 'नव्यसे' नवतराय । कथं च पुनः प्रवोचत ? इति,—'मक्षु' क्षिप्रमित्यर्थः । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "रिशादसः=रेशयदासिनो वा, रेशयदारिणो वा"—इत्युपपद्यते ॥ ६ । १४।१॥

## सुदत्रः ॥ ५४ ॥

सुदत्रः कल्याणदानः ॥

"त्वष्टा सुदत्रो विदधातु रायः" इत्यपि निगमो भवति ॥२॥

"सुदत्रः (५४)"—इत्यनवगतम् । 'सुदानैः'[1]—इत्यवगमः ॥

"ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु ।
वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो विदधातु रायः ॥ (ऋ० सं० ५, ३, २७, २)"—इति ॥

वसिष्ठस्यार्षम् । दशरात्रस्य चतुर्थेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्विपदा एताः शस्यन्ते । 'ताः' देव्यः, 'नः' अस्मभ्यं 'रासन्' 'वसूनि' ददत्वित्यर्थः । किंलक्षणाः देव्यः ? 'रातिषाचः' हविर्दानं याः सचन्ते सेवन्ते । किञ्च, आभिमुख्येन स्थित्वा 'रोदसी' रुद्रस्य पत्नी 'शृणोतु' 'वरुणानी' च । किञ्च, 'वरूत्रीभिः' वरयितव्याभिः सहितः 'सुशरणः' स्वाश्रयणः 'नः' अस्माकम् 'अस्तु' । "त्वष्टा" "सुदत्रः" "कल्याणदानः" "विदधातु" च अस्माकम् "रायः" धनमित्यर्थः ॥ एवमत्र "रायः"—सम्बन्धात् "सुदत्रः=कल्याणदानः"—इत्युपपद्यते ॥ ६ । १४ । २ ॥

## सुविदत्रः ॥ ५५ ॥

सुविदत्रः कल्याणविद्यः ॥

"आग्ने याहि सुविदत्रेभिरर्वाङ्" इत्यपि निगमो भवति ॥३॥

---

1 'सुदासः' ॥

"सुविदत्रः (५५)"—इत्यनवगतम्। 'सुविद्यः'—इत्यवगमः। "कल्याणविद्यः"-इत्यभिधेयवचनम्॥

"ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः।

आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः॥ (ऋ० सं० ७, ६, १८, ४)"—इति॥

शङ्खस्य यामायनस्यार्षम्। त्रिष्टुप्। पैत्री। पितृयज्ञे स्विष्टकृद्याज्यैषा। 'ये' 'तातृषुः' स्तीर्णवन्तः, 'देवत्रा' देवान् प्रति 'जेहमानाः' गच्छन्तः, 'होत्राविदः' स्तुतिविदः, 'स्तोमतष्टासः' स्तोमकर्त्तारः 'अर्कैः' मन्त्रैः स्तोमकर्त्तारः। य एवंलक्षणाः पितरः, तैः साकम् "आयाहि।" हे "अग्ने!" सुविदत्रेभिः" "कल्याणविद्यैः" "अर्वाङ्" अस्मानाभिमुख्येन, तैश्च साकम्। एवङ्गुणयुक्तैः 'पितृभिः' आगत्य 'सत्यैः' एतैः यथावत्संस्कृतैः 'कव्यैः' पितृदेवत्यैः 'घर्मसद्भिः' यज्ञसादिभिः हविर्भि-स्तृप्तिमुपयाहि। अथवा—सत्यवादिभिः पितृभिः कव्यवाहैः साकमायाहीति। एवं पितृविशेषणत्वेनैव योज्यमेतदपि पदद्वयम्॥ एवमत्र शब्दसारूप्यात् "सुविदत्र"—शब्दः "कल्याणविद्य"—वाचीत्युपपद्यते॥ ६। १४। ३॥

## आनुषक्॥ ५६॥

आनुषगिति नामानुपूर्वस्यानुषक्तं भवति।

"स्तृणन्ति बर्हिरानुषक्" इत्यपि निगमो भवति॥ ४॥

"आनुषक् (५६)"—इत्यनवगतम्। "अनुषक्तम्"—इत्यवगमः। "नामानुपूर्वस्य"—इत्यर्थवचनम्॥

"आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।

येषामिन्द्रो युवा सखा॥ (ऋ० सं० ६, ३, ४२, १)"—इति॥

त्रिशोकस्यार्षम्। बृहतीसहस्रे तृचाशीतिषु विनियुक्ता। 'ये' एव नित्यमग्निम् 'आ' आभिमुख्येनावस्थिताः 'इन्धते' यज्वानः, य एव यज्ञेषु "बर्हिः" "आनुषक्" "अनुषक्तं" "स्तृणन्ति" तेषामेव 'इन्द्रः' 'युवा' नित्यः 'सखा' समानख्यानो यज्ञे कर्मणि भवति, नेतरेषामयज्वनाम्। बर्हिःसम्बन्धात् "आनुषक्"—इति "नाम" एतद् "आनुपूर्वस्य नाम"—इत्युपपद्यते॥ ६। १४॥ ४॥

## तुर्वणिः॥ ५७॥

तुर्वणिस्तूर्णवनिः।

"स तुर्वणिर्महाँ अरेणुपौंस्ये" इत्यपि निगमो भवति ॥५॥

"तुर्वणिः (५७)"—इत्येतदनवगतम्। "तूर्णवनिः"—इत्यर्थवचनम्। तूर्णं हि यः सम्भजते, स तूर्णवनिता सन् तूर्णवनिरित्युक्तः ॥

"स तुर्वणिर्महाँ अरेणुपौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥ (ऋ० सं० १, ४, २१, ३)"—इति ॥ (२।५६।३)

इन्द्रस्य सव्यत्वमापन्नस्येयमार्षम्। जगती। ऐन्द्री। वैषुवतेऽहनि निष्केवल्ये शस्त्रे शस्यते। "सः" इन्द्रः "तूर्वणिः" तूर्णवनिता, इन्द्रो हि स्तोतारं तूर्णं सम्भजते। "महान्" प्रभावतः। "अरेणुपौंस्ये" अन्तरिक्षे हि यत् बलं भवति, तत्र न रेणवः सन्ति, तस्मादरेणुपौंस्यमित्युच्यते। "पौंस्यम्"—इति बलनामसु पठितम्, तस्मिन् अरेणुपौंस्ये बले अन्तरिक्षे, संग्रामे वा। 'गिरेः भृष्टिः' गिरिश्रृङ्गमिव उच्छ्रितः भ्राजते। 'तुजा' वज्रेण प्रगृहीतेन 'शवः' शविष्ठो बलिष्ठ इन्द्रः। 'येन' वज्रेण नित्यं 'शुष्णं' शोषयितारम्, 'असुरं' मेघम्, 'मायिनं' प्रज्ञावन्तम् 'आयसः' देवान् प्रति अयनशीलस्य सोमस्य 'मदे' प्राप्ते 'दुध्रः' दुर्द्धरः शत्रूणाम् 'आभूषुः' उपर्युपरि आत्मनो भवतुमिच्छन् 'रामयन्नि दामनि' दाम्नीव न्यरमयत्, सुप्रबध्नादित्यर्थः ॥ एवमत्र शब्द-सारूप्यादर्थोपपत्तेश्च "तुर्वणिः=तूर्णवनिः"—इत्युपपद्यते ॥ ६। १४ ॥ ५ ॥

## गिर्वणाः ॥ ५८ ॥

गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति।
"जुष्टं गिर्वणसे बृहत्" इत्यपि निगमो भवति ॥ ६॥१४॥

"गिर्वणसे (५८)"—इति, अनवगतम्। 'गीर्वणनीयः'—इत्यवगमः। "गीर्भिः" स्तुतिभिः "एनं वनयन्ति"—इति अर्थवचनम् ॥

"आमासु पक्वमैरय आ सूर्यं रोहयो दिवि।
घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ (ऋ० सं० ६, ६, १२, ७)"—इति ॥

नृमेधसः प्रियमेधसो वा इयमार्षम्। बृहती। ऐन्द्रे सूक्ते। 'आमासु' अपक्वासु गोषु क्षीरं 'पक्वम्' 'ऐरयः' त्वम् इन्द्र !। "तस्मादामा सती पक्वं दुहे इति ह विज्ञायते"। तदिदमामायां सत्यां गावि श्रृतं पय इति। किञ्च, 'आ सूर्यं रोहयो दिवि' आ रोहयः त्वं सूर्यं दिवि द्युलोके इत्यर्थः। एवमिन्द्रमुक्त्वा स्तोतॄनाह,—

अस्मै इन्द्राय एवङ्गुणविशिष्टाय 'घर्मं न' घर्ममिव सुतप्तं सुष्ठु सुगुणं 'सामन्' साम 'तपत' स्थानकरणानुप्रदानवदुच्चारयतेत्यर्थः । 'सुवृक्तिभिः' शोभनाभिः स्तुतिभिः "जुष्टं" प्रियं "गिर्वणसे" इन्द्राय स्तुतिसम्भक्ते । कतमत् पुनस्तत्साम ? इति,– "बृहत्" तद्धि प्रियमिन्द्रस्य । एवमत्र "गिर्वणाः=देवः" उच्यते, शब्दसारूप्यादित्युपपद्यते ॥ ६ । १४ । ६ ॥

## असूर्त्ते सूर्त्ते ॥ ५९ ॥

रजस्यन्तरिक्षे वर्तमाना माध्यमिका मेघा असूर्त्ता असुसमीरिता इत्युक्तं भवति।

"असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥" असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमिका देवगणास्ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति त आयजन्तेत्यतिक्रान्तं प्रतिवचनम् ॥ १ ॥

"असूर्त्ते, सूर्त्ते (५९)"–इत्येते अनवगते । "असुसमीरिताः" "सुसमीरिते"– इत्यवगमः ॥ *

"त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूमना ।
असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ (ऋ० सं० ८, ३, १७, ४)"–इति ॥

विश्वकर्मणो भौवनस्येयमार्षम् । वैश्वकर्मणीभ्यां जुहोतीति ह्युक्तमग्निप्रणयने, तत्र विनियोगः ॥ "असूर्त्ताः" असुः प्राणः, प्राणश्च वायुः, "योऽयं वायुः पवत एष प्राणः"–इति ह्युक्तम्, तेन समन्तात् ईरिताः "असुसमीरिताः" वातसमीरिताः इत्यर्थः । के पुनस्ते ? इति–"माध्यमका देवगणाः" मेघाः, इतरे च मरुदादयः । ते हि वातेन समीर्यन्ते, वात एव हि तान् वहति । क्व पुनरेतेऽवस्थिताः समीरिताः ? इति,–"सूर्त्ते" "सुसमीरिते" विक्षिप्ते विस्तीर्णे इत्यर्थः । "रजसि" अन्तरिक्षलोके "निषत्ते" निषण्णे इत्यर्थः । समीरिताः किं कुर्वन्ति ? इति,–"ये भूतानि समकृण्वन्" समस्तानि कृतवन्तः "इमानि" । तेषां किम् ? इति,–'त आयजन्ते' इति । "अतिक्रान्तं प्रतिवचनम्" प्रतिनिर्देशः प्रतिवचनमुच्यते, स एव पूर्वकाले प्रयोगार्हो यच्छन्दः पश्चात् प्रयुक्तः पश्चात्प्रयोगार्हश्च तच्छन्दः पूर्वं प्रयुक्तो मन्त्रपाठक्रमेण,–

---

* इहैव चतुर्दशखण्डसमाप्तिर्दृश्यते । परंतु सा "असूर्त्ते सूर्त्ते इत्येते अनवगते" इत्यतः प्रागेवोचितावगन्तव्या ॥ १ 'होमीति' ॥ २ 'मत्ता ई' ॥

तदेतत् भाष्यकारेण प्रदर्शितमस्मिन् मन्त्रे "त आ यजन्त इति अतिक्रान्तं प्रतिवचनम्"–इति । त आ यजन्तेत्यस्य पादस्य समासेनैतद्भाष्यकारेण निर्वचनमुक्तम् । "ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति" ते मेघाः, रसेन उदकेन, पृथिवीं तर्पयन्तः, भूतानि सर्वाण्युत्पादयन्ति, स्थितिं च तेषां कुर्वन्ति । 'आयजन्त' 'द्रविणम्' उदकम्, आभिमुख्येन ददति सर्वमुदकम्, 'समस्मै' सर्वस्मिन् भूतजाते । एवं भूतान्युदकेन कुर्वन्ति अनुगृह्णन्ति च । अधुना दृष्टान्तमाह,–'ऋषयः पूर्वे' विश्वसृजः, 'जरितारः न' 'भूमना' भूम्ना कर्मणा वार्षसहस्रिकेण सत्रेण, तैर्हि सर्वो भूतग्रामः पूर्वं सृष्टोऽनुगृहीतश्च । एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "असूर्त्ते"–"सूर्त्ते"—इत्येतयोः "असुसमीरिताः" "सुसमीरिते"—इत्येते शब्दसमाधी उपपद्येते ॥ ६ । १५ । १ ॥

## अम्यक् ॥ ६० ॥

## "अम्युक्सा त इन्द्र ऋष्टिः ।"

## अमाक्तेति वाऽभ्यक्तेति वा ॥ २ ॥

"अम्यक्(६०)"–इत्यनवगतम् । "अमाक्ता इति वा" "अभ्यक्ता इति वा" शब्दसमाधी । "ऋष्टिः" अभिधेया, तां हि संग्रामे शत्रवो मन्यन्ते–मामेषा प्रत्यञ्चिता क्षिप्ता मामेषा प्रत्यञ्चितेति । अथवा–"अभ्यक्तेति वा" अभिगतैव नित्यकालं शत्रून् प्रति भवतीति अम्यगित्युच्यते ॥

"अम्युक्सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति ।
अग्निश्चिद्धिष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥" (ऋ० सं० २, ४, ८, ३)"–इति ॥ (द्रि॰ अमा ऽ तसे = ऋष्टिः)

अगस्त्यस्यार्षम् । त्रिष्टुप् । ऐन्द्री । छन्दोगेषु द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते "अम्यक् सा ते" यदैवंलक्षणा रेषणा शक्तिः आभिमुख्येन मेघमञ्चिता त्वया क्षिप्ता भवत्यात्मनस्तव या स्वभूता, अथ तदा मरुतोऽपि तदनुविवृत्तस्यैव हे "इन्द्र" ! 'अस्मे' अस्मदर्थं 'सनेमि' चिरन्तनम् 'अभ्वं' बहूदकमिह पातयितव्यमिति स्वान्यायुधानि मेघविदारणाय 'जुनन्ति' गमयन्ति । किञ्च, सर्वेषामेवायुधानां मध्ये भावत्कैव शक्तिः 'अग्निश्चित्' + अग्निरिव 'अतसे' काष्ठे 'शुशुक्वान्' देदीप्यमान एतस्मिन् मेघे आस्ते । किञ्च, 'आपो न द्वीपम्' यथा नाद्य आपो द्वीपं परिवार्यात्मानं धारयन्ति, एवमेतानि मेघ्यानि

---

१ 'भाष्यक्रमेण' ॥ २ 'एषां' ॥ ३ 'ताद्वैप्या'–इति किमपि मुद्रितमासीत ॥



+ चिदुपमार्थीयः)

'प्रयांसि' उदकानि महत्त्वाद् वृष्टेः तानि मज्जयितुमशक्नुवन्ति द्वीपमिव परिवार्य धारयन्ति ॥ एवमत्राञ्चतेर्गत्यर्थस्य ( भू० प० ) "अभ्यक्"-इत्येतद् वृष्टिसम्बन्धादित्युपपद्यते ॥ ६ । १५ । २ ॥

## याद्दश्मिन् ॥ ६१ ॥

"याद्दश्मिन्धायि तमपस्यया विदत्" ।

याद्दशेऽधायि तमपस्ययाविदत् ॥ ३ ॥

"याद्दश्मिन् ( ६१ )"-इत्यनवगतम् । "याद्दशे"-इत्यवगमः ॥

"ज्यायांसमस्य यतुनस्य केतुना ऋषिस्वरं चरति यासु नाम ते ।
याद्दश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥ ( ऋ० सं० ४, २, २४, ३ )"-इति ॥

अवत्सारस्येयमार्षम् । जगती । आग्नेयी । "तम्प्रत्नथा"-इत्येतस्मिन् सूक्ते । उपहव्ये तृतीयसवने वैश्वदेवे शस्यते । 'ज्यायांसं' महत्तरम् । 'अस्य' 'यतुनस्य' कर्मणि षष्ठ्यौ वा, यतनशीलस्य भगवतः सूर्यस्य, 'केतुना' कर्मणा प्रज्ञया वा, 'ऋषिस्वरम्' ऋषिभिः स्वर्यते स्तूयते इत्यृषिस्वरः, तमृषिस्वरम्, स्तुवन् 'चरति' प्रचरति । "यासु नाम ते" यासु क्रियासु नाम नमनं ते तव हे भगवन् अग्ने ! स एवं चरन्[1] तासु क्रियासु, "याद्दश्मिन्" "यादृशे" कामे "धायि" मनो धत्ते[2], "तम्" तादृशं कामम् तया "अपस्यया" क्रियया हविःस्तुत्यादिलक्षणया तव प्रसादात् "अविदत्" अलभतेत्यर्थः । किञ्च, 'य उ स्वयं वहते' त्वां प्रति आदरवान् प्रापयति स्तुतीः, 'सः' एव 'अरं करत्' पर्याप्तमात्मनोऽभिप्रेतमर्थं करोति ॥ एवमत्र शब्दसारूप्यात् "यादृश्मिन्"-इत्यस्य "यादृशे"-इत्येवं विपरिणाम उपपद्यते॥६।१५।३॥

## जारयायि ॥ ६२ ॥

"उस्रः पितेव जारयायि यज्ञैः ।"

उस्र इव गोपिताजायि यज्ञैः ॥ ४ ॥ १५ ॥

"जारयायि ( ६२ )"-इत्यनवगतम् । "अजायि"-इत्यवगमः ॥

"सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।
द्र्वन्नो वन्वन्क्रत्वानार्वोस्रः पितेव जारयायि यज्ञैः ॥ ( ऋ० सं० ४, ५, १४, ४ )"-इति ॥

---

१ 'चरन्' ॥ २ 'अर्थे' ॥ ३ 'धारयति' ॥



/ अर्थमेव स्वामीनाम्पाठः ।

भरद्वाजस्यार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । "सास्माकेभिः"—इति छान्दसमोत्वम् । 'सः अग्निः' 'अस्माकेभिः' 'शूषैः' सुखैः स्तोत्रैः 'स्तवे' स्तूयते । 'एतरी न' अतिथिरिव । 'दमे' यज्ञगृहे यज्ञे 'आ' आभिमुख्येनावस्थितैः स्तूयते 'जातवेदाः' जातविद्यो वा जातधनो वा 'द्रून्नः' द्रुमान्नः 'वन्वन्क्रत्वा' वननीयकर्मा वननीयप्रज्ञानो वा । 'अनार्वा' अनर्वा अनाश्रितः कश्चिदन्यम् । "उस्रः पितेव" साण्ड इव "गोपिता" गवां पिता "जारयायि" "अजायि" । यथा साण्ड पुत्रपौत्रादिभिरनेकधा प्रजायते एवं यज्ञेषु विह्रियमाणः अनेकधा जायतेऽग्निः ॥ एवमत्र 'जारयायि'—इत्यस्य "अजायि"—इत्यर्थप्रतीतिः ॥ ६ । १५ । ४ ॥

## अग्रिया ॥ ६३ ॥

**"प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥"**

**प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति वाऽग्रगरणेनेति वाऽग्रसम्पादिन इति वा ॥**

**अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत ॥ १ ॥**

"अग्रिया (६३)"—इत्यनवगतम् । "अग्रगमनेन" अग्रिया अग्रगते हि अग्रे देवसैन्यस्य गच्छति, अथवा—अग्रमात्मानं संपादयतीत्यग्रिया । अथवा—अग्रमेव अग्रिया, अनर्थक एवाग्रशब्दे 'या' कार उपबन्ध उपात्तः—"अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत"—इत्युक्तं भाष्यकारेण ॥ *

अयं वो यज्ञ ऋभवोऽकारियमा मनुष्वत्प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ (ऋ० सं० ३, ७, ३, ३)"—इति ॥

वामदेवस्यार्षम् । आर्भवे त्रिष्टुप् । व्यूढस्य दशरात्रस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्यते । हे 'ऋभवः!' युष्माकम् 'अयं' 'यज्ञः' 'यम्' अहमाकर्षम् । तमागत्य 'मनुष्वत्' मनुष्यवत्, 'प्रदिवः' प्रकर्षेण द्योतमानाः सन्तः, 'आदधिध्वे' धारयध्वे । एतत् 'वः' प्रब्रवीमि किञ्च, "प्र वोऽच्छा जुजुषाणासो अस्थुः"प्रस्थितानि यान्येतानि

---

१ आत्वमिति । स्त्वयत्वयलोपानामसिद्धत्वेपि सवर्णदीर्घ इत्यभिप्रायः । परंतु 'सोऽचि लोपे चेत्' इत्यनेन सोर्लोपे न काप्यनुपपत्तिरिति चिन्त्योऽयं समाधिरिति बोध्यम् ॥ * इहैव पञ्चदशखण्डसमाप्तिर्दृश्यते । परं तु "अग्रिया इत्यनवगतम्" इत्यतः प्रागेवोचिता समधिगन्तव्या ॥ २ 'तीये सव' ॥

हवींषि, तानि यूयं "जोषयमाणाः" देवैः सेव्यमाना वा आत्मना "अग्रिया" "अभूत" "अभवत"। 'उत वाजाः' अपि च हे वाजाः ! यूयमप्येवमेव भवत। एवम् "अग्रगामिनः अग्रसम्पादिनो वा अग्रमेव वा=अग्रिया" तथार्थोपपत्तेः शब्दसारूप्याच्च ॥ ६।१६।१॥

चनः ॥ ६४ ॥ पचता ॥ ६५ ॥

"अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्।"

अद्धीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व।

चन इत्यन्ननाम। पचतिर्नामीभूतः।

"तं मेदस्तः प्रति पचताग्रभीष्टाम्" इत्यपि निगमो भवति ॥ २ ॥

"चनः ( ६४ )"—इत्यन्ननाम "पचता ( ६५ )"—इत्यनवगतम्। एतद्ध्येकवचनं द्विवचनं बहुवचनं वा भवति प्रकरणविशेषात्। आख्यातस्वरूपं चैतन्नाम "पचतिः नामीभूतः"—इति भाष्यकारो ब्रवीति ॥

"अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ॥ ( ऋ० सं० ८, ६, २१, ३ )"—इति ॥

इयमग्नियुतस्य वाग्नियूपस्य वार्षम्। त्रिष्टुप्। ऐन्द्री। "अद्धि" भक्षय। हे "इन्द्र!" "प्रस्थिता" "प्रस्थितानि" "इमा" "इमानि" "हवींषि" "चनः" अन्नम् एतत् हविर्लक्षणम् "दधिष्व" प्रक्षिप जठरे। "पचता" पक्वानि इमानि हवींषि, अत एवं ब्रवीमि दधिष्वेति। "उत सोमम्" अपि च सोमं दधिष्व। 'प्रयस्वन्तः' अन्नवन्तो वयं हवींषि कामयमानं 'त्वा' त्वां 'प्रति हर्यामसि' प्रतिहर्यामः, कामयामहे। "सत्याः सन्तु यजमानस्य कामाः"—इत्याभिप्रायेण। "हवींषि"—इत्यनेन सम्बन्धात् "पचता" इत्येतदन्नविषयं बहुवचनमुपपद्यते। "पचतिर्नामीभूतः"—इति धातुनिर्देशः ॥

द्वितीयमुदाहरणं ब्रवीति, अर्थविशेषदर्शनादस्येति,—"तं मेदस्तः प्रति पचताग्रभीष्टाम्"—इति। तं पशुं मेदस्तः यतस्तस्य मेदो वपासहयोगि, ततः तेन प्रदेशेन प्रत्यग्रभीष्टाम् इन्द्राग्नी पचता पक्वमित्यर्थः ॥ एवमेतदेकवचनं भवति ॥ ६।१६।२ ॥

अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्याद्यत्र ह्येक-वचनार्थः प्रसिद्धं तद्भवति ॥

"पुरोळा अग्ने पचतः" इति यथा ॥ ३ ॥

"अपि वा" "मेदसश्च" वपासहयोगिनः "पशोः" पश्ववदानस्य चाभिधायक-मेतत्, "सात्त्वं" सत्त्वविषयं "द्विवचनं स्यात्" सन्ति ह्येवंरूपाणि द्विवचनान्यपि तद्यथा,—"दैव्या होतारा भिषजा"

किं कारणमुच्यते—"द्विवचनम्" एतत् "स्यात्"—इति ? अतः,—यस्मात् "यत्र हि एकवचनार्थः प्रसिद्धम्" एव, निःसन्देहमेव "तद् भवति,—पुरोळा अग्ने पचतः—इति यथा" ॥

"पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः ।
तं जुषस्व यविष्ठय ॥ (ऋ० सं० ३, १, ३१ २)"—इति ॥

विश्वामित्रस्यार्षम् । गायत्री । आग्नेयी । आश्विनस्य द्विकपालस्य अतिरात्रे यदि स्विष्टकृद् भवति, तस्येयं पुरोऽनुवाक्या भवति । "पुरोळाः" पुरोडाः .पुरोडाशः "पचतः" पक्व इत्यर्थः । 'तुभ्यं' त्वदर्थम् । भगवन् "अग्ने" 'वा'—'घा'—इति अनर्थकौ । न केवलं पक्वः, किं तर्हि ? 'परिष्कृतः' सुसंस्कृत इत्यर्थः । 'तं' 'जुषस्व' सेवस्व हे 'यविष्ठय' युवतम ! अथवा—मिश्रयितृतम ! ॥ एवमत्र "परिष्कृतः"—इत्ये-तस्मादेकवचनसम्बन्धात् "पचतः"—इत्येकवचनमेव सिध्यति ॥ ६ । १६ । ३ ॥

## शुरुधः ॥ ६६ ॥

शुरुध आपो भवन्ति शुचं संरुन्धन्ति ॥

"ऋतस्य हि शुरुधः सन्ति पूर्वीः" इत्यपि निगमो भवति ४ ॥

"शुरुधः (६६)"—इत्यनवगतम् । "आपो भवन्ति"—इत्यभिधेयवचनम् । "शुचं संरुन्धन्ति"—इति निर्वचनम् । "शुग्रुधः"—इति न्याय्यम् ।

"ऋतस्य हि शुरुधः सन्ति पूर्वीः ॥ (ऋ० सं० ३, ६, १०, ३)"—इति ॥

दैवते शेषः ॥ ६ । १६ । ४ ॥

## अमिनः ॥ ६७ ॥

अमिनोऽमितमात्रो महान् भवत्यभ्यमितो वा ॥

१ 'चतः' ॥ २ 'सिद्धि' ॥ ३ न्याय्यमिति । लोके इत्यादिः ॥ ४ दैवतशेषः' ॥

"अमिनः सहोभिः" इत्यपि निगमो भवति ॥ ५ ॥

"अमिनः ( ६७ )"—इत्यनवगतम् । "अमितमात्रः"—इत्यवगमः, न यस्य मात्राणां मानमस्ति, सोऽमिनं इत्युच्यते । "अभ्यमितो वा" अनभिहिंसितो यः केनचिदसौ अमिनः ॥

"महाँ इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ ( ऋ० सं० ४, ६, ७ १ )"—इति ॥

भरद्वाजस्य बार्हस्पत्यस्यार्षम् । त्रिष्टुप् । ऐन्द्री । दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते, माहेन्द्रश्च ग्रहोऽनयैव गृह्यते ॥ 'महान्' प्रभावतः, 'नृवत्' मनुष्यवत्, 'आचर्षणिप्राः' आपूरयिता चर्षणीनाम् मनुष्याणां कामैः, यथा हि मनुष्य ईश्वरः परितुष्टः कामैरवश्यं भृत्यमापूरयति, एवमिन्द्रोऽपि स्तोतारम् । 'उत द्विबर्हाः' अपि च द्वयोः स्थानयोः मध्यमोत्तमयोः परिवृढेः "अमिनः" च अमितमात्रः, अथवा—अनभिहिंसितः केनचित् । केन पुनरमिनः ? इति, उच्यते—"सहोभिः" बलैरित्यर्थः, न हीन्द्रस्य बलमात्राः केनचिन्मितपूर्वा इत्यर्थः, अनभिहिंसितपूर्वो वा केनचिदिन्द्रः । 'अस्मद्र्यक्' अस्मदनुग्रहाय अस्मद्दर्शनाय 'वावृधे'वर्द्धते । 'वीर्याय'वीरकर्मणे वर्षार्थम् 'उरुः' महान् परिमाणतः, 'पृथुश्च' विस्तीर्णो यः, सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामर्थानां 'सुकृतः' स्तुतिभिः एतैः 'कर्तृभिः' ऋत्विग्भिः 'भूत' भूयादित्यर्थः ॥ एवमत्र "अमिन"—शब्देन "अमितमात्रः" अनभिहिंसितमात्रो वा—इत्युच्यते, शब्दसारूप्यादर्थोपपत्तेश्च ॥ ६ । १६ । ५ ॥

## जज्झतीः ॥ ६८ ॥

जज्झतीरापो भवन्ति शब्दकारिण्यः ॥

"मरुतो जज्झतीरिव" इत्यपि निगमो भवति ॥ ६ ॥

"जज्झतीः ( ६८ )"—इति, अनवगतम् । शब्दानुकरणात् "आपः"—इति प्रतीयन्ते ।

"आ रुक्मैरायुधा नरं ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त्त त्मना दिवः ॥ ( ऋ० सं० ४ ३, ९, ६ )"—इति ॥

---

१ 'परिवृद्धः' ॥ २ 'यते' ॥

श्यावाश्वस्यार्षम् । मारुती । पङ्क्तिः । 'आ' आभिमुख्येन 'शत्रून्' शातयितव्यान् मेघान् प्रति 'आयुधा' एतान्यायुधानि 'रुक्मैः' विकृतानि, एताश्च 'ऋष्टीः' शक्तीः 'असृक्षत' असृजन्त हे 'नरः' "मरुतः" ! किञ्च, 'अन्वेनान्' प्रहारान् 'विद्युतः' 'भानुः' आदित्यः "इव" 'त्मना' आत्मना 'दिवः' द्युलोकात् 'अर्त्त' अपगच्छन्तु । मेघेभ्यो हन्यमानेभ्यः तदन्वेव चापोऽपि 'अर्त्त' आगच्छन्तु । कथम् ? इति,— "जज्झतीः इव" "शब्दकारिण्यः" इव स्रोतस्याः "आपः" 'ऋभ्वः' प्रभूता इत्यर्थः॥ एवमत्र शब्दानुकरणात् "आपः = जज्झतीः"—इत्युपपद्यते ॥ ६ । १६ । ६ ॥

## अप्रतिष्कुतः ॥ ६९ ॥

### अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा ॥

### "अस्मभ्यमप्रतिष्कुतः" इत्यपि निगमो भवति ॥ ७ ॥

"अप्रतिष्कुतः ( ६९ )"—इत्यनवगतम् । "अप्रतिष्कृतः, अप्रतिस्खलितः वा"— इति शब्दसमाधी ॥

"स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि ।
अस्मभ्यमप्रतिष्कुतः ॥ ( ऋ० सं० १, १, १४, १ )"—इति ॥

मधुच्छन्दस आर्षम् । गायत्री । ऐन्द्री । पृष्ठ्याभिप्लवयोः प्रातःसवनिके आवापे विनियुक्ता, ब्राह्मणाच्छंशिनः शस्त्रे शस्यते हे 'वृषन्' इन्द्र ! वर्षितः ! यः त्वम् अनुग्रहीता 'नः' अस्माकम्, 'सः' त्वं शृणु यत् कुरुष्व । 'अमुं चरुम्' अमुमन्तारिक्षचरणशीलं मेघम् । हे 'सत्रादावन्' सततदान ! 'अपावृधि' अपावृणु, उदकदानार्थम् "अस्मभ्यम्" हे "अप्रतिष्कुतः" न हीन्द्रः "प्रतिष्कृतः" परान् प्रति पराङ्मुखः कृतपूर्वः केनचित्, अथवा—"अप्रतिस्खलितः" संग्रामेषु॥एवमत्र"अप्रतिष्कुत"—शब्दः "अप्रतिष्कृत"—वाची।अथवा—"अप्रतिस्खलित"—वाची,तथार्थाविरोधः ॥६।१६।७॥

## शाशदानः ॥ ७० ॥

### शाशदानः शाशाद्यमानः ॥ भूयो भूयः प्रेर्यमाणः ।

### "प्र स्वां मतिमतिरच्छाशदानः"इत्यपिनिगमोभवति॥८।१६॥

"शाशदानः ( ७० )"—इत्यनवगतम् । "शाशाद्यमानः"—इत्यवगमः ॥

---

१ 'आगच्छन्तु' ॥ 

"अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ ( ऋ० सं० १, ३, ३, ३ )"—इति ॥

हिरण्यस्तूपस्यार्षम् । गोसवविवधयोर्निष्कैवल्ये शस्त्रे शस्यते। 'अभि अजिगात्' अभ्यगच्छत् 'अस्य' इन्द्रस्य स्वभूतः, 'तिग्मः' उत्साहवान् वज्रः 'शत्रून्' प्रति 'सिध्मः' साधयिता शत्रूणाम् । 'वितिग्मेन' तीक्ष्णेन 'वृषभेण' वर्षप्रवर्त्तकेन । 'पुरः' मेघपुरः असुरपुरो वा 'अभेत्' । किञ्च, 'समसृजत् वज्रेण वृत्रमिन्द्रः' । स च भिद्यमानः 'प्रातिरत् स्वां मतिं' "न दातव्यमुदकमेषाम्"—इत्येतां मतिं स्वां प्रातिरत् प्राजह्यादित्यर्थः । "शाशदानः" पुनःपुनः "शाशाद्यमानः" इन्द्रेण ॥ एवमत्र "शाशदानः=शाशाद्यमानः"—इत्युपपद्यते, शब्दसारूप्यादर्थाविरोधाच्चेति ॥ ६।१६।८॥*

## सृप्रः ॥ ७१ ॥

सृप्रः सर्पणात् । इदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा ।
"सृप्रकरस्नमूतये" इत्यपि निगमो भवति ।
करस्नौ बाहू कर्मणां प्रस्नातारौ ॥ १ ॥

"सृप्रः ( ७१ )"—इत्यनवगतम् । 'सर्पः'—इत्यवगमः । "सर्पणात्"—इति निर्वचनम्। "इदम् अपि इतरत् सृप्रम्" "एतस्मादेव" स्यात् यदेतत्। "सर्पिर्वा तैलं वा" तदपि हि सर्पति । "सृप्रकरस्नमूतये ( ऋ० सं० ६, ३, २, ५ )"—इति ॥ निगमः । "बृबदुक्थं हवामहे"—इति व्याख्यातः शेषः। "करस्नौ बाहू, कर्मणां प्रस्नातारौ" निर्वर्त्तयितारावित्यर्थः ॥ ६ । १७ । १ ॥

## सुशिप्रः ॥ ७२ ॥

सुशिप्रमेतेन व्याख्यातम् ।
"वाजे सुशिप्र गोमति" इत्यपि निगमो भवति॥
शिप्रे हनू नासिके वा ।
हनुर्हन्तेः ।

---

* अत्र षोडशखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ षष्ठा ( एकादशा) ऽध्यायस्य तृतीयः पादः ॥ ६, ३॥" इति तूपलभ्यते ॥

## नासिका नसतेः ।
## "विष्यस्व शिप्रे विसृजस्व धेने" इत्यपि निगमो भवति ।
## धेना दधातेः ॥ २ ॥

"सुशिप्रः ( ७२ )"—इत्यनवगतम् । तत् पुनरेतत् "एतेन" एव सृप्रशब्देन "व्याख्यातम्" सर्पतेरेवैतदपि, "शिप्रे=हनू, नासिके वा" ते यस्य प्रशस्ते, स सुशिप्रः । "वाजे सुशिप्र गोमति ( ऋ० सं० ६, २, २, ३ )"—इति ॥ निगमः "विद्मा सखित्वम्"—इति व्याख्यातः । नास्मिन् मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्गमस्तीत्यतः "शिप्रे हनूनासिके वा"—इत्युक्त्वा विशिष्टतेरलिङ्गमन्यदुदाहरणं ब्रवीति,—"विष्यस्व शिप्रे"—इति ॥

"मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे विसृजस्व धेने ।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व ॥ ( ऋ० सं० १, ७, १३, ४ )"—इति ॥

कुत्सस्येयमार्षम् । ऐन्द्री । जगती । दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते 'मादयस्व' हर्षयस्व 'स्वम्' आत्मानम् हे 'इन्द्र !' 'हरिभिः' अश्वैः, ये 'ते' तव स्वभूताः, तैः सह । कथं च पुनर्मादयस्व ? इति,—"विष्यस्व" विमुञ्चस्व "शिप्रे" 'सृप्रे' दीर्घे हनू हविर्भक्षणाय, नासिके वा, ते अपि हि गन्धाघ्राणाय, सर्पत इव । भक्ष्यं द्रव्यं हि आस्वादयतो वा जिघ्रतो वा हर्ष उत्पद्यते । अत इदमुक्तं—विमुञ्चस्व हनू हविर्भक्षणाय नासिके वा गन्धाघ्राणाय । एवं मादयस्वात्मानमिति । "विसृजस्व धेने" आधस्त्ये दंष्ट्रे वा, 'जिह्वोपजिह्विके वा'—इत्येके, तयोर्हि अन्नं धीयते । किञ्च, 'आ त्वा वहन्तु हरयः' हृष्टाः सन्त आवहन्तु त्वां हरयः अस्मान् प्रति । हे 'सुशिप्र !' 'उशन्' कामयमानः 'हव्यानि' हवींषि एतानि अस्मत्प्रत्तानि । स्तुतिभिरस्माभिरासेवितः 'प्रतिजुषस्व नः' प्रतिसंसेवस्व नः कामैरित्यभिप्रायः ॥ एवमत्र मादनसम्बन्धात्, हविःसम्प्रदानसम्बन्धाच्च "शिप्रे=हनू नासिके वा"—इत्युपपद्यते ॥

यदुक्तम्,—"शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः" ( ४ । १० । १ )—इति, एतद् व्याख्यातम्,—"शिप्रे = हनू नासिके वा"—इति ॥

"हनुः, हन्तेः ( अदा० प० )" धातोः ॥

"नासिका, नसतेः" "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति हि वक्ष्यति ॥ ६ । १७ । २ ॥

---

१ 'ष्टतलिङ्गमन्य' ॥

## रंसु ॥ ७३ ॥

**रंसु रमणीयेषु रमणात् ।**

**"स चित्रेण चिकिते रंसु भासा" इत्यपि निगमो भवति॥ ३॥**

"रंसु ( ७३ )"–इत्यनवगतम् । 'रमणीयेषु'–इत्यवगमः । "रमणात्"–इति निर्वचनम् ॥

"आयन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।

स चित्रेण चिकिते रंसु भासा जुजुर्वांन्यो मुहुरा युवाभूत् ॥ ( ऋ० सं० २, ५, २४, ५ )"–इति ॥

सोमाहुतेर्भार्गवस्यार्षम्[1] । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । 'आ पनन्त' आभिमुख्येन पनन्त, आस्तुवत । 'मे' मम स्वभूते कर्मणि । 'अभ्वं' महान्तम् अग्निम्, 'वनदः' वननीयस्य हविषो दातारः ऋत्विजः यं 'वर्णं' वरं वृण्वन्ति अस्मदर्थम्, तेभ्यः 'उशिग्भ्यः' मेधाविभ्यः । तमसौ वरणं प्रार्थनां 'न अमिमीत' न हिनस्ति । किं तर्हि ? यथाप्रार्थितमेव समर्द्धयतीत्यर्थः । किंच, 'सः' अग्निः "चित्रेण" चायनीयेन "भासा" युक्तः "रंसु" रमणीयेषु स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा 'चिकिते' । किंलक्षणः 'यः' अग्निः ? इति,– 'जुजुर्वान्' पुनःपुनः जरावान् अपि भूत्वा, इन्धनक्षयात् 'मुहुरा युवा भूत्' पुनरिन्धनं प्राप्य तस्योपरि दीप्यमानो मुहुर्मुहुः युवैव भवति ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "रंसु"–इत्यस्य "रमणीयेषु"–इत्येष विपरिणाम उपपद्यते ॥ ६ । १७ । ३ ॥

## द्विबर्हाः ॥ ७४ ॥

**द्विबर्हा द्वयोः स्थानयोः परिवृढो मध्यमे च स्थान उत्तमे च ।**

**"उत द्विबर्हा अमिनः सहोभिः" इत्यपि निगमो भवति॥ ४॥**

"द्विबर्हाः ( ७४ )"–इत्यनवगतम् । 'द्विपरिवृढः'[2]–इति न्याय्यम् । मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्यात्मना । "उत द्विबर्हाः ( ऋ० सं० ४, ६, ७, १ )"–इति ॥ निगमः । "महाँ इन्द्रः"–( ६ । १६ । ४ ) इति व्याख्यातः शेषः ॥ ६ । १७ । ४ ॥

---

१ 'गृत्समदस्यार्षम्' ॥ २ 'द्विवृद्धः' ॥

*प्रत्कः प्राकार इति दुर्गः

## अक्रः ॥ ७५ ॥

### अक्र आक्रमणात् ॥

### "अक्रो न बभ्रिः समिथे महीनाम्" इत्यपि निगमो भवति ॥ ५ ॥

"अक्रः ( ७५ )"—इत्यनवगतम् । 'आक्रमणः'—इति न्याय्यम् । "आक्रमणात्"-इति निर्वचनम् । प्राकारोऽभिधेयः ॥

"अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।

उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥ ( ऋ० सं० २, ८, १५, २ )"—इति ॥

विश्वामित्रस्यार्षम् । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । "अक्रो न" अक्र इव, प्राकार इव । "बभ्रिः" भर्त्ता, धारयिता । क ? "समिथे" संग्रामे । कस्य ? "महीनां" महतीनां शत्रुसेनानाम् । एवंलक्षणो योऽग्निः किञ्च, 'दिदृक्षेयः' दृश्यते यः । 'सूनवे' सोमाभिषवकर्त्रे यजमानाय नित्यकालमेव। 'भाऋजीकः' प्रसिद्धभाः प्रसिद्धदीप्तिः नित्यो ज्वलित इत्यर्थः । किञ्च, सर्वस्य लोकस्य 'जनिता' जनयिता । 'उस्रिया उज्जजान' उस्रिया आहुतीः आत्मनि प्रक्षिप्ताः सतीः देवतातृप्तिसमर्थेन[1] रूपेण ऊर्ध्वाः 'यः' जनयति । अथवा—गाव एव वोस्रियाः स्युः, ता अपि ह्यसौ पशुकामकर्मणि अङ्गभावं गच्छन् जनयति । यश्च 'अपां गर्भः' यश्च 'नृतमः' मनुष्यतमः, यश्च 'यह्वः' महान्, 'अग्निः' स इदं नामास्माकं करोत्विति ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अक्रः=प्राकारः"—इत्युपपद्यते, असौ हि आक्रम्यते जनैः ॥ ६ । १७ । ५ ॥

## उराणः ॥ ७६ ॥

### उराण ऊरु कुर्वाणः ॥

### "दूत ईयसे प्रदिव उराणः" इत्यपि निगमो भवति ॥ ६ ॥

"उराणः ( ७६ )"—इत्यनवगतम् । "उरु कुर्वाणः"—इत्यवगमः ॥

"वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी सञ्चिकित्वान् ।

दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥ ( ऋ० सं० ३, ५, ७, ३ )"—इति ॥ —— यान्त्यसे

---

१ 'प्तिसामर्थ्येन रू' ॥

वामदेवस्यार्षम् । त्रिष्टुप् । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन्नग्ने ! 'वेः' त्वं जानीषे । किम् ? 'अध्वरस्य' यज्ञस्य 'दूत्यानि' दूतकर्माणि, यानि दूतेन कर्त्तव्यानि । किञ्च, 'उभे अन्ता' उभावप्यन्तौ 'रोदसी' रोदस्योः 'विद्वान्' असि विजानीषे । किञ्च, समस्तमप्येतज्जगत् 'चिकित्वान्' असि, न ते विज्ञानप्रतीघातोऽस्ति कृत्स्नेऽपि जगति, विजानीषे सर्वाणि देवतास्थानानि । "प्रदिवः" एव असि 'दूतः' चिरन्तनः सर्वेषां यजमानानाम् । यतोऽस्माभिस्त्वमेतस्मिन् कर्मणि "दूतः" दूतत्वेन "ईयसे" याच्यसे, स त्वम् "उराणः" अल्पमपि हुतं हविः देवतातृप्तिसमर्थं बहु कुर्वाणः । 'विदुष्टरः' विद्वत्तरः, मनुष्यहोतुः सकाशात् । 'दिव आरोधनानि' आरोढव्यानि देवतास्थानानि प्रति वह एतानि हवींषीत्यभिप्रायः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "उराणः"—इत्यस्य "उरु कुर्वाणः"—इत्येष विपरिणाम उपपद्यते ॥ ६ । १७ । ६ ॥

## स्तियानाम् ॥ ७७ ॥

### स्तिया आपो भवन्ति स्त्यायनात् ॥

### "वृषा सिन्धूनां वृषभः स्तियानाम्" इत्यपि निगमो भवति ॥ ७ ॥

संहतानामपाम्

"स्तियाः (७७)"—इत्यनवगतम् । "स्त्यायनाः"—इति न्याय्यम् । "आपो भवन्ति"—इत्याभिधेयवचनम् । "स्त्यायनात्" संहननात्—इत्यर्थः, आप एव हि पार्थिवानामवयवानां संहनने हेतुभूता भवन्ति,—अथवा हिमप्रभावेन[1] च ता आत्मनैव संहता भवन्ति ॥

"वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम् ।
वृष्णो त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥ (ऋ० सं० ४, ७, २०, १)"—इति ॥

शंयोर्बार्हस्पत्यस्येयमार्षम् । ऐन्द्री । हे इन्द्र ! "वृषा" 'असि' 'दिवः' वर्षितासि 'पृथिव्याः' च वर्षिता । "सिन्धूनां" स्यान्दनानाम् अपाञ्च वर्षिता "स्तियानां" संहन्त्रीणाम् अपाम्, अथवा—संहतानामात्मनैव हिमभावेन[2] । यावत् किञ्चित् सेचनकर्म, तत् सर्वं त्वदधीनमित्यभिप्रायः । तस्मै एवंगुणविशिष्टाय 'वृष्णो' वर्षित्रे 'ते' तुभ्यम् । एषः 'इन्दुः' सोमः, हे "वृषभ" वर्षितः ! 'पीपाय' पुनःपुनः आप्याय्यते, अथवा—पानाय संस्कृतः, 'स्वादू रसः' स्वादुरससंयुक्तः, 'मधुपेयः' मधुरपेयः, 'वराय' तुभ्यं श्रेष्ठा-

१ 'हिमप्रभावेण च ता' ॥ २ 'हिमप्रभावेण' ॥

त्यर्थः ॥ एवमत्र "स्तिया"-शब्देन "संहन्त्यः, संहता वा आपः" उच्यन्ते-शब्दसारूप्यात् "स्त्यै शब्दसङ्घातयोः ( भू० प० )"-इत्यस्य ॥ ६ । १७ । ७ ॥

## स्तिपाः ॥ ७८ ॥

स्तिपाः कूपो भवतीति दुर्गः

## स्तिपा स्तियापालन उपस्थितान् पालयतीति वा ॥
## "स नं स्तिपा उत भवा तनूपाः" इत्यपि निगमो भवति ॥ ८ ॥

"स्तिपाः ( ७८ )"-इत्यनवगतम् । "स्तियापालनः"-इत्यवगमः । 'कूपः'-अभिधेयः, स हि "उपस्थितान्" पातॄन् "पालयति" ॥

"यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व ।
स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥ ( ऋ० सं० ८, २, १९, ४ )"-इति ॥

वाध्र्यश्वस्य सुमित्रस्येयमार्षम् । त्रिष्टुप् । आग्नेयी । 'हे अग्ने !' 'यं त्वां' 'वध्र्यश्वः' 'ईळितः' ईडितः अपि सर्वैर्महर्षिभिः, 'पूर्वं' 'समीधे' समेधितवान्, उपचीर्णवान्, तं त्वामहमपि समिन्धे, को हि नाम त्वां न समिन्ध्यात् । 'सः' त्वं समिध्यमानः अस्माभिः 'इदं:' हविः 'जुषस्व' संसेवस्व । किञ्च, य एवमस्माभिः ईड्यसे त्वम्, "सः" "नः" "स्तिपाः" कूप इव "तनूपाः" भव, कूपो हि तृष्णायार्त्तान् पातॄन् पात्युदकसम्प्रदानेन । किंच, 'दात्रम्' दानम् 'रक्षस्व' कतमत् ? 'यदिदं ते' 'अस्मे' अस्मासु वर्त्तते इत्यर्थः ॥ एवमत्राविरोधाच्छब्दसारूप्याच्च "स्तिपाः=कूपः"-इत्युपपद्यते ॥ ६ । १७ । ८ ॥

## जबारु ॥ ७९ ॥

## जबारु जवमानरोहि, जरमाणरोहि, गरमाणरोहीति वा ॥
## "अग्रे रूप आरुपितं जबारु" इत्यपि निगमो भवति ॥ ९ ॥

"जबारु ( ७९ )"-इत्यनवगतम् । "जवमानरोहि"-इत्येवमाद्याः शब्दसमाधयः ॥

"त मिन्वेवं समाना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥ ( ऋ० सं० ३, ५, २, २ )"-इति ॥

वामदेवस्यार्षम् । "वैश्वानराय मीह्ळुषे सजोषाः"-इत्येतस्मिन् वैश्वानरीये सूक्ते । 'तम्' एव हे यजमान ! त्वम् 'अभ्यश्याः' प्राप्नुयाः वैश्वानरं सूर्यम् । 'समाना' समानयैव, तदनुरूपयैव स्तुत्या 'समानम्' । केन पुनरभ्यश्याः ? 'क्रत्वा पुनती' स्वात्मपवनसमर्थेन कर्मणा प्रज्ञानेन वा । किंलक्षणः पुनर्यो वैश्वानरः तमभ्यश्याः ?

इति, 'ससस्ये पृश्नेः' स्वपनस्य द्युलोकस्य पृश्नेः प्राष्टवर्णस्य 'अधि' उपरि, स्वपितीव हि द्युलोको निश्चलत्वात् । 'चर्मन्' चरणार्थम् । कथं नाम सौर्येण प्रकाशेन जनाश्चरेयुरित्यनेनाभिप्रायेण । 'चारु' दीप्तिमत् । "अग्रे" पूर्वसर्गादौ "रुपः आरुपितम्" 'रिपः'—इति विपरिणामः, भूम्या इत्यर्थः, "आरुपितम्" आरोपितं देवैः, "जबारु" मण्डलं यस्य तं त्वमभ्यश्याः । "इह वा आदित्य आसीत्, तमाभ्यां परिगृह्योपरिष्टात् तासां प्रजानां न्यदधुरिति ह विज्ञायते" ॥ एमत्र "जवारु—आदित्यमण्डलम्" उच्यते, तद्धि जवमानं गच्छन् नभसो मध्यमारोहति, जायते वा उदेतीत्यर्थः, जवमानवमेवमेव हि तत्रतत्रोदेति । "जरमाणरोहि" वा स्यात्, तद्धि जरयमाणं सर्वभूतानि रोहति । "गरमाणरोहि वा" तद्धि गरमाणं रसानारोहति ॥ ६ । १७ । ९॥

## जरूथम् ॥ ८० ॥

जरूथं गरूथं गृणातेः ॥

"जरूथं हुन्यक्षिराये पुरंन्धिम्" इत्यपि निगमो भवति ॥ १० ॥

"जरूथम् ( ८० )"—इत्यनवगतम् । "गरूथम्"—इत्यवगमः । "गृणातेः ( क्र्या० प० )"—इति धातुनिर्देशः ॥

"त्वामग्ने समिधानो वसिष्ठो जरूथं हुन्यक्षि राये पुरंन्धिम् ।
पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः ॥ ( ऋ० सं० ५, २, १२, ६ )"—इति ॥

वसिष्ठस्यार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन् 'अग्ने' ! 'वसिष्ठः' 'त्वां' 'समिधानः' सन्दीपयन् "जरूथं" स्तोत्रं "हुन्" गमयन् त्वां प्रति, "हन्ति, सेधति"—इति गतिकर्मसु पठितम् । "यक्षि" यजति । "राये" धनप्राप्त्यर्थम् । "पुरन्धिम्" बहुकर्मतमं धनसम्बन्धाद्वा बहुदातृतममिति स्यात् । यस्त्वं वसिष्ठेन एवमिज्यसे, तं त्वां वयमपि यजाम एव । स त्वं हे 'पुरुणीथा' बहुस्तुत ! 'जातवेदः' अस्माभिरिज्यमानः 'जरस्व' जुषस्वैतद्धविः अस्मत्प्रत्तम् । किञ्च, 'यूयम्' अस्मान् 'पात' रक्षत । एकस्यैव पूजनार्थे बहुवचनम् । 'स्वस्तिभिः' स्वस्त्ययनैः, आशीःप्रयोगैः पात 'नः' । 'सदा' नित्यमेवेत्यर्थः । एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च "जरूथम्=स्तोत्रम्" इत्युपपद्यते ॥ ६ । १७ । १० ॥

---

१ 'नधिरोह' ॥

## कुलिशः ॥ ८१ ॥

कुलिश इति वज्रनाम कूलशातनो भवति ॥

"स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः" ॥

स्कन्धो वृक्षस्य समास्कन्नो भवति ॥

अयमपीतरस्कन्ध एतस्मादेवास्कन्नं कायेऽहिः शयत उपपर्चनः पृथिव्याः ॥ ११ ॥ १७ ॥

"कुलिशः ( ८१ )"—इत्यनवगतम् । "वज्रनाम"—इत्यभिधेयवचनम् । "कूलशातनः"—इति शब्दसमाधिः ॥

"अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥ ( ऋ० सं० १, २, ३६, ५ )"—इति ॥

ऐन्द्री । त्रिष्टुप् । हिरण्यस्तूपस्यार्षम् । अग्निष्टोमे निष्केवल्ये शस्यते । 'अहन्' हतवान्, हन्ति वा इन्द्रः । 'वृत्रं' मेघम् । 'वृत्रतरम्'—इति तस्यैव वा विशेषणम्, अन्यो वा वृत्रतरो यः तमपि हन्ति । कथं पुनर्हन्ति ? इति,—'व्यंसम्' विच्छिन्नसन्धिबन्धनं कृत्वा । केन पुनर्हन्ति ? इति,—'वज्रेण महता' प्रहारेण । किञ्च, "स्कन्धांसि इव" वृक्षशाखा इव, "कुलिशेन" "कूलशातनेन वज्रेण" "विवृक्णा" विवृक्णानि । स एवम् 'अहिः' अगमनो मेघः, छिद्यमानोऽस्याः "पृथिव्याः" "उपपृक्" "उपपर्चनः" सम्पर्कस्य कर्त्ता भूत्वोदकभावेन, अस्यामेव पृथिव्याम् 'अहिः' "शयते" अगमयत् । अवस्थानमात्रमेव स्वप्नोऽभिमतः ॥ एवमत्र वधसम्बन्धात् "कुलिशः=वज्रः"—इत्युपपद्यते ॥ ६ । १७ । ११ ॥

## तुञ्जः ॥ ८२ ॥

तुञ्जस्तुञ्जतेर्दानकर्मणः—॥

"तुञ्जः ( ८२ )"—इत्यनवगतम् । "तुञ्जतेः"—दानार्थस्येति निर्वचनम् । 'तुञ्जनम्'—इति स्यात्—॥ *

---

* इहैव सप्तदशखण्डसमाप्तिर्दृश्यते । परंतु सा "तुञ्जे इत्यनवगतम्"इत्यतः प्रोगेबोचिता समवगन्तव्या ॥

"तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ॥
न विन्धे अस्य सुष्टुतिम् ॥"
दानेदाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्वि-
न्दामि समाप्तिं स्तुतेः ॥ १ ॥

"तुञ्जे तुञ्जे०—सुष्टुतिम् ( ऋ० सं० १, १, १४, २ )"—इति ॥

मधुच्छन्दस आर्षम्। ऐन्द्री । गायत्री । प्रातःसवने ब्राह्मणाच्छंसिनः आवापे विनियुक्ता। "तुञ्जेतुञ्जे" "दानेदाने" "ये" "उत्तरे" उत्तरोत्तरे दानपरितुष्टेन मया "स्तोमाः" "इन्द्रस्य वज्रिणः" चिन्त्यन्ते,—एतैः स्तोमैरसौ योग्यः स्तोतुमिति । किं तेषाम्? "न" "विन्धे" न "अस्य" सर्वैरपि "तैर्विन्दामि" "सुष्टुतिं" "समाप्तिं स्तुतेः" इत्यर्थः । यावत्य एव स्तुतय उपादीयन्ते, ताः सर्वा एवेन्द्रं प्राप्य न्यूना भवन्तीत्यभिप्रायः ॥ एवमत्र स्तोमसम्बन्धात् "तुञ्ज"—शब्दो दानपर्यायवचनः, तुञ्जतेश्च दानार्थस्य दर्शनात् ॥ ६ । १८ । १ ॥

## बर्हणा ॥ ८३ ॥

बर्हणा परिबर्हणा ॥
"बृहच्छ्रवा असुरो बर्हणा कृतः ॥"
इत्यपि निगमो भवति ॥ २ ॥ १८ ॥

"बर्हणा ( ८३ )"—इत्यनवगतम् । "परिबर्हणा"—इत्युपसर्गाध्याहारेणार्थप्रतीतिः । परिबर्हणा—परिवृद्धिः, परिहिंसा वा ॥

"अर्चा दिवे बृहते शुष्यं[1] वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥ ( ऋ० सं० १, ४, १७, ३ )"—इति ॥

सव्यत्वमापन्नस्यास्येन्द्रस्यार्षम् । जगती । ऐन्द्री । चतुर्थे पादे "रथः, हि सः"—इति पदानि । हे स्तोतः ! 'अर्च' प्रोच्चारय इन्द्राय 'दिवे' द्योतनवते 'बृहते' च महते, 'शुष्यं' धनसंयुक्तं बलंकृतिसंयुक्तं वा वचः । किंलक्षणायेन्द्राय अर्च ? इति,—'स्वक्षत्रं यस्य' स्वमेव क्षत्रं धनं बलं वा यस्य, न कदाचिदपि यः परकीयमाकाङ्क्षतीत्यभिप्रायः । किञ्च, यस्य 'धृषतः' धर्षयतः, शत्रून् 'धृषत्' एव धृष्टं 'मनः' भवति, तदर्थमर्चेति ।

१ 'बलिकृतिसं' ॥

किञ्च, येनेन्द्रेण "बृहच्छ्रवाः" बृहद्घोषः, "असुराः" मेघो वा । "बर्हणा" परिवृद्ध्या परिवृद्धेन वधेन परिहिंसया वा 'पुरः' अर्वाक् 'हरिभ्यां' प्राप्तेनैव तावदश्वौ हरी रथे युक्तौ तमसुरं प्राप्नुतः । अथेन्द्रेण शीघ्रास्त्रत्वाद् दूरपातित्वाच्च 'वृषभः' वर्षिता "कृतः" । अथ च तावत् 'रथो हि सः' रंहणो हि शीघ्रः स मेघः । तथाहि,—येनेन्द्रेण पुरैव हरिभ्यां प्राप्तैः प्रहारैर्जर्जरीकृत्य वर्षिता कृतो मेघः, तमभ्यर्च ॥ एवमत्र शब्दसारूप्यादसुर-सम्बंधाच्च "बर्हणा=परिबर्हणा"—इत्युपपद्यते ॥ ६ । १८ । २ ॥ *

## ततनुष्टिः ॥ ८४ ॥

"यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह । अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥"

घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन्रसाः ॥

गोरूध उद्धततरं भवति, उपोन्नद्धमिति वा ॥

स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते ॥

स योऽस्मा अह्न्यपि वा रात्रौ सोमं सुनोति भवत्यह द्योतनवानपोहत्यपोहति शक्रस्तितनिषुं धर्मसन्तनादपेतमलङ्करिष्णुमयज्वानं तनूशुभ्रं तनूशोभयितारं मघवा यः कवासखो यस्य कपूयाः सखायः ॥ १ ॥

"ततनुष्टिः (८४)"—इत्यनवगतम् । "तितनिषुः"—अयं स्यात् । "यो अस्मै घ्रंस०—कवासखः ( ऋ० सं० ४, २, ३, ३ )"—इति ॥ प्राजापत्यस्य संवरणस्यार्षम् । ऐन्द्री । जगती । "यः" "अस्मै" इन्द्राय "घ्रंसे" "अहनि" "उत वा" "अपि वा" "यः" "ऊधनि" "रात्रौ" "सोमं" "सुनोति" अभिषुणोति, नित्यकालमेव यः सोमाभिषवे प्रयतते इत्यर्थः । तस्य किम् ? इति,—स एव निश्चयेन "द्युमान्" "द्योतनवान्" "भवति" । अथ पुनः इतो यो विपरीतो भवति, पूर्वैश्च पूर्वतरैश्च "धर्मसन्तानात्" अनुष्ठितात् "अपेतम्" तमलं कर्मभिरित्येवंवादिनम् "अलङ्करि-

* इहैवाष्टादशखण्डसमाप्तिरवगन्तव्या ॥ १ 'अतो' ॥ २ 'वैतनै' ॥

ष्णुम्" "अयज्वानम्" अयजनशीलम्, आत्ममण्डनपरं वा, विषयोपभोगपरतया स्ववित्तं "तितनिषुम्" अनेकैः प्रकारैः यो वित्तानि तनितुमिच्छति, तम्, अश्रद्दधानम् धर्मे। "शक्रः" शक्तः इन्द्रः, "अप ऊहति–अप ऊहति"—उपसर्गाभ्यासदर्शनात् ऊहतेरप्यभ्यास आदरार्थं कृतः, पुनःपुनरपोहति नाशयतीत्यर्थः । "तनूशुभ्रम्" "शरीरशोभयितारम्" ततनुष्टेरेवैतद् विशेषणम् । यश्च अन्योऽपि "कवासखः" कपूयसखो भवति, तमप्यपोहति । "मघवा" धनस्वामी इन्द्रः, अवश्यम्भावी तस्य हि विनाश इत्यभिप्रायः ॥ केचित्तु "कवासख"—शब्दं "तनूशुभ्र"—विशेषणमेव वर्णयन्ति । इतरो विषयप्रधानोऽपि भूत्वा साधुसम्पर्कात् कदाचित् प्रत्यापद्येत, इतरस्त्वसाधुसम्पर्कादत्यन्तनष्ट एवेत्यनेनाभिप्रायेण ॥ एवमत्र "ततनुष्टि"—शब्देन "विषयोपभोगप्रधानः"—उच्यते, शब्दार्थाविरोधादित्युपपत्तेः ॥

"घ्रंसः—इति अहर्नाम" "ग्रस्यन्तेऽस्मिन् रसाः" सूर्येण । "गोः 'ऊधः' उद्धततरम्"—इति शब्दसारूप्यप्रसक्तम्, । तद्धि अन्येभ्योऽङ्गेभ्य उद्धततरं "भवति" । "उपोन्नद्धम्—इति वा" तद्धि विज्ञायते केनचिदुपश्लिष्य गोरुदरे नद्धमिति ॥

"स्नेहानुप्रदानसामान्यात् रात्रिरप्यूध उच्यते" सापि ह्यवश्यायानोषधिवनस्पतिस्नेहकान् दधाति ॥ ६ । १९ । १ ॥

## इलीबिशः ॥ ८५ ॥

इ ली बिशो मेघो भवति।

## "न्याविध्यदिलीबिशस्य दृह्ळा विशृङ्गिणमभिनच्छुष्णमिन्द्रः॥" निरविध्यदिलाबिलशयस्य दृढानि व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः ॥ २ ॥ १९ ॥

"इलीविशः (८५)" = इत्येतदेकपदमनवगतम् । "इलाबिलशयः"—इत्यवगमः । 'मेघः' अभिधेयः, स हि इलाहेतोरुदकस्य आत्मीयानि निर्गमनबिलानि संरुध्य शेते, तस्यैव वा बिलेषु इलाहेतुरुदकं शेते इति इलीविशः ॥

"न्याविध्यदिलीबिशस्य दृह्ळा विशृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन्यावदोजा वज्रेण शत्रुमवधीः पृतन्युम् ॥ (ऋ० सं० १, ३, ३, २)"—इति ॥

हिरण्यस्तूपस्यार्षम् । ऐन्द्री । त्रिष्टुप् । गोसवविवधयोर्निष्केवल्ये शस्यते । "न्याविध्यत्" "निरविध्यत्" निरताडयत्, "इलीबिशस्य" "इलाबिलशयस्य" मेघस्य

१ 'द्धं भवति' ॥

"दृह्ला" "दृढानि" दुर्भेद्यानि उदकसंरोधक्षमाणि स्थानानि । न च केवलमेताडय-देव, किं तर्हि ? "विश्रृङ्गिणम् अभिनत्" शृङ्गिणं शिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः, "शुष्णं" बलवन्तं मेघम्, "इन्द्रः" एवं स्तूयमानः प्रत्यक्षीभूतः ॥ प्रत्यक्षकृतः उत्तरोऽर्द्धर्चः । हे 'मघवन्!' 'यावत्तर:' यावद्बलमेतास्मिन् मेघेऽस्ति तावदेनं जहि । 'यावत्' च तव व्यथनसमर्थम् 'ओजः' बलमस्ति, या ते शक्तिः, तयैनं 'वज्रेण' 'शत्रुं शातयितव्यम् 'अवधीः' जहीत्यर्थः । 'पृतन्युम्' पृतनामिच्छन्तम् ॥ एवमत्र "इलीबिशः = मेघः" शब्दसारूप्यादर्थाविरोधाच्च ॥ ६ । १९ । २ ॥ *

## कियेधाः ॥ ८६ ॥

"अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः।
गोर्न पर्व विरदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥"
अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः ॥
कियेधाः कियद्धा इति वा क्रममाणधा इति वा ॥
गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय ॥ १ ॥

"कियेधाः(८६)"-इत्यनवगतम्। "कियद्धाः" "क्रममाणधा वा"-इत्यवगमः।कियदप्युदकमपरिमाणं धाः धारयतीति कियद्धा मेघः।क्रममाणो वा धारयतीति क्रममाणधा मेघ एव॥ "अस्मा इदु प्रभरा०–०चरध्यै(ऋ०सं०१,४,२९,२)"–इति॥नोधा नाम गौतमः, तस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । आहीनिकेष्वहःसु अहीनसूक्ते विनियुक्ता । हे इन्द्र! एष वृत्रः, "कियेधाः" "कियद्धाः" कियदप्युदकमपरिमाणं धारयति, "क्रममाणधाः" क्रममाणो वा धारयति । "अस्मै" त्वं "तूतुजानः" "त्वरमाणः" "वज्रं" "प्रभर" "प्रहर" "ईशानः" ईश्वरो यस्मात् त्वमस्माकं तस्मादेवमुच्यसे । किञ्च, प्रहृत्य वज्रं वज्रप्रहारसम्मूढस्यास्य मेघस्य "गोर्न पर्व" "गोरिव पर्वाणि" "विरद" विदारय, यथा गोविकर्त्ता गोः पर्वाणि "विरदेत्" विच्छिन्द्यात् । एवं त्वमप्येतं मेघमवयवशः "विरद" विच्छिन्धि । कथं च पुनर्विरद ? इति,–"तिरश्चा" वज्रेण तिर्यग्गामिना । केन पुनरर्थेन विरद ? इति,–"इष्यन् अर्णांसि" उदकानीच्छन् । "चरध्यै" "चरणाय" "अपाम्" प्रजाभ्यो दातुम् । एवमस्माद्विशकलीकृतादापो निश्चरिष्यन्तीत्यनेनार्थेन विरद ॥ एवमत्र "कियेधाः = मेघः" शब्दसारूप्यादर्थाविरोधाच्च ॥

१ 'लमेतावदे' ॥ * इहैवैकोनविंशखण्डसमाप्तिरवगन्तव्या ॥

"कियेधाः-इन्द्रः"-इत्येवमेके मन्यन्ते, स हि यदपि न ज्ञायते कियत्परिमाणमेतद् बलमिति, तदपि धारयति, क्रममाणो वा शत्रुबलं धारयतीति कियेधाः । एवं सति इयं योजना,-यस्मादीशानस्त्वं कियेधाश्च, तस्मात् प्रहर वज्रमिति ॥ ६ । २० । १ ॥

## भृमिः ॥ ८७ ॥

भृमिर्भ्राम्यतेः ॥

"भृमिरस्यृषिकृन्मर्त्यानाम्" इत्यपि निगमो भवति ॥२॥

"भृमिः ( ८७ )"-इत्यनवगतम् । 'भ्रमणम्'—इत्यवगमः । "भ्राम्यतेः"-इति निर्वचनम् । 'अग्निः'-अभिधेयः ॥

"इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥ ( ऋ० सं० १, २, ३५, १ )"-इति ॥

हिरण्यस्तूपस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । हे भगवन् ! 'अग्ने !' 'इमां शरणिं' मरणलक्षणां हिंसाम्, इमां संसृतिं वा 'मीमृषः' 'नः'मार्जयस्व नाशयस्व नः । कतमां शरणिम् ? 'इमम् अध्वानम्' 'यम्' एतं संसाराध्वानम् 'अगाम' गतवन्तो वयम्, अमुष्माल्लोकादिमं लोकम् । अस्मासु एतां संसारहिंसाम्, एनम् आर्जवं जवीभावत्वमस्माकं मार्जयस्व । कस्मात् पुनरेवमुच्यसे ? इतः,-यस्मात् 'आपिः' त्वमस्माकम् आप्तः, अथवा-व्यापायिता कृत्स्नस्य जगतो महिम्ना । 'पिता' च रक्षिता, 'सोम्यानाम्' सोमसम्पादिनां मनुष्याणाम् । 'प्रमतिः' च प्रकृष्टमतिः । "भृमिः" च, त्वमेव संसारे भ्रामयिता पञ्चाग्निविद्योक्तेन प्रकारेण[1], त्वदधीन एव संसारो मोक्षश्च । "ऋषिकृत्" च, दर्शनकर्त्तासि त्वम्, त्वदधीनमेव दर्शनं "मर्त्यानां" मनुष्याणाम् । सर्वविज्ञानप्रकाशेनानुगृह्णास्मान् मोचयस्वास्मात् संसारादित्यभिप्रायः । देवयानेनैव पथा गमय, मा पितृयाणेनेति ॥ एवमत्र "भृमिः=अग्निः" अर्थाविरोधात् विशेष्यते ॥६।२०।२॥

## विष्पितः ॥ ८८ ॥

विष्पितो विप्राप्तः ।

"पारं नो अस्य विष्पितस्य पर्षन्" ।

इत्यपि निगमो भवति ॥ ३ ॥ २० ॥

---

१ 'प्रक्रमेण' ॥

"विष्पितः ( ८८ )"—इत्यनवगतम् । "विप्राप्तः"—इत्यवगमः । विस्तीर्ण इतश्चेतश्च, सर्वतो यः प्राप्तः, स विष्पितः ॥

"इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ।

प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥ ( ऋ० सं० ५, ५, २, १ )"—इति ॥

"यदद्यसूर्य ब्रवोऽनागाः"—इत्येतस्मिन् सूक्ते, अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः,—अन्याः सर्वा मैत्रावरुण्य इति । 'इमे'—इति द्वयोरेव मित्रावरुणयोः । पूजार्थे बहुवचनम् । अर्यमा वा तृतीयः स्यात्, असावपि हि अस्मिन् सूक्ते श्रूयते । शौनकाभिप्रायस्त्वेवं सति परीक्ष्यः ॥

'इमे' मित्रावरुणार्यमणः 'दिवः' एत्य 'अनिमिषाः' आदरवन्तः 'पृथिव्याः' पृथिवीलोकादित्यर्थः । 'चिकित्वांसः' सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः, 'अचेतसम्' अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं 'नयन्ति' । यत एवमतस्तानहं ब्रवीमि,—"प्रव्राजे" प्रकृष्टे एतस्मिन् व्रजने मरणाख्ये मृत्युकाले उपस्थिते, यदि 'गाधं' संसारगाहनसमर्थं कर्म, विज्ञानं वा 'अस्ति' "नः" अस्त्यस्माकम्, ततः "अस्य" "विष्पितस्य" "विप्राप्तस्य" संसाराध्वनः 'नद्यः चित्' नद्या इव "पारं पर्षन्" पारं यन्त्वित्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "विष्पितः = विप्राप्तः" संसाराध्वा—इत्युपपद्यते ॥ ६ । २० । ३ ॥ *

## तुरीपम् ॥ ८९ ॥

"तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना ।

त्वष्टा पोषाय विष्यतु राये नाभा नो अस्मयुः ॥"

तन्नस्तूर्णापि महत्सम्भृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्वित्यस्मयुरस्मान् कामयमानः ॥ १ ॥

"तुरीपम् ( ८९ )"—इत्यनवगतम् । "तूर्णापि"—इत्यवगमः । 'उदकम्'—अभिधेयम्, तद्धि तूर्णमाप्नोति । "तन्नस्तुरीप०—नाभा नो अस्मयुः ॥ ( ऋ० सं० २, २, ११, ४ )"—इति ॥ दीर्घतमस आर्षम् । त्वाष्ट्री । अनुष्टुप् । आप्री-सूक्ते । "तत् नः तुरीपम्" तदस्माकं तुरीपमुदकम्, "अद्भुतं" च "महत्" इत्यर्थः । "अद्भुतः, बर्हिष्ठः"—इति महन्नामसु पठितम् । "पुरुवारं" च बहुदेशान्तरमावृणोत्युदकम्,



* अत्रैव विंशखण्डसमाप्तिरुचिताऽवगन्तव्या ॥

"पुरुत्मना" बह्वात्मना । यदेवं लक्षणमुदकम्, तत् नः अस्माकं "नाभा" नाभौ मध्ये "त्वष्टा" "विष्यतु" विमुञ्चतु वर्षभावेन । "अस्मयुः" अस्मान् अनुगृहीतुं "कामयमानः" "राये पोषाय" "धनस्य पोषाय" इत्यर्थः, वर्षे हि सति पशवः पुष्यंति । अथवा—नाभानः—इत्येतत् त्वष्टुरेव विशेषणं स्यात्, "नाभानः" न अदीप्यमानः, किं तर्हि ? दीप्यमान एव विष्यतु ॥ एवमत्र माध्यमिकस्त्वष्टेति विष्यमित्यनेन सम्बन्धात्, "तुरीपम् = उदकम्"—इत्युपपद्यते ॥ ६ । २१ । १ ॥

## राम्पिनः ॥ ९० ॥

### राम्पिनो राम्पी रपतेर्वा रसतेर्वा ।

### "राम्पिनस्यायोः" इत्यपि निगमो भवति ॥ २ ॥

"राम्पिनः(९०)"—इत्यनवगतम् । "रापी"—इति वा स्यात्, "रासी"—इति वा-"रपतेः वा" शब्दार्थस्य, "रसतेः वा" शब्दार्थस्यैव । रपणशीलो वा रसनशीलो वा यः, सः राम्पी ॥

"उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।
प्र वो नपातमपां कृणुध्वं प्रमातरा राम्पिनस्यायोः॥(ऋ०सं०२,१,१,४)"—इति ॥

कक्षीवत आर्षम् । त्रिष्टुप् । वैश्वदेवे सूक्ते । 'उत त्या' अपि तौ, अश्विनौ । 'मे' मम 'यशसा' हविर्लक्षणेन धनेन तर्प्यमाणौ, 'श्वेतनायै'उषसः काले प्राप्ते "व्यन्ता पान्ता" वीताम् भक्षयेतां पुरोडाशम्, पिबेतां सोमम् । यतो ब्रवीमि,—हे 'औशिजः' मेधाविनः! ऋत्विजः ! 'हुवध्यै' आह्वयध्वं तावश्विनौ । किञ्च, 'प्र' ब्रवीमि 'वः'—'कृणुध्वम्' 'अपां नपातम्' अपि, एतस्मिन् कर्मणि भागिनाविति । किञ्च, 'प्रमातरौ' द्यावापृथिव्यावपि सर्वभूतनिर्मात्र्यौ कृणुतैव, एतस्मिन् कर्मणि भागिन्याविति एतच्च वः प्रब्रवीमि । कं च पुनरर्थं पुरस्कृत्य एतत् कुरुध्वम् ? इति,—"राम्पिनस्य आयोः" रपणशलिस्य वा रसनीलस्य वा शब्दकारिणो वर्षभूतस्योदकस्य प्राप्त्यर्थम्, अथवा—स्तोतुः पुत्रस्य प्राप्त्यर्थम् । "आयवः"—इति मनुष्यनाम ॥ एवमत्र "राम्पिन"—शब्देन उदकं स्तोता वाभिधीयते, शब्दसारूप्यादर्थाविरोधाच्च ॥ ६ । २१ । २ ॥

## ऋञ्जतिः ॥ ९१ ॥

### ऋञ्जतिः प्रसाधनकर्मा ।

### "आ व ऋञ्जसे ऊर्जां व्युष्टिषु" इत्यपि निगमो भवति ॥ ३ ॥

"ऋञ्जतिः (९१)" "प्रसाधनकर्मा" । "भाऋजीकः"–इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते ॥

केचित्त्वत्र एतं शेषमधीयते ॥

"दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।

यजिष्ठमृञ्जसे गिरा ॥ (ऋ० सं० ३, ५, ८, १)"–इति ॥

वामदेवस्यार्षम् । गायत्री । आग्नेयी । प्रातरनुवाकाश्विनयोः शस्यते । 'वः'–इत्येतस्य 'त्वम्'–इति विपरिणामः । हे यजमान! त्वं 'दूतम्' 'विश्ववेदसम्' सर्वप्रज्ञानम्, 'हव्य वाहम्' हविषां वोढारम्, 'अमर्त्यम्' अमरणधर्माणम्, 'यजिष्ठम्' यष्टृतमम्, "ऋञ्जसे" प्रसाधयसि 'गिरा' स्तुत्येत्यर्थः ॥ एवमत्र "ऋञ्जतिः प्रसाधनकर्मा" दूत-सम्बन्धात् ॥ ६ । २१ । ३ ॥

## ऋजुनीती ॥ ९२ ॥

ऋजुरित्यप्यस्य भवति ।

"ऋजुनीती नो वरुणः" इत्यपि निगमो भवति ॥ ४ ॥

"ऋजुः (९२)"–"इत्यपि" "अस्य" एव ऋञ्जतेः "भवति" ॥

"ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।

अर्यमा देवैः सजोषाः ॥ (ऋ० सं० १, ६, १७, १)"–इति ॥

गोतमस्यार्षम् । वैश्वदेवे सूक्ते । गायत्री । गवामयनस्य द्वितीयेऽहनि शस्यते मैत्राव-रुणस्य शस्त्रे । "ऋजुनीती" ऋजुनयनः, ऋजुः प्रज्ञो वा "वरुणः" "नः" अस्मान् इतो लोकादमुं लोकं कर्मफलप्राप्त्यर्थं 'नयतु' । 'मित्रः' च 'विद्वान्' नयतु । 'अर्यमा' 'देवैः' 'सजोषाः' सह प्रीयमाणः नयतु॥ एवमत्र 'ऋजु'–शब्देन प्रसिद्धं नयनम्, प्रसिद्धा वा मतिरुच्यते ॥ ६ । २१ । ४ ॥

नयनं तु नीतिशब्देन उच्यते ।

## प्रतद्वसू ॥ ९३ ॥

प्रतद्वसू प्राप्तवसू ।

"हरी इन्द्र प्रतद्वसू अभि स्वर" इत्यपि निगमो भवति ५॥२१॥

---

१ भाष्यकारेण–तु–"आ वं ऋञ्जसे ऊर्जां व्युष्टिषु" इति निगमोऽधीतः । कथं पुनरुच्यते–'भाष्यकारो निगमं नाधीते' इति ? यद्वा–टीकाकर्तुर्दृष्टिपथमयं निगम-स्तद्दृष्टपुस्तकेषु नोपगतः इति तर्क्यते । अस्य निगमस्य वेदे स्थलं तु मृग्यम् ।

"प्रतद्वसू ( ९३ )"—इत्यनवगतम् । "प्राप्तवसू"—इत्यवगमः । 'अश्वौ' अभिधेयौ ।
"इह त्या संधमाद्या युजानः सोमपीतये ।
हरी इन्द्र प्रतद्वसू अभिस्वर ॥ ( ऋ० सं० ६, १, १२, २ )"—इति ॥

नारदस्येयमार्षम् । उष्णिक् । महाव्रते औष्णिही तृचाशीतिः,तस्यां शस्यते । हे "इन्द्र!" 'इह' कर्मणि 'त्या हरी' तावश्वौ "प्रतद्वसू" "प्राप्तवस" प्राप्तधनौ, तयोर्हि ऋजीषं घानाश्च धनम्, स हि ताभ्यां यज्ञे भागः प्राप्तः । 'सधमाद्या' सहमदनौ 'युजानः' युक्त्वा रथे, ततः 'सोमपीतये' सोमपानार्थम् 'अभिस्वर' अस्मान् प्रत्यागच्छ ॥ एवमत्र "हरी"-इत्यनेन सम्बन्धात् "प्रतद्वसू = प्राप्तवसू" अश्वी—इत्युपपद्यते ॥ ६ । २१ । ५ ॥ *

## हिनोत ॥ ९४ ॥

"हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे विष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥"
प्रहिणुत नोऽध्वरं देवयज्यायै ।
प्रहिणुत ब्रह्म धनस्य सननाय ।
ऋतस्य योगे यज्ञस्य योगे याज्ञे शकट इति वा ।
शकटं शकृदितं भवति शनकैस्तकतीति वा, शब्देन तकतीति वा ॥
"श्रुष्टीवरीर्भूतनास्मभ्यमापः ।"
सुखवत्यो भवतास्मभ्यमापः ॥ १ ॥

"हिनोत ( ९४ )"—इत्यनवगतम् "प्रहिणुत"—इत्यवगमः । "हिनोता नो०—भूतनास्मभ्यमापः ॥ ( ऋ० सं० ७, ७, २६, १ )"—इति । कवषस्येयमार्षम् । अपोनप्त्रियास्वृक्षु शस्यते । "हे ऋत्विजः!" "हिनोत" "प्रहिणुत" प्रगमयत, प्रोत्सर्पयत । एतम् "अध्वरं" यज्ञम् "देवयज्या" "देवयज्यायै" देवयजनार्थम् । किञ्च, प्रहिणुत "ब्रह्म" स्तुत्याख्यं यथाशास्त्रदृष्टक्रमेण। "सनये" लब्धये "नः" अस्माकं धनानाम् किञ्च, "ऋतस्य" "यज्ञस्य" "योगे" संयोगे यदेतत् "ऊधः" इव सोमपूर्णम्

* अत्रैवैकविंशखण्डसमाप्तिरुचिताऽवगन्तव्या ॥

अधिषवणचर्म प्रवर्त्तते ॥ अथवा योगसम्बन्धाच्छकटं योगः, तद्धि तत्र युज्यते, तेनाधिषवणचर्मणः ऊधसोऽधस्तादवस्थितेनेति मन्यमानो भाष्यकारो ब्रवीति,—"याज्ञे शकटइति वा" यदेतद् यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म, एतत् "विष्यध्वम्" विमुञ्चध्वम् । ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्य,एतद् विमोचनम् अधिषवणचर्मोधसः, तद्धि सोम उत्सिच्यमाने श्लथीभवति, यथेतरद्वोरूधो दुह्यमानायां गवि । एवमृत्विज उक्त्वा अधुना ता एव सोमसम्मिश्रा अपो ब्रवीति,—यूयमपि हे"आपः!"एभिःऋत्विग्भिः उत्सिच्यमानाः "श्रुष्टीवरी" "सुखवत्यः" "भूतन" "भवत" "अस्मभ्यम्" ॥ एवमत्र 'प्र'—शब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण 'प्र'—शब्दोऽध्याहृतः, 'अध्वरम्'—इत्यनेन सम्बन्धाद्धिनोतेर्गत्यर्थत्वमुपपद्यते ॥

"प्राहिणुत"—इति "आपः"—उच्यन्त इति केचित् ॥

"शकटम्""शक्रुदितं""भवति" । यदा अनड्वान् युक्तः,शकृत् मुञ्चति, तेनेतमिति । "शनकैस्तकतीति वा" तद्धि भाराक्रान्तं शनकैर्गच्छति "शब्देन तकतीति वा" तद्धि शब्देन गच्छति ॥ ६ । २२ । १ ॥

## चोष्कूयमाणः ॥ ९५ ॥ चोष्कूयते ॥ ९६ ॥

"चोष्कूयमाण इन्द्र भूरि वामम् ।"

ददद्दिन्द्र बहु वननीयम् ।

"एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्" ॥

व्युदस्यत्येधमानानहर्द्वेष्टचसुन्वतः सुन्वतोऽभ्यादधात्युभयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति॥ चोष्कूयतेश्चर्करीतवृत्तम् ॥ २ ॥

"चोष्कूयमाणः (९५)" "चोष्कूयते (९६)" इत्येते अनवगते । धातुरवायमप्रतीतः । एते सुबन्ततिङन्ते, तदनयोः पूर्वं सुबन्तम् उत्तरं तिङन्तम् । दानार्थे वर्त्तमानस्य "चोष्कूयमाण इन्द्र भूरि वामम् (ऋ० सं० १, ३, १, ३)"—इति ॥

निगममुक्त्वा "ददद्दिन्द्र"—इति हि पूर्वस्य निर्वचनं चकार भाष्यकारः ॥ व्युदसने वर्त्तमानस्योत्तरस्य "चोष्कूयतेविश इन्द्रो मनुष्यान् (ऋ० सं० ४, ७, २३, १)"—इति ॥ निगममुक्त्वा "चोष्कूयते"—इत्यस्य शब्दस्य "व्युदस्यति"—इति निर्वचनमाह भाष्यकारः ॥ उभयत्रापि तु चोष्कूयतिशब्दश्चर्करीतवृत्तेन द्रष्टव्यः ॥

"चोष्कूयमाण इन्द्र भूरि वामम्"—इत्यस्य शेषः,—

"निःसर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।

चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्धः ॥ ( ऋ० सं० १, ३१, ३ )"—इति ॥

हिरण्यस्तूपस्यार्षम् । ऐन्द्री । त्रिष्टुप् । उद्भिद्बलभिदोर्निष्केवल्ये शस्यते । 'न्यसक्त' न्यबध्नात् 'इषुधीन्' तूणान्, पृष्ठे रथस्य, 'सर्वसेनः' समग्रसेनः इन्द्रः । एवं तूणान् संनह्य बद्ध्वा, गोधाङ्गुलित्रवान् भूत्वा 'समर्यो गा अजति' इषुभिर्मेघान् छिन्दन् समजति समस्ताः क्षिपति, गाः अपः, अर्यः ईश्वरः इन्द्रः । कस्मै समजति ? यस्य वष्टि । यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे कामयते, क्षेप्तुम्, तस्यैव क्षिपति, वर्षं प्रवर्त्तयत इत्यर्थः । एवं स्तूयमानः स इन्द्रः प्रत्यक्षीभूतः, यतः प्रत्यक्षकृत उत्तरोऽर्द्धर्चः । हे "इन्द्र !" "चोष्कूयमाणः" त्वं "ददद्" एतद् उदकं जनेभ्यः "भूरि" "बहु" "वामं" "वननयिं" सस्यसम्पत्करम्, शृणु यत् कुरुष्व । 'मा पणिः भूः' मा वणिक्छीलोऽस्मान् प्रति मन्दोदकदाता कृपणो भूः । किं तर्हि ? प्रवृद्धोदकः उन्नतचित्तः, अस्मान् प्रति बहूदकदाता भव ॥ एवमत्र 'मा पणिर्भूर्भूरि वामम्'—इत्येभिः पैदैः[1] सम्बन्धात् 'चोष्कूयमाणः'—इत्यस्य "ददत्"—इत्येवमर्थ उपपद्यते ॥ एवमत्र दानार्थः 'चोष्कूयतिः' ॥

"एधमानाद्विळुभयस्य"—इत्यत्र व्युदसनार्थः । अस्य शेषः,—

"शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।

एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥ ( ऋ० सं० ४, ७, ३३, १ )"—इति ॥

गर्गस्य बार्हस्पत्यस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । 'दमायन'—इत्येकं पदम् । 'शृण्वे वीरः' अश्रौषमहं वीरमिन्द्रम्, 'उग्रम्' उद्गूर्णवज्रम् । आदरार्थो द्विरभ्यासःआदरे चार्थभूयस्त्वम्, "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति । अथवा—'उग्रं' शत्रुं प्रति उद्गूर्णवज्रम् । 'दमायन्' दमयितारं शत्रूणाम् । कथं पुनरश्रौषम् ? इति,—'अन्यमन्यम्' देवताविशेषम्, 'अतिनेनीयमानः' अतिशयेन स्वाभीष्टेनैव कामेन तुष्टूषया 'अमुष्मात् सुतात् कामान् प्राप्नुथ'—इत्येवं पुनःपुनः नीयमानः । किंलक्षणं पुनर्वीरमश्रौषम् ? इति,—"एधमानद्विट्" "एधमानान्" दीप्यमानानपि "द्वेष्टि" "असुन्वतः" सोमाभिषवमकुर्वाणान् अयज्वन इत्यर्थः । अतएव वैपरीत्येन "सुन्वतोऽभ्यादधाति"—इत्यध्याजहार भाष्यकारः । क्व पुनरादधाति ? 'सुकृतस्य लोके'—इति सामर्थ्याद्

१ 'पादैः' ॥ २ 'शेयोर्वार्हे' ॥

+ स्तुतादिति स्यात् )

गम्यते । ये हि सुन्वते, त इष्टा इन्द्रस्य, ये न सुन्वन्ति, ते द्वेष्याः, इत्यभिप्रायः । "उभयस्य राजा" "दिव्यस्य च" धनस्येश्वरः "पार्थिवस्य च" मानुषस्य च । किञ्च, "चोष्कूयते" व्युदस्यति,—यो "विशः" एधमानानसुन्वत इतरांश्च सुन्वतः "मनुष्यान्" अभ्यादधाति सुकृतस्य लोके इति ॥ एवमत्र 'एधमानद्विट्'—इत्यनेन सम्बन्धात् "चोष्कूयतिः, व्युदसनार्थः"—इति उपपद्यते ॥ ६ । २२ । २ ॥

## सुमत् ॥ ९७ ॥

### सुमत्स्वयमित्यर्थः ।

### "उप प्रागात्सुमन्मेऽधायि मन्म ।"

### उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेनेत्याश्वमेधिको मन्त्रः ॥ ३ ॥

"सुमत् ( ९७ )"—इत्यनवगतम् । "स्वयम्"—इत्यवगमः ॥

"उप॒प्रागा॑त्सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑वी॒तपृ॑ष्ठः ।
अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धु॑म् ॥ ( ऋ० सं० २, ३, ८, २ )"—इति ॥

दीर्घतमस आर्षम् । त्रिष्टुप् । अश्वदेवताका । अश्वमेधेऽश्वस्तोमीयेन षोडशाहुतयो हूयन्ते, तत्रेयं विनियुक्ता ॥ "उपप्रागात्" "उपप्रैतु" "मां" प्रकर्षेण एतु । "सुमत्" "स्वयम्" एव । "यत्" यदनेन "यज्ञेन" प्राप्नुयाम् "इति" "मे" मम "मनः" अपि "अधायि" अनेकविधान् सङ्कल्पविकल्पान् चकार, तत्तदहमेव, अहं मनसा ध्यातवानित्यर्थः । किं पुनस्तत् ? "मन्म" मननीयमर्थजातम् । किञ्च, अयमपि 'वीतपृष्ठः' कान्तपृष्ठोऽश्वः 'उपप्रागात्' उपगच्छतु । 'देवानाम्' 'आशाः' यम् एतं वयं देवानां 'पुष्टे' पोषणाय 'चकृम' कृतवन्तः । 'सुबन्धुम्' शोभनयूपबन्धनम् तमेतमुपगच्छन्तम् 'अनुमदन्ति' अनुमन्यन्ताम् 'विप्रा ऋषयः' मेधाविनः ॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "सुमत्"—इत्यस्य "स्वयम्"—इत्येष विपरिणाम उपपद्यते॥

"आश्वमेधिकः" अयं "मन्त्रः"—इति प्रकरणोपप्रदर्शनार्थमाह,—मन्त्रार्थे निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमिति, एतदेतेन प्रदर्शितं भवति ॥ ६ । २२ । ३ ॥

## दिविष्टिषु ॥ ९८ ॥

### दिविष्टिषु दिव एषणेषु—॥

१ 'उपैतु उपगच्छन्तु'

"दिविष्टिषु ( ९८ )"—इत्यनवगतम् । "दिव एषणेषु"—इत्यवगमः । याभिः क्रियाभिर्दिवमिच्छन्ति गन्तुं ता दिविष्टयः—॥

"स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।"
स्थूरः समाश्रितमात्रो महान् भवत्यणुरनु स्थवीयांसमुपसर्गो लुप्तनामकरणो यथा सम्प्रति ॥
कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा ।
कुरुः कृन्ततेः ।
क्रूरमित्यप्यस्य भवति ।
कुलं कुष्णातेर्विकुषितं भवति ॥ ४ ॥

"स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥ ( ऋ० सं० ५, ७, ३३, ४ )"—इति ॥

मेधातिथेरार्षम् । बृहती । दानमनया प्रशस्यते । "स्थूरं" स्थूलं महत्, "राधः" धनम्, "शताश्वं" बह्वश्वसंयुक्तम् । "कुरुङ्गस्य" 'राज्ञः' 'त्वेषस्य' महतः, 'सुभगस्य' शोभनस्य "दिविष्टिषु" क्रियासु दक्षिणाभूतं सर्वेष्वपि 'तुर्वशेषु' मनुष्येषु याः रातयः दत्तयः, तासु च, एतदेव स्थूलमित्येवं वयम् 'अमन्महि' मन्यामह इत्यर्थः ॥ एवमत्र 'दिविष्टि'—शब्देन 'क्रिया' उच्यते, ताभिर्हि द्युलोकमिष्यते गन्तुम्[1] ॥

"स्थूरः, समाश्रितमात्रो महान् भवति" समस्ता हि तत्र मात्रा आश्रिता[2] भवन्ति । स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते,—"स्थवीयांसमनु" यो वर्तते, सः "अणुः"—इत्युच्यते । अन्वित्ययम् "उपसर्गः" "लुप्तनामकरणः" येन प्रत्ययेन न्याय्यमेतन्नाम स्यात्, सोऽत्र लुप्तो न श्रूयत इत्यर्थः । कथं लुप्तः ? इति,—"यथा सम्प्रति"—इति । अस्मिन्नामकरणलोपेन प्रयोगासिद्धिः, साम्प्रतम्—इति हि न्याय्यम्, तथापि सम्प्रतीत्येवमपि वर्तमानकालविषयः प्रयोगः प्रसिद्धः, एवमिहाप्यनुशब्दे ॥

"कुरुङ्गो नाम राजा बभूव" । "कुरुगमनाद्वा" कुरुङ्गः, स हि कुरून् प्रति पुत्रत्वेन गतो जेतुं वा । "कुलगमनाद्वा" शत्रुकुलानि हि स नित्यमेव याति विजेतुम् । "कुरुः कृन्ततेः" स हि शत्रून् कृन्तति ॥

---

१ 'द्युलोक इष्य' ॥ २ 'आस्थिता' ॥

"क्रूरम्"–"इति" एतत् "अपि" "अस्य" एव कृन्ततेः "भवति" ॥

"कुलं कुष्णातेः ( क्र्या० प० )" तद्धि "विकुषितम्" इव "भवति" विस्तीर्णत्वात् ॥ ६ । २२ । ४ ॥

## दूतः ॥ ९९

दूतो व्याख्यतः ॥ ५ ॥

"दूतः ( ९९ )"–इत्यनवगतम् । "जूतः"–इति न्याय्यम् । "जवतेर्वा द्रवतेर्वा"–( ५ । १ । २ ) इति व्याख्यातम् ॥ ६ । २२ । ५ ॥

## जिन्वति ॥ १०० ॥

जिन्वतिः प्रीतिकर्मा ।

"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ।"

इत्यपि निगमो भवति ॥ ६ ॥ २२ ॥

"जिन्वतिः ( १०० )" "प्रीतिकर्मा"–इति अर्थवचनम्, अप्रतीतार्थत्वात् । "समानमेतत्"–इत्यत्र उपरिष्टाद् ( ७ । २३ । १५ ) व्याख्यास्यामो सप्तमेऽध्याये ॥ ६ । २२ । ६ ॥ *

## अमत्रः ॥ १०१ ॥

अमत्रोऽमात्रो महान् भवत्यभ्यमितो वा ।

"महाँ अमत्रो वृजने विरप्शि" इत्यपि निगमो भवति ॥ १ ॥

"अमत्रः ( १०१ )"–इत्यनवगतम् । "अमात्रः"–इति शब्दसमाधिः । "महान् भवति"–इत्यर्थवचनम्, यो हि महान् भवति, न तस्य मात्राः प्रमातुं शक्यन्ते, अतोऽसावमत्र इत्युच्यते । "अभ्यमितो वा" स्यात्, अनभिहिंसितः केनचित् ॥ नर्थः कुतो ...

"महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृष्ण्वोजः ।
नाह विव्याच पृथिवी च नैनं यत्सोमासो हर्यश्वममन्दन् ॥ ( ऋ० सं० ३, २, १९, ४ )"–इति ॥

विश्वामित्रस्येयमार्षम् । त्रिष्टुप् । ऐन्द्री । पृष्ठ्यस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवने

---

१ 'कृन्तेः' ॥ * अत्रैव द्वाविंशखण्डसमाप्तिरवगन्तव्या "इति निरुक्तवृत्तौ षष्ठा ( एकादशा )ऽध्यायस्य चतुर्थः पादः ॥ ६, ४ ॥" इति तूपलभ्यते ॥

अच्छावाकस्य शस्त्रे सम्पातं नाम सूक्तम्, तत्रेयं विनियुक्ता । "महान्" प्रभावतः। "अमत्रः" च अपरिमाणमात्रः, इन्द्रः "वृजने" संग्रामे "विरप्शी" विरावणशीलः, 'उग्रम्' उद्गूर्णम् अभ्युद्यतम्, 'शवः' शत्रुबलम् 'पत्यते' पातयते । 'धृष्णवोजः' धर्षयितृ यस्य ओजः, बलम्, तत् 'पत्येते' । किञ्च, 'नाह विव्याच' 'नैनं' व्याप्नोति 'पृथिवी' नापि द्यौः, उपमानत्वेन । कदा पुनरेवं भवति ? 'यत्' यदा 'सोमासः' सोमाः 'हर्यश्वम्' इन्द्रम् 'अमन्दन्' अतर्पयन्नित्यर्थः ॥ एवमत्र 'शवः' 'पत्यते' 'वृजने'–इत्यनेन सम्बन्धात् "अमात्रः=महान्"–इत्युपपद्यते ॥ ६ । २३ । १ ॥

## ऋचीषमः ॥ १०२ ॥

### "स्तवै वज्र्यृचीषमः ।"

### स्तूयते वज्र्यृचा समः ॥ २ ॥

"ऋचीषमः ( १०२ )"–इत्यनवगतम् । ईकारोऽत्रानवगतः । "ऋचा समः"–इत्यवगमः ॥

"इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः ।

मित्रो न यो जनेष्वा यशश्चक्रे असाम्या ॥ (ऋ० सं० ७, ७, ६, २ )"–इति ॥

विमदस्यार्षम् । आस्तारपङ्क्तिः । ऐन्द्री । स पुनरैन्द्रो वा प्राजापत्यो वा वासुक्रस्य वा वसुकृतः । पृष्ठ्यस्य चतुर्थेऽहनि निष्केवल्ये शस्यते । 'श्रुतः' विख्यातः सर्वासु दिक्षु, 'इह' एतस्मिन् कर्मणि, 'अद्य' "स्तवे" विजेतुं स्तूयतेऽस्माभिः "वज्री"। किंलक्षणः ? "ऋचीषमः" "ऋचा समः" यावतैवार्थेन युक्तोच्चार्यते ऋक् स्तुत्यभिप्रायेण, तावानेवासौ भवत्यैश्वर्ययोगात् । किञ्च, 'मित्रो न' मित्र इव, यथा हि कश्चिदाप्तो मित्रो जनेषु यशः कुर्यात्, एवं य इन्द्रः 'यशः' 'आचक्रे' आभिमुख्येन सर्वासु दिक्षु करोति । किंलक्षणं पुनर्यशः करोति ? 'असामि' असमाप्तमनन्तमित्यर्थः । य एवङ्गुणयुक्त इन्द्रः, सोऽस्माभिरिह स्तूयते ॥ एवमत्र स्तुतिसम्बन्धात् शब्दसारूप्याच्च "ऋचीषमः = ऋचा समः"–इत्युपपद्यते ॥ ६ । २३ । २ ॥

## अनर्शरातिम् ॥ १०३ ॥

### अनर्शरातिमनश्लीलदानमश्लीलं पापकमश्रिमद्विषमम् ॥

### "अनर्शरातिं वसुदामुपस्तुहि" इत्यपि निगमो भवति ॥ ३ ॥

"अनर्शरातिम् ( १०३ )"–इत्यनवगतम् । "अनश्लीलदानम्"–इत्यवगमः । विग्रहप्रसक्तस्याश्लीलशब्दस्यार्थमाह, "अश्लीलं पापकम्"–इति। न यस्याश्लीला रातिर्दा–

नम्, सोऽनर्शरातिः । शब्दसारूप्यप्रसक्तमाह,—"अश्लीलम् = अश्रिमद् विषमम्" तत्सारूप्योपपत्तितोऽश्लीलमित्युच्यते ॥

"अनर्शरातिं वसुदामुपस्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ ( ऋ० सं० ६, ७, ३, ४ )"—इति ॥

"श्रायन्त इव सूर्यम्"—इत्यस्या अनन्तरैव । नेमस्यार्षम् । ऐन्द्री । सतो बृहती । हे स्तोतः ! "अनर्शरातिम्" अपापदानम्, एनम् इन्द्रं "वसुदां" वसुदातारम्, "उप" उपगम्योपगम्य चेतसा "स्तुहि" । किङ्कारणम् ? यस्मात् 'भद्राः' भन्दनीयाः 'इन्द्रस्य' 'रातयः' दत्तयः । किञ्च, 'सः' 'अस्य' 'कामम्' अभिप्रायं 'विधतः' दधतः, कामिनां कामान् 'न रोषति' न पडियाति । 'मनः' च 'इन्द्रस्य' आत्मनः 'दानाय' 'चोदयन्' भवति, य एवं स्तुत्वा याचते॥एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अनर्शरातिम्=अनश्लीलदानम्"—इत्युपपद्यते ॥ ६ । २३ । ३ ॥

## अनर्वा ॥ १०४ ॥

**अनर्वा प्रत्यृतोऽन्यस्मिन् ॥**

**"अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्द्धया नव्यमर्कैः ।"**

**अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा ॥ ४ ॥**

"अनर्वा ( १०४ )"—इत्यनवगतम् । "अप्रत्यृतः"—इत्यवगमः । यः "अन्यस्मिन्" न आश्रितो भवति, स्वप्रधान एव, सः अनर्वा—इत्युच्यते ॥

"अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्त्ताः ॥ ( ऋ० सं २, ५, १२, १ )"—इति ॥

अगस्त्यस्येयमार्षम् । बार्हस्पत्या । त्रिष्टुप् । हे स्तोतः ! "अनर्वाणं" स्वेन महिम्ना युक्तम्, अप्रतिगतं कञ्चिदन्यं प्रत्यधीनत्वेन, "वृषभं" वर्षितारम्, "मंद्रजिह्वम्" "मन्दनजिह्वम्" हर्षकरो हि तस्य जनानां स्तनयित्नुघोषः, ॥ "जिह्वा, घोषः" इति हि वाङ्नामसु पठितम् ॥ "बृहस्पतिं" "वर्द्धय" । "नव्यं" स्तुत्यम्, "अर्कैः" मन्त्रैः । किंलक्षणं बृहस्पतिम् ? इति,—'गाथान्यः' स्तुतिप्रापणार्हाः 'देवाः' 'सुरुचः' सुदीप्तिमन्तः, 'यस्य' शुष्मम् 'आ' आभिमुख्येन स्थित्वा 'शृण्वंति' आदरेण, 'मर्त्ताः'

च । 'नवमानस्य' नवो हि मानः तस्य, अहन्यहनि अनया स्तुत्या स्तुत्यस्य भवति, तेनासौ नवमानः, तस्य । अथवा–'नवमानस्य' प्रशासतः इत्यर्थः ॥ अथवायमन्यो मन्त्रार्थः स्यात्, ऐतिहासिकपक्षेण,–'मन्द्रजिह्वः' हर्षकरी हि जिह्वा, तस्य स्तुतिः । 'गाथानीः' स एव पौरोहित्येन गाथाः स्तुतीर्नयति देवान् प्रति । स एव च 'सुरोचनः' । तस्यैव च 'नवमानस्य' स्तुवतः 'देवा आशृण्वन्ति' 'मर्त्ताः' च । "बृहस्पतिर्वै देवानां पुरोहितः–इति ह विज्ञायते ।" तस्मादेवमप्युपपद्यते । एवं मन्त्रार्थाविरोधात् "अनर्वा=अप्रत्यृतः"–इत्युपपद्यते ॥ ६ । २३ । ४ ॥

## असामि ॥ १०५ ॥

बृहस्पतिं वर्द्धय नव्यमर्कैरर्चनीयैः स्तोमैरसामि सामि प्रतिषिद्धम् ॥

सामि स्यतेः ॥

"असाम्योजो विभृथा सुदानवः ॥"

असुसमाप्तं बलं बिभृत कल्याणदानाः ॥ ५ ॥ २३ ॥

"असामि (१०५)"–इत्यनवगतम् । सामीति समाप्तमुच्यते, तस्य प्रतिषेधः असामि॥

"असाम्योजो विभृथा सुदानवोऽसामिधूतयः शवः ।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥ ( ऋ० सं० १, ३, १९, ५ )"–इति ॥

कण्वस्यार्षम् । सतो बृहती । मारुती । हे 'सुदानवः' "कल्याणदानाः" मरुतः ! यूयम् "असामि" अपरिसमाप्तम् अनन्तम्, "ओजः" "बलम्" 'शवः' अभिवृद्धिरूपञ्च बलम् 'बिभृथ' धारयथ । 'असामिधूतयः' असमाप्तगतयः । धवनं धूतिः, "धवति, धावति"–इति गतिकर्मसु पठितम् । एतत् कुरुध्वम् । य एषः 'ऋषिद्वेष्टा' स्तोतृद्वेष्टा, तस्मै हे मरुतः ! 'परिमन्यवे' प्रकृष्टक्रोधाय 'इषुं न' इषुम् इव 'द्विषं' सर्वलोकद्वेष्यतां 'सृजत' क्षिपत ॥ एवमत्र "असामि=असुसमाप्तम्"–इत्युपपद्यते, अर्थाविरोधात् ॥ ६ । २३ । ५ ॥ *

## गल्दया ॥ १०६ ॥

"मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ॥

* अत्रैव त्रयोविंशखण्डसमाप्तिरुचितावगन्तव्या ॥

भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥"

मा चुक्रुधं त्वां सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिमिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यत इति ॥

गल्दा धमनयो भवन्ति गलनमासु धीयते ।

"आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम् ॥"

नानाविभक्ती त्वेते भवत आगलना धमनीनामित्यत्रार्थः[१] ॥ २४ ॥

"गल्दया (१०६)"—इत्यनवगमम् । 'गलितधानी स्यात्' गलितं हि तस्यां धीयते । "धमनिर्भवति"—इत्यभिधेयवचनम्, नाडीत्यर्थः । "मा त्वा सोमस्य०—न याचिषत् ॥ ( ऋ० सं० ५, ७, १३, ५ )"—इति ॥ मेधातिथेरार्षम् । ऐन्द्री । बृहती । महाव्रते बृहतीसहस्रे विनियुक्ता । हे इन्द्र ! "मा चुक्रुधं त्वा" मा क्रोधयेयम् "अहं" "सोमस्य" "गल्दया" "गालनेन" धमनेन, पूरणेन सोमस्य "सदा" नित्यकालमपि "याचन्" न "गिरा" गीत्या स्तुत्या च "सवनेषु" यज्ञेषु । कथं च पुनर्मा चुक्रुधम् ? इति । "भूर्णिं" "मृगम्" 'न' भ्रमणशलिं मृगम् इव । भ्रमणशीलो भूर्णिः । कः पुनरसौ ? व्याघ्रो वा सिंहो वा, स हि भ्रमणशीलो बिभर्त्ति च शृगालादीन् । तेनेन्द्र उपमीयते । यथा शृगालादयो लाङ्गूललालनादिनोपचारिणोपसर्पमाणाः तं न क्रोधयन्त्येवमहं सोमसम्प्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुधं भवन्तमिति । अथ मतम्,—यदि मम क्रोधात् बिभेषि, मास्मान् याचिष्ठा इति । "क ईशानं न याचिषत्" को हि नाम सोऽस्ति लोके, य ईशानमीश्वरं न "याचिष्यते" ? न ह्ययाचमानाना[२] वृत्तिः सिध्यति ॥ एवमत्रेन्द्रस्य या गलधमनिः,यया सोम आगल्यते सा तेनैव आगलनेन उपलक्ष्यमाणा "गल्दा"—इत्युच्यते, न ह्येवमर्थविरोधोऽस्ति ॥

"गल्दा धमनयो[३] भवन्ति"—इत्यस्य भाष्यकारवाक्यस्य मन्त्रे नात्र धमनिलिङ्गं विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यदुदाहरणं ब्रवीति,—"आ त्वा विशन्त्विन्दवः०—" इति । हे इन्द्र ! "आविशन्तु" "त्वा" त्वाम् "इन्दवः" सोमाः । कथञ्च पुनराविशन्तु त्वामिन्दवः ? "आगल्दा धमनीनाम्" याः "आगलनाः" धमनयः, याभिरनुप्रविष्टाः

---

१ 'याचेथा' ॥ २ 'ह्ययाचतां' ॥ ३ 'धमनिर्भवति' ॥

सन्तो नवं सदमुत्पादयन्ति, अधोवाहिन्यो याः, ताभिराविशन्तु । शेषो मृग्यः ॥ एवमिह "धमनी"-शब्दसहयोगी "गल्दा"-शब्द इति कृत्वा "आगल्दा = धमनिः"-इति उपपद्यते ॥

"नानाविभक्ती त्वेते" पदे "भवतः"-'गल्दया' 'गल्दा'-इति, न तु नानार्थे, आह-कोऽभिप्रायः ? इति, उच्यते-पूर्वस्मिन् मन्त्रे यद्यपि धमनिशब्दो नास्ति, तथापि निगमे 'गल्दा'-शब्देन धमनिरेवोच्यते । तत्र "गल्दा धमनीनाम्"-इत्येतदेव ज्ञापकमित्यभिप्रायः । 'गल्दया'-इति तृतीयान्तम्, 'गल्दाः'-इति प्रथमा-बहुवचनान्तम् । एतदनयोर्नानाविभक्तित्वम् ॥ ६ । २४ । १ ॥ *

## जल्हवः ॥ १०७ ॥

"न पापासो मनामहे नारायासो न जल्हवः ॥"

न पापा मन्यामहे नाधना न ज्वलनेन हीनाः । अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्मेत्यृषिरवोचत् ॥ १ ॥ २५ ॥

"जल्हवः ( १०७ )"-इत्यनवगतम् । "ज्वलनहीनाः"-इत्यवगमः ॥

"न पापासो मनामहे नारायासो न जल्हवः ।

यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥ ( ऋ० सं० ६, ४, ३७, ६ )"-इति ॥

भर्गो नाम प्रगाथपुत्रः, तस्येयमार्षम् । ऐन्द्री । बृहती । तस्यामेव तृचाशीत्यां विनियुक्ता ॥ 'न' वयं "पापासः" "पापाः" इत्येवं "मनामहे" "मन्यामहे" । किं कारणम् ? अस्त्यस्मास्वपापत्वे हेतुः,-"ब्रह्मचर्यम्, अध्ययनम्, तपः, दानकर्म" च । अथ मतम्,-एतैरपि युक्तो यो निर्धनः, स पाप एवेति ? तच्च न । किं कारणम् ? "न अरायासः" न वयमधनाः । अथापि स्याद्धनवत्त्वेऽपि सति अनाहिताग्नित्वात् ज्वलनहीनत्वेन पापवत्त्वमिति ? तदपि न, किं कारणम् ? "न जल्हवः" न वयं "ज्वलनहीनाः" किं तर्हि ? आहिताग्नयो वयम् । तदेतदध्ययनाद्यपापत्वहेतुभूतं सर्वमस्मास्वस्ति । किञ्च, 'यदित् न्विन्द्रं' यस्माद् वयम् इन्द्रं 'वृषणं' वर्षितारम्, एतस्मिन् यज्ञकर्मणि 'सखायं' सहभूतस्य सोमपानस्य ख्यापयितारम्, अमीभिः सह मया सोमः पीत इत्येवं वक्तारं 'कृणवामहै' । तस्मात् न वयं पापाः, नापि वयमरायासः, नापि जल्हवः,-इत्येवमात्मानं मन्यामहे, नहि पापानाम-

---

* अत्रैव चतुर्विंशखण्डसमाप्तिर्बोध्या ॥

धनानामनाहिताग्नीनां च इन्द्रः सखा भवतीत्यभिप्रायः ॥ एवमत्र "जल्हवः = ज्वलनहीनाः" शब्दसारूप्यादर्थाविरोधाच्च ॥ ६ । २५ । १ ॥ *

## बकुरः ॥ १०८ ॥

बकुरो भास्करो भयङ्करो भासमानो द्रवतीति वा—॥

"बकुरः (१०८)"—इत्यनवगतम् । "भास्करः, भयङ्करः, भास्वद्द्रवणो वा"—इति शब्दसमाधयः—॥

"यवं॒ वृके॑णाश्विना व॒पन्तेषं॑ दु॒हन्ता॒ मनु॑षाय दस्रा ।
अ॒भि दस्युं॒ बकु॑रेणा॒ धम॑न्तो॒रु ज्योति॑श्चक्रथु॒रार्या॑य ॥"

यवमिव वृकेणाश्विनौ निवपन्तौ ।

वृको लाङ्गलं भवति विकर्त्तनात् ।

लाङ्गलं लङ्गतेर्लाङ्गूलवद्वा ।

लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वा ।

अन्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ । दस्युं बकुरेण ज्योतिषा वोदकेन वार्य ईश्वरपुत्रः ॥ १ ॥

"यवं वृकेणाश्विना०—रार्याय ॥ (ऋ० सं० १, ८, १७, १)"—इति । कक्षीवत आर्षम् । आश्विनी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "यवं" यवादि धान्यं "वृकेण" लाङ्गलेन । "वपन्ता" "वपन्तौ" युवाम् "अश्विना" हे "आश्विनौ!" तत्कृते महानुग्रहे सति वर्षादौ लाङ्गलकर्मणः फलसम्पद् भवतीत्यतः तावेवाश्विनौ वपन्ताविर्त्युच्यते । "इषम्" "अन्नम्" "दुहन्ता" "दुहन्तौ" प्रपूरयन्तौ "मनुषाय" "मनुष्याय" । "दस्रौ" शत्रूणां दासयितारौ दंसयितारौ वा, कर्मणां कृष्यादीनां कारयितारौ वा वर्षाद्यनुग्रहेण, एतावेवंविधं कर्म कारयन्तौ कुर्वाणौ वा । "अभिदस्युम्" + दासयितारमनाकालं दुर्भिक्षं "धमन्ता" धमन्तौ विनाशयन्तौ, कृत्स्नं जगदभिपुष्यन्तौ युवाम् । केन पुनरभिधमन्तौ ? इति,—"बकुरेण" जलसमूहेन ज्योतिःसमूहेन, वो । मध्यस्थानो ह्युदकसमूहेन, द्युस्थानो ज्योतिषा, सस्यमनुगृह्णाति, ततो दुर्भिक्षं ध्वस्यते, जगच्च पुष्यति । किञ्च, युवामेव "उरुज्योतिः चक्रथुः" विस्तीर्णमविकलं चक्षुः चक्रथुः ।

* अत्रैव पंचविंशखण्डसमाप्तिरुचिताऽवगन्तव्या ॥ १ 'च' इति तु मुद्रितम् ॥



+ यास्कस्त्वभि धातुना युनक्ति।

"आर्याय" "ईश्वरपुत्राय" ऋज्राश्वाय, स हि युवाभ्यामन्धीभूतः चक्षुष्मान् कृत इत्यभिप्रायः ॥ एवमत्र ज्योतिःसमूह उदकसमूहश्च "बकुर"–शब्देनोच्यते, शब्दार्थाविरोधात् । "ज्योतिषा वोदकेन वा"–इति भाष्यपाठः ॥ ६ । २६ । १ ॥

## बे॒कु॒नाटा॑न् ॥ १०९ ॥

**बेकनाटाः खलु कुसीदिनो भवन्ति द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वा ।**

**"इन्द्रो विश्वान्बेकुनाटाँ अहर्दृश उत क्रत्वा पणीँरभि।"**

**इन्द्रो यः सर्वान् बेकनाटानहर्दृशः सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति, वाऽभिभवति कर्मणा पणींश्च वणिजः ॥ २ ॥ २६ ॥**

"बेकनाटान् ( १०९ )"–इत्यनवगतम् । "द्विगुणकारिणो वा" "द्विगुणदायिनो वा" 'द्विगुणकामिनो वा'–इति शब्दसमाधयः ।

"इन्द्रो॒ विश्वा॑न्बे॒कु॒नाटाँ॑ अह॒र्दृश॑ उ॒त क्रत्वा॑ प॒णीँर॒भि ।

कदू॒ म॒हीर॒धृ॑ष्टा अ॒स्य त॒वि॑षीः॒ कदु॑ वृत्र॒घ्नो अस्तृ॑तम् ॥ ( ऋ० सं० ६, ४, ४९, ५ )"–इति ॥

प्रागाथः कलिर्नाम, तस्यार्षम् । ऐन्द्री । बृहती । महाव्रते बार्हस्पत्यां तृचाशीत्यां विनियुक्ता ॥ "इन्द्रः" "विश्वान्" "सर्वान्" "बेकनाटान्" "कुसीदिनः" वृद्धिजीवनान्, "अहर्दृशः" यैरिहैव जन्मनि सूर्यो दृष्टो न पुनर्द्रक्ष्यन्तीत्यर्थः । अथवा–"ये इमानि" एव "अहानि पश्यन्ति" विषयभोगप्रधानाः, नास्तिकतया, "न" पारलौकिकेष्वहःसु,–अस्य दुष्कृतस्य कर्मणः कोऽपि फलपरिणामो भविष्यतीत्येवं भावि न पश्यन्ति, तानभिभवति । "क्रत्वा" स्वेन "कर्मणा" । "उत पणीन्" अपि पणीन् । "पणिर्वणिग् भवति" न हि विशुद्धेन कर्मणा व्यवहरन्ति । याभिरेतत् कर्म करोति, याभिः पुनरेवमादीन् दुष्कृतकारिणोऽभिभवति, 'कत् ऊ महीः' क्व ता महत्यः सेनाः ? 'अस्य' इन्द्रस्य 'अधृष्टाः' अनाधर्षितपूर्वाः परैः, 'तविषीः' याश्च महत्यः । 'कत् ऊ वृत्रघ्नः' क्व च वृत्रघ्नः इन्द्रः ? यस्य 'अस्तृतम्' अनुपहतं बलम्, येनैतान् हन्तीति॥ एवमत्र "बेकनाटाः=कुसीदिनः" अर्थाविरोधादित्युपपद्यते ॥ ६ । २६ । २ ॥ *

---

१ एतत्पूर्वार्द्धमुत्तरार्द्धरूपेण संहितायामुपलभ्यते ॥ * अत्रैव षड्विंशखण्डसमाप्तिरवगन्तव्या ॥

## अभिधेतन ॥ ११० ॥

"जीवान्नो अभिधेतनादित्यासः पुरा हथात् ।
कद्ध स्थ हवनश्रुतः ॥"

जीवतो नोऽभिधावतादित्याः पुरा हननात् क नु स्थ ह्वानश्रुत इति ॥

मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते । मत्स्या मधौ उदके स्यन्दन्ते माद्यन्तेऽन्योन्यं भक्षणायेति वा ।

जालं जलचरं भवति जलेभवं वा जलेशयं वा ॥ १ ॥ इति लक्ष्मा अलम् ।

"अभिधेतन ( ११० )"—इत्यनवगतम् । "अभिधावत"—इत्यवगमः । "जीवान्नो०—हवनश्रुतः ॥ ( ऋ० सं०६, ४, ५१, ५)"—इति । उक्तमार्षं भाष्यकारेणैवात्रोपप्रदर्शनार्थम्, एवं सर्वत्र परिज्ञेयमार्षमिति । गायत्री । आदितेयी ॥ "आदित्यासः" हे "आदित्याः !" "जीवात् नः" "जीवतः" अस्मान् "अभिधेतन" "अभिधावत" यूयम् "पुरा हथात्" "पुरा हननात्" अहतान् अस्मान् सम्भावयतेत्यभिप्रायः । "कत् ह स्थ" । "क नु स्थ" यूयम् ! येन न शृणुत क्षिप्रं नाभिधावत हे "हवनश्रुतः !" ते ह्यार्त्तानामाह्वानं शृण्वन्ति एवमत्र "पुरा हथात्"—इत्यनेन सम्बन्धात् "अभिधेतन = अभिधावत"—इत्येष विपरिणाम उपपद्यते ॥

ऋषेर्वा मत्स्यवधकारुण्याभिभूतस्यैतदार्षम्, मत्स्यानां वा केचिन्मन्यंते ॥ "मत्स्याः, मधौ उदके स्यन्दन्ते" मधु इत्युदकनाम, तत्र हि ते स्यन्दन्ते गच्छन्ति । "स्यन्दति, कसति"—इति गतिकर्मसु पठितम् । "माद्यन्ते" हृष्यन्ति "अन्योन्यं भक्षणाय—इति वा" मत्स्या हि इतरेतरभक्षजीविनः । "जालम्, जलचरं भवति" तद्धि जले चरति । "जले भवं वा" जले वा भवति । "जलेशयं वा" जले वा शेते इति जालम् ॥ ६ । २७ । १ ॥

## अंहुरः ॥ १११ ॥

अंहुरोऽहस्वानंहूरणमित्यप्यस्य भवति ।
"कृण्वन्नं हूरणादुरु" इत्यपि निगमो भवति ।

**"सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्।"**
**सप्तैव मर्यादाः कवयश्चक्रुस्तासामेकामप्यभिगच्छन्नंह-स्वान् भवति, स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनःपुनः सेवां पातकेऽनृतोद्यमिति ॥ २ ॥ २७ ॥**

"अंहुरः ( १११ )"—इत्यनवगतम् । "अंहस्वान्"—इत्यवगमः । रो मत्वर्थे । "अंहूरणम्—इत्यप्यस्य भवति"—इति प्रासङ्गिकम्, एवमपि हि प्रयोगो भवतीति ॥

"त्रितः कूपेऽवहितो देवान्हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥ ( ऋ० सं० १, ७, २३, २ )"—इति ॥

"सप्त मर्यादा"—इत्येते त्रितस्यैव कूपे पतितस्यार्षे । एतयोः पूर्वा कुत्सस्य वा । वैश्वदेवी । पङ्क्तिः । प्रातरनुवाकाश्विनयोर्विनियुक्ता । 'त्रितः' 'कूपे' 'अवहितः' पतितः, 'देवान्' 'हवते' आह्वयते, 'ऊतये' रक्षणायात्मनः । तस्य आह्वानं 'बृहस्पतिः शुश्राव' । "वित्तं मे अस्य रोदसी"—इत्येतत् पुनःपुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुः । किमित्येतदसौ श्रावयाञ्चकार ? इति,—'कृण्वन्' 'अंहूरणात्' अंहस्वतः कूपात् आत्मनः । 'उरु' विस्तीर्णं त्राणं कुर्वन् ॥ एवमत्र "अन्धकूपः = अंहूरणः"—इत्युपपद्यते, प्रकरणाविरोधात् ॥

"सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ( ऋ० सं० ७, ५, ३३, ६ )—इति ॥

"सप्त मर्यादाः" सप्त स्थितीः[2] 'कवयः' मेधाविनः, हिरण्यगर्भमनुप्रभृतयः 'ततक्षुः' कृतवन्तः । नित्या एव हि ताः, तैस्तु तत्प्रख्यायिकानुस्मरणार्थं ग्रन्थसन्दर्भोऽभिव्याञ्जितः, एतदेव करणमित्युपचर्यते । "तासामेकामिदभ्यंहुरो गात्" । 'इत्'—इत्यनर्थकः, अप्यर्थे वा । 'तासां' मर्यादानाम् 'एकाम्' "अभिगच्छन्" अभिक्रामन् "अंहस्वान् भवति" । 'गात्'—इत्येतत्, अभेः समीपमाकृष्य "एकामप्यभिगच्छन्"—इति । कतमाः पुनस्ता मर्यादाः ? इति,—"स्तेयम्" "तल्पारोहणम्"—इत्येवमाद्याः । यः पुनरेता नाभिगच्छति, तस्य किम् ? इति,—सः 'आयोः' अयनस्य सूर्यस्य 'स्कम्भे'

---

१ 'प्यधिग' ॥ २ 'स्थितयः' ॥

स्कम्भने मण्डले 'उपमस्य' सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य 'नीळे' नीडे निलयने स्थाने, यानि धरुणानि धारयितॄणि स्थानानि 'अप्रध्वंसीनि' आभूतसंप्लवस्थायीनि, तेषु धरुणेषु 'तस्थौ' तिष्ठति । आह—कस्मिन् काले इति ? उच्यते—'पथां विसर्गे' विषयानुप्रवेशमार्गभूतानामिन्द्रियाणां 'विसर्गे' विसर्जनकाले प्राप्ते, मृत्युकाल इत्यर्थः ॥ मर्यादासम्बन्धात् स्पष्टतर एष निगम इत्यतोऽहुरशब्दो द्वितीय उपात्तः, स्मृतिसमावारश्चानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येवं मन्त्रेभ्य एवोपश्रुत्य सर्व एव समाचारः विशिष्टैः स्मृतिकारैः सन्दृष्टो[1] न स्वतन्त्र इति ॥ ६ । २७ । २ ॥ *

बतः ॥ ११२ ॥

बत इति निपातः खेदानुकम्पयोः—॥

"बत (११२)"—इत्यनवगतम्, अनेकार्थञ्च ॥ "निपातः"—इति पदजात्यवधारणम् । "खेदानुकम्पयोः"—इत्यर्थवचनम् ॥

"बतो बतासि यम नैव ते मनो हृदयञ्चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ॥"

बतो बलादतीतो भवति । दुर्बलो बतासि यम नैव ते मनो हृदयं च विजानीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षम् ॥

लिबुजा व्रततिर्भवति लीयते विभजन्तीति ॥

व्रततिर्वरणाच्च संयनाच्च ततनाच्च ॥ १ ॥

"बतो बतासि०—वृक्षम् (ऋ० सं० ७, ६, ८, ३)"—इति ॥ यमी, यमं ब्रवीति, "दुर्बलः" "बत" दुर्बलहृदयः त्वम्, अधर्मभीरुर्मोहमयस्त्वम् । एवमसकृन्मया प्रार्थ्यमानः खेदमुपयासि,—नेच्छसि मया सम्भोक्तुं स त्वं सर्वथा ह्यनुकम्प्यः, शोच्य इत्यर्थः । अथवा—"नैव" "ते" तव "मनः" सङ्कल्पम्, "हृदयं" हृद्गतमध्यवसायञ्च "विजानीमः" । अथवा—लब्धस्ते मयाभिप्रायः—"अन्या किल त्वां" मत्तो विशिष्टतरा योषित्, "परिष्वजाते" "परिष्वङ्क्ष्यते" ततः "किल" त्वं मां तयापहृतचेतस्त्वात् नेच्छसि परिष्वक्तुम् । कथञ्च पुनरन्या त्वां परिष्वङ्क्ष्यते ? "कक्ष्येव युक्तम्" "लिबुजेव वृक्षम्" । कक्ष्या कक्षजाता इव सुबद्धा, लिबुजा वल्ली, यथा युक्तम्

---

१ 'संसृष्टो'॥ * अत्रैव सप्तविंशखण्डसमाप्तिरुचिताऽवगन्तव्या ॥



परिष्वङ्क्तुमित्येव साधु ।

आत्मना संयुक्तम् समीपजं परिष्वजेत् परिवेष्टयेत्, एवं किल त्वामन्या परिष्वङ्क्ष्यते इति ॥ एवमत्र प्रकरणाविरोधात् "बत"—इत्येष निपातः खेदानुकम्पयोः ॥ अत्र "कक्ष्येव युक्तम्"—"लिबुजेव वृक्षम्"—इत्येकः "इव" शब्दोऽनर्थकः, अथ वोपमानद्वयमेतत् स्यात्,—कक्ष्येव च, लिबुजेव च,—यथा कक्ष्या च लिबुजा च परिष्वजनीयौ अश्वत्थवृक्षौ परिष्वजेते, एवं परिष्वङ्क्ष्यते इति ॥ ६ । २८ । १ ॥

## वाताप्यम् ॥ ११३ ॥

वाताप्यमुदकं भवति वात एतदाप्याययति ॥

"पुनानो वाताप्यं विश्वश्चन्द्रम्" इत्यपि निगमो भवति ॥ २ ॥

"वाताप्यम् (११३)"—इत्यनवगतम् । "उदकं भवति" इत्यभिधेयवचनम् । "वातः" हि "एतत्" उदकम् "आप्याययति" शीतीकरोति । अथवा—आप्यायतिर्वृद्ध्यर्थः स्यात्, पुरो वातेन हि वृष्टिभूतमुदकं संवर्द्धते[1] ॥

"नूनो रयिमुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम् ।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ (ऋ० सं० ७, ४, ३, ५)"—इति ॥

नोधसो गौतमस्यार्षम् । पावमानी सौमी । हे सोम ! 'नूनः' क्षिप्रमस्माकम् 'रयिम्' धनम् 'उपमास्व' उपनिर्मिणुहि । 'नृवन्तं' पुत्रपौत्रैः सहितम् । "पुनानः" पूयमानः । "वाताप्यम्" उदकं प्राप्य द्रवीभूतः । "चन्द्रं" चायनीयमुदकम् । 'विश्वः' च सर्वः पूयमानः । किञ्च, 'प्रतारि' प्रतीर्णं दीर्घं कुरु—हे 'इन्दो' सोम ! 'वन्दितुः' स्तोतुः 'आयुः' । किञ्च, तथा उपमास्व, जुषस्व, यथा 'प्रातः' नित्यमेव 'धियावसुः' कर्मवसुः । इन्द्रः त्वां पातुमस्माकम् 'आजगम्यात्' आगच्छेदित्यर्थः ॥ एवमत्र "वाताप्यम् = उदकम्" अर्थाविरोधाच्छब्दोपपत्तेश्च ॥ ६ । २८ । २ ॥

## चाकन् ॥ ११४ ॥

"वने न वायो न्यधायि चाकन् ॥"

वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा ॥

वेति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थः ॥ ३ ॥

---

१ 'संवर्द्धयते' ॥

"चाकन् ( ११४ )"—इत्यनवगतम् । "चायन्"—इति [ वा, ] "कामयमानः"-इति [ वा इति ] शब्दसमाधी ॥

"वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरण्यावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥ ( ऋ० सं० ७, ७, २२, १ )"—इति ॥

वसुक्रस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् ॥ "वने न" "वने इव" वृक्षे इव । शकुनिः, स्वे नीडे वायमात्मीयं पुत्रं "न्यधायि" निदधाति 'शिशुकम्' अजातपक्षम् । स यथा तत्र निहितः "चाकन्" "चायन्" पश्यन्, भयाद् दिशो निरीक्षमाणः आसीत्, अथवा—"कामयमानः" तदुत्सुकमना आसीत्, एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः, 'शुचिः' व्यपगतसर्वदोषः 'वां' युवयोः स्वभूतः, 'स्तोमः' । हे 'भुरण्यौ' भर्त्तारौ अश्विनौ ! शीघ्रौ वा, भुरण्युरिति क्षिप्रनामेति । किञ्च, यस्य स्तोमस्य 'पुरुदिनेषु' बहुष्वहःसु 'इन्द्रो होता' इन्द्रोऽप्याह्वाता भवति,—ममायं स्तोमः स्यादिति । किंलक्षणः पुनरिन्द्र आह्वाता ? यः 'नृणां नृतमः' मनुष्याणामपि मनुष्यतमः, शूराणामपि मध्ये शूरतम इत्यर्थः । 'नर्यः' च नृभ्यो हितः, यः 'क्षपावान्' च रात्रिपर्यायेषु सोमभागी । एवङ्गुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यते, अस्मासु वर्त्तमानः, स युवां प्रति 'अजीगः' नित्यकालमेव गच्छतीत्यर्थः ॥

एवंतावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते, तदसाधु, ऐन्द्रे हि सूक्ते प्रथमैवेयमृग् भवति । तच्च पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्द्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते ॥ हे 'भुरण्यौ' भर्त्तारौ, देवतानां पती ! य एषः स्तोमोऽस्मासु निहितः, 'शुचिः' व्यपगतदोषः, शकुनिपुत्र इव, 'वने' वनावयवे वृक्षे, 'चाकन्' पश्यन्निव कामयमान इव वा इन्द्रम् आस्ते ॥ यः स्तोमः, तस्य किम् ? इति,—यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाता अभूत्, अपि नाम मामनेन स्तोमेन स्तुयुरिति । किंलक्षणः पुनराह्वाता यस्येन्द्रः ? इति,—'नृणां नृतमः नर्यश्च क्षपावांश्च' समानमेतत् पूर्वेणैवार्थेन । यमेवमिन्द्रः प्रार्थयते, स एषः स्तोमः, तं प्रत्यजीगः, गच्छतीत्यर्थः । अथवा—स एषः स्तोमोऽस्माभिरुदीर्यमाणः; तस्येन्द्रस्य गुणान् गृह्णातीति स्यात्, "जिगर्त्तिः०—गृह्णातिकर्मा वा"—इति, ह्युक्तम् ॥ एवमत्र "चाकन्"—इत्यस्य "चायन्"—इति, "कामयमानः—इति वा"—इत्येतौ विपरिणामावुपपद्येते, शब्दसारूप्यादर्थाविरोधाच्च ॥

एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, तमाह भाष्यकारः,—"वा—इति च, यः—इति च, चकार शाकल्यः"—इति । 'वा' इति 'यः' इति च पदे चकार

शाकल्यः पदकारः। तदेतद् विचार्यमाणं न साधु भवति, किंकारणम्? "उदात्तं त्वेवमाख्यातमभविष्यत्"। एवम् एतस्मिन् पदद्वये सति, यदेतत् आख्यातं न्यधायीति, एतत् उदात्तम् अभविष्यत् यद्वृत्तात् परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते, न चेदमुदात्तम्, तस्मात् यः–इति नेदं यद्वृत्तम्। किं तर्हि? वायः–इति एकं पदम्। किञ्च, "असुसमाप्तश्चार्थः" अपुष्कलः, एवमेतस्मिन् पदद्वये सति मन्त्रस्यार्थोऽसुसमाप्तो भवति। कथम्? द्विपदत्वे हि सति 'वा' शब्दस्यार्थेन केनचित् भवितव्यम्, न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति। स्यादेतत्, उपमार्थो भविष्यतीति, तदपि न संभवति, नकारेणोपमार्थस्य कृतत्वात् य इत्यस्यापि पृथग्भूतस्य न कश्चिदर्थोस्ति। तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे, 'वायः'–इत्येतदेकपदमेव, "शकुनिपुत्रः" एव चास्याभिधेयः उपपद्यते ॥ ६। २८। ३ ॥

## रथर्यति ॥ ११५ ॥

### रथर्यतीति सिद्धस्तत्प्रेप्सुः, रथं कामयत इति वा ॥

### "एष देवो रथर्यति।" इत्यपि निगमो भवति ॥४॥२८॥

"रथर्यति (११५)"–इत्यनवगतम्। 'रथं हर्यति'–इत्यवगमः, हर्यतिशब्दो हि प्रेप्सायाम्, "रथं" हि यः "कामयते" स रथर्यति ॥

"एष देवो रथर्यति पवमानो दशस्यति।
आविष्कृणोति वग्वनुम् ॥ (ऋ० सं० ६, ७, २०, ५)"–इति ॥

शुनःशेपस्यार्षम्। पावमानी सौमी। गायत्री। ग्रावस्तुत आवापे। "एषः" सोमः "देवः" "रथर्यति" रंहणमात्मनो गमनमिच्छति। 'पवमानः' 'दशस्यति' दानमात्मन इच्छति, कथं नाम मां देवेभ्यो दद्युरिति। किञ्च, 'आविष्कृणोति' प्रकाशीकरोति 'वग्वनुम्' वचो[1] वननीयम्, दत्त मां देवेभ्य इति ॥ एवमत्र "रथर्यति = रथप्रेप्सुः" शब्दसारूप्योदेतदुपपद्यते ॥ ६। २८। ४ ॥ *

## असक्राम् ॥ ११६ ॥

### "धेनुं न इषं पिन्वतमसक्राम्।" असंक्रमणीम् ॥ १ ॥

"असक्राम् (११६)"–इत्यनवगतम्। "असंक्रमणीम्[3]"–इति शब्दसमाधिः ॥

---

१ 'वाचो' ॥ २ 'प्याक्तिपु' ॥ * अत्रैवाष्टाविंशखण्डसमाप्तिरवगन्तव्या ॥
३ 'असंक्रामिणीम्' ॥

"पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम् ।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥ ( ऋ० सं० ५, १, ४, ३ )"—इति ॥

भरद्वाजस्यार्षम् । त्रिष्टुप् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते । 'पुरु' बहु 'हि' 'देष्णं' दानं 'वां' युवाभ्यां यज्ञे यस्मात् हे 'पुरुभुजौ' बहुभोजिनौ ! अश्विनौ ! तस्मात् युवां ब्रूमः,—"धेनुं नः" तर्पयित्रीमस्मभ्यम् "इषम्" अन्नलक्षणम् "पिन्वतम्" प्रक्षारयतम् "असक्राम्" असंक्रमणशीलाम् अनपायिनीम् अस्मत्तः, अथवा—असंक्रमणशीलां द्याम्, इषम् इड्हेतूदकमस्मदर्थं प्रक्षारयतमिति स्यात् । किं पुनः तद् युवयोर्बहुदानम् ? इति,—'स्तुतश्च' स्तुतशस्त्रवांश्च सोमो युवयोरन्नम् । हे 'माध्वी' मधुपौ ! 'सुष्टुतिश्च' शोभनाभिः स्तुतिभिः सुष्ठु स्तुतः, 'रसाश्च' आज्यादयः, य एते 'रातिं' पुरोडाशस्यानुगच्छति, सर्वे एते युवयोरेव । तस्माद् युवां ब्रवीमि,—पिन्वतमिति ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "असक्राम्"—इत्यस्य शब्दस्य "असंक्रमणिम्"—इत्येष विपरिणाम उपपद्यते । इडभिधेया, द्यौर्वा ॥ ६ । २९ । १ ॥ *

## आधवः ॥ ११७ ॥

**आधव आधवनात् ।**
**"मतीनां च साधनं विप्राणां चाधवम् ।" इत्यपि निगमो भवति ॥ २ ॥**

"आधवः(११७)"-इत्यनवगतम् । "आधवनात्"—इत्यवगमः, आकम्पनादित्यर्थः ।
"मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवम् ॥ ( ऋ० सं० ७, ७, १३, ४ )"—इति ॥

ऐन्द्रस्य विमदस्यार्षम् । अनुष्टुप् । पौष्णी ॥ 'मंसीमहि' 'त्वा' त्वां हे 'पूषन्' ! 'देव !' "मतीनां" "च" प्रज्ञानामस्माकं "साधनं" साधयितारम्, आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते । किञ्च, ये चान्येऽपि "विप्राः" प्राप्तप्रज्ञाः मेधाविनः, तेषाम् "आधवम्" आकम्पयितारं स्वयमेव । तथा त्वमात्मनो गुणवत्तां दर्शयासि, यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते॥एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "आधवः= आकम्पयिता"—इत्युपपद्यते ॥ ६ । २९ । २ ॥

---

* अत्रैव "इति निरुक्तवृत्तौ षष्ठा ( एकादशा )ऽध्यायस्य पञ्चमः पादः ॥ ॥ ६, ५ ॥" इति मुद्रितपुस्तके समुपलभ्यते । लिखितपुस्तके तु "असंक्रामित्यनवगतम्" इत्यतः प्रागेवोचिततरं समुपलभ्यते ॥

## अनवब्रवः ॥ ११८ ॥

अनवब्रवोऽनवक्षिप्तवचनः ।

"विजेषकृदिन्द्र इवानवब्रवः ।"

इत्यपि निगमो भवति ॥ ३ ॥ २९ ॥

"अनवब्रवः (११८)"—इत्यनवगतम् । "अनवक्षिप्तवचनः"—इत्यवगमः ॥

"विजेषकृदिन्द्र इवानवब्रवोऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ (ऋ० सं० ८, ३, १९, ५)"—इति ॥

मन्योरार्षम् । त्रिष्टुप् । मान्यवे सूक्ते । श्येनादिषु निष्केवल्ये शस्यते । "विजेषकृत्" विजयकृत्, "इन्द्रः इव अनवब्रवः" इन्द्र इवानवाक्षिप्तवचनः, न हीन्द्रस्य केनचिदाक्षिप्यते वचः । हे 'मन्यो !' यस्त्वम् अनवक्षिप्तवचनः इन्द्र इव, स त्वम् "अस्माकम्" 'अधिपाः' अधिष्ठाय पाता 'भव' । किञ्च, हे 'सहुरे' शत्रूणां सहनशील ! 'प्रियं ते' यत् 'नाम' तेन त्वां 'गृणीमसि' नित्यमेव स्तुम इत्यर्थः । किञ्च 'विद्म' जानीमो वयम् 'तम्' 'उत्सम्' उत्स्यन्दनम्, 'यतः' त्वम् 'आबभूथ' आभवसीत्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अनवब्रवः = अनवक्षिप्तवचनः"-इत्युपपद्यते।६।२९।३॥*

## सदान्वे ॥ ११९ ॥ शिरिंबिठः ॥ १२० ॥

"अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥"

अदायिनि काणे विकटे ।

काणोऽविक्रान्तदर्शन इत्यौपमन्यवः ॥

कणतेर्वा स्यादणूभावकर्मणः ॥

कणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति ॥

मात्राणूभावात्कणो, दर्शनाणूभावात्काणः ॥

विकटो विक्रान्तगतिरित्यौपमन्यवः ॥

---

* अत्रैवैकोनत्रिंशखण्डसमाप्तिरवगन्तव्या ॥

कुटतेर्वा स्याद् विपरीतस्य विकुटितो भवति ॥
गिरिं गच्छ सदानोनुवे शब्दकारिके ॥
"शिरिम्बिठस्य सत्वभिः ॥"
शिरिम्बिठो मेघः । शीर्यते बिठे ॥
बिठमन्तरिक्षम् बिठं बीरिठेन व्याख्यातम् ॥
तस्य सत्त्वैरुदकैरिति स्यात्तैष्ट्वा चातयामः, अपि वा शिरिम्बिठो भारद्वाजः ॥
कालकर्णोपेतोऽलक्ष्मीर्निर्णाशयाञ्चकार तस्य सत्त्वैः कर्मभिरिति स्यात्तैष्ट्वा चातयामः ॥ चातयतिर्नाशने ॥ १ ॥

"सदान्वे ( ११९ )"—इत्यनवगतम् । "सदानोनुवे"—इति शब्दसमाधिः ॥ "अरायि काणे विकटे०—चातयामसि ॥ ( ऋ० सं० ८, ८, १३, १ )"—इति ॥ शिरिम्बिठस्य भारद्वाजस्य आर्षम् । अनुष्टुप् । दुर्भिक्षाधिदेवतोच्यते, कालकर्णा वा अलक्ष्मीः ॥ हे "अरायि" "अदायिनि !" दुर्भिक्षाधिदेवते ! अथवा—हे अलक्ष्मि ! दुर्भिक्षेण पीडितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याभिभूतानाम् । "काणे" दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति, अन्नाभावात्, अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते, लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति—सोच्यते । "विकटे" दुर्भिक्षे दुर्बलत्वात् विकटेव प्राणिनां गतिर्भवति, अलक्ष्मीरपि तद्रूपा ! "गिरिं" "गच्छ" माऽत्रावस्थानं कार्षीः । "सदान्वे" "सदानोनुवे शब्दकारिके" दुर्भिक्षे हि क्षुत्पीडिताः प्राणिनो निःश्वसन्तः सदैव शब्दं कुर्वन्ति, अलक्ष्मीरपि तद्रूपा,—पिशाचादीनि नित्यमव्यक्तं शब्दं कुर्वन्ति,—पिशाचाद्या हि शृणु नसुनायन्तस्येति[१] लोके वक्तारो भवन्ति, एतत् प्रसिद्धम् । "शिरिम्बिठस्य" मेघस्य स्वभूतैः "सत्त्वभिः" "उदकैः" "सत्त्वम्"—इति ह्युदकनामसु पठितम् । तैरुदकैर्वयं त्वां चातयामसि नाशयामः ॥ "चातयतिर्नाशने" प्रसिद्धः । प्रवातित इति हि लोकेऽपि श्रूयते । चतति, पतति इति गतिकर्मसु पठितम् । मेघोत्थैरेव ह्युदकैर्दुर्भिक्षं नाश्यते ॥ "अपि वा शिरिम्बिठो भारद्वाजः" "तस्य सत्त्वैः नामभिः" तेन यानि दृष्टानि नामानि, सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः ॥ एवमत्र शब्दार्थाविरोधात् "सदान्वे"—इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते ॥

१ 'सुणुनूसुनायन्तस्येति' ॥ २ 'अथवा' ॥

निगमप्रसक्तान्यधुनोच्यंते, "राति[1], रासति" इति दानकर्मसु पठितः, तस्य प्रतिषेधपूर्वस्य 'अरायि'–इति भवति ॥

"कणतिः, शब्दाणूभावे भाष्यते,–अनुकणतीति" "मात्राणूभावात्–कणः" श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्–काणः" । अथवा–"काणः = विक्रान्तदर्शनः–इत्यौपमन्यवः" विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात् । "काणः = आविक्रान्तदर्शनः"–इति वा, मन्दचक्षुष्ट्वात् ॥

"विकटः = विक्रान्तगतिः" विकृतगतिरित्यर्थः । अथ "वा" "कुटतेः" धातोः "स्यात्" असौ हि "विकुटितो भवति" कुब्जीभूत[2] इत्यर्थः ॥

"विठम्"–इत्यपठितमन्तरिक्षनामसु, तत् पुनरेतत् "बीरिटेन व्याख्यातम्" अत्र ह्युक्तम्,–(५।२८।१) "बीरिटमन्तरिक्षम्, भियो वा भासो वा ततिः" ॥ तस्मिन् "विठे" यः "शीर्यते" सः "शिरिम्बिठः (१२०) मेघः" । "अपि वा शिरिम्बिठो भारद्वाजः" सोऽनेन सूक्तेन "अलक्ष्मीः निर्णाशयाञ्चकार"–इति निदानमन्वाख्यातम् । अद्यापि योऽलक्ष्म्याभिभूतो भवति, स आस्यदघ्ने उदकेऽवतीर्य सूक्तमेतज्जपति, तस्यालक्ष्मीर्निर्णश्यति ॥ ६।३०।१ ॥

## पराशरः ॥ १२१ ॥

**पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे ॥**

**"पराशरः शतयातुर्वसिष्ठः ।" इत्यपि निगमो भवति ॥**

**इन्द्रोऽपि पराशर उच्यते । परा शातयिता यातूनाम् ॥**

**"इन्द्रो यातूनामभवत्पराशरः ।" इत्यपि निगमो भवति ॥ २ ॥**

"पराशरः (१२१)"–इत्यनवगतमनेकार्थं च । "पराशीर्णजः[3]"–इत्यवगमः ॥

"प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥ (ऋ० सं० ५, २, २८, १)"–इति ॥

वसिष्ठस्येयमार्षम् । ऐन्द्रे सूक्ते । त्रिष्टुप् । प्रकर्षेण 'ये' 'अममदुः' तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु । हे इन्द्र ! 'त्वाया' त्वया सह "पराशरः" च "शतयातुः" बहूनां रक्षसां यातयिता, तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते । "वसिष्ठः" च इत्येवमादयः । किं तेषाम् ? इति,–'न' 'ते भोजस्य' भोगिनः तव 'सख्यं'

---

१ 'रातीति दातीति' ॥ २ 'कुत्सीभूत' ॥ ३ 'र्णः' ॥

सखिभावं 'मृषन्त' मार्जयन्त नाशयन्तीत्यर्थः । 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः' 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः । तेषामेव सुप्रभाता रात्रय इत्यभिप्रायः । एवमत्र "ऋषिः = पराशरः" वसिष्ठसम्बन्धात् ॥

"इन्द्रोऽपि पराशर उच्यते" स हि "परा" परितः "शातयिता" "यातूनां" यातयितव्यानाम्, असुरादीनामिति ॥

"इन्द्रो यातूनामभवत्पराशरः ॥ ( ऋ० सं० ५, ७, ९, १ )"—इति ॥ व्याख्यातः शेषः ॥ ६ । ३० । २ ॥

## क्रिविर्दती ॥ १२२ ॥

### क्रिविर्दती विकर्त्तनदन्ती ।

### "यत्रा वो दिद्युद्रदति क्रिविर्दती ।" इत्यपि निगमो भवति ॥ ३ ॥ ३० ॥

"क्रिविर्दती ( १२२ )"—इत्यनवगतम् । "विकर्त्तनदन्ती"—इत्यवगमः ॥

"यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्त्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥ ( ऋ० सं० २, ४, २, १ )"—इति ॥

अगस्त्यस्येयमार्षम् । जगती । हे 'मरुतः !' 'उग्राः' उद्गूर्णाः, 'अरिष्टग्रामाः' अनुपहिंसितसङ्घाताः यूयम्, अस्माकं 'सुचेतुना' शोभनेन प्रज्ञानेन, एतां 'सुमतिं' शोभनां मतिम् 'पिपर्त्तन' पूरयत पालयत वा । केन पुनः पूरयत ? कुतो वा पूरयत ? इति,—"यत्रा वो दिद्युत्" । यत्र यस्मिन् मेघे दिद्युत् आयुधं क्षिप्तं युष्माभिः, तमेव मेघं "रदति" विलिखति, विदारयति वर्षार्थम् । किंलक्षणा पुनर्दिद्युत् ? इति, "क्रिविर्दती" विकर्त्तनसमर्थैः दन्तैः या रदति । कथं पुनर्या रदति ? "रिणाति पश्वः सुधितेव" इति । यथा पश्वः पशोः अङ्गानि रिणाति पृथक् करोति, सुधिता स्वधित्या, 'बर्हणा' परिवृद्धया हिंसया, एवमस्मिन् मेघे दिद्युदः ता रदन्ति । ततः प्रभ्रष्टेनोदकेन सुमतिमस्माकं पिपर्त्तन ॥ एवमत्रार्थाविरोधादायुधं "क्रिविर्दती"—शब्देनोच्यत इत्युपपद्यते ॥ ६ । ३० । ३ ॥

## करूळती ॥ १२३ ॥

### करूळती कृत्तदती अपि वा देवं कश्चित्कृत्तदन्तं दृष्ट्वैवमवक्ष्यत—॥

"करूळती ( १२३ )"—इत्यनवगतम् । "कृत्तदती" इत्यवगमः—॥*

---

१ 'प्रीणयत' ॥ * अत्र त्रिंशखण्डसमाप्तिर्दृश्यते, सा "करूळतीत्यनवगतम्" इत्यतः प्रागेवोच्चिताऽवगन्तव्या ॥

"वामं वामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूळती ॥"
वामं वननीयं भवति ॥
आदुरिरादरणात् ॥
तत्कः करूळती ? भगः पुरस्तात्तस्यान्वादेश इत्येकम् ।
पूषेत्यपरम् सोऽदन्तकः ॥
"अदन्तकः पूषा" इति च ब्राह्मणम् ॥ १ ॥

"वामं वामं त०–देवः करूळती ॥ ( ऋ० सं० ३, ६, २३, ४ )"–इति । वामदेवस्यार्षम् । ऐन्द्रे सूक्ते । अनुष्टुप् । रात्रिपर्याये प्रशास्तुः शस्त्रे विनियुक्ता ॥ "वामं वामम्"–इति भूयस्त्वार्थोऽभ्यासः, "अभ्यासे भूयांसमर्थं मन्यते"–इति हि वक्ष्यति । यद्यत् सुष्ठु "वननीयम्" इष्टम्, च 'ते' तव धनम्, तत्तत् हे "आदुरे" आदरवन् ! यजमान ! स हि यागं प्रति नित्यम् आहतो भवतीत्यत एवं सम्बोध्यते–हे आदुरे ! । "देवो ददात्वर्यमा" यदर्यम्णो "वाम" "वननीयम्" इष्टम्, आत्मनो धनम्, तत् असौ 'देवः' तुभ्यं ददातु । किञ्च, "वामं पूषा" ददातु । "वामं भगः" ददातु । "वामं देवः करूळती" ददात्वित्येतदेवानुवर्त्तते ॥

'करूळती'–इत्येतद् गुणपदत्वात् सन्दिह्यते, "तत्" एतत् विचार्यते–"कः करूळती ?"–इति । "भगः पुरस्तात्" "करूळती"–शब्दस्य । "तस्य" एवायम् "अन्वादेशः" सन्निधानसामर्थ्यात् ।–"इत्येकम्" आचार्यमतम् ॥ "पूषा–इति अपरम्" किं कारणम् ? "सः" हि पूषा "अदन्तकः" । आह–कुत एतत् इति, उच्यते–"अदन्तकः पूषा–इति च ब्राह्मणम्" । प्राशित्रभागब्राह्मणे हि श्रूयते,– "तत् पूष्णे पर्याजह्रुः, तत् पूषा प्राश्नात्, तस्य दतो निर्जघान, तस्मादाहुः,– अदन्तकः पूषा"–इति ॥ यत् पुनरेतदुक्तं सन्निधिसामर्थ्यात् भगः करूळती स्यादिति । अकारणमेतत्,–

स्थेनापि सः।

"यस्य येनार्थसम्बन्धो दूरस्थमपि तस्य तत् ॥
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्"–

इति न्यायविदः पठन्ति ॥ तस्मात् पूषैव "करूळती"–इत्युच्यते, शब्दसारूप्यादर्थोपपत्तेश्चेति ॥ ६ । ३१ । १ ॥

## दनः ॥ १२४ ॥

### "दनो विशं इन्द्र मृध्रवाचः ॥"

### दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु ॥ २ ॥

"दनः (१२४)"—इत्यनवगतम् । "दानमनसः"—इत्यवगमः ॥

"दनो विशं इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दत् ।

ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः॥(ऋ.सं.२,४,१६,२)"—इति॥

अगस्त्यस्येयमार्षम् । हे "इन्द्र !" "दनः" "दानमनसः" एव एतान् अस्मभ्यं "विशः" "मनुष्यान्" "कुरु" "मृध्रवाचः" "मृदुवाचः" । कस्मात् पुनरेवमुच्यते ? इतः,—'यत्' यस्मात् त्वम् 'सप्त' सप्ताः, 'पुरः' मेघपुरः, 'शारदीः' शरत्कालोत्थाः, संवत्सरोत्था वा । संवत्सरोऽपि हि शरदित्युच्यते,—"स जीव शरदः शतम्"—इति लिङ्गात् । 'शर्म' सुखमिच्छन् जनानां 'दत्' त्वं दारयसि । किञ्च, 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' अपगमितवानसि इमं लोकं प्रति 'अपः' । स्वभाव एवैष तव लोकाननुग्रहीतुमित्यभिप्रायः । किञ्च, "यूने वृत्रम्" । यौतिः स्तुत्यर्थः । स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे वृत्रं धनं 'रन्धीः' सम्पादितवानसीत्यर्थः । यत एवमुपकारे प्रवृत्तो भवान् स्तोतॄणामन्येषाञ्च जनानाम्, तस्मात् ब्रूमोऽस्माकमपि एतान् मृदुवाचः कुरु मनुष्यानिति ॥ एवमत्र "दनः"—इत्यस्मिन् पदे दकारे "दानमनसः"—इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, "न"—कारश्चास्मद्योगे विभज्योदाहृतः,तथार्थोपपत्तिदर्शनात् । "कुरु"—इत्येतच्चार्थपरिसमाप्त्यर्थमध्याहृतम् । उत्तरास्त्रयः पादा हेतुभावेन,"सप्त यत् पुरः"—इत्येतस्मात् सर्वनामसम्बन्धात्।६।३१।२॥

## शरारुः ॥ १२५ ॥

### "अवीरामिव मामयं शरारुरभिमन्यते ॥"

### अबलामिव मामयं बालोऽभिमन्यते संशिशरिषुः ॥ ३ ॥

"शरारुः (१२५)"—इत्यनवगतम् । "संशिशरिषुः"—इत्यवगमः ॥

"अवीरामिवमामयं शरारुरभिमन्यते ।

उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ (ऋ० सं० ८, ४, २, ४)"—इति ॥

पङ्क्तिः । ऐन्द्री । इन्द्रपत्नी एवं ब्रवीति—"अवीरामिव" "अबलामिव" अपरिग्रहामिव । "माम् अयं" "शरारुः" "बालः" मूर्खः "संशिशरिषुः" संशातुमिच्छन् शरीरं तित्यक्षुरित्यर्थः।"अभिमन्यते" अभिभविष्याम्येतामित्येव मन्यते,क्षुद्रया बुद्ध्या।नहुषोऽन्यो



संशिशरिषुः

वा कश्चित्, "नहुषेण हीन्द्राण्यभिभवितुमारब्धासीत्"—इत्याख्यानं श्रूयते। "उताहमस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी ? 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी,—'मरुत्सखा' यः 'इन्द्रः' 'विश्वस्मात्' सर्वस्माद् यश्च 'उत्तरः' जगतः उद्यततरः प्रभावेण, स मम वीरः, तदयं वालो न मन्यते, येन मामभिभवितुमिच्छतीत्यभिप्रायः ॥ एवमत्र "शरारुः=संशिशरिपुः" शब्दसारूप्यादर्थोपपत्तेश्च ॥ ६ । ३१ । ३ ॥

## इदंयुः ॥ १२६ ॥

## इदंयुरिदं कामयमानः ॥

## अथापि तद्वदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यत्रार्थः।

## "अश्वयुर्गव्यू रथयुर्वसूयुः"

## इत्यपि निगमो भवति ॥ ४ ॥ ३१ ॥

"इदंयुः (१२६)"—इत्यनवगतमनेकार्थं च। "इदं कामयमानः" इदमिनि यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। "युः"—इत्येष शब्दोऽप्रसिद्धः कामयतेरर्थे, तेनानवगतमेतत् स्यात्। "नानाधियो वसूयवः"—इत्यनेन गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति। वार्तिककारेणाप्युक्तम्,—"निगमवशादुत्कर्षं भवति पदम्" [न] तद्धितः,तथा धातुः,उपसर्गगुणः,निपाताश्च मन्त्रगताः सर्वथा लक्ष्याः॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थे भाष्यते"। आह—किमुदाहरणम् ? "वसूयुरिन्द्रः"—इति, "वसुमानित्यत्रार्थः" ॥

"इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। ध्यानीति पाठः।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षियति प्रयन्ता॥(ऋ.सं.१,४,११,४)"-इति॥

सव्यत्वमापन्नस्येन्द्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते ॥ 'इन्द्रः' 'आश्रायि' शृणाति, हिनस्तीत्यर्थः। 'सुध्यः' शुद्धविक्रमः, अजिह्मयोधी, अथवा—शोधयिता योधानां प्रहारैः, सुधीर्वा स्यात्। क्व पुनः शृणाति ? 'निरेके' संग्रामे यत्रैकोऽप्यन्यः सहायो नास्ति, तत्र एक एव शत्रून् हंति। 'पज्रेषु' प्रार्जितायुधेष्वपि पदेषु संग्रामेषु। किञ्च, 'स्तोमो न' स्तोम इव। यः प्रधानः त्रिवृत् स्तोमः, पञ्चदश इति हि व्यपदेशः, सोमे प्रभवति स्तोमेन तस्य प्राधान्यात्। किञ्च, 'यः इन्द्रः' 'दुर्यो न' दुर्य इव 'यूपः' यः प्रधानः। तस्य किम् ? इति,—स इन्द्रः "अश्वयुः" अश्वैस्तद्वान्। "गव्युः" गोभिः तद्वान्। "रथयुः" रथैस्तद्वान्। "वसूयुः" अन्नैर्वसुभिःतद्वान्। एवङ्गुणविशिष्टः यः इन्द्रः सः 'रायेषु' धनेषु जनानां दातव्येषु 'क्षियति', ईष्टे। 'प्रयन्ता' प्रकर्षेण दातेत्यर्थः॥एवमत्र 'वसूयुः'—इत्ययं 'यु'-शब्दः "तद्वदर्थे"।किंकारणम् ? न हीन्द्रो वसु कामयते,सुपूर्णत्वात्,परिशेषात् अयं "तद्वदर्थे भाष्यते"—इत्युपपद्यते॥६।३१।४॥*

१ 'बुध्यते' ॥ २ 'वद्वर्थम्' ॥ * अत्रैवैकात्रिंशखण्डसमाप्तिरवगन्तव्या ॥


+ क्षयतीति पाठः।

कीकटेषु ॥ १२७ ॥

"किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥"

किं ते कुर्वन्ति कीकटेषु गावः ॥

कीकटा नाम देशोऽनार्य्यनिवासः ॥

कीकटाः किंकृताः, किं क्रियाभिरिति प्रेप्सा वा ॥

नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यम् आहर नः प्रमगन्दस्य धनानि ॥

मगन्दः कुसीदी ॥

माङ्गदो मामागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः ॥

प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः ॥

पण्डको वा । पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति तस्तम्भे ॥

नैचाशाखं नीचाशाखो नीचैः शाखः ।

शाखाः शक्नोतेः । आणिररणात् ।

तन्नो मघवन्रन्धयेति रध्यतिर्वशगमने ॥ १ ॥ ३२ ॥

"कीकटेषु ( १२७ )"–इत्यनवगतम् । "किङ्कृताः"–इति शब्दसमाधिः, "किं क्रियाभिः—इति" "वा" । "किं ते कृण्वन्ति०—रन्धया नः ॥ ( ऋ०सं०३,३,२१,४ )" इति ॥ विश्वामित्रस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । हे इन्द्र ! याः "कीकटेषु" अनार्यदेशनिवासिषु मनुष्येषु "गावः" ताः "ते" तव "किम्" कमुपकारं "कृण्वन्ति" "कुर्वन्ति" ? न कञ्चिदपीत्यभिप्रायः । किं पुनः कारणं न कुर्वन्ति ? इति । "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि घर्मे तप्यमानेऽङ्गभावं गच्छन्ति, नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः । यत एवमतो ब्रूमः,–"आ भर हर नः" ताः गाः, वयं तव, ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः । किञ्च, यदाप्येतत् 'प्रमगन्दस्य' वृद्धिजीविनो धनम्, एतच्च तथा अस्मभ्यमाहर, तदपि न क्रियासु "तदर्थं" विनियुज्यते, वयं तद् विनियोक्ष्याम इत्यभिप्रायः । "प्रमदको वा" नित्यप्रमुदितोऽपि विषयपरः प्रमगन्दः स्यात् ।

"पण्डको वा" नपुंसकः प्रमगन्दः स्यात् । तयोर्वा धनानि क्रियासु न विनियुज्यन्ते, शब्दसारूप्यञ्च प्रमगन्दशब्दे उभयोरस्ति, तस्मात् तावप्युपपद्येते । "नैचाशाखं मघवन्रन्धया नः" । यदेतेषामन्यतमस्य नीचशाखाप्रसूतस्य नीचवंशप्रसूतस्य हीनकुलस्य दीनतुल्यस्य धनम्, तत् । हे मघवन् ! शीघ्रं रन्धय संसाधय अस्मद्वशं कुर्वित्यर्थः ॥

एवमत्र "कीकटाः" "किं कृताः" किमेते कृताः ? इत्येवमभिव्याहारमर्हन्ति, न तैः कश्चिदर्थोऽस्ति, न ते देवपितृमनुष्याणामुपकारं कुर्वन्तीत्यर्थः । अथ "वा" "किं क्रियाभिः?"–"इति" एवं "प्रेप्साः" ते नास्तिका एवमभिप्राया इत्यर्थः । एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च "कीकटाः=अनार्यदेशनिवासिनः"–इत्युपपद्यते ॥

"मगन्दः = कुसीदी"–इत्युच्यते, स हि "माम्"–इयात् अद्यतने इत्यर्थः, अयं च "आगमिष्यति"–इत्येवमनुचिन्त्य, परेभ्यो धनानि "ददाति" । "तदपत्यं प्रमगन्दः, अत्यन्तकुसीदिकुलीनः" तद्धितार्थे प्रः, प्रमगन्दः, 'प्रस्कण्वस्य'–इति यथा। "प्रमदकः" प्रमादशीलः,–"अयमेवैको लोकोऽस्ति, न परः"–"इति" एवं "प्रेप्सुः" नास्तिकः ॥

"पण्डकः ।" तृतीया प्रकृतिः, स हि "पण्डगः" पण्डं गच्छति, स्त्रीरूपत्वात् । "प्रार्दकः"–इति "वा" स्यात्, "प्र" प्रकर्षेण ह्यसौ "अर्दयति" अज्ञातैः[1] सह स्त्रीत्वेन गच्छति "आण्डौ"। कस्मात् तौ "आण्डौ"?"आणी इव व्रीडयति" तौ ह्यसौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्तमानःआणी इव व्रीडयति संस्तभ्नातीत्यर्थः[2] ॥ ६।३।२।१॥

## बुन्दः ॥ १२८ ॥

बुन्द इषुर्भवति ।

बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा–॥

"बुन्दः ( १२८ )"–इत्यनवगतम् । "इषुर्भवति"–इत्यभिधेयवचनम् । "भिन्दो वा भयदो वा भासमानो द्रवतीति वा"–इति शब्दसमाधयः ॥ *

"तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥"

तुविक्षं बहुविक्षेपं महाविक्षेपं वा ॥

ते सुकृतं सूमयं सुसुखं धनुः साधयिता ॥

ते बुन्दो हिरण्यय उभौ ते बाहू रण्यौ रमणीयौ सांग्राम्यौ वा॥

ऋदूपे अर्दनपातिनौ गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा॥

---

१ 'अज्ञानैः' ॥ २ 'संभ्रमतीत्य' ॥ * अत्रैव द्वात्रिंशखण्डसमाप्तेर्दृश्यते सा 'बुन्द इत्यनवगतम्' इत्यतः प्राक्[illegible] ॥

मर्मण्यर्दनवेधिनौगमनवेधिनौशब्दवेधिनौ दूरवेधिनौवा॥ १ ॥ ३ ३॥

"तुविक्षंतेसुकृतं–०दृदूवृधा ॥ ( ऋ० सं० ५, ६, ३०, १ ) "–इति ॥ 'निराविध्य०–स्वाततम् ॥ ( ऋ० सं० ६, ५, ३०, १ ) "–इति ॥ च कुरुस्तुतेरार्षमेतद्दृग्द्वयम् । ऐन्द्री । सतो बृहती पूर्वा, गायत्र्युत्तरा । हे इन्द्र ! "तुविक्षं" "बहुविक्षेपम्" बहूनां विक्षेपाणां–"सुकृतं" शोभनानि हि येन[1] कर्माणि क्रियन्ते तेम्, अथवा शोभनं कृतम्, "सूमयं" च सुखकरं सुहृदाम् । किं पुनस्तत् ? "धनुः" । किञ्च, "साधुर्बुन्दो हिरण्ययः" "साधयिता" स्तोमानां शत्रुसङ्घातानां वा बुन्दः इषुः हिरण्ययः हिरण्यविकृत इत्यर्थः । किञ्च, "उभा ते बाहू" उभावपि ते बाहू, "रण्या" "रमणीयौ" स्वायतौ पीनौ च, अथवा "सांग्राम्यौ" रणयोग्यौ, रण्यौ "सुसंस्कृतौ" समलङ्कृतौ, "ऋदूपे" "अर्दनपातिनौ" अर्दनेन हि गमनेन क्षेपणेन इषूणां तौ शत्रून् पातयतः । "ऋदूवृधा" ऋद्धिति मर्मोच्यते, तत्र यौ विध्येते तौ ऋदूवृधौ मर्मवेधिनावित्यर्थः । भाष्यमत्र न सम्यगिव लक्ष्यते, तस्य सम्यक् पाठोऽन्वेष्यः, ततो योज्यम् । एवमत्र धनुःसम्बन्धात् "बुन्दः = इषुः"–॥ *

"निराविध्यद्गिरिभ्य आधारयत्पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥"

निरविध्यद्गिरिभ्य आधारयत्पक्वमोदनमुदकदानं मेघम् ।
इन्द्रो बुन्दं स्वाततम् ॥ १ ॥

इदंत्वन्यत्स्फुटतरमुदाहरणम्–

"निराविध्य०–स्वाततम् ॥ (ऋ०सं०६,५,३०,१)"–इति ॥ "पक्वम्" बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, "इन्द्रः" "निराविध्यत्" । विद्धा च तावत् "आधारयत्" अदारयत् यावन्निरुदकः संवृत्त इति । कथं पुनर्निरविध्यत् ? इति,–"बुन्दं" "स्वाततम्" स्वाकृष्टमाकर्णात्कृत्वा ॥ एवमत्राकर्षणसम्बन्धात् "इषुः = बुन्दः"–इत्युपपद्यते ॥ ६ । ३३ । १ ॥ वृ

## वृन्दम् ॥ १२९ ॥

वृन्दं बुन्देन व्याख्यातम् ॥ २ ॥

"वृन्दम् ( १२९ )"–इति, एतत् पदम् "बुन्देन" एव "व्याख्यातम्" अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दस्य ॥ ६ । ३४ । १ ॥

---

१ 'तेन' ॥ २ 'तदेव वा' * अत्रैव त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते सा 'वृन्द इत्येतत्पदम्" इत्यतः प्रागेवोचिताऽवगम्यते ॥ ३ 'इत्यादे' ॥

## वृन्दारकश्च ॥ ३ ॥ ३४ ॥

"वृन्दारकश्च" 'बुन्देन' एव "व्याख्यातः" । हस्ती वृन्दारकः प्रकरणवशाद्वान्यः कश्चित् ॥ ६ । ३४ । २ ॥ *

## किः ॥ १३० ॥

"अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ॥ अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥"

अयंयोहोता कर्त्ता सयमस्यकमप्यन्नमभिवहतियत्समश्नुवन्तिदेवाः ॥ अहरहर्जायते मासेमासेऽर्द्धमासेऽर्द्धमासेवाथदेवानिदधिरेहव्यवाहं १

"किः (१३०)"—इत्यनवगतम् । "कर्त्ता"—इत्यवगमः "अयं यो होता॰—हव्यवाहम् ॥ (ऋ॰ सं॰ ८, १, १२, ३)"—इति ॥ सौचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्रेयं विश्वेदेवानामार्षम् "महत्तदुल्वम्" इति, इयं च । आग्नेय्यौ । "यः अयम्" अग्निः, "होता" आह्वाता देवानां पृथिवीस्थानः ! किं तस्य ? इति—"किः उ सः" "यमस्य" "कर्ता," यमस्य भगवत आदित्यस्य अग्नेर्हि सकाशात् प्रातरादित्यः प्रसूयते । तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्नोपतिष्ठन्त इति । "यस्मिन् वृक्षे सुपलाशे (ऋ॰ सं॰ ८, ७, २३, १)"—इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति । किञ्च, "कम् अपि ऊहे" "कमप्यन्नम् अभिवहति" । कम्—इत्यन्ननाम, अन्नमपि चायमेवाभिवहति । कतमत् ? "यत्" एतत् हविर्लक्षणं "समञ्जन्ति" "समश्नुवन्ति" "देवाः" । अञ्जतिरत्र प्रकरणवशाद् भोजनार्थः । किञ्च, अयमेव "अहरहः" अहन्यहनि अग्निहोत्रिणां गृहेषु उद्बोध्यमानो महान् "जायते" । "मासिमासि" जायते पितृयज्ञेषु, 'अर्द्धमासेऽर्द्धमासे" च दर्शपूर्णमासेषु च । यस्मादेवङ्गुणविशिष्टोऽयमग्निः, "अथ" एतस्मात् कारणात् एतमग्निं सर्वे "देवाः" "दधिरे" "निदधिरे" "हव्यवाहम्" हविषां वोढारमित्यर्थः । एवमत्र शब्दसारूप्यात् "यमस्य"—इत्येतस्माच्च षष्ठीयोगात् "किः"-इत्यस्य "कर्त्ता"-इत्येष विपरिणाम उपपद्यते ॥ ६।३५।१ ॥

## उल्बम् ॥ १३१ ॥

उल्बमूर्णोतेर्वृणोतेर्वा ।

"महत्तदुल्बंस्थविरं तदासीत्" इत्यपि निगमो भवति ॥ २ ॥ ३५ ॥

"उल्वम् (१३१)"—इत्यनवगतम् । "जरायु"—इत्यवगमः । "ऊर्णोतेः"—इति धातुनिर्देशः । "ऊर्णम्"—इति स्यात् । "वृणोतेर्वा" स्यात्, तेन हि गर्भ आवृतो भवति ॥

"महत्तदुल्वं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः ।

---

* अत्र चतुस्त्रिंशखण्डसमाप्तिरवगन्तव्या ॥ १ 'ऋचीक' ॥ २ 'तर्वोपति' ॥

विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः॥(ऋ.सं.८,१,१०,१)"-इति॥
"महत्" परिमाणतः, "तत्" "उल्बं" जरायु 'आसीत्' "स्थविरं" चिरन्तनञ्च "तदासीत्" 'येन' त्वम् 'आवेष्टितः' आवृतः, हे भगवन् ! अग्ने ! 'प्रविवेशिथ' प्रविष्टवानसि पूर्वम् आदिसर्गे 'अपः' किञ्च, 'विश्वाः' सर्वाः 'तन्वः' तव, हे 'जातवेदः !' 'बहुधा' अनेकेषु अभिधानेषु वर्त्तमानाः 'अपश्यत्' 'एकः देवः' प्रजापतिः, कोऽन्यस्ततः तव तनूनामन्तं वेत्तुमर्हतीत्यभिप्रायः ॥ एवमत्र"जरायुः" "उल्ब"–शब्देनोच्यते, आवेष्टनसम्बन्धादित्युपपद्यते ॥ ६ । ३५ । २ ॥

ऋबीसमृबीसम् ॥ १३२ ॥
इति द्वात्रिंशच्छतं पदानि ॥ ३ ॥
जहासस्निमाशुशुक्षणिस्त्रीणि ॥
॥ इति निघण्टौ चतुर्थोऽध्यायः ॥ ४ ॥

ऋबीसमपगतभासमपहृतभासमन्तर्हितभासं गतभा संवा–॥
'ऋबीसम्(१३२)'-इत्यनवगतम्।'अपगतभासम्'-इत्येवमाद्याः शब्दसमाधयः।'पृथिवी'-अभिधेया,सा हि कृष्णच्छाया।तस्मादपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यते–॥ *

"हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति॥"
हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम् ॥ गणो गणनाद्गुणश्च ॥
यद्धृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ[1] स्तौति स्तौति ॥ १ ॥ ३६ ॥

"हिमेनाग्निंघ्रंसमवारयेथां०–सर्वगणंस्वस्ति ॥ (ऋ० सं० १,८,९,३)"–इति ॥ कक्षीवत आर्षम् । त्रिष्टुप् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते । हे अश्विनौ ! "हिमेन" "उदकेन" अतिप्रवृद्धं "ग्रीष्मान्ते" "अग्निम्" अग्निवत्तीक्ष्णम् बलकरम् उपस्तरणाभिधारणात्मकं "घ्रंसम्" "अहः" लक्षणम्, इमान् लोकान् दिधक्षन्तमिव,

* अत्र पञ्चत्रिंशखण्डसमाप्तिर्दृश्यते परंतु सा 'ऋबीसम्–इत्यनवगतम्' इत्यतः प्रागुचिता: ॥ १ 'नैनौ' ॥

युवाम् "अवारयेथाम्" । वारयित्वा च 'पितुमंतीम्' "अन्नवतीम्" पुरोडाशाद्यन्नसहिताम् "ऊर्जम्" आज्यलक्षणाम्, युक्तम् "अधत्तम्" "अस्मै" "अग्नये" हविर्भाजे, वर्षानुग्रहपूर्विकया ओषधिनिष्पत्त्या । किञ्च, "ऋबीसे अत्रिमश्विनावनीतम्" युवामेव हे "अश्विनौ !" "योऽयम्" ऋबीसे "पृथिव्याम्" अग्निरनुप्रविष्टोऽन्तः, येनेमानि पृथिवीगर्भेषु उपनिहितानि तिन्दुकादीनि पच्यन्ते, यमवेक्ष्योक्तम्,–"ऋबीसपक्कं नाश्नीयात्" इति । "तम् उत् निन्यथुः" युवाम्, ओषध्याद्यन्तर्वर्त्तिनमोषध्यादिरूपेणैव । "सर्वगणं" "सर्वनामानम्" अग्निरेव ह्ययमनेनौषध्यादिरूपेणावस्थितः, सर्वैर्नामभिः अभिधीयते, अग्नेः सर्वोत्पत्तिदर्शनात्[1] । कम्पुनरर्थं पुरोधाय उन्निन्यथुः ? इति,–"स्वस्ति" स्वस्त्ययनायास्य जगतः, ओषध्याद्यभावेन हि सर्वमेव जगद्भङ्क्ष्यत[2] ॥ एवमत्र "ऋबीस"–शब्देन "पृथिवी"–इत्युच्यते ॥

"गणः, गणनात्" स हि गण्यते बहुसंयोगात् । "गुणश्च" गुणोऽपि गणनादेव, असावपि हि गण्यत एव,–द्विगुणः त्रिगुण इति । निगमप्रसक्तमेतदुक्तम् ॥

अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थमाह,–"यद्वृष्ट ओषधयः उद्यन्ति प्राणिनश्च पृथिव्याम् तदश्विनो रूपम्" सोऽश्विनोरधिकारः, तदश्विनोर्माहाभाग्यम् । "तेन" माहाभाग्यलक्षणेन रूपेण "एतौ" अश्विनौ मन्त्रदृक् "स्तौति" ॥६।३६।१॥*

( त्वंमग्नेऽलातृणउद्वृहाऽऽजासउपलप्रक्षिणीकाहरहमस्मेतेश्वायन्तइवाश्वंवहिसोमानंस्वरणमिन्द्रासोमाकृणुष्वपाजस्ताअध्वरेऽस्तिहिवोऽसूक्तैर्भवोच्छासुमस्तुअतुअयोअस्माअस्माइदुतन्नस्तुरीपंहिनोतानोमित्रोमात्वानपापासोयवंवृकेणजीवान्नोवर्तोवतासिधेनुंनोऽरायिकाणेवामंवामंकिन्तेतुविक्षन्तेनिरविध्यदयंयोहोता हिमेनाग्निं षट्त्रिंशत् ॥ )

## इति निरुक्ते पूर्वषट्के षष्ठोध्यायः ॥ ६ ॥

यावन्तो मन्त्राःसर्वशाखासु,तेषु यानि गुणपदानि लक्षणोद्देशतः,तानि सर्वाण्येव व्याख्यातानि॥

इति श्रीजम्बूमार्गाश्रमवासिनः आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तदीपिकाख्यायां निरुक्तवृत्तौ षष्ठा ( एकादशो ) ध्यायः समाप्तः ॥ ६ ॥

( नैगमं काण्डं पूर्वार्द्धश्च संपूर्णे )

---

१ 'सर्वत्रोपपत्तिदर्श'॥ २ 'द्रिनङ्क्ष्यति'॥ * इतोग्रे षट्त्रिंशखण्डसमाप्तिरवगन्तव्या॥ इति निरुक्तवृत्तौ षष्ठा(एकादशा) ध्यायस्य षष्ठः पादः॥ ६, ६॥इति चोपलभ्यते॥

---

पता–खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" स्टीम्–प्रेस–बम्बई.

# अथोत्तरषट्कम् ।

## दैवतं काण्डम् ।

## अथ सप्तमोऽध्यायः ७.

### हरिः ॐ ॥ अथातो दैवतम् ॥ १ ॥

समाप्तं चैकपदिकं प्रकरणम् । अस्यानु दैवतं तद्भवति, यस्यायमादिः "अथातो दैवतम्" इति । यावन्तो मन्त्राः सर्वशाखासु, तेषु यानि गुणपदानि लक्षणोद्देशतः, तानि सर्वाण्येव व्याख्यातानि द्वयोः प्रकरणयोः—नैघण्टुकैकपदिकयोः, संविज्ञातपदानि तु प्रधानस्तुतिभाग्देवताविषयाणि अग्न्यादीनि सर्वमन्त्रेष्ववशिष्यन्ते, तानि च पुनरमूनि समाम्नातान्यस्मिञ्छास्त्रे अग्न्यादीनि देवपत्न्यन्तानि । अतस्तद्व्याचिख्यासयेदमारभ्यते ।—"अथातो दैवतम्"—इति । "अथ"—शब्दोऽधिकारार्थः । "अतः" शब्दः क्रमे, हेतौ वा । प्रकरणद्वयादनन्तरमिदमवश्यं समाम्नायानुक्रमप्राप्तं व्याख्यातव्यमित्येवं क्रमे । 'दैवतमन्तरेण न शक्यो देवतापदार्थः सम्यगवबोद्धुम्, देवतापरिज्ञानानुबद्धस्त्वखिलः पुरुषार्थ इत्यतः, "दैवतं" प्रकरणं व्याख्यास्यामः—इति वाक्यशेषः॥एवं हेतौ॥७।१।१॥

### तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते ॥ २ ॥

आह—किं सतत्त्वं पुनस्तद्दैवतं प्रकरणम् ? इति, उच्यते—"तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते" । यानि नामानि प्राधान्यस्तुतीनाम् अग्न्यादीनां देवपत्न्यन्तानां देवतानां तत् दैवतं प्रकरणम् इति एवमाचार्याः आचक्षते॥ निरूढा ह्ययमेतस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः ॥ ७ । १ । २ ॥

### सैषा देवतोपपरीक्षा ॥ ३ ॥

"सैषा देवतोपपरीक्षा" । सा, या पुरस्तात् प्रकरणत्रयोपन्यासे—"नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति"—( १ । २० । २ ) "तद्यानि नामानि प्राधान्यस्तुतीनां

---

१ 'यतः' ॥

देवतानां तद् दैवतमित्याचक्षते, तदुपरिष्टाद् व्याख्यास्यामः"-इति (१।२०।६) प्रतिज्ञाता।सा इदानीं प्रकरणद्वये निर्णिक्ते यथाप्रकरणोपन्यासेनैवावसरप्राप्ता,सामान्यविशेषतः स्वलक्षणसतत्त्वोपपत्तिभिरेकैकस्या देवताया उपगम्योपगम्यपरीक्षा,वर्त्तिष्यतइति वाक्यशेषः॥

इदमिहोक्तम्-प्राधान्यस्तुतिभाञ्जि यानि देवताभिधानानि, तत्समुदायो दैवतं प्रकरणम्, तद् व्याख्यास्यामः इति। तस्य पुनरियमेव समासतो व्याख्या यद्देवतोपपरीक्षणम्, तद-भिधानव्युत्पात्ती-तत्स्तुत्युदाहरण-तन्निर्वचनानि ॥ ७ । १ । ३ ॥

## यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुंक्ते तद्दैवतः स मन्त्रो भवति ॥ ४ ॥

तत्पुनरेतत् सर्वमपि मन्त्राधिदैवतलक्षणमनुक्त्वा न शक्यं व्याख्यातुम्, मन्त्राधीन-त्वात् सर्वस्यास्य, अतो मन्त्रदेवतालक्षणविदिधारयिषया ब्रवीति,-"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति"। यदर्थवस्तु कामयमानः, ऋषिः यस्यां देवतायाम् अभिष्टुतायाम्,आर्थपत्यम् अर्थपतिभावमात्मनः इच्छन् अमुष्याः देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते, "तद्दैवतः" एव "स मन्त्रः" अर्थात् भवति। एतत् मन्त्रे देवतालक्षणम्। एतेन लक्षणेन सर्वमन्त्रेषु देवतोपलक्ष्या ॥ अथवा देवतायामस्यार्थस्येयं देवता दातुं समर्थेति जानानः स्तुतिं प्रयुङ्क्ते येन मन्त्रेण, सा प्राधान्यस्तुतिभाग्देवता। सा पुनरियं स्तुतिः चतुर्विधा,-नाम्ना, वन्धुभिः, कर्मणा, रूपेणेति, "स्तुतिर्नामरूपकर्म-वन्धुभिः"-इत्युक्तम् ॥ ७ । १ । ४ ॥

## तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्या-त्मिक्यश्च ॥ ५ ॥

ऋच एव हि प्रायेणातितरामपिहितार्थाः, न तथा यजूंषि। तासु हि विज्ञातासु यजूंष्यपि विज्ञातान्येव भवन्ति।तस्मादृच एव पुरस्कृत्य ब्रवीति,-"तास्त्रिविधा ऋचः"-इति। याः काश्चन सर्ववेदेषु ऋचः ताः सर्वा अपि त्रिविधाः एव भवन्ति ॥ तद्यथा,-"परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च"-इति ॥ ७ । १ । ५ ॥

## तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपु-रुषैश्चाख्यातस्य ॥ ६ ॥ १ ॥

---

१ 'मन्त्राभिदैव' ॥ २ 'यतोमन्त्र' ॥ ३ 'निर्दिधारयिषया' इति पाठो भवेत् 'लक्षणाव-दिधारयिषया' इति त्वशुद्धः पाठः। ४ 'सर्वदेवेषु ऋचः' 'सर्ववेदिष्वृचः' ॥

तत्त्रैविध्यं सामान्यत उद्दिश्य अधुना प्रत्येकं लक्षणतो ब्रवीति, उदाहरणैश्च दर्शयति । 'तत्र' तस्मिन् त्रैविध्ये परोक्षकृतानामृचामेतल्लक्षणं भवति,—"तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य" ॥ ७ । १ । ६ ॥ *

## "इन्द्रो दिव इन्द्र ईशे पृथिव्याः" ॥ १ ॥

तत्रथैनान्युदाहरणानि आनुपूर्व्येणैव सप्तस्वपि विभक्तिषु इन्द्रो दिव इत्येवमादीनि,—

"इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ ( ऋ० सं० ८, ४, १५, ५ )"—इति ॥

रेणोर्वैश्वामित्रस्येयमार्षम् । ऐन्द्री । त्रिष्टुप् । सूर्यस्तुत्येकाहे निष्केवल्ये विनियुक्ता ॥ "इन्द्रो दिवः" "ईशे" ईष्टे । "इन्द्रः" एव "पृथिव्याः" ईष्टे । 'इन्द्रः' एव 'अपाम्' ईष्टे वर्षकर्मादिना । 'इन्द्रः' एव 'पर्वतानां' मेघानाम् ईष्टे । 'इन्द्रः' एव 'वृधाम्' अतिप्रवृद्धानामपि भूतानामीष्टे । 'इन्द्रः' एव च 'मेधिराणां' यज्ञैस्तद्वतामीष्टे । 'इन्द्रः' एव हि 'योगे' अर्थसंयोगे प्राप्तव्ये, 'क्षेमे' च परिपालने कर्त्तव्ये 'हव्यः' आह्वातव्यः । नान्यः कश्चित्समर्थ एतत्कर्त्तुमित्यभिप्रायः । प्रथमायामेतदुदाहरणम् । "इन्द्र"—इत्येतस्मादुपपदात् 'ईशे'—इत्येषप्रथमपुरुष इति प्रतीयते, नोत्तमपुरुष इति ॥ (ईष्ट इत्यस्य स्थाने)

## "इन्द्रमिद्गाथिनो बृहत्" ॥ २ ॥

"इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥ ( ऋ० सं० १, १, १३, १ )"—इति ॥

मधुच्छन्दस आर्षम् । महाव्रते महदुक्थे शिरसि शस्यते॥ हे "गाथिनः" सामगाः ! "इन्द्रमित्" इन्द्रमेव यूयं बृहता साम्ना अभिष्टुत । यूयमपि हे होतारः ! 'आर्किणः' 'अर्केभिः' अर्कैर्ऋङ्मयैर्मन्त्रैरिन्द्रमेवाभिष्टुत । यूयमपि च हे अध्वर्यवः ! इन्द्रमेव 'वाणीः' वाणीभिः वाग्भिर्यजुर्मयीभिः 'अनूषत' अभिष्टुत ॥ द्वितीयायामेतदुदाहरणम् ॥

## "इन्द्रेणैते तृत्सवो वेविषाणाः" ॥ ३ ॥

"इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥ ( ऋ० सं० ५, २, २६, ५, )"—इति ॥

---

* इतोऽग्रे प्रथमखण्डसमाप्तिलेखो द्रष्टव्यः ॥ १ तृतीयार्थे द्वितीयान्तः प्रयोगः ॥

तृतीयायामेतदुदाहरणम्[1] । व्याख्यातः शेषः ॥

## "इन्द्राय साम गायत" ॥ ४ ॥

"इन्द्राय साम गायत विप्राय बृहते बृहत् ।
धर्मकृते विपश्चिते पनस्यवे ॥ ( ऋ० सं० ६, ७, १, १ )"-इति ॥

नृमेधस आर्षम् । सात्रिकेष्वहःसु स्तोत्रियानुरूपवर्गे तृतीयसवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ॥ हे उद्गातारः ! "इन्द्राय" 'बृहत्' "साम" "गायत" 'विप्राय' मेधाविने 'बृहते' महते 'धर्मकृते' कृतधर्मणे[2] 'विपश्चिते' विदुषे 'पनस्यवे' पन इच्छते, आत्मनः स्तुतिमिच्छते । चतुर्थ्यामेतदुदाहरणम् ॥

## "नेन्द्रादृते पवते धाम किञ्चन" ॥ ५ ॥

"सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किञ्चन ॥ ( ऋ० सं० ७, २, २२, १ )"-इति ॥

रेणोर्वैश्वामित्रस्येयमार्षम् । पावमानी सौमी । जगती ॥ यथा 'सूर्यस्य' 'रश्मयः' तमसां 'द्रावयित्नवः' द्रावणशीलाः, एवमेते 'मत्सरासः' सोमाः, पापानां द्रावणशीलाः । किञ्च, 'प्रसुपः' प्रसूता एतैर्ऋत्विग्भिः 'साकम्' इन्द्रं प्रति 'ईरते' गच्छन्ति इत्यर्थः । गत्वा च 'तन्तुं ततं' तन्तुमिव तन्त्ववयवाः 'परिसर्गासः' 'आशवः' परिसृताः 'यथा' व्याप्नुवन्ति, एवमेतं पातारमिन्द्रं स्वामिनं प्रत्यश्नुवन्ति व्याप्नुवन्तीत्यर्थः । कस्मात् पुनरेवं ब्रूमः ? इतः-यस्मात् "नेन्द्रादृते" सोमः[3] प्रातःसवनादीनां सोमसवनस्थानानां "किञ्चन" किञ्चिदपि "धाम" "पवते" पूयते । तस्मादेवं ब्रूमहे,-इन्द्रमेवैते व्याप्नुवन्तीति । पञ्चम्यामेतदुदाहरणम् ॥

## "इन्द्रस्य नु वीर्याणि प्रवोचम्" ॥ ६ ॥

"इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ( ऋ० सं० १, २, ३६, १ )"-इति ॥

हिरण्यस्तूपस्येयमार्षम् । निष्केवल्ये शस्यते ॥ "इन्द्रस्य" अहं "वीर्याणि" वीरकर्माणि "प्रवोचम्" । 'यानि' 'चकार' 'प्रथमानि' अकृतपूर्वाणि अन्यैः । 'वज्री' वज्रसंयुक्तः । 'अहन् अहिम्' घ्नन् मेघम् । 'अनु ततर्द अपः' वर्षार्थे[4] पुनः पुनश्च 'प्राभिनत्' । 'वक्षणाः' उदकवहनशिराः 'पर्वतानाम्' मेघानाम् । एवमादीनि वीर्याण्यहमिन्द्रस्य प्रवोचमिति । षष्ठ्यामेतदुदाहरणम् ॥

---

१ 'तृतीयस्या उदाहरणम्' ॥ २ 'कृतधर्मिणे' ॥ ३ 'क्रमः' ॥ ४ 'र्षार्थाः' ॥

## "इन्द्रे कामा अयंसत" इति॥ १ ॥

"इन्द्रे कामा अयंसत दिव्यासः पार्थिवा उत।
त्यमूषु गृणता नरः॥"—इति॥

हे स्तोतारः! ये दिव्याः कामाः, ये च पार्थिवाः, ते इन्द्रे एव उपनिबद्धाः, तं प्रार्थयत, स हि कामानामीष्टे। 'त्य मू षु' तं सुष्ठु कामप्राप्त्यर्थं 'गृणत' स्तुत, हे 'नरः!'। सप्तम्यामेतदुदाहरणम्॥ ७। २। १॥

## अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना २॥

"अथ प्रत्यक्षकृता मध्यमपुरुषयोगाः, त्वमिति चैतेन सर्वनाम्ना"। उक्तं परोक्षकृतमन्त्रलक्षणं सोदाहरणम्॥ अधुना प्रत्यक्षकृतमन्त्रलक्षणमुच्यते, तदधिकारार्थोऽयम् 'अथ' शब्दः। मध्यमपुरुषयोगाः मध्यमेन पुरुषेण संयुक्ता ये मन्त्राः, ते प्रत्यक्षकृताः। त्वमिति चैतेन सर्वनाम्ना संयुक्ताः, ते च प्रत्यक्षकृताः। यत्र त्वमित्येवं श्रूयते, तत्राविद्यमानोऽपि मध्यमः पुरुषोऽध्याहार्यः। यत्र तु मध्यमः पुरुषः श्रूयते, तत्राविद्यमानमपि "त्वम्"—इत्येतत् सर्वनामाध्याहार्यम्, सम्बन्धिशब्दत्वादनयोः॥ ७। २। २॥

## "त्वमिन्द्र बलादधि।"
## "वि न इन्द्र मृधो जहि" इति॥ ३॥

"त्वमिन्द्र बलादधि" "वि न इन्द्र मृधो जहि"—"इति" चैते उदाहरणे—

"त्वमिन्द्र बलादधि सहसो जात ओजसः।
त्वं वृषन्वृषेदसि॥ (ऋ० सं० ८, ८, ११, २)"—इति॥

देवजामयः सूक्तं ददृशुः। तत्रेयं महारात्रिके पर्याये प्रशास्तुः स्तोत्रे विनियुक्ता॥ हे "इन्द्र!" "त्वम्" "बलादधि" 'जातः' 'सहसा' अभिभवसमर्थात्, 'ओजसः' च तेजसः। किञ्च, त्वं हे 'वृषन्' वर्षितः! 'वृषा असि' वर्षिता असीत्यर्थः॥

"वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।
यो अस्माँ अभिदासत्यधरं गमया तमः॥ (ऋ० सं ८, ८, १०, ४)"—इति॥

शासस्य भारद्वाजस्येयमार्षम्। वैमृधस्य हविषो याज्या॥ हे "इन्द्र!" "वि-जहि" "नः" एतान् "मृधः" मृधकर्तॄन् शत्रून्। किञ्च, 'नीचा' नीचैः 'यच्छ' तान्। 'पृतन्यतः' येऽस्माभिः सह पृतन्यन्ति, पृतनां कर्तुमिच्छन्तीत्यर्थः। किञ्च, योऽस्मान् 'अभिदासति' अभ्युपक्षपयितुमिच्छतीत्यर्थः। तम् 'अधरं' 'तमः' 'गमय' नाशयेत्यर्थः॥ ७। २। ३॥

अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि ।

"मा चिदन्यद्विशंसत ।"

"कण्वा अभि प्रगायत ।"

"उपप्रेत कुशिकाश्चेतयध्वम्" इति ॥ ४ ॥

"अथापि क्वचित् प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि"। युष्मत्प्रयोगैर्हि क्वचित् स्तोतारः सम्बोध्यन्ते[1] ॥

(तद्यथा,)—"मा चिदन्यद् विशंसत"—"कण्वा अभि प्रगायत" "उप प्रेत कुशिकाश्चेतयध्वम्"—"इति" चैतान्युदाहरणानि ।—

"मा चिदन्यद्विशंसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ (ऋ० सं० ५, ७, १०, १)"—इति ॥

प्रगाथस्येयमार्षम् । बृहती । तृचाशीतिषु विनियुक्ता ॥ हे स्तोतारः ! 'सखायः !' "मा" "अन्यत्" किं "चित्" अपि "विशंसत" विविधाभिः स्तुतिभिः । 'मा' च 'रिषण्यत' चेतसामागच्छत अन्यद् देवतान्तरम् । किं तर्हि ? 'इन्द्रम् इत्' इन्द्रमेव 'वृषणं' वर्षितारं 'स्तोत' स्तुत । 'सचा' सहभूताः, एतस्मिन् 'सुते' सोमे । 'मुहुः' मुहुश्च हे होतारः ! 'उक्था' उक्थानि 'च' 'शंसत' ॥

"क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् ।
कण्वा अभि प्रगायत ॥ (ऋ० सं० १, ३, १२, १)"—इति ॥

कण्वस्येयमार्षम् । कैळीनस्य हविषो याज्या ॥ 'क्रीळं' शत्रूनपि दृष्ट्वा यत् क्रीडनशीलमेव 'मारुतं' 'शर्द्धः' बलम्, 'अनर्वाणम्' अनाश्रितमन्यत्र, स्वप्रभावयुक्तमेवेत्यभिप्रायः, 'रथेशुभं' रथे स्थितं शोभिष्ठम्, हे "कण्वाः" मेधाविनः ऋत्विजः ! एतत् "अभिप्रगायत" एतत् 'वः' ब्रवीमि ॥

"उपप्रेत कुशिकाश्चेतयध्वमश्वं राये प्रमुञ्चता सुदासः ।
राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः ॥ (ऋ० सं० ३, ३, २१, १)"—इति ॥

---

[1] 'संबोध्यन्ते' ॥

विश्वामित्रस्येयमार्षम् ॥ हे "कुशिकाः" स्तुतिक्रोष्टार ऋत्विजः ! "उपप्र" "इत" गच्छत । "चेतयध्वम्" विजानीध्वमेतत्—यथैष 'राजा' 'वृत्रं' शत्रुं 'जङ्घनत्' हतवान्, सर्वासु दिक्षु, 'अथ' एवं सर्वहन्ता अमित्रो भूत्वा 'वरे' श्रेष्ठे प्रदेशे 'पृथिव्याः' 'यजाते' ते यजते । यूयमेतद् विज्ञाय उपप्रगच्छत । उपप्रगत्य चैतमाश्वमेधिकम् 'अश्वम्' 'प्रमुञ्चत' उत्सृजत, विधानतः प्रोक्ष्याश्वमेधयागाय । योऽयमेतस्मिन् "सुदासे"—कल्याणदाने यजमाने वर्त्तते ॥

एवमेतेषु युष्मद्गुणपदप्रयोगेषु सम्बद्धाः स्तोतारः । स्तोतव्यानि तु यानि देवतान्तराणि तानि परोक्षकृताभिसम्बन्धीनि । एवंलक्षणं मन्त्रजातमुपेक्षितव्यम् ॥ ७ । २ । ४ ॥

## अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना५॥

"अथाध्यात्मिक्य उत्तमपुरुषयोगाः अहमिति चैतेन सर्वनाम्ना" उत्तमेन पुरुषेण या ऋचो युक्ताः, ता आध्यात्मिक्यः । "अहमिति चैतेन सर्वनाम्ना" या युक्ताः, ताश्च आध्यात्मिक्यः । अत्रापि यत्राहमित्येतत् सर्वनाम श्रूयते, तत्राविद्यमानमपि ह्युत्तमपुरुषसम्बद्धमाख्यातपदमध्याहर्त्तव्यम्, यत्र चोत्तमपुरुषसम्बद्धमाख्यातपदं श्रूयते, तत्राविद्यमानमपि 'अहम्'—इत्येतत् सर्वनाम अध्याहार्यम्, सम्बन्धिशब्दत्वादनयोः ॥ ७ । २ । ५ ॥ विकुण्ठायाः अपत्यं पुमान्-

## यथैतदिन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीयमिति ॥ ६ ॥ २॥

"यथा एतत्"उदाहरणत्रयमाध्यात्मिकम्,—"इन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीयमिति" एवमादि । एवमप्यन्येऽप्याध्यात्मिका मन्त्रा उपेक्षितव्याः ॥

विकुण्ठा नाम आसुरी बभूव, तस्याः किल तपसः प्रभावेणापत्यत्वमिन्द्र आजगाम, स वैकुण्ठो नाम बभूव । तस्यात्मस्तुतिसंयुक्तमेवमादि ब्रह्म प्रादुरभूत्,—

"अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि संजयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम् ॥ (ऋ० सं० ८, १, ५, १)"—इति ॥

'अहम्' एव 'भुवम्' अभवम् 'वसुनः' धनस्य 'पूर्व्यः' प्रथमः 'पतिः' । किञ्च, साम्प्रतमप्यहमेव पतिः । 'अहम्' एव च शत्रुभ्यः सकाशात् समस्तानि 'धनानि' 'संजयामि' । 'शश्वतः' नित्यकालमेव । किञ्च, 'माम्' एव 'हवन्ते' आह्वयन्ति 'पितरं न' पितरमिव, तासु तास्वार्तिषु 'जन्तवः' मनुष्याः । किञ्च, 'अहम्' एव 'दाशुषे' दत्तवते हवींषि, यजमानाय 'विभजामि' यथार्हं 'भोजनम्' धनमित्यर्थः ॥

१ 'सर्वहताभित्रोभूत्वा' ॥

"इति वा इति मे मनो गामश्वं सनुयामिति ।
कुवित्सोमस्यापामिति ॥ ( ऋ० सं० ८, ६, २६, १ )"—इति ॥

लवसूक्ते स एव लवो ब्रवीति,—'इति वा इति' एवञ्चैवञ्च 'मे मनः' वर्त्तते। आह—कथम्? इति। उच्यते—'गामश्वम्' गां च अश्वं च 'सनुयाम्' सम्भोजयेयम् एतान् यजमानान् 'इति'। अथैवमतितरां प्रत्युपकाराभिप्राये सति किमर्थं ब्रूते? 'कुवित्' बहु अहं 'सोमस्य अपाम् इति' ॥

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ ( ऋ० सं० ८, ७, ११, १ )"—इति ॥

वागाम्भृणीये वागेव ब्रवीति। 'अहम्' एव 'रुद्रैः' 'वसुभिः' 'आदित्यैः' 'विश्वदेवैः' विश्वैश्च देवैः सह भूता 'चरामि' स्तुतिरूपेण। 'अहम्' एव 'मित्रावरुणा' मित्रावरुणौ 'उभा' उभावपि, 'इन्द्राग्नी' 'अश्विना' अश्विनौ च 'उभा' उभावपि 'बिभर्मि' हविषा, मत्पूर्वकं हविःसम्प्रदानं सर्वदेवताभ्य इत्यभिप्रायः ॥ ७। २। ६ ॥ *

**परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिकाः ॥ १ ॥**

"परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः" शाखान्तरेषु बहवः ॥ "अल्पशः" क्वचित् "आध्यात्मिकाः" लक्ष्यन्ते। आत्मानमेव स्तोतव्यमधिकृत्य येऽभिव्यक्तास्त इह शास्त्रे आध्यात्मिका उच्यन्ते ॥ ७। ३। १ ॥ according to the division of the subject-matter

**अथापि स्तुतिरेव भवति नाशीर्वादः** not blessing is sought
**"इन्द्रस्य नु वीर्याणि प्रवोचम्" इति यथैतस्मिन् सूक्ते ॥ २ ॥**

"अथापि" क्वचित् "स्तुतिरेव भवति" "नाशीर्वादः" तत्र पुनराशीर्योज्या। किं कारणम्? आशिषो ह्यर्थे स्तुतिः प्रयुज्यते ॥ आह—किमुदाहरणम्? इति। उच्यते—"इन्द्रस्य नु वीर्याणि प्रवोचमिति यथैतस्मिन् सूक्ते" ( ऋ० सं० १, ७, २, १ )। अत्र हि स्तुतिरेव श्रूयते, नाशीः, सा पुनर्योज्येति प्रतिपादितम् ॥ ७। ३। २।

**अथाप्याशीरेव न स्तुतिः सुचक्षा अहमक्षीभ्यां सुवर्चा** good looks
**मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति ॥**
**तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु ॥ ३ ॥**

---

* अत्रैव द्वितीयखण्डसमाप्तिरवगन्तव्या ॥



आशीरत्र विवक्षिते नोमाल्लरम्-

"अथापि" क्वचित् "आशीरेव, न स्तुतिः" । तद्यथा,—"सुचक्षा अहमक्षीभ्यां सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति"—"तदेतत्" एवंलक्षणं मन्त्रजातम् "आध्वर्यवे" वेदे "बहुलं" प्रायेण दृश्यते[1] । "याज्ञेषु च मन्त्रेषु" कार्यकरणेष्वितरयोरपि[2] वेदयोरिष्टाशीरेव भवति, न स्तुतिरेव केवला, यत्राप्याशीरेव केवला, तत्रापि तस्यार्थस्य या देवतेष्टा, तस्याः स्तुतिर्योज्या । किं कारणम्? न ह्यनभिष्टुता देवता आशिषं समर्द्धयति ॥ ७ । ३ । ३ ॥

## अथापि शपथाभिशापौ ॥
## "अद्या मुरीय यदि यातुधानो अस्मि ॥"
## "अधा स वीरैर्दशभिर्वियूया" इति ॥ ४ ॥

"अथापि शपथाभिशापौ" भवतः । "अद्या मुरीय०—इति"—इत्येकमुदाहरणं द्वयोरपि । वसिष्ठः किल 'राक्षसस्त्वम्'—इत्यभियुक्तः, सोऽनयर्चा शपथं प्रतिपेदे, परं चाभिशशाप ।

"अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य । अधा स वीरैर्दशभिर्वियूया यो मा मोघं यातुधानेत्याह ॥ (ऋ० सं० ५, ७, ७, ५, )"—इति ॥

"अद्या मूरिय" अद्यैवाहं म्रिये, "यदि यातुधानः" "अस्मि" स्याम् । 'यदि वा' 'आयुः' 'ततप' तप्तवानहं कस्यचिदपि 'पुरुषस्य' । अथ पुनरयातुधानमेव मां सन्तं यो मोघमनृतं यातुधानस्त्वमित्येवमाह, 'सः' 'वीरैः' पुत्रैः 'दशभिः' 'वियूयाः' वियूयात् वियुज्यतामित्यभिप्रायः ॥ ७ । ३ । ४ ॥

## अथापि कस्यचिद्भावस्याचिख्यासा ॥
## "न मृत्युरासीदमृतं न तर्हि ॥"
## "तम आसीत्तमसा गूह्ळमग्रे" ॥ ५ ॥

"अथापि कस्यचित्" "भावस्यं" अर्थस्य "आचिख्यासा" मन्त्रेषु भवति ।

"न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥ (ऋ० सं० ८, ७, १७, २ )"—इति ॥



१ 'पठ्यते' ॥ २ 'कर्मकरणेष्वि' ॥

प्रजापतेः परमेष्ठिन आर्षम् । तम आसीदितीयञ्च । त्रिष्टुप् । भाववृत्तम् । "तर्हि" प्रागुत्पत्तेरस्य जगतः "मृत्युः" इत्ययं व्यपदेशः "नासीत्" मर्त्त्यस्याभावात् । "न" अपि "अमृतम्" इत्ययं व्यपदेश आसीत्, मृत्योरभावादेव । इतरेतरापेक्षया हि मृत्युश्चामृतं च व्यपदिश्येते । 'न' एव 'रात्र्याः' 'प्रकेतः' प्रज्ञानम् 'आसीत्' इयं रात्रिरिति । नापि 'अह्नः' । एते अपि ह्यहोरात्रे यतो भगवतो विवस्वत उदयास्तमयाभ्यामुपलक्ष्येते, तदभावे ह्येते अपि नास्तामित्येतदुपपद्यते । आह–अथ किमासीत् ? इति । उच्यते–अविशिष्टमप्रज्ञातम् 'एकम्' एव सर्वशक्तिमत् ब्रह्म आसीत्, तत् कार्य्यकारणाभावात् 'अवातम्' 'आनीत्' अनिति प्राणितीत्यर्थः, सति हि कार्य्यकारणभावे परमात्मनि या प्राणनशक्तिः सा पञ्चधा भिद्यमाना प्राणापानादिभावमापद्यते, तदभावे न वातोऽस्तीति अवातमनितीत्युपपद्यते । 'स्वधया' अन्नेन अस्मिन्नेव परमात्मनि या अत्र शक्तिः, तया निमित्तभूतया प्राणितीत्यवशिष्यते 'तत्' ब्रह्म ॥ आह–किमन्यदपि ततः परस्तात् किञ्चिदासीत् ? नेत्युच्यते–'तस्मात् ह अन्यत्' 'न' 'परः' परस्तात् 'किञ्चन आस' किञ्चिदप्यासीत् । इदमेव तावदतिक्रान्तसर्वविशेषं ब्रह्म व्यपदेष्टुमशक्यमतोऽपि परस्तात् किमन्यद् भविष्यतीत्यभिप्रायः ॥

द्वितीयमुदाहरणमाचिख्यासायामेव ।

"तम॑ आसी॒त्तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त्तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैक॑म् ॥ ( ऋ० सं० ८, ७, १७, ३ )"–इति ॥

"तम आसीत्" अन्धेनैव "तमसा" "गूळ्हम्" निगूढम् अविशिष्टम् 'अप्रकेतम्' अप्रज्ञातम् "अग्रे" प्राक् सृष्टेरित्यर्थः, तदा हि न द्रष्टा, न दर्शनम्, नापि दृश्योऽर्थ आसीदित्याभिप्रायः । सांख्यास्तु–तमःशब्देन प्रधानसौम्यापन्नं गुणत्रयमुच्यमानमिच्छन्ति, ते हि परमार्षं सूत्रमधीयते–"तम एव खल्विदमग्रे आसीत्" "तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्त्तत"–इति । 'सलिलं' सद्भावे लीनं 'सर्वमिदं' जगत्, सन्मात्रस्यैव भावस्योपरि लीनमासीत् । 'तुच्छ्येन' तुच्छेन सूक्ष्मीभूतेन पटसण्डपस्थानीयेन कर्मणा 'यत् अपिहितम्' इदमेव जगत् 'आसीत्' सर्गकालापेक्षितमनादिमत्त्वात् संसारस्य । 'तपसः' तस्यैव कर्मणः 'माहिना' महिम्ना माहाभाग्येन कारणावस्थायाम् 'एकम्' अपि 'सत्' अनेकधा उपस्थिते सर्गकाले प्रतिनियतकर्मोपभोगार्थम् 'अजायत' इति ॥ ७ । ३ । ५ ॥

---

१ 'मुपादानमुच्य' ॥ २ 'मार्थसूत्र' ॥

अथापि परिदेवना कस्माच्चिद्भावात् ॥

"सुदेवो अद्य प्रपतेदनावृत् ॥"

"न विजानामि यदि वेदमस्मि" इति ॥ ६ ॥

"अथापि परिदेवना, कस्माचित् भावात्,—'सुदेवो अद्यप्रपतेदनावृत', 'न विजानामि यदि वेदमस्मि'—इति" । उदाहरणे ।

"सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ । अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥ ( ऋ० सं० ८, ५, ३, ४ )"—इति ॥

पुरूरवस आर्षम् । त्रिष्टुप् । परिदेवना ॥ "सुदेवः" स शोभनो देवः स्यात्, यो ह्यनया प्रियया उर्वश्या वियुक्तो भृगुप्रपातम् "अनावृत्" अनावर्त्तमानः "अद्य प्रपतेत्" । 'परावतं परमां गन्तवै ऊम्' पतितश्च दूरात् दूरतरं गच्छेत्, अद्य अथ गत्वा 'शयीत' मृतः सन् 'निर्ऋतेः' भूमेः 'उपस्थे' उपरि । 'अधा' अथ 'एनं' तामवस्थामापन्नं 'वृकाः' विकर्त्तितारः श्वशृगालादयः 'रभसासः' रभस्वन्तो वेगवन्तः 'अद्युः' भक्षयेयुः । नाहं सुदेवः, किन्तु स सुदेवो यस्तया वियुक्त एतामवस्थामाप्नुयादित्येवमेषा "परिदेवना" संशयोत्थापनम् ॥

"न विजानामि यदि वेदमस्मि निण्यः सन्नद्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥ ( ऋ० सं० २, ३, २१, २ )"—इति ॥

दीर्घतमस आर्षम् । अस्यवामीये ॥ "न" एतत् अहं "वि" विस्पष्टं "जानामि" "यदि वा इदम् अस्मि" कारणं परं ब्रह्माख्यम् ? ॥ अथवा इदं तत्कार्य्यं द्वैतमस्मीति । अनयोः कार्य्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्त्तमानः 'निण्यः' अन्तर्हितः, अविद्यया 'सन्नद्धः' च । अनेकैः सन्देहग्रन्थिभिः 'मनसा' उभे अपि द्वैताद्वैते 'चरामि' गच्छामीत्यर्थः । एवं सति 'यदा' 'मा आ अगन्' माम् आगच्छेत् 'प्रथमजा' बुद्धिः, सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते 'ऋतस्य' भगवत आदित्यस्य स्वभूता, तस्य हि प्रकृष्टा बुद्धिः, प्रहीणसर्वसंशया, तया सर्वमिदमसंशयं परिज्ञाय किमहं कारणसतत्व उत द्वैतसतत्व इति । ततः 'अस्याः' कृत्स्नप्राज्ञतायाः 'वाचः' 'भागम्' अहम् 'अश्नुवे' अश्नुयाम्, यदियं कृत्स्ना वागभिवदति तत्सर्वमहमाप्नुयामित्यर्थः ॥

एवमयमात्मनिन्दापूर्वको विलापः परिदेवनेत्युच्यते, यदि नाम एवं स्यात् साधु स्यादिति ॥ ७ । ३ । ६ ॥

अथापि निन्दाप्रशंसे ॥

"केवलाघो भवति केवलादी ॥"

"भोजस्येदं पुष्करिणीव वेश्म" इत्येवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ॥ ७ ॥

"अथापि" मन्त्रेषु "निन्दाप्रशंसे" भवतः । तद्यथा,-"केवलाघो भवति केवलादी" "भोजस्येदं पुष्करिणीव वेश्म"-"इति" । एते उदाहरणे ॥

"मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ( ऋ० सं० ८, ६, २३, १ )"-इति ॥

भिक्षुर्नामाङ्गिरसस्तस्येयमार्षम्[1] । त्रिष्टुप् । अददतो निन्दा । 'मोघं' वितथम् 'अन्नं' 'विन्दते' प्राप्नोति । आह-कः ? इति । उच्यते-यः 'अप्रचेताः' अप्रवृद्धज्ञानः । 'सत्यम्' अहं 'ब्रवीमि'-'वध इत् स तस्य' वध एव सोऽन्नलाभस्तस्य, वरमलब्धं तेनान्नमित्यभिप्रायः । किं पुनः कारणं मोघमसावन्नं विन्दते ? इति । उच्यते-'न' असौ 'अर्यमणम्' आदित्यं 'पुष्यति' 'नो' नापि 'सखायं' समानख्यानं मनुष्यम्, न देवान् पुष्णाति, नापि मनुष्यानित्यभिप्रायः । यत एवमतः "केवलाघो भवति" सः "केवलादी" आत्मनैव केवलं योऽन्नमत्ति, न देवपितृमनुष्येभ्यो ददाति, स केवलमघमेव प्राप्नोति । तदुक्तमन्यत्रापि-

"भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्"-इति ।

तस्माद् वध एव स तस्यान्नलाभ इत्युपपद्यते, न ह्यसत्यन्ने प्रत्यवेयाददददन्नामित्यभिप्रायः, अन्नसंयोग एव ह्यत्र वधोऽभिप्रेतः ।

केचित्त्वेनमनध्यात्मविदमप्रचेतसं मन्यन्ते, स ह्यस्मिन् शरीरे विवक्षितः । 'न अर्य्यमणम्' आदित्यान्तरपुरुषं भोक्तारं पश्यति, 'नो' नापि 'सखायं' प्राणवायुम्, स हि भुज्यमानेऽन्ने करणभावं पुष्णातीति सखा, केवलं त्वसावविद्वानात्मानमेव भोक्तारमत्र पश्यति, अतः सः 'केवलाघो भवति' यदि स देवताः पश्येदेव ता अन्नभोक्त्रीः, स हि तत्र भुक्तेन न केवलाघः स्यादिति ॥

"भोजायाश्वं संमृजन्त्याशुं भोजायास्ते कन्या ३ शुम्भमाना ।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥ ( ऋ० सं० ८, ६, ४, ५ )"-इति ॥

---

[1] 'भिक्षोराङ्गिरसस्येयमा' ॥

दक्षिणा नाम प्रजापतेर्दुहिता, तया सूक्तमात्मनः स्तुतिसम्बद्धं दृष्टम् । तत्रैषा जगती । दातृप्रशंसा ॥ 'भोजाय' राज्ञे 'अश्वम्' 'आशुं' शीघ्रं 'संमृजन्ति' सम्मार्जयन्ति स्नापयन्ति भृत्याः । किञ्च, 'भोजाय' उद्वहनार्थमन्यान् वरानपास्य 'शुम्भमाना' स्वलङ्कृता शोभमाना 'कन्या' 'आस्ते' स हि तामर्हतीत्यभिप्रायः ॥ किञ्च, "भोजस्य" "इदं" "वेश्म" गृहं 'परिष्कृतं' संस्कृतं "पुष्करिणी इव" 'देवमाना इव' पुष्करैर्दैवतं विमानमिव 'चित्रं' चायनीयमित्यर्थः । तदेतत् सर्वमप्यस्य जन्मान्तरप्रतिविशिष्टदक्षिणासहितात् कर्मणोऽन्येभ्यः कर्मभ्यः सकाशात् फलातिरैक्यमित्येवमेषा दक्षिणाप्रशंसा ॥

यथैवमिह मन्त्रद्वये निन्दा प्रशंसा च, "एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च" भवतीति विषयोपप्रदर्शनार्थमाह—

"अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्य्यः ॥ ( ऋ० सं० ७, ८, ५, ३ )"—इति ॥

मूजवान्नामा अक्षपुत्रस्तस्येयमार्षम्। त्रिष्टुप्[1]॥ 'अक्षैः मा दीव्यः'– इति अक्षदेवनप्रतिषेधः, तत्र हि वहवोऽनर्थाः सन्ति । 'कृषिमित् कृषस्व'—इति कृषिविधानम् । तस्यां हि वहवो गुणाः संति । 'वित्ते रमस्व' स्वल्प एवोपार्जिते 'वहु' एतदेवेति 'मन्यमानः' मा वित्तलोभेन दीव्यः, निजमपि वित्तं हारयिष्यसि, कृषिं पुनरेतस्मात् कारणात् कृषस्व । हे 'कितव !' 'तत्र' तस्यां कृषौ 'गावः' सन्ति, 'तत्र' तस्यां च 'जाया' । 'तत्' पुनरेतत् 'मे' मम 'सविता' देवः, 'अर्यः' ईश्वरः, 'वि' श्रुतिस्मृत्यनुशासनद्वारेण विविधमनेकप्रकारम् आ 'चष्टे' उभे अपि हीमे श्रुतिस्मृती मन्वादिद्वारेण आदित्यान्तरपुरुषप्रभवे एव, अत इदमुक्तम्—'सवितैवैतन्मम विचष्टे' इति ॥ ७ । ३ । ७ ॥

fulfilling various objects

## एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति॥ ८ ॥ ३ ॥

"एवम्" अनेन प्रकारेण "उच्चावचैरभिप्रायैः" बहुभिः, अथवा—प्रकृष्टाप्रकृष्टमध्यमैः मन्त्राभिव्यक्तिनिदानभूतैः "ऋषीणां" "मन्त्रदृष्टयः" मन्त्रदर्शनानि "भवन्ति" विद्यमानानामेव हि मन्त्राणामृषयो येन केनचिन्निमित्तेन निदानभूतेन निन्दाहर्षशोकप्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति, न तु कर्त्तार इत्यभिप्रायः । तदप्यार्षानुक्रमण्यां निदानमार्षे च उभयमुपेक्षितव्यम्, परिज्ञातार्षनिदानो हि सुखमनेकविषयं मन्त्रार्थमवबोद्धुं शक्नोतीति । तदेतदिह लक्षणोद्देशतो भाष्यकारेण प्रदर्शितम् ॥ ७ । ३ । ८ ॥*

are the mantras revealed to the



१ 'त्रिष्टुप्' ॥　*अत्रैव तृतीयखण्डसमाप्तिर्द्रष्टव्या ॥

no deity assigned -

## तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा ॥ १ ॥

"तद् ये अनादिष्टदेवता मन्त्राः"। इहैतदुक्तम्,-"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति"-इति। तदेतत्प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षणमुपपद्यते, ये त्वनादिष्टदेवतालिङ्गा मन्त्राः, तेषु देवताः कथमन्वेष्याः ? इति तदेतद् विचार्यत इत्युपयुक्तस्तच्छब्दः। ये अनादिष्टदेवतालिङ्गा मन्त्राः, "तेषु" "देवतोपपरीक्षा" देवताया अतः परं परीक्षा उपपत्तितो वर्णिष्यत इति वाक्यशेषः ॥ ७।४।१ ॥

## यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति ॥ २ ॥

"यद्देवतः स यज्ञो वा यज्ञाङ्गं वा, तद्देवता भवन्ति"। यद्देवतः स यज्ञो यस्मिन् यज्ञे ते अनाविष्कृतदेवतालिङ्गा मन्त्रा विनियुज्यन्ते, तद्देवता एव हि ते भवन्ति। तद्यथा,-"आग्नेयोऽग्निष्टोमः"-इति श्रूयते, तत्र योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स्यात्, स आग्नेय एव स्यात्, 'प्रकरणाद्धि सन्दिग्धदेवतेषु देवतानियमः' इति न्यायः। "यज्ञाङ्गं वा"। प्रातःसवने यो विनियुज्यते स आग्नेयः, यो माध्यन्दिने स ऐन्द्रः, यस्तृतीयसवने स आदित्यः ॥ (२)

"यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति"-इत्येवमादीनामपरो व्याख्यामार्गः-यद्देवतः स यज्ञः यद्देवतं प्रधानं हविः, तद्यथा,-प्रकृतावैन्द्रं सान्नाय्यं माहेन्द्रं वा, तत्संस्कारपरा इषेत्वादयः (य० वा० सं० १, १), तेनाविष्कृतदेवतालिङ्गा ऐन्द्रा एव भवन्ति, माहेन्द्रा वा। यद्देवते चाधिकारे चोदकेन प्रदिश्यन्ते, तद्देवतां एव भवन्ति। तद्यथा,-कुविदङ्गेति प्राजापत्यग्रहणे विनियोगात् प्राजापत्य एव भवति। यज्ञाङ्गं वेत्याधाराद्यभिप्रायेण। "ऋषभोऽसि शाक्करः"-इत्यनाविष्कृतदेवतालिङ्गः पूर्णस्रुवासादनमन्त्रः, स्रौवे विनियोगात्, तस्य च प्राजापत्यत्वात् प्राजापत्यः ॥ ७।४।२ ॥

## अथान्यत्र यज्ञात् प्राजापत्या इति याज्ञिकाः ॥ ३ ॥

आह-"अथ अन्यत्र यज्ञात्" कथं मन्त्रेषु देवतापरिज्ञानमिति अथ पुनरन्यत्र यज्ञाद् ये वर्त्तन्ते, येप्रामुत्सन्नः प्रयोगः, "उत्सन्नयज्ञो वा एषः"-इत्युत्सन्नतामपि दर्शयत्येव ब्राह्मणम्। तेपूत्सन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु,-"किं ब्राह्म-

---

१ यद्यप्येतदादि सप्तमान्तानां वाक्यानामन्ते एकत्रैवंतेषामपरव्याख्यामार्गो लिखितस्तथापि मूलसान्निध्याय तत्तन्मुख्यव्याख्यान्ते निवेशित इति बोध्यम् ॥ २ 'वाधिका' ॥ ३ 'मुच्छन्नः' ॥

णस्य पितरं पृच्छसि किंनु मातरम् । श्रुतविदस्मिन् वेद्यं स पितामहः॥"—इत्येवमादिषु कथमन्वेष्या देवता ? इति । शृणु—"अथान्यत्र यज्ञात् प्राजापत्याः" ते मन्त्राः "इति याज्ञिकाः" मन्यन्ते ॥ किं कारणम् ?, अनिरुक्तो हि प्रजापतिः, अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतस्मात्सामान्यात् ॥ ( ३ ) ॥

"अथान्यत्र यज्ञात्" । क्वान्यत्र यज्ञात् कर्मणो मन्त्राणां विनियोगः ? उपाकरणब्रह्मयज्ञजपप्रायश्चित्तेषु नैष्ठिकब्रह्मचारिणश्च । 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति, गर्त्तं वा पतति, प्रवामीयते, यातयामान्यस्य च्छन्दांसि भवन्ति'—इति प्रत्यवायश्रवणात्, सर्वत्रान्वेष्या देवतेत्यारब्धव्यमथान्यत्र यज्ञादिति ॥

"प्राजापत्या इति याज्ञिकाः" । प्रजापतिस्तेषूपाकरणादिकर्मसूपास्य इति याज्ञिका मन्यन्ते, स ह्यनिरुक्त इत्यनिरुक्ततासामान्यात् ॥ ७ । ४ । ३ ॥

## नाराशंसा इति नैरुक्ताः ॥ ४ ॥

"नाराशंसाः" ते "इति नैरुक्ताः" मन्यन्ते । नराशंसोऽग्निर्यज्ञो वा । वक्ष्यति हि,—"यज्ञ इति कात्थक्यः अग्निरिति शाकपूणिः"—इति । यज्ञशब्देन च विष्णुरुच्यते "विष्णुर्वै यज्ञः" इति ह विज्ञायते । "अग्निर्हि भूयिष्ठभाग् देवतानाम्"—इति, अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेयः स्यात् । सर्वदेवताश्रयणाच्च "अग्निर्वै सर्वा देवताः" अत्र वै सर्वा वसति देवतेति ह विज्ञायते ॥ यस्मिन्नपि पक्षे नाराशंसो यज्ञः, तस्मिन्नपि पक्षे यज्ञप्रभवत्वादस्य जगतो यज्ञस्य श्रैष्ठ्यम्, 'अपरिग्रहं च श्रेष्ठगामि' इति न्यायः ॥ केचित्तु येन नराः प्रशस्यन्ते स 'नाराशंसो मन्त्रः'—इति पश्यन्तो मनुष्यस्तुतयस्ता इत्येवं मन्यन्ते । तदयुक्तम्—न हि मनुष्याणामनाविष्कृतलिङ्गैर्मन्त्रैः स्तुतिरुपपद्यते, दुर्बोध्यत्वात् तेषामल्पबुद्धित्वाच्च मनुष्याणामिति ॥ ( ४ ) ॥

"नाराशंसा इति नैरुक्ताः" सौर्य्या वा आग्नेया वेति ॥ ७ । ४ । ४ ॥

## अपि वा सा कामदेवता स्यात् ॥ ५ ॥

"अपि वा सा कामदेवता स्यात्" । अपि वैवमन्यथा स्यात्—सा ऋक्, स मन्त्रः, योऽनाविष्कृतदेवतालिङ्गः, स कामदेवतः स्यात्, कामतो हीच्छातस्तस्मिन् देवता कल्पयितव्येत्यभिप्रायः ॥ किं कारणम् ? गुणपदमयो हि सः, न हि तत्र देवतासंविज्ञानपदम् अन्यतमदेवताविशेषप्रख्यापकमस्ति, यतो विशेषात् कस्याश्चिदेकस्यां देवतायामन्याभ्यो

---

१ 'तदुक्तम्' इति पाठस्तत्रासंस्कि

व्यावृत्त्यावतिष्ठेत, गुणपदानां च सर्वेषां सर्वदेवताश्रयत्वादैश्वर्ययोगात् सर्वासां देवतानामिति ॥ ( ५ ) ॥

"अपि वा सा कामदेवता स्यात्" अनाविष्कृतदेवतालिङ्गे मन्त्रे या विचार्यते देवता, 'कस्मिन् देवता स्यात् ?' इति, सा कामतः कल्प्या, इच्छात इत्यर्थः । गुणपदमयत्वात् तस्य । न मन्त्रवाक्यसामर्थ्याद् देवता नियम्यते तत्र, किं तर्हि ? प्रयोक्तुरिच्छासामर्थ्यात् । अथवा-प्रयोक्ता यत्कामस्तं मन्त्रं प्रयुङ्क्ते, तस्य कामस्य या देवता आधिपतिः, तामेव तस्मिन्नभिसन्दधीत ॥ ७ । ४ । ५ ॥

**प्रायोदेवता वा । अस्ति ह्याचारो बहुलं लोके देवदेवत्यमतिथिदेवत्यं पितृदेवत्यम् ॥ ६ ॥**

"प्रायोदेवता वा" 'तस्मिन् मन्त्रे स्यात्' इति वाक्यशेषः । प्राय इति ह्यधिकार उच्यते । यद्देवताधिकारे ह्यध्ययनपाठानुक्रमे योऽनाविष्कृतदेवतालिङ्गो मन्त्रो भवति, स तद्देवत एवेति बोद्धव्यम् । तद्यथा,-अग्न्यधिकारे वर्त्तमाने आग्नेय एव मन्त्रो भवति, इन्द्राधिकारे चैन्द्र एवेति ॥ अथवा-प्राय इति बाहुल्यमुच्यते । तद्यथा,-अनृतप्रायो देवदत्त इत्युक्ते अनृतबहुल इत्येव गम्यते । एवमिहापि प्रायोदेवतेत्युक्ते बहुलदेवतेति स्यात् । किं कारणम् ? "अस्ति ह्याचारो बहुलं लोके" अस्ति हीयं लोके बहुलस्य भूयस्त्वेन प्रसिद्धिः । निर्दिष्टेभ्यो द्रव्येभ्यो यदन्यदवशिष्यते, तत् साधारणं भवति । तद्यथा, कश्चित् गृही निर्दिशति "इदं मे देवदेवत्यं द्रव्यम्" "इदं मे अतिथिदेवत्यम्" "इदं मे पितृदेवत्यम्"-इति । तत्रैवं निर्दिष्टे ततो राशेर्यदन्यदवशिष्यते, तद्देवपितृमनुष्याणां साधारणं भवति । तथा चरुनिर्वपणकर्मणि 'इदं देवतानाम्' इति निरुप्तमभिमृश्य 'इदं नः सह' इति शेषमभिमृशति सर्वसाधारणत्वप्रख्यापनार्थम् । एवमिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनादिष्टदेवतालिङ्गो मन्त्रराशिः स्यात्, स सर्वसाधारणत्वाद् बहुदेवतो वैश्वदेवः स्यादिति ॥ ( ६ ) ॥

"प्रायो देवता वा" समानमेव पूर्वेण ॥ ७ । ४ । ६ ॥

**याज्ञदैवतो मंत्र इत्यपि ह्यदेवतादेवतावत् स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तानि ॥ ७ ॥**

आह-कः पुनरेतस्मिन् विचारे निश्चयः ? उच्यते-"याज्ञदैवतो मन्त्रः" । योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स याज्ञो वा स्याद् दैवतो वा । "विष्णुर्वै यज्ञः"-इति ह

१ 'एवेति ग' ॥

विज्ञायते । विष्णुः पुनरादित्य एव नैरुक्तानाम्, द्युस्थाने समाम्नानात्, "यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत्"—इति हि वक्ष्यति । तस्मादादित्यदेवतः स मन्त्रः; इति स्यात् ॥ अथवा—दैवतः स मन्त्रः । देवता अस्मिन् देवतेति दैवतः, अविशिष्टं हि देवतात्वमग्नावेव, सर्वदेवताभिवादात् । "अग्निर्वै सर्वा देवताः"—इति ह विज्ञायते, "अग्निर्वै देवतानां भूयिष्ठभाक्" इति च । 'अपरिग्रहं च प्रधानगामि'—इति न्यायः, तस्मादाग्नेयः स मन्त्रः स्यादिति ॥ तद्यदुपोद्घात उक्तम् "नाराशंसा इति नैरुक्ताः"—इति, तदेव कात्थक्यशाकपूणिमतेनावधृतं यज्ञोऽग्निर्वेति, तौ हि नैरुक्ताविति ( ७ )

"अपि ह्यदेवता देवतावत् स्तूयन्ते" । "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते"—इति मन्त्रदेवतालक्षणमुक्तम्, तदुपपद्यते देवानामार्थपत्यसम्बन्धात्, अनाविष्कृतदेवतेष्वपि संविज्ञातपदाभावात् कल्प्यते देवता कामस्य अधिपतिरपि । यत्र तु स्फुटम् अदेवता देवतावत् स्तूयन्ते ननु तत्रैतल्लक्षणं व्याहन्यते ? तद्यथा,—"अश्वप्रभृतीन्योषधिपर्य्यन्तानि" । एतस्मिन् वर्गे कानिचित् सत्त्वानि, कानिचिद् द्रव्याणि, अश्वादीनि सत्त्वानि, अक्षादीनि द्रव्याणि । तानि च पुनरासन्नमर्थं चेतयन्ते, नातीतम्, नानागतम् इति, आत्मनोऽपि च हिताहितं न प्रतिपद्यन्ते । तानि कथमभिष्टुतानि स्तोतुरभिमतस्यार्थस्य पतित्वं करिष्यन्ति ? न हि तानि स्तुतिनिन्दे विशेषतो विदुः । अपि चाश्वादिषु चितिरपि काचिदस्ति, न त्वक्षादिष्वसावस्तीत्युक्तम् ॥ ७।४।७॥

**अथाप्यष्टौ[2] द्वन्द्वानि स न[3] मन्येतागन्तूनिवार्थान् देवतानां प्रत्यक्षदृश्यमेतद्भवति माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते ॥ ८ ॥**

तस्मात् "सः" शिष्यः मेधावी "न मन्येत" न जानीयात्,—सम्यगविरुद्धमेतल्लक्ष्येण लक्षणमुच्यत इति । अपि च सुतरां न मन्येत,—"आगन्तूनिवार्थान् देवतानाम्" मन्यमानः । लोके तावदेते मनुष्याणामनित्यानामश्वादयोऽर्थाः, आगन्तवः अपायिनश्चानित्याः । तद्यदि देवतानामप्येवमेव, ततस्तासां तेषां चानित्यत्वात् स्तुतिरनर्थिका । अपि च "प्रत्यक्षदृश्यमेतद् भवति" प्रत्यक्षत एवैतत् दृश्यते । यथा—उपकरणमश्वादयः, उपकर्त्तव्या मनुष्याः । देवतानामपि चेन्द्राग्निसूर्य्यप्रभृतीनामुपकरणं हरिरोहिद्धारि-

1 'स्तोतुमभिम' ॥ 2 'अथाप्यष्टौ द्वन्द्वानि' इत्यस्य व्याख्या नोपलभ्यते त्रुटिता भवेत् । तानि द्वन्द्वानि निघण्टौ ( ५ । ३ । २९–३६ ) उलूखलमुसले २९ हविर्धाने ( ३० ) द्यावापृथिवी ( ३१ ) विपाट्छुतुद्र्यौ ( ३२ ) आर्त्नी ( ३३ ) शुनासीरौ ( ३४ ) देवीजोष्ट्री ( ३५ ) देवीऊर्जाहुती ( ३६ ) इत्येवमुपलभ्यन्ते ॥ 3 'स निमन्येतागन्तू' ॥

त्प्रभृतयोऽश्वाः । तस्मादुभयेषामुपकरणोपकर्त्तव्यतासामान्यात् मनुष्याश्ववदनित्यत्वमिति युक्तम् ॥

यत् स शिष्यो न मन्यते नैतत् सम्यगभिधीयत इति, तस्मात् प्रतिसमाधातव्यमेतदित्युपोद्धृत्य उत्तरमुच्यते,–"माहाभाग्याद् देवताया: एक आत्मा बहुधा स्तूयते" यस्मात्, तस्मात् सर्वमेतत् सम्यगिति । भज्यत इति भागः, सेव्यत इत्यर्थः । तच्च पुनरैश्वर्यं महत् । "अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमेव च[1] । ईशित्वं च वशित्वं च यत्र कामावसायिता ॥"–इत्येवमनेन महतैश्वर्येण[2] भज्यते । महदेतदैश्वर्यं भजत इति वा महाभागा देवता, तद्भावो माहाभाग्यम्, तस्मात् माहाभाग्याद्वितीयोऽपि सन् देवतात्मा बहुधा स्तूयते, प्रकृतिभेदेन वा अप्रकृतिभेदेन वा वर्द्धमानः[3], निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः–

"रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परिस्वाम् ।
त्रिर्यद्दिवः परिमुहूर्त्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ( ऋ० सं० ३, ३, २०, ३ )"–इति ॥

यथा यथा च लक्ष्यं तथा लक्षणं प्रवर्त्तयितुमर्हति, दृष्टानुविधानाच्छन्दसः, छन्दसि हि लक्ष्ये यावदभिधानं देवतानानात्वविधिव्यवस्था[4] संवादसूक्तानि च कयाशुभादीनि इन्द्रमरुदादिसंवादव्यपदेशहेतुना गमयन्ति, तदशक्यमपासितुम् । तथा त्रिस्थानानां यान्यसङ्करवर्त्तीनि हविर्वहनरसानुप्रदानरसादानलक्षणान्यग्नीन्द्रसूर्याणां कर्माणि लिङ्गान्यर्थदर्शनहेतुप्रबृंहितानि त्रित्वं गमयन्ति, तदपि चाशक्यमपासितुम् । तथा चैकात्म्यमिन्द्रं मित्रं वरुणमग्निमाहुरित्येवमादयो गमयन्ति निगमाः ।

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ ( ऋ० सं० २, ३, २२, ६ )"–इति ॥

तदप्यशक्यमपासितुम्, त्रिष्वपि चैतेषु पक्षेषु ऐश्वर्यमपरिहीणं देवतायाः ॥७।४।८॥

## एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ॥ ९ ॥

तत्रैवं सत्यैकात्म्यं तावदाश्रित्य प्रतिसमाधानम् "एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति" । माहाभाग्यादेकस्य देवतात्मनः प्रकृतिभेदेन चाप्रकृतिभेदेन वेति । चेतनाचेतनविकरणधर्मित्वादात्मानं विकुर्वतोऽस्य "अन्ये देवाः प्रत्यङ्गानि भवन्ति" अग्नी-

१ 'वा' । २ 'महदैश्व' । ३ 'वर्तमानः' ॥ ४ 'यत्रै' ॥ (अश्वादिसाधनेन च)

न्द्रसूर्याणां परस्परापेक्षमन्यत्वम्, अनन्यत्वं त्वेकेन देवतात्मना महता सह । यथा घटादीनां मृदा । न ह्यङ्गिनमङ्गान्यतिरिच्यन्ते, भेदेनाग्रहणात् । न चाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति, न ह्यधिष्ठानमनपेक्ष्य प्रत्यधिष्ठानं नाम भवति । तस्मादग्नीन्द्रसूर्यात्मकस्य देवतात्मनोऽङ्गानि,–जातवेदोवायुभगप्रभृतीनि, शकुन्यश्वप्रभृतयश्च प्रत्यङ्गानि । स एष महानात्मा अग्नीन्द्रसूर्याद्यङ्गप्रत्यङ्गभावेन व्यूहमनुभवन् एकोऽपि सन् बहुधा स्तूयते ॥ ७ । ४ । ९ ॥

## अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः ॥ १० ॥

"अपि च" एवं कृत्वा "सत्त्वानाम्" अश्वादीनां "प्रकृतिभूमभिः ऋषयः स्तुवन्तीत्याहुः" । प्रक्रियन्ते अस्यां सर्वे विकारा इति प्रकृतिः, स सत्तालक्षणो महानात्मा हिरण्यगर्भ इति । वक्ष्यति हि,–"स एष महानात्मा सत्तालक्षणः, तत् परम् तत् ब्रह्म० स भूतात्मा, सैषा भूतप्रकृतिः"–इति । तस्या भूमा बहुत्वम्, अनेकधा विपरिणामः स्थावरजङ्गमभावेन । प्रकृतेर्भूमानि बहुत्वानि यानि सत्त्वानां तैरनन्यविषयत्वं पश्यन्तः कार्य्यकारणयोरनन्यत्वात् कारणमहिमभिः तान्यश्वादीन्यभिष्टुवन्तीत्याहुरात्मविदः । तद्यथा–"द्यौस्ते पृष्ठं पृथिवी शरीरमात्मान्तरिक्षम्"–इत्येवमादीनि । आत्मैव सर्वं स्थावरजङ्गमभित्यवेत्य अश्वमेधे 'मूलेभ्यः स्वाहा, शाखाभ्यः स्वाहा'–इत्येवमादिभिस्तेन तेन वैशेषिकेण स्थावरजङ्गमात्मना प्रकृतेरभिन्नेनावस्थानेनावस्थितो महानेवात्मेज्यते । न ह्यदेवता यागमर्हति । यावच्चान्यदपि किञ्चिदेवम्प्रकारमदेवताभिमतभिज्यते । गृह्ये च बलिप्रभृतिकर्मादौ सर्वत्र स एवेत्युपेक्ष्यम्[1] ॥ ७ । ४ । १० ॥

## प्रकृतिसार्वनाम्याच्च ॥ ११ ॥

प्रकृतिसार्वनाम्याच्चैतदुपपन्नम्, नैता अदेवता देवतावत् स्तूयन्ते, किन्तु महानेवायमात्मा विश्वरूपः स्तूयत इति[2] । प्रकृतिसार्वनाम्यादिति । नतिमात्रं नाम नमनं सञ्ज्ञा, सर्वत्वेन नाम सर्वनाम, प्रकृतेः सर्वनाम प्रकृतिसर्वनाम, तद्भावः प्रकृतिसार्वनाम्यम्, तस्मात् प्रकृतिसार्वनाम्यात् हेतोः । यस्मात् महाभाग्ययुक्ता देवता प्रकृतिः, यस्माच्च सर्वत्वेन नता, तस्माद्धेतोर्नैता अदेवता देवतावत् स्तूयन्ते ॥ ७ । ४ । ११ ॥

## इतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः ॥ १२ ॥

अपि चैतदभिहितम्–'आगन्तूनिवार्थान् मन्यमानो हरिरोहिद्धरितादीनिन्द्रादीनां मनुष्याश्ववदनित्यत्वमवेत्य न सम्यगभिधीयत इति स न मन्येत'–इति । अत्र ब्रूमः,–मनुष्यधर्मविपरीतो हि देवताधर्मः, अनैश्वर्यान्मनुष्याणामैश्वर्य्याच्च



१ "त्युत्प्रेक्ष्यम्" । २ 'महान्देवो विश्वरूपः स्तूय' ॥

देवतानाम् । तत् कथम् ? इति । अतो भेदमाश्रित्य प्रतिसमाधीयते,–"इतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः" देवाः ऐश्वर्यात् । न मनुष्याणामियं शक्तिरस्ति, अनैश्वर्यात् । मनुष्याणां हि पिता पुत्रं जनयतीति पिता प्रकृतिः, न पुनरिच्छन्नपि पुत्रः पितरं जनयति । देवानां त्वग्नेः सूर्य्योऽजायत,–'एष प्रातः प्रसुवति'–इति ह विज्ञायते, तस्मात् सूर्य्यस्याग्निः प्रकृतिः । सूर्य्याच्चाग्निः सायं जायते, तस्मादग्नेः सूर्य्यः प्रकृतिः । अदितेर्दक्षो दक्षाच्च अदितिरिति ॥ अथाध्यात्म्येऽपि,–कोष्ठ्यादग्नेर्नाद इन्द्रः, वलादिन्द्रान्मथ्यमानः अग्निरित्येवमादि । स एष सर्वथाप्यचिन्त्यो देवताधर्मः।तासामानन्त्यान्माहाभाग्यस्य । तत्रैवं सत्यशक्यमध्यवसातुम्,–'यथा मनुष्याणामागन्तवोऽश्वादयस्तथैव देवतानामपि' इति । तस्मात् दोषानुपपत्तिरनागन्तुत्वात् देवाश्वादीनामिति ॥ ७ । ४ । १२ ॥

## कर्मजन्मानः ॥ १३ ॥ Sacrificial performance.

अथ किमर्थमीश्वराः सन्तो देवता जायन्ते ? इति । "कर्मजन्मानः" कर्मफलसिद्धये लोकस्य अग्निवायुसूर्य्या जायन्ते, न ह्येतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात्– विद्यमानमपि चैश्वर्य्यमैश्वर्य्यवति न प्रख्यातिमियात् ईशितव्यमर्थमप्रतीत्य । तस्मादैश्वर्य्यप्रख्यापनाय जायन्ते ॥ ७ । ४ । १३ ॥

## आत्मजन्मानः ॥ १४ ॥ are born of the One self.

कर्मफलसिद्ध्यै लोकमनुजिघृक्षन्तः कुतः पुनर्जायन्ते ? "आत्मजन्मानः" योऽसावेक आत्मा बहुधा स्तूयत इत्युपात्त³–सर्वमूर्त्तिः स्थितौ, उपरतसर्वमूर्त्तिः प्रलये, भावाख्यः सन्मात्रः सर्गकाले षोढात्मानं विभज्य जगद्भावं विभर्त्ति, तस्माज्जायन्त इत्यात्मजन्मानः ॥ क एव तस्मान्न जायते ? इति चेत् । सत्यम्, सर्वं तस्मात् जायते न कामकारेण । देवास्तु तमात्मानं पश्यन्तो योगेन ततः कामकारतो जायन्ते ॥ किमेषां जन्म ? यदेषामिच्छतां सङ्कल्पानुविधायिकर्मानुरूपं यथाकालमात्मनः कार्यकारणमुत्पद्यते,⁴ तदेतेषां जन्म । तदनीश्वराणां नास्ति ॥ ७ । ४ १४ ॥

## आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य ॥ १५ ॥

all-in-all. This is Yaska's rejoinder to अद्वैत देवतावाद

यतश्चेश्वरास्ते तस्मादात्मनस्तत्सङ्कल्पानुविधायित्वात् "आत्मैवैषां रथो भवति, आत्मा अश्वः,आत्मा आयुधम्,आत्मा इषवः,आत्मा सर्वं देवस्य देवस्य"।तत्र यदुक्तम्,–'अश्वा-

१ 'यतो भे' । २ 'देवतानां' । ३ 'इत्युपात्तः सर्वमूर्तिः स्थितौ' । इति पाठस्तु प्रमादिकः प्रतिभाति, । ४ 'मुपपद्यते' ॥

दीनि सत्त्वानि, अक्षरथप्रभृतीनि च द्रव्याणि अदेवताः'—इति । एतदयुक्तम्, देवता एवेमाः, रथादिरूपेण हि देवतैवात्मानं विकृत्य प्रकृतिभेदेन रथादिसाध्यमर्थं साधयति । सा तद्रूपा सती रथादिस्तुत्या स्तूयते, सो च स्तुतिसमवेतमर्थमाशासितं स्तोतुस्तेनैव[2] रूपेण साधयितुमलमिति ॥

तस्मात् "माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि" तासामेव तिसृणा-मग्न्यादीनां माहाभाग्यादैश्वर्ययोगादात्मानमनेकधा विकुर्वतीनामेकैकस्याः प्रतिविकारं नामधेयप्रतिलम्भात् तेनैव रूपेण धारयन्त्यात्मानमिति "यत्काम ऋषिर्यस्यां देवतायामार्थ-पत्यमिच्छन् स्तुतिं प्रयुङ्क्ते"—इत्यस्य लक्षणस्याव्याघातः, तस्मात्सम्यगेवोक्तमिति । अथवा स्तुतिसङ्क्रमन्यायेन । नवमे ( चतुर्दशे )ऽध्याये ( ९ । ११ । १ ) "यज्ञसंयो-गात् राजा स्तुतिं लभेत"—इत्यत्र पुनः प्रतिसमाधास्यामहे ॥ ७ । ४ । १५ ॥ *

## तिस्र एव देवता इति नैरुक्ताः ॥ १ ॥

"तिस्र एव देवता इति नैरुक्ताः"—इति उपोद्घातः । "सैषा देवतोपपरीक्षा"—( ७ । १ । ३ ) इत्यधिकारे वर्त्तमाने "यत्काम ऋषिर्यस्याम्" ( ७ । १ । ४ ) इत्येवमादिमन्त्रदेवतालक्षणमुक्तम्, तत् पुनरदेवतात्वादश्वादीनाम् "आ नो मित्रो वरुणो अर्य्यमा"—इत्येवमादिषु व्याहन्यमानमपेक्ष्य "स न मन्येत" ( ७ । ४ ) इत्येवमादिनाक्षिप्ते "माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते" ( ७ । ४ ) इत्येवमादिना "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ( ऋ० सं० ८, ४, १७, २ )"—इति ॥ एवमादिभ्यो मन्त्रवाक्येभ्यः "अथातो विभूतयोऽस्य पुरुषस्य"—इत्येवमादिभ्यश्च ब्राह्मणेभ्यः—"एष इन्द्र एष प्रजापतिः"—इत्येवमादिभ्यश्चैकात्म्ये सामर्थ्यमुन्नीयात्मवित्पक्षेण आत्मैवेदं सर्वम्—इत्यैकात्म्यमुक्तम् । आत्मविदां ह्यात्मन्यु-पजातविशिष्टभावनानामात्मशरीरस्थानामात्ममयमेवेदं सर्वमनुपश्यतामात्मार्थः सर्वो वेदोऽन्या च सर्वा वाक् । न ह्यात्मनोऽन्यद् व्यतिरिक्तमभिधेयमस्ति, सत्त्वाविशेषाद् यदभि-धानमभिदध्यात् ॥ अथ पुनरुपक्रमः पुरुषार्थस्य प्रथमनि[3]श्रेणीफलकस्थानीयेन केवलेनाधियज्ञेन । तत्र चावधाने अधिदैवताध्यात्मज्ञानं किञ्चिद्[4] विदुषः पृथगात्मनो देवताः पश्यतः, परिच्छिन्नफलाभिप्रायस्याधियज्ञं प्रयुयुक्षमाणस्य पूर्वजन्माविद्यावासितान्तः-करणस्याभिधानस्तुतिभेदाभ्यां विधिमन्त्रार्थवादविद्यावशेन[5] यथाग्रहं पृथगिव देवताः प्रका-

---

१ 'सा तत्स्तुतिसमवे'। २ 'स्तोतुं तेनै' ॥ * अत्रैव चतुर्थखण्डसमाप्तिर्द्रष्टव्या । "इति निरुक्तवृत्तौ सप्तमा( द्वादशा )ऽध्यायस्य प्रथमः पादः॥७। ॥" इति चोपलभ्यते ॥ ३ 'निश्रयणीफ' । ४ 'किञ्चिद्विदुषः', 'किंचाविदुषः' । ५ 'विद्यारसेन' ॥

शास्ते । तदुक्तम्,–"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद"–इति । तदाहुः,–"आत्मयाजी श्रेयान् देवयाजी वा ? इति, आत्मयाजीति ह ब्रूयात्" इति । तदेवं ब्रह्मदेवतावृक्षस्य मूलम् ऐकात्म्यमात्मविदः प्रत्यवभासते । यावदभिधानं तु याज्ञिकान्प्रति विधिमात्रप्रधानात् यच्चावशिष्यते, तन्नैरुक्तान् प्रत्यवभासते । अत इदमुच्यते,–"तिस्र एव देवता इति नैरुक्ताः" । तिस्र इति संख्या । एवेत्यवधारणमितरौ पक्षौ अपेक्ष्य ॥ ७ । ५ । १ ॥

## अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः ॥ २ ॥

कतमास्ताः ? इति,–"अग्निः पृथिवीस्थानः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यः द्युस्थानः" ॥ कयोपपत्त्या त्रित्वं परिजगृहुः ? स्थानभेदात्, प्रत्यक्षलिङ्गादन्यार्थदर्शनाच्च ॥ लिङ्गं त्रिधा हि भवति–

"विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ( ऋ० सं० य० वा० सं० १७, ३२ )"–इति ॥

अत्र, "अजस्य नाभावध्येकमर्पितम् ( ऋ० सं० ८, ३, १७, ६ )"–इति ॥

अन्यार्थदर्शनाच्च । "प्रजापतिर्वै त्रीन्महिम्नोऽसृजताग्निं वायुं सूर्य्यम्"–इति ॥ "प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यो रसान् प्रावहदग्निं पृथिव्या वायुमन्तरिक्षात् सूर्य्यं दिवः"–इति "अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्य्यो द्युस्थानः"–इति "तिस्रः"–इति प्रकृतेः स्वरूपग्रहणात् स्थानभेदं त्रित्वे हेतुमुपसंसूचयति ॥ कुतो नियमोऽग्न्यादीनां पृथिव्यादिषु ? निगमेभ्यः,–"पृथिव्यसि [ च ] जन्मना वशासाग्निं गर्भमधत्थाः, अन्तरिक्षमसि जन्मना वशासा वायुं गर्भमधत्थाः, द्यौरसि जन्मना वशासाऽऽदित्यं गर्भमधत्थाः"–इत्येवमादिभ्यो निगमेभ्यः ॥

"वायुर्वेन्द्रो वा"–इति किमेकस्य पर्य्यायवचनावेतौ शब्दौ, उताभिधेयौ भिद्येते ? इति । कुतः सन्देहः ?, उभयथा हि प्रसिद्धिः–प्रत्यभिधानं चार्थभेदो दृष्टः–गौः अश्वः इति यथा, अभिधानभेदेऽपि चैकार्थता दृष्टा–हस्तः करः पाणिः इति यथा । अतो युक्तः संशय इति ॥ याज्ञिकपक्षे तावददोषः । अर्थभेदेऽपि चैतेषां यावन्त्यभिधानानि तावत्यो देवताः । अस्य पुनराचार्य्यस्य स्वसिद्धान्तावलम्बिनः "तिस्र एव देवताः"–

१ 'तदयुक्तम्' ॥

इति प्रतिज्ञातवतः कुतो वाय्विन्द्रशब्दयोरर्थभेदः ? भेदे हि प्रतिज्ञाहानिः स्यात् । अपि च भेदेऽभिप्रेते नैकवचनेन निरदेक्ष्यदन्तरिक्षस्थान इति । अभिधानमात्रे भिन्नेऽप्यभिधेयस्य चाभेदे अन्तरिक्षमस्य स्थानमित्युपपत्तेः । षष्ठ्येकवचनो विशेष्योऽन्तरिक्षस्थानशब्देन विशेष्यते, इतरथा ह्यन्तरिक्षस्थानौ इत्यवक्ष्यत् द्वयोर्विशेष्ययोः । अपि च "वायवायाहि दर्शत (ऋ० सं० १, १, ३, १)"—इति ॥ वायोः प्राधान्यस्तुतिमदाहृत्य तां निरुच्य तस्यां सोमपानसम्बन्धमुपलक्ष्य—ऐन्द्रत्वं च सोमस्यावेत्य "अंशुरं शुष्टे"—इत्येतस्मिन् "आ त्वमिन्द्राय प्यायस्व" "तुभ्यमिन्द्रः प्यायताम्"—इति नान्यत्रेन्द्रशब्दात् मुख्याभिसम्बन्धिनो मध्यमात् सोमपानं सम्भवतीति प्रतीत्य वायुशब्दस्येन्द्रशब्देन समानार्थतां दृढमवधार्य अमृष्यमाणो वायुशब्दस्य मध्यमादर्थान्तरे वृत्तिमपर्यायशब्दवादिनमाक्षिपन्नाह "कमन्यं मध्यमादेवमवक्ष्यत्" ( १० । २ । )—इति । उत्तरमपि च यमुदाजहार निगमं "तस्यैषा परा भवति"(१०।३।१)—इत्युपोद्धत्यैतस्मादैन्द्रादेव सूक्तात् "अस्येन्द्रस्य वायोर्यथा भक्षो न विदस्येत्, तेनैनमभिवहेयुः"—इति वायुशब्दस्येन्द्रविशेषणत्वं प्रतीत्य इन्द्रप्रधानत्वात् सूक्तस्य च इन्द्र उपात्तः । तस्मादाचार्यस्य मध्यमपर्यायवचनावेतौ शब्दाविति ॥

सत्यपि तु पर्यायवचनत्वे मुख्यतरः सम्बन्धो मध्यमस्येन्द्रशब्देन, न तथा वायुवरुणरुद्रादिभिः । तत् कुतः ? तथा निगमे दर्शनात्—"सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा"—इति । सा प्रथमा संस्कृतिरित्येतास्मिञ्छुक्रामन्थिनोर्हवनमन्त्रे यो मध्यमो वरुणोऽपि मित्रोऽग्निः, तस्मै इन्द्राय सुतम् आजुहोत इति वरुणादीननुक्रम्य विशेषतश्चतुर्थ्यन्तेन इन्द्रशब्देन सम्प्रदानेन सम्बध्नाति तस्मै मध्यमायेन्द्रायेति ॥ तस्मात् सम्प्रदानेन सामानाधिकरण्यात् मन्त्रान्ते मध्यमशब्देन्द्रशब्दयोर्मुख्यतरः सम्बन्ध इति गम्यते । यथास्य मध्यमस्य ज्योतिषो मुख्यः सम्बन्ध इन्द्रशब्देन, तथेतरयोरपि पार्थिवोत्तमयोरग्निसूर्यशब्दाभ्याम्, प्रसिद्धतरत्वात् सम्बन्धस्य । न तथेतरैर्जातवेदःप्रभृतिभिः । सति च गौणमुख्यत्वे युक्तं यदन्याभिधानेन प्रसिद्धतरसम्बन्धेन पार्थिवस्य ज्योतिष उपदेशः क्रियते, न जातवेदःप्रभृतिभिः, तथोत्तमस्य सूर्यशब्देन उपदेशः क्रियते, न सवितृभगप्रभृतिभिरिति ॥

कस्मात् पुनर्मध्यमस्य शब्दद्वयेनोपदेशः क्रियते, पार्थिवोत्तमयोरेकैकेन ? इति । मध्यमस्य हि द्वौ कर्मात्मानौ विद्युद्वाय्वाख्यौ । तयोरनित्यदर्शन एको विद्युदाख्यः, नित्य-

---

१ 'प्रतिज्ञा ततः कु' । २ 'अभिधानभेदेऽपि' ॥ ३ 'न्द्रशब्दस्य'। ४ अयं च तत्रत्य निरुक्तार्थभूतः पाठो बोध्यः । ५ "तथा अन्नमेवमभिवहेयुः" इ । ६ 'वरुणेन्द्रादि' । ७ 'संकृतिर्वि' ॥

दर्शनस्तु वाय्वाख्यः त्वगिन्द्रियप्रत्यक्षः । तत् कथं नाम त्रिष्वपि स्थानेष्वभिमानिन्यो देवताः कर्मात्मभिरवैषम्येण प्रत्यक्षत एवोपदिष्टाः स्युः ? इत्यतः "वायुर्मध्यमस्थानः"—इति वाय्वाख्येन कर्मात्मना मध्यमस्थानमुद्दिश्यामुख्यत्वाद् वाय्वभिधानस्य, मुख्यत्वाच्चैन्द्राभिधानस्य "इन्द्रो वा"—इत्याह । एवमुभयं कृतं भविष्यति,—अनुपरताक्रियाव्यापारता च मध्यमस्य वाय्वाख्येन कर्मात्मना इतरज्योतिर्विद्दर्शिता भविष्यति, मुख्येन चेन्द्रशब्देन मुख्यः सम्बन्धोऽपरिहापितो भविष्यतीत्युभयमुक्तम्,—"वायुर्वेन्द्रो वान्तरिक्षस्थानः"—इति । न तु पार्थिवोत्तमयोर्द्वौ द्वौ कर्मात्मानौ स्तो यथा मध्यमस्थानस्य, तस्मादेदोषो[1] मध्यमस्थानस्याभिधानद्वयोक्ताविति ॥ ७ । ५ । २ ॥

## तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति ॥ ३ ॥

आह—यदिदमभिधानबहुत्वं जातवेदा वैश्वानर इत्येवमादि, त्रित्वे सत्येतत् किं कृतम् ? इति । उच्यते—"तासां माहाभाग्यात् एकैकस्या अपि बहूनि नामधेयानि भवन्ति" । तासामेव तिसृणामग्न्यादीनां माहाभाग्यात् ऐश्वर्ययोगात् एकात्मानमनेकधा विकुर्वन्तीनाम् एकैकस्याः प्रतिविकारं जातवेदाः, वैश्वानरः, वरुणः, रुद्रः, अश्विनौ, उषा इत्येवमादीनि बहूनि नामधेयानि भवन्ति, प्रतिस्थानं स्वप्रकृत्यभेदादैकात्म्यवदेवैकत्वं न जहाति सा सा देवतेति ॥ ७ । ५ । ३ ॥

## अपि वा कर्मपृथक्त्वाद्यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः ॥ ४ ॥

"अपि वा कर्मपृथक्त्वात्" । अपि वैवं[2] विकरणधर्मित्वादभिन्नप्रकृतीनां बहुनामता । अपि वा स्वं स्वमात्मानमविकुर्वतीनामेवानेककर्मयोगात् कर्मपृथक्त्वहेतुको[3] नामधेयलाभः स्यात् । को दृष्टान्तः ? ॥ "यथा—होता, अध्वर्युः, ब्रह्मा, उद्गाता—इति अपि एकस्य सतः" कुण्डपायिनामयने । तत्र हि सप्त दीक्षन्ते, त एव च स्वयं कर्म कुर्वते, तेषां षट्, षोडशानां पर्य्यायेण कर्म कुर्वते, तत् कर्म कुर्वाणाः तदाख्या भवन्ति, यथा लोके कारकलावकपाचकादयः[4] । तदेतत् प्रदर्शितं भवति,—न किञ्चिदप्यत्र गौणमभिधानम्, संविज्ञातपदत्वे[5] त्वग्न्यादीनां संज्ञाशब्दानां तेषां कारकादिशब्दैरेष विशेषो यदग्रनयनादिगुणयोगेऽप्यसति नाग्न्यादीन् जहाति, कारकादिशब्दास्तु करणादि-

---

१ 'स्मान्न दोषो' । २ 'अपि चैवं विका रधर्मित्वा' ॥ ३ 'पृथक्कर्महेतुको' । ४ 'पावकादयः' । ५ 'संविज्ञानपदत्वे' ॥

योगसमनन्तरमेव कारकादीन् जहति । एवमेतदगौणत्वमभिधानानामपेक्ष्योक्तम्,—"अपि वा कर्मपृथक्त्वात्"—इति ॥ अपि वैश्वर्य्यादुभयथापि शक्त्यप्रतीघाताद् उपपद्यत एकैकस्या अपि बहुनामतेति ॥ ७ । ५ । ४ ॥

## अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति ॥ ५ ॥

"अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति" । अपि चैवं यथोक्तमेकैकस्या माहाभाग्यात् कर्मपृथक्त्वाद्वा बहुनामता । अपि वा पृथक् पृथक् अत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन स्युरिति याज्ञिका आहुः—"पृथक् हि स्तुतयो भवन्ति"—इति ॥ कुत एतत् याज्ञिका आहुः ? इति । अधियज्ञे हि स्तुतिनियमो भवत्यभिधाननियमश्चेति अधियज्ञमिति व्याख्येयम्—पृथग्घि स्तुतयो भवन्ति—इति । हीति हेतौ, यस्मात् पृथक् पृथक् अग्न्यादीनां स्तुतयो भवन्ति—। पृथगग्नेः—"अग्निमीळे"—इत्येवमाद्याः ( ऋ० सं० १, १, १, १ )—इति ॥ पृथग् जातवेदसः—अग्निलिङ्गं सूक्तम् "प्रनूनं जातवेदसम् ( ऋ० सं० ८, ८, ४६, १ )—"इति ॥ पृथगिन्द्रस्य—"हरिभ्याम्" । पृथग्वायोः—"नियुद्भिः" ॥ पृथक् सूर्य्यस्य—"हरिद्भिः । पूष्णोऽजाभिः, अरुणीभिर्गोभिरुषसाम्"। स्तुतिर्व्यभिचारे च प्रायश्चित्तम् । तदनुपपन्नं च पर्य्यायवचनत्वे तेषाम् । ते वयं स्तुतिनियमात् पश्यामः—पृथक् पृथगग्निवैश्वानरप्रभृतय इति ॥ ७ । ५ । ५ ॥

## तथाभिधानानि ॥ ६ ॥

"तथाभिधानानि" । यथैव हि स्तुतिभेदात् स्तुत्यभेदः, एवमेवाभिधानभेदादभिधेयभेदोऽपि भवितुमर्हति । प्रसिद्धतरं चेदं लोके प्रत्यभिधानमर्थभेद इति, न तथैकस्यानेकाभिधानता । तस्मात् पृथक्पृथगग्निजातवेदोवैश्वानरादिशब्दानामभिधेया इति स्थितिः । स्तुतिष्वेव हि अभिधानभेद इति समानार्थता हेत्वोः ? इति चेत् । न, विधावप्यभिधाननियमदर्शनात्—"आग्नेयमष्टाकपालं निर्वपेत्" इति येनैवाभिधानेन चोद्यते, तेनैव निर्वपणादारभ्य समाप्यते, तस्मादसमानार्थतेति ॥ ७ । ५ । ६ ॥

### ( अथ समानार्थत्वसाधनम् )

## यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः ॥ ७ ॥

"यथो एतत्" यत् पुनरेतदुक्तम् "कर्मपृथक्त्वादिति" ( ७ । ५ । ४ ) । अनैकान्तिक एष दृष्टान्तः । दृष्टो हि प्रकृतिभेदात् प्रतिकर्मभेदः ॥ ७ । ५ । ७ ॥

---

१ 'शक्यप्रतीघात उपपद्यते', 'शक्यप्रतीघातादुपपद्यत' । २ 'व्यवहारे' ॥

**तत्र संस्थानैकत्वं सम्भोगैकत्वं चोपेक्षितव्यम् ॥**
**यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं चं सम्भोगैकत्वं च दृश्यते ॥**
**यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च सम्भोगोऽग्निना चेतरस्य लोकस्य ॥ ८ ॥**

सा च पृथक्त्वादितिव्यवस्था माहाभाग्यादित्याचार्य्येणात्र पृथक्त्वे हेतुर्न प्रत्युँक्तः, दृष्ट एव हि याज्ञिकपक्षे प्रत्यभिधानमर्थभेद इति । तत् किमेकत्वं नास्त्येव ? तच्चास्ति गुणतः ॥

कंथम् ? "तत्र सस्थानैकत्वं सम्भोगैकत्वं च उपेक्षितव्यम्" । तत्र तस्मिन् पृथक्त्वे सति सस्थानैकत्वं सम्भोगैकत्वं च उपपत्तित ईक्षितव्यम् । तत्र दृष्टान्तः,- "यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वम्, सम्भोगैकत्वं च दृश्यते" । सहस्थानतया एकत्वं स्थानैकत्वम्, पृथिवीत्युक्ते यावतां सहभावेन समानं स्थानम्, ते सर्वे तद्ग्रहणेन गृह्यन्ते, एवमुँत्तरयोरपि स्थानयोः ॥ एवम्प्रकारमेकत्वम्, सम्भोगैकत्वं चोपेक्षितव्यम् ॥ सम्भोगहेतुकमेकत्वं सम्भोगैकत्वम् । सम्भोगो नाम इतरेतरोपकारित्वम्, समानकार्यतेत्यर्थः । तच्च पुनर्भिन्नस्थानानामपि भवति, किमङ्ग पुनः समानख्यानानामिति । "यथा पृथिव्याः पर्जन्येन च, वाय्वादित्याभ्यां च सम्भोगः"। कथम् ? पृथिव्योषध्युत्पत्तौ स्वकार्य्यारम्भे पर्जन्यवाय्वादित्यकृतमुपकारमपेक्षते । तदुक्तम्,-"त्रयस्तपन्ति पृथिवीमनूपाः ( ऋ० सं० ७, ७, १९, ३ )"-इति ॥ "अग्निना च इतरस्य लोकस्य" । तदप्युक्तम्,-"अग्निर्वा इतो वृष्टिं समीरयति", "दिवं जिन्वन्त्यग्नयः ( ऋ० सं० २, ३, २३, ५ )"-इति च ॥ तदेवम्प्रकारमेकत्वं कार्य्यैकत्वात् स्थानैकत्वाद्वा भाक्तं न प्रतिषिध्यते । लोकेऽपि समानकार्यता भवति येषां तेषामैक्यमित्युच्यते ॥ ७ । ५ । ८ ॥

**तत्रैतन्नरराष्ट्रमिव ॥ ९ ॥ ५ ॥**

कः पुनरत्राविरोधी भेदाभेदे दृष्टान्तः ? इति । उभये हि प्रमाणं भेदाभेदवादिनः- आत्मविन्नैरुक्तयाज्ञिकाः । न हि ते स्वमनीषिकया भेदाभेदौ प्रकल्पयन्ति । किं तर्हि ? । मन्त्रार्थमुद्दिश्य । तस्माद् वक्तव्यः समञ्जसो दृष्टान्तः ? । उच्यते-"तत्र एतत् नरराष्ट्रम

---

१ 'संस्थानैकत्वं संभो' ॥ २ 'कमित्थं' 'च' कोशे नास्ति ॥ ३ 'प्रयुक्तः' ॥ ४ 'एवमितरयोरपि' ॥

इव" । यथा राष्ट्रमित्यभेदः, नरा इति भेदः, एवं पृथिव्यग्निरित्यभेदः, जातवेदा वैश्वानर इति भेदः । एवमुत्तरयोरपि स्थानयोः । तथा आत्मेत्यभेदः, लोकाश्च लोकिनश्चेति भेदः । सर्वत्रैव सामान्यविशेषधर्मो द्रष्टव्यः । पुरुषबुद्ध्यपेक्षातश्च गुणप्रधानतोऽपेक्षा पुरुषानुरागाविशेषतः[1] ॥

तत्रैवं सति आत्मविद आत्मनि त्रित्वनानात्वे गुणीकृत्य तदङ्गप्रत्यङ्गभावेन कल्पयित्वैकमात्मानं पश्यन्ति । तथा नानात्वैकत्वे नैरुक्ता इति त्रित्वे, तथा त्रित्वैकत्वे याज्ञिका नानात्वे । एवमेषामविरोधः । अस्ति हि शब्दार्थयोः वक्तृप्रतिपत्तृवशेन[2] तद्बुद्ध्यपेक्षया अन्वयव्यतिरेकाभ्यां वर्त्तितुं शक्तिः, न तु स्वाभाविकमभिधानाभिधेयसम्बन्धमकृतकमप्रच्यवमानावभिधानाभिधेयौ[3] जहीताम्[4] । न ह्यग्नेरवभास्यं प्रत्यवभासनशक्तिः, अवभास्यस्य चावभास्यमानताशक्तिर्व्यवधानमन्तरेण विहन्यते । न ह्यकृतकं स्वयमप्यधीतको विकल्पते । वैदिकानां पदवाक्यप्रमाणानामात्मभावानुशयवशेनात्मविन्नैरुक्तयाज्ञिका वेदस्याविपर्यासिनीमप्यध्यात्माधिदैवाधियज्ञविषयनियतामर्थाभिधानशक्तिं विपर्यासिनीमिव मन्यमानाः परस्परतो विपर्यस्यन्ते । तदेतत् सर्वथापि भेदाभेदवार्त्ते देवतासतत्त्वं यथाग्रहं वक्तृप्रतिपत्तृवशेन[5] प्रख्यातिमुपनयत्, स्तुतिरूपकेणात्मनोऽर्थसतत्त्वं तथाभूतं मन्त्रैराविष्क्रियते । तदुक्तम्,—"तत्रोपमार्थेन युद्धवर्णा भवन्ति" ( २ । १६ । २ )—इति । दर्शितं चैतन्मन्त्रेण,—"न त्वं युयुत्से"—इति । निष्ठितरूपत्वेन स्वस्वे विषयेऽध्यात्मादौ परमार्थतया ऐकात्म्ये निष्ठा, तदन्तत्वाद् वाचः । तदुक्तम्,—"यतो वाचो निवर्त्तन्ते"—इति ॥ ७ । ५ । ९ ॥ *

## अथाकारचिन्तनं देवतानाम् ॥ १ ॥

"अथाकारचिन्तनं देवतानाम्" । आह—माहाभाग्याद् देवताया विकरणधर्मित्वादनियम आकारे, अथ नियमः ? नन्वैश्वर्यव्याघातान्माहाभाग्याद्देवताया इत्येतद्व्याहन्यते, तस्माद्थाकारचिन्तनं देवतानामित्येतदनारम्यम् ? उच्यते—आरम्यमेवं । प्रकृतिसत्तामनपेक्ष्य विकरणं नाम देवताधर्मो नास्ति । तस्मात् प्रकृतिश्चिन्त्यते देवतायाः । अपि च, यत एवेश्वरा देवास्तत एवोभयभावित्वात्[6] 'किमाकारवत्त्वं स्वभावो देवतायाः, अथवा निराकारवत्त्वम् ?' इति सतत्त्वपरिज्ञानाय चिन्त्यते ॥

अस्तु तावदियं चिन्ता, किमिदमविशेषेण पक्षत्रयमस्याश्चिन्ताया विषयः, उत वा कस्मिंश्चिदेवैकस्मिन् पक्षे द्वयोर्वैताच्चिन्त्यते ? इति ॥

---

१ 'विशेषात्' ॥ २ 'वक्तृप्रतिवक्तृवशेन' ॥ ३ 'मप्रच्याव्यमानावभि' ॥ ४ 'जहीतः' ॥ ५ वक्तृप्रतिवक्तृवशेन' ॥ * इतीमे पञ्चमखण्डसमासिरिष्टव्या ॥ ६ 'भागित्वात्' ॥

इह तावदात्मविदामेक आत्मा स प्राग्विकारापत्तेः सन्मात्र उदस्तसर्वाकृतिः, सर्गस्थित्योरुपात्तसर्वाकृतिः, तदेवमसावनाकृतिः, सर्वाकृतिर्वा ? इत्यनास्पदभूतोऽस्याश्चिन्ताया आत्मवित्पक्षः ।

अथ पुनर्यदासावुपात्तत्रिस्थानावस्थो नैरुक्तपक्षाभिमतमाग्निवायुसूर्यभावं बिभर्ति, तदापि प्रत्यक्षत्वादविषयत्वमस्याश्चिन्तायाः । प्रत्यक्षत्वात्तेषामपौरुषविध्यस्य तत्पक्षोऽप्याकारचिन्ताविषयाभावादुदस्यत एव ॥

अथ पुनर्याज्ञिकानां यावदभिधानं देवतापक्षवादिनाम् अग्निवायुसूर्याभिधानानि प्रत्यक्षार्थाभि[धान]सम्बन्धीनि, जातवेदोरुद्रेन्द्रपर्जन्याश्विप्रभृतीन्यप्रत्यक्षार्थाभिसम्बन्धीनि । शब्दमात्रं प्रत्यक्षम् । अभिधानानां च लोके दृष्टमाकृतिपदार्थवत्त्वम्, अनाकारार्थवत्त्वं च, रुद्रेन्द्रादीनां शब्दानां मन्त्रगतानां लौकिकैर्मनुष्यादिशब्दैर्वाय्वात्माकाशादिभिर्वाभिधानवत्त्वं तुल्यम् ? तत्रैतद् भवति, अप्रत्यक्षत्वाद्रुद्राद्यभिधानानामर्थस्य,—किन्नु खल्वमी रुद्रादिशब्दाः मनुष्यादिशब्दवदाकारवदर्थेनार्थवन्तः, उत वाय्वात्माकाशादिशब्दवदनाकारेण ? इति ॥

एवमयमस्याश्चिन्ताया याज्ञिकपक्षो विषयः "अपि वा पृथगेव स्युः" (७।५।५)—इति । अत एव याज्ञिकपक्षादनन्तरमिदमारब्धम्,—"अथाकारचिन्तनं देवतानाम्"—इति ॥ ७ । ६ । १ ॥ anthropomorphic -

## पुरुषविधाः स्युरित्येकम् ॥ २ ॥

किमाकारस्य चिन्त्यते ?, किमस्ति उत नास्ति ? इति । यद्यस्ति कीदृशः ? इह द्विविधा आकारिणोऽर्थाः,—चेतनाश्चाचेतनाश्च । तत्र चेतना मनुष्यादयः,अचेतनाश्च पाषाणादयः । तत्रैतद् भवति—किममी मनुष्यादिवच्चेतनाः उत पाषाणादिवदचेतनाः, द्रव्यमात्रं प्रत्यक्षम् ?—इत्युपोद्धृत्य संशयः ॥

तद्व्युदासाय पक्षः परिगृह्यते—"पुरुषविधाः स्युः इति एकम्"—इति । मन्त्रप्रत्ययमस्तित्वं देवताया अभ्युपगतम्,-यत्काम इत्युपक्रम्य तद्देवतः स मन्त्रो भवतीति,सति हि देवतास्तित्वे तद्देवतत्वं मन्त्रस्य।यदि चैवमाकारोऽपि तत्प्रत्यय एव भवितुमर्हति? अस्ति चेदं पौरुषविध्यं मन्त्रेषु देवतासंविज्ञातपदसम्बन्धीति । यत उच्यते—"पुरुषविधाः स्युः इति एकम्" । मन्त्रेषु दर्शनम् इति वाक्यशेषः । 'पुरुषविधाः' पुरुषप्रकाराः, पुरुषविग्रहा इत्यर्थः ॥ ७ । ६ । २ ॥

## चेतनावद्वद्धि स्तुतयो भवन्ति ॥ ३ ॥

१ 'मनुवाय्वाकाशादिभिर्वा' । २ 'वतार्थेनार्थ' ।

कोऽत्र हेतुः ? "चेतनावद्धद्धि स्तुतयो भवन्ति"। 'हि' शब्दो हेत्वर्थः, यस्माच्चेतनावतामिव स्तुतयो मन्त्रा अभिधायका भवन्ति। पूर्वो वतिर्मत्वर्थे, उत्तरस्तुल्यार्थे, तस्मात् पुरुषाकारविग्रहा इति ॥

ननु चैतन्यमपुरुषाकारविग्रहाणामपि हि गवादीनामस्ति नु नास्ति। न तु ते विवेकक्षमा आसन्नचेतनाः। लोकेऽपि हि यस्य हिताहितविवेकलक्षणं विशिष्टं संविज्ञानं न भवति, तमधिकृत्य ब्रुवते—निश्चेतनोऽयमिति। एवमेते च गवादयः सत्यपि चैतन्ये आसन्नचेतनत्वान्न विदुः श्वस्तनम्। न लोकालोकाविति हि विज्ञायते, तस्मादचैतना इवोपेक्ष्यन्ते। पुरुषस्तु वेद श्वस्तनम्, वेद लोकालोकौ, मर्त्येनामृतत्वमीप्सतीति। तस्माद्धिताहितपरिज्ञानात् पौरुषविध्यस्यैनं सिषाधयिषितत्वादनपेक्ष्यसामान्यं विशिष्टचैतन्यः पुरुषो नियम्यते। यथैव चेतयमाना अर्थान् पुरुषाः श्रूयन्ते, तथैव देवता अपि। तस्मात् "पुरुषविधाः स्युः"—इत्युपपन्नम् ॥ ७ । ६ । ३ ॥

## तथाभिधानानि ॥ ४ ॥

"तथाभिधानानि" यथैवं पौरुषविध्यमुपपद्यते चेतनावत्सदृशस्तुतिभिः। तत् प्रति ताः कारणं भवन्ति। तथैव संवादसूक्तेषु परस्परमभिधानानि उक्तप्रयुक्तानि सम्बद्धार्थानि परस्परतः, कयाशुभीयादिषु कुतस्त्वमिन्द्रेत्येवमादीनि। तस्मात् पौरुषविध्यं देवतानाम् ॥ ७ । ६ । ४ ॥

## अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते ॥
## "ऋष्वा त इन्द्र स्थविरस्य बाहू"
## "यत्सं गृभ्णा मघवन्काशिरित्ते" ॥ ५ ॥

"अथापि" अयमपरो हेतुः पौरुषविध्ये देवतानाम्,—"पौरुषविधिकैरङ्गैः संस्तूयन्ते"। पौरुषविध्यत्वे यान्यङ्गानि, तैः संस्तूयन्ते। तद्यथा,—"ऋष्वा त इन्द्र स्थविरस्य बाहू"। "यत्संगृभ्णा मघवन् काशिरित्ते"॥

"उरुं नो लोकमनुनेषि विद्वान् स्वर्वज्ज्योतिरभयं स्वस्ति।
ऋष्वा त इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणा बृहन्ता ॥ ( ऋ० सं० ४, ७, ३१, ३ )"—इति ॥

(fist) strong is the hold of the hand by which thou keepest the wealth

---

१ 'पौरुषविध्यस्य' २ 'चेतयमानाः पुरुषाः श्रूयन्ते तथैव देवता अपि' ॥ ३ 'यथैव पौरुषविध्ये स्तुतिःकारणं भवति तथैव संवादसूक्तेषु' ॥ ४ 'उक्तप्रत्युक्तानि' ॥

तीः स्तुतयः चेतनावत्सदृश्यः पुरुषविधाः

शंयोरार्षम् । त्रिष्टुप् । ऐन्द्री । एकादशिन्यामैन्द्रस्य पशोर्वपाया याज्या ॥ हे इन्द्र विद्वान् जानंस्त्वम् 'उरुं' विस्तीर्णं 'लोकं' यः त्वम् 'नः' अस्मान् 'अनुनेषि' अनुनयसि, स्वेन सुकृतेन कर्मणा गच्छतां गमनानुग्रहे वर्त्तसे । 'स्वर्वज्योतिः' आदित्यसमानं प्रकाशेन लोकम्, 'अभयम्' 'स्वस्ति' स्वस्त्ययनाय । तस्य "ते" तव वयम् "इन्द्र !" "ऋष्वा" ऋष्वौ एतौ रेषणौ शत्रूणाम्, "स्थविरस्य" महतः "बाहू" हस्तौ 'बृहन्ता' बृहन्तौ महान्तौ, 'शरणा' शरण्यौ आश्रयणीयौ नित्यम् 'उपस्थेयाम' उपतिष्ठेमेत्येतदाशास्महे ॥

"यत्सङ्गृभ्णा मघवन्काशिरित्ते (ऋ० सं० ३, २, १, ५)"—इति ॥

व्याख्यातः शेषः । एवमस्मिन् मन्त्रद्वये बाहुमुष्टिसम्बन्धदर्शनात् स्तुत्यस्यैन्द्रस्य पौरुषविध्यम्, अन्यथा हि वितथाभिधानत्वं मन्त्रयोः, तथा च सत्यानर्थक्यं मन्त्राणाम्, सर्वेषां शास्त्रस्य च तदर्थलक्षणभूतस्य । तन्मा भूदित्यवश्यमेवेष्टव्यं पौरुषविध्यं देवतानामिति ॥ ७ । ६ । ५ ॥

## अथापि पौरुषविधिकैर्द्रव्यसंयोगैः ॥

## आ द्वाभ्यां हरिभ्यामिन्द्र याहि, कल्याणीर्जाया सुरणं गृहे ते ॥ ६ ॥

"अथापि" अयमप्यपरो हेतुः पौरुषविध्ये देवतानाम्—"पौरुषविधिकैः द्रव्यसंयोगैः" । तद्यथा—"आ द्वाभ्यां हरिभ्यामिन्द्र याहि" "कल्याणीर्जाया सुरणं गृहे ते" ॥

"आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।
आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥ (ऋ० सं० २, ६, २१, ४)"—इति ॥

गृत्समद ऋषिः । ऐन्द्री । त्रिष्टुप् ॥ हे भगवन् ! इन्द्र ! यदि तावत् तव द्वौ हरी सन्निहितौ, ततस्तावेव रथे युक्त्वा, ताभ्याम् "हरिभ्याम्" "आयाहि" । अथ चत्वारः ? ततस्तैः 'चतुर्भिः' अथ षट् ? ततस्तैः 'षड्भिः' अथाष्टौ ? ततस्तैः 'अष्टाभिः' अथ दश ? ततस्तैः 'दशभिः' 'आ' याहि । इदं 'सोमपेयं' सोमपानकर्म प्रति । किम् ? इति । एवं ब्रूमहे,—'अयं' 'सुतः' सोमोऽभिषुतः त्वदर्थम्, स त्वं हे 'सुमख' सुधन ! 'मा' केनाचित् 'मृधः' संग्रामं 'कः' कार्षीः, अविलम्बितमागच्छेत्यभिप्रायः ॥

'अपाः सोममस्तमिन्द्र प्रयाहि कल्याणीर्जायाः सुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ (ऋ० सं० ३, ३, २०, १)"—इति

विश्वामित्रस्यार्षम् । त्रिष्टुप् । हारियोजनस्यानुवाक्या । हे भगवन् ! 'इन्द्र !', 'अपाः' पीतवानसि 'सोमम्' एतस्मिन् कर्मणि । स त्वं पुनः 'अस्तं' गृहं 'प्रयाहि' । यस्मात् तव 'कल्याणीः जायाः' 'तत्र' 'बृहतः' च 'रथस्य' 'निधानं' रथशाला, 'विमोचनं' च 'वाजिनः' जित्वा संग्राममागतस्य, 'दक्षिणावत्' अन्यदपि, "सुरणं" यद्यद्रमणीयं तत्तत्सर्वं "ते" तव "गृहे" वर्त्तते । तस्मात् पुनरस्तं प्रयाहि ॥

एवमेतयोर्मन्त्रयोर्हरिगृहजायारथाभिसम्बन्धात् पौरुषविध्यमिन्द्रस्य, न ह्यपौरुषविध्ये सति सम्बन्धो जायादिभिरस्ति ॥ ७ । ६ । ६ ॥

**अथापि पौरुषविधिकैः कर्मभिः ॥**

**अद्धीन्द्र पिब च प्रस्थितस्य ॥** Offered (Soma).

**आश्रुत्कर्ण श्रुधी हवम् ॥ ७ ॥ ६ ॥**

"अथापि" अयमपरो हेतुः पौरुषविध्ये । कतमः ? "पौरुषविधिकैः कर्मभिः" संस्तूयन्ते देवताः । तद्यथा,–

"अद्धीन्द्र पिब च प्रस्थितस्य," "आ श्रुत्कर्ण श्रुधी हवम्" ।

"इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।

तुभ्यं सुतो मघवन्तुभ्यं पक्वो३ऽद्धीन्द्र पिब च प्रस्थितस्य ॥ (ऋ० सं० ८, ६, २१, २)"–इति ॥

अग्नियुतो नाम स्थूरपुत्रः, तस्यार्षम् । त्रिष्टुप् । ऐन्द्री । हे 'मघवन् !' 'इन्द्र !' 'इदं' 'हविः' आज्यादिकम्, 'तुभ्यं रातम्' मनसास्माभिः निरुप्तम्, पूर्वं निर्वपणादौ संस्कारकाले । तदिदानीं हे 'सम्राट् !' 'अहृणानः' 'अहृणन् प्रतिगृभाय' प्रतिगृहाण । अपि च 'तुभ्यं' त्वदर्थमेवायं 'सुतः' अभिषुतः सोमः । अपि च हे 'मघवन्' ! त्वदर्थमेवैषः पुरोडाशः 'पक्वः' । स त्वम् अस्य सोमस्य 'प्रस्थितस्य' "अद्धि पिब च" स्वमंशमिति शेषः ॥

"आ श्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।

इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् (ऋ० सं० १, १, २०, ३)"–इति ॥

मधुच्छन्दस आर्षम् । अनुष्टुप् । ऐन्द्री । श्रोतारौ यस्य कर्णौ अप्रतिहतश्रवणौ सर्वत्र, all-hearing ears- स भवति श्रुत्कर्णः, तस्य सम्बोधनम्–हे 'श्रुत्कर्ण !' "आ" आभिमुख्येन 'श्रुधि' शृणु त्वम् "हवम्" आह्वानमस्माकम् । श्रुत्वा च 'नू चित्' पुराण इव 'दधिष्व' धार-

यस्व, एताः 'मे' मम 'गिरः' हृदयेन । किंच, हे भगवन् ! 'इन्द्र !' 'मम' 'इमं स्तोमम्' 'युजः' त्वद्युक्तस्य त्वां प्रत्याहतस्य पुनः पुनरपि, ब्रुवतः 'कृष्व' कुरुष्व श्रोतुम् 'अन्तरम्' क्षणमित्यर्थः ॥

एवमनयोर्मन्त्रयोः अद्धि, आश्रृणुहीति आमन्त्रणपूर्वकादरश्रवणपूर्वको विनियोगः, स न सम्भवत्यपौरुषविध्ये, न हि गवादयो अद्धि, आ श्रृणुहीत्युक्ताः किञ्चित् प्रतिपद्यन्ते । तस्मात् कार्यकारणसन्निवेशो मनुष्यवद्देवतानाम्, कार्यकारणापेक्षं च विज्ञानम् । तदेवमेतेभ्यो मन्त्रदर्शनेभ्यः स्थितं पौरुषविध्यं मन्त्रदेवतानामिति॥७।६।७॥*

not human in character

## अपुरुषविधाः स्युरित्यपरम् ॥ १ ॥

"अपुरुषविधाः स्युः इत्यपरम्" दर्शनमिति वाक्यशेषः। तदुक्तम् "अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"–( २। १९ । २ । )–इति विज्ञायते । तदाहुः "नैतदस्ति यद्देवासुरम्"–इति च "न त्वं युयुत्से"–इत्यपि चैतदुक्तमेव ॥ ७ । ७ । १ ॥

## अपि तु यद्दृश्यतेऽपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति ॥ २ ॥

"अपि तु यद् दृश्यते" देवानां किञ्चित् "अपुरुषविधम्" अपुरुषप्रकारं तादित्यर्थः । "तद्यथा–अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमाः–इति" । प्रत्यक्षत एतान्यपुरुषप्रकाराणि इत्येतेषामतोऽन्यथाभ्युपगमे दृष्टहानिः स्यात्, न चैतदिष्टम् । तस्मादपुरुषविधा अग्न्यादयः, तत्सामान्याददृष्टा इन्द्रादयोऽप्यपुरुषविधाः, न हि मनुष्यत्वे तुल्ये केचिदाकारिणः केचिदनाकारिण इति, तथैव देवतानामपि हि न्यायः । तस्मादपुरुषविधा इति ॥ ७ । ७ । २ ॥

## यथो एतच्चेतनावद्धद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि ॥ ३ ॥

(चेतनावत्) inanimate objects

"यथो एतत् चेतनावद्वत् हि स्तुतयः भवन्ति इति, अचेतनान्यपि एवं स्तूयन्ते, यथा–अक्षप्रभृतीनि ओषधिपर्यन्तानि" । तस्मात् चेतनावत्स्तुतिमत्त्वमहेतुः पौरुषविध्ये देवतानाम्, अचेतनेष्वप्यक्षादिषु चेतनावत्स्वतेर्दृष्टत्वादिति ॥ ७ । ७ । ३ ॥

## यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभिक्रन्दन्ति हारितेभिरासभिरिति ग्रावस्तुतिः ॥ ४ ॥

mouths

* इतोऽग्रे षष्ठखण्डसमाप्तिर्द्रष्टव्या ॥ १ 'तस्मात्पुरुषविधा' ॥

"यथो एतत्पौरुषविधिकैः अङ्गैः संस्तूयन्ते इति" अयमप्यहेतुः, व्यभिचरित-त्वात्, "अचेतनेषु अपि एतत् भवति" तद्यथा—"ग्रावस्तुतिः" ।

"एते वदन्ति शतवत्सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः ।

विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत ॥ ( ऋ० सं० ८, ४, २९, २ )"—इति ॥

अर्बुदस्यार्षम् । जगती । ग्रावस्तुतिः । 'एते' 'ग्रावाणः' अभिषवकर्म कुर्वाणाः 'वदन्ति' कथम् ? 'शतवत्' शतमिव । 'सहस्रवत्' सहस्रमिव । शब्दबाहुल्याभि-प्रायम् 'अभिक्रन्दन्ति' आह्वयन्ति सोमपातॄन्—आगच्छतागच्छतास्माभिरभिषुतं सोमं पातु-मिति । 'हरितेभिः' सोमसंसर्गात् हरिद्वर्णैः 'आसभिः' आस्यैः । तत्र या इयं 'विष्ट्वी' व्याप्तिः ग्राव्णाम्, एतया 'सुकृत्यया' शोभनया क्रियया एते 'सुकृतः' शोभनस्य कर्मणः कर्त्तारः 'होतुः चित् पूर्वे' होतुरपि अग्नेः, मानुषहोतुर्वा पूर्वं प्रथमतरम्, 'हविः' एतत् सोमाख्यम्, 'अद्यम्' अदनीयम्, 'आशत' अश्नन्ति । अभिषवे सोमसंयोग-मात्रमशनमुपचर्यते ग्राव्णाम् । तस्मादपौरुषविध्यमिति । न हि ग्राव्णां यथाभूतान्या-स्यानि सन्ति, यत्संयोगेन च स्तूयन्ते, तद्वदिन्द्रादीनामप्ययथाभूतैर्बाहुमुष्ट्यादिभिः स्तुतिः स्यात् । तस्मादहेतुरयं यत् "पौरुषविधिकैरङ्गैः संस्तूयन्ते"—इति । तस्मा-दपुरुषविधाः ॥ ७ । ७ । ४ ॥

## यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव ॥ "सुखं रथं युयुजे सिन्धुरश्विनम्" इति नदीस्तुतिः ॥ ५ ॥

"यथो एतत् पौरुषविधिकैः द्रव्यसंयोगैः इति, एतत् अपि तादृशम् एव" औपचारिकम्, रूपकमात्रमित्यर्थः, यथैव हि आस्यादिकल्पना दृष्टव्यभिचारित्वात्[1] ग्रावप्रभृतिषु न सम्भवति रूपकमात्रं स्तुत्यर्थं सङ्कल्पतो बाह्वादिकार्यसिद्धिः, एवं हरि-रथजायादिस्तुतयो रूपकमात्रमिति । अपि च "सुखं रथं युयुजे सिन्धुरश्विनम्—इति नदी-स्तुतिः" न चास्यां स्तुतौ यथाभूतार्थत्वोपपत्तिरस्ति, असम्भवात् । कथमसम्भवः ? न ह्युदकात्मिकाया नद्या वहन्त्या रथेऽवस्थानं सम्भवति ।

"सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।

महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ( ऋ० सं० ८, ३, ७, ४ )"—इति ॥



[1] 'व्यभिचारित्वात्' ॥

सिन्धुक्षिन्नाम प्रियमेधसः पुत्रः, तस्येयमार्षम् । जगती । नदीस्तुतिः ॥ "सुखं" सुखहेतुं लोकस्य, "रथं" रंहणमुदकम् "युयुजे" युक्तवती "सिन्धुः" नदी "अश्विनम्" अशनेन व्यापनेन तद्वन्तम् उदकरथम् । 'तेन' 'वाजम्' अन्नम् 'सनिषत्' सम्भक्तवती उत्पादितवती 'अस्मिन्' 'आजौ' आजवने संग्रामे यतो यतो गच्छति, ततस्ततो व्रीह्यादि अन्नम् अभिनिष्पादयतीत्यर्थः यस्माचायमुदकरथोऽन्नमभिनिष्पादयति, तस्मात् तस्य 'महान्' 'महिमा' माहाभाग्यं 'पनस्यते' स्तूयते स्तोतृभिः । 'अदब्धस्य' अनुपहिंसितस्य, 'स्वयशसः' स्वायत्तकीर्त्तेः, 'विरप्शिनः' विरपणशीलस्य शब्दकारिण इत्यर्थः। रथमिव अश्विनम्—इति केचित् ॥

तदेवमादिष्वसम्भवात् मुख्यार्थकल्पनायाः, सर्वत्र रूपकप्रवादाः स्तुतय इत्युपेक्ष्यम् ॥ ७ । ७ । ५ ।

**यथो एतत्पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव ॥ "होतुश्चित्पूर्वे हविरद्यमाशत" इति ग्रावस्तुतिरेव ॥ ६ ॥**

"यथो एतत् पौरुषविधिकैः कर्मभिः—इति, एतत् अपि तादृशम् एव ।—होतुश्चित्पूर्वे हविरद्यमाशत ( ऋ० सं० ८, ४, २९, २ ) इति" अशनशक्तिक्रियया ग्रावाणः स्तूयन्ते, न च पुनर्ग्राव्णां यथाभूतमशनमस्ति । तस्मादिदमपि रूपकमेव ॥ "एते वदन्ति" ( ७ । ७ । ४ ॥ )—इत्यत्र व्याख्यातम् ॥ ७ । ७ । ६ ॥

**अपि वोभयविधाः स्युः ॥ ७ ॥**

"अपि वा उभयविधाः स्युः" उभयहेतुप्रामाण्यात् ॥ ७ । ७ । ७ ॥

**अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्य ॥ ८ ॥**

"अपि वा पुरुषविधानामेव सताम्" पृथिव्यादीनां "कर्मात्मान एते स्युः" अपुरुषविधाः क्षितिजलादयः । परे तु, अधिष्ठातारः पुरुषविग्रहाः । एवमुभयोः प्रत्यक्षागमयोरप्यनुग्रहः कृतो भविष्यति । "यथा,—यज्ञः यजमानस्य" कर्मात्मा, इदमेतेनाङ्गं संस्क्रियते, इदमेतेनाङ्गमुपचीयत इति संस्कृतममुष्मिन् लोके परैति इति च विज्ञायते ॥ ७ । ७ । ८ ॥

**एष चाख्यानसमयः ॥ ९ ॥ ७ ॥**

---



१. 'संभजनवती' ॥ २ 'अनुपदस्तस्य' ॥ ३ 'उपैति' ॥

"एष च आख्यानसमयः"। भारते चाख्यानसमय एष एव सिद्धान्त इत्यर्थः। पृथिवी, स्त्रीरूपेण भारावतारणाय ब्रह्माणं ययाचे। अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे। पुरुषरूपेणाग्निरूपेण च खाण्डवं ददाह। इत्येवमादि [ ना ] ॥

तदेतच्चतुर्द्धा भिद्यते, मन्त्रार्थदर्शनादेव —(१) पौरुषविध्यम्, (२) अपौरुषविध्यम्, (३) कर्मार्थात्मोभयविध्यम्, (४) नित्यमौभयविध्यमेवेति। सर्वं चैतदुपपद्यते, माहाभाग्ये सत्यैश्वर्यात्, कथमिव देवता न स्यात्—अमूर्ता, मूर्ता, एकधा, द्विधा, बहुधा चेति[1] ॥ यथा तु वर्त्तमानामपश्यन् मन्त्रदृशः तथा तथा अस्तुवन्[2], सर्वथैवादोषः, फलदर्शनात् नानावस्थादर्शनवदाख्यातॄणां परिदेवनानिन्दादिष्वपि चेन्द्रादीनां कामकारतस्तद्रूपमवस्थितानां सा सा स्तुतिरेव, न निन्दा।

उक्तं च,—

"हीना न निन्दा, स्तुतिरेव सा स्याद्देवान् मर्त्यः सम्यगभिष्टुयात्कः ॥

शक्तिक्षयेऽप्यध्यवस्यन्ति शिष्टाः स्तोतुं न पश्यन्ति गतिं यतोऽन्याम् ॥"—इति ॥ ७। ७। ९॥ *

## तिस्र एव देवता इत्युक्तं पुरस्तात्तासां भक्तिसाहचर्यं व्याख्यास्यामः ॥ १ ॥

अथाकारचिन्तनव्यवधानाद्देवतात्रयाधिकारस्य तद्विशेषविवक्षया तदनुस्मृतये च स एतत् प्रकरोति—"तिस्रः एव देवताः—इत्युक्तं पुरस्तात्" इति ॥ यः[3] पुनस्तत्र विशेषो विवक्षितः, स उच्यते[4],—"तासां भक्तिसाहचर्यं व्याख्यास्यामः"। तासमेव तिसृणां भक्तिसाहचर्यम्, भक्तिश्च साहचर्यं च भक्तिकृतं वा साहचर्य्यमिति। लोकादीनामेवाग्न्यादिभिर्भजनं भक्तिः, सहचरभावः साहचर्यम्। तत् किमर्थम्?, उच्यते—असंविज्ञातपदे मन्त्रे भक्त्या साहचर्येण वा यथा देवता गम्येतेत्येवमर्थं भक्तिसाहचर्यमुच्यते ॥ ७। ८। १ ॥

## अथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री त्रिवृत् स्तोमो रथन्तरं साम ये च देवगणाः समाम्नाताः प्रथमे स्थानेऽग्नायी पृथिवीळेतिस्त्रियः ॥ २ ॥

---

[1] 'वेति' ॥ [2] 'स्तुवन्ति' ॥ * इतोग्रे सप्तमखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ सप्तमा (द्वादशा)ऽध्यायस्य द्वितीयः पादः ॥ ७, २, ॥" इति तूपलभ्यते ॥ [3] 'यत्पुनः' ॥ [4] 'उच्यताम्' ॥

यत्रैवमुच्यतां तर्हि कानि किम्भक्तीनि ?, इति । तदुच्यते—"अथ एतानि अग्निभक्तीनि" । अथेति विशेषाधिकारे । अग्निं भजन्ते, अग्निना वा भज्यन्ते—इत्यग्निभक्तीनि ॥ कतमानि ? "अयं लोकः" इत्येवमादीनि अग्निभक्तीन्यवगन्तव्यानि । "ये च देवगणाः समाम्नाताः प्रथमे स्थाने" । तद्यथा,—आप्री, अक्षाः, ग्रावाणः, अभीपवः—इत्येवमादीनि ॥ "अग्नायी, पृथिवी, इळा—इति स्त्रियः" । 'इळा, पृथिवी, अग्नायी'—इति क्रमेण वक्तव्ये क्रमभेदोऽग्नायी तत्समा[ना]ख्यानात् सन्निकृष्टतरा, न तथा पृथिवीति, तस्मात् प्रथममुच्यते, ततः पृथिव्याश्रयसम्बन्धादग्नेर्न तथेळा, परोक्षादभिधेयस्य ॥ 'आप्री'—मध्ये 'तिस्रो देवीः' इत्यत्र इळा, भारत्याः द्युस्थानाया अनन्तरं श्रूयमाणा,—"आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॒ मनु॒ष्वदि॒ह चे॒तय॑न्ती ( ऋ० सं० ८, ६, ९, ३ )"—इति । कथं पृथिवीस्थाना ? इति । उच्यते—अनुयाजेषु सामर्थ्यात्, "द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या" इत्यतः सामर्थ्यमुन्नीय वसुसाहचर्यात् इहैवेळयेति चाग्निभक्तिरिळेत्याह । रुद्रैः साहचर्यात् सरस्वती मध्यस्थाना आदित्यैः साहचर्यात् भारती द्युस्थानेति ॥ ७ । ८ । २ ॥

## अथास्य कर्म वहनं च हविषामावाहनं च देवतानां यच्च किञ्चिद्दार्ष्टिविषयिकमग्निकर्मैव तत् ॥ ३ ॥

"अथास्य कर्म" अथास्याग्नेः कर्म सहभावि, अनन्यदेवतागामि, यत्संयोगादसत्यप्यग्निशब्दे आग्नेय एव मन्त्रो भवति । "वहनं च हविषाम्" इत्येवमादि । "दार्ष्टिविषयिकम्" दृष्ट्यनुग्रहो यस्य विषयः, तद्दार्ष्टिविषयिकम्, प्रकाशादि कर्मेत्यर्थः । "अग्निकर्मैव तत्"—इति (अथास्य कर्म इति) प्रकृते पुनर्वचनमादरार्थम्, आध्यात्म्येऽपि यावान् कश्चित् प्रकाश इति ॥ ७ । ८ । ३ ॥

## अथास्य संस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋतवः ॥ ४ ॥

"अथास्य संस्तविका देवाः" यैः सह अग्निः स्तूयते । तद्यथा,—"इन्द्रः, सोमः" इत्येवमादयः । मन्त्रस्वभावोपप्रदर्शनाय संस्तवोदाहरणम् । अग्नेः पूर्वनिपाताद् देवताद्वन्द्वे मुख्यता—

"अग्न॒ इन्द्र॑श्च दा॒शुषो॑ दुरो॒णे सु॒ताव॑तो य॒ज्ञमि॒होप॑यातम् ।
अम॑र्धन्ता सोम॒पेया॑य देवा ॥ ( ऋ० सं० ३, १, २५, ४ )"—इति ॥

१ 'आप्योऽक्षाः' ॥

विश्वामित्रस्येयमार्षम् । विराट् । अनुष्टुप् । आग्रयणे विनियोगः । हे भगवन् ! 'अग्ने !' त्वम् 'इन्द्रः च' 'देवा' देवौ अस्य 'दाशुषः' दत्तवतः हवींषि, यजमानस्य 'दुरोणे' यज्ञगृहे 'सुतावतः' अभिषुतवतः 'यज्ञम्' सोमम् 'अमर्धन्ता' मृधं संग्राममकुर्वाणौ अन्तरा केनचित् सह 'सोमपेयाय' सोमपानार्थम् 'उपयातम्' इत्येतदाशास्महे ॥

"अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।

प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ (ऋ० सं० १, ६, २८, १)"—इति ॥

सोमेन सह संस्तवः । गोतमस्यार्षम् । अनुष्टुप् । पौर्णमासे अग्नीषोमीयस्यानुवाक्या ॥ हे 'अग्नीषोमौ !' युवामुच्येथे । 'इमं' 'हवम्' आह्वानं 'मे' मम 'सु' सुष्ठु 'शृणुतम्' 'वृषणा' वृषणौ वर्षितारौ श्रुत्वा चागच्छतम् । आगत्य च 'प्रतिहर्यतं' प्रतिप्रेप्सतं, मया पूर्वं प्रेप्सितौ प्रति कामयेथाम् इमानि सूक्तानि श्रोतुम् । श्रुत्वा चेमानि 'भवतं' 'दाशुषे' युवां हविर्दात्रे 'मयः' सुखावित्यर्थः ॥

"त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् (ऋ० सं० ३, ४, १२, ४)"—इति ॥

वरुणेन संस्तवः । वामदेवस्यार्षम् । त्रिष्टुप् । अवभृथे विनियोगः । हे भगवन् ! 'अग्ने !' 'त्वम्' 'नः' अस्मान् यथावत् 'विद्वान्' जानानः भक्ता मम एते इति । 'वरुणस्य देवस्य' यः अस्मान् प्रति 'हेळः' क्रोधः, तम् अनेनावभृथकर्मणा 'अवयासिसीष्ठाः' अपगमय । किंच, यः त्वं 'यजिष्ठः' यष्टृतमः, देवानां होतृत्वे वर्त्तमानः 'वह्नितमः' वोढृतमश्च हविषाम्, स त्वं पुनः पुनः 'शोशुचानः' देदीप्यमानः तेषु तेषु कर्मसु 'विश्वा' विश्वानि सर्वाणि 'द्वेषांसि' द्वेष्याणि 'प्र' प्रकर्षेण 'अस्मत्' अस्मत्तः 'मुमुग्धि' मुञ्च वियोजयेत्यर्थः ॥

"अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः ।

इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आधत्तमस्मे (ऋ० सं० ४, ८, १६, ६)"—इति ॥

पर्जन्येन संस्तवः । भरद्वाजस्यार्षम् । त्रिष्टुप् ॥ हे 'अग्नीपर्जन्यौ !' युवाम् उच्येथे । 'अवतम्' आगच्छतम्, इमां 'धियम्' इदं कर्म प्रति, 'मे' मम 'अस्मिन्' 'हवे' आह्वाने 'सुहवा' सुहवौ स्वाह्वानौ 'सुष्टुतिं' शोभनामिमां स्तुतिं श्रोतुम् । आगत्य च

१ 'आग्रायणे' ॥ २ 'अवयोजय' ॥ ३ 'अवगच्छतम्' ॥

श्रुत्वा इमाम् 'इळाम्' इडाम् अन्नम् 'अन्यः' एकः 'जनयत्' जनयतु, 'गर्भम् अन्यः' गर्भमेको जनयतु। तौ युवामेवं प्रतिसंवत्सरं 'प्रजावतीः' प्रजासंयुक्ताः 'इषः' अन्नानि 'आ' आभिमुख्येन स्थित्वा 'धत्तं' दत्तम्, 'अस्मे' अस्मभ्यमित्यर्थः ॥

"अग्ने॑दे॒वाँ इ॒हाव॑ह सा॒दया॒ योनि॑षु त्रि॒षु।
परि॑भूषपिब॑ ऋ॒तुना॑ ॥ ( ऋ० सं० १, १, २८, ४ )"-इति ॥

ऋतुभिः संस्तवः। मेधातिथेरार्षम्। गायत्री। ऋतुयाजेषु विनियोगः॥ हे भगवन्! 'अग्ने!' 'देवान्' 'इह' अस्माकं कर्मणि 'आवह' आह्वय। आहूय देवान् 'सादय' 'योनिषु त्रिषु' सवनेषु त्रिषु। एतान् यथाकालं यज। अमुना प्रकारेण 'परिभूष' सर्वतो देवयागेनालङ्कुरुष्व एतं यज्ञम्, आत्मना 'पिब' चैतं सोमम् 'ऋतुना' सह ॥ ७।८।४॥

## आग्नावैष्णवं च हविः ॥ ५ ॥

"आग्नावैष्णवं च हविः"। हविर्ग्रहणात् हविष एव सम्प्रदानार्थत्वम्। या ऋचः ताः संस्तवेनाग्नाविष्णवोः सन्ति। तद्यथा-

"अग्ना॑विष्णू स॒जोष॑से॒मा व॑र्द्धन्तु वां॒ गिरः॑।
द्यु॒म्नैर्वाजे॑भि॒रा ग॑तम्।"-इत्येवमाद्याः ॥

वामदेवस्येयमार्षम्। गायत्री। आग्नावैष्णवे हविषि विनियोगः॥ हे 'अग्नाविष्णू 'सजोषसा' सजोषसौ नित्यं सह जोषणौ नित्यं समानप्रीती[1] 'वां' युवामुच्येथे। 'इमाः' एताः अस्मद्'गिरः' अस्मत्स्तुतयः 'वर्द्धन्तु' वर्द्धयन्तु युवाम्। वृद्धौ च सत्यामस्मत्सम्प्रदेयैः 'द्युम्नैः' द्योतनवद्भिः 'वाजेभिः' अन्नैरभ्युद्यतैः 'आगतम्' अस्मान् प्रत्यायातम् ॥ ७।८।५॥

## न त्वृक् संस्तविकी दशतयीषु विद्यते ॥ ६ ॥

"न त्वृक् संस्तविकी दशतयीषु विद्यते"। 'न'-इति प्रतिषेधः। 'तु' शब्दोऽव' धारणार्थः। 'ऋक्' 'संस्तविकी'[2] संस्तवयुक्ता, 'दशतयीषु' दशमण्डलावयवप्रविभागेन तायत इति दशतयः ऋग्वेदः, तस्य शाखाः दशतय्यः, तासु सर्वास्वपि शाखासु एकापि हविष्यविनियुक्ता शाखमध्यपातिनी ऋक् अग्नाविष्णवोः संस्तविकी नास्ति। स्यादप्यन्यत्र संस्तविकी, न तु दशतयीषु। असंस्तवेन वा दशतयीष्वपि इत्युत्सर्गं दर्शयाति, एवमेतन्मया निपुणमन्विष्यत इति ॥ ७।८।६॥

## अथाप्याग्नापौष्णं हविर्न तु संस्तवः ॥ ७ ॥ ८ ॥

१ 'प्रीतौ' ॥ २ 'सांस्तविकी'

अथाप्ययमपर उत्सर्गः,—"अथाप्याग्नापौष्णं" "हविः" एव, "न तु संस्तवः"। तस्मिंस्तु हविषि। किंतु पृथक् पृथगेव अग्निः स्तूयते पूषा च ॥ ७।८।७ ॥

तत्रैतां विभक्तिस्तुतिमृचमुदाहरन्ति—॥

"तत्र" तस्मिन् संस्तवे अग्निपूष्णोः "एतां विभक्तिस्तुतिम् ऋचम्" "उदाहरन्ति" नैरुक्ताः—॥*

"पूषा त्वेतश्च्यावयतु प्र विद्वानन॑ष्टपशु॒र्भुव॑नस्य गो॒पाः।
स त्वै॒तेभ्यः॒ परि॑ददत्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्यः॑ सुवि॒द॒त्रिये॑भ्यः।"

पूषा त्वेतः प्रच्यावयतु विद्वाननष्टपशुर्भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायितादित्यः स त्वैतेभ्यः परिददत् पितृभ्य इति सांशयिकस्तृतीयः पादः। पूषा पुरस्तात्तस्यान्वादेश इत्येकमग्निरुपरिष्टात्तस्य प्रकीर्त्तनेत्यपरम्। "अ॒ग्निर्दे॒वेभ्यः॑ सुवि॒द॒त्रिये॑भ्यः।" सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद्ददातेर्वा स्याद् द्व्युपसर्गात्॥ १॥ ९॥

"पूषा त्वेतः (ऋ० सं० ७, ६, २३, ३)"—इति ॥ देवश्रवसो यामायनस्यार्षम्। त्रिष्टुप्। पुनः शवस्य कर्णे[1] प्रमीतानुमन्त्रणे विनियोगः ॥ सः प्रमीत उच्यते। "पूषा" भगवान् "आदित्यः" पथामधिपतिः, सः "त्वा" त्वाम् "इतः" मनुष्यलोकात् विशिष्टेन पथा "प्रच्यावयतु" प्रगमयतु "विद्वान्" अव्यवहितज्ञानः। सर्वत्र ज्ञानाव्यवधानादेव च "अनष्टपशुः"। "भुवनस्य गोपाः"। भुवनस्य भूतजातस्य गोपाः रक्षिता उपर्यवस्थितः "सः" पूषा, एवंलक्षणः "त्वा" त्वां प्रगमय्य "एतेभ्यः" चन्द्रमण्डलोपान्तवासिभ्यः "पितृभ्यः" "परिददत्" परिददातु। तदुक्तम्,—"दक्षिणायनात् पितृलोकम्"—इति "अग्निः" अपि चैतेभ्यः उत्कृष्य "देवेभ्यः सुविदत्रियेभ्यः" ये विद्युतो मध्ये निवसन्ति, तेभ्यः परिददातु। तदप्युक्तम्,—"चन्द्रमसो वैद्युतम्"—इति। स त्वमेवमुभावपि देवलोकपितृलोकावभ्यनुहीत्याशीः

---

* इतोऽग्रे—अष्टमखण्डसमाप्तिरुपलभ्यते सा'तत्र तस्मिन् संस्तवे' इत्यतः प्रागुचिता'॥

[1] 'शुनस्कर्णे' ॥

प्रमीतस्य । उक्तं च,–"ये देवयानाः पितृयानाश्च लोकाः सर्वांस्ताननृणाः सञ्चरेम"[1]–इति ॥

"स त्वैतेभ्यः० इति सांशयिकः तृतीयः पादः" संशयोऽस्मिन्नस्तीति सांशयिकः, तृतीयः पादोऽस्या ऋचः ॥ कथं कृत्वा ? यथा,–"पूषा पुरस्तात्" 'पूषा त्वेतश्च्यावयतु'–इति, "तस्य अन्वादेशः–इति एकम्" सामर्थ्याद्दर्शनम् । तथा व्याख्यातमेव । त्रयः पौष्णाः पादाः, एक एवाग्नेयः एवमियं विभक्तस्तुतिः । अथवा–द्वावुत्तरावाग्नेयौ । तत्र अर्थयोजना,–पूष्णा प्रच्यावितं सन्तं सोऽग्निर्वक्ष्यमाणस्त्वामेतेभ्यः पितृभ्यो देवेभ्यः सुविदत्रियेभ्यः परिददातु, मा पितृभ्यः प्रेतेभ्य इत्यभिप्रायः । तं प्रेतं दिष्टमितोऽग्नय एव हरन्तीत्यपेक्ष्य सर्वनाम्नश्चोत्तरेणाप्यग्निशब्देन सम्बन्धमविरुध्यमानं व्यपेक्ष्य अकल्पयत् । "अग्निः उपरिष्टात्, तस्य प्रकीर्त्तना–इति अपरम्"–इति ॥

"सुविदत्रं धनं भवति"–"विन्दतेः वा" "एकोपसर्गात्" सु–इति एतेन एकेन उपसर्गेण उपसृष्टात् ॥ "ददातेः वा" "द्व्युपसर्गात्" सु–वि–भ्यां द्वाभ्याम् उपसर्गाभ्यां युक्तात् । तद् येषामस्ति ते सुविदत्रियाः ॥ ७ । ९ । १ ॥ *

**अथैतानीन्द्रभक्तीन्यन्तरिक्षलोको माध्यन्दिनं सवनं ग्रीष्मस्त्रिष्टुप् पञ्चदशस्तोमो बृहत्साम ये च देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियः ॥ १ ॥**

"अथ एतानि इन्द्रभक्तीनि"–इति । पूर्ववत् सर्वम् "अन्तरिक्षलोकः"–इत्येवमादि । "ये च देवगणाः समाम्नाताः" मरुदादयः । "याश्च स्त्रियः" अदित्याद्याः ॥ ७ । १० । १ ॥

**अथास्य कर्मरसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत् ॥ २ ॥**

"अथ अस्य कर्म" । "रसानुप्रदानम्" अवश्यायनम्, वर्षादि, "वृत्रवधः" मेघवधः, "या च का च बलकृतिः" अन्यापि । "इन्द्रकर्म एव तत्"–इति आदरार्थं पुनर्वचनम्, अपि कीटपिपीलिकादिषु यद्बलेन क्रियते सर्वम्, इन्द्रकर्मैव तदिति ॥ ७ । १० । २ ॥

**अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिर्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः ॥ ३ ॥**

---

[1] 'संचयेम' ॥ * इतोऽग्रे नवमखण्डसमाप्तिर्द्रष्टव्या ॥

"अथ अस्य संस्तविकाः देवाः" । "अग्निः, सोमः"—इत्येवमादयः । तद्यथा,—

'इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।
तद्वां चेति प्र वीर्य्यम् ॥ ( ऋ० सं० ३, १, १२, ४ )"—इति ॥

विश्वामित्रस्यार्षम् । गायत्री । ऐन्द्राग्ने हविषि विनियोगः ॥ हे 'इन्द्राग्नी' 'रोचना' रोचनौ दीपनौ हविषा च उदकेन च 'दिवः' 'परिभूषथः वाजेषु' अस्मान् सर्वतः, येनान्नेषु स्वामित्वेन भवेमहि, तथा कुरुतम् । 'तत्' वीर्य्यम् 'वाम्' भवतोः 'प्र' प्रकृष्टम् अहम् 'चेति' जाने, येन परिभावयथो यागेषु स्तोतॄन् पुरः । अत एवमाशास्महे ॥

सोमेन संस्तवः,—"इन्द्रासोमा समघशंसम्"—इत्यत्र व्याख्यातः ॥

वरुणेन संस्तवः—"इन्द्रावरुणा युवमध्वराय नः"—इति । व्याख्यातः शेषः ॥

"इन्द्रापूषणा वयं सख्याय स्वस्तये ।
हुवेम वाजसातये ॥ ( ऋ० सं० ४, ८, २३, १ )—इति ॥

पूष्णा संस्तवः । भरद्वाजस्येयमार्षम् । गायत्री । ऐन्द्रापौष्णे हविषि विनियोगः ॥ हे 'इन्द्रापूषणौ !' 'सख्याय' समानख्यानाय, 'स्वस्तये' स्वस्त्ययनाय च, 'वाजसातये च' अन्नसननाय च 'हुवेम' आह्वयामहे युवां वयं नित्यं यज्ञेषु इदमाशास्महे इति ॥

"इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती ।
उक्थं मदश्च शस्यते ॥ ( ऋ० सं० ३, ७, २५, १ )"—इति ॥

बृहस्पतिना संस्तवः । वामदेवस्येयमार्षम् । गायत्री । ऐन्द्राबार्हस्पत्ये हविषि विनियोगः ॥ हे 'इन्द्राबृहस्पती !' 'इदं' 'हविः' यद् वयं दद्मः, तत् 'प्रियम्' इष्टम् 'आस्ये' 'वाम्' अस्तु । यत् च इदम् 'उक्थं' 'शस्यते' 'मदः च' प्रतिगरेण सह, तच्च वां प्रियमस्तु । इत्येतदाशास्महे ॥

"विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ॥ ( ऋ० सं० २, ६, ३, २ )"—इति ॥

ब्रह्मणस्पतिना संस्तवः । गृत्समदस्येयमार्षम् । त्रिष्टुप् ॥ 'विश्वं' सर्वं जगत् 'सत्यं' यावदिदमस्ति । किंच, हे 'मघवाना' मघवानौ धनवन्तौ 'इन्द्राब्रह्मणस्पती !' युवामुच्येथे । 'युवोः' युवयोः सर्वम् एतत् स्वभूतम् । किंच, यतः सर्वस्येशानौ स्थः, अतः 'आपश्च' आपोऽपि ' न प्रमिनन्ति' न हिंसन्ति, 'व्रतम्' कर्म 'वां' युवयोः यथासङ्कल्पं वर्त्तते । यौ युवाम् एवमतिमहानुभावौ, तौ 'नः' अस्माकम् 'अच्छ' आभि-

---

१ 'वाजेषु' ॥

मुख्येन इदं 'हविः' 'जिगातम्' आगच्छतं भोक्तुम् । 'युजा' युजौ 'इव' सहचारिणौ 'वाजिना' वाजिनौ रथात् विमुक्तौ बुभुक्षू स्वम् 'अन्नम्' । इत्येतदाशास्महे ॥

इन्द्रापर्वता बृहता रथेन वामीरिष आवहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥ ( ऋ० सं० ३, ३, १९, १ )"—इति ॥

पर्वतेन संस्तवः । विश्वामित्रस्येयमार्षम् । त्रिष्टुप् ॥ हे 'इन्द्रापर्वता' इन्द्रापर्वतौ ! 'देवा' देवौ युवामुच्येथे । 'बृहता' महता रथेन, महतोदकरंहणेन उदकदानेन 'वामीः' वननीयाः 'इषः' अन्नानि 'आवहतम्' आवहन्तम् ईरयन्तं, व्रीह्यादीनि प्रेरयन्तम् । 'सुवीराः' शोभनवीराः । ततः स्वे काले ईजानानामस्माकं 'वीतं' भक्षयतम् 'हव्यानि' पुरोडाशादीनि 'अध्वरेषु' 'वर्द्धेथाम्' च 'गीर्भिः स्तुतिभिः पुनःपुनः प्रतिकर्म 'इळया' अन्नेन 'मदन्ता' मदन्तौ तृप्यन्तौ । इत्येतदाशास्महे ॥

"इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।
निःषीमद्भ्यो निर्धमथो निःषधस्थान्मघोनो हृदो वरथस्तमांसि ॥ ( ऋ०सं० ४, १, ३०, ४ )"—इति ॥

कुत्सेन संस्तवः । अवस्योरार्षम् । त्रिष्टुप् ॥ 'इन्द्राकुत्सा' हे इन्द्राकुत्सौ ! 'वहमाना' वहमानौ उह्यमानौ 'रथेन' युवां ब्रुवे । 'आवहन्तु वाम्' 'अत्याः' अश्वाः 'अपि' 'कर्णे' नित्यं कर्मणे । ततश्च कर्मणां परितोषितौ, अस्माभिः 'निःषीमद्भ्यः' 'निर्धमथः' सर्वतः अरीन् 'निःषधस्थात्' समानस्थानादन्तरिक्षादद्भ्यः अपः । ततः ओषध्याद्युत्पत्त्या सुकालं कुर्वाणौ । 'मघोनः' महान्त्येतानि 'तमांसि' 'हृदः' हृदयस्य च्छादकानि अनाकालभयकृतानि 'वरथः' वारयथः । इत्येतदाशास्महे ॥

"इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ( ऋ० सं० ५, ६, २४, ५ )"—इति ॥

विष्णुना संस्तवः । वसिष्ठस्यार्षम् । त्रिष्टुप् । त्रैधातव्यां विनियोगः॥ हे 'इन्द्राविष्णू!'युवम् 'दृंहिताः' स्थिरीकृताः 'शम्बरस्य नवतिं नव च पुरः' मेघस्य असुरस्य वा स्वभूताः पुरः 'श्नथिष्टम्' हतवन्तौ स्थः । ताश्च हत्वा मेघान्तर्गताः 'शतं' 'वर्चिनः' दीप्तिमतः अन्नवतो वा 'सहस्रं च साकम्' अवस्थितान् सहभावेन एकनिश्चयान् 'हथः' हतवन्तौ स्थः । 'अप्रति' अप्रतीकारान् 'वीरान्' 'असुरस्य' शम्बरस्य स्वभूतान् । यौ युवामेतदतिदुष्करमकार्ष्टम्, तावस्माकमपि शत्रून् हथः । इत्येतदाशास्महे ॥

"इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ।
इन्दवो वामुशन्ति हि ॥ ( ऋ० सं० १, १, ३, ४ )"—इति ॥

वायुना संस्तवः । मधुच्छन्दस आर्षम् । गायत्री । उपात्तद्विकर्मात्मनोऽपि हि मध्यमस्य एकस्यापि वाय्विन्द्रभावेन विकरणधर्मित्वात् द्वित्वं बिभ्रतो नैरुक्तपक्षेऽपि द्विवचनसंस्तुतिरविरुद्धा, यथा एकस्योदकस्य द्विपात्रस्थस्य द्विवचनेनोक्तिः । ऐन्द्रवायवस्य ग्रहस्य पुरोऽनुवाक्येयम् ॥ हे 'इन्द्रवायू !' युवामुच्येथे । 'इमे' 'सुताः' अभिषुताः 'इन्दवः' सोमा इत्यर्थः । सुसंस्कृताः सोमा यस्मात् 'उशन्ति' कामयन्ते युवामात्मपानाय, तस्मात् 'आगतम्' उपागच्छतं पातुमेतान् । कथं च पुनरुपागच्छतम् ? 'प्रयोभिः' अन्नैः अस्मत्सम्प्रदेयैरभ्युद्यतैः । इत्येतदाशास्महे ॥ ७ । १० । ३ ॥

## अथापि मित्रो वरुणेन संस्तूयते ॥ ४ ॥

"अथापि मित्रो वरुणेन संस्तूयते" । अथ—शब्दः प्रकृतात् इन्द्राद् विशेषतो मित्रादीन् प्रकरोति । अपि—इति सम्भावने । प्रकृताभ्यस्तिसृभ्यो देवताभ्यः पराण्यपरेणाभिधानेन संस्तवयुक्तानीति भेदपक्षे अविरोध एव । नैरुक्तपक्षे यद्विरुद्धाभासमिवं किञ्चिदत्र, तदिन्द्रवायुसंस्तवे प्रतिसमाहितम् ॥ 'मित्रो वरुणेन'—इत्येवमादिषु या प्रथमया निर्दिश्यते, सा मुख्या स्तुतिः, या तृतीयया सा अमुख्या, सा च निर्दिष्टा[1] ॥

"आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजांसि सुक्रतू ॥ ( ऋ० सं० ३, ४, ११, ६ )"—इति ॥

विश्वामित्रस्यार्षम् । गायत्री । मैत्रावरुण्याः पयस्यायाः पुरोऽनुवाक्या ॥ 'मित्रावरुणा' हे मित्रावरुणौ ! 'सुक्रतू' शोभनकर्माणौ । युवामुच्येथे । 'गव्यूतिम्' गोयुतिम्, यवसोदकोत्पत्तये 'रजांसि' च गोयूतेर्यान्यन्यानि स्थानानि व्रीह्यादिधान्योत्पत्तिक्षेत्राणि, तानि च व्रीह्याद्युत्पत्तये 'मध्वा' मधुरेण शस्यसम्पत्करणेन 'घृतैः' घृतेन उदकेन 'नः' अस्माकम् 'उक्षतम्' आसिञ्चतम् । इत्येतदाशास्महे ॥ ७ । १० । ४ ॥

## पूष्णा रुद्रेण च सोमः ॥ ५ ॥

"पूष्णा रुद्रेण च सोमः"

"सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ ( ऋ० सं० २, ८, ६, १ )"—इति ॥

---

१ 'या तृतीयया निर्दिष्टा सा अमुख्या' ॥

पूष्णा सोमस्य संस्तवः । गृत्समदस्यार्षम् । त्रिष्टुप् । सोमापौष्णस्य चरोः पुरोऽनुवाक्या ॥ सोमापूषणौ चन्द्रसूर्यौ, तावुच्येते । 'सोमापूषणा' हे सोमापूषणौ ! युवां 'जनना' जननौ जनयितारौ 'रयीणां' धनानाम्, 'जनना' जनयितारौ च स्वेनोपकारेण दिवः, जनना जनयितारौ च 'पृथिव्याः' । 'जातौ' जातमात्रौ एव युवां 'विश्वस्य' सर्वस्य 'भुवनस्य' भूतजातस्य 'गोपौ' गोप्तारौ बभूवथुः । 'देवाः' च रश्मयः युवामेव 'अमृतस्य' उदकस्य 'नाभिं' नहनं बन्धनम्, आधारं सर्वलोकस्य 'अकृण्वन्' सदा कुर्वन्ति । युवामिदं नाम अस्माकं कुरुतमित्याशिषा निराकाङ्क्षम् ॥

"सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।

अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥ ( ऋ० सं० ५, १, १८, ३ )"—इति ॥

रुद्रेण संस्तवः । भरद्वाजस्येयमार्षम् । त्रिष्टुप् । सोमारौद्रस्य चरोः पुरोऽनुवाक्या ॥ 'सोमारुद्रा' हे सोमारुद्रौ ! युवामुच्येथे । 'युवं' युवाम् 'एतानि' सर्वाणि 'भेषजानि' 'अस्मे' अस्माकं 'तनूषु' शरीरेषु 'धत्तम्' । किञ्च, 'अवस्यतम्' नित्यमस्मानवितुं रक्षितुमिच्छतम् । किञ्च, 'यत्' 'नः' अस्माकम्, मनोवाक्कायैः 'कृतम्' 'एनः' किञ्चित् अस्ति, 'तनूषु' तत् 'मुञ्चतम्' 'अस्मत्' अस्मत्तः ॥ ७ । १० । ५ ॥

## अग्निना च पूषा ॥ ६ ॥

"अग्निना च पूषा" मध्यमस्थानेन च द्युस्थानेन च संस्तव इति, पार्थिवेन प्रतिषेधात्—ऋचं नोदाहरति, मृग्यमुदाहरणं येन संस्तवः ॥ ७ । १० ६ ॥

## वातेन च पर्जन्यः ॥ ७ ॥ १० ॥

"वातेन च पर्जन्यः" ।

धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः ।

आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम् ॥ ( ऋ० सं० ८, २, १३, ५ )"—इति ॥

वसुकर्णस्यार्षम् । त्रिष्टुप् ॥ 'धर्तारः दिवः ऋभवः' 'सुहस्ता' शोभनहस्ताः 'वातापर्जन्या' वातापर्जन्यौ च, 'आपः' च, 'ओषधीः' ओषधयश्च, 'भगः' च, 'रातिः' दाता, 'वाजिनः' च, 'धर्त्तारः' धारयितारः, 'दिवः' द्योतनवन्तः ये [1]उक्ताः उदकस्य । 'महि-

---

[1] 'उक्ता अस्य 'महिषस्य' महः' ॥

षस्य' महत: 'तन्यतो:' सर्वार्थतनितु: । 'हवं' हवनगाह्वानम् 'न:' अस्माकम् 'आयन्तु' आगच्छन्तु । आगत्य च 'प्रतिरन्तु' प्रतीर्णा: कुर्वन्त्वेता अस्मद् 'गिर:' वर्द्धयन्त्वित्यर्थ: । वातापर्जन्याविति अत्र संस्तव: ॥ ७ । १० । ७ ॥ *

**अथैतान्यादित्यभक्तीनि—असौ लोकस्तृतीयसवनं वर्षा जगती सप्तदशस्तोमो वैरूपं साम ये च देवगणा: समाम्नाता उत्तमे स्थाने याश्च स्त्रिय: ॥ १ ॥**

"अथैतान्यादित्यभक्तीनि"—इति । पूर्ववत् "असौ लोक:"—इत्येवमादि। "सूर्य्यो द्युस्थान:"—इति पूर्वमधिकृत्य "अथ एतानि आदित्यभक्तीनि"—इति इहाब्रवीत् स्वपक्षोद्द्योतनानुस्मृतये ॥

"ये च देवगणा: समाम्नाता: उत्तमे स्थाने" आदित्यादय: । "याश्च स्त्रिय:"—उषा:, सूर्य्या, वृषाकपायी, सरण्यू:, देवपत्न्य: इति ॥ ७ । ११ । १ ॥

**अथास्य कर्म रसादानं रश्मिभिश्च रसधारणं यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत् ॥ २ ॥**

"अथास्य कर्म"—"रसादानम्"—इत्येवमादि, "यच्च किञ्चित् प्रवह्लितम् आदित्यकर्म एव तत्" ॥ ७ । ११ । २ ॥

**चन्द्रमसा वायुना संवत्सरेणेति संस्तव: ॥ ३ ॥**

"चन्द्रमसा, वायुना, संवत्सरेण इति संस्तव:" । अल्पत्वात् स्वशब्दैरेव ब्रवीति, नाधिकारवचनं करोति अथास्येति ॥

"पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परियातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूनन्यो विदधज्जायते पुन: ॥ (ऋ० सं० ८, ३, २३, ३)"—इति ॥

चन्द्रमसा संस्तव: । सूर्यायाश्चार्षम् । जगती । राजयक्ष्मेष्ट्यां वैश्वदेवस्य चरो: पुरोऽनुवाक्यैषा ॥ 'पूर्वापरं चरत:' सूर्य्याचन्द्रमसौ । पूर्वपक्षे—पूर्व: सूर्य:, अपरश्चन्द्रमा:। अपरपक्षे—पुनरपर: सूर्य:, पूर्वश्चन्द्रमा: । एवम् 'एतौ' चरणमनुपरेतं[१] चरन्तौ सर्वदा चरत: । तौ पुन: 'मायया' योगैश्वर्य्यकृतया कयापि प्रज्ञयेति कस्तत्त्वं वेद । न ह्ययो-

* इतोऽग्रे दशमखण्डसमाप्तिर्द्रष्टव्या ॥ १ 'मनुपरतौ चर' ॥

गिनौ एवं शक्तौ चरितुमिति । अपि चैतदपि चित्रम्,—यदपरिखिद्यमानौ आभूतसंप्लवात् 'शिशू' इव 'क्रीळन्तौ' । 'अध्वरं' यज्ञमभिनिष्पादयन्तौ सर्वमिदं 'परियातः' परिगच्छतः । तत् कथमिति,—"विश्वान्यन्यो भुवनाभिचष्टे" । 'विश्वानि' 'भुवना' भुवनानि भूतानि 'अभिचष्टे' आभिपश्यति 'अन्यः' आदित्यः, यथैतान्यभिद्रष्टव्यानि उपकारकत्वेन तथैव स तानि पश्यति । 'ऋतून्' 'अन्यः' चन्द्रमाः 'विदधत्' अभिनिष्पादयत् स्वगत्या । 'पुनः' पुनःपुनः प्रतिमासं 'जायते' जायमानः उदेति अस्तमेति च । असंस्तवेनोत्तरोऽर्द्धर्चः । यावेतदेवमत्यद्भुतं किमपि चरणं चरतः, तावेतौ अगदमस्मद्यजमानं कुरुतमित्याशिषा निराकाङ्क्षः ॥

वायुना संस्तवः—"सप्त ऋषयः प्रतिहिताः ( य० वा० सं० ३४, ५५ )"—इत्यत्र । तत्र 'जागृतो अस्वप्नजौ'—इत्येतस्मिन् पादे "वाय्वादित्यौ"—इति वक्ष्यति ॥

संवत्सरेण च संस्तवः—"पञ्चपादं पितरम् ( ऋ० सं० २, ३, १६, २ )"—इति व्याख्यातम्[1] ॥ ७ । ११ । ३ ॥

**एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत ॥ ४ ॥**

"एतेषु एव स्थानव्यूहेषु ऋतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत" । ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च ऋतुच्छन्दःस्तोमपृष्ठम्, तस्य ऋतुच्छन्दःस्तोमपृष्ठस्य । ऋतुभक्तिशेषम्, छन्दोभक्तिशेषम्, स्तोमभक्तिशेषम्, पृष्ठभक्तिशेषं च ॥ ७ । ११ । ४ ॥

**शरदनुष्टुबेकविंशस्तोमो वैराजं सामेति पृथिव्यायतनानि ॥ ५ ॥**

तद्यथा,—"शरत्, अनुष्टुप्, एकविंशस्तोमः, वैराजं साम—इति पृथिव्यायतनानि" । अनभिलिङ्गेऽपि चेन्मन्त्रे एतेषामन्यतमं स्यात्, स आग्नेय इति प्रतिपत्तव्यम् । एवमेवोत्तरयोरपि स्थानव्यूहयोः । व्यूहो नाम विस्तारः ॥ ७ । ११ । ५ ॥

**हेमन्तः पङ्क्तिस्त्रिणवस्तोमः शाक्करं सामेत्यन्तरिक्षायतनानि ॥ ६ ॥**

"हेमन्तः, पङ्क्तिः, त्रिणवस्तोमः, शाक्करं साम—इति" "अन्तरिक्षायतनानि" अन्तरिक्षलोकायतनानि ॥ ७ । ११ । ६ ॥

---

१ 'व्याख्यातः' ॥

शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशस्तोमो रैवतं सामेति द्युभक्तीनि ॥ ७ ॥ ११ ॥

"शिशिरः, अतिच्छन्दाः, त्रयस्त्रिंशस्तोमः, रैवतं साम-इति" "द्युभक्तीनि" द्यां भजन्त इति द्युभक्तीनि, अपिवा—आदित्यं भजन्त इति द्युभक्तीनि । भक्तिग्रहणं प्रणालिकोपदर्शनार्थं च, या वैतेषां स्तुतिः सा स्तुतिसङ्क्रमणन्यायेन स्थानाधिपतेः सूर्यस्य स्तुतिरिति । सर्वत्रैवम् ॥ ७ । ११ । ७ ॥ *

मन्त्रा मननात् ॥ १ ॥

सर्वमेतन्मन्त्राश्रयमित्युक्तम्, त एव तावत् मन्त्राः कस्मात्? इति वक्तव्यमत आह,— "मन्त्राः मननात्" तेभ्यो ह्यध्यात्माधिदैवाधियज्ञादिमन्तारो मन्यन्ते, तदेषां मन्त्रत्वम् ॥ ७ । १२ । १ ॥

छन्दांसि च्छादनात् ॥ २ ॥

ते पुनश्छन्दोमयाः, नाच्छन्दसि वागुच्चरतीति । अथ "छन्दांसि" कस्मात्? "छादनात्" । "यदेभिरात्मानमाच्छादयन्देवा मृत्योर्बिभ्यतः, तच्छन्दसां छन्दस्त्वम्"—इति विज्ञायते ॥ ७ । १२ । २ ॥

( स्तोमः स्तवनात् ॥)

यजुर्यजतेः ॥ ३ ॥

अथ "यजुः" कस्मात्? "यजतेः" धातोः, तेन हि विशेषत इज्यते, सर्वत्र याज्यान्ते वषट्कारविधानात् ॥ ७ । १२ । ३ ॥

साम सम्मितमृचास्यतेर्वर्चा समम्मेन इति नैदानाः ॥ ४ ॥

अथ "साम" कस्मात्? तद्धि "सम्मितम् ऋचा" यावती ऋक् तावदेव परिमाणतः । "अस्यतेः वा" क्षेपणार्थस्य ( दि० प० ), प्रक्षिप्तमिव हि तत् ऋचि भवति । विज्ञायते च "तस्मादृच्यध्यूढं साम गीयते" । अथवा—"स्यतेः वा" इति । "षो अन्तकर्मणि (दि०प०)" अन्त्यं तत् कर्म भवति, संहिता—पदम्—साम इति । "ऋचा समं मेने—इति नैदानाः" ।

---

१ 'दिवम्' इति तूचितम् ॥ * इतोऽग्रे एकादशखण्डसमाप्तिर्द्रष्टव्या ॥ २ 'इति, उच्यते, यत आह'—॥ ३ 'एभ्यो ह्य' ॥ ४ एतस्य वाक्यस्य टीका नोपलभ्यते । टीकाकर्तुरयं पाठो नोपलब्धः स्यादिति भाति ॥

ऋचा एतत् समम् इत्येवं प्रजापतिः मेने ज्ञातवान् । अथवा-आत्मानमेव ऋचा समं, मेने ज्ञातवत्, तत् साम्नः सामत्वम् । इत्येवं नैदानाः मन्यन्ते । निदानमिति ग्रन्थः, तद्विदो नैदानाः ॥ ७ । १२ । ४ ॥

**गायत्री गायतेः स्तुतिकर्मणः ॥**
**त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम् ॥ ५ ॥**

"छन्दांसि च्छादनात्" ( ७ । १२ । २ )–इत्युक्तम्, तानि च पुनरमूनि गायत्री-प्रमुखानि । अतो गायत्रीं निराह,–"गायत्री, गायतेः स्तुतिकर्मणः" तया हि गीयन्ते स्तूयन्ते देवताः ॥ ७ ॥ १२ ॥ ५ ॥

**उष्णिगुत्स्नाता भवति ।**
**स्निह्यतेर्वा स्यात् कान्तिकर्मणः ।**
**उष्णीषिणी वेत्यौपमिकम् ॥**
**उष्णीषं स्नायतेः ॥ ६ ॥**

अतः परमुष्णिगादीनि च्छन्दांसि चतुरुत्तराणि तानि, तत्प्रसङ्गेनैव निराह,– तत्र तावत्, "उष्णिक्" "उत्स्नाता" गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्वेष्टिता इव "भवति" । उष्णिग्गायत्र्यौ जागतश्चेति ॥

"स्निह्यतेः वा स्यात् कान्तिकर्मणः" स्निग्धमिष्टदेवतानां कान्तमेतच्छन्दः ॥

"उष्णीषिणी" इव "वा,–इति औपमिकम्" । चत्वार्य्यक्षराण्यस्याः उष्णीषमिव लक्ष्यन्ते, तेनोष्णिक् ॥

अथोष्णीषं कस्मात् ? "उष्णीषम्" "स्नायतेः" शौचार्थस्य, शुद्धं हि तद् भवति शुक्लम् ॥ ७ । १२ । ६ ॥

**ककुप् ककुभिनी भवति ।**
**ककुप् च कुजतेर्वोब्जतेर्वा [१] ॥ ७ ॥**

"ककुप्" "ककुभिनी" इव "भवति" । सैवोष्णिक् जागतेन पादेनोपहितेन

[१] मूलपाठस्तु–"ककुप्चकुब्जश्च कुजतेर्वोब्जतेर्वा । अनुष्टुबनुष्टोभनात् ।" इति वर्तते । परं त्वत्र मूले–टीकाकर्तुरभिप्रेतः पाठो निवेशितो बोद्धव्यः ॥

मध्यतः ककुबित्युच्यते, स तस्याः ककुदिव मध्यतो भवति, तेन ककुभिनीव ककुप् ॥
अथ "ककुप्" कस्मात् ? "कुजतेः" "वा" कौटिल्यार्थस्य, "उब्जतेः" "वा" न्युब्जभावार्थस्य, नतं हि तद् भवति ॥ ७ । १२ । ७ ॥

## कुब्जश्च ॥ ८ ॥

"कुब्जश्च" कुब्जोऽप्यनयोरेवान्यतरस्मात् ॥ ७ । १२ । ८ ॥

## अनुष्टुबनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ॥ ९ ॥

"अनुष्टुप्" "अनुष्टोभनात्" । किमियमनुष्टोभनेनेति ? "गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेन अनुष्टोभति,–इति च ब्राह्मणम्" । स्वमतं 'च'–शब्देन समुच्चिनोति । गायत्री, त्रिभिरष्टाक्षरैः पादैः समाप्यते, तस्याश्च पुनरपरः चतुर्थः पादो भवति, येन तामेव अनुष्टुप् अनुष्टोभति, तस्मादनुष्टुप् ॥ ७ । १२ । ९ ॥

## बृहती परिबर्हणात् ॥ १० ॥

"बृहती" "परिबर्हणात्" परिवृद्धासौ भवति, अनुष्टुभश्चतुर्भिरक्षरैः उक्तं हि–"बृहती जागतस्त्र्यश्च गायत्राः"–इति ॥ ७ । १२ । १० ॥

## पङ्क्तिः पञ्चपदा ॥ ११ ॥

"पङ्क्तिः" "पञ्चपदा" पञ्चभिः पादैः पङ्क्तिरित्युच्यते ॥ ७ । १२ । ११ ॥

## त्रिष्टुप् स्तोभत्युत्तरपदा ।
## का तु त्रिता स्यात् ।
## तीर्णतमं छन्दः ।
## त्रिवृद्वज्रस्तस्य स्तोभतीति वा । यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुब्त्वमिति विज्ञायते ॥ १२ ॥ १२ ॥

अथ "त्रिष्टुप्" कस्मात् ? ततो विगृह्योत्तरं पदं निराह,–"स्तोभत्युत्तरपदा" स्तोभतिर्धातुरुत्तरं पदं यस्याः, सेयं स्तोभत्युत्तरपदा ॥

"का तु त्रिता स्यात् ?" अथ पुनः पूर्वपदे येयं त्रिता त्रित्वं श्रूयते 'त्रि'–इति, एतत् किमर्थमिति ? ॥



१ 'ष्टोभनमिति' ॥

"तीर्णतमं" स्तुततममिदं "छन्दः" गायत्र्यादिभ्यो बहुत्वात्, सेयं तीर्णतमा च स्तोभति चेति त्रिष्टुप् ॥

"त्रिवृद् वज्रः, तस्य स्तोभाति इति वा" वज्रमायुधम्, तच्च पुनः प्रायः त्रिसन्धिशरो वेणुः शृङ्गं शल्यमिति विज्ञायते, तस्य स्तोभतीतिः स्तुतिः। अथवा–ऐन्द्रमेतच्छन्दः, वज्रं चेन्द्रभक्तिः, तस्मादुपपद्यते। "यत् त्रिः अस्तोभत्, तत् त्रिष्टुभः त्रिष्टुप्त्वम्–इति विज्ञायते" इति ॥ ७ । १२ । १२ ॥ *

**जगती गततम छन्दः ॥**

**जलचरगतिर्वा, जल्गल्यमानोऽसृजदिति च ब्राह्मणम् ॥१॥**

"जगती" "गततमं छन्दः" अन्त्यमित्यर्थः। अतः परमतिच्छन्दांसि ॥

"जलचरगतिर्वा" जलोर्मिप्रकारो हि तस्याः प्रस्तारः। "जल्गल्यमानोऽसृजत्–इति च ब्राह्मणम्"। 'ग्लै हर्षक्षये ( भ्वा० प० )'। क्षीणहर्ष इव किल्लैतां प्रजापतिः ससृजे, ददर्शेत्यर्थः। न हि च्छन्दांसि क्रियन्ते, नित्यत्वादेव च्छन्दसाम् ॥ ७ । १३ । १ ॥

**विराड्विराजनाद्वा विराधनाद्वा विप्रापणाद्वा। विराजनात्सम्पूर्णाक्षरा, विराधनादूनाक्षरा, विप्रापणादधिकाक्षरा ॥ २ ॥**

विराजः पुरस्तात् त्रिष्टुप् निरुक्ता, बाहुल्यादधियज्ञे च प्रयोगभूयस्त्वात्। अथ पुनर्विराजं निराह,–"विराट्" "विराजनाद् वा, विरोधनाद् वा, विप्रापणाद् वा"। "विराजनात्, सम्पूर्णाक्षरा" साकल्याद् विराजत इव ॥ "विराधनात्, ऊनाक्षरा" वैकल्याद् विराध्यन्तीव हि सा। "विप्रापणात् अधिकाक्षरा" विप्लुतेव[3] हि सा स्वरूपात् ॥ ७ । १३ । २ ॥

**पिपीलिकमध्येत्यौपमिकम् ॥**

**पिपीलिका पेलतेर्गतिकर्मणः ॥ ३ ॥**

"पिपीलिकमध्या इति औपमिकम्" मध्याल्पाक्षरपादा या, सा पिपीलिकमध्येव भवति, पिपीलिकस्वरूपा ॥

"पिपीलिका" कस्मात् ? "पेलतेः" "गतिकर्मणः" गत्यर्थस्य ॥ ७ । १३ । ३ ॥

---

* इतोग्रे द्वादशखण्डसमाप्तिर्द्रष्टव्या ॥ १ 'आप्तमि' ॥ २ 'अधुना विरा' ॥ ३ 'विप्रुते' ॥

## इतीमा देवता अनुक्रान्ताः ॥ ४ ॥

"इति इमाः देवताः अनुक्रान्ताः" । इतिकरणः प्रकरणसमाप्त्यर्थः । अथवा—इतिकरणेनाभिनयेन दर्शयन्निव ब्रवीति । एवमनेन प्रकारेण यथापरिभाषितेन "यत्काम ऋषिः"—इत्येवमादिना । इमा देवता अनुक्रान्ताः—अग्निः, जातवेदाः, वैश्वानरः—इत्येवमाद्याः समासतो निर्णीता इत्यर्थः ॥ ७ । १३ । ४ ॥

## सूक्तभाजो हविर्भाजः ॥ ५ ॥

ताः पुनः "सूक्तभाजो हविर्भाजः" । काश्चित् हविर्भजन्ते न सूक्तम्, काश्चित् सूक्तं भजन्ते न हविः, काश्चित् उभयं भजन्ते । वक्ष्यति हि—"इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि, तेषामेतान्यहविर्भाञ्जि"—इति ॥ ७ । १३ । ५ ॥

## ऋग्भाजश्च भूयिष्ठाः ॥ ६ ॥

"ऋग्भाजश्च भूयिष्ठाः" प्रायेणेत्यर्थः । तद्यथा,—आप्रीसूक्ते एकैकामृचं भजन्ते लक्षणभेदादिभिः । अर्द्धर्चभाजोऽपि क्वचिदपेक्षितव्याः । तद्यथा,—"ऋचः सूर्य्याय गीयन्त उद्वेतीत्यर्द्धपञ्चमाः" । "यत्रा चक्रुः"—इत्यस्याः पूर्वोऽर्द्धर्चः सौर्य्यः शौनकस्य, उत्तरो मैत्रावरुणः । पादभाजोऽपि क्वचिदुपेक्षितव्याः । तद्यथा,—"नवो नवो भवति जायमानः (ऋ० सं० ८, ३, २३, ४)"—इत्यस्याः आदित्यदैवतो द्वितीयः पादो भवति । भूयिष्ठग्रहणाच्च दर्शयति—'असमाम्नाता अपि सन्ति, ता अप्युपेक्षितव्याः' इति । ताश्च यथालक्षणं त्रिषु स्थानेषु कल्प्याः । तद्यथा,—परमेष्ठिग्रहनक्षत्रसर्पलाङ्गलकुसुम्भकप्रभृतीनि ॥ ७ । १३ । ६ ॥

## काश्चिन्निपातभाजः ॥ ७ ॥

"काश्चित् निपातभाजः"—इति । निपातो हि द्विविधः । देवतान्तरैः सह साधारण्येनोपस्तुतौ, नैघण्टुकत्वेन च । तत्र साधारणोपस्तुतौ एवम्, तद्यथा,—"विधाता धात्रा व्याख्यातः" । तस्यैष निपातो भवति बहुदेवतायामृचि—"सोमस्य राज्ञो वरुणस्य" इति—अस्यां सोमप्रभृतिभिः सह विधाता स्तूयते साधारण्येन । नैघण्टुकत्वेन पुनः तद्यथा—"पृथिवी व्याख्याता" । तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि—"यदिन्द्राग्नी परमस्यां पृथिव्याम्"—इति । ताभ्यामिन्द्राग्निभ्यां सह साधारण्येन पृथिवी न स्तूयते, किं तर्हि? लक्षणत्वेनेन्द्राग्न्योरेवोपादीयते । एवं तावदयमिहाधिकारे काश्चिन्निपातभाज इति द्विप्रकारो निपात उक्तः ॥



१ 'साधारणं नाम, तद्यथा' ॥ २ 'विधानात् श्रूयते' ॥

अथ पुनरयमपरो निपातप्रकार उपेक्ष्यः, तद्यथा,-अत्यन्तनैघण्टुकम्, देवताभिधानमनत्यन्तनैघण्टुकं च । तत्र अत्यन्तनैघण्टुकं नाम अत्यन्तमदृष्टस्वप्रधानस्तुतिः । तद्यथा,-आदित्यस्य स्वःपृश्निप्रभृतिभिः । अथ पुनः दृष्टस्वप्रधानस्तुतिमद्देवतापदं वाक्यार्थोपजनितपारतन्त्र्यसाक्षिप्तस्वाभिधेयसामर्थ्यमुपमानशब्देन स्वमर्थमन्यस्मिन् देवतापदे प्रधाने वाक्यार्थसामर्थ्योपजनितप्राधान्यसामर्थ्यं यत् निगमयति, अनत्यन्तनैघण्टुकं तद् भवति । तद्यथा,-"अग्निरिव मन्यो (ऋ० सं० ८, ३, १९, २)"-इति । अग्निशब्द इवेत्यनेनोपमानशब्देन वाक्यार्थोपजनितसामर्थ्येनाक्षिप्तस्वाभिधेयसामर्थ्यो विशेषमाकाङ्क्षन् सम्बोधनान्तं मन्युशब्दं वाक्यगतैः पदैरुन्नीयमानसामर्थ्यमार्थिनि विशेषणापेक्षे समर्थे मन्युशब्दे निगमयन् निपततीति नैघण्टुकं तदिति । एवमनेकप्रकारो निपात उपेक्ष्यः ॥ ७ । १३ । ७ ॥

## अथोताभिधानैः संयुज्य हविश्चोदयति-इन्द्राय वृत्रघ्न इन्द्राय वृत्रतुर इन्द्रायांहोमुच इति ॥ ८ ॥

"अथ उत अभिधानैः संयुज्य हविः चोदयति" । अथ-इति विशेषाधिकारे । उत-इत्यप्यर्थे । अपरमपरमभिधानमपेक्ष्यापेक्ष्य । तद्यथा,-अभिधानैः संयोज्य विशेषणशब्दैः तत्रैतदभिधानमिन्द्रादिसंविज्ञानाद् दृढमिन्द्रादौ देवतार्थे आम्नायविधौ प्रयोगे च हविश्चोदयति ॥

तद्यथा,-"इन्द्राय वृत्रघ्ने एकादशकपालं निर्वपेत्" इति ॥ तथा "इन्द्रायांहोमुचे इति"-"इन्द्रायांहोमुच एकादशकपालं निर्वपेत्"-इति ॥ ७ । १३ । ८ ॥

## तान्यप्येके समामनन्ति ॥ ९ ॥

ततः किम् ? "तान्यप्येके समामनन्ति" । एके नैरुक्ताः तान्यपि गुणपदानि वृत्रहांहोमुक्प्रभृतीनि, अग्न्यादौ देवतापदसमाम्नाये पृथक्पृथक् समामनन्ति ॥७।१३।९

## भूयांसि तु समाम्नानाद्यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुतितत्समामने ॥ १० ॥

अहं तु न समामने । कस्मात् ? "भूयांसि तु समाम्नानात्" यानि तेषु गुणपदानि वृत्रहांहोमुक्प्रभृतीनि समामनन्ति, ततोऽन्यान्यपि भूयांसि बहुतराणि सन्ति एव । माहाभाग्याद् देवतायाः गुणानामियत्ता नास्तीति तेषां तु सर्वेषां समाम्नाने समाम्नायस्यापरिनिष्ठैव स्यात् । तथा च सति तेषां शास्त्रे असमाप्तिः, तन्ममापि मा भूदित्यतः

१ 'प्रधानसामार्थ्यं निगमयति' ॥ २ 'च' ॥ ३ 'स्यात् ॥ ७ । १३ । ९ ॥' इति भवेत् ।
४ 'सा माभूत्' इति भवेत् ।

"यत् तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति, तत् समामने" इति । यदेतत् संविज्ञानभूतं रूढमगौणं केवलमपि निर्विशेषणं लब्धप्रधानस्तुति देवतापदमग्न्यादि, तत् समामने, न गौणं व्रतभृत्–व्रतपत्यादि ॥

अथवा–तान्यप्येके समामनन्तीत्यत उत्तरस्य "भूयांसि तु समाम्नानात्"–इत्यस्यापरोऽर्धः । भूयांसि एव तेषां समाम्नानात् गुणानि समाम्नातानि स्युः न किञ्चिदतिरिक्तं प्रयोजनम्, वचनात् केवलं गुरु शास्त्रं सम्पद्यते, तन्मा भूत्–इत्यर्थः॥७।१३।१०॥

**अथोत कर्मभिर्ऋषिर्देवताः स्तौति "वृत्रहा पुरन्दरः" इति ११॥**

"अथ उत कर्मभिः ऋषिः देवताः स्तौति–"वृत्रहा, पुरन्दरः"–इति" । स वृत्रहा, शतक्रतुः, पुरन्दरः, गोत्रभित्, वज्रबाहुः–इति ॥ ७ । १३ । ११ ॥

**तान्यप्येके समामनन्ति ॥ १२ ॥**

"तानि अपि एके समामनन्ति" तानि अपि एके कर्मनामधेयानि समामनन्ति ॥ को विशेषः पूर्वेभ्यः समाम्नातृभ्यः ? विधिदर्शनात् पूर्वे 'हविश्चोदयति' इति वचनात्, स्तुतिदर्शनादिमे 'कर्मभिर्ऋषिर्देवताः स्तौति' इति वचनात् ॥ ७ । १३ । १२ ॥

They are too many given cannot noticed here

**भूयांसि तु समाम्नानात् ॥ १३ ॥**

"भूयांसि तु समाम्नानात्" इति स एव दोषः ॥ ७ । १३ । १३ ॥

**व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति । यथा–ब्राह्मणाय बुभुक्षितायौदनं देहि, स्नातायानुलेपनं, पिपासते पानीयमिति ॥ १४ ॥ १३ ॥**

"व्यञ्जनमात्रं तु तत्, तस्याभिधानस्य भवति" । वृत्रहा पुरन्दर इति, यदेवमादि गुणपदम्, तत् तस्यैवेन्द्रादेः संविज्ञानपदस्य व्यञ्जनमात्रं विशेषणमात्रं भवति, न पृथक् प्रधानम्, केवलस्य सम्बन्धात् स्तुत्या । "यथा" लोके–"ब्राह्मणाय बुभुक्षिताय ओदनं देहि, स्नाताय अनुलेपनम्, पिपासते पानीयम्–इति" । यो बुभुक्षितः, तस्मै इति । यथा तु बुभुक्षितशब्दो विशेषणम्, केवलस्य बुभुक्षितशब्दस्य विशेषतः क्वचिदनवस्थानात् । एवं वृत्रहा पुरन्दर इत्येवमादीनां विशेष्यमप्राप्यानवस्थानाद् व्यञ्जनमात्रता, न स्वप्रधानता । तस्मान्नैतान्यहं समामने–इति ॥ ७ । १३ । १४ ॥*

only a descriptive epithet

१ 'पूर्वेण' ॥ २ 'संविज्ञातपदस्य' ॥ * इतोऽग्रे त्रयोदशखण्डसमाप्तिर्द्रष्टव्या । "इति वृत्तौ निरुक्तभाष्यार्जुवर्थायां सप्तमा(ऽ)ध्याय(स्य) तृतीयः पादः समाप्तः॥ ७, ३ ॥" इति पुस्तकान्ते ॥

## अथातोऽनुक्रमिष्यामः ॥ १ ॥

"अथातोऽनुक्रमिष्यामः"। सामान्यतः परिभाषितोऽग्न्यादिर्देवपत्न्यन्तो देवतापदसमाम्नायः, विशेषत इदानीं प्रतिपदमनु व्याख्यास्यते, तदर्थमधिकारवचनम्,—अथेति। अतः—इति आनन्तर्ये। सामान्यात् पारिभाषिकाद् व्याख्यानादनन्तरात् अनु आनुपूर्व्येण यथासमाम्नातं क्रमिष्यामः कथयिष्यामो वर्णयिष्यामो व्याख्यायेति वाक्यशेषः॥ सा च पुनर्व्याख्या अभिधाना—ऽभिधेया—ऽभिधानव्युत्पत्ति—प्राधान्यस्तुत्युदाहरण—तन्निर्वचन—विचारो—पपत्त्य—वधारणक्रमलक्षणा। तद्यथा,—(१) "अग्निः"—इत्यभिधानम्। (२) "अयं पार्थिवः" इत्यभिधेयम्। (३) "अग्रणीर्भवति"—इत्यभिधानव्युत्पत्तिः। (४) "अग्निमीळे"—इति प्राधान्यस्तुत्युदाहरणम्। (५) अग्निमीळे="अग्निं याचामि" इति तन्निर्वचनम्। (६) "स न मन्येतायमेव अग्निः"—इति च विचारः। (७) "यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते"—इत्युपपत्तिः। (८) "अयमेव सोऽग्निः"—इत्यवधारणम्। एवम्प्रकारया व्याख्यया प्रतिपदमनुक्रमिष्यामः॥

तत्रैतद् भवति कोऽयमग्निः ? इति। 'आत्मा'—इत्यात्मविदः, "एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः (ऋ० सं० २, ३, २२, ६)"—इति मन्त्रदर्शनात्। अविवक्षितस्थानविशेषो निर्ज्ञातैतदभिधानो देवताविशेषो लोकवेदप्रसिद्धः कर्माङ्गमिति याज्ञिकाः। विवक्षितविशिष्टस्थानकर्मा मध्यमोत्तमाभ्यां ज्योतिर्भ्यामन्यः पार्थिवोऽयमग्निरिति नैरुक्तसमयः। त्रित्वाभ्युपगमात्तत्सम्पिपादयिषयेदमारभ्यते॥ ७।१४।१॥

# अथ निघण्टुपञ्चमोऽध्यायः ५.

## (अथ त्रीणि पदानि)

## हरिः ॐ॥ अग्निः॥ १॥

## अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः॥ २॥

"अग्निः पृथिवीस्थानः तं प्रथमं व्याख्यास्यामः"-इति। पृथिव्येवास्य विशेषतः स्थानम्, न अन्तरिक्षम्, न द्यौः इति पृथिवीस्थानः, तत्र कर्माधिकारात् तस्य। तिष्ठन्त्यस्मिन्न् इति स्थानम्। यस्मात् पृथिवी अस्य स्थानम्, तस्मात् सन्निकर्षाल्लोकानुक्रमाच्च न ह्यसति कारणे प्रथमातिक्रमो न्याय्य इति तमेव प्रथमं व्याख्यास्यामः॥ ७।१४।२॥

१ 'परिख्यातो'॥ २ 'मधिकारार्थंवच'॥ ३ 'भिधेयः'॥ ४ 'इयमुपप'॥ ५ 'चास'॥

## अग्निः कस्मात् ॥ ३ ॥

"अग्निः कस्मात्"। देवताभिधाने देवताम् आत्मनः परोक्षीकृत्य परोक्षीकृतं तत्त्वमर्पितम्, परोक्षप्रिया इव हि देवाः प्रत्यक्षाद्विष इति हि विज्ञायते । तन्निर्वचनादागमप्रामाणिकं देवतातादात्म्यमनुभवतीति अवेत्य तन्निर्विवक्षया "अग्निः कस्मात्"[1] इत्युपोद्धत्य "अग्रणीः भवति"—इत्येवमादिना अग्निशब्दं निराह । सर्वत्रैवं देवतापदे उपोद्घातोपन्यासौ द्रष्टव्यौ ॥ आत्मवित्पक्षे तु सर्वमभिधानमात्मार्थमेवेति सर्वावस्थमात्मानं सर्वाभिधानव्युत्पत्तितो निरुच्य याथार्थ्यतः परिज्ञाय सर्वात्मन आत्मनः सर्वावस्थं विभूतितादात्म्यमनुभवतीति सर्वपदव्युत्पत्तिप्रयोजनम् । स्मर्यते हि,—"शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति"—इति ॥ ७ । १४ । ३ ॥

## अग्रणीर्भवति ।

led foremost in the sacrifices.

## अग्रं यज्ञेषु प्रणीयते ।

makes its own part.

## अङ्गं नयति सन्नममानः ॥ ४ ॥

आत्मसात्करोति

"अग्रणीः भवति"—इति । अग्निशब्दं विगृह्य वाक्यीकृत्य कृतवाक्यपदवर्णनिष्कर्षणसमुदायोपजनितस्य अग्निशब्दस्य अग्रशब्दात् गकारमुपलभ्य अग्रशब्दं कर्माभिधायिनं पूर्वपदत्वेन व्यवस्थाप्य नयतिं च परमुत्तरपदस्थं कर्त्तव्यार्थात्मने व्यवस्थाप्य अग्निशब्दं निराह ॥ अथ कोऽर्थः ? इति । सर्वेष्वर्थेष्वसावात्मानमग्रं नयति, सर्वत्र तथोपकरोति यथा अग्रं सम्पद्यत इत्यर्थः । अग्रशब्दः प्रधानवाची, स एव वो अग्रं नयति । सेनां वा अग्रे नयति सैनापत्येऽवस्थित इत्येके, विज्ञायते हि,—"अग्निर्वै देवानां सेनानीः" इति ॥

अथवा "अग्रं यज्ञेषु प्रणीयते" प्रथमं यज्ञेषु प्रणीयते, न तावत् किञ्चिदप्यन्यत् क्रियते यावदयं न प्रणीयत इति, ततोऽस्मिन् व्रतमुपेत्यान्यानि कर्माणि क्रियन्त इति ॥

makes everything subsidiary to itself

(1) अथवा—"अङ्गं नयति सन्नममानः" यत्रायं सन्नमयति साधनत्वेन वैदिके वा लौकिके वार्थे, तत्र सन्नममान एवात्मानं प्रधानीकृत्य सर्वमन्यदात्मनोऽङ्गतां नयति गुणीकरोतीत्यर्थः ॥ अथवा—"अङ्गं नयति सन्नममानः" तृणे वा काष्ठे वा यत्र सन्नमति आश्रयति, (2) तत् आत्मनोऽङ्गतां नयति, आत्मसात् करोतीत्यर्थः ॥ ७ । १४ । ४ ॥

## अक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति ॥५॥

---

१ 'याथात्म्यतः' ॥ २ 'एव चाग्नि' ॥

"अक्नोपनो भवति इति स्थौलाष्ठीविः" । स्थूलाष्ठीवतः पुत्रः स्थौलाष्ठीविः आचार्य्यः स एवं मन्यते—अयमक्नोपनो यस्माद् भवतीति तस्मादग्निरिति । किमिदमक्नोपन इति ? अत आह—"न क्नोपयति" । एवमपि न गृह्यते क्नोपयतेरप्रसिद्धार्थत्वात् । अतः पुनर्ब्रवीति प्रसिद्धेनार्थेन—"न स्नेहयतीति" ॥ विरूक्षीकरोतीत्यर्थः । स हि तस्य स्वभावः ॥ ७ । १४ । ५ ॥

**त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः । इतादक्ताद्दग्धाद्वा नीतात् । स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः ॥ ६ ॥ १४ ॥**

"त्रिभ्य आख्यातेभ्यो जायते इति शाकपूणिः" । त्रयाणामाख्यातानामभिधेयाः क्रिया अत्र लक्ष्यन्ते, ता उपादाय हेतुत्वेनाग्निशब्द आत्मानं लभते । तद्यथा,—"इतात्" 'इण गतौ ( अदा० प० )'—इत्यस्मादित्यर्थः । "अक्तात्, दग्धाद् वा" अनक्तेर्वा दहतेर्वा विकल्प एतयोः । ततः "नीतात्" इति, 'णीञ् प्रापणे ( भ्वा० प० )'—इत्येतस्मात् । धातवः केवलं निर्दिष्टाः ॥ किं कुत आदत्ते ? इत्यत आह,—"स खलु" शाकपूणिः "एतेः" धातोः "अकारम् आदत्ते" ॥ नन्वेतेर्धातोरकार एव नास्ति, अतः किमादत्ते ? । सत्यम्—नास्ति, वर्णसामान्येन तद्विकारमादाय इणोऽर्थदर्शनात् अग्नौ, शब्दार्थसम्बन्धनित्यत्वात्, अर्थे च गुणभूतत्वाच्छब्दस्य, ततः तं व्यापादयत्यकारत्वेन ॥ अथवा—रूपानेकत्वादिणो यथावस्थितस्याकारो भवति, तथा—रूपमवस्थाप्य ततोऽकारमादत्ते । दर्शितं चैतत्—"एतेः कारितं च यकारादिं चान्तकरणम्"—इत्यत्र, भवति चास्य ण्यन्ते रूपम् 'आययति'—इति, अत्र अकारः, ततः आदत्ते ॥ "गकारम्, अनक्तेः वा दहतेः वा" कृतकुत्व—[ जश्त्व-कृतघत्व ] जश्त्वयोर्विकल्पेन ॥ "नीः परः" एष ह्रस्वः । एति च व्यनक्ति च रूपाणि, अथवा—एति च दहति च, नयति च हवींषि देवेभ्यः इति अग्निः साधीयस्तरः । एता एतद्धातुवाच्याः क्रियाः एव करोति इति "अग्निः" ॥ ७ । १४ । ६ ॥

## तस्यैषा भवति—॥

तस्यैतल्लक्षितलक्ष्यप्रधानस्तुतिसम्बन्धमभिधानमुपलक्ष्य देवतापदसमाम्नाये समाम्नातमग्निरिति, तस्य "अग्नीमीळे"—इत्येतत्प्रमुखा अग्निकर्मलिङ्गलिङ्गिताः सर्वा आग्नेय्य

---

१ 'यत आ' ॥

ऋचः उदाहरणम् । न पुनरसति कारणे मुख्यातिक्रमो न्याय्य इति ऋग्वेदप्रथमामिमामृचमुदाजहार "तस्य एषा भवति"—इति,—*

"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ।"

अग्निमीळेऽग्निं याचामि । ईळिरध्येषणाकर्मा पूजाकर्मा वा । पुरोहितो व्याख्यातो यज्ञश्च, देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता, होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभः, रत्नधातमं रमणीयानां धनानां दातृतमम् ॥ १ ॥ १५ ॥

"अग्निमीळे (ऋ० सं १, १, १, १)"—इति । मधुच्छन्दस आर्षम् । गायत्री । आश्विने विनियोगः ॥ यः अग्निः देवपुरोहितः पाकयज्ञे, अस्माकं यज्ञे यश्च ऋत्विक्, होता यज्ञस्य, रत्नधातमश्च दातृतमो रत्नानाम्, तमहं रत्नानि याचे इति समस्तार्थः ॥

अथैकपदनिरुक्तम् —"ईळिः" धातुः "अध्येषणाकर्मा" याच्ञाकर्मेह, अन्यत्र "पूजाकर्मा वा" अपि ॥

"पुरोहितः व्याख्यातः"—"पुर एनं दधति"—इति ॥

"यज्ञः च" व्याख्यातः,—"प्रख्यात यजतिकर्मा"—इति ॥

"देवः" "दानाद् वा" ददाति, ह्यसौ ऐश्वर्य्याणि ॥ "दीपनाद् वा" दीपयति ह्यसौ तेजोमयत्वात् ॥ "द्योतनाद् वा" धात्वन्यत्वमर्थैकत्वम् ॥ "द्युस्थानो भवति—इति वा" पक्षे अर्थवत्त्वं निर्वचनस्य । अथवा—अग्नीन्द्रावपि द्युस्थानौ, सामान्यं हि द्यौः स्थानं देवतानाम्, तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे ।

"होतारं=ह्वातारम्" देवतानाम् ॥ "और्णवाभः" तु "जुहोतेः" 'हु दानादानयोः (जु० प०)'—इत्यस्य मन्यते "होता इति" ॥

"रत्नधातमम्=रमणीयानां धनानां दातृतमम्" ॥ ७ । १५ । १ ॥

तस्यैषाऽपरा भवति—॥

ततः "तस्य" एव अग्नेः "एषा अपरा" ऋक् "भवति" समानसंहितत्वादप-

* अत्र चतुर्दशखण्डसमाप्तिर्भवति, सा 'तस्यैतल्लक्षितलक्ष्य' इत्यतः प्रागुचिता ॥

इति वा द्वितीयेत्यर्थः ॥ सा पुनः किमर्थम् ? इति । अमुना प्रकारेण सर्वा एतस्यामुदाहरणमेतत्कर्मयुक्ता ऋच उपेक्ष्या इत्युपप्रदर्शनार्थम् ॥ *

"अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ।"

अग्निर्यः पूर्वैर्ऋषिभिरीडितव्यो वन्दितव्योऽस्माभिश्च नवतरैः स देवानिहावहत्विति ॥ १ ॥ १६ ॥

"अग्निः पूर्वेभिः ( ऋ० सं० १, १, १, २, )"—इति । पूर्वयैव समानार्षविनियोगच्छन्दस्का ॥ तद्वृत्तमुत्तरत्रापेक्ष्य यद्वृत्तमध्याजहार भाष्यकारो यत्तदोर्नित्यसम्बन्ध इति दर्शयन्।"अग्निः यः" "पूर्वेभिः"—"पूर्वैः"चिरन्तनैः "ऋषिभिः" "ईडितव्यः" ईडनं पूजनमर्हति, "अस्माभिश्च" "नवतरैः" ईळितव्य इति वर्त्तते ॥ स किं करोति? इत्याकांक्षिते निराकाङ्क्षं क्रियते,—"सः देवान्" "इह" एतस्मिन् कर्मणि अस्माकम् "आवहतु" इति लोटा निराह भाष्यकारः आशिषमाकाङ्क्षितामपेक्ष्य ॥ ऋज्वेकपदनिरुक्तम् ॥ ७ । १६ । १ ॥

स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते ततो नु मध्यमः—॥

सङ्कीर्णत्वादग्न्यभिधानस्य अतः परं विचारः,—"स न मन्येत"—इत्येवमादिना आक्षिप्य विचारः ॥ ननु नित्ये स्वार्थाभिधेयसम्बन्धे अभिधानानामर्थान्तरवृत्तितैव नास्ति, कुतः सङ्करः ? इति । अथास्त्यर्थान्तरवृत्तिता । जहत्स्वार्थमर्थान्तरमुपसंक्रामन्ननित्यतां सम्बन्धस्य द्योतयति । नैव जहत्स्वार्थमभिधानमभिधेयान्तरे वर्त्तते ॥ किं तर्हि ? । द्वे ह्यभिधानस्य शक्ती गौणी मुख्या च । तयोर्गौणी गुणसाम्यात्, यस्मात् कस्माचित् गुणात् सर्वत्र वर्त्तते, तस्यास्तथाविध एव सम्बन्धः, सर्वार्थो नित्यः समर्थप्रकरणोपपदपरतन्त्रः । मुख्यत्वे विनियोगेन लोकवेदप्रसिद्ध्या स्व एवार्थे वर्त्तते । तदेवमसङ्करेऽपि शब्दानां मुख्यगौणार्थवर्त्तिनां सङ्कर इवामेधसां प्रतिभाति । क कस्य शब्दस्य गौणी शक्तिः ? क कस्य मुख्या ? इति तत्प्रविवेकार्थमिदमुपोद्घन्ति चोदकरूपेण "स न मन्येत" इति सः शिष्यः, न मन्येत न जानीयात्—सम्यगेतदभिहितम् "अयमेवाग्निः" पृथिवीस्थानः "इति" ॥ कस्मात्

---

* अत्र पञ्चदशखण्डसमाप्तिर्दृश्यते, सा 'ततस्तस्यैवाग्नेः' इत्यतः प्रागुचिता ॥

पुनर्न मन्येत ? इतः—यस्मात् "अपि एते उत्तरे ज्योतिषी" मध्यमं च उत्तमं च "अग्नी उच्येते" ॥ कथम् ? इत्यत आह,—एतत् तावत् पार्थिवं ज्योतिः, आवाहनक्रियायोगात् "अग्निमीळे"—इत्येतस्यां च यथा भवतोक्तं तथैवोच्यते, "ततः नु" वयमपि यथा "मध्यमः" अग्निशब्देनोच्यते तत्कर्मयोगाच्च स एवाग्निः, तथेमामृचमुदाहरिष्यामः,—॥ *

"अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ॥
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥"

अभिनमन्त समनस इव योषाः ॥

समनं समननाद्वा, सम्माननाद्वा ॥

कल्याण्यः स्मयमानासो अग्निमित्यौपमिकं, घृतस्य धारा उदकस्य धाराः समिधो नसन्त ॥

नसतिराप्नोतिकर्मा वा, नमतिकर्मा वा ॥

'ता जुषाणो हर्यति जातवेदाः'

हर्यतिः प्रेप्साकर्मा विहर्यतीति ॥ १ ॥

"अभिप्रवन्त (ऋ० सं० ३, ८, ११, ३)"—इति ॥ वामदेवस्यार्षम् । सप्तमेऽहनि दशरात्रस्य आज्यशस्त्रे विनियोगः ॥ "अभिप्रवन्त" "अभिनमन्त" आभिमुख्येन नमन्ति प्रह्वीभवन्ति । "घृतस्य" "उदकस्य" "धाराः"॥कमभिप्रह्वीभवन्ति? मध्यमम् "अग्निम्" । कथम् ? इति—"समना इव योषाः" "समनसः" समानमनसः । एकस्मिन् भर्तरि यासां मनांसि वर्त्तन्ते, ताः समनसः । ता यथा "कल्याण्यः" रूपयौवनादिगुणसम्पन्नाः, "स्मयमानासः" स्मयमानाः ईषद्धसन्त्यः हर्षमुपजनयन्त्यो भर्तुस्तं प्रति परिष्वजनाय अभिनमेयुः, तथा मध्यमस्थानमग्निं घृतस्योदकस्य धाराः "समिधः" समिन्धयन्त्यः "नसन्त" प्राप्नुवन्तीत्यर्थः । ताश्च ताश्च पुनः सः "जातवेदाः" मध्यमस्थानो वैद्युतोऽग्निः, "जुषाणः" प्रीयमाणः "हर्यति" पुनः पुनः प्रेप्सति, अभिकामयते ॥

---

* अत्र षोडशखण्डसमाप्तिर्दृश्यते, सा 'संकीर्णत्वादग्न्यभिधानस्य' इत्यतः प्रागुचिता ॥

एवमेतस्मिन् मन्त्रे युगपदभिधानात्, पार्थिवे घृताहुतिर्हवनस्योपमानोपमेयवैधर्म्याच्च युगपत्सम्भवाच्च उदकस्य धाराणां वैद्युते, तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यात् प्रसिद्धिमुपरुन्ध्य घृतधाराशब्द उदकधारावचनः सम्पद्यते, पठितं चैतदेव सामर्थ्यमपेक्ष्योदकनामसु "घृतम्" "मधु"—इति। एवं च यो ऽयमग्निशब्दोऽत्र सामर्थ्यात् मध्यमं ज्योतिराह, तस्मात् "सुष्ठु स न मन्येत,—अयमेवाग्निः पृथिवीस्थानः"—इति ॥

"समनं समननाद्वा, सम्माननाद्वा"—इति। पूर्वम् अनितेः ( भू० प० ) प्राणनार्थस्य, उत्तरं मनोतेः ( त० आ० ) ॥ ऋज्वन्यन्निर्वचनम् ॥ ७ । १७ । १ ॥

## "समुद्रादूर्मिर्मधुमाँ उदारत्"
## इत्यादित्यमुक्तं मन्यन्ते ॥ २ ॥

अथ खलु यथोत्तममपि ज्योतिर्भवत्यग्निस्तथोदाहरिष्यामः—

"समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट्।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः॥ ( ऋ० सं० ३,८, १०, १ )"—इति ॥

"आदित्यम् उक्तं मन्यन्ते"। पूर्वयैव समानार्षविनियोगा। नानादेवताभिवादस्त्वस्यां देवतानुक्रमण्यां शौनकेनोक्तः। इह पुनः सौरीति कृत्वोदाहृता भाष्यकारेण, सूक्तं सकलं च। "समुद्रात्" उदकसङ्घातात् "ऊर्मिः" छादकः सर्वस्य प्रकाशेन, "मधुमान्" उदकवान्, "उदारत्" उदतीतरत्, उत्तरति वा, उदेति अहन्यहनि प्रथमं जन्माभिप्रेत्य। स पुनर्जातः सन् 'अमृतत्वम्' अमृतभावम् 'अंशुना' चन्द्रमसा 'उपसम् आनट्' उपसंव्याप्नोति। "सोऽस्यान्नं तेन न म्रियते यमाक्षितिमाक्षितयः पिबन्ति"—इत्युक्तम् ॥ कथममृतत्वं तेन उपसमानट्? इति। 'घृतस्य' उदकस्य हविषो वा 'यत्' 'नाम' नमनं 'गुह्यं' रहस्यमविज्ञातं केनचिदपि अत्र 'अस्ति' विद्यते चन्द्रमसि, तत्र 'देवानां' रश्मीनां 'जिह्वा' तदमृतं नित्यमास्वादयन्ति, देवास्तेन न म्रियन्ते। तेषाम् 'अमृतस्य' अमरणत्वस्य 'नाभिः' नहनं स हेतुरित्यर्थः ॥ ७ । १७ । २ ॥

## "समुद्राद्ध्येषोऽद्भ्य उदेति"
## इति च ब्राह्मणम् ॥ ३ ॥

अथ कुतः सूर्योऽयमिति विशेषतोऽवध्रियते, न चैतस्मिन्नपि मन्त्रेऽग्निशब्दोऽस्ति, यः सत्यप्यादित्यदेवत्वेऽस्य मन्त्रस्याग्नित्वमादित्यस्य प्रख्यापयेत्, घृतस्तोत्र्य एता इति

१ 'पदविधानात्' ॥ २ 'हुतिः' ॥ ३ 'एवं चेद्योयमग्नि' ॥ ४ 'तु' ॥ ५ 'थमं वास्य जन्मा' ॥ ६ 'न चात्रापि' ॥

च विज्ञायते, तस्मादसमर्थमिदमुदाहरणम् ? न असमर्थम्। कस्मात् ? सूक्तेऽग्निलिङ्गमेकेषां शाखिनामस्ति,—"इमं स्तनम्"—इत्यत्र "अपां प्रपीतमग्ने"—इति । निविच्चास्मिन् सूक्ते श्रूयते, सा चाग्निलिङ्गा । आदित्यश्चायमनेन मन्त्रेणोच्यत इति स्फुटमस्यैव मन्त्रस्य "ब्राह्मणम्"—"समुद्राद्ध्येषोऽद्भ्य उदेति"—"इति च" । न च पार्थिवः समुद्रात् उदेति, विरोधात् तस्य उदकेन, तस्मादादित्योऽत्राग्निरभिप्रेतः—इति नासमर्थमुदाहरणम् ॥ ७ । १७ । ३ ॥

**अथापि ब्राह्मणं भवति "अग्निः सर्वा देवताः" इति॥४॥१७॥**

"अथ अपि ब्राह्मणं भवति,—'अग्निः सर्वा देवताः'—इति" । अथ खलु अयमपरः सङ्करोऽग्निशब्दस्य ब्राह्मणं भवति,—"अग्निः सर्वा देवताः"—इति ॥ ७ । १७ । ४ ॥

**तस्योत्तरा भूयसे निर्वचनाय—॥**

"तस्य" च ब्राह्मणस्य "उत्तरा" ऋक् "भूयसे" बहुतराय "निर्वचनाय"—॥ *

**"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥"**

**इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा ॥ १ ॥**

"इन्द्रं मित्रम्०—( ऋ० सं २, ३, २२, ६ )"—इति ॥ अस्यवामीयैषा। "इन्द्रम्, मित्रम्, वरुणम्"—इत्येतैरभिधानैः "अग्निम् आहुः" तत्त्वविदः ॥ "अथो" अपि च योऽयं "दिव्यः" "दिविजः" दिवि जायते, "सुपर्णः" सुपतनः, "गरुत्मान्" "गरणवान्" स्तुतिभिः तद्वान्, रसानां वा गरिता आदित्यः, अयमपि "सः" एवाभिरित्याहुः ॥ किं बहुना "इममेवाग्निम्" "एकं" "महान्तम्" "आत्मानम्" अनन्यत्वेन पश्यन्तः "विप्राः" "मेधाविनः" आत्मविदः "बहुधा वदन्ति"—'अग्निम्, यमम्, मातरिश्वानम्' इति ॥

एवमाचैश्चाभिधानैः—एतस्यैव सा विसृष्टिः, 'एष उह्येव सर्वे देवाः' इति च विज्ञायते । तस्माद् युक्तं यत् 'तत्र मन्येतायमेवाग्निः' इति ॥ ७ । १८ । १ ॥

---

१ 'अस्य' ॥ * अत्र सप्तदशखण्डसमाप्तिर्दृश्यते, सा 'तस्य च ब्राह्मणस्य' इत्यतः प्रागुचिता । २ 'सतत्त्वविदः' ॥ ३ 'वमनैषा' ॥

**यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः ॥**
**निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते२॥१८॥**

अत्र प्रतिसमाधानम् । सत्यमेतत् सर्वे एतेऽग्निशब्देन स्तूयन्ते, न तु प्रधानतः। किं तर्हि ? गुणतः स्तूयन्ते । यतो ब्रवीति,—"यस्तु सूक्तं भजते, यस्मै हविः निरुप्यते, अयम् एव सः अग्निः" । तुशब्दः पूर्वपक्षव्यावर्त्तकः, परमतव्युदासार्थः । यः सूक्तं भजते, प्रधानतः स्तुत्यत्वेनेत्यर्थः, यस्मै च हविर्निरुप्यते, चोदनासामर्थ्यात्—"आग्नेयमष्टाकपालं निर्वपेत्" इति । अयमेव सोऽग्निः पार्थिवः, अग्निशब्दस्य विशेषतोऽत्र लोके वेदे च प्रसिद्धेः—'अग्निमानय—अग्निं प्रणय' इति । एतमेव हि लोकः प्रतिपद्यते, न मध्यमं नाप्युत्तमम् । न च प्रसिद्धिबाधो न्याय्यः । शास्त्रचोदिता अपि खादिर—पलाशादयो लोकप्रसिद्धित एव प्रतीयन्ते । तस्मादग्निशब्देन पार्थिवस्य ज्योतिषो मुख्यः सम्बन्धः, गौण इतरयोर्मध्यमोत्तमयोः । यथा अग्निशब्देन, न तथा मध्यमोत्तमाभ्यां विद्युत्सूर्यशब्दाभ्यां लोकप्रसिद्ध्या मुख्यः सम्बन्धः । एवं चेत् सुष्ठूक्तम्,—"यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते, अयमेव सोऽग्निः" इति । एतदेव चात्र विचारे प्रयोजनम्,—आग्नेयेषु सूक्तेषु हविःसम्प्रदानेषु स्तुत्यत्वेन भोक्तृत्वेन चैतमेवोपासीतेति ॥

अथ पुनर्योऽयं मध्यमोत्तमयोर्ज्योतिषोरग्निप्रवादः, स कथम् ? इति । "निपातम् एव एते उत्तरे ज्योतिषी, एतेन नामधेयेन भजेते" । निपातो नाम अप्राधान्यम्, भक्तिरित्यर्थः ॥ ७ । १८ । २ ॥ *

## जातवेदाः ॥ २ ॥

**जातवेदाः कस्मात् ॥ १ ॥**

"जातवेदः"—इति वक्तव्यम् । स पुनरेष माहाभाग्यात् कर्मपृथक्त्वादग्निरेव ? अथवा—पृथगभिधानस्तुत्यन्तरसम्बन्धाद् देवतान्तरम् ॥ "जातवेदाः कस्मात्" ? ॥७।१९।१ ॥

**जातानि वेद ।**

**जातानि वैनं विदुः ।**

**जाते जाते विद्यत इति वा ।**

**जातवित्तो वा जातधनः ।**

---

* अत्रैवाष्टादशखण्डसमाप्तिर्द्रष्टव्या । "इति निरुक्तवृत्तौ सप्तमा (द्वादशा) ऽध्यायस्य चतुर्थः पादः ॥ ७, ४ ॥" इति तूपलभ्यते ॥

जातविद्यो वा जातप्रज्ञानः ।
यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति
ब्राह्मणं तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति च॥ २।१९॥

स हि "जातानि वेद"। न हि तदस्ति जातमस्मिँल्लोके यदसौ न वेद । सर्वज्ञ इत्यर्थः ॥

"जातानि वा एनं विदुः" स एव धातुः, कारकान्यत्वं केवलम् ॥

"जाते जाते विद्यत इति वा" विदेः सत्तार्थस्याधिकरणे कारके । न तदस्ति जातं यत्रासौ नास्ति ॥

"जातवित्तो वा जातधनः" जात–शब्दः पूर्वपदम्, वित्त–शब्द उत्तरपदम्, जातमस्य वित्तमिति जातवेदाः ॥

"जातविद्यो वा जातप्रज्ञानः" जात–शब्द एव पूर्वपदम्, विदेर्ज्ञानार्थस्योत्तरपदत्वम्, निसर्गत एवास्य जातं प्रज्ञानमित्यर्थः ॥

"ब्राह्मणम्" अपि च भवति, जनेर्विदेश्च जातवेदा इति,–"यत्तज्जातः पशूनविन्दत–इति"। यत् असौ तत् तदा जातः जातमात्र एव निसर्गतः पशून् अविन्दत अलभत "तज्जातवेदसो जातवेदस्त्वम्–इति" विज्ञायते । यतश्चैतदेवम्, "तस्मात्" अद्यत्वेऽपि स्वाम्ययमस्माकमिति मन्यमानाः "पशवः" "सर्वान् ऋतून्" प्रति, अपि ग्रीष्मे, "अग्निम् अभिसर्पन्ति" ॥ ७ । १९ । २ ॥

तस्यैषा भवति–॥

"तस्य" जातवेदसः स्तुत्युदाहरणम् "एषा" ऋक् भवति–॥ *

[ "जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥"

जातवेदस इति जातवेदस्यां वैवं जातवेदसेऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमतिस्मो निदहाति निश्चयेन दहति भस्मी-

---

* अत्रैवैकोनविंशखण्डसमाप्तिर्दृश्यते, सा 'तस्य जातवेदसः' इत्यतः प्राप्तुचिता ॥
• अयं च खण्डो दुर्गाचार्येण न व्याख्यातः प्राचीनलिखितपुस्तके तूपलभ्यते ॥

करोति सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति ॥ १ ॥

तस्यैषा परा भवति–॥ ]

"प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् ।
इदं नो बर्हिरासदे ॥"

प्रहिणुत जातवेदसं कर्मभिः समश्नुवानमपि वोपमार्थे स्यादश्वमिव जातवेदसमितीदं नो बर्हिरासीदत्विति ॥ १ ॥

"प्र नूनं जातवेदसम् ( ऋ० सं० ८, ८, ४६, १ )"–इति । श्येनस्याग्निपुत्रस्यार्षम् । गायत्री ॥ हे स्तोतारो यूयमुच्यध्वे । "प्रहिनोत" "प्रहिणुत" प्रेरयत स्तुतिभिरेतं "जातवेदसम्" "अश्वम्" "कर्मभिः" सर्वमेतत् जगत् "अश्नुवानम्" व्यापयन्तम्, "वाजिनम्" वेजनवन्तं चञ्चलमर्चिभिः, अथवा–"अश्वमिव" इति लुप्तोपमम्, रूढेर्बलीयस्त्वात्, "वाजिनं" वेजनवन्तं ज्वलनस्वभावं शीघ्रम् ॥ किमिति प्रहिणुत ? इति । इतः,–"इदं नो बर्हिरासदे" । इदम् अस्मत्कर्म, बर्हिषोपलक्षितं आसत्तुम्–इति कृत्यार्थे केन् । बर्हिः कथं नामास्मदभिमतार्थसिद्ध्यर्थमाभिमुख्येन सीदेदित्येवमर्थं प्रहिणुतेति ॥ ७ । २० । १ ॥

तदेतदेकमेव जातवेदस्यं[२] गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते ॥ २ ॥

इदानीमुत्सर्गं दर्शयति प्रयोजनार्थम्,–"तदेतदेकमेव जातवेदस्यं गायत्रं तृचम्"–इत्यादि ॥ तदिति दर्शयतीत्यस्यानुस्मृतये परोक्षनिर्देशः । एतदिति प्रत्यक्षेण प्र नूनमित्येतया सन्निधीकृत्योपदिशति । गायत्रमिति च्छन्दोनिर्देशो

---

१ 'चलनवंतं चलस्वभावम्' ॥ २ 'सं' ॥

विवक्षितप्रयोजनार्थः । तृचमिति एतत्सूक्तस्य सङ्ख्यानिर्देशः । दशतयीषु सर्वास्वपीति निर्द्धारणे सप्तमी, "विद्यते" अस्ति ॥ ततः किं यद्येतदेवैकं जातवेदस्यं गायत्रं तृचं दशतयीषु विद्यते ? शृणु—बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेदस्यैर्मन्त्रैरधियज्ञे प्रयोजनमस्ति । न चैते बहवः सन्ति सर्वास्वपि दशतयीष्वेतदेवैकं तृचं मुक्त्वा ॥ तत्र किं कर्त्तव्यम् ? । इति—"यत्तु किञ्चिदाग्नेयम्" मन्त्रजातम्,गायत्रे एव च्छन्दसि अजातवेदोलिङ्गमपि, "तत्" "जातवेदसानाम्" मन्त्राणां "स्थाने" विनि—"युज्यते" शास्त्रेण । तेन किं स्थितं भवति ? अग्निरेव जातवेदा इति, कर्मपृथक्त्वात् माहाभाग्याद्वा इति, इतरथा हि प्रयोगवैकल्यं स्यात् । न चान्यदैवतमन्यस्य स्थाने प्रयुज्यते । यथा चायमनर्थान्तरमग्निर्जातवेदा एतस्माद् विधिलिङ्गात्, तथा वैश्वानरप्रभृतयोऽपीत्युपेक्ष्यम् ॥ ७ । २० । २ ॥

**स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः । अभिप्रवन्त समनेव योषा इति तत् पुरस्ताद्व्याख्यातमथासावादित्य उदुत्यं जातवेदसमिति तदुपरिष्टाद्व्याख्यास्यामः ॥ ३ ॥**

"स न मन्येत"—इति पूर्ववद् विचारः ॥ केवलम् "अभिप्रवन्त"—इत्यत्राग्निपदीवचारे अग्निशब्दो विशेष्य आसीत्, जातवेदःशब्दोऽस्य गुणपदमिति, इह तु जातवेदःशब्दविचारे पुनः "अभिप्रवन्त"—इत्यस्मिन्नेवोपात्ते मन्त्रे गुणपदमग्निशब्दो जातवेदःशब्दस्येत्येतावदुपेक्ष्यम् ॥

यथा तु पूर्वस्मिन् "समुद्रादूर्मिः"—इति आदित्यस्याग्नित्वोपपत्तावुदाहरणम्, तथेह—"अथ असौ आदित्यः,—उदुत्यं जातवेदसम् ( ऋ० सं० १, ४, ६, १ )"—इति जातवेदस्त्वोपपत्तौ । तदेतत् प्रतिपदमुदाहरणम् "उपरिष्टाद् व्याख्यास्यामः"—"जातवेदसं सूर्यमुद्वहन्तीति तु विशेषणविशेष्यसामानाधिकरण्यैकवाक्यप्रसिद्ध्या स्वनिगमसिद्धमस्मिन् मन्त्रे जातवेदाः सूर्यः"—इति । तस्मात् सुष्ठूक्तं यत् "स न मन्येत अयम् एव अग्निः" जातवेदाः इति ॥ ७ । २० । ३ ॥

**यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते॥४।२०॥**

---

१ 'जातवेदसं' ॥ २ 'प्रसिद्ध्याश्च निगदसमित्यं' ॥

"यः तु सूक्तं भजते, यस्मै हविः निरुप्यते, अयम् एव सः अग्निः जातवेदाः"- इति पूर्ववत् प्रसिद्धिरेव विशेषहेतुः ॥ यद्यपि मन्त्रदर्शनमविशिष्टं त्रयाणामपि ज्योतिषां जातवेदस्त्वे, तथापि पार्थिवोऽग्निरितरयोः प्रसिद्ध्या विशेष्यते, जातवेदस्त्वं हि यथा प्रसिद्धमस्मिन्नग्नौ, न तथा वैद्युते, नापि सूर्ये इति ॥ "निपातमेवैते उत्तरे ज्योतिषी" "एतेन" जातवेदा इत्येतेन "नामधेयेन भजेते" इति व्याख्यातम् ॥ ७ । २० । ४ ॥*

## वैश्वानरः ॥ ३ ॥
## इति त्रीणि पदानि ॥ ६ ॥ १ ॥

**वैश्वानरः कस्माद्विश्वान्नरान्नयति ॥**

**विश्व एनं नरा नयन्तीति वा ॥**

**अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः ॥ १ ॥ २१ ॥**

"वैश्वानरः"-इति वक्तव्यम्, तदर्थमुपोद्घन्ति-"वैश्वानरः कस्मात्?" इति । "विश्वान् नरान्" इतो लोकात् अमुं लोकं "नयति" हेतुकर्तृत्वेन सर्वासु प्रवृत्तिषु अयमेव नरान् नयति । यथा पञ्चाग्निविद्यायामुच्यते-"अपि वा सति तस्मिन् सर्वाः प्रवृत्तयः फलवत्यो नराणां भवन्तीति हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वयमेव नरान् नयति प्रवर्त्तयतीति वैश्वानरः" ॥

अथवा-"विश्वे एनं नराः नयन्ति इति वा" कर्मकारकम्, स नीयमानः तासु तासु क्रियास्वङ्गभावं नरैः कर्म सम्पद्यते ॥

"अपि वा विश्वानरः एव" कश्चित् "स्यात्" । स पुनः कस्मात् ? "प्रत्यृतः सर्वाणि भूतानि" विश्वानि ह्यसौ भूतानि प्रति ऋतः प्रविष्ट इत्यर्थः । "तस्य" विश्वानरस्य अपत्यं "वैश्वानरः" ॥ ७ । २१ । १ ॥

**तस्यैषा भवति-॥**

"तस्य" वैश्वानरस्य "एषा" प्राधान्यस्तुतिर्ऋक् "भवति"-॥ *

**"वै॒श्वा॒न॒रस्य॑ सुम॒तौ स्या॑म॒ राजा॒ हि कं॒ भुव॑नानामभि॒श्रीः ।**
**इ॒तो जा॒तो विश्व॑मि॒दं वि च॑ष्टे वैश्वान॒रो य॑तते॒ सूर्ये॑ण ॥"**

---

१ 'हेतुविशेषः' ॥ * अत्रैव विंशखण्डसमाप्तिर्द्रष्टव्या । "इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तमा ( द्वादशा )ऽध्यायस्य पञ्चमः पादः ॥ ७, ५ ॥" इति तूपलभ्यते ॥ * अत्रैवैकविंशखण्डसमाप्तिर्दृश्यते, सा 'तस्यैषा भवति' इत्यतः प्रागुचिता ॥

इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्येण राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति ॥ १ ॥

"वैश्वानरस्य सुमतौ ( ऋ० सं० १, ७, ६, १ )"—इति । कुत्सस्यार्षम् । पृष्ठ्याभिप्लवयोश्चतुर्थपञ्चमयोरह्नोराग्निमारुतस्य प्रतिपत् ॥ "इतः" पृथिवीलोकात् ओषधिवनस्पतिभ्यः यः "जातः" "विश्वम् इदं विचष्टे" "सर्वमिदमभिविपश्यति" यश्चाभिद्रष्टव्य उपकारकत्वेन, दर्शयति वा प्रकाशकत्वेन । यश्च "यतते" "संयतते" "सूर्येण" सङ्गच्छते स्वेन भासा । "राजा" च "यः" "भुवनानां" "सर्वेषां भूतानाम्" "अभिश्रीः" "अभिश्रयणीयः" आश्रयणीयः । "तस्य वयम्" एवङ्गुणयुक्तस्य "वैश्वानरस्य" नित्यं "सुमतौ" "कल्याण्यां मतौ" उपकारप्रवृत्तायामात्मनो यथाभिमतार्थसाधिकायाम् "स्याम्"—इत्येतत् आशास्महे । लोकेऽपि हि स्तूयत एव पूर्वम्, पश्चात् प्रार्थयत इत्याचार्य्यः पश्यन् मन्त्रेष्वप्ययमेव न्याय इत्युपप्रदर्शनार्थं पदानां क्रमं विभेद, कल्याण्यां मतौ स्यामेत्याशिषा च समापयाञ्चक्रे ॥

अनेकतिङि चैतस्मिन् मन्त्रे प्रतितिङ् वाक्यभेदे प्राप्ते यत्तदोरध्याहारेण "राजा यः सर्वेषां भूतानामभिश्रयणीयः, तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम"—इत्येकवाक्यतया सामर्थ्यमुद्भावयाञ्चकार । एकोऽत्रार्थपतिर्वैश्वानरः, यतः कल्याणी आशास्यते मतिः, तमेभिः शब्दैरभिष्टौति, सन्तिष्ठते स्तुतिरिति । अयमेकवाक्यतान्यायः प्रायशो मन्त्रेषु, क्वचित् पुनः प्रत्याख्यातसर्थमपेक्ष्य एकस्मिन्नपि मन्त्रे वाक्यभेदो भवत्येव । तद्यथा,—"ऋचां त्वः पोषम् ( ऋ० सं० ८, २, २४, ६ )"—इत्यत्र प्रतिपादं वाक्यसमाप्तिः । अनेकेषामपि[1] च मन्त्राणामाकाङ्क्षितार्थानां[2] परस्परमेकवाक्यता भवति, तदपि चोपप्रदर्शयिष्यति ( १२ । २२–२५ )—"येना पावक चक्षसा ( ऋ० सं० १, ४, ८, १ )"—इत्यत्र ॥ ७ । २२ । १ ॥

तत् को वैश्वानरः ॥ २ ॥

"तत् को वैश्वानरः"—इति । अतःप्रभृति विचारः । तदिति वाक्योपादाने । कोऽयं वैश्वानरः ? इति ॥ कुतः संशयः ? आगमविप्रतिपत्तेः, विश्वानराविद्यायां तावत् 'आत्मा' इत्यात्मविदः, इन्द्रादित्यवाय्वाकाशोदकपृथिव्यादयश्च पृथक् पृथगेव वैश्वानरत्वेन विज्ञायन्ते ॥ ७ । २२ । २ ॥



१ 'अन्येषामपि' । २ 'तार्थिना' ॥

**मध्यम इत्याचार्याः ॥ ३ ॥ २२ ॥**

अपि च "मध्यमः" वैश्वानरः "इति" नैरुक्ताः केचित् "आचार्य्याः" मन्यन्ते ॥ ७ । २२ । ३ ॥

**वर्षकर्मणा ह्येनं स्तौति—॥**

कस्मात् ? "वर्षकर्मणा ह्येनं स्तौति" मन्त्रदृक् । हिशब्दो हेत्वर्थः, वर्षकर्मणैनं वैश्वानरं यस्मान्मन्त्रदृक् स्तौति—॥ *

**"प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृत्र॒हणं॑ सच॑न्ते । वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त्काष्ठा॒ अव॒ शम्ब॑रं भेत् ॥"**

**प्रब्रवीमि तन्महित्वं माहाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः । दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम् ॥ १ ॥**

कथम् ? इति । अत आह—"प्र नू म॑हि॒त्वम् (ऋ० सं० १,४,२५, ६)"—इति । नोधस आर्षम् । त्रिष्टुप् । वैश्वानरोऽग्निर्देवता ॥ "प्रवोचम्" "प्रब्रवीमि" अहम् । "महित्वम्" "माहाभाग्यम्" स्तुत्या ॥ कस्य ? "वृषभस्य" "वर्षितुरपाम्" । "यम्" अन्येऽपि "पूरवः" "पूरयितव्याः मनुष्याः" कामैः, "वृत्रहणम्" "मेघहनम्" "सचन्ते" "सेवन्ते" "वर्षकामाः" स्तुतिभिः । तन्माहाभाग्यं प्रब्रवीमि,— यदसौ वर्षिता "वैश्वानरः" "अग्निः" "दस्युं" दासयितारमुपक्षयितारं रसानाम्, शुष्यन्ति हि तदनुद्गमे शस्यानि, कर्मणां वोपदासयितारमनावृष्टिद्वारेण, तं दस्युम्, "शम्बरम्" "मेघम्" उदकवन्तमुदकपूर्णम्, "जघन्वान्" हतवान्,—भृशम्, "अवभेत्" "अवाभिनत्" व्यदारयत्,—विदार्य च "अधूनोत्" वर्षभावेनाकम्पयत् अक्षारयत् "काष्ठाः" अपः । यः, तस्याहं वर्षप्राप्त्यर्थं प्रावोचं माहाभाग्यम्, स वर्षत्वस्माकमित्यभिप्रायः ॥

---

* अत्रैव द्वाविंशखण्डसमाप्तिर्दृश्यते, सा 'कस्मात् ? वर्षकर्मणा ह्येनं' इत्यतः प्रागुचिता ॥ १ 'अभि' ॥

एवमेतस्मिन् मन्त्रे वैश्वानरस्य वर्षकर्मणैकवाक्यतासम्बन्धात् नान्यो मध्यमात् वैश्वानर इत्याचार्या मन्यन्ते । स्थितं तावदेवम् ॥ ७ । २३ । १ ॥

## अथासावादित्य इति पूर्वे याज्ञिकाः—॥

"अथ असौ आदित्यः,—इति पूर्वे याज्ञिकाः" । असाविति कर्मात्मनैनमुपदिशन् ब्रवीति, मा भूत् गौणः कश्चित् प्रत्यय इति । पूर्वे इति विधिमन्त्रार्थवादेभ्यो यज्ञसतत्त्वमुन्नीयैनं यज्ञं प्रयोगतः प्रथमं ये चक्रुः, ते "पूर्वे याज्ञिकाः" साक्षात्कृतधर्माण इत्यर्थः । त एनमेवमाहुः—'अथासौ आदित्यः इति' ॥ कया पुनरुपपत्त्या त एवमाहुः ? इति विध्यनुकरणप्रसिद्ध्या—॥

## एषां लोकानां रोहेण सवनानां रोह आम्नातो रोहात् प्रत्यवरोहश्चिकीर्षितस्तामनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते सोऽपि न स्तोत्रियमाद्रियेताग्नेयो हि भवति ॥

## तत आगच्छति मध्यस्थाना देवता रुद्रं च मरुतश्च ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसति ॥ २ ॥

कथम् ? इति । यतः तन्मतमाह,—"एषां लोकानां रोहेण सवनानां रोह आम्नातः" । य एव हि लोकानामारोहणानुक्रमः, पृथिवी—अन्तरिक्षम्—द्यौः इति, स एव सवनानामपि क्रमः,—प्रातःसवनम्, माध्यन्दिनम्, तृतीयसवनम्-इति । ततः किम् ? कस्मिंश्चित् कर्मणि रोहप्रातिलोम्येन "रोहात् प्रत्यवरोहः" "चिकीर्षितः" कर्तुमीप्सितः, तदुपन्याचक्ष्महे । स एव होता प्रातःसवनं पृथिवीलोकभक्ति शंसति, संस्तुतत्वात्, ततो माध्यन्दिनमन्तरिक्षलोकभक्ति शंसति संस्तुतत्वात्, ततस्तृतीयसवनं द्युलोकभक्ति शंसति, संस्तुतत्वात् । प्रतिभक्तिसंस्तुतवच्च शंसन्—स पृथिवीलोकात् अन्तरिक्षलोकमारूढो भवति, अन्तरिक्षलोकात् द्युलोकम्, स च द्युलोकमारोहन् द्युलोकभक्ति तृतीयसवनं शंसति, तदपि च शंसन् द्युलोकमारूढो भवति । सः अग्निष्टोमसमाप्ति यज्ञायज्ञिये यत् शस्त्रम् अग्निमारुतं—[ तत्र तां ] तत्सवनलोकप्रत्यवरोहानुकृतिं चिकीर्षञ्छस्त्रं "वैश्वानरीयेण सूक्तेन" "प्रतिपद्यते" प्रारभते । तद्यथा—"वैश्वानराय पृथुपाजसे ( ऋ० सं० ३, १, ३, सू० )"

---

१ 'एष' ॥ २ 'पृथिवीलोकभक्तिं शंसति' ... 

इति प्रतिपत्। "सोऽपि न स्तोत्रियम् आद्रियेत", "यज्ञा यज्ञावो अग्नये" इति। अयं तावत्स्तोत्रियत्वेन प्रथममापद्यते। एष हि स्तोत्रशस्त्राणां धर्म इति। कस्मात् पुनः स्तोत्रियं नाद्रियेत? "आग्नेयो हि भवति"। प्रत्यवरोहे कर्त्तव्ये स च पुनराग्नेयोऽयं स्तोत्रियः, अग्निश्च पृथिवीस्थानः, तद्यदि तमाद्रियेत, न प्रत्यवरोहानुकृतिप्रारम्भः कृतः स्यात्। अन्येषु शस्त्रेषु च युक्तं यदूर्ध्वमारुरुक्षमाणः स्तोत्रियेण प्रतिपद्यते, इह पुनरवरुरुक्षमाणो द्युस्थानाधिदेवताः शंसमानः क्रमेण वैश्वानरीयेण सूक्तेन प्रतिपद्यत इति, तेन ज्ञायते आदित्यो वैश्वानर इति॥

अपि च सुतरां प्रत्यवरोहानुकरणमेतदिति गम्यते, येन "तत आगच्छति मध्यस्थाना देवताः–रुद्रं च मरुतश्च"। ततः वैश्वानरीयात् सूक्तात् प्रत्यवरोहानुकरणाभिप्रायेण शस्त्रात् प्रत्यवरुह्य मध्यस्थाना देवता आगच्छति मध्यस्थानेऽभिशंसितुम्॥ कतमाः? रुद्रं च मरुतश्च। तद्यथा–"आ ते पितर्मरुतां सुम्नमेतु (ऋ० सं० २, ४, ११, सू०)"–इति। ततोऽपि मध्यस्थानात् 'इहस्थानं' पृथिवीस्थानं प्रत्यवरुह्य अत्रैव तं स्तोत्रियं शंसति–"यज्ञायज्ञा वो अग्नये (ऋ० सं० ६, ४, ५, सू०)"–इति। तदेवमेतस्मात् विध्यनुकरणात् पश्याम आदित्यो वैश्वानर इति॥ ७।२३।२॥

**अथापि वैश्वानरीयो द्वादशकपालो भवत्येतस्य हि द्वादशविधं कर्म॥ ३॥**

"अथापि वैश्वानरीयो द्वादशकपालो भवति"। देवतागुणसामान्येन हि अधियज्ञेषु गुणविधयः कल्प्यन्ते, वैश्वानरीयश्च सर्वत्र द्वादशकपालः। "एतस्य हि" "द्वादशविधं" द्वादशमासप्रविभागलक्षणं "कर्म"। तेनैतस्मादपि देवतागुणकपालविध्यनुकरणात् पश्याम आदित्यो वैश्वानर इति॥ ७।२३।३॥

**अथापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इति॥ ४॥**

"अथापि स्फुटमेव ब्राह्मणं भवति–असौ वा आदित्योऽग्निर्वैश्वानरः"–इति। तस्मात् सूर्यो वैश्वानर इति॥ ७।२३।४॥

**अथापि निवित् सौर्यवैश्वानरी भवत्या यो द्यां भात्या पृथिवीमित्येष हि द्यावापृथिव्यावाभासयति॥ ५॥**

१ 'च'॥

"अथापि निवित् सौर्यवैश्वानरी भवति" । निविदित्याकृतिविशिष्टो मन्त्रः शस्त्रमध्यपाती । स तथा भवति यथा सूर्यो वैश्वानर इति न पार्थिवो न मध्यम इति । कथम् ? इति।भवति हि तत्रैतत् पदम्,–"आ यो द्यां भात्या पृथिवीम्" इति । न च पुनरादित्यादन्योऽवभासयते द्यावापृथिव्यौ, यत उच्यते,–"एष हि द्यावापृथिव्यां-वाभासयति" ॥ ७ । २३ । ५ ॥

**अथापि च्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति "दिवि पृष्टो अरोचत" इत्येष हि दिवि पृष्टो अरोचतेति ॥ ६ ॥**

"अथापि च्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति" । कतमत् ?

"दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् ।
क्ष्मया वृधान ओजसा चनोहितो ज्योतिषा बाधते तमः ॥ ( य० वा० सं० ३३, ९२ । ऋ० सं० १, ७, ६, २०–५, ३, ७, २ )"–इति ।

न च पुनरादित्यादन्यो दिवि पृष्टो रोचते, यत उच्यते,–एष हि "दिवि पृष्टो अरोचत" । दिवि पृष्टः द्युलोके स्पृष्टः अवस्थित इत्यर्थः, अरोचत रोचते दीप्यते । कोऽसौ ? इति । 'अग्निर्वैश्वानरः' 'बृहन्' महान् इत्यर्थः । स रोचमानः किं करोति? 'ज्योतिषा' स्वेन 'बाधते' 'तमः' नाशयत इत्यर्थः ॥ ७ । २३ । ६ ॥

**अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ॥ ७ ॥**

"अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति" । कथम् ? इति। भवति हि तत्र मन्त्रः–सूर्यो वैश्वानर इति समर्थः । तद्यथा,–"विश्वस्मा अग्निं भुवनाय देवा वैश्वनरं केतुमह्नामकृण्वन् ( ऋ० सं० ८, ४, १२, २ )"–इति । वैश्वानरं केतुं कर्त्तारमह्नामकृण्वन्निति । नैव तावदादित्यादन्यस्याह्नां कर्तृत्वमुपपद्यते पार्थिवे मध्यमे वा, आदित्य एव ह्युदयास्तमयाभ्यामहानि करोति । तेन वयमेतैर्हेतुभिः पश्यामः–सूर्यो वैश्वानर इति ॥ ७ । २३ । ७ ॥

**अयमेवाग्निर्वैश्वानर इति शाकपूणिः । विश्वानरावेते उत्तरे ज्योतिषी वैश्वानरोऽयं यत्ताभ्यां जायते ॥ ८ ॥**

"अयम् एव अग्निः वैश्वानरः, इति शाकपूणिः" । न मध्यमो न सूर्यः ॥ किं तर्हि ? अयमेव पार्थिवः अग्निः । केन हेतुना ? तद्धितोत्पत्तिसामर्थ्यात् ॥ कथम् ? इति । "विश्वानरावेते उत्तरे ज्योतिषी" । तदुक्तम्,–"अपि वा विश्वानर एव

कश्चित् स्यात्, तस्यापत्यं वैश्वानरः" (७।२१।१) इति । तदिदमुपपद्यते— "वैश्वानरः अयम् यत् ताभ्यां जायते" । तस्मात् तद्धितेन व्यपदेशेन पार्थिवोऽग्निर्वैश्वानर इति ॥ ७ । २३ । ८ ॥

**कथं न्वयमेताभ्यां जायत इति यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवत्युदकेन्धनः शरीरोपशमन उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः ॥ ९ ॥**

"कथं न्वयमेताभ्यां जायते" । यत उच्यते,—"यत्र वैद्युतः" अग्निः, "शरणम् अभिहन्ति" । आश्रयमात्मनो दारु, उदकम्, अन्यद्वा "अभिहन्ति" निहन्ति अभिगच्छति प्राप्नोतीत्यर्थः ॥ किं तत्र तत् [प्र] दीप्यते । स च पुनः "यावदनुपात्तो भवति" ॥ मनुष्यैरनुपस्पृष्टो भवत्यपरिगृहीतो वा ॥ किं तावत् ? "मध्यमधर्मैव तावत् भवति" ॥ कः पुनर्मध्यमस्य धर्मः ? यदसौ "उदकेन्धनः शरीरोपशमनः" उदकेनन्धेत दीप्यते रसस्वभावकेन शरीरेण काष्ठेनान्येन वाप्रतिहतमूर्तिस्वभावकेन पार्थिवधातुबहुलेनोपशाम्यति, स मध्यमस्य धर्मः । तदेतत् स्थानजात्यादिकृतं स्वाभाव्यमहेतुकं ज्योतिषो न भवति प्रथमस्य धर्मः ॥ स च पुनः "उपादीयमानः एव" "अयम्" पार्थिवोऽग्निः "सम्पद्यते" ॥ कथम् ? उपात्तो हि मनुष्यैः स्वजातिधर्मं हित्वा पार्थिवधर्मं प्रतिपद्यते ॥ कथम् ? इति । "उदकोपशमनः शरीरदीप्तिः" । विपर्यस्तधर्मा मध्यमेन सम्पद्यते । एवन्तावन्मध्यमादयं विश्वानरात् स जायते, तेनायं तदपत्यमिति भवति हि तद्धितार्थोपपत्त्या वैश्वानरः ॥ ७ । २३ । ९ ॥

**अथादित्यादुदीचिप्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत् प्रदीप्यते सोऽयमेव सम्पद्यते ॥ १० ॥**

अथ पुनरादित्यात् कथं जायते? आह—"अथादित्यादुदीचिप्रथमासमावृत्त आदित्ये" इत्येवमादि । अथशब्दः आनन्तर्ये, प्रकृतादर्थान्तरमधिकरोति । उदीचीं दिशं प्रति प्रथमसमावृत्त आदित्यः, तस्मिन् उदीचि प्रथमसमावृत्ते उद्गमेनादौ इत्यर्थः ॥ कथम् ? इति । "कंसं वा मणिं वा परिमृज्य" यमादित्यमणिमित्याचक्षते ।

१ 'उद्गमनादौ' ॥

"प्रतिस्वरे" प्रत्युपतापे । "यत्र शुष्कगोमयम् असंस्पर्शयन् धारयति, तत् प्रदीप्यते" "सोऽयमेव सम्पद्यते" यः शुष्कगोमयेऽग्निर्जायते, स एवमादित्यादपि कंसाद्वा मणेर्वा जायते, असावपि च वैश्वानर इत्युच्यते, तदपत्यापेक्षयाप्यस्य वैश्वानरत्वमुपपद्यते । अथाप्याह, तद्धितविग्रहव्यपदेशात् तावदेवमुपपद्यते—अन्य आदित्यात् तावद्वैश्वानरः ॥ ७ । २३ । १० ॥

**अथाप्याह—"वैश्वानुरो यंतते सूर्येण" इति । न च पुनरात्मनात्मा संयततेऽन्येनैवान्यः संयतत इत इममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत् ॥ ११ ॥**

"अथापि" अयमपरो व्यपदेश एकवाक्ये विभक्त्यन्तरकृतः सूर्यवैश्वानरयोर्भेदं गमयति । तद्यथा—"वैश्वानुरो यंतते सूर्येण" इति, मन्त्रदृक् "आह" । प्रथमान्तस्य वैश्वानरशब्दस्य तृतीयान्तेन सूर्यशब्देन विभक्तिभेदाद् विशेषणविशेष्यभावेन सामानाधिकरण्यं नास्ति । एतदेवासामानाधिकरण्यमपेक्ष्य अनेकत्वं वैश्वानरसूर्यशब्दयोर्ब्रवीति,—"न च पुनरात्मनात्मा संयतते" ॥ किं तर्हि ? "अन्येनैवान्यः" "संयतते" संगच्छते, यथा देवदत्तो यज्ञदत्तेन ॥ तत् कथमयं संयतते सूर्येण ? इति । यत आह,—"इत इममादधाति" । इतो लोकादोषधीभ्यः शरादिभ्यो वनस्पतिभ्यो वा मथित्वा प्रत्यक्षत एव इममादधाति अभ्यादधातीन्धनैः । "अमुतः" मण्डलात् कर्मात्मनः "अमुष्य" च आदित्यमण्डलाधिष्ठातुः स्वभूताः "रश्मयः" "प्रादुर्भवन्ति" । "इतः" तेजःपिण्डात् "अस्य" तदधिष्ठातुः "अर्चिषः" प्रादुर्भवन्तीति वर्त्तते । "तयोः भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत्" मन्त्रदृक् "वैश्वानुरो यंतते सूर्येण"—इति ॥ ७ । २३ । ११ ॥

**अथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा सौर्याणि वा पौष्णानि वा वैष्णवानि वा वैश्वदेव्यानि वा तेषु वैश्वानरीयाः प्रवादा अभविष्यन्नादित्यकर्मणा चैनमस्तोष्यन्नित्युदेषीत्यस्तमेषीति विपर्येषीति ॥ १२ ॥**

१ 'इत्याचक्षते' ॥ २ 'तथा' ॥ ३ 'प्रवक्ष्य' ॥ ४ 'यज्ञदत्तो देवदत्तेन' ॥ ५ 'मवक्षत्' ॥

"अथ यान्येतान्यौत्तमिकानि सूक्तानि" अथ—इति अधिकारान्तरे । यदि सूर्यो वैश्वानरोऽभविष्यत्, ततो ननु "यान्येतानि" "औत्तमिकानि सूक्तानि" उत्तमस्थान-देवताविशेषस्तुत्यर्थानि । तद्यथा,—"भागानि वा सावित्राणि वा पौष्णानि वा वैष्णवानि वा वैश्वदेव्यानि" । गुणपदत्वमभ्युपेत्य वैश्वानरशब्दस्य ब्रवीति । "तेषु" सूक्तेषु "वैश्वानरीयाः प्रवादाः" भगादीनां विशेषणत्वेन "अप्रविष्यन्" हे भग वैश्वानर ! हे सवितः वैश्वानर ! इत्येवमादयः । "आदित्यकर्मणा च एनमस्तोष्यन्" । एवं वैश्वानरीयेषु सूक्तेषु वैश्वानरमस्तोष्यन् मन्त्रदृशः ॥ कथम् ? इति । "उदेषीत्यस्तमेषीति विपर्येषीति" । इतिकरण एवंशब्दार्थे, एवमुदेषि त्वं वैश्वानर ! एवमस्तमेषि—एवं विपर्येषि इति । न च पुनरेतदुभयमप्यास्ति ॥ न हि वैश्वानरीयाः प्रवादा औत्तमिकेषु सूक्तेषु सन्ति, नाप्यादित्यकर्मणा वैश्वानरं स्तुवन्ति मन्त्रदृशः । तस्मान्नैष सूर्यो वैश्वानर इति ॥ ७ । २३ । १२ ॥

## आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति ॥ १३ ॥

किंच, अयं चापरो विशेषहेतुराग्निर्वैश्वानर इति—"आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादाः भवन्ति" अग्निविशेषणत्वेन—। "वैश्वानरमृत आजातमग्निम् (ऋ० सं० ४' ५, ९, १)"—इत्येवमादयः ॥ ७ । २३ । १३ ॥

## अग्निकर्मणा चैनं स्तौतीति वहसीति पचसीति दहसीति ॥ १४ ॥

"अग्निकर्मणा च" "एनं" वैश्वानरं प्रायेण "स्तौतीति" "वहसीति, पचसीति, दहसीति" । एवं वैश्वानर ! वहसि हवींषि, पचसि पक्तव्यानि, दहसि दग्धव्यानि । तस्मादग्निरेव वैश्वानर इति स्थितम् ॥ ७ । २३ । १४ ॥

## यथो एतद्वर्षकर्मणा ह्येनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते—॥

तदेते षट् हेतवः,—तद्धितेन विग्रहव्यपदेशात् [ १ ], एकवाक्ये विभक्त्यन्तरव्यपदेशात् [ २ ], औत्तमिकेषु सूक्तेषु अप्रवादात् [ ३ ], आदित्यकर्मणा च असंस्तवात् [ ४ ], आग्नेयेषु सूक्तेषु प्रवादात् [ ५ ], अग्निकर्मणा च संस्तवात् [ ६ ] इति ॥

तत् पुनरेतदग्नेर्वैश्वानरत्वं स्थितमप्यस्थितमिव परपक्षहेतुष्वनिराकृतेषु, अतः तन्निराकरणाय प्रस्तौति—"यथो एतत्"—इति । यत् पुनरेतदुक्तं—वर्षकर्मणा यस्मात् स्तौति, तस्मान्मध्यम इति—"अस्मिन्नपि" पार्थिवेऽग्नौ "एतदुपपद्यते" वर्षकर्म—॥

"समानमेतदुदकमुच्चैत्यव चाहभिः ॥
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥"



१ 'स्तुवते' ॥

इति सा निगदव्याख्याता ॥ १५ ॥ २३ ॥

कथम् ? इत्यत आह—"समानमेतत् ( ऋ० सं० २, ३, २३, ५ )"—इति "समानम्" एकमेवेदम् "उदकम्" उदकत्वेनाविशिष्टम्, "उच्चैत्यव चाहभिः"। उत् एति च, उर्द्ध्वं चैति, अहोभिर्निमित्तभूतैः पुनश्चाहोभिरेव अवाङेति, दक्षिणोत्तरायणयोर्व्यावृत्तिभिः प्रतिसंवत्सरमहान्यभिप्रेतानि । तदेतदेकमेवोदकं पर्यायेणोत्तरायणदक्षिणायनयोः जगद्यात्रासिद्धये तदुदेति चावैति च वर्षकर्मभावेन ॥ कथम् ? इत्यत्र आह—अवाङ् तावदेति, 'भूमिं' 'पर्जन्याः' प्रार्जयितारो रसानां माध्यमिका देवगणा वर्षाममुतो मुञ्चन्तः "भूमिं" "जिन्वन्ति" तर्पयन्ति औषध्युत्पत्तये। एवं तावदवाङेति। अथ पुनरूर्द्ध्वं कथमेति ? इत्यत आह,—"दिवं जिन्वन्त्यग्नयः" इति। यथैवामुतो वर्षेणेमां पर्जन्या जिन्वन्ति, तथैवाहुतिप्रभवेण वर्षेण दिवं जिन्वन्त्यग्नयः, आहुतयो ह्यग्नौ प्रक्षिप्ताः तेन दग्धास्ताः स्वार्चिर्भिः कृत्वोदकभावमापाद्य परमं सूक्ष्मं देवोपभोगयोग्यं द्यां प्रति वर्षभावेनोन्नीयन्ते तल्लोकनिवासिनां तृप्तये, ततस्त इह पुनर्वर्षं प्रकल्पयन्ति। तदुक्तम्-"अमुष्य लोकस्य का गतिरिति, अयं लोक इति होवाच"—इति ।

एवं च सुतरामयमपि च वर्षवान्, आहुतिमूलत्वात् सर्वस्य वर्षस्य। स्मर्यते च—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इति। तत्र यदभूद् वर्षकर्मभावान्मध्यम इति, तदेतद्वैशेषिकं मध्यमस्य वैश्वानरत्वेन लक्षणम् ॥ ७।२३।१५॥

अपि चायमपरो मन्त्रः, यस्मिन्नग्निरादित्यो वर्षकर्मणा स्तूयते। तस्मात् सुतरामनैकान्तो वर्षकर्माभिष्टवो मध्यमस्येत्यत आह—"कृष्णं नियमानम्" इति ॥ *

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
त आ ववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥"

कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयस्ते यदामुतोऽर्वाञ्चः पर्यावर्त्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते। घृतमित्युदकनाम जिघर्त्तेः सिञ्चतिकर्मणः ॥ १ ॥

* अत्रैव त्रयोविंशखण्डसमाप्तिर्दृश्यते, सा 'अपि चायमपरो मन्त्रः' इत्यतः प्रागुचिता। "इति निरुक्तवृत्तौ सप्तमा ( द्वादशा ) ऽध्यायस्य षष्ठः पादः ॥ ७,६॥" इति चोपलभ्यते ॥

"कृष्णं नियानम् ( ऋ० सं० २, ३, २३, १ )"—इति । दीर्घतमस आर्षम् । त्रिष्टुप् । वृष्टिकामस्य कारीर्यामग्नये धामच्छदे अष्टाकपालम्, तस्य पुरोऽनुवाक्या, तस्यां मैत्रायणियके अग्निरयमादित्यीकृत्य स्तूयते इति प्रकरणादध्यवसीयते ॥ "कृष्णम्" । किं पुनस्तत् कृष्णम् ? "नियानं" "निरयणं" निर्गतिः, [ निर्याति ] निर्गच्छन्त्येतेदिति नियानं वर्त्म पन्थाः । तच्च पुनरेतत् "रात्रिः आदित्यस्य" द्वे ह्यस्यायने शुक्लं चोत्तरम्, कृष्णं च दक्षिणम्, सा हि दैवी रात्रिरभिप्रेता । ततो ब्रवीति रात्रिरादित्यस्य ज्योतिषः । स एष भगवानादित्यो यदा जगदनुग्रहाय गर्भमुदकमात्मन्याधित्सुरुत्तरायणं प्रतिपद्यते, तदैते "हरयः" रस—"हरणाः" "सुपर्णाः" तस्य "रश्मयः" सर्वस्मादस्माल्लोकात् "अपो वसानाः" आत्मन्याच्छादयन्तः आददानाः "दिवं" द्योतनवन्तम् एतमादित्यं प्रति "उत्पतन्ति" तदुदकं निधित्समानाः तस्मिन् गर्भत्वेन स एष आदित्य उत्तरायणं मासैः षड्भिः आहितोदकगर्भः सम्पद्यते । स एष परिरिक्तोदकगर्भो दक्षिणं वर्त्म प्रतिपद्यमानो नभस्यात् मासात् प्रभृति प्रसूयते । तदिदमुच्यते,—"त आ ववृत्रन्त्सदनादृतस्य"[1] इति । ते रश्मयः "यदा"[2] "अमुतः" अमुष्मात् आदित्यात् ऋतस्य उदकस्य सदनात् सहस्थानात् आ ववृत्रन् यदा "पर्यावर्त्तन्ते" "आत्" "अथ" तदावृत्तिसमनन्तरमेव "घृतेन" "उदकेन" "पृथिवीं" "व्युद्यते" विविधमुद्यते ॥

"घृतम् इति उदकनाम" 'पृथिवी व्युद्यते' इति सामर्थ्यात् । तत् पुनः "जिघर्त्तेः सिञ्चतिकर्मणः" ॥

एवमेतस्मिन् मन्त्रे मन्त्ररूपादादित्यः, प्रकरणादग्निः, उभयथाप्यन्यो मध्यमात् वर्षकर्मणः कर्त्ता ॥ ७ । २४ । १ ॥

**अथापि ब्राह्मणं भवत्यग्निर्वा इतो वृष्टिं समीरयति धामच्छद्दिवि खलु भूत्वा वर्षति मरुतः सृष्टां वृष्टिं नयन्ति ॥ २ ॥**

Having covered space in heaven

"अथापि ब्राह्मणं भवति" एतस्मिन् प्रकरणे यस्मिन्नयं मन्त्रो विनियुज्यते, "अग्निर्वा इतो वृष्टिं समीरयति"—इत्येवमादि । अग्निः इतो लोकात् वृष्टिं समन्तत ईरयति । धूमभूता आप ओषधिवनस्पतिभ्यो विनिवर्त्यमानाः आहुतिभूताश्चामुं लोकमाविशन्ति । "अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्रात् वृष्टिरिति ह विज्ञायते" । ताः पुनरग्निस्थानाभिसम्पत्तिप्रनाडिकया धामच्छदादित्यः खलु दिवि भूत्वा धाम्नां छादयिता रश्मिभिर्भैघरूपैर्मध्यमस्थानमापादयति । एवं तेन सृष्टां वृष्टिं मध्यस्थाना-



१ 'स्येनदि' । २ 'यदिद' ॥

न्मरुतो वायवो मेघोदराणि विदार्य तेभ्यो विक्षिपन्तो वृष्टिमिमं लोकं नयन्ति प्रापयन्तीत्यर्थः ॥ ७ । २४ । २॥

**यदा खलु वासावादित्योऽग्निं रश्मिभिः पर्यावर्त्ततेऽथ वर्षतीति ३**

अथापरमपि ब्राह्मणं भवति—"यदा खलु वासावादित्योऽग्निं रश्मिभिः" इत्येवमादि। तदेवमेतत् वर्षकर्म समानं सर्वेषाम् इत्यहेतुर्मध्यस्य वैश्वानरत्वे भवति ॥ ७ । २४ । ३॥

**यथो एतद्रोहात् प्रत्यवरोहांश्चिकीर्षित इत्याम्नायवचनादेतद्भवति ॥ ४ ॥**

"यथो एतत्" यत् पुनरेतदुक्तं याज्ञिकपक्षे—"रोहात् प्रत्यवरोहश्चिकीर्षितः इति"। अकारणमेतत् सूर्यस्य वैश्वानरत्वे ॥ कस्मात् ? "आम्नायवचनात् एतत्" एवं "भवति" रोहात् प्रत्यवरोह इत्यर्थवादमात्रमेव ॥ ७ । २४ । ४ ॥

**यथो एतत्—॥**

"यथो एतत्" यदपि चोक्तम्—॥

**वैश्वानरीयो द्वादशकपालो भवतीत्यनिर्वचनं कपालानि भवन्त्यस्ति हि सौर्य्यं एककपालः पञ्चकपालश्च ॥ ५ ॥**

"वैश्वानरीयो द्वादशकपालो भवति"—इति । एतदप्यकारणं सूर्यस्य वैश्वानरत्वे ॥ कस्मात् ? व्यभिचारात्, व्यभिचार्येतदिति । यत आह,—"अस्ति हि सौर्य एककपालः पञ्चकपालश्च" । यदि हि देवतागुणाभिप्रायमभविष्यत् द्वादशविधमस्य कर्म, तस्मात् द्वादशकपाल इति ॥ नन्वेवं सति सौर्योऽपि द्वादशकपाल एवाभविष्यत्, अभिधानमात्रं भिद्यते न कर्मेति । न च भवति सौर्य्यो द्वादशकपाल इति । तस्मादहेतुः कपालानि ॥ ७ । २४ । ५ ॥

**यथो एतद्ब्राह्मणं भवतीति—बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति—पृथिवी वैश्वानरः संवत्सरो वैश्वानरो ब्राह्मणो वैश्वानर इति ॥ ६ ॥**

"यथो एतत्" यदप्युक्तं—"ब्राह्मणं सौर्यवैश्वानरप्रवादं[1] भवतीति" । एतदप्यकारणम् ॥ कस्मात् ? "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति" । यस्मात् बहु-

१ 'प्रवादः' ॥

भक्तिवादीनि ब्राह्मणानि भवन्ति ॥ भक्तिर्नाम गुणकल्पना, येन केनचिद् गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति, तत्र तत्त्वमन्वेष्यमेव भवति। तद्यथा "पृथिवी, वैश्वानरः"—इत्येवमादि किमपि ब्राह्मणेन बहु वैश्वानरशब्देनोच्यते भक्त्या ॥ ७ । २४ । ६ ॥

**यथो एतन्निवित्सौर्यवैश्वानरी भवतीत्यस्यैव सा भवति- "यो विड्भ्यो मानुषीभ्यो दीदेत्" इत्येष हि विड्भ्यो मानुषीभ्यो दीप्यते ॥ ७ ॥**

"यथो एतत्"—"निवित् सौर्यवैश्वानरी भवतीति"। "अस्यैव" अग्नेः "सा भवति"। कथम्! इति। तस्याङ्के पदं भवति "यो विड्भ्यो मानुषीभ्यो दीदेदिति"।ततः किम्?"एष हि विड्भ्यो मानुषीभ्यो दीप्यते"॥"अग्निर्वैश्वानरः सोमस्य मत्सत्। विश्वेषां देवानां समित्। अजस्रं दैव्यं ज्योतिः। यो विड्भ्यो मानुषीभ्यो दीदेत्। द्युषु पूर्वासु दिद्युतानः। अजर उषसामनीके। आ यो द्यां भात्या पृथिवीम्। औरुमन्तरिक्षम्। ज्योतिषा यज्ञाय शर्म संयत्। अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद् ब्रह्माण्यवसागमत्"—इतीयं निवित् आग्निमारुते शस्यते ॥ "निवित् पुरोरुचः प्रैषा विश्वामित्रस्य सर्वशः।"—इति सर्वा विश्वामित्रस्यार्षम्। "अग्निर्वैश्वानरः सोमस्य मत्सत्" तृप्यतु। तृप्तश्च "प्रेमां देवो देवहूतिमवतु"। प्र प्रकर्षेण इमाम् अग्निः वैश्वानरः देवः देवहूतिं देवानामस्माकमाह्वानम् अवतु रक्षतु। यः 'विश्वेषां देवानां' 'समित्' समिन्धनः, स इदं करोतु। यश्च 'अजस्रं' नित्यं 'ज्योतिः'। यश्च "विड्भ्यः" "मानुषीभ्यः" "दीदेत्" देदीप्यते। यश्च 'द्युषु पूर्वासु' पूर्वेष्वहःसु 'दिद्युतानः' दीप्यमान एवासीत्। यश्चासौ 'अजरः' जराविमुक्तः 'उषसामनीके' अग्निहोत्रादिषु द्योतते। 'यः' च 'आ' 'भाति' भासयति 'द्यां' सूर्यात्मना, 'आ' भासयति च 'पृथिवीम्' अग्न्यात्मना, 'आ' भासयति 'उरु' च 'अन्तरिक्षं' मध्यमात्मना। एवं त्रिभिर्ज्योतिर्भिः यश्च 'ज्योतिषा' 'यज्ञाय' 'शर्म' सुखं 'संयत्' यच्छति, ददाति। सः 'अग्निः' वैश्वानरः 'इह' 'श्रवत्' शृणोतु अस्माकं स्तुतीः। 'इह' च कर्मणि 'सोमस्य' 'मत्सत्' तृप्यतु। किंच, 'प्रावत्विमां देवो देवहूतिं' 'देव्या धिया' देवानां या दात्री धीः प्रज्ञा, तया 'अवतु' रक्षतु। 'प्रेदं ब्रह्म, प्रेदं क्षत्रम्' इदं ब्रह्म प्रावतु इदं क्षत्रं प्रावतु। 'प्रेमं सुन्वन्तम्' अभिषुण्वन्तं 'यजमानं प्रावतु'। 'चित्रः' चायनीयः पूज्यो वैश्वानरः, 'चित्राभिः ऊतिभिः' शोभनाभिः गतिभिः प्रीतिभिर्वा। 'श्रवत्' शृणोतु इमानि 'ब्रह्माणि' अस्माकं नित्यं च

अस्मान् प्रति 'आगमत्' प्रत्यागच्छतु 'अवसा' पालनाभिप्रायेण मनसा कर्मसु । इत्येतदाशास्महे ॥ ७ । २४ । ७ ॥

**यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैवैतद्भवति जमदग्निभिराहुत इति ॥**

**जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो भवति ॥ ८ ॥ २४ ॥**

"यथो एतत्" यत् पुनरेतदुक्तम्—"छान्दोमिकम्" छन्दोमयज्ञेषु दाशरात्रिकेषु यत् "सूक्तं" तत् "सौर्यवैश्वानरम्"—( ७ । २३ । ६ ) इति ॥ तदपि "अस्यैव" अग्नेः "भवति" ॥ कथम् ? इति । तत्र हि "एतत्" विशिष्टं पार्थिवाग्नेर्वाचकं लिङ्गं "भवति"—"जमदग्निभिराहुतः—इति" जमदग्नयो ह्येनम् आहुतिभिर्जुह्वति, नादित्यम्, अभिधानात् असम्भवाच्च । तस्मादत्रापि यद्वैश्वानरलिङ्गं तदप्येतस्य पार्थिवस्याग्नेर्व्यञ्जकं भवति ॥ "वृषा पावक दीदिहि" । वृषा वर्षिता, हे वैश्वानर ! पावक 'द्युमत्' दीप्तिमत्, यस्त्वं जमदग्निभिराहुतः, "अभिहुतः" स त्वमस्माकं कर्मसु नित्यं 'दीदिहि' दीप्यस्व । इत्येतदाशास्महे ॥

"जमदग्नयः" नित्यं "प्रजमिताग्नयः" प्रभूताग्नयः । "प्रज्वलिताग्नयो वा" ७।२४।८

**यथो एतद्धविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद्भवति—॥**

"यथो एतत्" यदप्युक्तम्—"हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति (७ । २३ । ७ ) इति" ॥ "तत्" अपि "अस्यैव" "भवति" ॥ कथम् ? इति । यतस्तस्य सूक्तस्य या प्रथमा ऋक्, सा यथा आग्नेयी भवति, न सौरी, तथा निराह—इदमाग्नेयं सूक्तम्, न सौर्यमित्युपप्रदर्शनार्थम् ॥—*

**"हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ ।**
**तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधयापप्रथन्त ॥"**

**हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ**

---

१ 'त्यस्यैवत '॥ *अत्रैव चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा 'यथो एतत् यदप्युक्तम्' इत्यतः प्रागुचिता ॥

**तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्य इममग्निमन्नेनापप्रथन्तेति ॥ १ ॥ २५ ॥**

"हुविष्पान्तम् ( ऋ० सं० ८, ४, १०, १,–१०, ७, ४, १ )"–इति॥ सूक्तमेतत् मूर्द्धन्वत आङ्गिरसस्यार्षम्, वामदेवस्य वा । व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुतस्य प्रतिपत् ॥ "हविः" कतमत् ? "यत्" एतत् "पान्त्रम्" पानार्हं पानयोग्यं च देवानां च पुरोडाशादिनिर्दग्धस्थूलभावमग्निना क्रियते । "अजरम्" जराविपरिणामः, यतः परं विपरिणामो नास्ति कश्चित्, तत्प्रविवेकमापादितमग्निना । यदेतत् "स्वर्विदि" स्वः आदित्यः,[1] तं वेत्ति यथासौ वेदितव्य इति,[2] तदर्थं वा वेत्ति हविः, स स्वर्विदयमग्निः, न सूर्यः ॥ भाष्यकारोऽपि व्यपदेशेन निराह–"सूर्यविदि" इति । "दिविस्पृशि" द्यामसौ स्पृशत्यहन्यहनि हविरुपनयन्नादित्यम् । "आहुतम्" "अभिहुतं" विसृष्टम् । "जुष्टम्" प्रियं देवानाम् । "तस्य" हविषः "भर्मणे" "भरणाय" सम्भरणाय बहुलीकरणाय, अपि नाम अयमग्निरित्येतद् बहु कुर्यादित्येवमर्थम् । "भावनाय च" विभूतियुक्तमपजायेतेत्येवमर्थमपि एतत् कथं नाम देवतातृप्तिसमर्थं कुर्यादिति "धर्मणे" "धारणाय" अविच्छेदनाय । कथं नामैतत् देवताभ्यो नित्यं प्रापयेदिति । "एतेभ्यः" "कर्मभ्यः" अर्थात् "इमम्" एव "अग्निं" पृथिवीस्थानं साधयते । "स्वधया" "अन्नेन" हविषा, आज्येन पुरोडाशेन च । यदुक्तं निगमे–"घृतं चापां पुरुषं चौषधीनाम्" इति । तदेतत् "अपप्रथन्त" देवाः अवर्द्धयन्तेत्यर्थः ॥

एवमेतस्मिन् सूक्ते प्रथमे मन्त्रे यदेतदग्निलिङ्गमस्पृष्टं वैश्वानरशब्देन, तदसंशयमग्निवाचि । तत्पुनरेतत्सूक्तं 'हविष्पान्तीयम्' प्रागेवाग्नेयं करोति, प्राथम्यात्, प्रथमं लोके यो हि श्रूयते, स स्वेनाभिधानेनाव्यभिचारिणोपक्रम्यते स्तोतुम्, ततोऽन्यैर्भाक्तैः स्तूयते–त्वं राजा त्वमिन्द्र इत्येवमादिभिः । तथैवं कृत्वा अस्मिन् सूक्ते यो वैश्वानरशब्दः उत्तरत्र से तस्यैवाग्नेः पृथिवीस्थानस्य व्यञ्जनमात्रं भवति ॥ ७ । २५ । १ ॥

## अथाप्याह--॥

यथा चायमेव पृथिवीस्थानोऽग्निर्वैश्वानरः, न मध्यमः, तथेममपरं मन्त्रं स्वपक्षोद्भिावविषयम् अन्यस्मात् सूक्तात् भिन्नज्योतिर्लक्षणमानीय मध्यमोत्तमयोर्ज्योतिषोरन्यत्वव्यपदेशवतो वैश्वानरस्य निर्णिनिषन् प्रकरोति–"अथाप्याह"–इति ॥ *

१ 'विभूवियुक्त्युपजा ॥ २ 'सौऽस्यैवा' ॥ * अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा 'यथा चायमेव–' इत्यतः प्रसूचिता ॥

"अपामुपस्थे महिषा अगृभ्णत विशो राजानमुपतस्थुर्ऋग्मियम् ॥ आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥

अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वागृह्णन्त माध्यमिका देवगणा विश इव राजानमुपतस्थुर्ऋग्मियमृग्मन्तमिति वार्चनीयमिति वा पूजनीयमिति वाहरद्यं दूतो देवानां विवस्वत आदित्याद्विवस्वान्विवासनवान् प्रेरितवतः परागताद्वापि वास्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्त्तारमाह ॥

मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वा ॥ १ ॥ २६ ॥

"अपामुपस्थे ( ऋ० सं० ४, ५, १०, ४ )"—इति । भरद्वाजस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते ॥ "अपामुपस्थे" "उपस्थाने" यत्रोपगम्य तिष्ठन्त्यापः सोऽपामुपस्थः, अन्तरिक्षलोकः, तस्मिन्नपामुपस्थे । "महति" विस्तीर्णे । सन्नाः "महिषाः"[1] "माध्यमिका देवगणाः" । अथवा—"महिषाः" त एव "महान्तः" । किमकुर्वन् ? "अगृभ्णन्" "अगृह्णन्" । गृहीत्वा च "विशः" "विश इव" मनुष्या इव "राजानम्" परिवार्य "उपतस्थुः" । "ऋग्मियम्" ऋग्भिः स्तुतिभिः तद्वन्तम्, "अर्चनीयम्" अर्चनार्हं वा ॥ कतमम् ? इति । "यम्" "आ अभरत्" "आहरत्" । "दूतः" देवानां "मातरिश्वा" वायुः 'अग्निम्' "वैश्वानरम्" कुतः ? "परावतः" "प्रेरितवतः" प्रकर्षेण ईरितवतः, प्रेरिततरात्, "परागताद्वा" दूरतरात् "विवस्वतः" आदित्यात्, विवासनक्रियया तमसां तद्वतस्तं पर्यगृह्णन् अन्तरिक्षे लोके । गृहीत्वा चोपतस्थुः विश इव राजानम् ॥

"मातरिश्वा वायुः" । स हि "मातरि अन्तरिक्षे" अप्रतिबध्यमानशक्तिः "श्वसिति" गच्छति । अथवा—"मातरि" "आशु अनिति" गच्छति ॥

---

१ 'प्रतिमहिषाः' ॥

एवमेतस्मिन् मन्त्रे यत आह्रियते, येन चाह्रियते, यश्चाह्रियते, सर्वे ते पृथग् व्यपदिष्टाः[1]। अत्रे विवस्वत आह्रियते मातरिश्वना वैश्वानर इति। तस्मादेतयोर्विवस्वन्मातरिश्वनोः सन्निधानव्यपदेशे सति साक्षाद् वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति ॥

अथ पुनर्यदङ्गीकृत्य सूर्यादिसम्बन्धि विशेषलिङ्गं हविष्पान्तीयस्य सौर्य्यवैश्वानरत्वमुक्तम् ( ७ । २३ । ७ )—"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ( ऋ० सं० ८, ४, १२, २ )"—इति, नान्यः सूर्य्यादह्नां कर्त्ता, तस्मात् सूर्योऽत्र[2] वैश्वानर इति ॥ अत्र ब्रूमः—पार्थिव एवायमग्निः सूक्ते प्रथमायामृचि प्रकृत्योत्तरास्वृक्षु एतस्मिन् सूक्ते प्रकृतिभूम्ना स्तूयते, महत आत्मनो माहाभाग्यात्। अपि तर्हि सत्त्वान्यश्वप्रभृतीनि प्रकृतिभूमभिः स्तूयन्ते,—किमङ्ग पुनर्देवताः, तासामपि च विशेषतोऽग्निः, यस्य सर्वदेवतात्माभिवादः साक्षात् "अग्निः सर्वा देवताः ( ऐ० ब्रा० २, १, २ )" "इन्द्रं मित्रं वरुणमग्निम् ( ऋ० सं० २, ३, २२, ६ )"—इति। तदेतदेतस्मिन्नेव सूक्ते स्फुटतरमुपदिश्यते ॥ ७ । २६ । १ ॥

अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति—॥

यथा पार्थिव एवायमग्निः तेन तेन देवताविशेषेण देवतात्मना तत्स्थानमापन्नः स्तूयत इति तदर्थमिदमाह—"अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति" एताभ्यां ये एते वक्ष्यमाणे सर्वाणि स्थानानि पृथिव्यन्तरिक्षद्युलक्षणानि अभ्यापाद्य अभ्यापाद्य इत्यभ्यापादं स्तौति मन्त्रदृक्—॥ *

"मूर्द्धा भुवो भवति नक्तमग्निस्ततः सूर्य्यो जायते प्रातरुद्यन्।
मायां मू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन्॥"

मूर्द्धा मूर्त्तमस्मिन्धीयते मूर्द्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्य्यो जायते प्रातरुद्यन् स एव प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसम्पादिनामपो यत्कर्म चरति प्रजानन् सर्वाणि स्थानान्यनुसञ्चरते त्वरमाणः ॥ १ ॥ २७ ॥

---

[1] 'उपदिष्टाः' ॥ [2] 'तत्र' ॥ * अत्रैव षड्विंशखण्डसमाप्तिर्दृश्यते, सा 'यथा पार्थिव एवायमग्निः, इयतः प्रागुचिता ॥

"मूर्द्धा भुवो भवति नक्तम० ( ऋ० सं० ८, ४, ११, १ )"–इति ॥ "मूर्द्धा" "मूर्त्तमस्मिन" सर्वं सत्त्वजातमुपनिबद्धं "धीयते" यथा हि शिरसो वियोगे तद्वतोऽवश्यं भावि मरणम्, एवमग्निवियोगेऽप्यवश्यं म्रियन्ते भूतानि इत्यतः प्रधानम् 'अग्निः' 'मूर्द्धा' "भुवः" भूलोकस्य भवति। विशेषतस्तु "नक्तम्" रात्रौ तत्कृतत्वादालोकस्य, भूतानां चान्नपक्तेस्तत्कृतत्वात्। तत् किमयमन्योऽग्निरन्यः सूर्य इति ? न इत्युच्यते– "ततः सूर्यो जायते प्रातरुद्यन्" रात्रावग्नित्वेन लोकस्योपकारं कृत्वा ततः अनन्तरमेव प्रभातायां रात्र्यामाह्निकैरुपकारैरुपकरिष्यन् लोकस्य सूर्यः भूत्वा जायते, प्रातरुद्यन् "स एव" अयमग्निः। तस्य इयं "माया" ॥ क एनां जानाति ? मायां "त्वेतां" "यज्ञियानां" "देवानाम्, यज्ञसम्पादिनाम्" सतत्त्वविदो मन्यन्ते ॥ तत् किम् ? इति। "अपः" "यत्" "कर्म" स्वाधिकारप्रयुक्तम्, आत्माधिकारप्रयुक्तम्, आदित्यात्मना अग्न्यात्मना च कर्त्तव्यम् "प्रजानन्" प्रकर्षेण जानन् "सर्वाणि स्थानानि अनुसञ्चरते" "तूर्णिः" "त्वरमाणः" कर्मकालमपरिहापयन्नित्यभिप्रायः॥ ७। २७। १॥

## तस्योत्तरा भूयसे निर्वचनाय–॥

"तस्योत्तरा भूयसे निर्वचनाय"। यथा चैतदेवं तथेयमपरा ऋक् भूयस्तरमेतमेवार्थं वक्ति ॥–[ किं पूर्वया नोक्तं यदनया भूयस्तरं निरुच्यते ? इति। स्थानद्वयमभिसम्पन्नः पूर्वया स्तुतः,–मूर्द्धा भुवो भवत्यग्निर्नक्तं ततः सूर्यात्मना प्रातरसावुदेति, अथ पुनरुत्तरया स्थानत्रयमभिसम्पन्नाः स्फुटतरं स्तूयते,–इत्येतद् भूयस्त्वम् ॥ * ]

"स्तोमे॑न॒ हि दि॒वि दे॒वासो॑ अ॒ग्निमजी॑जन॒ञ्छक्ति॑भी रोद॑सि॒प्राम्॥ तमू॑ अकृण्वं॒स्त्रेधा भु॒वे कं स ओष॑धीः पचति वि॒श्वरू॑पाः॥"

स्तोमेन हि यं दिवि देवा अग्निमजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ॥ १ ॥

"स्तोमे॑न हि दि॒वि ( ऋ० सं० ८, ४, ११, ५ )"–इति। "स्तोमेन", स्तुतिभिः, "शक्तिभिः" "कर्मभिः" अग्निहोत्रादिभिः। "दिवि" द्युलोके। एतम् "अग्निम्"

* अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा 'तस्योत्तरा भूयसे' इत्यतः प्रागुचिता ॥

आदित्यात्मना । 'रोदसि' "द्यावापृथिव्योः" "प्रां" "पूरणं" "देवासः" "देवाः" "अजीजनन्" अजनयन् यजमानाः । ते हि हविषां दातारः शश्वत् श्रद्धया । "एष नोदियाद् यद्येतामग्नावाहुतिं न जुहुयादिति आहुतिभिरेवैनं जनयन्ति"—इति । "तम् अकृण्वन्" तमेवाग्निं कृतवन्तः । "त्रेधा भुवे कम्" कमित्यनर्थको निपातः । "त्रेधाभावाय" "पृथिव्याम्, अन्तरिक्षे दिवि" च । "सः" एवमवस्थितो जगद्यात्रासिद्धये सर्वावस्थः "ओषधीः पचति" "विश्वरूपाः" सर्वरूपा इति ॥

प्रकृतस्यैव शाकपूणेः पुनर्ग्रहणं स्वपक्षानुस्मृतये । सङ्करो ह्यस्मिन् सूक्ते आत्मविन्नैरुक्तयाज्ञिकानामिति ॥ ७ । २८ । १ ॥

## यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम् ॥२॥

ब्राह्मणमपि चैतमेवार्थं ब्रवीत्ययमेवाग्निरादित्यो भवतीति,—"यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम्" । अस्य—इति व्यपदेशात् पार्थिवस्याग्नेः प्राधान्यं दर्शयति । उभाभ्यां पक्षाभ्यां व्यावृत्य स्वपक्षसाधनमुक्त्वा देवतासतत्त्वमालम्ब्य निरुच्यते । एकमेवेदं ज्योतिः, ज्योतिष्ट्वाविशेषात् । तत्पुनरेतज्जगद्यात्रासिद्धये त्रिधा विभक्तं पृथिव्यामन्तरिक्षे दिवि च विभक्ताभिधानं सम्पद्यते, अग्निर्विद्युदादित्य इति॥७।२८।२॥

## तदग्नीकृत्य स्तौति ॥ ३ ॥ २८ ॥

तत्रैवं सति ज्योतिषो दिवि तृतीयमादित्याख्यमस्मिन् सूक्ते पूर्वास्वृक्षु "हविष्पान्तम्" —इत्येवमाद्यासु अग्नीकृत्य मन्त्रदृक् स्तौति ॥ ७ । २८ । ३ ।

## अथैनमेतयादित्यीकृत्य स्तौति—॥

"अथैनमेतया" पुनः "आदित्यीकृत्य स्तौति"—*

"यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा॥"

यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमादितेयमदितेः पुत्रं यदा चारिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च ।

---

१ 'दस्योः' ॥ * अत्रैवाष्टाविंशखण्डसमाप्तिर्दृश्यते, सा 'अथैनमेतया' इत्यतः प्रागुचिता ॥

**मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा, थु इति नामकरणस्थकारो वा नयतिः परो, वनिर्वा, समाश्रितावन्योन्यं नयतो, वनुतो वा, मनुष्यमिथुनावप्येतस्मादेव, मेथन्तावन्योन्यं वनुत इति वा ॥ १ ॥ २९ ॥**

"यदेदेनमदधुर्यज्ञियासः ( ऋ० सं० ८, ४, १२, १ )"—इति । "यदैनम्" "सूर्यम्" "आदितेयम्" "अदितेः पुत्रम्" 'दिवि अदधुः' द्युलोके स्थापितवन्तः, "देवाः" "यज्ञियासः" यज्ञसम्पादिनः, यजमानाः याज्ञेन कर्मणा सर्वस्यास्यापूर्वकृतत्वाज्जगद्विरचनाप्रपञ्चस्य । रश्मयो वा देवाः सौर्याः यदैनमुन्नीतवन्तः । "यदा" चैतौ "चरिष्णू" "सर्वदा सहचरणशीलौ" "मिथुनौ" "प्रादुः" 'अभूताम्' "उषाश्चादित्यश्च" । "आत्" अथ तदा "प्रापश्यन्" प्रकर्षेणापश्यन् "भुवनानि" भूतानि, "विश्वा" विश्वानि सर्वाणि ॥

"मिथुनौ कस्मात्?" "मिनोतिः" तावदत्र "श्रयतिकर्मा" मिथुनशब्दे पूर्वपदं 'मि'—इति । 'थु'—इति नामकरणः प्रत्ययः, "थकारो वा" नामकरणो विकल्पेन । "नयतिः परः" उत्तरपदे, "वनिर्वा" विकल्पेन । यदा तावत् 'थु'—इति नामकरणो नयतिश्च परः, तदा धातोः पूर्वत्वात् प्रत्ययस्य च परत्वात् 'मि-न-थुः'—इति प्राप्ते रूढेर्बलीयस्त्वात् मध्यान्तविपर्ययेण मिथुनावित्युक्तम् । अथ पुनर्यदा थकारो नामकरणः, तदा वनिरुत्तरः, तदा वकारस्य सम्प्रसारणम्, सम्प्रसारणपरपूर्वत्वं मध्यान्तविपर्ययः । थकारे च यः स्वरः, तस्य लोपः, थकारश्च उकारमुपसंक्रमेत[2] । एवं मिथुनाविति सिध्यति ॥ अथ कोऽर्थः ? "समाश्रितौ" "अन्योऽन्यं" प्रति आत्मानं "नयतः" कालं वा समाश्रितौ भवतः परस्परं सम्भक्तौ । "मनुष्यमिथुनौ अपि एतस्मात् एव" । अथवा मेथतेर्मनुष्यमिथुनौ स्यातां, तौ हि कर्मार्थं "मेथन्तौ" इव परस्परेण कालं नयतः ॥ ७ । २९ । १ ॥

स्वरितेत्

## अथैनमेतयाग्नीकृत्य स्तौति—॥

"अथ" पुनः "एनम्" आदित्यम् "एतया" उत्तरयर्चा एतस्मिन्नेव सूक्ते "अग्नीकृत्य" होतृत्वेन "स्तौति" होतृत्वं ह्यग्नेः कर्म, न सूर्यस्य । तस्मादिदमग्निवैश्वानरीयं सूक्तम् ॥ *

१ 'सौर्या तदैनमुन्नी' ॥ २ 'संक्रांतः' ॥ * अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा 'अथ पुनः' इत्यतः प्रागुचिता ॥

"यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद ।
आशेकुरित्सधमादंसखायो नक्षन्त यज्ञं क इदं विवोचत्॥"

यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति सत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यतीति ॥ १ ॥ ३० ॥

"यत्रा वदेते०–( ऋ० सं० ८, ४, १३, २ )" ॥ "यत्र" यस्मिन् कर्मणि "वि वदेते" वेरुपसर्गस्यापकृष्य यत्र क्रियापदेन सामर्थ्यं तत्रानयनम् । कौ पुनस्तौ विवदेते ? "अवरः परश्च" "दैव्यौ होतारौ"–"अयं च अग्निः" पार्थिवः "असौ च मध्यमः" वायुः ॥ कथं विवदेते ? "यज्ञन्योः" यज्ञनेत्र्योः । उभावप्यावां यज्ञस्य नेतारौ, तत् कतरः "नौ" आवयोः "यज्ञे" "भूयः" बहु "वेद" इति । तत्र य एते "सखायः" "समानख्याना ऋत्विजः" यज्ञे विनियुक्ताः "नक्षन्त" समश्नुवते "यज्ञम्" त एवं "सधमादम्" सहमादम् "सहमदनम्" सहर्षम् उपश्रुत्य अनयोः "आशेकुः" "आशक्नुवन्ति" ॥ अथाशक्नुवन्तश्च किं ब्रूयुः ? "क इदं विवोचत्" "को न इदं विवक्ष्यतीति" कतर एतयोर्यज्ञे भूयो वेद ? इति, उभावप्येतौ यज्ञे भूयोविदावित्यभिप्रायः ॥ ७ । ३० । १ ।

तस्योत्तरा भूयसे निर्वचनाय–॥

यथाग्निप्रधानमेतत् सूक्तं होतृकर्मणोऽग्निसम्बद्धत्वात् विशेषलिङ्गेन. न सूर्यप्रधानम्, "तस्योत्तरा" तथा इयमपरा ऋक् "भूयसे निर्वचनाय" बहुतराय निरुच्य वचनाय ॥ पूर्वस्योः[१] को विशेषः ? अस्यां हि, विभज्य वायोः केवलोऽग्निरेव स्तूयते, पूर्वस्यामुभावपि भूयोविदावित्युक्तम् ॥ *

"यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३वसते मातरिश्वः ।
तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो निषीदन् ॥"

यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य सम्प्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति

१ 'पूर्वयोः' ॥ * अत्र त्रिंशखण्डसमाप्तिर्दृश्यते, सा 'यथाग्निप्रधानमेतत्सूक्तम्' इत्यतः प्राग्युचिता ॥

# यज्ञमागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् ॥ १ ॥

"यावन्मात्रमुषसो न प्रतीकम् ( ऋ० सं० ८, ४, १३, ४ )"—इति । अत्र न–कारः सम्प्रत्यर्थ एव, उपमानासम्भवात् । लोकेऽपि च–अस्ति उपमानस्य सम्प्रत्यर्थे प्रयोगः—'इहेव निधेहीति यथा' इह सम्प्रति निधेहीत्यर्थः । मातरिश्वना कश्चित् पृष्टः—दैव्यस्य होतुः अग्नेः यद् विज्ञानं तत् किमयं ब्राह्मणो मनुष्यहोता यज्ञमुपायन् बिभर्त्ति ?—इति ॥ स तं प्रत्याह—हे "मातरिश्वः !" "यावन्मात्रम्" "उषसः" "प्रतीकं" "प्रत्यक्तम्" प्रत्यञ्चितं प्रतिगतं प्रकाशस्य, "एताः" "सुपर्ण्यः" "सुपतनाः" "रात्रयः" आत्मनि अनुप्रविष्टं "वसते" छादयन्ति, आभिभूय तमो वर्त्तन्ते स्वयमेव । अथवा वसतिर्दर्शनार्थः । यावन्मात्रमुषसो रात्रिषु दृश्यन्ते, "तावत्" इत्येवमपि स्वल्पमेव । एतावन्मात्रमयं स्वल्पविज्ञान उपायन् "यज्ञं" "ब्राह्मणः" होतृत्वे वृतो होतृषदने "निषीदन्" "दधाति" धारयति । दैव्यस्याग्नेः परस्य भूयोविदः, अवरः अन्योऽल्पविदिति अनुकरोत्यल्पमिति, मानुषो हि अग्न्यनुग्रहादेव अयमल्पविज्ञानोऽपि होता होत्रं करोति इति पार्थिवोऽग्निर्विशेषतोऽभिष्टूयते[1] ॥

तदेतदेवं कृत्वा सूक्तमग्निप्रधानकर्मत्वात् वैश्वानरीयम् । येऽत्र वैश्वानरशब्दाः, ते पार्थिवाग्निं भजन्ते विशेषणत्वेन ॥ ७ । ३१ । १ ॥

# होतृजपस्त्वनग्निर्वैश्वानरीयो भवति देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणेतीममेवाग्निं सवितारमाह सर्वस्य प्रसवितारं मध्यमं वोत्तमं वा पितरम् ॥ २ ॥

"होतृजपस्त्वनग्निर्वैश्वानरीयो भवति" । एवमपि तु सति अयम् अनग्निः वैश्वानरः होतृजपः । "देव सवितरेतं त्वा वृणतेऽग्निं होत्राय स ह पित्रा वैश्वानरेण–इति" । एवमेतं जपं वर्णयन्ति । "इमम् एव अग्निं सवितारम् आह" पार्थिवम्, "सर्वस्य प्रसवितारम्" यज्ञद्वारेण "मध्यमं वा उत्तमं वा" "पितरम्" अस्य वैश्वानरमाह । सह तेन वैश्वानरेण पित्रा । एवं द्वौ पितापुत्राविति व्यपदेशात् पार्थिवादन्यो वैश्वानरः । स च पुनर्मध्यमो वोत्तमो वेत्येवमेवमयमनग्निर्वैश्वानरत्वेऽपि सति होतृजपः ॥ ७ । ३१ । २ ॥

# यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वानरः ३ ॥

अत्रापि "यस्तु सूक्तं भजते, यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्वैश्वानरः" । किं कारणम् ? अनग्निर्वैश्वानरत्वेऽपि सति होतृजपस्यायमेव पार्थिवोऽग्निर्वैश्वानर इत्यव-

---

१ 'स्तव्' ॥

म्रियते याज्ञिकपक्षे । आचार्यपक्षे च अयमेवैको मन्त्रो व्यपदेशहेतुरग्नेर्वैश्वानरत्वं ब्रवीति । सम्प्रति मन्त्रेणाग्नेर्व्यपदेशवता अग्नेर्वैश्वानरत्ववाचिना "आ दूतो अग्निमभरद् विवस्वतो वैश्वानरं मातरिश्वा परावतः" इत्यनेन शाकपूणिपक्षेण स्वेनाव्यभिचारिणा समीभवति । तद्धितव्यपदेशादयस्तु पार्थिवस्य वैश्वानरत्वसाधका विशेषहेतवः षडव्यभिचारिणोऽतिरिच्यन्ते ॥

✓ एतस्माद् विशेषहेतुबाहुल्यात् अयमेव पार्थिवोऽग्निर्वैश्वानरः सूक्तभाक् हविर्भाक् च ॥ ७ । ३१ । ३ ॥

## निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेतेभजेते४॥ ३१॥

"निपातमेवैते उत्तरे ज्योतिषी" वैश्वानर इति "एतेन नामधेयेन भजेते भजेते" इति द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

तदेवमेतस्मिन् वैश्वानरपदविचारप्रसङ्गे हविष्पान्तीयं सूक्तमुपक्षिप्य सूर्यो वैश्वानरः, अग्निर्वैश्वानरः इति एकमेवेदं ज्योतिः त्रिधा वर्त्तते इति मन्त्रस्य भावोपप्रदर्शनार्थमुपवर्णितम् ॥

ईदृशेषु शब्दार्थन्यायसङ्कटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते, वयं त्वेतावदत्रावबुध्यामह इति ॥ ७ । ३१ । ४ ॥ *

अथातोदैवतमिन्द्रोदिवःपरोक्षकृतास्तद्येनेतिस्रएवदेवताथाकारचिन्तनमपुरुषविधास्तिस्रएवदेवताइत्युक्तंपूषात्वेतोऽथैतानीन्द्रभक्तीन्यथैतान्यादित्यभक्तीनिमन्त्रामननाज्जगतीगततमभथातोनुक्रमिष्यामोऽग्निमीळेऽग्निःपूर्वेभिरभिप्रवन्तेन्द्रंमित्रंजातवेदाःकस्मात्प्रनूनंजातवेदसंवैश्वानरःकस्माद्वैश्वानरस्यप्रनूमहित्वंकृष्णंनियानंहविष्पान्तमपामुपस्थेमूर्द्धाभुवस्तोमेनयदेदेनयत्रावदतेयावन्मात्रमेकत्रिंशत् ॥

## इति निरुक्ते [ उत्तरषट्के ] सप्तमो [ प्रथमो ]ऽध्यायः॥ ७॥ [१]

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ सप्तमो ( द्वादशो )ऽध्यायः समाप्तः ॥ ७ ॥

---

* अत्रैकत्रिंशखण्डसमाप्तिर्दृश्यते । "इति निरुक्तवृत्तौ सप्तमा (द्वादशा)ऽध्यायस्य सप्तमः पादः ७ ॥" इति चोपलभ्यते ॥

( अथ त्रयोदश पदानि )

द्रविणोदाः ॥ १ ॥

# अथाऽष्टमोऽध्यायः ८.

द्रविणोदाः कस्माद्? धनं द्रविणमुच्यते—यदेनदभिद्रवन्ति । बलं वा द्रविणं-यदेनेनाभिद्रवन्ति । तस्य दाता द्रविणोदाः (१)

'द्रविणोदाः'—इत्येतद्देवतापदं निर्वाच्यम्, तदर्थमुपोद्घातः—"द्रविणोदाः कस्मात्?" इति । तत्र पूर्वपदमेव तावत् प्रथमं विगृह्य निराह—"धनं द्रविणमुच्यते" इति । तत् कस्मात्? "यदेनदभिद्रवन्ति" । कर्मकारकम् । यस्मादेतत् आभिमुख्येन तदर्थिनोऽवश्यं द्रवन्ति ॥ "बलं वा द्रविणम्" । करणकारके । "यदेनेनाभिद्रवन्ति" यस्मादनेन संयुक्ताः सन्तः परानभिद्रवन्ति । "तस्य" धनस्य बलस्य वा "दाता" यो भवति, सः "द्रविणोदाः" ॥ (८।१।१) ॥

तस्यैषा भवति--॥

"तस्य" प्राधान्यस्तुतियुक्ता "एषा" ऋक् "भवति" [ यां दृष्ट्वा देवतापदसमाम्नाये एष समाम्नातः ]—॥ *

"द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।
यज्ञेषु देवमीळते ॥"

द्रविणोदा यस्तम्[2] । द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्तस्मात् पिबन्त्विति[3] वा । यज्ञेषु देवमीळते ।

याचन्ति स्तुवन्ति वर्द्धयन्ति पूजयन्तीति वा ॥ १ ॥ १ ॥

---

१ 'यत्र' * अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा 'तस्य प्राधान्यस्तुतियुक्ता' इत्यतः प्राक्, अग्रे 'तस्को द्रविणोदाः' इत्यतः प्रागेव बोधिता द्रष्टव्या॥ २ 'यस्त्वम्' इति पाठः सर्वपुस्तकेषु ॥ ३ 'पिबतीति वा' ॥

"द्रविणोदा द्रविणसः०–( ऋ० सं १, १, २९, १ )"–इति । मेधातिथेरार्षम् । 'द्रविणोदाः'–इत्येतस्य प्रथमैकवचनान्तस्य कर्तृत्वेन श्रुतस्य क्रियापदेन बहुवचनान्तेन 'ईळते'–इत्यनेन वचनभेदादसामर्थ्यमपेक्ष्य स्तोतृत्वे चासम्भवं द्रविणोदसो देवतात्वात् स्तुत्यत्वेन सामर्थ्यमुन्नीय द्रविणोदसो यद्वृत्तमध्याहृत्य द्रविणोदसि अर्थपताव-भिसम्बन्धात् स्तुतेरेकवाक्यतायां सामर्थ्यमुन्निनीषन् स्तुत्ये द्रविणोदसि द्रविणोदः-शब्दं कर्मत्वेन नमयाञ्चकार–"द्रविणोदा यः" देवः, "तं" द्रविणोदसम्–इति ॥

इदानीं 'द्रविणसः'–इत्यस्य 'ग्रावहस्तासः'–इत्यनेन ऋत्विग्विप्रयेणासन्दिग्धेन प्रथमाबहुवचनेन स्तुतिकर्तृत्वेन विशेषणविशेष्यभावेन सामानाधिकरण्ये सामर्थ्यमुन्नीय तथार्थोपपत्तिसामर्थ्यादेकवाक्यतयाभिसम्बध्नाति–

यं द्रविणोदसं 'देवम्' 'अध्वरे'यज्ञे,अग्निष्टोमादौ 'यज्ञेषु'यजतिषु हविःसम्प्रदानेषु सवनेषु वा यागस्थानेषु द्रविणसः ऋत्विजः, ते हि द्रविणं लप्स्यामह इति सीदन्ति कर्मणि, अथ वा "द्रविणसानिनः" धनस्य गवादेर्हविषो वा देवतार्थस्य सम्भक्तारः, "ग्रावहस्तासः"–इत्यभिर्पेवाभिप्रायम्। यमेते द्रविणसो ग्रावहस्तास ऋत्विजः अध्वरेषु यज्ञेषु द्रविणोदसं देवम् "ईळते" "याचन्ति स्तुवन्ति वर्द्धयन्ति पूजयन्तीति वा" स द्रविणोदा देवोऽस्मभ्यं द्रविणानि ददात्विति । एतदाशास्महे । आशिषमध्याहृत्य समाप्यते, यमीडते स इति । यत्तदोः परस्परापेक्षित्वात् । अथवैवमन्यथा निराकाङ्क्षतया परिसमाप्यते–"द्रविणसः तस्मात् पिबत्विति" । द्रविणोदा इत्यतः प्रथमैकवचनादविपरिणतादेव द्रविणस इत्यस्य पञ्चम्येकवचनत्वेन सोमाभिधानत्वे सामर्थ्यमुन्नीय पिबत्वित्याख्यातमध्याहृत्यात्रैव समापयाञ्चकार भाष्यकारः । एवमप्यस्ति सामर्थ्यमित्युपप्रदर्शनार्थम् । तत् कथम् ? इति । यं देवं द्रविणोदसमध्वरेषु यज्ञेषु ग्रावहस्ता ऋत्विज ईळते,स देवः द्रविणोदाः,द्रविणसोऽस्मात् सोमात् द्रविणसंभक्तुरादाय स्वमंशं पिबत्वित्येतदाशास्महे ॥ ८ । १ । १ ॥

**तत् को द्रविणोदा इन्द्र इति क्रौष्टुकिः । स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिः "ओजसो जातमुत मन्य एनम्" इति चाह ॥ १ ॥**

"तत्को द्रविणोदाः ?"–इत्येवमादिविचारः । तत्र तावत् "इन्द्र इति क्रौष्टुकिः" एवमाचार्यो मन्यते । केन हेतुना ? "सः बलधनयोर्दातृतमः" अतिशयेन दाता

१ 'त्यभिषवनाभिपा' ॥ २ 'पेक्षत्वा' ॥ ३ 'माप्येत' ॥

इति । "तस्य च सर्वा बलकृतिः" अभिधानविग्रहे हि बलं द्रविणमित्युक्तम्, बलकृतिश्चेन्द्रस्य सर्वा, तस्मादिन्द्रः । "ओजसो जातमुत मन्य एनम्—इति चाह" मन्त्रदृक् । अधिपतित्वकृत एवास्य बलेनाभिसम्बन्धः । तस्माद्युक्तं यत्तस्य दाता स्यात् । कथम् ? इति । यतो मन्त्र एवं निर्वर्ण्यते—

"अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।

मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥ (ऋ० सं० ८, ३, ४, ५)"—इति ॥

'यद् वदन्ति' यदा वदन्ति 'अश्वात्' अशनवतो मेघात् अयम् 'इन्द्रः' 'इयाय' आगच्छति 'इति' । तत्र सन्निधानमस्य प्रतीत्य तत्तावदहं न तथा मन्ये । कथं तर्हि ? "ओजसः जातम्" बलराशेः कुतश्चिदतिमहतो जातम् । अहम् "एनम्" "मन्ये" यथायमतिबलवान् लक्ष्यते । अपि वा 'मन्योः' क्रोधात् दीप्तेर्वा अयम् 'इयाय' ततो 'हर्म्येषु' उदकाहरणाधिकारयुक्तेषु मेघवधकर्मसु 'तस्थौ' तिष्ठति । अथवा—किं जानीमः, कुतोऽप्ययमैश्वर्याज्जातः ? इत्यतो ब्रूमः—'यतः' अयम् 'इन्द्रः' 'प्रजज्ञे' इति । 'इन्द्रः' एव 'अस्य' स्वस्य जन्मनः तत्त्वं 'वेद' न कोऽप्यन्यो ज्ञास्यतीत्यभिप्रायः ॥ ८ । २ । १ ॥

**अथाप्यग्निं द्राविणोदसमाहैष पुनरेतस्माज्जायते । "यो अश्मनोरन्तरग्निं जजान" इत्यपि निगमो भवति ॥ २ ॥**

"अथापि" अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे—"अग्निं द्राविणोदसमाह" मन्त्रदृक् । स मन्त्रो मृग्यः । केचित्तु "द्रविणोदाः पिबतु द्राविणोदसः—( ऋ० सं० २, ८, १, ४, )" इत्येनमेव मन्यन्ते । यस्यापत्यं द्राविणोदसोऽग्निः, स एव द्रविणोदा इति ॥

कस्य च पुनरयमग्निरपत्यम् ? इत्यत आह—"एष पुनः" अग्निः, "एतस्मात् जायते" इन्द्रात् । कुत एतत् ? ऐन्द्रे हि निगमे श्रूयते—"यो अश्मनोन्तरग्निं जजान" इति ॥

"यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा वलस्य ।

यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥ ( ऋ० सं० २, ६, ७, ३ )"—इति ॥

---

१ 'एव' ॥ २ 'यथा' ॥

तृतीयेऽहनि दशरात्रस्य निष्केवल्ये विनियोगः ॥ गृत्समदो ब्रवीति । ऐन्द्रं रूपमास्थितोऽसुरैर्हन्यमानः किं मा हथ, नाहमिन्द्र इति । कस्तर्हि इन्द्रः ? 'यः' 'हत्वा' 'अहिम्' मेघम् 'अरिणात्' 'सप्त सिन्धून्' स्यन्दना आकाशनदीः "ऐला च इला च"—इत्येवमाद्याः, 'यः' च 'गाः' अपः 'उदाजत्' उदगमयत् 'अपधा' अपधानेन उद्घाटनेन 'बलस्य' मेघस्य शिराणां छिद्राणाम्, "यः" च "अश्मनोः" अशनवत्योः द्यावापृथिव्योः "अन्तः" मध्ये "अग्निं" "जजान" जनयति, 'यः' च 'समत्सु' संग्रामेषु शत्रूणां 'संवृक्' सञ्छेत्ता । 'जनासः' हे असुरजनाः ! 'सः' 'इन्द्रः' नाहमिन्द्र इति ॥ ८ । २ । २ ॥

**अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति ।**
**तेषां पुनः पात्रस्येन्द्रपानमिति भवति ॥ ३ ॥**

"अथापि" अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे । कतमः ? इति "ऋतुयाजेषु द्राविणोदसाः प्रवादाः भवन्ति" । ऋतवो यैर्मन्त्रैरिज्यन्ते, ते भवन्त्यृतुयाजाः, तेषु ऋतुयाजेषु द्राविणोदसाः द्रविणोदःशब्दयुक्ताः प्रवादा भवन्ति । ततः किम् ? "तेषाम्" ऋतुयाजानां यत् पात्रं येन ते हूयन्ते तस्य "इन्द्रपानमिति" मन्त्रे समाख्या "भवति" तद्यथा—

"अपा॒द्धोत्रा॒दु॒त पो॒त्रा॒दम॑त्तो॒त ने॒ष्ट्रा॒दजु॑षत॒ प्रयो॑ हि॒तम् ।
तु॒रीयं॒ पात्र॒मम॑ृक्त॒मम॑र्त्यं॒ द्रवि॒णोदाः॒ पिब॑तु द्रविणोदसः ॥ (ऋ० सं० २, ८, १, ४)"—इति ॥

तथा—

"होता यक्षद्देवं द्रविणोदसमपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्रविणसः स्वयमाधूयात् स्वयमभिगूर्यात् स्वयमभिगूर्तया होत्रयर्त्तुभिः सोमस्य पिबत्वच्छावाक यज"—इति ॥

होता यक्षद् देवं द्रविणोदामित्यच्छावाकस्य सम्प्रैषो मैत्रावरुणो ब्रवीति । अध्वर्युणा ऋतुभिः प्रेष्येऽतिप्रेषितः 'होता' 'यक्षत्' यजतु । कम् ? इति । 'देवं' 'द्रविणोदसम्' । स च पुनर्द्रविणोदा देवः पूर्वम् 'अपात्' पीतवान् सोमं 'होत्रात्' सम्प्रदानात् । 'अपात्' च 'पोत्रात्' सम्प्रदानात् । 'अपात्' च 'नेष्ट्रात्' सम्प्रदानात् । अथ पुनरिदं 'तुरीयं' चतुर्थं सम्प्रदानम्, 'अमृक्तम्' अशुद्धम्, अपूर्णमित्यर्थः । 'अमर्त्यं' यत् पीत्वा न म्रियते, अथवा अमनुष्ययोग्यम्,

१ "अंवा च दुला च" इत्येवमाद्याः ॥

अमृक्तं च अनुपमृदितमन्यया देवतया अपरिमुक्तम्, 'इन्द्रपानम्' इन्द्रस्य पातुं योग्यम् । तदेतत् 'द्रविणोदाः' 'देवः' इन्द्रः अस्माभिः, प्रत्तमादरेण 'स्वयमायूयात्' स्वयमामिश्रीयात्, 'स्वयमभिगूर्यात्' स्वयमभ्युद्गच्छेत् । ततः 'स्वयं' 'पिबतु' 'ऋतुभिः' ऋतुना कालेन सह 'सोमस्य' 'अभिगूर्त्तया' अभिमतया 'होत्रया' स्तुत्या प्रदीयमानं स्वमंशम् । हे 'अच्छावाक !' त्वमप्येतदेवं ज्ञात्वा 'यज' ॥

एवमेतस्मिन् इन्द्रस्य द्रविणोदःप्रवादवति प्रैषे पात्रस्य 'इन्द्रपानम्'—इति समाख्या, तस्मादिन्द्रस्तेन पिबतीति गम्यते । एवं चेत् प्राप्तमिन्द्रो द्रविणोदा इति ॥ ८ । २ । ३ ॥

## अथाप्येनं सोमपानेन स्तौति ॥ ४ ॥

"अथापि" अपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे, यस्मात् "एनं" "सोमपानेन स्तौति" । ऋतुयाजेष्वेव ॥

"मन्दस्वहोत्रादनुजोषमन्धसोऽध्वर्यवः सपूर्णांवेष्ट्यासिचम् ।
तस्मा एतं भरत तद्वशोददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ( ऋ० सं० २, ८, १, १ )"—इति ॥

न ह्यन्य इन्द्रात् सोमपानेन स्तूयते, तदर्थत्वात् सोमसंस्कारस्य । भवति हि सोमाप्यायने च तत्संस्कारप्रधानो मन्त्रः । तद्यथा—"अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ( य० वा० सं० ५, ७ )"—इति । तस्माद् यत्र यत्र सोमपानस्तुतिः, तत्रतत्रेन्द्र इति स्पष्टो न्यायः । प्रसिद्धतरं ह्येतत् । यदर्थमेव हविः संस्क्रियते तस्मा एव प्रदीयते ॥ ८ । २ । ४ ॥

## अथाप्याह द्रविणोदाः पिबतु द्राविणोदस इति ॥ ५ ॥

"अथाप्याह—'द्रविणोदाः पिबतु द्राविणोदसः'—इति" यस्य द्रविणोदसः अग्निः अपत्यम्, सः द्रविणोदाः इन्द्रः पिबतु इति । "अपाद्धोत्रात्"—इति । तस्यैवाच्छावाकप्रैषस्यैषा याज्या । 'अमत्त' हृष्टवान् । 'उत' अपि । 'अजुषत' अप्रीयत । 'प्रयः' अन्नम्; आत्मने हितं पथ्यम् । शेषस्तेनैव व्याख्यातः ॥

समाप्ताः पूर्वपक्षहेतवः क्रौष्टुक्यभिमताः ॥ ८ । २ । ५ ॥

## अयमेवाग्निर्द्रविणोदा इति शाकपूणिः । आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति । "देवा अग्निं धारयन्द्रविणोदाम्" इत्यपि निगमो भवति ॥ ६ ॥

किमस्तु एतैर्हेतुभिरिन्द्रो द्रविणोदा इति ? न, इत्युच्यते—"अयमेवाग्निर्द्रविणोदाः" "इति" "शाकपूणिः" मन्यते। अयमेव यस्य पृथिवीस्थाने समाम्नानम्। अपि च— यदि मध्यमोऽभविष्यत्, ततो यान्येतानि माध्यमिकानि ऐन्द्राणि वा पार्जन्यानि वा बार्हस्पत्यानि वा, तेषु द्राविणोदसाः प्रवादा अभविष्यन्, मध्यमस्य कर्मणा चैनं रसानुप्रदानादिना अस्तोष्यन्, न चैतदुभयमस्ति। किं तर्हि ? "आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादाः भवन्ति"। हि—शब्दो हेत्वर्थः, यस्मादाग्नेयेष्वेव सूक्तेषु द्राविणोदसाः प्रवादाः विशेषणत्वेनाग्नेरेव भवन्ति, अग्निकर्मणा चैनं सूक्तेषु स्तौति नेन्द्रकर्मणा तस्मादयमेवाग्निर्द्रविणोदाः ॥

कथमित्यत उपप्रदर्शयति—"दे॒वा अ॒ग्निं धा॑रयन् द्रविणो॒दाम्"—"इत्यपि निगमो भवति"। अप्ययमप्यन्ये बहव इत्यपिशब्दः ॥

"स प्र॒त्नथा॒ सह॑सा॒ जाय॑मानः स॒द्यः काव्या॑नि॒ बळ॑धत्त॒ विश्वा॑।
आप॑श्च मि॒त्रं धि॒षणा॑ च साधन्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ( ऋ० सं० १, ७, ३, १ )"—इति ॥

कुत्सस्येयमार्षम्। पितृयज्ञे स्विष्टकृत्पुरोऽनुवाक्या। यः अग्निः 'अपां' 'मित्रं' तदुत्पत्तियोगात्। 'धिषणा' धिषणाः, याश्च वाचः 'साधन्' साधयिता तदधिदेवतायोगात्। यं च "देवाः" "अग्निं" "धारयन्" धृतवन्तः पूर्वे, "द्रविणोदां" द्रविणानां हविषां देवेभ्यो दातारं वोढारम्। 'सः' अग्निः 'प्रत्नथा'। 'था' इत्युपमाने। पुराण इव। 'सहसा' बलेन 'जायमानः' जन्यमानः, 'सद्यः' जातमात्रः सन् 'काव्यानि' पितृदेवतानि हवींषि 'बळधत्त'। 'बट्'—इति सत्यनाम। यथा अवितथेन न्यायेन धारयितव्यानि, दापयितव्यानि वा पितृभ्यः। तथैव सद्योजातोऽपि धारयति वा ददाति वा 'विश्वा' विश्वानि सर्वाणि। एवमेतस्मिन्नधिकारे यम् 'अधत्त' धृतवन्तो देवाः, सोऽस्माकमिदं नाम करोत्विति आशिषैकवाक्यता। एवमयमेवाग्निः द्रविणोदा इति स्थितः पक्षः ॥ ८। २। ६ ॥

## यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं विद्यते ॥ ७ ॥

स पुनरयं परपक्षहेतुष्वनिराकृतेषु अनवस्थित एव, अतस्तन्निराकरणाय "यथो एतत्"—इत्येवमाद्युच्यते। यत् पुनरेतदुक्तम् ( ८। २। १ )—"स बलधनयोर्दातृतमः" इति। अकारणमेतत् इन्द्रस्य द्रविणोदस्त्वे। कस्मात् ? यस्मात् "सर्वासु देवतास्वैश्वर्यं विद्यते" अत ऐश्वर्यात् सर्वा एव ताबलधनयोर्दात्र्यो भवन्ति। तस्मादवैशेषिकमेतदिन्द्रस्य कारणं द्रविणोदस्त्वे ॥ ८। २। ७ ॥

यथो एतदोजसो जातमुतमन्य एनमिति चाहेत्ययमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनमाह सहसस्पुत्रं सहसः सूनुं सहसो यहुम् ॥ ८ ॥

"यथो एतत्" यदप्युक्तम्, ( ८ । २ । १ ) बलकृतिमधिकृत्य,—"ओजसो जातमुतमन्य एनम्"—इति । तदप्यवैशेषिकमिन्द्रस्य । कस्मात् ? यस्मात् "अयमप्यग्निरोजसा बलेन मथ्यमानो जायते, तस्मादेनम् ( अग्निम् ) आह" मन्त्रदृक् । किमाह ? "सहसस्पुत्रम्" "सहसः सूनुम्" "सहसो यहुम्" ॥

द्रुन्नः सुर्पिरासुतिरित्येवमादयः शेषाः ॥

"द्रुन्नः सुर्पिरासुतिः प्रत्नो होता वरेण्यः ।
सहसस्पुत्रो अद्भुतः ॥ ( ऋ० सं० २, ५, २८, ६ )"—इति ॥

गृत्समदस्यार्षम् । गायत्री । आग्नेयी । अग्नौ विनियोगः समिदाधाने ॥ द्रु—अन्नः 'द्रुन्नः' द्रुमान्नः, 'सर्पिरासुतिः' च सर्पिरासवो यस्य, सर्पिर्वोदकमासूते य आहुतिद्वारेण । 'प्रत्नः' च पुराणः, 'होता' 'वरेण्यः' वरणियः 'सहसः' बलस्य यः 'पुत्रः' यः 'अद्भुतः' महान् विचित्रो वा । स इदं नाम अस्माकं करोत्वित्याशीर्गतमाख्यातमध्याहृत्य समाप्यते ॥

"त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत ।
ऋतावा यज्ञियो भुवः ॥ ( ऋ० सं० ६, ५, २४, ३ )"—इति ॥

विरूपस्यार्षम् । आग्नेयी । गायत्री । सामिधेनीष्वाग्नेयेऽन्नाद्यकामकर्मणि याज्या । हे 'यविष्ठ्य' युवतम ! 'सहसः' बलस्य 'सूनो' पुत्र ! 'यत्' यस्मात् 'आहुत' अभिहुत, 'ऋतावा' सत्यवान्, उदकवान् वा, यज्ञवान् वा, 'यज्ञियः' यज्ञसम्पादी 'भुवः' भवसि । तस्मात् त्वां वयमपि जुहुमः, स त्वमस्माकमप्येवं भवेत्येतदाशास्महे ॥

"अग्ने वाजस्य गोमतः ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महिश्रवः (ऋ० सं० १, १, ५, २७, ४ )"—इति ॥

उष्णिक् । गोतमस्यार्षम् । आग्नेयी । इष्टकोपधाने अग्नौ विनियोगः ॥ हे भगवन् ! 'अग्ने !' 'सहसो यहो' बलस्य पुत्र ! 'जातवेदः !' यदेतद् वाजः अन्नम्, गोमत् गोभिः तद्वत्, त्वम् अस्य 'ईशानः' ईश्वरः । अतो ब्रूमः—'अस्मे' अस्मासु 'धेहि' स्थापय । अनयापि कुरुष्वैतत् 'महिश्रवः' महदेतत् श्रवो गवादि । इत्येतदाशास्महे ॥ ८ । २ । ८ ॥

---

१ 'धोरस्यार्षम्' ॥ 'धानेऽप्यग्नौ' ॥ ३ 'तस्य' ॥

**यथो एतदग्निं द्राविणोदसमाहेत्यृत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति ।**
**"ऋषीणां पुत्रो अधिराज एषः" इत्यपि निगमो भवति॥९॥**

"यथो एतत्" यत् पुनरेतदुक्तम्, (८।२।२)–"अग्निं द्राविणोदसमाह" इति। नेदमनेनाभिप्रायेण इन्द्रादयं द्रविणोदसो जायते इति। किं तर्हि? "ऋत्विजः" "अत्र" एतस्मिन् "द्रविणोदसः" अग्नेः "उच्यन्ते"। ते पुनः कस्मात्! "हविषः दातारः" देवानां हि हविर्द्रविणम्, तदेते ददत इति द्रविणोदसः एते। ततः किम्? "ते च एनं जनयन्ति"। "निगमोऽपि" हि "भवति" ऋत्विजामयमग्निः पुत्र इति। तद्यथा–"ऋषीणां पुत्रो अधिराज एषः"–इति॥

"अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः।
तस्मै विधेम हविषा घृतेन मा देवानां यूयुयाम भागधेयम्॥ (य० वा० सं० ५, ४)"–इति॥

अनेन निर्मथ्योऽग्निरभिहूयते। यः 'एषः' 'अधिराजः' अधिकदीप्तिः, 'अग्नौ' आहवनीये 'अग्निः' निर्मथ्यः 'प्रविष्टः' 'चरति' ज्वलन्, "ऋषीणाम्" ऋत्विजां "पुत्रः" तैर्मथितः, 'तस्मै विधेम' तं परिचरामहे वयम्, अनेन आज्येन 'हविषा'। किम्? इति–'मा देवानां यूयुयाम भागधेयम्' इति। प्राप्तमेतदभिहोमाख्यं 'भागधेयं' स्रुवेणाभिजुहोतीति। शास्त्रतोऽस्य अग्न्याख्यस्य देवस्य 'मा यूयुयाम' मा लोलुपामेत्यतो विधेम। अथवा–अस्मै अग्नये हविर्दद्मः। विधतिर्दानकर्मापि भवति॥ ८।२।९॥

**यथो एतत् तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं तद्भवति॥ यथा वायव्यानीति सर्वेषां सोमपात्राणाम्॥ १०॥**

"यथो एतत्" यत् पुनरेतदुक्तम् (८।२।३)–"ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति, तेषां पुनः पात्रस्येन्द्रपानमिति (समाख्या) भवति"–इति। एतदप्यकारणम्। कस्मात्? यस्मात् "भक्तिमात्रं भवति तत्" गुणतः संवादः, दुर्बला हि समाख्या, यतः असामर्थ्यात् कुतश्चित् गुणानुवादः,–"यथा वायव्यानीति" "सर्वेषां सोमपात्राणाम्" नानादेवतानामपि सताम्॥ ८।२।१०॥

## यथो एतत् सोमपानेनैनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते- "सोमं पिब मन्दसानो गणश्रिभिः" इत्यपि निगमो भवति ॥ ११ ॥

"यथो एतत्" (८।२।४)–"सोमपानेन" "एनं" "स्तौतीति"। इदमप्यकारणम्। कस्मात्? यस्मात् "अस्मिन्नप्येतदुपपद्यते" सोमपानम्। कथम्? इति–"सोमं पिब मन्दसानो गणश्रिभिः" इति ॥

"अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिव मन्दसानो गणश्रिभिः।
पावकेभिर्विश्वमिन्वभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः॥ (ऋ० सं० ४, ३, २५, ८)"–इति ॥

हे भगवन्! 'अग्ने!' 'वैश्वानर!' त्वमेभिः 'मरुद्भिः' मितरोचिभिः अर्चिर्भिः, 'शुभयद्भिः' भवन्तम् 'ऋक्वभिः' रसहर्तृभिः, "गणश्रिभिः" गणशो भवन्तमाश्रयद्भिः, 'पावकेभिः' पावयितृभिः, 'विश्वम् इन्वेभिः' सर्वमिदमागच्छद्भिः,यत् दग्धुम् 'आयुभिः' अयनशीलैः, 'प्रदिवा' चिरन्तनैः, 'केतुना' प्रज्ञया कर्मणा वा 'सजूः' संयुक्तः, 'मन्दसानः' मोदमानः 'सोमं' 'पिब'। इत्येतदाशास्महे। अर्चिषोऽत्र मरुतः, अन्यथा ह्यनुदाहरणमेवैष मन्त्रोऽग्नेः सोमपाने स्यात्, इतरैर्मरुद्भिः सम्बन्धात् ऋत्विजो वा मरुतः॥ ८।२।११॥

## यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इत्यस्यैव तद्भवति ॥ १२ ॥

"यथो एतत्–'द्रविणोदाः पिबतु द्राविणोदसः'–इति, अस्यैव तत् भवति"। यत् पुनरेतदुक्तम् (८।२।६) ऋतुयाजेषु 'द्रविणोदाः पिबतु द्राविणोदसः'–इति, 'अस्य एव' अग्नेः 'तत् भवति' अग्नेरपि सोमभागित्वात् ऋतुयाजेषु। भवति हि तेषु "वनस्पते०–द्रविणोदः पिब ऋतुभिः (ऋ० सं० २, ८, १, ३)"–इति ॥ वनस्पतिशब्दसामानाधिकरण्यात् सोमपानार्थे सम्बोधने द्रविणोदसो विशेषणविशेष्यभावसामर्थ्यात् नान्यो वनस्पतेर्द्रविणोदाः। वनस्पतिश्च पुनरसंशयमग्निः, "वह देवत्रा दिधिषो हवींषि"–इति। हविर्वहनकर्मसंयोगात्, स्विष्टकृद्विकारश्रुतेश्च वनस्पतेः तस्मादग्निर्द्रविणोदा नेन्द्रः॥

यत् पुनरेतदुक्तम् ( ८ । २ । ४ )—इन्द्रार्थं सोमः संस्क्रियते, तस्मादिन्द्र एवास्य केवलः पाता, नान्य इति । नैतदेवम्, सोमो ह्यन्यस्मै देवतायै मीयते, अन्यस्मै संस्क्रियते, अन्याभ्यश्च गृह्यते, हूयते च । तद्यथा "अ॒भि त्यं दे॒वम्"—इति सावित्र्याऽत्यष्ट्या-मीयते, "अं॒शुरं॑शुष्टे"—इति इन्द्राय संस्क्रियते, पुनरपि च मीयते "इन्द्रायाभिमा-तिघ्ने"—इत्येवमादिभिः । नानादेवताभ्यो गृह्यते च मित्रावरुणाद्याभ्यः। तथा च हूयते । तदेवं विधिवशात् विचित्रा सोमतन्त्रगतिः । तत्रैवं सत्यशक्यं वक्तुं यत्र यत्र सोमः, तत्र तत्रेन्द्रः पाता इति । सम्भुक्ते[3] चाग्निरिन्द्रेण सह प्रत्यक्षमैन्द्राग्ने ग्रहे "इन्द्रा॑ग्नी॒ आग॑तम्"—इत्यत्र । भवति चाग्न्यर्थमपि पृथक् ग्रहणं यजुषा सोमस्य "अग्नये त्वा रायस्पोषाय त्वा"—इति ॥ तस्मादग्निरपि सोमस्य पाता स्यात् ॥ ८ । २ । १२ ॥ *

"मेद्य॑न्तु ते॒ वह्न॑यो॒ येभि॒रीय॒सेऽरि॑षण्यन्वीळयस्वा वनस्पते ।
आ॒यूया॑ धृष्णो अभि॒गूर्या॒ त्वं ने॒ष्ट्रात्सोमं॑ द्रविणोदः॒ पिब॑ ऋ॒तुभिः॑ ॥"

मेद्यन्तु ते वह्नयो वोढारो यैर्यास्यरिष्यन् दृढीभवायूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्याद्धिष्ण्यो धिषण्यो धिषणाभवः धिषणा वाग्धिषेर्दधात्यर्थे । धीसादिनीति वा । धीसानिनीति वा ॥

वनस्पत इत्येनमाहैष हि वनानां पाता वा पालयिता वा । वनं वनोतेः । पिबर्तुभिः कालैः ॥ १ ॥ ३ ॥

यथा इह ऋतुयाजेषु[4]—"मेद्य॑न्तु ते॒ वह्न॑यः ( ऋ० सं० २, ८, १, ३ )"—इति ॥ गृत्समदस्यार्षम् । जगती । ऋतव्या ॥ "ञिमिदा स्नेहने ( दि० प० १३७ )" तस्य लोटि मेद्यन्तु इति भवति । हे भगवन् ! "वनस्पते !" "द्रविणोदः" "मेद्यन्तु" स्निह्यन्तु एते "ते" तव "वह्नयः" "वोढारः" अश्वाः "येभिः ईयसे" यैर्नित्यं गच्छसि । "अरिषण्यन्" अहिंस्यमानः केनाचिदपि । स त्वमेभिरश्वैरागत्य अस्मद्यज्ञं "वीळयस्व"

---

१ 'नैनदे' ॥ २ 'चाप्यायते' ॥ ३ 'संयुक्ते' ॥ * अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, परंतु तृतीयखण्डस्यापि द्वितीयखण्ड एव प्रवेशो न्याय्यः ॥ ४ 'ऋतुयागेषु' ॥

दृढमात्मानं कुरुष्व, सोममस्मत्प्रत्तं पातुम् । कथं चैनं पिब ? "आयूय" आमिश्य मिश्रीकृत्याङ्गुल्या, स हि पानपातॄणां स्वभावो यदङ्गुल्या मन्थनम् । हे "धृष्णो" शत्रूणां धर्षयितः ! "अभिगूर्य" अभ्युद्यम्य ततो "नेष्ट्रीयात्" "धिष्ण्यात्" "सोमं" नेष्ट्रा वषट्कृतं "पिब" "ऋतुभिः" कालैः सहेत्येतद् ब्रूमहे ॥

"धिष्ण्यः धिषण्यः" "धिषणा वाक्" तदर्थमसौ साद्यते, तस्य पश्चादुपविष्टो होता शंसति । धिषणा कस्मात् ? "धिषेः" धातोः "दधात्यर्थे" वर्त्तमानस्य, सा हि वाक्, अर्थं धारयति, शब्दार्थयोः सम्बन्धनित्यत्वात् । अथवा—"धीसादिनीति वा, धीसा-निनीति वा" । धीः प्रज्ञा, कर्म वा । सा एतस्यां सीदति, सनोति वा, सम्भजते इयं वा, तयोः सीदति सनोति वा, तन्निमित्तत्वात् । एवं धीशब्दात् पूर्वपदम्, सदेः सनो-तेर्वा उत्तरपदम्, धिषणाशब्दस्य विकल्पेन ॥

"वनस्पते इति एनम् आह" द्रविणोदसम्, तस्मादग्निरित्यभिप्रायः ॥

अथ कथमग्निर्वनस्पतिः ? "एष हि वनानां पाता वा पालयिता वा" । हि-शब्दो हेत्वर्थः । यस्मात् एषः वनानां वृक्षादीनाम् अन्तर्गतोऽपि, समर्थोऽपि दग्धुम्, न तानि दहति, तस्मात् अयं तेषां पाता रक्षिता, पालयिता वेति । केवलं धात्वन्य-त्वम्, स एवार्थः ॥

अथ "वनं" कस्मात् ? "वनोतेः" सम्भजनार्थस्य, तद्धि दार्वादिप्रयोजनार्थं सेव्यते । "पिब ऋतुभिः" । "कालैः" सह इति वाक्यशेषः ॥

एवमयमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक् च । निपातमेवैतत्,—मध्यमं ज्योतिः, उत्तमं च ज्योतिः, एतेन नामधेयेन भजेते इति ॥

एष देवतापदविचारन्यायः सर्वत्र देवतापदविचारार्थो यथासम्भवमुपादेयः प्रज्ञावि-वृद्धयै शिष्यस्येति ॥ ८ । ३ । १ ॥ *

## अथात आप्रियः ॥ १ ॥

"अथात आप्रियः" । आप्रियः इध्मादीनि आप्रीषु निर्वक्तव्यानि, तानि पुनरमूनि प्रैषिके आप्रीसूक्ते पाठक्रमनियमाद् विवक्षितक्रमाणीति देवतापदसमाम्नायेऽपि गृह्यमाण-

---

१ 'पश्चादुपरिष्टाद्धोता' ॥ २ 'सन्निमित्तत्वात्' ॥ ३ 'स तेषां' ॥ * अत्र तृतीय-खण्डसमाप्तिर्दृश्यते, परं तु द्वितीयखण्डसमाप्तिरेवात्र न्याय्या प्रतिभाति । तथापि स्वत-न्त्राणां नियोगानुयोगयोग्यत्वाभावादेव यथास्थितं रमणीयमेव मन्तव्यम् ॥ "इति ऋज्व-र्थायां निरुक्तवृत्तावष्टमा ( त्रयोदशा )ऽध्यायस्य प्रथमः पादः ॥ ८, १ ॥" इति तूपलभ्यते ।

-त्वात् पाठक्रमप्रयोजनस्य विवक्षितक्रमाण्येव। तत्रैतद् भवति । इमान्यग्निजातवेदो-वैश्वानरप्रभृतीनि किं विवक्षितक्रमाणि उत युगपदभिधानासम्भवात् अर्थत एषां क्रमः ? इति ॥

तत्र विवक्षितक्रमाणीति केचित् । कथम् ? इति। इह तावत् स्थानानि भूर्भुवः स्वरिति पाठानुपूर्व्यैव नियतानीति तत्स्थानिनामप्यग्न्यादीनां स एव क्रमो गृह्यते। स गृह्यमाणो न न्याय्य उत्स्रष्टुमिति। अपि च सति क्रमप्रयोजने 'अग्निः पृथिवीस्थानो यस्मात्, अतस्तं प्रथमं व्याख्यास्यामः' इति हेतुवचनमुपपद्यते। उत्तरत्र च, "तासाम् इध्मः प्रथमागामी भवति"—इति, "तेषामश्वः प्रथमागामी भवति"—इति, "तेषां रथः प्रथमागामी भवति"—इति। तत्र तत्र प्रथमागामी भवतीति वचनं यथाप्रधानमभिधानं पूर्वं समाम्नातमित्यस्य न्यायस्योपप्रदर्शनार्थमिति लक्ष्यते, इतरथा ह्यविवक्षितक्रमेषु प्रथमागामिवचनमकृत्वैव यत्किञ्चित् पदमुपादध्यात्। तदेतत् पृथिवीस्थाने सर्वत्र क्रमप्रयोजनमुच्यते—पार्थिवस्य ज्योतिषो यथा अग्नि—शब्देन प्रसिद्धतमः सम्बन्धः, न तथा जातवेदः—शब्देन, यथा जातवेदः—शब्देन, न तथा वैश्वानर—शब्देन, यथा च वैश्वानर—शब्देन, न तथा द्रविणोदः—शब्देन। तान्येनानि गुणविप्रकर्षात्, प्रसिद्धिविप्रकर्षाच्च अग्निशब्दात्। विप्रकृष्यन्ते इध्मादीनां तु व्यवधानेनाग्न्यभिधानत्वमित्यातितरां विप्रकर्षः, अश्वप्रभृतयस्तु स्थानमात्रमग्नेर्भजन्त इति इध्मप्रभृतिभ्योऽपि विप्रकृष्यन्ते। तेषामपि च उदितप्राणवृत्तयोऽश्वशकुनिमण्डूका[1] इति प्रथमम्, अनुदितप्राणवृत्तयस्तु[2] अक्षादयः ते पश्चादाद्वन्द्वेभ्यः। इत्येवं सर्वत्र क्रमप्रयोजनमुपेक्ष्यम्।

शाकपूणिस्तु पृथिवीनामभ्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रयोजनमाह । तदुक्तं वार्त्तिककारेण—

"क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्।
प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्।"—इति ॥

प्रकृतमिदानीमुपवर्ण्यते[3]—इध्मादीनां गुणाभिधानसामान्यं किञ्चिदस्ति, यतस्तेनाधिकारवचनम्—"अथात आप्रियः"—इति । अथ—इति विशेषाधिकारे। अतः—इत्यानन्तर्ये। 'आप्रियः' वक्ष्यन्त इति वाक्यशेषः ॥ ८।४।१ ॥

**आप्रियः कस्मादाप्नोतेः प्रीणातेर्वा । आप्रीभिराप्रीणातीति च ब्राह्मणम् ॥ २ ॥ ४ ॥**

---

१ 'उदितप्रमाणवृत्तयो' ॥ २ 'अनुदितप्रमाणवृत्तयस्तु' ॥ ३ 'मनुवर्ण्यते' ॥

इह कारणादभिधेये अभिधाननियमो नैरुक्तानाम्, तदर्थमुपोद्धत्य "आप्रियः कस्मात्? आप्नोतेः प्रीणातेर्वा"—इति निराह। आप्रिय ऋचः, तत्सम्बन्धात् देवता अपि। तथाहि दर्शयति—"आप्रीभिराप्रीणाति" "इतीमा आप्रीदेवताः"—इति च। ऋचस्तावत् आप्नुवन्ति प्रीणन्ति वां देवता इत्याप्रियः। अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रियः ॥ ८। ४। २॥

## इध्मः ॥ २॥

**तासामिध्मः प्रथमागामी भवति। इध्मः समिन्धनात् ॥ १॥**

"तासाम् इध्मः (२) प्रथमागामी भवति" प्रथममागन्तुमस्य आप्रीदेवतापदसमाम्नाये शीलमिति प्रथमागामी कस्मात्?, तत्पूर्वकत्वादिज्यायाः, अनित्यत्वाच्च तनूनपान्नराशंसयोरन्यतरस्य ॥ ८। ५। १॥

**तस्यैषा भवति—॥**

"तस्य" इध्मस्य, समित्कलापस्य, "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

**"समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः।**
**आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः॥"**

**समिद्धो अद्य मनुष्यस्य मनुष्यस्य गृहे देवो देवान्यजसि जातवेद आ च वह मित्रमहश्चिकित्वांश्चेतनावांस्त्वं दूतः कविरसि प्रचेताः प्रवृद्धचेताः॥ २॥**

"समिद्धो अद्य मनुषो दुरोणे (ऋ० सं० ८, ६, ८, १)"—इति। जमदग्नेरार्षम्। त्रैष्टुभम्। सूक्तमेवाहाग्नेयं यास्कः॥ हे इध्म! यस्त्वं "समिद्धः" सन्दीप्तः, "अद्य" एतस्मिन् विशिष्टे यजनीयेऽहनि, "मनुषः" "मनुष्यस्य मनुष्यस्य" समानेऽहानि प्रवृत्तयागानां त्रैवर्णिकानाम् "दुरोणे" यज्ञगृहे "देवः" दाता हविषां हेतुकर्त्तृत्वेन, देवः दीप्तो वा, द्योतनो वा, "देवान्" दानादिगुणयुक्तान् एतान् हेतुकर्त्तृत्वेन यागेऽङ्गभावमुपगच्छन् "यजसि" हे "जातवेदः!" जातवेदस आधार इति तदभिधानेन सम्बोध्यते। दृष्टा हि मन्त्रस्थेषु क्रोशत्सु तदभिधानप्राप्तिः। अथवा—जातवेदा अपि

---

* अत्रैव चतुर्थखण्डसमाप्तिर्दृश्यते, सा 'तासामिध्मः प्रथमागामी' इत्यतः प्राग्विचितावगन्तव्या॥

त्वहतेऽनभिव्यक्तस्वशक्तिस्त्वदाधारत्वादशक्त एवायं यष्टुम्, तस्मात् जातवेदास्त्वदाधारो यजति यत्, तत् त्वमेव यजसीत्युच्यसे[1] । अस्माकमप्येतस्मिन्नहनि हे "मित्रमहः"-मित्राणां पूजयितः ! नित्यमभ्युपेक्षमाणः उपकारवृत्तो यजमानानां "चिकित्वान्" जानानः "आ च वह" आह्वय च, देवान् आहूय चैतान् यज, तथास्मिन् कर्मणि ज्वलन्नङ्गभावमुपेहि, यथैतस्मिन् कर्मणि हविः प्रतिजिघृक्षन्तोऽङ्गमावमीयुर्देवाः, अपि च नैतदतिचित्रम्, यदेवमस्माकमस्मिन् कर्मणि वर्त्तेथाः । किं कारणम् ? यतो ब्रूमः– "त्वं दूतः कविरसि प्रचेताः" । अग्न्यावेशादग्निर्यदपेक्ष्योच्यसे[2],–त्वम् एव दूतः सर्वयजमानानां त्वत्पूर्वकत्वाद् देवतायागस्य, कविः क्रान्तदर्शनः–क्रान्तप्रकाशः सर्वत्र, प्रचेताः प्रकृष्टप्रज्ञानः । यस्मात् त्वम् ऋत्विग्यजमानानां सायुज्ये[3] हेतुः, तस्य तव युक्तमस्माकमाहूय देवान् यष्टुमित्यतो ब्रूमहे–आहूय चास्माकं देवान् यज च ॥ ८ । ५ । २ ॥

## यज्ञेध्म इति कात्थक्यः ॥ ३ ॥

"यज्ञेध्म इति कात्थक्यः" । कत्थकस्य पुत्रः कात्थक्य आचार्यः मन्यते,– योऽयमिध्म आधीयते प्रतिप्रणवमिध्मो यज्ञे स एवायमिति । नन्वेतस्मिन् मन्त्रे न तस्य लिङ्गमस्ति ? सत्यम्,–नास्ति साक्षात्, प्रैषे तु "समिद्भ्यः प्रेष्या"–इति श्रूयते, युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते । तस्मात् समिधामेवेध्मभावमुपगतानामग्निं सन्दीप्तानां समुदायापेक्षमिदम्, व्यवहितमभिधानमाप्रीगतं समिद्धो अद्येति समिध एव चेमा इज्यन्त इति स्फुटमैष्टिके होत्रे समिधो यजेति प्रेषितो होता "समिधः समिधो अग्न आज्यस्य व्यन्तु"–इति वषट्करोति । तस्माद् युक्तं यत् कात्थक्यो मन्यते यज्ञेध्म इति ॥ ८ । ५ । ३ ॥

## अग्निरिति शाकपूणिः ॥ ४ ॥

अथ पुनरन्यः कथं मन्यतेऽत आह–"अग्निरिति शाकपूणिः" । स पुनः कया उपपत्त्या अग्निं मन्यते ? आरादुपकारित्वात्, प्रैषस्य सन्निपत्योपकारित्वाच्च । यजतावाप्रियां यदाप्रीरूपं तद् बलवत् । किंच, पुनराप्रियो रूपम् ? अग्न्यर्थता कथम् ? इति शृणु–

"समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥"

इति सर्वाण्येतानि अभिधानानि कर्माणि च अगौणान्यग्निपक्षे, गौणानीध्मपक्षे, "गौणमुख्ययोश्च मुख्ये कार्य्यसम्प्रत्ययः"–इति न्यायः, तस्मादप्रच्युतस्वरूपाया

१ 'त्युच्यते' ॥ २ 'दग्निवदपेक्ष्यो' ॥ ३ 'साफल्ये' ॥

आप्रियो यजतावुपकारबाहुल्यादाग्नेयत्वाच्च प्रयाजानामग्निरेवायमनया आप्रिया इज्यत इति शाकपूणिर्मन्यते ॥

यास्कस्यापि चैतदेवाभिमतम्, "आग्नेया इति तु स्थितिः"—इति अधिकरणान्ते हि वक्ष्यति। एवं तर्हि अग्निरित्येतदेव समाम्नातव्यमासीत्, न इध्मः ? इति । नैवम् । कस्मात् ? समिद्धो अद्येत्येतदस्यामाप्रियामग्नेर्लिङ्गमस्ति, न त्वग्निशब्दः, अतोऽस्यासमाम्नानम्, पौनरुक्त्यदोषाच्च । तदिध्मशब्देऽपि समानम् ? इति चेत्, तदपि ह्याप्रियां नास्तीति न, प्रैषिके समाम्नानात्, क्रियाविशेषत्वाच्च आहूय चास्माकं देवान् यज चेति । स एषोऽग्निः समित्कलापमिध्ममात्मत्वेनाभिसम्पन्नस्तदाख्यतामुपगतः तेनेध्माभिधानेनेज्यत इति इध्मशब्दः समाम्नातो नाग्निशब्द इति । सर्वत्र शाकपूणेरेवमाप्रीष्वग्न्यर्थान्यभिधानानि ॥

शाकपूणिपक्षे मन्त्रयोजना—हे भगवन् ! अग्ने ! 'समिद्धः' यः त्वं सन्दीप्तः, 'अद्य' अस्मिन्नहनि, 'मनुषः' मनुष्यस्य 'दुरोणे' यज्ञगृहे 'देवः' दाता, दीपनः, द्योतनो वा, 'देवान्' दातॄन्, दीप्तान् वा 'यजसि' 'जातवेदः !' हविषा यजमानानां जातप्रज्ञान ! स त्वमस्माकमपि हे 'मित्रमहः' मित्राणामुपकारप्रवृत्त ! 'चिकित्वान्' जानानः स्वमधिकारम्, आहूय देवान् यज चेति । किम् इत्येवम् ? ब्रूमहे—यस्मात् त्वमेव 'दूतः' सर्वयजमानानां भवसि । 'कविः' क्रान्तदर्शनः, 'प्रचेताः' "प्रवृद्धचेताः" प्रवृद्धप्रज्ञान इति ॥ ८ । ५ । ४ ॥

## तनूनपात् ॥ २ ॥

तनूनपादाज्यमिति कात्थक्यः ।

नपादित्यननन्तरायाः प्रजाया नामधेयं निर्णततमा भवति । गौरत्र तनूरुच्यते । तता अस्यां भोगाः तस्याः पयो जायते पयस आज्यं जायते ।

अग्निरिति शाकपूणिः ।

आपोऽत्र तन्व उच्यन्ते । तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते ॥ १ ॥

---

१ 'तनूनपादाज्यं भवति' ॥

"तनूनपात् (३)"—इति निर्वक्तव्यम्।तत् पुनरेतत् "आज्यम्" "इति कात्थक्यः"॥ "अग्निरिति शाकपूणिः" । यथा तावदाज्यं तथा निरुच्यते—"नपात्—इति अनन्तरायाः प्रजाया नामधेयम्" या पितुरनन्तरा, पुत्राख्या सा भवति, अननन्तरा, पौत्राख्येत्यर्थः । किं कारणम् ? सा हि "निर्णततमा भवति" कथम् ? पुत्रस्तावत् पितुर्नीचैर्नतो भवति, ततोऽपि नीचैर्नततमः पौत्रः । तत्रैतस्मिन् पक्षे यः "तनू"—शब्दः पूर्वपदं तनूनपाच्छब्दस्य, तेन "गौः" "उच्यते" । सा कस्मात् ? "तताः अस्यां भोगाः" क्षीरदध्यादयः । ततः किम् ? "तस्याः पयो जायते" तस्याः पुत्रः पयः, "पयसः आज्यं जायते" तस्मात् तस्याः पौत्रः । एवं गोः तन्वाख्यायाः नपात् आज्यम् । तस्मात् तनूनपात् ॥

अग्निपक्षे "आपः" "अत्र" अस्मिन् अग्नेः तनूनपात्त्वेन "तन्वः उच्यन्ते" । ताः कस्मात् ? "तताः अन्तरिक्षे" । ततः किम् ? "ताभ्यः ओषधिवनस्पतयो जायन्ते" "ओषधिवनस्पतिभ्यः" "एषः" अग्निः "जायते" । तस्मादयमपां पौत्रः ॥ ८ । ६ । १ ॥

## तस्यैषा भवति—॥

"तस्य" तनूनपातः—आज्यस्य अग्नेर्वा प्राधान्यस्तुतिः "एषा" "भवति"—॥ *

"तनू॑नपात्पथ ऋ॒तस्य॒ याना॒न्मध्वा॑ सम॒ञ्जन्त्स्व॑दया सुजिह्व ॥
मन्मा॑नि धी॒भिरु॒त य॒ज्ञमृ॒न्धन्दे॑व॒त्रा च॑ कृणुह्यध्व॒रं नः॑ ॥"

तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान्मधुना समञ्जन् स्वदय कल्याणजिह्वमननानि च नो धीभिर्यज्ञं च समर्द्धय देवान् नो यज्ञं गमय ॥ २ ॥ ६ ॥

"तनू॑नपात्प॒थ ऋ॒तस्य॒०"—इति । हे "तनूनपात्" आज्य ! त्वमुच्यसे । एतान् "पथः" मार्गान् सर्वान् 'ऋतस्य' यज्ञस्य "यानान्" हवींषि, यज्ञे यान्युत्सर्पन्ति, तानि 'मध्वा' मधुरेण स्वादेन "समञ्जन्" सम्प्रक्षयन् "स्वदय" स्वादुतामापादय । हे "सुजिह्व !" जिह्वया हि ते एतदेवं कुर्वन् "मन्मानि' "मननानि" यानि च वयं मन्यामहेऽर्थवस्तूनि ध्रुवाण्येतानि नः स्युरिति तानि स्वाभिः 'धीभिः' स्वैः कर्मभिः,

* पत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा 'तनूनपादिति निर्वक्तव्यम्' इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'तानि' ॥

अभिधारणालङ्करणोपस्तरणादिभिः "ऋन्धन्" संसाधयन् स्वगुणैरुपकुर्वन् "समर्द्धय" सम्पादय । अपि चैवं कुर्वन्नेतं यज्ञं समर्द्धय सम्पादय । या काचिदापदुत्पद्यते यज्ञस्य तां प्रायश्चित्तेनाङ्गभावमुपगच्छत् "गमय" "देवत्रा" "देवान्" प्रति, स्विष्टमध्वरमस्माकं च कुरुष्वेत्यर्थः । एतदाशास्महे त्वत्तः ॥

अग्निरिति शाकपूणिमते हे भगवन् ! 'अग्ने !' 'तनूनपात्' त्वम् एतान् 'पथः' 'ऋतस्य' यज्ञस्य 'यानान्' हवींषि, 'मध्वा' मधुरेण पाककृतेन रसेन 'समञ्जन्' समभिव्यञ्जयन् 'स्वदय' मृष्टीकुरु । हे 'सुजिह्व' स्वर्चिः ! अथवा हे सुवाक् ! एतान्येवं कुर्वन्नस्मदभिमतान्यर्थवस्तूनि नः संसाधयन् 'यज्ञम्' 'ऋन्धन्' समर्द्धयन् स्वसामर्थ्याच्च 'देवत्रा' देवप्रविष्टं[1] कुरु—इत्येतदाशास्महे वयं त्वत्त इति ॥ ८ । ६ । २ ॥

## नराशंसः ॥ ४ ॥

**नराशंसो यज्ञ इति कात्थक्यः । नरा अस्मिन्नासीनाः शंसन्ति ॥ १ ॥**

"नराशंसः (४), यज्ञ इति कात्थक्यः" । कस्मात् "नराः अस्मिन् आसीनाः शंसन्ति" । नरशब्दः पूर्वपदम्, आसेर्निष्ठान्तस्य[2] मध्यम्, शंसतेरुत्तरपदम् । अथ कोऽर्थः ? "नराः" मनुष्याः "अस्मिन्" "आसीनाः" उपविष्टाः "शंसन्ति" इति नराशंसः ॥ ८ । ७ । १ ॥

**अग्निरिति शाकपूणिः । नरैः प्रशस्यो भवति ॥ २ ॥**

"अग्निरिति शाकपूणिः" । स कस्मात् ? "नरैः" "प्रशस्यः" स्तुत्यः "भवति" ॥ ८ । ७ । २ ॥

**तस्यैषा भवति—॥**

"तस्य" नराशंसस्य "एषा भवति" प्राधान्यस्तुतिः—॥ *

**"नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥"**

---

१ 'देवप्रतिष्ठम्' ॥ २ निष्ठान्तस्येति । निष्ठार्थभूतार्थकशानजन्तस्येत्यर्थः ॥
* अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा 'नराशंसो यज्ञ इति कात्थक्यः' इति ग्रन्थतः प्रागेवोचितावगन्तव्या ॥

**नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि चेति वा तान्त्राणि चावापिकानि चेति वा ॥ ३ । ७ ॥**

"नराशंसस्य महिमानमेषाम्० ( ऋ० सं० ५, २, १, २ )"—इति । वर्त्तमान एव कर्मणि ब्रवीति । योऽयमेषामभिमतफलदाता नराणां नराशंसो यज्ञः, द्रव्यदेवतात्यागात्मकः प्रयोगः, तस्य अधिष्ठाता, तद्धयग्नी देवताविशेषे जगदुत्पत्त्यनुग्रहबीजम् । "नराशंसस्य" वयम् "उपस्तोषामः" "उपस्तुमः" उपगम्य चैतस्य "महिमानं" माहाभाग्यं विभूतिं "स्तुमः" अभिकीर्त्तयामः । "यजतस्य" "यज्ञियस्य" यजनसम्पादयितुः, प्रयोक्तुरभिमतफलसम्पादयितुः "यज्ञैः" कर्मभिः युक्ताः उपस्तुमः । [३]यदेवमेतस्मिन्नुपस्तुतमहिम्नि नराशंसे यज्ञे किमप्यस्तु—इत्याशास्महे । 'ये' "सुक्रतवः" "सुकर्माणः" जगदनुग्रहप्रवृत्ताः "शुचयः" निर्णिक्ततरपापाः "धियं धाः" स्वाधिकारयुक्तानां कर्मणाम् अनुवि—"धारयितारः" प्रज्ञानां यज्ञानां वा । एवमादिगुणयुक्ताः "देवाः" ते "स्वदन्ति" आ "स्वादयन्तु" एतानि "हव्या" "हवींषि" "उभयानि" । यदि सौमिकः पशुः, ततः "सोमं च" "इतराणि" पशुपुरोडाशधानाप्रभृतीनि, अथ पृथक् सोमात्, ततः "तान्त्राणि" प्रयाजाज्यभागस्विष्टकृत्प्रभृतीनि, "आवापिकानि च" प्रधानहवींषि—इत्येतदाशास्महे ॥

अग्निरिति शाकपूणिमते—योऽयमेषामभिमतोपकारकारी, नराणां प्रशस्यः, नराशंसोऽग्निः, तस्य वयम् 'उपस्तोषामः' 'उपस्तुमः' 'महिमानं' 'यजतस्य' यज्ञसम्पादयितुः 'यज्ञैः' कर्मभिः दानैर्वा संयुक्ताः, तस्मिन्नुपस्तुतमहिम्नि नराशंसेऽग्नौ हुतानि 'ये' 'सुक्रतवः, देवाः, शुचयः, धियं धाः' ते एतानि 'उभयानि' हवींषि आस्वादयन्तु—इत्येतदाशास्महे ॥ ८ । ७ । ३ ॥

## ईळः ॥ ९ ॥

**ईळ ईट्टेः स्तुतिकर्मणः, इन्धतेर्वा ॥ १ ॥**

"ईळः(९)" अग्निः । स पुनरयम् "ईट्टेः स्तुतिकर्मणः" स्तूयते ह्यसौ । "इन्धतेर्वा" दीपनार्थस्य, तत्क्रियायुक्तो ह्यसौ ॥ ८ । ८ । १ ॥

---

१ 'चेतसा' ॥ २ 'तदेवमेत' ॥ ३ 'त्युपस्थितमहि' ॥

तस्यैषा भवति—॥

"तस्य" "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

"आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥"

आहूयमान ईळितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सहजोषणस्त्वं देवानामसि यह्व होता ।

यह्व इति महतो नामधेयं यातश्च हूतश्च भवति । स एनान् यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा, यजीयान्यष्टृतरः ॥ २ ॥ ८ ॥

"आजुह्वान ईड्यो वन्द्यश्च० ( ऋ० सं० ८, ६,८, ३ )"—इति । हे भगवन् ! अग्ने ! यः त्वम् "ईड्यः" "वन्द्यः च" सर्वलोकस्य । ईड्यः दीपनार्हः हविर्भिराज्यादिभिः । वन्द्यः स्तुत्यः । स त्वम् "आजुह्वानः" "आहूयमानः" एतस्मिन् कर्मणि अस्माभिः, "वसुभिः" "सजोषाः" "सहजोषणः" समानप्रीतिर्भूत्वा "आयाहि" । कस्मात् पुनरेवं ब्रूमहे ? इतः, यस्मात् हे "यह्व" "महन् !" "त्वम्" "असि" "होता" "देवानाम्" आह्वाता । "सः" त्वमस्माभिः "इषितः" "प्रेषित" "अधीष्टो वा" अध्येषितो होतृत्वे स्थित्वा अस्माकम्, "एनान्" देवान् "यक्षि" यज इत्येवं ब्रूमहे । किमित्येवं ब्रूमहे ? यस्मात् "यजीयान्" असि "यष्टृतरः" मनुष्यहोतुरिति ॥

इह 'ईड्यः'—इति एकवचनमग्नेरव्यवधानेन तथैतस्मिन् मन्त्रे एकस्य श्रुतत्वात्, ऐष्टिके पुनर्होत्रे 'ईळो अग्न आज्यस्य व्यन्तु'—इति बहुवचनयुक्तादाख्याताद् व्यन्त्वित्येतस्मात् 'इळः'—इत्येतस्यापि बहुवचनत्वमेव 'ईळो व्यन्तु'—इति । तच्च पुनरन्नाभिधानम्, अन्नं च पुनरोषधय एव, ताश्च पृथिवीस्थानाः इत्यग्निं भजन्ते, तदात्मनायमग्निरिज्यत इति । तत्र[1] बहुवचनं प्रतिसमाधानमोषध्यात्मनाग्नेर्व्यवधारणात्[2] । उक्तं

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "ईळोऽग्निः" इत्यतः प्रागेवोचितावगन्तव्या ॥

१ 'तच्च' ॥ २ 'व्यवधानात्' ॥

च—"योऽयमृबीषे ( से ) पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वंगणं सर्वनामानम्"—इति । तस्मादुपपद्यत इति ॥ ८ । ८ । २ ॥

बुर्हिः ॥ ६ ॥

बर्हिः परिबर्हणात् ॥ १ ॥

"बर्हिः(६)"—इति निर्वक्तव्यम् । तत् पुनरेतत् प्रसिद्धमेव कुशमयं यज्ञाङ्गम् । तत् कस्मात् बर्हिः ? इति । उच्यते—"परिबर्हणात्" परिच्छेदनात्, लूनं हि तद् भवति, परिवृद्धं वा ॥ ८ । ९ । १ ॥

तस्यैषा भवति—॥

"तस्य एषा" बर्हिषः प्राधान्यस्तुतिः "भवति"—॥ *

"प्राचीनं बुर्हिः प्रुदिशा पृथिव्या वस्तौरुस्या वृज्यते अग्रे अह्नाम् ।

व्युप्रथते वितुरं वरीयो देवेभ्यो अदितये स्योनम् ॥ "

प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यते अग्रे अह्नां बर्हिः पूर्वाह्णे तद्विप्रथते वितरं विकीर्णतरमिति वा विस्तीर्णतरमिति वा वरीयो वरतरमुरुतरं वा देवेभ्यश्चादितये च स्योनम् ।

स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत् सेवितव्यं भवतीति वा ॥ २ ॥ ९ ॥

"प्राचीनं बुर्हिः० ( ऋ० सं० ८, ६, ४ )"—इति ॥ प्राच्यां दिशि यदञ्चितं गतं जातं प्रागग्रं वा यत् स्तीर्यते, तद् भवति "प्राचीनम्" । किं पुनस्तत् ? "बर्हिः" "प्रवृ-

---

* अत्रैवाष्टमखण्डसमाप्तिर्दृश्यते, सा 'बर्हिरिति निर्वक्तव्यम्' इत्यतः प्रागेवोचितावगन्तव्या ॥

ज्यते" प्रच्छिद्यते लूयते, अथवा "प्रवृज्यते" प्रस्तीर्यते । किं पुनरेवमेव स्वमनीषिकया ? नेत्युच्यते,—"प्रदिशा" विधिवाक्येन प्रागुदग्वा बर्हिश्छिनत्तीति सामर्थ्यात्, अथवा "प्रदिशा" प्रस्तरणमन्त्रेण "देवस्य त्वा"—इत्यनेन । स्तरणपक्षेऽपि "प्राचीनं बर्हिः स्तृणाति"—इति विधिवाक्यम्, "ऊर्णम्रदा विप्रथस्व"—इति मन्त्रः । ( ऋ० सं० ३, ८, २०, ४ ) ॥ किमर्थं पुनस्तत् प्रवृज्यते ? "पृथिव्याः वस्तोः अस्याः" । पृथिवी वेदी, तस्याः वस्तोः "वसनाय" आच्छादनाय । कदा च पुनस्तत् प्रवृज्यते ? "अग्रे अह्नाम्" "पूर्वाह्णे" तदा हि प्रशस्यते दर्भस्तरणं लवनं वा । तत्प्रवृक्तं प्रस्तीर्यमाणं वा यथाकालं विविधं "प्रथते" । विस्तीर्यते वेद्यां छाद्यमानायाम् । प्रवृज्यमानं वा विस्तीर्यमाणं वा विप्रथते । "वितरम्" विस्तीर्णादपि "विस्तीर्णतरम्" "वरीयः" "वरतरम्" अन्येभ्यो यज्ञाङ्गेभ्यः श्रेष्ठतरम्, तदाधारत्वाद्धविषाम्, "उरुतरं वा" बहुतरं वा । किमर्थं पुनस्तत् प्रवृज्यते, विप्रथते वा ? "देवेभ्यः" "च" 'अदितये' "च" कथं नाम "स्योनं" "सुखं" स्यादिति, बर्हिषा हि सगुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानाम् अभीप्सितेन फलेन योगो भवति, तत् सुखम् । "अदितये" पृथिव्यै, बर्हिषा हि सगुणीकृतात् कर्मणश्चाहुतिद्वारेण वृष्टिर्भवति, तत ओषधिप्ररोहः । तत् सुखं नाम ॥

नात्र ब्रवीत्यग्निरिति । तेन यज्ञाङ्गमेवाभिमतमेतदिदमप्यस्याचार्यस्य च तद्द्वारेणैव यवधानेनाग्निः स्तूयते, पृथिव्यायतनत्वात् तस्य । अपरे पुनरग्निवदपि योजयन्ति मन्त्रार्थंहशः । तत्पक्षे बर्हिरित्यग्न्यभिधानम् । प्रागुच्यते प्रणीयत इति 'प्राचीनं बर्हिः' प्रवृद्धमाहवनीयाख्यं ज्योतिः । "प्रवृज्यते" प्रणीयते तत् पुनः 'प्रदिशा' वचनेन प्राङ्मुद्धरन्तीति । "पृथिव्याः" "वस्तोः" "वसनाय" अग्निनैव हि वेदिरनग्निका भवति । "अग्रे अह्नाम्" "पूर्वाह्णे" तत् विविधं "प्रथते" सामिधेनीप्रक्षेपात् । आज्यभागाद्याघारादिषु च विस्तीर्णतरं विक्षिप्ततरं प्रथते । "वरीयः" "वरतरम्" अन्येभ्यो ज्योतिर्भ्यः, "उरुतरं" महत्तरं "वा" "देवेभ्यः" यजमानेभ्यः इतरेभ्यो वा, "अदितये" "च" पृथिव्यै कथं नाम "स्योनं" स्यादिति ॥

"स्योनम्—इति सुखनाम" । "स्यतेः" धातोः अवपूर्वात्, तदेव हि "अवस्यन्ति" व्यवस्यन्ति, निवसन्ति प्राणिनः । "सेवितव्यं भवतीति वा" तद्धि सर्वस्य सेवनार्हं भवति ॥ ८ । ९ । २ ॥

---

१ 'नत्ति तत्सामर्थ्या' ॥ २ 'प्रस्तीर्यमाणं विप्र' ॥ ३ 'वा' ॥ ४ 'तत्सुखम्' ॥ नात्र ब्रवीत्यग्निरि' ॥ ५ 'परिवृद्धमाह' ॥

## द्वारः ॥ ७ ॥

### द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा ॥ १ ॥

"द्वारः(७)"—इति निर्वक्तव्यम् । "यज्ञे गृहद्वार इति कात्थक्यः"। ताः पुनरेताः "जवतेर्वा" जवन्ति हि ताभिः । "द्रवतेर्वा" । धात्वन्यत्वमर्थैकत्वम् । "वारयतेर्वा" वारणीया हि द्वारादेव निवार्यन्ते ॥ ८ । १० । १ ॥

### तासामेषा भवति— ॥

"तासाम्" "एषा" प्राधान्यस्तुतिः "भवति"— ॥ *

"व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ॥
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः॥"

व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणाः वरतममङ्गमूरू देव्यो द्वारो बृहत्यो महत्यो विश्वमिन्वा विश्वमाभिरेति यज्ञे ॥ गृहद्वार इति कात्थक्यः ॥ २ ॥

"व्यचस्वतीः० ( ऋ० सं० ८, ६, ८, ५ )"—इति ॥

या एताः विविधेनाञ्चनेन गमनेन युज्यन्ते 'व्यचस्वतीः" ताः । किं कुर्वन्तु ? "उर्विया" उरुत्वेन महत्त्वेन "विश्रयन्ताम्" विश्रियन्ताम् । कथम् ? "पतिभ्यः न जनयः" "पतिभ्य इव जायाः" यथा पतिभ्यो जाया "ऊरू मैथुने धर्मे" विवृण्वांति "शुशोभिषमाणाः" शोभयितुमिच्छमानाः प्रहर्षात्, एवं विश्रयन्ताम् । इदानीमुत्तरोऽर्द्धर्चः प्रत्यक्षकृतः—याः यूयं व्यञ्चनवत्यः एवं विश्रयध्वे, ततो ब्रवीमि—हे "देव्यः" दानक्रियाहेतुभूताः ! "द्वारः" "बृहत्यः" "महत्यः", "विश्वम् इन्वाः" "विश्वम्" सर्वम् "आभिः" "एति" यज्ञोपकरणमिति विश्वमिन्वाः, यूयमुच्यध्वे । "देवेभ्यः" एतेभ्यो हविर्दातृभ्यः ऋत्विग्भ्यः यजमानेभ्य इतरेभ्यो वा । "सुप्रायणाः" सुप्रगमनाः "भवत"—इत्येतदाशास्महे ॥ ८ । १० । २ ॥

---

१ अत्र नवमखण्डसमाप्तिर्दृश्यते, सा 'द्वार इति निर्वक्तव्यम्' इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ ब्रवीति ॥ २ यज्ञशरणमि ॥

अग्निरिति शाकपूणिः ॥ ३ ॥ १० ॥

"अग्निः इति शाकपूणिः" । तत्पक्षे योजना—अग्न्यर्चिषो द्वारः । जवनात्, द्रवणाद्वा । हविर्वा ताभिर्जवति, द्रवति वा, वारयति [ न्ति ] वा रक्षःप्रभृतीनीति द्वारः । 'व्यचस्वतीः' याः एताः विविधेनाञ्चनेन तद्वत्यः अग्न्यार्चिषः । ताः उरुत्वेन 'विश्रयन्ताम्' । कथम् ? "पतिभ्य इव जायाः" ऊरू मैथुने धर्मे शोभयितुमिच्छमानाः । या यूयं विविधेनाञ्चनेन तद्वत्यः, याश्चैवं विश्रयध्वे, ततो ब्रवीमि । हे "देव्यः" "बृहत्यः" "विश्वमिन्वाः" सर्वं हविर्याभिर्जवति, ता यूयमस्य हविषः 'सुप्रायणाः' सुप्रगमनाः 'भवत' इति ॥ ८ । १० । ३ ॥

## उषासानक्ता ॥ ८ ॥

उषासानक्तोषाश्च नक्ता चोषा व्याख्याता । नक्तेति रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा ॥ १ ॥

"उषासानक्ता (८)"—इति एकपदम् । अस्य विग्रहः—"उषाश्च नक्ता च" । अत्र "उषाव्याख्याता"—"उच्छतीति सत्या" इति ।"नक्तेति रात्रिनाम"। तत् कस्मात् ? "अनक्ति" क्लेदयति "भूतानि" "अवश्यायेन"—इति । अवश्यमेतदायन्तीत्यवश्यायाप्रुष्वाः । अनक्तेरकारलोपे नक्ता । "अपि वा नक्ता अव्यक्तवर्णा ।" नकारः प्रतिषेधे, न अक्ता, न व्यक्ता, अनक्ता । यथा अहः सर्वमभिव्यक्तरूपं भवति, न तथा रात्रिः ॥ ८ । ११ । १ ॥

तयोरेषा भवति— ॥

"तयोः" "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

"आसुष्वयंन्ती यजुते उपाके उषासानक्ता सदतां नियोनौं ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशंदधाने ॥"

सैष्मीयमाणे इति वा सुष्वापन्त्याविति वा सीदतामिति

---

* अत्र दशमखण्डसमाप्तिर्दृश्यते, सा "उषासानक्ता—इत्येकपदम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

वा न्यासीदतामिति वा । यज्ञिये उपक्रान्ते, दिव्ये योषणे बृहत्यौ महत्यौ सुरुक्मे सुरोचने अधिदधाने शुक्रपेशसं श्रियम्, शुक्रं शोचतेर्ज्वलतिकर्मणः ॥ पेश इति रूपनाम, पिंशतेर्विपिशितं भवति ॥२॥११॥

"आसुष्वयन्ती० (ऋ० सं० ८, ६, ८,६)"—इति।"आसुष्वयन्ती" "सेष्मीयमाणे" परस्परं स्मयमाने, अथवा—"सुष्वापयन्तौ" सुष्ठु जनान् स्वापयन्त्यौ । "यजते" हेतुकर्तृत्वेन यजते "यज्ञिये" यज्ञसम्पादयित्र्यौ "उपाके" । "उपक्रान्ते" उपगम्य इतरेतरं क्रान्ते प्रशस्ये। "दिव्ये" दिविजे द्योतने । "योषणे" सम्मिश्रे परस्परतः । "बृहती""बृहत्यौ, महत्यौ"।"सुरुक्मे""सुरोचने"सुदीप्ते । ये एते एवमादिगुणयुक्ते उषासानक्ते"अधिश्रियम्"श्रियम् "अधिदधाने" उपरि स्थापयन्त्यौ, "शुक्रपिशम्" "शुक्रपेशसम्" शुक्ररूपां श्रियम्, "आसदताम्" "आसीदताम्" एतस्मिन् स्वे "योनौ" । आकार उत्कृष्यते उपसर्गस्य हि क्रियापदेन सामर्थ्यम्,—"न्यासीदताम् इति" नियमेनासीदतामिति, निरुत्तरपदस्थोऽप्यपकृष्यते तेनैव क्रियापदेन। निशब्दश्चोत्तरपदो वा पादपूरणः ॥

न ब्रवीत्यग्निरिति, येन द्वित्वानुपपत्तिरिति केचित् ।

अपरे पुनर्वर्णयन्ति—उषा अग्नेर्दीप्तिः, नक्ता आहुतिदीप्तिः, विवासयति तमः, आहुतिरनक्त्याज्येन । ते एते दीप्त्याहुती सुष्ठु स्मयमाने इव "यजते" । "यज्ञिये" यज्ञसम्पादयित्र्यौ । "उपाके" "उपक्रान्ते" परस्परतः । "दिव्ये" द्योतने परस्पराश्रयणात् । "योषणे"मिश्रीभूते । "बृहती""बृहत्यौ, महत्यौ" ।"सुरुक्मे""सुरोचने" सुष्ठु रोचने । "अधिदधाने" "शुक्रपिशम्" "शुक्रपेशसम्" । एतस्मिन् यजमाने "श्रियम्" "आसदताम्" "आसीदताम्" । एतस्मिन्नग्नौ "न्यसीदताम्" नियमेनाधिक वा—इत्येतदाशास्महे ॥

"पेश इति रूपनाम" "पिंशतेः" धातोः, तद्धि "विपिशितं भवति" विकसितं भवति, यावदाश्रयभावित्वात् । विनिहितमिति केचिदन्याश्रितत्वात् ॥ ८ । ११ । २ ॥

## दैव्याहोतारा ॥ ९ ॥

दैव्या होतारा दैव्यौ होतारावयं चाग्निरसौ च मध्यमः॥१॥

"दैव्या होतारा(९)"—इति वक्तव्यम् । "दैव्यौ होतारौ"—इति शब्दसमाधिः । "अयं चाग्निरसौ च मध्यमः" इत्यभिधेयसंवचनम् ॥ ८ । १२ । १ ॥

तयोरेषा भवति– ॥

"तयोः" "एषा" प्राधान्यस्तुतिः "भवति"–॥ *

"दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥"

दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ यज्ञेषु कर्त्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ ॥ २ ॥ १२ ॥

"दैव्या होतारा०( ऋ० सं० ८, ६, ९, १)"–इति । यावेतौ "दैव्यौ होतारौ" । देवेषु भवौ दैव्यौ, देवावेव वा दैव्यौ, स्वार्थे एव तद्धितः । मनुष्यहोतारौ अपेक्ष्य । दैव्यौ होतारौ होतृमैत्रावरुणौ इति विशेषणम् । कौ पुनस्तौ ? "होतारा" "होतारौ" आह्वातारौ देवानाम्, वाय्वग्नी । किंलक्षणौ । "प्रथमा" "प्रथमौ" मुख्यौ, मनुष्यहोतारावपेक्ष्य । "सुवाचा" "सुवाचौ" प्रशस्तवाचौ, सुस्तुतौ । "मिमाना यज्ञम्" यज्ञनिर्मातारौ, नित्यं "मनुषः" "मनुषस्य" "यजध्यै" "यजनाय" । "प्रचोदयन्ता" "प्रचोदयमानौ" "विदथेषु" "यज्ञेषु" "कारू" "कर्त्तारौ" ऋत्विजौ, नानग्निको यज्ञोऽस्तीत्यग्निर्निर्मिमीते, न चासावनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते । विज्ञायते हि–"तस्मादेष नानुपध्मातो ज्वलति"–इति । स एष मैत्रावरुणो वायुरग्नेर्होतृवदधियज्ञे वर्त्तमानस्य नित्यं चोदयिता, तन्मूलत्वाच्च यज्ञकर्मणः । तावेव देवानामाह्वातारौ उच्येते । यावेतावेवं "प्रचोदयन्तौ" "विदथेषु" यज्ञेषु, "कारू" कर्त्तारौ मनुष्य ( स्य ) होतुः अनुग्रहस्य, नित्यं स्वाधिकारकर्मानुग्रहसन्निधानात् । यदेतत् "प्राचीनं" प्राच्यां दिशि "ज्योतिः" आहवनीयाख्यं प्रणीयते । "प्रदिशा" मन्त्रेण प्राचीमनु प्रदिशं प्रेहीति अनेन विधिवाक्यप्रदेशेन, अनेन वा "प्राञ्चमुद्धरन्ति"–इति । एतत् प्रणीय नित्यं यष्टव्यमित्येवमर्थं "प्रदिशन्तौ"

---

* अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "दैव्या होताराविति वक्तव्यम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

आज्ञापयन्ताविव यौ नित्यमवियोगेन स्वभावतो यज्ञोपकारे वर्त्तमानौ तौ ममाप्येवं वर्त्तेतामिति । एवमाख्यातमध्याहृत्य समाप्यते, निराख्यातत्वान्मन्त्रस्य ॥ ८ । १२ । २ ॥

## तिस्रोदेवीः ॥ १० ॥

**तिस्रो देवीस्तिस्रो देव्यः ॥ १ ॥**

"तिस्रोदेवीः(१०)"—इति पदम् । ताः पुनरेताः "तिस्रः"एव"देव्यः" प्रथमया ता निराह, तिस्र इति देवीशब्दस्य विशेषणम् ॥ ८ । १३ । १ ॥

**तासामेषा भवति—॥**

"तासाम् एषा भवति" प्राधान्यस्तुतिः—॥*

**"आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।**
**तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥ "**
**ऐतु नो यज्ञं भारती क्षिप्रम् । भरत आदित्यस्तस्य भा इळा च मनुष्यवदिह चेतयमाना तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ॥ २ ॥ १३ ॥**

"आ नो यज्ञं भारती० (ऋ० सं० ८,६,९, २)" इति । आभिमुख्येन अस्माकं यज्ञमागच्छतु । का पुनरसौ ? इति । "भारती" "भरत आदित्यः" सर्वभूतान्युदकेन बिभर्त्ति इति, "तस्य" स्वभूता "भाः" दीप्तिः । कथमेतु ? "तूयम्" "क्षिप्रम्" । "इला' "च"" पृथिवीस्थाना । "इहैवेळया वसुमत्या"—इत्यनुयाजेषु उन्नीतसामर्थ्यात् पार्थिवत्वात् । "मनुष्वत्" "मनुष्यवत्" "इह" कर्मणि "चेतयन्ती" "चेतयमाना" यथा मनुष्येण मनुष्य आहूतो भोक्तुमविलम्बमान आगच्छेत्, क्षिप्रमेवमागच्छतु, सा ममेह कर्मणि हविर्भोक्तव्यमित्येवमर्थं जानाना । "सरस्वती" "च" मध्यस्थानैवमेव "चेतयन्ती" आगच्छतु । ता एताः "तिस्रः" अपि " देव्यः" "स्वपसः" "सुकर्माणः" अस्मिन् कर्मणि "इदं बर्हिः" "स्योनं" "सुखं" प्राप्य एतस्मिन् "आसदन्तु" "आसीदन्तु"—इत्येतदाशास्महे ॥ ८ । १३ । २ ॥

---

१ 'निराख्यत्वात्तन्मन्त्रस्य' ॥ * अत्र द्वादशखण्डसमाप्तिर्द्दश्यते, सा "तिस्रो देवीरिति पदम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

## त्वष्टा ॥ ११ ॥

**त्वष्टा तूर्णमश्नुत इति नैरुक्ताः । त्विषेर्वा स्याद्दीप्तिकर्मण-स्त्वक्षतेर्वा स्यात् करोतिकर्मणः ॥ १ ॥**

"त्वष्टा(११)"—इति निर्वक्तव्यम् । अत्र तूर्णशब्दात् क्षिप्रवाचिनः पूर्वपदम् ,अश्नोते-रुत्तरपदम् । क्षिप्रं व्याप्नोति, यदनेन व्याप्तव्यं भवति । "त्विषेर्वा" धातोः वृद्ध्यर्थस्य, वृद्ध एव नित्यमसौ देवतात्वात् । "त्वक्षतेर्वा स्यात्" क्रियासामान्यमात्रवाचिनः, उत्सृष्टतनूकरणस्वार्थस्य ॥ ८ । १४ । १ ॥

**तस्यैषा भवति—॥**

"तस्य" "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

**"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ॥ तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥" य इमे द्यावापृथिव्यौ जनयित्रौ रूपैरकरोद् भूतानि च सर्वाणि तमद्य होतारिषितो यजीयान् देवं त्वष्टारमिह यज विद्वान् ॥ २ ॥**

"य इमे द्यावापृथिवी॰ ( ऋ॰ सं॰ ८,६,९,२ )"—इति । "यः" त्वष्टा "इमे" "द्यावापृथिव्यौ" सर्वेषां भूतानां "जनयित्र्यौ" "रूपैः" नानाविधैः अनेकप्रकारैः "अकरोत्" "भूतानि च सर्वाणि" । अथवा—रूपैरिति कर्त्तैवानया तृतीयया लक्ष्यते,—तत्तद्रूपमास्थाय यः त्वष्टा द्यावापृथिव्यावकरोत् भूतानि च सर्वाणि । किं तस्य त्वष्टुः ? तं "देवम्" "त्वष्टारम्" "इह" अद्यैतस्मिन्नहनि कर्मणि वा हे होतः ! "याक्षि" यज "विद्वान्" जानानः मयेदमवश्यं कर्त्तव्यमिति ॥ ८ । १४ । २ ॥

**माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातः ॥ अग्निरिति शाकपूणिः ॥ ३ ॥ १४ ॥**

---

१ 'वृद्धिकर्मणः' ॥ २ 'मात्रभाविनः ॥ * अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा "त्वष्टेति वक्तव्यम्" इत्यतः आसीदित्यवगन्तव्या ॥ ३ 'च' ॥

"माध्यमिकस्त्वष्टा" इति विचारः। तत्र तावत् "माध्यमिकः त्वष्टा—इति" "आहुः" आचार्याः, केचिन्नैरुक्ता एवं मन्यन्ते। माध्यमिकः—इति संज्ञाप्रसिद्धिः। को हेतुः? "मध्यमे च स्थाने समाम्नातः"—इति। किंच, एतस्मिन्नेव मन्त्रे व्यपदेशात्। कथम्? य इमे द्यावापृथिव्यौ भूतानि च सर्वाण्यकरोत् तं देवं त्वष्टारं यजेति। त्वष्टुरन्यो यष्टा। स एव पुनः सम्बोध्यते हे होतरिति मनुष्यहोत्रा, न चान्यः पार्थिवादग्नेर्होतास्ति, तस्माद् यो यष्टा स पार्थिवः, य इज्यते स मध्यमस्त्वष्टेति। सर्वशिल्पिमतामाचार्यो देववर्द्धकिर्दाक्षायणीपुत्रो द्वादशानामादित्यानामन्यतम इत्यैतिहासिकाः॥

कोऽत्र निश्चयः? अयमेव "अग्निरिति शाकपूणिः"॥

कथं यत्तावन्मध्यमे च स्थाने समाम्नात इति? अकारणमेतत्—अयमप्यग्निर्मध्यमे स्थाने समाम्नात इति। यत् पुनरेतद् व्यपदेशात् इति? तदपि समानमिन्द्रेणापि त्वष्टृव्यपदेश इति—त्वष्टा दधदिन्द्राय शुष्ममिति। अपि च व्यपदेशादन्यत्वमित्यशक्यमध्यवसातुम्, अनन्यत्वेऽपि हि व्यपदेशो भवति। तद्यथा—"अग्निमग्न आवह"—इति। अत्र हे अग्ने! भगवन्! अग्निम् आवह इति व्यपदेशे सत्यनन्यत्वम्, न हि पार्थिवादन्यः सूक्तभाग् हविर्भाग् वा अग्निरस्ति, योऽनेन प्रसिद्धहोतृत्वाभिधानेनाहूयेत, इज्येत च—"स्वं महिमानमावह"—इति। स्विष्टकृति विशेषलिङ्गात् स्वयमेवात्मनात्मानं विधिवशात् आह्वानेन संस्कृत्य द्वैधं त्रैधमनेकधा वा यजति, अन्यद्वाभिनिवर्त्तयति। तद्वदिहापि कर्मात्मनः परो योऽस्य तै[2]क्ष्णक्रियालक्षणगुणयोग्यात्मा यदधिष्ठितः, कर्मात्मा सर्वरूपाणि पाकेन विकरोति। केन विकरोति? तमधिकृत्योच्यते—"त्वष्टा रूपाणि विकरोति" इति। तदयमुच्यते—मनुष्यहोत्रा यज त्वमिति। एवं तावद् व्यपदेशः शक्यप्रतिसमाधानः। यत् पुनरुक्तं देवशिल्पीति? तत्तद्गुणसामान्यादेवासावपि कौशलातिशयमपेक्ष्योच्यत इत्यदोषः॥ ८। १४। ३॥

## तस्यैषापरा भवति—॥

यथा[3] चाग्निरेव नान्यः, तथा "तस्य" "एषा" विशिष्टतरलिङ्गा "अपरा" ऋक् "भवति"—॥ *

**"आविष्ट्यो वर्द्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे॥**
**उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते॥"**

---

१ 'शिल्पिना' इति तूचितम्॥ २ 'तल्लक्षणगुणयोग्यात्मा'॥ ३ 'अथ वा'॥ * इहैव चतुर्दशखण्डसमाप्तिर्दृश्यते, सा "यथा चाग्निरेव नान्यः" इत्यतः प्रागेवोचिताऽवगन्तव्या॥

आविरावेदनात्तत्त्यो वर्द्धते चारुरासु । चारु चरतेः, जिह्मं जिहीतेः, ऊर्द्ध्वं उच्छ्रितो भवति । स्वयशा आत्मयशाः, उपस्थ उपस्थाने । 'उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते' ॥

द्यावापृथिव्याविति वा ॥ १ ॥

"आविष्ट्यो वर्द्धते० ( ऋ० सं० १, ७, १, ५ )"—इति॥ "आविः" प्रकाशः । स कस्मात् ? "आवेदनात्" सर्वस्य प्रकाशनात् । तस्मात् "तत्त्यः" तस्य तनिता "आविष्ट्यः" । किंलक्षणः ? "चारुः" चरणशीलः, अनवस्थितः । किं करोति ? "वर्द्धते" । क्व ? "आसु" क्रियासु, प्रज्ञासु वा प्रसवाय । कस्य ? "जिह्मानाम्" कुटिलचेतसामपि मनुष्याणाम् अवैषम्येण ऊर्द्ध्वमेव ज्वलति, कुटिलानामपीन्धनानामकुटिल उर्द्ध्वमेवेति केचित् । एवमेव वर्धते । "स्वयशाः" "आत्मयशाः" परमनाश्रित्य यशस्वी । "उपस्थे" "उपस्थाने" यत्रासावुपनतस्तिष्ठति आविष्ट्यः । योऽयमेवमादिगुणयुक्तः त्वष्टा, तस्य "त्वष्टुः" अग्नेः "जायमानात्" एव "उभे" द्वे अपि "बिभ्यतुः" ॥

के पुनस्ते ? "द्यावापृथिव्यौ इति" । यथायमतिमहान् वर्द्धते, अवश्यमयमावां धक्ष्यतीति ॥ ८ । १५ । १ ॥

अहोरात्रे इति वा ॥ २ ॥

"अहोरात्रे इति वा" । सकृदुपज्वलिते महत्यग्नावनुपशाम्यति । अहोरात्रयोरर्थवत्त्वाभावः । तस्मात् ते अपि बिभ्यतुः । अपि नामायमेवमतिप्रवृद्धः आवामन्यतरमनुच्छिन्द्यादिति ॥ ८ । १५ । २ ॥

अरणी इति वा । प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते॥ ३ ॥ १५॥

"अरणी इति वा" । अवश्यमयमावां जातो यतो यदा तदा धक्ष्यतीति अतः अरणी अपि बिभ्यतुः । एवं बिभ्यत्यौ किं कुरुतः ? नान्या गतिरस्तीति "प्रतीची" नाम तमेनं प्रत्यञ्चिते अभिमुखे "सिंहं" "सहनम्" अभिभवनम् "प्रतिजोषयेते" "प्रत्यासेवेते" उपकारकत्वेन, कथं नामायमावां न भस्मसात् कुर्यादिति ॥

एवमयमेवाग्निरिह त्वष्टेति ॥ ८ । १५ । ३ ॥ *

* अत्रैव पञ्चदशखण्डसमाप्तिर्दृश्यते, "इति ऋज्वर्थायां निरुक्तवृत्तौ अष्टमा (त्रयोदशा ))ऽध्यायस्य द्वितीयः पादः ॥ ८, २ ॥" इत्यपि चोपलभ्यते ॥

## वनुस्पर्तिः ॥ १२ ॥

**वनस्पतिर्व्याख्यातः ॥ १ ॥ १६ ॥**

"वनस्पतिः(१२)" अवसरप्राप्तः। स पुनरयमभिधेयतोऽभिधामतश्च "व्याख्यातः" (८।३।१) "एष हि वनानां पाता वा पालयिता वा"–इति॥ ८।१६।१॥

**तस्यैषा भवति– ॥**

"तस्य" "एषा" प्राधान्यस्तुतिः "भवति"–॥ *

**"उपावंसृजुत्मन्यां समुञ्जन्देवानां पार्थऋतुथा हुवींषि ॥**
**वनुस्पर्तिः शमिता देवो अुग्निः स्वदन्तु हुव्यं मधुना घृतेन॥"**

**उपावसृजात्मनात्मानं समञ्जन् देवानामन्नमृतावृतौ हवींषि काले काले वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च ॥ १ ॥ १७ ॥**

"उपावसृज॰ (ऋ॰ सं॰ ८, ६, ९, १०)"–इति। "उप" आश्लिष्य "अवसृज" एतत् पश्चाख्यं "पाथः"। अनाश्रितविशेषः,–किमयमग्निर्वा, यूपो वा इत्युच्यते? उत वा अन्य एव कश्चित्? इति। उत्तरेऽर्द्धर्चे वनस्पतिशब्दः प्रथमासम्बन्धात् परोक्षः, इह पुनरुपावसृजेति मध्यमपुरुषयोगात् प्रत्यक्षः कोऽप्यभिधीयत इति सुतरामनाश्रितविशेष इति विचारास्पदमिति। अतः परं विचारयिष्यति–"तत् को वनस्पतिः?" इति। "त्मन्या समञ्जन्" "आत्मना आत्मानम्" अस्य पशोः समञ्जन् समभिव्यञ्जयन् विशिष्टेन संस्कारेण स्वाधिकारसम्बन्धिना। "देवानाम्" एतत् "पाथः" "अन्नम्" एतद्भागिनामुनैव प्रकारेण "ऋतुथा" च "ऋतावृतौ" "काले काले" षण्मासादौ "हवींषि" चैतान्यन्यान्यपि आज्यप्रभृतीनि "उपावसृज" देवेभ्यो देहीति। किंच, "वनस्पतिः" "शमिता देवः" "अग्निः"–"इत्येते त्रयः"। त्रिग्रहणात् देवशब्दोऽग्निविशेषणमिति दर्शयति। वनस्पतिश्च शमिता चाप्रत्यक्षदेवते एव, असन्दिग्धश्च देवोऽग्निरित्येते त्रयः "स्वदन्तु" "स्वदयन्तु" स्वादुतामापादयन्तु। "मधुना" चोदकेन प्रोक्षणाद्यभिप्रायं "घृतेन" चैतदस्माभिः संस्कृतं पाथः–इत्येतदाशास्महे ॥ ८।१७।१॥

---

* अत्रैव षोडशखण्डसमाप्तिर्दृश्यते, सा 'तस्यैषा' इत्यतः प्रागेवोचिताऽवगन्तव्या॥

**तत् को वनस्पतिः ॥ १ ॥**

"तत् को वनस्पतिः ?"—इत्यादिविचारः ॥ ८ । १८ । १ ॥

**यूप इति कात्थक्यः ॥ २ ॥**

तत्र तावत् "यूप इति कात्थक्यः" ॥ ८ । १८ । २ ॥

**[ अग्निरिति शाकपूणिः ] ।**

**तस्यैषापरा भवति—॥**

कस्मात् ? यस्मात् यद्यप्येतस्यामाप्रियामनाविष्कृतोऽग्नेर्विशेषः, तथापीयम् "तस्य" "एषा" "अपरा" यूपाञ्जनीया ऋक्, या सन्निपत्य यूपाञ्जने यूपमभिधानेन संस्करोति । तद्यथा— ॥ *

**"अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न ।**
**यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ता॒द्यद्वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑ ।"**

**अञ्जन्ति त्वामध्वरे देवान् कामयमाना वनस्पते मधुना दैव्येन च घृतेन च यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि यद्वा ते कृतः क्षयो मातुरस्या उपस्थे उपस्थाने ॥ ३ ॥ १८ ॥**

"अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे॰ (ऋ० सं०३,१,३,१ )"—इति । विश्वामित्रस्यार्षम् । पुरोरुक् । "दे॒वेभ्यो॒ वनस्पते"—इति च । हे यूप ! "अञ्जन्ति त्वाम्" म्रक्षयन्ति त्वाम् ऋत्विग्यजमानाः । क ? एतस्मिन् "अध्वरे" यज्ञे । किमिच्छन्तः ? "देवयन्तः" देवान् यष्टुं कामयमानाः । केन अञ्जन्ति ? हे "वनस्पते !" यूप ! "मधुना दैव्येन" संस्कृतेन "घृतेन" इत्यर्थः, देवानां यन्मधु, विज्ञायते हि—"देवानां मधु यद् घृतम्" इति । किमित्यञ्जन्ति ? "यत् ऊर्द्ध्वः तिष्ठाः" यस्मात् अक्तः त्वम् "ऊर्द्ध्वः स्थास्यसि" अञ्जनादनन्तरमुच्छ्रयिष्यन्ति त्वाम् । यस्माच्च ते "क्षयः" "मातुः अस्याः" पृथिव्याः "उपस्थे" उपरि । क्षयो निवासः, स्थैर्य्यार्थमवटः । तस्मादवश्यमूर्द्ध्वः स्थास्यसि ।

---

१ 'अस्य वाक्यस्यात्र टीका नास्ति ।

* अत्रैव **सप्तदशखण्ड**समाप्तिर्दृश्यते, सा "तत्को वनस्पतिः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

तथा स्थित्वा पशुधारणसमर्थः, प्रधानक्रियापूर्वाङ्गं भावयित्वा तद्द्वारेण तत्फलानि "द्रविणानि च" अवश्यम् अस्मभ्यम् "दास्यसि"—इत्यतः समञ्जन्ति ॥

एवमस्मिन् समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः । तस्मात् यूपो वनस्पतिरिति ॥ ८ । १८ । ३ ॥

## अग्निरिति शाकपूणिः ॥ १ ॥

"अग्निः इति शाकपूणिः" ॥ ८ । १९ । १ ॥

## तस्यैषापरा भवति—॥

कस्मादिहाप्युपावसृजेति । अस्यानाविष्कृतवनस्पतिशब्दार्थत्वाद् भवतु परोक्षो यूपः, परम्परा अस्य हविर्वहनलिङ्गलिङ्गिता पुरोरुक् यजतौ सन्निपत्य "तस्य" अग्नेर्वनस्पतिशब्देन अभिधायिका "एषा" "अपरा" ऋग् भवति । तद्यथा— ॥*

**"देवेभ्यो॑ वनस्पते ह॒वींषि॒ हिर॑ण्यपर्ण॒ प्रदि॑वस्ते॒ अर्थ॑म् । प्र॒द॒क्षि॒णिद्र॑श॒नया॒ नि॒यूय॑ ऋ॒तस्य॑ वक्षि प॒थिभी॒ रजि॑ष्ठैः ॥"**

**देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमो यज्ञस्य वह पथिभी रजिष्ठैर्ऋजुतमै रजस्वलतमैः प्रपिष्टतमैरिति वा ॥ २ । १९ ॥**

"दे॒वेभ्यो॑ वनस्पते"—इति । वसिष्ठस्यार्षम् । हे "वनस्पते !" अग्ने ! "हिर॑ण्यपर्ण !" हिरण्योपपर्ण ! ज्वलित ! "दे॒वेभ्यः" "ह॒वींषि" "वक्षि" "वह" । कथम् ? इति । "प्रद॒क्षि॒णित्" प्रदक्षिणं देवानां यो हविर्वहनधर्मः, तेन, पितृधर्मविपरीतेन । कथं वहनम् ? "रशनया" "नियूय" निबध्य, सुनिपुणं यथा न किञ्चिदपि [१]अत्र हविरनवेक्षितं भूम्रभूतेन [२]प्रभ्रश्येत्, तथा । अपि च "ऋतस्य" "यज्ञस्य" "पथिभिः रजिष्ठैः" य एव प्रसिद्धाः पन्थानो यज्ञस्य हविर्वहनाय देवान् प्रति ऋजुभ्योऽपि "ऋजुतमैः" यैः कालो नातिहीयेत, "रजस्वलतमैर्वा" अत्यर्थमुदकवद्भिः, ते हि पथिकानां सुखाः, "प्रपिष्टतमैः" इति सुरूपतमैः प्रहततमस्कैर्यैः असम्मोहः

---

* 'अत्राष्टादशखण्डसमाप्तिर्दृश्यते, सा "अग्निरिति शाकपूणिः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'तत्र' ॥ २ 'प्रध्वस्येत्' ॥

स्यात्, गच्छतस्तैः [ 'वक्षि' वह, ] न च पुनरविदिते कर्मणि त्वां विनियुज्महे । यतो ब्रूमः—"प्रदिवः ते अर्थम्" चिरन्तनमेव ते अर्थं हविर्वहनाधिकारलक्षणे विद्मः । "अयं यो होता"—इत्येवमादिमन्त्रेभ्यः "देवा दधिरे हव्यवाहम् ॥ ( ऋ० सं० ८, १, १२, ३ )"—इति । अतो ब्रूमहे—वहेति ॥

एवमेतस्मिन् मन्त्रे हविर्वहनसंयोगाद् वनस्पतिशब्दस्याग्निराभिधेयः ॥ ८।१९।२ ॥

## तस्यैषापरा भवति— ॥

अथ "तस्य" वनस्पतेः अग्नेः "एषा" "अपरा" ऋक् "भवति" ( सा पुनः किमर्थम् ? इति । प्रायो वृत्त्युपदर्शनार्थं बहुषु मन्त्रेष्वग्निर्वनस्पतिरिति ) ॥ *

**"वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।**
**वहा देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ॥"**

**वनस्पते रशनया नियूय सुरूपतमया वयुनानि विद्वान् प्रज्ञानानि प्रजानन्वह देवान् यज्ञे दातुर्हवींषि प्रब्रूहि च दातारममृतेषु देवेषु ॥ १ ॥ २० ॥**

"वनस्पते रशनया०"—इति । वनस्पतेरेव याज्या । हे "वनस्पते !" "रशनया नियूय पिष्टतमया" "सुरूपतमया" अत्यर्थं दृढया एवमादिगुणयुक्तया रशनया नियूय अप्रध्वंसनाय निबध्य "वयुनानि" स्वाधिकारयुक्तानि "प्रज्ञानानि" अस्मदुपकाराय "विद्वान्" "जानानः" "वह" एतानि अस्मत्प्रत्तानि "हवींषि" । अस्य "दिधिषोः" "दातुः" यजमानस्य अभिमतफलप्राप्तये "देवत्रा" देवान् प्रति प्रदातारम् "अमृतेषु वोचः" प्रवोचः कथयस्व एनं "दातारम्" "अमृतेषु" "देवेषु" अमुना यजमाने एतानि हवींषि प्रत्तानि ॥

एवमग्निर्वनस्पतिः ॥

यत् पुनरेतदुक्तं यूपाञ्जनीयायाम्—"यूपे वनस्पतिशब्दः" इति । अत्र ब्रूमः—अग्निरेवासौ यूपान्तर्गतो यूपात्मना वर्त्तमानो यूपाञ्जनीयायां वनस्पतिशब्देनोच्यते । तदुक्तम्—"एष हि वनानां पाता वा पालयिता वा"—इति । यस्मादन्तर्गतो वनानां वनानि न

---

१ अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा "अथैषा वनस्पतेः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

दृश्यति, तस्मादेष वनस्पतिः । उक्तं च—"योऽयमृबीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिषु अप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम्"—इति । योऽयमग्निरेवानेन वनस्पतिशब्देन यूपाभिधानेन वनस्पतिरभिधेय इत्यदोषः ॥

अपरे पुनः "अञ्जन्ति त्वाम्"—इति, अधियज्ञात् पृथक्त्वेनाधिदैवतमुत्पाद्य शाकपूणिमतेनाग्निपरत्वेनैव वर्णयन्ति । यदाप्यधियज्ञे अस्य यज्ञाङ्गाभिवादः, तदापि नाधिदैवतमग्निमभिधातुमस्याः परिहीयते सामर्थ्यं मन्त्रार्थे इति । तत् कथम् ? "अञ्जन्ति त्वामध्वरे देवयन्तः" । हे भगवन् अग्ने ! 'अञ्जन्ति त्वाम्' आधाराद्याभिराहुतिभिः 'अध्वरे' यज्ञे 'देवयन्तः' देवान् कामयमानाः । यस्मात् त्वम् 'ऊर्द्धः' स्थास्यसि ज्वलिष्यसि, यच्चे ते 'क्षयः' 'मातुः' वेद्याः 'उपस्थे' "उपस्थाने" उपरि उत्तरवेद्याः 'क्षयः' निवासः कृतः, तत्रोपज्वलितः "द्रविणानि" धनानि यज्ञसिद्धौ यज्ञफलान्यस्माकमवश्यं "दास्यासि"—इति, अतस्त्वामाहुतिभिरञ्जन्ति ॥

कात्थक्यपक्षेऽपि "देवेभ्यो वनस्पते"—"वनस्पतेरशनया नियूय"—इत्यनयोरर्थयोजना—हे 'वनस्पते' वानस्पत्य ! यूप ! त्वमुच्यसे । 'हिरण्यपर्ण' ऋतपर्ण ! वह एतानि 'हवींषि' अनुस्थिते त्वयि न एतानि उह्यन्त इति त्वमेवैषां वोढा इति प्रतीमहे । कथं च पुनर्वह ? 'प्रदक्षिणित्' यथैतानि वोढव्यानि अविपर्यस्यन्नेतेन विधिना 'रशनया' एतया त्रिवृता 'नियूय' परिवीय त्वमात्मानम् 'ऋतस्य' यज्ञस्य ये पन्थानः रजिष्ठाः प्रदिवः चिरम्, तत एवायमर्थस्त्वया हवींषि वोढव्यानीति । विज्ञायते च "यूपेन वा आहुतयः स्वर्गं लोकं यन्ति"—इति "वनस्पते रशनया नियूय" । हे 'वनस्पते' वानस्पत्य ! यूप ! 'रशनया' पिष्टतमया सुरूपतमया त्रिवृता 'नियूय' परिवीय त्वमात्मानं वह एतानि 'हवींषि' स्वाधिकारप्रयुक्तानि प्रज्ञानानि प्रजानन् "देवत्रा" देवान् प्रतिदिधिषोः हविर्दातुः अर्थसिद्धये । "प्रब्रूहि च" एनं दातारम् 'अमृतेषु' देवेषु इति ॥ ८ । २० । १ ॥

## स्वाहाकृतयः ॥ १३ ॥

## इति त्रयोदश पदानि ॥ २ ॥

**स्वाहाकृतयः स्वाहेत्येतत् सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा ॥ १ ॥**

---

१ 'सोऽयम' ॥ २ 'तथापि' ॥ ३ 'मित्रसामर्थ्यमि' ॥
४ 'किंच' ॥ ५ 'समुच्छ्रिते त्वयि' ॥

"स्वाहाकृतयः(१३)" निर्वक्तव्याः । काः पुनस्ताः स्वाहाकृतयः? याः यागार्थमाहूय उत्तमे प्रयाजे स्वाहाकारेण संस्क्रियन्ते, ताः स्वाहाकृतयः । ननु "सद्यो जातः"-इत्याग्नेयो मन्त्रः? सत्यमाग्नेयो मंत्रः शौनकस्य, तथापि स्वाहाकृतयः समाम्नाताः । किं कारणम् ? "सद्यो जातः"-इत्यनुद्रुत्य अग्नेः स्तुतिमन्त्रे "स्वाहाकृतं हविरदन्तु देवाः"-इति सम्प्रदानम् । तत्र देवतार्थे सम्प्रदानमिति स्वाहाकृतयः समाम्नाताः, नाग्निरिति ॥

अथ स्वाहाकृतयः कस्मात्? स्वाहास्वाहेत्यनुकीर्त्तनेनासामुत्तमस्य प्रयाजस्य प्रैषसंस्कारः क्रियत इति स्वाहाकृतयः ॥

अथ "स्वाहा-इति एतत्" कस्मात्? "सु" सुष्ठु "आह"-"इति वा" । यदेव सम्प्रदानदेवतायै किञ्चिदाज्यस्येत्यनेन मन्त्रेणाह तुभ्यमिदमिति, तदेव "सु-आह" शोभनमाह । एवमस्य सुः पूर्वपदम्, आह-इत्युत्तरपदम् । अथवा-इदमन्यत् ब्राह्मणानुगतं निर्वचनम्,-"स्वा वागाहेति वा" इति । विज्ञायते हि "तं स्वा वागभ्यवदज्जुहुधीति तत् स्वाहाकारस्य जन्म"-इति । अत्र च स्वशब्दः पूर्वपदम्, उत्तरपदं तथैव । अथ "स्वं प्राह इति वा" । को विशेषः पूर्वस्मात् ? पूर्वपदेऽस्य कारकान्यत्वम्,-स्वा वागाहेति कर्त्तरि, स्वं प्राहेति कर्मणि, प्रपूर्वं चोत्तरपदं प्रकर्षद्योतनाय । "स्वाहुतं हविः जुहोति इति वा" यदनेनैव हविर्जुहोतीति, तदेव सुष्ठ्वापाद्य यथाभिधानमग्नौ जुहोतीति, हविःप्रधानोऽत्र निर्देशः ॥ ८ । २१ । १ ॥

## तासामेषा भवति-॥

"तासाम्" स्वाहाकृतीनाम् "एषा" "भवति"- ॥ *

"स॒द्यो जा॒तो व्य॑मिमीत य॒ज्ञम॒ग्निर्दे॒वाना॑मभवत्पुरो॒गाः ।
अ॒स्य होतुः॑ प्र॒दिश्यृ॒तस्य॑ वा॒चि स्वाहा॑कृतं ह॒विर॑दन्तु दे॒वाः ॥"

सद्यो जायमानो निरमिमीत यज्ञमग्निर्देवानामभवत्पुरोगामयस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं हविरदन्तु देवाः ॥ २ ॥

---

* अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "स्वाहाकृतयो निर्वक्तव्याः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"सद्यो जातः ( ऋ० सं० ८, ६, ९, ५ )"—इति ॥ योऽयमग्निः "सद्यः" "जातः" "जायमानः" अनन्तरमेव "व्यमिमीत यज्ञम्" निर्वर्त्तयति यज्ञम् । यश्च जातमात्र एव "अग्निः देवानाम् अभवत्" "पुरोगाः" "पुरोगामी" अग्रतो गामी प्राधान्येन । तस्य "अस्य" "होतुः" देवानामाह्वातुः "प्रदिशि" प्राच्यां दिशि "ऋतस्य" गतस्य प्रणीतस्य उत्तरवेद्यादिकत्वेन, "वाचि" "आस्ये" वाचीत्यास्यमेवापेक्ष्य । "स्वाहाकृतं" स्वाहाकारबलात् मन्त्रेण प्रक्षिप्तं "हविः" एतदाज्यम् "अदन्तु" पिबन्तु "देवाः" स्वाहाकृतयः ॥ ८ । २१ । २ ॥

## इतीमा आप्रीदेवता अनुक्रान्ताः ॥ ३ ॥

"इति" इतिकरणोऽधिकारसमाप्त्यर्थः, प्रदर्शनार्थो वा । "इमाः" एता एव एकादश "आप्रीदेवताः" "अनुक्रान्ताः" इध्माद्याः । ननु द्वादशानामनुकीर्तनम् ? सत्यम्, अनुक्रान्तानां तु एकादश वनस्पत्यन्ताः, यासामिह विचारः, न तु स्वाहाकृतिषु विचारोऽस्ति । तत्तद्देवतासंस्कारपरत्वात् उत्तमस्य प्रयाजस्य यजतौ एकादशग्रहणात् एकादशप्रयाजविषय एवोत्तरो विचार इत्याचार्य्याभिप्रायो गम्यते । ततः किम् ? यद्यनुक्रान्तास्तान् प्रति विचारो वर्त्तिष्यते । ननु विचारितमेव "यज्ञेध्म इति कात्थक्यः, अग्निरिति शाकपूणिः"—इत्येवमादि ? सत्यम्—विचारितमेतत् । स तु प्रत्येकमाप्रीदेवतापदेषु विचारः, अयं तु सामान्यः प्रकरणगतश्चासामेव विचारोऽनिश्चितानां निश्चयावधारणार्थः, निश्चितेन हि व्यवस्थितेन विधिना भवितव्यम्, अधियज्ञे यजतौ देवताध्यानाङ्गभावश्रवणात् तदेतद्विषयमनिश्चितम् ॥ ८ । २१ । ३ ॥

## अथ किं देवताः प्रयाजानुयाजाः ? ॥ ४ ॥

"अथ"—इति विचाराधिकारवाचिना अथशब्देन विचारमधिकृत्योपोद्घन्ति—"अथ किंदेवताः प्रयाजानुयाजाः"—इति । काः प्रयाजेषु देवताः ? इति । प्रयाज इति आश्रुतादिर्यजमानोपस्थानान्तक्रियाकलाप उच्यते । प्रयाजेषु हूयमानेष्विति प्रसिद्धत्वात् । कुतः संशयः ? नानादेवता एव प्रयाजप्रवादाः । आप्रीणां वषट्कारेण सम्बन्धात् सर्वस्य चान्यस्य समञ्जसो विशेषभावः । एवं सति विप्रतिपत्तिराचार्य्ययोः कात्थक्यशाकपूण्योः । तस्माद् व्यवस्थाप्यन्त[1] इति ॥ ८ । २१ । ४ ॥

## आग्नेया इत्येके ॥ ५ ॥ २१ ॥



१. 'स्थाप्यत इ' ॥

कथं नानादेवताः प्रयाजप्रवादाः ? इति । तत्र तावत् "आग्नेयाः इति एके" । कुतः ? "आग्नेया वै प्रयाजा आग्नेया अनुयाजाः"—इति च ब्राह्मणम् । तत्र ये एतस्मिन्नर्थे सौचीकेनाग्निना विश्वैश्च देवैः परस्परसंवादे दृष्टे ऋचौ । स हि किल सौचीकोऽग्निर्विश्वैर्देवैः सह संवदते । तमूचुः—'एहि नो हवींषि वह' इति । स तानुवाच—'यज्ञे भागोऽस्तु' इति । ते तं प्रत्यूचुः—'वृणीष्व' इति । सोऽनयर्चा वव्रे—॥८।२१।५॥ *

"प्रयाजान्मे॑ अनुयाजांश्च॒ केव॑लानू॒र्जस्व॑न्तं ह॒विषो॑ दत्तभा॒गम् ।
घृ॒तं चा॒पां पुरु॑षं॒ चौष॑धीनाम॒ग्नेश्च॑ दी॒र्घमायु॑रस्तु देवाः ॥
तव॑ प्रया॒जा अ॑नुया॒जाश्च॒ केव॑ल ऊ॒र्जस्व॑न्तो ह॒विषः॑ सन्तु भा॒गाः । तवा॑ग्ने य॒ज्ञो॒३॒॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः" ॥ १ ॥

आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणम् ॥ २ ॥

"प्रयाजान् मे अनुयाजांश्च (ऋ० सं०८, १, ११, ३,४)"—इति । हे विश्वेदेवाः ! "प्रयाजान्" "मे" मम "केवलान्" अनन्यदेवतासम्पृक्तान्, अथवा—निरवशेषान् । "ऊर्जस्वन्तं" रसवन्तं सर्वस्य "हविषः" अवधार्य "दत्तभागं" "यज्ञे" "घृतं च" "अपां" सारभूतम्, ताभ्य उत्पन्नम् पिबेयमहं प्रथममाज्यभागे । "पुरुषं च ओषधीनाम्" ओषधिमयानां च हविषो मम पुरुषं पुरोडाशम् एवं नित्यं मम भागः स्यात् । मम "अग्नेः" हे "देवाः !" "दीर्घमायुः अस्तु" यथा मेम पूर्वे भ्रातरः हविर्वहन्तः वषट्कारप्रवृक्णाः, नाहं तथा मृषीष्टेत्याभिप्रायः । त्रयः पूर्वेऽग्नयः प्राग्धव्यं वह ते देवेभ्यः, तान् वषट्कारः प्रावृश्चतेति ॥ एवमुक्तास्ते अनयोत्तरर्चानुजज्ञिरे तस्य तं भागम्—"तव प्रयाजा अनुयाजाश्च केवला ऊर्जस्वन्तो हविषः सन्तु भागाः" यथा त्वयोक्तम् । अपि च किं बहुना, "तवाग्ने यज्ञोऽयमस्तु सर्वः" त्वदधीन एवायं यज्ञः सर्वोऽस्तु ॥ किंच, "तुभ्यं नमन्तां प्रदिशश्चतस्रः" प्रादिशोऽन्तभूता दिक्ष्वेव दिङ्निवासीनि भूतानि भोग्यत्वेन कल्पन्तामित्यर्थः ॥ एवं तावदाग्नेयाः ॥ ८ । २२ । १–२ ॥

---

१ 'समूदेते तमू ॥ * अत्रैवैकविंशखण्डसमाप्तिरवगन्तव्या ॥ २ 'मत्पूर्वे' ॥

छन्दोदेवता इत्यपरम् । छन्दांसि वै प्रयाजाश्छन्दांस्य-नुयाजा इति च ब्राह्मणम् ॥ ३ ॥

ऋतुदेवता इत्यपरम् । ऋतवो वै प्रयाजा ऋतवोऽनुयाजा इति च ब्राह्मणम् ॥ ४ ॥

पशुदेवता इत्यपरम् । पशवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणम् ॥ ५ ॥

प्राणदेवता इत्यपरम् । प्राणा वै प्रयाजाः प्राणा वा अनु-याजा इति च ब्राह्मणम् ॥ ६ ॥

आत्मदेवता इत्यपरम् । आत्मा वै प्रयाजाः आत्मा वा अनुयाजा इति च ब्राह्मणम् ॥ ७ ॥

अथ 'नानादेवताः प्रवादाः' इति यदुक्तम्, तदनुप्रदर्श्यते–"छन्दोदेवता इति" एवमादि ॥ ८ । २२ । ३–७ ॥

आग्नेया इति तु स्थितिः ॥ ८ ॥

तत् कोऽत्र निश्चयः ? "आग्नेयाः इति तु स्थितिः" तुशब्दोऽन्यप्रवादनिवृत्त्यर्थः । केन विशेषहेतुना आग्नेयत्वमवध्रियते ? ब्राह्मणं मन्त्रश्चोभयमाग्नेयत्वे, ब्राह्मणान्येव केवलान्य-न्यदेवतात्वे इति, एतस्मात् विशेषहेतोरवधारयामः–आग्नेया इति ॥ ८ । २२ । ८ ॥

भक्तिमात्रमितरत् ॥ ९ ॥

अथ किमन्यदन्यतमम् ? इति "भक्तिमात्रमितरत्" छन्दोदेवता–इत्येवमादि । तदुक्तम्–"बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"–इति ॥ ८ । २२ । ९ ॥

किमर्थं पुनरिदमुच्यते ॥ १० ॥

"किमर्थं पुनरिदमुच्यते" किं विचारणे प्रयोजनम् ? इति ॥ ८ । २२ । १० ॥

---

१'अपाना अनुया' ॥ २ 'स्वादीधराम' ॥

यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट् करिष्यन्निति ह विज्ञायते ॥ ११ ॥

"यस्यै देवतायै हविर्गृहीतं स्यात्, तां मनसा ध्यायेत् वषट् करिष्यन्"—"इति ह विज्ञायते"। मनसेति नामभिः संहितं हविर्देवतायै देवतामुपेयादेवमर्थश्च सर्वत्र विचारः। तथाहि दर्शितम्—"यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते"—इति। मनसेति किमर्थम्? केन वान्येन ध्यायेत्? इति। शृणु—सर्वेन्द्रियविषयप्रत्याहृतेन मनसा यथाश्रुतगृहीतभावितानां देवानां नानात्वैकत्वत्रित्वेष्वात्मनो हृदये विज्ञानमयीमालिख्य प्रतिकृतिं लक्ष्यीकृत्यानन्यमनास्तत्कालमधीत्य याज्यां वषट् करिष्यंस्तदनुचिन्तनसंस्कारसन्तानैकरसेन मनसा हविष्यभिसन्धाय देवतां ध्यायेत् इत्यस्य विशेषस्य द्योतनायार्थप्राप्तस्यापि मनसो ग्रहणं मनसा ध्यायेदिति। ब्राह्मणं चैतदर्थमेवोक्तमाचार्येण अत्र हि विशेषतः पुरुषार्थो बबन्ध इति, अतोऽन्यथा हि देवताचिन्तनशून्यं कर्म एतस्मिन् प्रधानकाले विकलमित्यफलमेव स्यात्। एष एव च ध्यानकालो यजमानस्य, आहुतिप्रक्षेपकाले न तथाऽन्येषामप्यध्वर्युप्रभृतीनामाहुतिप्रक्षेपव्यापृतानाम्, लक्षणं हि होतेति ॥ ८ । २२ । ११ ॥

इतीमान्येकादशाप्रीसूक्तानि[1] ।
तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमिति नाराशंसवन्ति ।
मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्त्यतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ॥ १२ ॥ २२ ॥

"इतीमान्येतानि एकादश आप्रीसूक्तानि" अनुक्रान्तानि। दशधा दशतयीषु, तेषामेकादशं प्रैषिकमिति। इतीमानीत्युपप्रदर्शनार्थमितिकरणः, एष एव तेष्वपि निर्वचनविचारावधारणकल्पः ॥

यस्तु तद्गतः कश्चित् विशेषः, स उच्यते—"तेषां वासिष्ठम् आत्रेयम्"—इत्येवमादि। वसिष्ठेन दृष्टं "वासिष्ठम्" अत्रिणा दृष्टम् "आत्रेयम्" वध्र्यश्वेन दृष्टं "वाध्र्यश्वम्", गृत्समदेन दृष्टं "गार्त्समदम्"। कः पुनरसौ विशेषः? "इति" एतानि "नाराशंसवन्ति"। अथ पुनः "मैधातिथं, दैर्घतमसम्, प्रैषिकम्"—इति। मेधातिथिना दृष्टं

---

1 'तान्येतान्येका' ॥ 2 'तान्येतान्येका' ॥

"मैधातिथम्", दीर्घतमसा दृष्टं "दैर्घतमसम्",-प्रैष इति ग्रन्थः, तेषु यत् तत् "प्रैषिकम्"–"इति" तदिहोपवर्णितम् । एतानि "उभयवन्ति" । "अतः अन्यानि" यानि चत्वारि अवशिष्यन्ते, तानि "तनूनपात्वन्ति" ॥

अत्र नाराशंसयाजिनो वसिष्ठादयः, तेभ्योऽन्ये तनूनपाद्याजिनः । तान्येतानि अमुना विभागेनावस्थितानि एकादश एकनिर्वचनावधारणानि ॥

अतोऽन्यानि दाशतयादाप्रीसूक्तवर्गात् सौत्रामण्यां त्रीणि, अग्न्यश्वमेधयोरेकैकम् । तत्र यानि सौत्रामण्यां तानि अनाग्नेयानीति न परिसङ्ख्यातानि, प्रैषिके[1]ऽननुक्रमणात् तेषाम् । आग्निकाश्वमेधिके तु कर्मान्तरेऽपि विनियुज्येते, न केवलमाप्रीषु, इष्टकोपधाने–आग्निकमुत्तमायां चितौ "समा॑स्त्वाग्न ऋ॒तवो॑ वर्द्धयन्तु ( य० वा० सं० २७, १ )"–इति, द्वादशाप्रीरप्योष्विति । हस्तग्रहणमाश्वमेधिकं यजमानस्य–"समि॑द्धो अ॒ञ्जन् कृद॑रं मती॒नाम् ( य० वा० सं० ३९, १ )"–इत्याप्रीभिर्हस्तं गृह्णातीति । अत आप्रीकार्ये प्रयोगव्यभिचारादाप्रीसूक्तवर्गमध्यपठिते अपि न परिसङ्ख्याते आचार्येण । सौत्रामण्यां तु प्रथमस्य पशोर्या द्वितीया आप्री, तस्यामेकस्यामेव च नराशंसतनूनपातौ–"न॒रा॒शंस॒ः प्रति॒ शूरो॒ऽमिमा॑नस्तनूनपा॒त् प्रति॑ य॒ज्ञस्य॒ धाम॑ ( य० वा० सं० २०, ३७ )"–इति । तत्र नराशंसयाजिनां वसिष्ठप्रभृतीनां यागे निपातवत् तनूनपात्पदमनर्थकम्, पादपूरणमात्रेणोपकारं मन्त्रे करोति, तथा तनूनपाद्याजिनां नराशंसपदम् । एष एव अन्यत्राप्येवंविधे देवतापदे प्रयोगादन्यथाभाविनि देवतापदानां निपातकल्पः । तद्यथा–अश्वहविषि अश्वप्रतिग्रहप्रायश्चित्ते "यद॒द्य सूर॒"–इति सौर्यमित्रावरुणानां याज्यानुवाक्ये, तयोः मित्रार्य्यम्णोर्यानि लिङ्गानि तानि निपातवद्भवन्ति । तथा "प्र चि॒त्रम॒र्कं गृ॒ण॒ते तु॒राय॒"–इति, अत्र सम्बोधनान्तमप्यग्निपदं नैपातिकम्, केवलं मारुते हविषि चातुर्मास्येषु वैश्वदेवप्रयोगे पुनः तदेवार्थवत् "आग्निमारुतीं पृश्निमालभेत वृष्टिकामः"–इत्यत्र षड्ऋचप्रयोगे । ए[2]ष एव देवतापदविचारः ॥

यस्मिन् पक्षे सर्वे आग्नेयाः प्रयाजाः–"प्र॒या॒जान् मे॑ अनुया॒जांश्च॒ केव॑ला॒न् ( ऋ० सं० ८, १, ११, ३-४ )"–इति मन्त्रदर्शनात्, तस्मिन् पक्षे 'ति॒स्रो दे॒वीः'–इत्यत्र 'भारती द्युस्थाना' 'मध्यस्थाना सरस्वती' 'पृथिवीस्थाना इळा'–इति च तद्देवतात्रयं दुष्प्रतिसमाधानम् । स्थानान्तरापत्तिस्तुत्या चाग्निरेव एता देवता इति प्रतिसमाधानम् । सौत्रामण्यां तूत्तमे पशौ "समि॑द्धो अ॒ग्निः स॒मिधा॒ सुस॑मिद्धो॒ वरे॑ण्यः"–इत्येताः "आग्नियः (य० वा० सं० २१, १२–२२ )" । तासु तनूनपादेवैकः–

---

१ 'प्रैषिकेण तु क्रमणात् तेषाम्' इति तु मुद्रितमासीत् ॥ २ 'पुनस्तदेव' ॥

"तनूनपाच्छुचिव्रतः"—इति(१३),नास्त्येव नराशंसः । तत्र नराशंसयाजिनां सौत्रामणी-प्रयोगे कथं प्रयोगः ?—किं तनूनपाच्छुचिव्रत इत्येतदेव प्रयुज्यताम्,—उतान्यतः कुतश्चिदाप्रीसूक्तादाह्रियतां नराशंस इति ? न्यायविदो मेधाविनः समनुगंस्यन्ते विशेषमिति ॥ ७ । २२ । १२ ॥ *

[द्रविणोदाः[1] कस्माद् द्रविणोदाद्रविणसो[2] मेद्यन्तुते[3]ऽथातआ[4]-प्रियः समिद्धोअद्य[5] तनूनपान्नराशंसस्याजुह्वानः[6] प्राचीनंब[7]-र्हिः[8]व्यचस्वतीरा[9]सुष्वयन्ती[10]दैव्या[11]होतारा[12]नोयज्ञं[13]यइमे[14]आविष्टचो[15]-वनस्पति[16]रुपावसृज[17]आञ्जन्ति[18]त्वां[19]देवेभ्यो[20]वनस्पतेवनस्पते रश-नयानियूय[21]संद्योजातः[22]प्रयाजान्मे द्वाविंशतिः ॥ ]

इति निरुक्ते ( उत्तरषट्के ) ऽष्टमोऽध्यायः ॥ ८ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्य्यभगवद् दुर्गस्य कृतावष्टमो [ त्रयोदशो ] ऽध्यायः समाप्तः ॥ ८ ॥

---

# अथ नवमोऽध्यायः ९.

## अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः ॥ १ ॥

"अथ"—इति विशेषाधिकारे । प्रकृतार्थादनन्तरमधिकरोति । "यानि" "पृथिव्यायतनानि" पृथिव्याश्रयाणि "सत्त्वानि" द्रव्याणि च, तेषामप्यत्र विवक्षितत्वात् । "स्तुतिं लभन्ते"—इति समाम्नातानि । "तानि" "अतः" परम् "अनुक्रमिष्यामः" व्याख्यया इति शेषः । पूर्वस्मादाप्रीगणाद् विलक्षणोऽयमश्वादिगण इति पृथगधिकारवचनम् । पृथिव्यायतनत्वाविशेषात् सर्पलाङ्गलकुसुम्भकप्रभृतीनामप्यत्रैवान्तर्भावः, तान्यपि हि स्तुतिं लभन्ते, उपलक्षणं चेदमिति । तेषां युगपदभिधानासम्भवात् क्रमोऽर्थादङ्गीकृतो भवति ॥ ९ । १ । १ ॥

---

* अत्रैव द्वाविंशखण्डसमाप्तिरवगन्तव्य॥ "इति ऋज्वर्थायां निरुक्तवृत्तावष्टमा-( त्रयोदशा ) ऽध्यायस्य तृतीयः पादः ८, ३ ॥" इति तूपलभ्यते ॥

( अथ षट्त्रिंशत्पदानि )

**अश्वः ॥ १ ॥**

**तेषामश्वः प्रथमागामी भवति ॥ २ ॥**

सति च क्रमे न मुख्यातिक्रमो न्याय्य इत्यतो ब्रवीति—"तेषामश्वः प्रथमागामी भवति"—इति। स पुनः किमर्थं प्रथमागामी ? पुरुषानन्तरं जन्म इति हि विज्ञायते,—"तस्या आहुत्याः पुरुषोऽजायत, द्वितीयामजुहोत् ततोऽश्वोऽजायत, विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोऽस्याङ्गभावः" इति ॥ ९ । १ । २ ॥

**अश्वो व्याख्यातः ॥ ३ ॥ १ ॥**

सः "अश्वः(१)" च पुनरयं "व्याख्यातः" एव प्राक्—"अश्नुते अध्वानं महाशनो भवतीति वा" ( २ । २७ ) इत्यत्र ॥ ९ । १ । ३ ॥

**तस्यैषा भवति—॥**

"तस्य" "एषा" प्राधान्यस्तुतिः अश्वस्तोमीय एव—॥ *

[ "अश्वो॒ वोळ्हा॑ सु॒खं रथं॑ हस॒नामु॑पम॒न्त्रिणः॑ ॥

शेपो॒ रोम॑ण्वन्तौ भे॒दौ वारि॒न्मण्डू॑कइच्छ॒तीन्द्रा॑येन्दो॒ परि॑स्रव ॥"

अश्वो वोळ्हा सुखं वोळ्हा रथं वोढा ॥ सुखमिति कल्याणनाम कल्याणं पुण्यं सुहितं भवति सुहितं गम्यतीति वा हसैता वा पाता वा पालयिता वा शेपमृच्छतीति वारि वारयति मा नो व्याख्यातः । तस्यैषा भवति ॥ २ ॥ ]

---

* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

१ अयं खण्डोऽध्यायान्ते खण्डगणनाकाण्डिकायां परिगणितोऽपि व्याख्यात्रा दुर्गाचार्येण न व्याख्यात इत्यत्र कारणं न जानीमः ॥

"मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ख्यन् ॥
यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥"

यद्वाजिनो देवैर्जातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्य्याणि मा नस्त्वं मित्रश्च वरुणश्चार्य्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् ॥ १ ॥

"मा नो॑ मि॒त्रः० ( ऋ० सं० २, ३, ७, १ )"–इति । दीर्घतमस आर्षम् । अश्व एवाहूयते अनेन सूक्तेन ॥ "यद् वाजिनः"–इति । यत् यानि वाजिनः अस्याश्वस्य "दे॒वजा॑तस्य" "देवैर्जनितस्य" वसुभिरादित्यात्, "सूरा॑दश्वं॑ वसवो॒ निर॑तष्ट ( ऋ० सं० २, ३, ११, २ )"–इति । अग्नेर्वा, "प्रजापतिना द्वितीयामजुहोत्, ततोऽश्वोऽजायत"–इति । "सप्तेः" "सरणस्य" । "प्रवक्ष्यामः" प्रकर्षेण वक्ष्यामः । "विद॒थे" एतस्मिन् "यज्ञे" "वीर्य्याणि" गुणान् । किं तेषाम् ? "मा नः" मास्माकं तान्युच्यमानानि "मित्रः" "वरुणः" "अर्य्यमा" वायुः, "इन्द्रः" "मरुतः" "परिख्यन्" आचक्षीरन्[2] । किं तर्हि ? अनुमन्यन्ताम् । "आयुः" अत्र "वायुः–अयनः" वकारलोपेन । स कस्मात् ? अयनात्, एति ह्यसौ विश्वम् । "इन्द्रः" "ऋभुक्षाः" स हि "उरुक्षयणः" उरावन्तरिक्षे क्षियति निवसति । अथवा–क्षियतिरैश्वर्य्यार्थः । कस्य ईष्टे ? "ऋभूणां" देवानां "राजा" "इति" "वा" च, तेषामीष्टे । एवम् ऋभुशब्दात् पूर्वपदम्, क्षियतेरैश्वर्यकर्मणः उत्तरपदम् ॥ ९ । ३ । १ ॥

## शकु॒निः ॥ २ ॥

शकुनिः शक्नोत्युन्नेतुमात्मानं, शक्नोति नदितुमिति वा, शक्नोति तकितुमिति वा, सर्वतः शङ्करोऽस्त्विति वा, शक्नोतेर्वा ॥ २ ॥ ३ ॥

"शकुनिः ( २ )" । कस्मात् ? स हि "शक्नोत्युन्नेतुमात्मानम्" । ऊर्द्ध्वं नेतुम्,

---

१ 'च सुरभिरादित्यात्' ॥ २ 'मा च परिचक्षीरन्' ॥

लघुत्वात् । शकेः पूर्वपदम्, नयतेरुत्पूर्वस्योत्तरपदम् । "नदितुमिति वा" । अथवा-नदतेस्तकतेर्वा शब्दार्थगत्यर्थयोः पूर्वोत्तरपदं विकल्पेन । अथ "वा" "सर्वतः शङ्करः" अयमस्माकम् "अस्त्विति" सर्वेण नित्यमाशासितव्यो भवति । एवं सति 'शम्'-इति सुखनाम पूर्वपदम्, करोतेरुत्तरपदम् "शक्नोतेः" एव वैकल्प्यात् । किमसौ शक्नोति यदस्य योग्यं शंकितुम् ॥ ९ । ३ । २ ॥

तस्यैषा भवति-॥

"तस्य" "एषा" प्राधान्यस्तुतिः "भवति"-॥ *

"कनि॑क्रदज्ज॒नुषं॑ प्रब्रुवा॒ण इय॑र्त्ति॒ वाच॑मरि॒तेव॒ नाव॑म् ।
सु॒म॒ङ्ग॒लश्च॑ शकुने॒ भवा॑सि॒ मा त्वा॒ काचि॑दभि॒भा विश्व्या॑ विदत् ॥"

न्यक्रन्दीज्जन्म प्रब्रुवाणो यथाऽस्य शब्दस्तथा नामेरयति वाचमीरयितेव नावं सुमङ्गलश्च शकुने भव कल्याणमङ्गलः ॥
मङ्गलं गिरतेर्गृणात्यर्थे, गिरत्यनर्थानिति वा ।
अङ्गलमङ्गवत् ।
मज्जयति पापकमिति नैरुक्ताः ।
मां गच्छत्विति वा । मा च त्वा काचिदभिभूतिः सर्वतो विदद् ॥ १ ॥

"कनिक्रदज्जनुषम्० ( ऋ० सं० २, ८, ११, १ )"-इति । गृत्समदस्यार्षम् । शकुनिरुतश्रवणे जपे विनियोगः । "कनिक्रदत्" "न्यक्रन्दीत्" पुनःपुनः भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्द्धर्चमपेक्ष्य । "जनुषं" "प्रब्रुवाणः" आत्मनोऽभिजातिं प्रकथयन्निव, "इयर्त्ति वाचम्" इयर्षि वाचम् । कथम्? "अरिता इव" "ईरयिता इव" नाविक इव, पुनःपुनः "नावं" पारगमनाय यस्त्वमेवमीरयसि, स त्वं "सुमङ्गलः च" हे "शकुने!" प्रशस्तमङ्गलश्च अस्माकं

---

१ 'शंकितुम्' इति तु मुद्रितमासीत् ॥ * अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा-" इत्यतः प्रागेवोचितासीदयन्तव्या ॥

"भव" । वयमपि च तुभ्यमित्याशास्महे—"मा त्वा काचित्" "अभिभा" "अभिभूतिः" परोपद्रवः । "विश्व्या" सर्वप्रकारा सर्वतो "विदत्" विदत्विति । "यथास्य शब्दः, तथा नामेरयति" तदिदं शकुनिषु बहुलमित्यत्रोक्तम् ॥

"मङ्गलं" कस्मात् ? "गिरतेः" धातोः "गृणात्यर्थे" वर्त्तमानस्य, स्तुत्यं हि तद् भवति । "गिरति अनर्थान् इति वा" अस्यैव वा गिलनार्थस्य । किमिदं गिलति? उत्पद्यमानमेवेदमनर्थान् गिलति भक्षयति वा ॥

अथवा—"अङ्गलम्" एतन्मकारोपजनेन मङ्गलम् । कोऽर्थः ? "अङ्गवत्" अङ्गैरवयवैः दधिमध्वक्षतादिभिः तद्वत् । रो मत्वर्थे, व्यत्ययश्च रलोः ॥

अथवा—मज्जयतेः मङ्गलम् । किम् ? "मज्जयति पापकम्—इति नैरुक्ताः" उत्पद्यमानमेवैतत् मङ्गलिनः पुरुषस्य मज्जयति नाशयति यदस्य किञ्चित् पातकं भवति । एवं मज्जयतेर्मङ्गलम्—इति नैरुक्ताः विदुः ॥

"मां गच्छतु इति वा" गमेर्वा । स एतत् मन्यते मामेतद् गच्छत्विति ॥ ९।४।१॥

**गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे ॥ २ ॥ ४ ॥**

"गृत्समदमर्थमभ्युत्थितम्" इति । स्तुतिलाभकारणम्, स किल किञ्चिदर्थं सिसाधयिषुरभ्युत्तस्थौ, तमभ्युत्थितं "कपिञ्जलः" शकुनः "अभिववाशे" तत्सिद्धिमावेदयन् । यथा चैतदेवम् ॥ ९ । ४ । २ ॥

**तदभिवादिन्येषग्भवति—॥**

"तदभिवादिनी एषा ऋग् भवति"—॥ *

**"भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।**
**भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जलः ॥"**

**इति सा निगदव्याख्याता ॥**

**गृत्समदो गृत्समदनः । गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः ॥ १ ॥**

"भद्रं वद दक्षिणतः०"—इति । इह शकुनिः किल कस्याञ्चिद् दिशि साधुर्भवति,

---

* अत्र चतुर्थखण्डसमाप्तिर्दृश्यते, सा "तदभिवादिनी" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

कस्याञ्चिदसाधुः । स एष ब्रवीति-"दक्षिणतः" "उत्तरतः" "पश्चात्" "पुरस्तात्" च सर्वत एव त्वमस्माकम् "कपिञ्जलः" "भद्रं" "वद" इति ॥

"गृत्समदः = गृत्समदनः" गृत्सश्चासौ मदनश्च गृत्समदनः । गृत्सः = मेधावी, मदनः = हर्षालुः ॥ ९ । ५ । १ ॥

## मण्डूकाः ॥ ३ ॥

**मण्डूका मज्जूका मज्जनात्, मदतेर्वा मोदतिकर्मणः, मन्दतेर्वा तृप्तिकर्मणः, मण्डयतेरिति वैयाकरणाः, मण्ड एषामोक इति वा, मण्डो मदेर्वा मुदेर्वा ॥ २ ॥ ५ ॥**

"मण्डूकाः ( ३ )"-इत्येतत् पदं वक्तव्यम् । य एते "मण्डूकाः" एते "मज्जूकाः" । कस्मात्? "मज्जनात्" नित्यमग्ना ह्येत उदके ॥ "मदतेः वा" स्यात् "मोदतिकर्मणः" नित्यप्रमुदिता हि ते ॥ "मन्दतेः वा" स्यात् "तृप्तिकर्मणः" नित्यतृप्ता हि ते, प्रचुरोदकत्वात् ॥ "मण्डयतेः"-"इति वैयाकरणाः" ते हि भक्तिभिर्नानाचित्राभिः विधात्रा मण्डिता भवन्ति । "मण्ड एषाम् ओकः"-"इति" "वा" 'मण्डे' उदके "एषाम्" "ओकः" निवासः-"इति वा" मण्डूकाः ॥ ९ । ५ । २ ॥

**तेषामेषा भवति-॥**

"तेषाम् एषा भवति"-॥ *

**"संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।**
**वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥"**

**संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः । अपि वोपमार्थे स्याद् ब्राह्मणा इव व्रतचारिण इति । वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः ॥ १ ॥**

"संवत्सरं शशयानाः० ( ऋ० सं० ५, ७, ३, १ )"-इति । वसिष्ठस्यार्षम् ॥ "संवत्सरं" "शशयानाः" "शिश्यानाः" निर्वाचः संवत्सरं सुप्ता इव स्थित्वा "ब्राह्मणाः" "अब्रुवाणाः" सर्वथा सन्तो वक्तुम्, "व्रतचारिणः" कृतवाक्संयमाः, ततः प्रावृट्-

---

* अत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

कालं प्राप्य अभिवृष्टाः "पर्जन्यंजिन्विताम्" पर्जन्येन तर्पिताम् "वाचम्" "प्र मण्डूकाः अवादिषुः" प्रावादिषुर्मण्डूकाः । अथवा—न युक्तो रूढिपरिवादो ब्राह्मणशब्दस्येति लुप्तोपमः प्रकल्प्यते—"ब्राह्मणा इव व्रतचारिणः" इति । यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मेखलिनो नियतकालां तां वैदिकीं वाचं वदन्ति, एवं प्रावादिषुरिति ॥ ९ । ६ । १ ॥

**वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त । स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव ॥ २ ॥ ६॥**

"वसिष्ठो वर्षकामः" इति । स्तुतिगमननिमित्तं स किल वर्षन्तं "पर्जन्यम्" "तुष्टाव" । "तं मण्डूकाः" "अन्वमोदन्त"—स्तुहि स्तुहि इति । "सः" तान् "मण्डूकान्" "अनुमोदमानान्" वाश्यमानान् "दृष्ट्वा" लब्धं वर्षनिमित्तमिति परितुष्टः, तानेव "तुष्टाव" ॥ ९ । ६ । २ ॥

**तदभिवादिन्येषर्ग्भवति—॥**

यथा चैतदेवम्, "तदभिवादिनी एषा ऋग् भवति"—॥ *

**"उप प्रवद मण्डूकि वर्षमा वद तादुरि ।**
**मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ॥"**
**इति सा निगदव्याख्याता ॥ १ ॥**

"उप प्रवद मण्डूकि"—इति । हे "मण्डूकि !" मण्डूकानां मातः ! अथवा—मण्डूकपते ! मण्डूकि ! "मा" माम् "उप" गम्य "प्र" प्रकर्षेण "वद" । कथं च प्रवद ! "वर्षम्" "आ" आभिमुख्येन "वद" "तादुरि" तरणशीले ! अथवा—तावत्-उदरि ! यावच्छरीरं तावदेवोदरं तस्याः । ततो वृष्टे देवे आप्लुते उदकेनैतस्मिन्नेकजलीभूते "मध्ये" "ह्रदस्य" उदकस्य बहुनः "प्लवस्व" उपरि "विगृह्य" प्रसार्य "चतुरः" "पदः" पदानित्यर्थः । पादशब्दस्य पदादेशः क्रियते ॥९।७।१ ॥

**अक्षाः ॥ ४ ॥**

**अक्षा अश्नुवत एनानिति वाभ्यश्नुवत एभिरिति वा ॥२।७॥**

---

* अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा "यथा चैतदेवम् । तदभि" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ एतस्मादग्रे 'एता.' इति पाठोऽधिक उपलभ्यते ॥

"अक्षाः ( ४ )"-इत्येवमादीनि लब्धस्तुतित्वात् पृथिव्यायतनत्वसामान्यादिह वर्गे समाम्नातानि । तेषां ते च यथासमाम्नानमेव "अक्षाः" प्रथमं निर्वक्तव्याः । कस्मात् ? "अश्नुवत एनान् इति वा" दीव्यन्तः कितवाः एतान् अक्षान् पाणिभिः । "अश्नुवते" व्यापयन्ति त एते, अश्नोतेः कर्मणि कारके । अथवा "अभ्यश्नुवते" अभिपूर्वस्य तस्यैवाश्नोतेः करणे कारके, तर्हि कितवाः प्रतिकितवं धनम् अभ्यश्नुवते ॥९।७।२॥

तेषामेषा भवति-॥

"तेषाम्" "एषा भवति" स्तुतिः-॥ *

"प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ॥
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्॥"

प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति । प्रवातेजाः प्रवणेजाः । इरिणे वर्त्तमानाः ॥ इरिणं निर्ऋणम् ऋणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा । सोमस्येव मौजवतस्य भक्षः ॥

मौजवतो मूजवति जातः ॥

मूजवान् पर्वतो मुञ्जवान् ॥

मुञ्जो विमुच्यत इषीकया ॥

इषीकेषतेर्गतिकर्मणः । इयमपीतरेषीकैतस्मादेव । विभीदको विभेदनाद् ॥

जागृविर्जागरणात् । मह्यमचच्छदत् प्रशंसत्येनान् प्रथमया निन्दत्युत्तराभिऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ॥ १ ॥

"प्रावेपा मा० ( ऋ० सं० २, ५, ५, ४ ) ॥"-इति । अक्षपुत्रस्य मौजवत आर्षम् । "प्रावेपाः" "प्रवेपिणः" प्रकर्षेण वेपनशीलस्य वृक्षस्य जाताः "बृहतः"

---

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"महतः" "मा" माम् "मादयन्ति" हर्षयन्ति वा, तर्पयन्ति वा । "प्रवातेजाः" प्रचुरवाते स्थाने काले वा जाताः, प्रावृट्काले, पक्कानां वा प्रचुरवाते काले पतनाभिप्रायं जन्म । "विभीदकः" एक एव वा विशेष्यते यः प्रवणे उदकबहुले देशे जातः, "तस्य फलानि" अक्षाः । "इरिणे वर्वृताना:" निर्गतर्णे आस्फुरकस्थाने वर्त्तमानाः, न हि तत्र पुत्रपौत्रानुगमृणं भवति । "अपार्णे" वा, उपसर्गस्यान्यत्वमेव केवलम्, अथवा—"अपार्णम्" अपगतोदकम् । "अपरता अस्मात् ओषधयः इति वा" कथं मादयन्ति ? "सोमस्य इव" यथा सोमस्य "मौजवतस्य" "भक्षः" यजमानं मादयति, हर्षयति, तर्पयति तथा । "विभीदकः" विभेत्ता कोष्ठयस्य, "जागृविः" जागरणकर्त्ता, यो जयति, स हर्षेण जागर्त्ति, योऽपि जीयते स दुःखेन जागर्त्ति । स एषः विभीदकः एवम्प्रकारः "मह्यम्" "अच्छान्" "अचच्छदत्" स्वेन फलशब्देन सर्वार्थेषु पुनः पुनः भृशं वा मनः छादयित्वा देवने एवैकस्मिन् मम मनः उत्साहयति ॥

"मौजवतः" सोमः । स कस्मात् ? "मूजवति जातः" ॥

अथ "मूजवान्" कः ? "पर्वतः" । स कस्मात् मूजवान् ? "मुञ्जवान्" मुञ्जैस्तद्वान् ॥

अथ "मुञ्जः" कस्मात् ? स हि "विमुच्यते इषीकया" ॥

अथ "इषीका" कस्मात् ? "इषतेः गतिकर्मणः" सा हि निर्गता भवति मुञ्जात् । "इयमपीतरा इषीका एतस्मादेव" या हेलीषा[2], अन्या वा, सापि हि निर्गता भवति ॥ ९ । ८ । १ ॥

## ग्रावाणः ॥ ५ ॥

### ग्रावाणो हन्तेर्वा, गृह्णातेर्वा ॥ २ ॥ ८ ॥

"ग्रावाणः (५)" कस्मात् ? "हन्तेः वा" तदर्थोपपत्तेः, वर्णव्यापत्त्युपजनाभ्याम् ; "गृणातेः वा" स्तुत्यर्थस्य, स्तूयन्ते हि ते । "गृह्णातेः वा" गृह्यन्ते हि ते ॥ ९।८।२॥

### तेषामेषा भवति—॥

"तेषाम्" "एषा" स्तुतिः "भवति"—॥ *

---

१ 'विशिष्य' ॥ २ 'हलेषा' इति तु मुद्रितमासीत्—तन्न साधु, शकन्ध्वादिन्वात्पररूपप्राप्तेरबाधात् ॥ * अत्राष्टमखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचितावगन्तव्या ॥

"प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ॥
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः॥"

प्रवदन्त्वेते प्रवदाम वयं ग्रावभ्यो वाचं वदत वदद्भ्यो यदद्रयः पर्वता आदरणीयाः सह सोममाशवः क्षिप्रकारिणः, श्लोकः शृणोतेः, घोषो घुष्यतेः, सोमिनो यूयं स्थेति वा सोमिनो गृहेष्विति वा ॥ १ ॥

"प्रैते वदन्तु० ( ऋ० सं० ८, ४, २९, १ )"-इति । अर्बुदस्येयमार्षम् । यस्मात् ते "अद्रयः" "आदरणीयाः" आदरणार्हाः, "पर्वताः" पर्ववन्तः, "साकमाशवः" सहभूताः सोममश्नीथ, अभिषुणुथ । ते तं चाभिषुण्वन्तः"इन्द्राय" "श्लोकं" श्रवणीयम्, हृद्यम्, "घोषं" शब्दं "भरथ" धारयथ, निर्वर्त्तयथ । ये ते यूयमसुना प्रकारेण यस्मात् "सोमिनः" भवथ । अथवा-"सोमिनः" सोमेन तद्वतो यजमानस्य "गृहेषु" एवं कुरुध्वे, तस्मात् युष्मानधिकृत्य ब्रवीमि-"प्रैते वदन्तु" युष्मदर्थं स्तुतीः उद्गातारः । "प्रवदाम" च "वयम्" होतारः । अध्वर्यूनपि च ब्रूमहे,-एभ्यः "ग्रावभ्यः" "वाचं वदद्भ्यः" । "वदत" वाचं या वक्तव्यैतान् प्रतीति ॥ ९ । ९ । १ ॥

## नाराशंसः ॥ ६

### येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः ॥ २ ॥ ९ ॥

"नाराशंसः ( ६ )" इति समाम्नातः । कः पुनरेष नाराशंसः? "येन नराः प्रशस्यन्ते, स नाराशंसो मन्त्रः" ॥ किमत्र मन्त्रः स्तूयते ? न, इत्युच्यते लक्षणम्, मन्त्रैः नराः स्तूयन्ते । एवं तर्हि नराणामेव समाम्नानं प्राप्तमासीत् ! न, तेषां सामान्यस्तुत्यभावात्, राज्ञाञ्च स्तुत्युपपत्तेः । तेषामपि च सामान्या स्तुतिर्नास्ति । अस्ति त्वेकैकश्येन केषाञ्चित्, अतो भावयव्यं लक्षणीकृत्य नाराशंसो मन्त्र उदाह्रियते ॥ ९ । ९ । २ ॥

### तस्यैषा भवति-॥

"तस्य" नाराशंसस्य मन्त्रस्य उदाहरणम्, "तस्य" वा भावयव्यस्य प्राधान्यस्तुतिः "एषा" ऋक् "भवति"-॥ *

---

* अत्र नवमखण्डसमाप्तिर्दृश्यते, सा "तस्य नाराशंसस्य" इत्यतः प्रागुचिता ॥

"अमन्दान्स्तोमान्प्रभरे मनीषा सिन्धावधि क्षियतो भाव्यस्य।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः॥"
अमन्दान् स्तोमानबालिशाननल्पान् वा । बालो बलवर्त्ती भर्त्तव्यो भवत्यम्बास्मा अलं भवतीति वाम्बास्मै बलं भवतीति वा बलो वा प्रतिषेधव्यवहितः प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा । सिन्धावधि निवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवानतूर्त्तो राजा तूर्ण इति वाऽत्वरमाण इति वा प्रशंसामिच्छमानः ॥ १ ॥ १० ॥

"अमन्दान् स्तोमान् (ऋ०सं० २, १, ११, १)"–इति ॥ दानपरितुष्टः कक्षीवान् ब्रवीति । "अमन्दान्" "अबालिशान्" "अनल्पान्" वा, अबालिशयोग्यान् "प्रभरे" प्रहरे उच्चारये । "मनीषा" "स्तुत्या, प्रज्ञया वा" । कस्य? "भाव्यस्य" "भावयव्यस्य" भावनेनैवासावर्जनेनैव सर्वार्थान् यवयति मिश्रयति अनुष्ठापयतीति भावयव्यः।क "निवसतः"? "सिन्धौ अधिक्षियतः"।यः किमकरोत्? "यो मे" "सहस्रं" बहून् "सवान्" यज्ञान् "अमिमीत" "निरमिमीत" निर्मितवान्, बहूनां यज्ञानां यागोपकरणं दत्तवान् । "अतूर्त्तः" "अतूर्णः" अचपलः, अत्वरमाणः । क्रमेण यो निरमिमीत सहस्रं "मे" मम सवान् "श्रवः" "प्रशंसाम्" "इच्छमानः" "अमन्दान्" स्तोमान्, तस्मै भावयव्याय राज्ञे प्रभरे अहमिति ॥ ९ । १० । १ ॥ *

यज्ञसंयोगाद्राजा स्तुतिं लभेत ।
राजसंयोगाद्युद्धोपकरणानि ॥ १ ॥

"यज्ञसंयोगाद्राजा स्तुतिं लभेत"–इति,–एवमादि । तदेतत् पूर्वप्रकृतस्यैवं भावयव्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते । यस्मात् सहस्रं सवान् निरमिमीत, तस्मात् प्रभर इति केचित् मन्यन्ते ॥ अपरे पुनः युद्धोपकरणानामुत्तरेषां सामान्य-

* अत्र दशमखण्डसमाप्तिर्दृश्यते ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ नवमा-(चतुर्दशा)ऽध्यायस्य प्रथमः पादः ॥ ९, २ ॥" इति चोपलभ्यते ॥

मेतत् स्तुतिलाभनिमित्तमिति वर्णयन्ति । तत् कथम् ? इति । अश्वमेधे हि "जीमूतस्येव भवति प्रतीकम्"—इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः, सन्नद्धकवचः, राजा स्तूयते । स कस्मादित्युपोद्धत्योच्यते,—"यज्ञसंयोगाद् राजा स्तुतिं लभेत" स तावद् यज्ञसंयोगात् स्तुतिं लभते ॥

अथ पुनर्युद्धोपकरणानि किमिति स्तुतिं लभन्ते ? इति,—"राजसंयोगात् युद्धोपकरणानि" । युद्धाय उपक्रियन्ते इति युद्धोपकरणानि, युद्धे वा उपकुर्वन्तीति युद्धोपकरणानि । स एष हि व्यापी स्तुतिसङ्क्रमन्याय आचार्येणोपदर्शितः । तद्यथा—युद्धोपकरणानि राजसंयोगात् स्तुतिं लभन्ते, तस्य तानि अङ्गानीति तत्सम्बन्धात् स्तूयन्ते,—राजापि यज्ञसंयोगात्,—यज्ञोऽपि दे[१]वतासंबन्धात्,—देवता अप्यात्मसम्बन्धात्, सोऽयमेवात्मैवाङ्गप्रत्यङ्गभावेनावस्थितः सर्वाव[२]स्थाता स्तूयत इत्यात्मस्तुतिरेवेयं सर्वा । तदुक्तम्—

"स्थाने स्थाने स्तुतिः सर्वा स्थानाधिपतिभागिनी ।
आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः ॥" इति ॥
एष स्तुतिसंक्रमन्यायः सर्वत्रोपसन्धेयः ॥ ९ । ११ । १ ॥

## तेषां रथः प्रथमागामी भवति ॥ २ ॥

"तेषां रथः प्रथमागामी भवति" । कस्मात् ? तदाधारत्वादितरेषां युद्धोपकरणानाम् ॥ ९ । ११ । २ ॥

## रथः ॥ ७ ॥

## रथो रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद्विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा, रसतेर्वा ॥ ३ ॥ ११ ॥

"रथः (७)" कस्मात् ? "रंहतेः गतिकर्मणः" तस्य हि तदर्थैवोत्पत्तिः । "स्थिरतेः वा स्याद् विपरीतस्य" स्थिरः सन् रथ इत्युक्तः, तत्र हि स्थिरः सुप्रतिष्ठितो योद्धा भवति, न तथा अश्वादिषु ॥ ९ । ११ । ३ ॥

## तस्यैषा भवति—॥

"तस्य" "एषा" "भवति" स्तुतिः—॥ *

---

१ 'देवतासंयोगात्' ॥ २ 'वस्थः' ॥ * अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुन्नितावगन्तव्या ॥

"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥"
वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरो गोभिः सन्नद्धो असि वीळयस्वेति संस्तम्भस्वास्थाता ते जयतु जेतव्यानि ॥ १ ॥

"वनस्पते वीड्वङ्गः० ( ऋ० सं० ४, ७, ३५, १ )"—इति । गर्गस्यार्षम् । हे "वनस्पते" वानस्पत्य ! रथ ! त्वमुच्यसे,—"वीड्वङ्गः" "दृढाङ्गः" "भूयाः" "भव" । ततश्च "अस्मत्सखा" अस्मन्मित्रः । "प्रतरणः" प्रतारणः, संग्रामाणां पारं नेता । "सुवीरः" "कल्याणवीरः" अविक्लवानवखण्डिताधिष्ठाता भव । किंच, कृतप्रतीकारस्त्वमस्माभिः "गोभिः सन्नद्धः असि" समन्ततो नद्धो बद्धः गव्येन चर्मणा श्लेष्मणा च । स त्वं कृतप्रतीकारमात्मानं मत्वा तेन हेतुना सुतरामात्मानं "वीळयस्व" संस्तम्भुहि । संस्तब्धे च त्वय्यवस्थितः "आस्थाता ते" अधिष्ठाता तव योद्धा, यानि तेन "जेत्वानि" "जेतव्यानि" आत्मनोऽभीप्सितानि, तानि सर्वाणि "जयतु" ॥ ९ । १२ । १ ॥

## दुन्दुभिः ॥ ८ ॥

दुन्दुभिरिति शब्दानुकरणम् । द्रुमो भिन्न इति वा, दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः ॥ २ ॥ १२ ॥

"दुन्दुभिः ( ८ )"—इति । अस्य योऽभिधेयः, तस्य "शब्दानुकरणम्" आत्मनो नामधेयप्रतिलम्भनिमित्तम्, यथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम ॥ "द्रुमो भिन्न इति वा" । द्रुमशब्दात् पूर्वपदम्, भिदेरुत्तरपदम्, तत्सम्भवो ह्यसौ द्रुमैकदेशनिष्कुषितश्चर्मणा पिनद्धः ॥ ९ । १२ । २ ॥

तस्यैषा भवति--॥

"तस्य एषा भवति"—॥ *

---

* अत्र द्वादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त्॥
स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑ सेध॒ शत्रू॑न् ॥"

उपश्वासय पृथिवीं च दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत् स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद् दूरतरमपसेध शत्रून् ॥ १ ॥

"उप॑ श्वासय पृथि॒वीम्० ( ऋ० सं० ४, ७, ३५, ४ )"—इति। अत आरभ्य सर्वा एता युद्धोपकरणा ऋचः, भारद्वाजस्यार्षम्। हे "दुन्दुभे !" "उपश्वासय" उपशब्दय, आपूरय शब्देन एतां च "पृथिवीम्" कृत्स्नाम्। "उत" "द्याम्"। अपि चैकस्यापि सतस्तव "पुरुत्रा" बहुत्वे वर्त्तमानस्य "मनुताम्" "मन्यताम्" "घोषम्"। यच्चेदं "विष्ठितं" "स्थावरम्" यच्चेदं "जगत्" "जङ्गमं च"। यस्यैवं तव सामर्थ्यं द्यावापृथिव्यावापूरयितुम्, "सः" त्वम् "दुन्दुभे !" "सजूः" "सहजोषणः" सहप्रीतिः "इन्द्रेण" "च" अन्यैः "च" "देवैः"। "दूरात्" "दवीयः" "दूरतरम्" "अपसेध" अपकालय अपुनरागमनाय "शत्रून्" अस्मच्छत्रून्—इत्येतदाशास्महे त्वत्तः ॥ ९ । १३ । १ ॥

## इषुधिः ॥ ९ ॥

## इषुधिरिषूणां निधानम् ॥ २ ॥ १३ ॥

"इषुधिः ( ९ )" "इषूणां निधानम्" तूणः, तस्मिन्निषवो निधीयन्ते ॥ ९ । १३ । २ ॥

## तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"ब॒ह्वी॒नां पि॒ता ब॒हुर॑स्य पु॒त्रश्चि॒श्चा कृ॑णोति॒ सम॑नाव॒गत्य॑ ॥
इ॒षु॒धिः सङ्काः॒ पृत॑नाश्च॒ सर्वाः॑ पृ॒ष्ठे निन॑द्धो जयति॒ प्रसू॑तः ॥"

---

* अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

बहूनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य प्रस्मयत इवापाव्रियमाणः शब्दानुकरणं वा, सङ्काः सचतेः सम्पूर्वाद्वा, किरतेः । पृष्ठे निनद्धो जयति । प्रसूत इति व्याख्यातम् ॥ १ ॥

"बह्वीनां पिता० ( ऋ० सं० ५, १, १९, ५ )"–इति । योऽयमिषुधिः "बह्वीनां" "बहूनाम्" इषूणां "पिता" पाता रक्षिता, तदर्थत्वात् । यस्य चेषुधेः "बहुः" इषुकलापः "पुत्रः" पुरुणो बहुनः त्राता, तदर्थं ह्यसौ रक्षत इत्येवं व्युत्पाद्यम् । यश्चायं "चिश्चाकृणोति" "प्रस्मयत इव अपव्रियमाणः" प्रकर्षेण स्मयत इव उद्घाट्यमानः, चित्रपुङ्खत्वात् । अथवा–हसतीव शोभया पुङ्खदीप्त्या । अस्मिन् पक्षे[ऽर्थे] चिश्चातिरपठितोऽपि धातुः कल्प्यत इति, विकारपक्षेषु तदर्थान्यधातूपादानम्–इत्याचार्यपरिभाषा । अथ "वा" "शब्दानुकरणम्" चिश्चिदित्येवं शब्दं करोति । कदा ? "समना" संग्रामम् "अवगत्य" प्राप्य । स एष इषुधिः "सङ्काः" संकटान् सम्पृक्तान् वा संग्रामान् "पृतनाः च सर्वाः" याः स्पर्द्धमानैः इषव एव केवलमभिलक्ष्य क्षिप्यन्ते पताकार्थम्, तानेवंविधान् संग्रामान् "पृष्ठे" रथस्य, मनुष्यस्य "निनद्धः" निबद्धः "जयति प्रसूतः" क्षिप्तो धनुष्मता–इत्येतदाशास्महे ॥ ९।१४।१॥

## हस्तघ्नः ॥ १० ॥

हस्तघ्नो हस्ते हन्यते ॥ २ ॥ १४ ॥

"हस्तघ्नः ( १० )" कलापीपङ्क्तः, गोधेति च यमाहुः । स कस्मात् ? "हस्ते" ह्यवस्थितोऽसौ ज्यया "हन्यते" ॥ ९ । १४ । २ ॥

तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"अहि॑रिव भो॒गैः पर्ये॑ति बा॒हुं ज्याया॑ हे॒तिं प॑रि॒बाध॑मानः ।
ह॒स्त॒घ्नो विश्वा॑ व॒युना॑नि वि॒द्वान्पुमा॒न्पुमां॑सं॒ परि॑ पातु वि॒श्वतः॑ ॥"

अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात् परित्रा-

---

* अत्र चतुर्दशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**यणमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् ।**

**पुमान् पुरुमना भवति ।**

**पुंसतेर्वा ॥ १ ॥**

"अहिरिव भोगैः० ( ऋ० सं० ५, १, २१, ४ )"—इति । योऽयम् "अहिरिव भोगैः" सर्प इव कुटिलभावैः, सर्पग्राहकस्य बाहुं सर्पेणेव "पर्येति" "परिवेष्टयति" "बाहुम्" धनुष्मतः पुरुषस्य । "ज्याया हेतिं परिबाधमानः" । "ज्याया वधात्" ज्याघातात् बाहुं सर्वतस्त्रायमाणः तदर्थत्वात् तस्य । सोऽयमेवन्धर्मा "हस्तघ्नः" "पुमान्" इव पुरुमना इव, कश्चिदाप्तः प्रज्ञानबहुलः "पुमांसम्" एतं धनुष्मन्तम् "परिपातु विश्वतः" सर्वप्रकारं सर्वतः पातु—इत्येतदाशास्महे ॥

( अथ "पुमान्" कस्मात् ? "पुरुमनाः" )[1]

स्त्रियमपेक्ष्याल्पमनस्कां पुरुषे बहुतरं मनः ॥ "पुंसतेः वा" पुरुषार्थस्य, पौंस्यमिति यस्य बलनाम भवति ॥ ९ । १५ । १ ॥

## अभीशवः ॥ ११ ॥

**अभीशवो व्याख्याताः ॥ २ ॥ १५ ॥**

"अभीशवः ( ११ )"—इति वक्तव्यम् । ते पुनरमी "व्याख्याताः" अभिधानतोऽभिधेयतश्च "अभीशवोऽभ्यश्नुवते"—इति ॥ ९ । १५ । २ ॥

**तेषामेषा भवति—॥**

"तेषाम् एषा भवति"—॥ *

**"रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।**
**अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥"**

**रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते । सुषारथिः कल्याणसारथिः । अभीशूनां महिमानं पूजयामि मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः ॥ १ ॥**

---

१ अयं कोष्ठकान्तर्गतः पाठः क्वापि नोपलभ्यते ॥ * अत्र पञ्चदशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ।

"रथे तिष्ठन्नयति वाजिनः० ( ऋ० सं०५,१,२०,१ )"—इति । यदेतत् "रथे" "तिष्ठन्" वर्त्तमानः "सुषारथिः" "कल्याणसारथिः" सुशिक्षितोऽपि सारथिः, नेता रथस्य "वाजिनः" "पुरः" "पुरस्तात्" अग्रतः "सतः" रथयुक्तान्, रथस्य नीडे "पश्चात्" सन् उपतिष्ठंस्तिष्ठन् । क ? "यत्र यत्र कामयते" यत्र यत्रेच्छति योद्धा, तत्र तत्र "नयति"। तदेतत् किं सारथेर्माहाभाग्यम् ? न इत्युच्यते, अनभीशुको हि सारथिः किं कुर्यात् सुशिक्षितोऽपि ? एवम् "अभीशूनाम्" एतं "महिमानं" माहाभाग्यं "पनायत" पूजयामि । यत् "मनः" अश्वानामतिप्रवृद्धजवानामपि, येषु अश्वेषु उपनिबद्धाः "रश्मयः" प्रगृहीताः सारथिना "पश्चात्" "सन्तः" "मनः" "अनुयच्छन्ति" उपरमयन्तीत्यर्थः । सम्बोध्याभावात् पनायतेत्यस्य पूजयामीति पुरुषवचनव्यत्ययः ॥ ९ । १६ । १ ॥

## धनुः ॥ १२ ॥

**धनुर्धन्वतेर्गतिकर्मणः, वधकर्मणो वा, धन्वन्त्यस्मादिषवः ॥ २ ॥ १६ ॥**

"धनुः ( १२ )" "धन्वतेः" गत्यर्थस्य, तद्बलेन हीषवो गच्छन्ति ॥ "वधकर्मणो वा" शत्रुवधाय हि तदुत्पद्यते ॥ ९ । १६ । २ ॥

**तस्यैषा भवति--॥**

"तस्य एषा भवति"–॥ *

**"धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम॥ धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम॥"**

**इति सा निगदव्याख्याता ॥**

**समदः समदो वात्तेः, सम्मदो वा मदतेः ॥ १ ॥**

"धन्वना गाः० ( ऋ० सं० ५, १, १९, १ )"—इति ॥ ताः "गाः" तावत् "धन्वना" धनुषा वयम् अरिभ्यः "जयेम" । अपि च "आजिम्" । इतरेतरस्पर्द्धया यत्र लक्ष्यवेधायैव केवलमिषवः क्षिप्यन्ते वैतर्क्येण प्रतापार्थं वा तम् आजिम् आजवनं धनुषैव वयं जयेम । अपि च याः "तीव्राः" दारुणाः "समदः" संग्रामाः,

---

१ 'उपतिष्ठन् उपविष्टः' ॥ २ 'तेषु' ॥ * अत्र षोडशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिताऽवसेया ॥

अनेकशस्त्रसम्पातसङ्कटाः, अनेकवीरपुरुषाकीर्णाः, ताः अपि वयं "जयेम" "धन्वना" धनुषैव। अपि च—किं बहुना, समासत एव ब्रूमः—'धनुः शत्रोः अपकामं कृणोति' यत्र यत्र शत्रुरस्मान् जेतुकामः स्यात्, ततस्ततोऽपगतकाममस्मत्तो धनुः करोतु। अपगतकामे च तस्मिन् शत्रौ वयं "धन्वना" धनुषैवैताः "सर्वाः" दिशः, "प्रदिशः" च "जयेम"—इत्येतदाशास्महे ॥

"समदः समदो वा, सम्मदो वा"। सम्पूर्वस्य "अत्तेः" भक्षणार्थस्य, भक्षित इव हि तत्र परस्परतः। "मदतेर्वा" हर्षणार्थस्य द्वितयिम्—सम्मदो वेति, संहृष्टास्तत्र हि परस्परतो युध्यन्ते ॥ ९ । १७ । १ ॥

## ज्या ॥ १३ ॥

### ज्या जयतेर्वा, जिनातेर्वा, प्रजावयतीषूनिति वा ॥ २ ॥ १७ ॥

"ज्या ( १३ )"—इति वक्तव्यम्। सा पुनरियं "जयतेर्वा जिनातेर्वा"। धात्वन्यत्वमर्थैकत्वम्। तद्बलेन हि जीयते। स पुनरेष धनुर्गुणः ॥ ९ । १७ । २ ॥

### तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

**"वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना॥ योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती—॥"**

**वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्ती ॥ १ ॥**

"वक्ष्यन्तीवे० ( ऋ० सं० ५, १, १९, ३ )"—इति। येयं योषिदिव काचित् कस्मैचिदिष्टाय पुरुषाय किञ्चिद् रहस्यं "वक्ष्यन्ती इव" कथयिष्यन्तीव ज्या, धनुष्मता पुरुषेण इषुं चिक्षिप्सता सव्येन दक्षिणेन वा पाणिना कृष्यमाणा सव्यं दक्षिणं वा "कर्णं" प्रत्याकृष्यते। धनुष्मता तथा मध्यम् आत्मनो निनीय इषुं "गनीगन्ति" "आगच्छति"। कथम्? इति। "प्रियं सखायं परिषस्वजाना" प्रियम् इष्टं काचित् कंचित् सखायं समानख्यानम् उपजातप्रीतिम्, स्त्री पुरुषमिव इषुम् "परिष्वजमाना"

---

* अत्र समदशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिताऽवगन्तव्या ॥

सम्प्रीत्यर्थ एव, सस्वजानेत्यभ्यासोऽनर्थकः, अर्थविशेषाभावात् । यथा हि सा कर्णे प्रत्याकृष्यते धनुष्मता, तथा मध्यमात्मनो निनीयेषुं परिष्वजत इव । किमेतावदेव ? न इत्युच्यते,—या च इयं "योषा इव शिङ्क्ते" योषिदिव, विदग्धा काचित् कामिना पुरुषेण आत्मानं प्रत्याकृष्यमाणोपजायमानपरितोषा कामिनः पुरुषस्य हर्षमुत्पादयन्ती "शिङ्क्ते" सुकुमारमव्यक्तशब्दं करोति । "वितताधिधन्वन्" धनुषि अध्यारोपिता, सेयम् अस्माकमेवमादिगुणयुक्ता "ज्या" "समने" "संग्रामे" "पारयन्ती" अस्तु, "पारम्" अन्तं "नयन्ती" अस्तु शत्रूणाम्—इत्येतदाशास्महे ॥ ९ । १८ । १॥

## इषुः ॥ १४ ॥

## इषुरीषतेर्गतिकर्मणो वधकर्मणो वा ॥ २ ॥ १८ ॥

"इषुः (१४)"—इत्येतत् "ईषतेः गतिकर्मणः" तदर्थमेवासावुत्पाद्यते, वधार्थस्य वा, तदर्थमेव ह्यसौ गच्छति ॥ ९ । १८ । २ ॥

## तस्यैषा भवति--॥

"तस्य एषा भवति"—॥ *

**"सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता।**
**यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥"**

**सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः सन्नद्धा पतति प्रसूतेति व्याख्यातं यत्र नराः सन्द्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेषु ॥ १ ॥**

"सुपर्णं वस्ते० (ऋ० सं० .५, १, २१,१)"—इति। य एते "सुपर्णं" "वस्ते" वसतेऽङ्गार्द्धे "वाजान्" "इषवः"। येषां च एतेषां "मृगः" "मृगमयः" "दन्तः" यदि मार्गाणि फलानि, अमार्गेषु वा व्यधनस्वभावात् मार्गयन्तीव,—किं नु तद् वेद्धव्यं स्यात् यदहं विध्येयमिति। ये चेमे "गोभिः सन्नद्धाः" गव्येन स्नाय्वा श्लेष्मणा च समन्ततो नद्धाः, "पतति" गच्छन्ति, धनुष्मता "प्रसूताः" क्षिप्ताः । त एवमादि-

---

* अत्राष्टादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽव गन्तव्या ॥ १ 'तु' ॥

गुणयुक्ताः "इषवः" "यत्र" यस्मिन् संग्रामे "नरः" नराः मनुष्याः "संद्रवन्ति" सङ्गच्छन्ति "च" "विद्रवन्ति च" पुनर्विगच्छन्ति, "तत्र" अस्मभ्यं "शर्म" "शरणं" सुखं जयनिमित्तं "यंसन्" "यच्छन्तु" ददतु—इत्येतदाशास्महे॥९।१९।१॥

## अश्वाजनी ॥ १५ ॥

अश्वाजनीं कशेत्याहुः । कशा प्रकाशयति भयमश्वाय ।

कृष्यतेर्वाणूभावाद् ॥

वाक् पुनः प्रकाशयत्यर्थान् ।

खशया ।

क्रोशतेर्वा ॥ २ ॥ १९ ॥

"अश्वाजनी (१५)"—इत्येतत् पदम् । तां पुनरेतां "कशा—इत्याहुः" । अश्वाजनीत्येतत् न निर्वक्तव्यम्, प्रत्यक्षवृत्तित्वादस्य । अथ "कशा" कस्मात्? सा हि "प्रकाशयति" प्रख्यापयति "भयम् अश्वाय" ॥

"कृष्यतेः वा अणूभावात्" अपकृष्टा हि सा भवति चर्मणोऽण्वी ॥

"वाक्" अपि कशा इत्युच्यते, सा "पुनः प्रकाशयत्यर्थान्" इति ॥

अथवा—"खशया" वाक्, खे मुखाकाशे शेते इति ॥

"क्रोशतेः वा" शब्दार्थस्य ॥ ९ । १९ । २ ॥

अश्वकशाया एषा भवति—॥

"अश्वकशायाः" या त्वश्वकशा, तस्याः "एषा भवति" स्तुतये—॥ *

"आजंङ्घन्ति सान्वेषां जघनाँ उपंजिघ्नते ।

अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥"

आघ्नन्ति सानून्येषां सरणानि सक्थीनि ॥

सक्थिः सचतेरासक्तोऽस्मिन् कायः ॥

जघनानि चोपघ्नन्ति ॥

---

* अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा "अश्वकशाया या त्वश्वकशा" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**जघनं जङ्घन्यते। अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय ॥ १ ॥**

"आजङ्घन्ति सान्वेषाम्० ( ऋ० सं० ५, १, २१, ३ )"—इति ॥ "आजंघन्ति"—इति शतरि सम्बोधनम्। हे "अश्वाजनि!" "आजंघन्ति!" "सानु" "सानूनि" "एषाम्" "सरणानि" समुच्छ्रितानि "सक्थीनि" कटिप्रदेशान् "जघना उपजिघ्रते!" "जघनानि" स्फिग्देशाः, तांश्च हे अश्वाजनि! उपजिघ्रति! इदमपि शतर्येव।रथ्यानां हि कटिप्रदेशमश्वाजन्यभिहन्ति, पृष्ठ्यानां स्फिग्देशान् । हे "अश्वाजनि!" या त्वमेवमभिहंसि, सा त्वमेतान् "अश्वान्" "प्रचेतसः" "प्रकृष्टचेतसः" गमनं प्रति समुत्सुकान् "समत्सु" "समरणेषु" संग्रामेषु तथा "चोदय" यथा जयेयम्—इत्येतदाशास्महे ॥

"सानूनि = सक्थीनि" तानि पुनः "सरणानि" तद्बलेन हि सरन्ति सर्त्तारः ॥

"सक्थिः" कस्मात्? "सचतेः" । किमस्मिन् सक्तम्? "आसक्तोऽस्मिन्" "कायः" कृत्स्नं शरीरम् ।

"जघनम्" कस्मात्? तद्धि "जंघन्यते" भृशं हन्यते कशया ॥ ९ । २० । १ ॥

## उलूखलम् ॥ १६ ॥

**उलूखलमुरुकरं वोर्ध्वखं वोर्क्करं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् । उरुकरं वैतत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम् ॥ २ ॥ २० ॥**

"उलूखलम्(१६)"—इत्येतत् पदम्। तत् कस्मात्? तद्धि उरुकरत्वात् "उरुकरम्" बह्वन्नम् करोति, उरुशब्दात् पूर्वपदम्, करोतेरुत्तरपदम् । "उर्क्करं वा" ऊर्क्शब्दात् पूर्वपदम्, करोतेरेवोत्तरपदम्, ऊर्ज एव हि करणार्थं तदुत्पद्यते । "ऊर्ध्वखं वा" ऊर्ध्वशब्दात् पूर्वपदम्, खशब्दादुत्तरपदम्, ऊर्ध्वमेव हि तस्य खातं भवति । अथवा "उरु मे कुरु—इत्यब्रवीत् तदुलूखलमभवत्" । तत् किल क्रियमाणम् उरु मे खं कुर्वित्यब्रवीदिव, तथागुणयुक्तत्वात् तस्य । तदुलूखलमभवत् ब्राह्मणमपि च भवति—"उरुकरं वै तत्तदुलूखलमित्याचक्षतेऽपरोक्षेण" उरु करोतीत्युरुकरमेतत् प्रत्यक्षम-

---

१ 'वैतत्त' ॥

व्यवहितगुणविधानम् । तत् पुनरेतत् रेकोर्व्यत्ययेन व्यवहितगुणमुच्यते उलूखलमिति ॥ ९ । २० । २ ॥

**तस्यैषा भवति-॥**

"तस्य" "एषा" स्तुतिः "भवति"-॥ *

**"यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।**
**इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥"**
**इति सा निगदव्याख्याता ॥ १ ॥ २१ ॥**

"यच्चिद्धि त्वं गृहेगृहे॰ ( ऋ॰ सं॰ १, २, २५, ५ )"-इति । शुनःशेपस्यार्षम् । "आयजी वाजसातमा"-इति च । सोमाभिषवे विनियोगः । अभिमन्त्र्य चोपधीयते अग्निचयने । हे "उलूखलक !" "युज्यसे" । यद्यपि त्वम् अन्नसंस्कारार्थे "गृहे गृहे" युज्यसे, तथापि त्वम् "इह" एव अस्मद्गृहे "द्युमत्तमं" । दीप्तिमत्तमम् गम्भीरम् अन्नैर्बहुभिः संस्क्रियमाणैः शब्दं "वद" । कथम् ? "जयतामिव दुन्दुभिः" ये हि जयन्ति, तेषामेतदेव जयस्य पूर्वरूपं भवति गम्भीरस्वरो दुन्दुभिः, ये पुनर्जीयन्ते, तेषां रूक्षस्वर इति ॥ ९ । २१ । १ ॥ *

**वृषभः ॥ १७ ॥**

**वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा तद् वृषकर्मा वर्षणाद् वृषभः ॥ १ ॥ २२ ॥**

"वृषभः ( १७ )" कस्मात् ? स हि "प्रजां वर्षति" प्रजोत्पत्तिकारणं रेतः सिञ्चति योनौ । "अतिबृहति रेतः इति वा" रेतः सेक्तुमतिशयेनासावात्मानमुद्यच्छति । "तद् वृषकर्मा, वर्षणात् वृषभः" । तेनास्य वृषकर्मणा रेतोवर्षलक्षणेन गौरप्यतिशयेन यो युक्तोऽसावपि "वृषणात्" रेतोवर्षणाद्धेतोः भकारमुपजनीकृत्य वृषभ इत्युच्यते ॥ ९ । २२ । १ ॥

---

१ रकोरिति । रेफयोः स्थाने लकारौ ककारस्य स्थाने खकार इति व्यत्ययः । * अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ २ 'गंभीरस्वनो'॥ * अत्रैकविंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ नवमा ( चतुर्दशा )ऽध्यायस्य द्वितीयः पादः ॥ ९, २ ॥" इति चोपलभ्यते ।

तस्यैषा भवति--॥

"तस्य" गोवृषभस्य "एषा" स्तुतिः "भवति"-॥ *

"न्यक्रन्दयन्नुपयन्त एनममेहयन्वृषभं मध्य आजेः ॥
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥"

न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातम् । अमेहयन् वृषभं मध्य आजेराजयनस्याजवनस्येति वा, तेन तं सूभर्वं राजानम् । भर्वतिरत्तिकर्मा।तद्वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय ॥ प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन् धनानि भवंति ॥ १ ॥

"न्यक्रन्दयन्नुपयन्त एनम्० ( ऋ० सं० ८, ५, २०, ५ )"-इति ॥ एवं तावत् "व्याख्यातम्" प्रतिपदम्, एकवाक्यतया तु मन्त्रस्य व्याख्येयमिति । मन्त्रदृग् ब्रवीति,-यत् वृषभकेणाजैषीस्त्वमेनं राजानमिति । तत्र मे श्रृणुत-यम् "एनम्" "आजेः" शरपथस्य संग्रामस्य "मध्ये" वर्त्तमानं "वृषभम्" "न्यक्रन्दयन्" "उपयन्त" उपयन्ति, न्यक्रन्दयन्त एनं हे जनाः ! फुत्कारवन्तं कारयतेति, उपयन्ति उपगच्छन्ति परिवृण्वन्ति । "अमेहयन्" मेहयन्तश्च तं मुहूर्त्तं स्थीयताम्, यावदयं शकृन्मूत्रं करोति ततो लघुसुखं भविष्यतीति, स हि गोमिनाम् आजिसृतां स्वभावः । "तेन" अमुना वृषभेण "सूभर्वं" सुभगं शोमनभोगं "राजानम्" वा "तद्वा" "सुभगं" सुयवसदेशं समृद्धम्, "शतवत्" शतैस्तद्वत्सङ्ख्याकम्, "सहस्रं" "गवां" दशशतानि, यद्वा,-असङ्ख्यं बहु । किम् ? इति । "मुद्गलः" अहम्, "प्रधने" संग्रामे धनं प्रतिस्पर्द्धया विजिगीष्वोरावयोः प्रवृत्तयोर्वाहिकायां "जिगाय" जितवानिति ॥ ९।२३।१॥

द्रुघणः ॥ १८ ॥

द्रुघणो द्रुममयो घनः ॥ २ ॥

"द्रुघणः ( १८ )" इत्येतत् पदम् । स पुनरेषः "द्रुममयो घनः" । द्रुप्रकृतिः,

---

* अत्रैव द्वाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्य गोवृषभस्य" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'शकृन्मूत्रम्' । इत्यपेक्षितमिति भाति ॥

तत्प्रकृतवचने मयट्, द्रुशब्दात् पूर्वपदम्, घनशब्दादुत्तरपदम्, मुद्गरोऽभिधेयः ॥ ९ । २३ । २ ॥

**तत्रेतिहासमाचक्षते—मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय ॥ ३ ॥ २३ ॥**

"तत्रेतिहासमाचक्षते"—इति । स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः- "मुद्गलो भार्म्यश्वऋषिः" इत्येवमादि । स किल द्वितीयस्य गोरभावात् राज्ञा सह प्रतिस्पर्द्धमानः ऐश्वर्यादन्वादिश्य[1] "द्रुघणं" वृषभेण सह "युक्त्वा" राज्ञा सहाजिं ससर्प, स च तं "जिगाय" जितवान् ॥ ९ । २३ । ३ ॥

**तदभिवादिन्येषर्ग्भवति—॥**

यथा चैतदेवम्, "तदभिवादिनी" तस्यार्थस्य अभिवादिनी "एषा ऋग् भवति"—॥*

**"इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।**
**येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥"**

**इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानं येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु । पृतनाज्यमिति संग्रामनाम पृतनानाम् जनाद्वा जयनाद्वा ॥ मुद्गलो मुद्गवान्, मुद्गगिलो वा, मदनं गिलतीति वा, मदंगिलो वा, मुदंगिलो वा ।**

**भार्म्यश्वो भृम्यश्वस्य पुत्रः । भृम्यश्वो भृमयोऽस्याश्वा अश्वभरणाद्वा ॥ १ ॥**

"इमं तं पश्य वृषभस्य॰ (ऋ॰ सं॰ ८, ५, २१, ४)"—इति । जितायामाजौ अवसिताजिमरणमाज्यन्त एवापविद्धं मुद्गरो मुद्गलः केनचित् पृष्टः,—केन सह युक्तः वृषभेणेमं राजानमजैषीरिति ? स तमुपदिशन्नेव द्रुघणमाज्यन्ते तस्मिन्नपविद्धमसावश्नमिव

---

१ दैश्वर्यं दत्त्वादिश्य' ॥ * अत्रैव त्रयोविंशखण्डसमाप्तिर्दृश्यते, सा "यथाचैतदेवम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥



+ द्वितीया तु युक्ता।

कुत्सयन् राजानमनयर्चा तस्मै प्रत्याचचक्षे,–इमं तं पश्य येनाजैषमिति । "वृषभस्य" "युञ्जम्" "सहयुजम्" । क्व वर्त्तमानम् ? "काष्ठायाः" आज्यन्तस्य "मध्ये" "द्रुघणं" "शयानम्" अपविद्धम् । "येन जिगाय शतवत्सहस्रम्"–इति व्याख्यातम् ॥

"पृतनाज्यम्–इति संग्रामनाम" । तत् कस्मात् ? "पृतनानाम् अजनाद्वा" पृतनाः मनुष्याः, ते यस्मिन्नजन्ति गच्छन्ति, पृतनाशब्दात् पूर्वपदम्, अजतेरुत्तरपदम् । "जयनाद्वा" तत्रोत्तरपदे विकल्पयन्ति, ते हि तत्र जयन्ति ।

"मुद्गलः=मुद्गवान्" । लो मत्वर्थे । अथ "वा" "मुद्गगिलः" मुद्गभोजनप्रायः, मुद्गशब्दात्[1] पूर्वपदम्, गिलशब्दात्[2] उत्तरपदम् । "मदनं गिलति इति वा" मदनः कामः, तमसौ गिलति वशीकरोति, जितेन्द्रिय इत्यर्थः । मदनशब्दात् पूर्वपदम्, गिलतिशब्दात् उत्तरपदम् । "मदङ्गिलः वा" मद उद्रेकः, तमसौ गिलति, उपशान्त इत्यर्थः । "मुदंगिलः वा" हर्षमसौ गिलति, निवृत्त इत्यर्थः ॥

"भार्म्यश्वः=भृम्यश्वस्य पुत्रः" । "भृम्यश्वः" पुनः "भ्रमयोऽस्याश्वाः" अनवस्थायिनः । "अश्वभरणात् वा" बिभर्त्ति वासावश्वान् ॥ ९ । २४ । १ ॥

## पितुः ॥ १९ ॥

## पितुरित्यन्ननाम पातेर्वा, पिबतेर्वा, प्यायतेर्वा ॥ २ ॥२४॥

"पितुः–इति(१९)" एतत् वक्तव्यम् । तत् पुनरेतत् "अन्ननाम" । तत् कस्मात् ? "पातेः वा" रक्षणार्थस्य, "पिबतेः वा" पानार्थस्य ॥ ९ । २४ । २ ॥

**तस्यैषा भवति–॥**

"तस्य एषा भवति"–॥ *

**"पितुं नु स्तोषं मुहो धुर्माणुं तर्विषीम् ।**
**यस्य॑ त्रितो व्योज॑सा वृत्रं विप॑र्वमुर्दय॑त् ॥"**

**तं पितुं स्तौमि महतो धारयितारं बलस्य ॥**

**तविषीति बलनाम तवतेर्वा वृद्धिकर्मणः । यस्य त्रित ओजसा बलेन । त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति ॥ १ ॥**

---

१ 'मुद्गशब्दः' ॥ २ 'गिलशब्दः' ॥ * अत्र चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"पितुं नु स्तोषम्० ( ऋ० सं० २, ५, ६, १ )"-इति ॥ अगस्त्यस्यार्षम् । "यस्य" पितोः "ओजसा" बलेन बलाधिपतिरपीन्द्रः, "त्रितः" "त्रिस्थानः" त्रिषु स्थानेष्वप्रतिहतप्रभावः । "वृत्रं" मेघम्, "विपर्वं" विगतपर्वाणम्, विगतसन्धि-बन्धनं कृत्वा "वि अर्दयत्" विविधमर्दयति अपुनरावृत्तये । "तं" "पितुम्" अन्नमहं "तविषीं" तविषीसंज्ञकस्य "महः" "महतः" बलस्य "धर्माणं" "धारयितारं" "स्तोषम्" "स्तौमि" । को हि नाम न तत् स्तूयात् यस्मादृते त्रिलोकाधिपतिरपीन्द्रः किञ्चिदप्यशक्तः प्रकर्त्तुमित्यभिप्रायः। "तविषीति बलनाम" "तु वृद्धौ"-इत्यस्य, तद्धि सर्ववस्तुभ्यो ज्यायः ॥ ९ । २५ । १ ॥

## नद्यः ॥ २० ॥

## नद्यो व्याख्याताः ॥ २ ॥ २५ ॥

"नद्यः ( २० )" अवसरप्राप्ताः, ताः पुनरेताः "व्याख्याताः"-"नदना भवन्ति शब्दवत्यः"-इति ॥ ९ । २५ । २ ॥

**तासामेषा भवति-॥**

"तासाम् एषा भवति"-॥ *

**"इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचता परुष्ण्या ॥ असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥"**

**इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेव-ध्वमसिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणुहि सुषोमया चेति समस्तार्थः ॥**

"इमं मे गङ्गे यमुने० ( ऋ० सं० ८, ३, ६, ५ )"-इति ॥ हे "मरुद्वृधे !"-"गङ्गे !" ( १ ), "यमुने !" ( २ ), "सरस्वति !" ( ३ ), "शुतुद्रि !" (४), यूयम् "इमम्" "मे" मम "स्तोमम्" "सचत" "आसेवध्वम्"। "परुष्ण्या" ( ५ ), सह "मरुद्वृधे" "आर्जीकीये !" ( ६ ), त्वमपि "असिक्न्या" ( ७ ), "वितस्तया" (८), "सुषोमया" ( ९ ), च सह "आशृणुहि" आभिमुख्येन स्थित्वा शृणुहि-"इति समस्तार्थः" । एवं सर्वत्र पूर्वं समस्तार्थो वक्तव्य इत्युपप्रदर्शनार्थम् ॥

---

* अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा "तासामेषा भवति" इत्यतः प्रागे-वोचिताऽवगन्तव्या ॥

अथैकपदनिरुक्तम्—गङ्गा गमनात् ॥

यमुना प्रयुवती गच्छतीति वा, प्रवियुतं गच्छतीति वा ॥

सरस्वती सर इत्युदकनाम सर्त्तेस्तद्वती ॥

शुतुद्रीशुद्राविणी क्षिप्रद्राविण्याशु तुन्नेव द्रवतीति वा ॥

इरावतीं परुष्णीत्याहुः—पर्ववती भास्वती कुटिलगामिनी ॥

असिक्न्यशुक्लासिता—सितमिति वर्णनाम तत्प्रतिषेधोऽसितम् ॥

मरुद्वृधाः सर्वा नद्यो मरुत एना वर्द्धयन्ति वितस्ताऽविदग्धा विवृद्धा महाकूला ॥

आर्जीकीयां विपाडित्याहुः । ऋजीकप्रभवा वर्जुगामिनी वा, विपाड्विपाटनाद्वा, विप्राशनाद्वा, विप्रापणाद्वा, पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद्विपाडुच्यते । पूर्वमासीदुरुञ्जिरा ॥

सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः ॥

सिन्धुः स्यन्दनात् ॥ १ ॥

"अथैकपदनिरुक्तम्"—।

"गङ्गा, गमनात्" सा हि विशिष्टं स्थानं गच्छति, गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा ( १ ) ॥

"यमुना, प्रयुवती गच्छति" प्रकर्षेण मिश्रयत्यन्याभिः नदीभिः स्वान्युदकानि गच्छति । "प्रवियुतं गच्छतीति वा" स्तिमितमिव तरङ्गैर्गच्छति ( २ ) ॥

"सरस्वती" "सर इत्युदकनाम" तत् कस्मात् ? "सर्त्तेः" सृ—गतौ—इत्यस्य, तेन सरसा विशिष्टेन "तद्वती" विज्ञायते हि राजसूये सारस्वतीनामपामभिषेकार्थवादः—"वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रामत्, तत् त्रेधाभवत्, भृगुस्तृतीयमभवच्छ्रायन्तीयं सरस्वती तृतीयं प्राविशत्" इति ॥ ( ३ ) ॥

"शुतुद्री=शुद्राविणी=क्षिप्रद्राविणी" । शु–इति क्षिप्रनाम । अथवा–आशु क्षिप्रमसौ "तुन्नेव" विद्धेव केनचित् "द्रवति" आकारलोपः पूर्वपदे ( ४ ) ॥

"इरावतीं परुष्णीत्याहुः" येयमिरावतीति लोके प्रसिद्धा, तामिमामेतस्मिन् मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः । सा कस्मात् ? "पर्ववती" ॥ किमुक्तं भवति ? "कुटिलगामिनी" इति, तदस्याः पर्ववत्त्वम्, यानि कुटिलानि तानि पर्वाणीव तस्याः, तैस्तद्वतीति ( ५ ) ॥

"असिक्नी" कस्मात् ? सा हि "अशुक्ला=असिता" ॥ कथम् ? "सितमिति वर्णनाम" स च पुनः शुक्ल इति प्रसिद्धो लोके,–"सितासितौ यद्वृषौ" इति बलदेववासुदेवावधिकृत्योक्तम्, "तत्प्रतिषेधः" तस्य शुक्लस्य प्रतिषेधः "असितम्" कृष्णमित्यर्थः । तस्मात् कृष्णोदका असिक्नी ( ६ ) ॥

"मरुद्वृधाः" "सर्वाः नद्यः, मरुतः एनाः वर्द्धयन्ति" वर्षेण । तस्मात् प्रत्येकं नद्यभिधानमनुषज्यते विशेषणत्वेन,–हे मरुद्वृधे !, गङ्गे ! हे मरुद्वृधे ! यमुने ! इत्यादि । "वितस्ता=अविदग्धा" वैदेहको नामाग्निः स किल नदीः अन्याः निर्ददाह, न तामिति सामिधेनीब्राह्मणे विज्ञायते । अथवा–"विवृद्धा, महाकूला" विस्तीर्णा ( ७ ) ॥

"आर्जीकीयां लोके विपाडित्याहुः" । सा कस्मात् ? "ऋजीकप्रभवा" ऋजीको नाम पर्वतः, तस्मात् प्रभवतीति तद्धितेन । अथवा–"ऋजुगामिनी" सती आर्जीकीया । "विपाट्" "विपाटनाद् वा" विपाटयत्यसौ भूमिमतिवेगवत्त्वात् गच्छन्तीति । "विपाशनाद् वा" । किमस्यां व्यपाशयन्त ? "पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः" । वशिष्ठः किल ममज्जास्यां मुमूर्षुः, पुत्रमरणशोकार्त्तः पाशैरात्मानं बद्ध्वा, तस्य किल ते पाशा अस्यां 'व्यपाश्यन्त' व्यमुच्यन्त उदकेन । ततःप्रभृति सा विपाट् अभवत् । "पूर्वम् आसीत् उरुञ्जिरा" नाम सा, उरुजलेत्यर्थः । "विप्रापणाद् वा" उदकानां विपाट् ( ८ ) ॥

"सुषोमा = सिन्धुः" । सा कस्मात् ? "यत् एनाम्" अभिप्रसुवन्ति" अभिगच्छन्ति अन्याः प्रभूताः "नद्यः" ॥

"सिन्धुः" कस्मात् ? "स्यन्दनात्" सा ह्यविच्छेदेन विशेषतः स्यन्दत इति ॥ ९ । २६ । १ ॥

## आपः ॥ २१ ॥

आप आप्नोतेः ॥ २ ॥ २६ ॥

"आपः (२१)"—इत्येतत् पदम्। ताः पुनरेताः "आप्नोतेः" सर्वमाभिराप्यं-मिति ॥ ९ । २६ । २ ॥

तासामेषा भवति—॥

"तासाम् एषा भवति" ॥—*

"आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन।
म॒हे रणा॑य॒ चक्ष॑से ॥"

आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनाय ॥ १ ॥

"आपो॒ हि ष्ठा० (ऋ० सं० ७, ६, ५, १)"—इति। सिन्धुद्वीपस्यार्षम्। हे "आपः" आपयित्र्यः! "स्थ" "मयोभुवः" मयोभावयित्र्यश्च, "सुखभुवः" सुख-भावयित्र्यः, याः, ताः यूयं "नः" अस्माकम् "ऊर्जे" "अन्नाय" यथा वयमन्नं लप्स्याम, भोजनाय च नः "दधातन" धारयत अनुगृह्णीध्वम्। किञ्च, "महे रणाय" "महते च नो रणाय रमणीयाय" "चक्षसे" "दर्शनाय", श्रुतिस्मृत्यु-दितसम्यग्दर्शना भूत्वा अन्नप्रयोगे यथा वर्त्तेमहि, तथा कुरुध्वं यूयम्—इत्येतदा-शास्महे ॥ ९ । २७ । १ ॥

ओषधयः ॥ २२ ॥

ओषधय ओषद्धयन्तीति वा।
ओषत्येना धयन्तीति वा।
दोषं धयन्तीति वा ॥ २ ॥ २७ ॥

"ओषधयः (२२)"—इत्येतत् पदम्। ताः पुनः एताः "ओषद् धयन्ति" यत् किञ्चिदोषत् शरीरे दहद् रोगजातं भवति क्षयादि, तदेता अत्ताः सत्यो धयन्ति, पिबन्ति, नाशयन्ति। तदेवम् ओषतेः पूर्वपदम्, धयतेरुत्तरपदम्, कर्त्तरि कारके ॥

"ओषति एना धयन्ति—इति वा" ओषति कस्मिंश्चिदुदरादावङ्गे एना धयन्ति पिबन्ति प्राणिनो दाहोपशमनाय, तावेव धातू कर्मणि कारके।

---

१ 'रासमि' * अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा "तासामेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"दोषं धयन्तीति वा" यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे, तमेता धयन्तीति । दोषशब्दात् पूर्वपदम्, धयतेरेवोत्तरपदम्, कर्त्तर्येव कारके ॥९।२७।२॥

**तासामेषा भवति—॥**

"तासाम्" ओषधीनाम् "एषा" ऋक् "भवति"—॥ *

**"या ओष॑धीः पूर्वा॑ जा॒ता दे॒वेभ्य॑स्त्रियु॒गं पु॒रा ।**
**मनै॒ नु ब॒भ्रूणा॑म॒हं श॒तं धामा॑नि स॒प्त च॑ ॥"**

**या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा । 'शतं धामानि सप्त च' । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । जन्मान्यत्राभिप्रेतानि सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा ॥ १ ॥**

"या ओष॑धीः पूर्वा॑ जा॒ता० ( ऋ० सं ८, ५, ८, १ )"—इति । ओषधिसूक्ते प्रथमैव । अग्निचयने क्षेत्रमनेन मन्त्रेण ग्राम्यारण्याभिरोषधीभिरुप्यते । "याः" एताः "ओषधयः" "पूर्वाः" प्रथमाः "जाताः" । कुतः ? "देवेभ्यः" न तावद् देवा उत्पद्यन्ते, अथैता एव पूर्वमुत्पद्यन्ते । कियति काले ? "त्रियुगं पुरा" कलिद्वापर-त्रेताभ्यः पूर्वम्, आदिकल्पे, आद्ये कृतयुगे, देवानामपि ह्यन्नमनपेक्ष्य जीवनहेतु-स्थितिर्नास्तीति पूर्वमन्नमुत्पद्यते पश्चाद् देवा इति । किं तासाम् ? इति,— "मनै नु बभ्रूणामहं शतं धामानि सप्त च" । तासाम् अहं बभ्रूणां बभ्रुवर्णानाम् ओषधयः स्वभावतः सर्वा एव पच्यमाना बभ्रुवर्णाः कपिलाः सम्पद्यन्ते । मनै जाने शतं धामानि, सप्त च सप्ताधिकं शतमहं तासां यथावज्जाने । अथवा—बभ्रूणामिति वर्णव्याप्त्या "हरणानाम्"—इति, ता हि क्षुदादि हरन्ति । "भरणानाम् इति वा" भर्त्र्यस्ताः सर्वस्य भूतग्रामस्य वा । ओषधयः प्रथमा जाताः "देवेभ्यस्त्रीणि युगानि पुरा मन्ये" तद् बभ्रूणामहं बभ्रुवर्णानां हरणानामिति वा । 'शतं धामानि सप्त च' व्याख्यातमेतत् । "धामानि त्रयाणि भवन्ति,—स्थानानि,

---

* अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा "तासामोषधीनाम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

नामानि, जन्मानि" इति, इह तु "जन्मानि अभिप्रेतानि" । सप्तशतम् ओषधिजातयः एतस्मिन् मन्त्रे अभिप्रेताः । अथवा-"सप्तशतं पुरुषस्य मर्मणाम्, तेषु एना दधाति-इति वा" अस्मिन् पक्षे धामानि स्थानानि ॥ ९ । २८ । १ ॥

## रात्रिः ॥ २३ ॥

रात्रिर्व्याख्याता ॥ २ ॥ २८ ॥

"रात्रिः (२३)"-इत्येतत् पदम् । तत् पुनरेतदभिधानतोऽभिधेयतश्च व्याख्यातम्,-"रातेर्दानकर्मणः"-इति ॥ ९ । २८ । २ ॥

तस्या एषा भवति-॥

"तस्याः" "एषा" स्तुतिः "भवति"-॥ *

"आ रा॑त्रि पार्थि॑वं॒ रजः॑ पि॒तुर॑प्रायि॒ धाम॑भिः ।
दि॒वः सदां॑सि बृह॒ती वि ति॑ष्ठस॒ आ त्वे॒षं व॑र्त्तते॒ तमः॑ ॥"

आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः सदांसि बृहती महती वितिष्ठस आवर्त्तते त्वेषं तमोरजः ॥ १ ॥

"आ रा॑त्रि पार्थि॑वं॒ रजः॰"-इति । कुशिकस्यार्षम्, रात्र्या वा । हे "रात्रि !" या त्वम् "आपूपुरः" "पार्थिवं रजः" पृथिवीलोकम् आपूरयासि । किं केवलमेतदेव ? न, इत्युच्यते,-"धामभिः" "मध्यमस्य स्थानैः" सह, सहान्तरिक्षेण, तदपि ह्यापूर्यते तमसा । किमेतावदेव ? न, इत्युच्यते,-किं तर्हि ? "दिवः" द्युलोकस्यापि यानि "सदांसि" सदनानि, येषु हि द्युलोकवासिनः सदनेषु स्थानेषु, सीदन्ति तान्यपि । "बृहती" महती यस्मात् त्वम्, तस्माद् दूरेऽपि वर्त्तमाना "वितिष्ठसे" विष्टभ्य तिष्ठसि-न केवलं विष्टभ्यैव तिष्ठसि, किं तर्हि ? आपूर्य द्युलोकमपि तत्पूरणातिशिष्टं "तमः" "त्वेषं" महत् पुनरिममेव लोकं प्रति आवर्त्तते यस्याः तव, सा त्वमस्माकं सर्वदा शिवा भव-इत्येतदाशास्महे ॥ ९ । २९ । १ ॥

## अरण्यानी ॥ २४ ॥

अरण्यान्यरण्यस्य पत्नी । अरण्यमपार्णं ग्रामादरमणं भवतीति वा ॥ २ ॥ २९ ॥

* अत्राष्टाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा स्तुतिः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"अरण्यानी (२४)"-इति, एतत् पदम् । सा पुनः "अरण्यस्य पत्नी" पालयित्री देवता । अथ अरण्यं कस्मात् ? "अरण्यम्=अपार्णं ग्रामात्" तद्धि ग्रामादपार्णमपगतं भवति, "ऋ गतौ"-इत्यस्य।"अरमणं भवति-इति वा" रमेः प्रतिषेधपूर्वस्य, न ह्यरण्ये रतिर्भवति ॥ ९ । २९ । २ ॥

## तस्या एषा भवति--॥

"तस्या एषा भवति" स्तुतिः-॥ *

"अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ॥"

अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा ॥ १ ॥

"अरण्यान्यरण्यानि० (ऋ० सं० ८, ८, ४, १)"-इति । ऐरम्मदस्य देवमुनेरार्षम् । सम्बुद्धावेकवचनं पूर्वम्, द्वितीयाबहुवचनमुत्तरम् । उत्पन्नदिङ्मोहो मन्त्रदृक् अरण्ये भीतोऽरण्याधिदेवतामरण्यानीं ब्रवीति,-अहं तावदेतस्मिन्नरण्ये निरमणे भीतः, कथं त्वं न बिभेषि ? इति । भीषयमाण इव-हे "अरण्यानि" कथं त्वम् "अरण्यानि" "वनानि" प्रति केवलं "प्रेव" "पराचीव" पराङ्मुखीव अनावर्त्तमाना "नश्यसि" ? "असौ" असाविति दृश्यमाना इव । यतो ब्रवीमि-"कथा ग्रामं न पृच्छासि न त्वा भीरिव विन्दती ३" । अथ "वा इवः परिभयार्थे" न त्वमीषदपि बिभेषीति परिरीप्सदर्थः । तद्यथा-परिमधुरं पर्याप्तमिति ॥ ९ । ३० । १ ॥ ?प्रवेति विकल्पोप ...मात्रे

## श्रद्धा ॥ २५ ॥

## श्रद्धा श्रद्धानात् ॥ २ ॥ ३० ॥

"श्रद्धा (२५)"-इत्येतत् पदम् । अत्र "श्रत्" इति सत्यनाम पूर्वपदम्, तत् सत्यमस्यां धीयत इति श्रद्धा, धर्मार्थकाममोक्षेषु अविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते, तदधिदेवताभावाख्या श्रद्धेत्युच्यते । सा पुनः आग्नेयं सर्वं प्रकाशमिति अग्निरेव ॥ ९ । ३० । २ ॥

---

* अत्रैकोनत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोन्नेताऽवगन्तव्या ॥

## तस्या एषा भवति—॥

"तस्या एषा भवति" स्तुतिः—॥ *

"श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ॥
श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि ॥"

श्रद्धयाग्निः साधु समिद्ध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्द्धनि प्रधानाङ्गे वचनेनावेदयामः ॥१॥

"श्रद्धयाग्निः समिद्ध्यते० ( ऋ० सं० ८, ८, ९, १ )"—इति ॥ श्रद्धायाः कामायन्या आर्षम् । य एव "अग्निः" "श्रद्धया" उपेतः, श्रद्धयैवास्तिक्यबुद्धिमालम्ब्य "समिद्ध्यते" कर्मणि, स एव "साधु" शोभनं समिद्ध्यते, इतरो हि समिद्धोऽप्यसमिद्ध एव, अश्रद्धासमिद्धाग्निकर्मणः फलाभावात् । एवमेव "श्रद्धया हूयते हविः" यदे श्रद्धया हूयते हविः, तदेव "साधु हूयते" अन्यस्याफलत्वात्, उक्तं च—'नाश्रद्दधानाय हविर्जुषन्ति देवाः"—इति । एवं चेत्—"श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि" । भगस्य भागधेयस्य धर्मस्य मूर्द्धनि प्रधानाङ्गे मूर्द्धा शिरः, प्रधानमिदमङ्गं धर्मस्य या श्रद्धा, तदभावे धर्माभावात् । अपि च "वचसा" एव "वचनेन" एव मन्त्रगतेन—"अश्रद्धामनृते दधाच्छ्रद्धां सत्ये प्रजापतिः"—इत्यनेनैव तद्धुद्घास्य शिरःप्रकाशम् "वेदयामसि" "आवेदयामः" आघोषयामो नाश्रद्दधानस्य धर्म इति ॥ ९ । ३१ । १ ॥

## पृथिवी ॥ २६ ॥

## पृथिवी व्याख्याता ॥ २ ॥ ३१ ॥

"पृथिवी (२६)" "व्याख्याता" "अथ वै दर्शनेन पृथुः" ( १ । १४ । ५ )—इत्यत्र ॥ ९ । ३१ । २ ॥

## तस्या एषा भवति—

"तस्या एषा भवति"—॥ *

---

* अत्र त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ * अत्रैकत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"स्योना पृथिवि भवानृक्षरा निवेशनी ॥
यच्छा नः शर्म सप्रथः ॥"
सुखा नः पृथिवि भवानृक्षरा निवेशनी ॥
ऋक्षरः कण्टक ऋच्छतेः ॥
कण्टकः कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्याद्गतिकर्मणः,
उद्गततमो भवति।यच्छ नः शर्म यच्छन्तु शरणं सर्वतःपृथु१॥

"स्योना पृथिवि भवा० (ऋ० सं० १, २, ६, ५, य० वा० सं० ३५, २१)"—इति। मेधातिथेरार्षम्। हिरण्यनाशप्रायाश्चित्तेष्टयां भौमस्यैककपालस्य पुरोऽनुवाक्या ॥ हे "पृथिवि!" "स्योना" "सुखा" त्वमस्माकं "भव"। कथम्? "अनृक्षरा निवेशनी"। अनृक्षरा निष्कण्टका, निवेशनी निवासयोग्या। निविष्टानां चास्माकं "यच्छ" देहि "शर्म" सुखम् "सप्रथः" "सर्वतः पृथु"विस्तीर्णमिति ॥

"ऋक्षरः = कण्टकः" "ऋच्छतेः"।

"कण्टकः"—"कं तपः वा" "कृन्ततेः वा" "कण्टतेः वा स्यात् गतिकर्मणः, उद्गततमो भवति"। कमहं तापयामीति एवमर्थमुद्गतः,कण्टकः। कण्टतेर्वा,स ह्युद्गततमो भवति वृक्षात् ॥ ९। ३२। १॥

अप्वा ॥ २७ ॥

अप्वा व्याख्याता ॥ २ ॥ ३२ ॥

"अप्वा (२७)" "व्याख्याता"। "यदेनया विद्धोऽपवीयते, व्याधिर्वा भयं वा" (६।१२।४)—इत्यत्र व्याख्याता ॥ ९। ३२। २॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥"

* अत्र द्वात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्ताम् ॥ १ ॥

"अमीषां चित्तम्० ( ऋ० सं० ८, ५, २३, ६ । य० वा० सं० १७, ४४ । सा० सं० उ० आ० ९, ३, ५, १ । अथ० सं० ३, २, ५ )"—इति । अप्रतिरथस्यार्षम् । हे "अप्वे!" "अमीषाम्" अस्मच्छत्रूणां "चित्तम्" "चित्तानि" मनांसि "प्रतिलोभयन्ती" "प्रतिलोभयमाना" प्रत्येकं लोभयन्ती "गृहाण अङ्गानि" सर्वगात्राणि आविश, त्वयैते आविष्टसर्वगात्राः साध्वसिनः उत्पन्नवेपथवः सम्मूढाः अप्रतिपक्षाः सन्तु । "परेहि" परागच्छ एतान् । अपि च यावच्च प्रत्यवस्थितास्तावद्देकैकं क्षिप्रम् "अभिप्रेहि" । अभिप्रगत्य च "निर्दह" "एषाम्" "हृत्" "हृदयानि" "सुशोकैः" । त्वया एते निर्दग्धहृदयाः "अमित्राः" अस्मदमित्राः "अन्धेन तमसा" "सचन्ताम्" "संसेव्यन्ताम्"—इत्येतदाशास्महे ॥ ९ । ३३ । १ ॥

## अग्नायी ॥ २८ ॥

अग्नाय्यग्नेः पत्नी ॥ २ ॥ ३३ ॥

"अग्नायी ( २८ )" "अग्नेः पत्नी" ॥ ९ । ३३ । २ ॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये ।
अग्नायीं सोमपीतये ॥"

इति सा निगदव्याख्याता ॥ १ ॥ ३४ ॥

"इहेन्द्राणीमुपह्वये० ( ऋ० सं० १, २, ६, २ )"—इति । "इति सा निगदव्याख्याता" । "इह" कर्मणि "अग्नायीम्" "उपह्वये" "सोमपीतये" सोमपानाय, आत्मनश्च "स्वस्तये" "इन्द्राणीम्" अपि च "वरुणानीम्" ॥

---

* अत्रैव त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोन्निताऽवगन्तव्या ॥

असाधारण्येनेन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मणि उपह्वये सोमपानाय स्वस्तये च,–इत्येवं सति "तस्या एषा भवति"–इति भाष्यकारवचनं नोपपद्यते,–सोमपानसम्बन्धात् । मध्यमा ? इति चेत्, नैतत्, अग्निरपि हि सोमपानसम्बन्धे उक्तः,–"सोमं पिब मन्दसानो गणश्रिभिः ( ऋ० सं ४, ३, २५, ८ )"–इति, तस्मादुपपद्यत इति ॥ ९ । ३४ । १ ॥ *

## उलूखलमुसले ॥ २९ ॥

### अथातोऽष्टौ द्वन्द्वानि उलूखलमुसले ॥ १ ॥

"अथातोऽष्टौ द्वन्द्वानि"–इति ॥ अश्वादेः पूर्वस्माद् वर्गात् विलक्षणोऽयमपरो द्वन्द्ववर्ग इति पृथगधिकारवचनम् ॥ अथातःशब्दावुक्तार्थौ ॥ अष्टावित्यनिर्देशतोऽपि सिद्धेऽष्टत्वनियमार्थमष्टग्रहणम् ॥ "उषासानक्ता" "दैव्याहोतारा"–इति द्वन्द्वदर्शनात् अयुक्तमिति चेत् ? न, तयोराप्रीत्वसामान्येन तत्र प्रथमं समाम्नातत्वात् । इह च पुनः समाम्नाने द्विरुक्ततादोषप्रसङ्गः ॥ मित्रावरुणादीनामपि द्वन्द्वसामान्यादिह प्रसङ्ग इति चेत् ? न, तेषां पृथगपि स्तुत्युपपत्तेः ॥ एवं सति उलूखलमुसलयोः द्यावापृथिव्योश्चेह समाम्नानस्याप्रसङ्गः, केवलयोः स्तुत्युपपत्तेः ? न,मुसलस्य दिवश्च पृथक्स्तुत्यभावात् । मित्रावरुणादीनां तु सर्वेषां पृथक् स्तुतयः सन्ति, तस्मादसमाम्नानम् ॥ अश्विनोरिह द्वन्द्वसामान्यात् समाम्नानं प्राप्तमिति चेत् ? न, उषःप्रभृतीनामुषसः कालमध्ये तेषां च समाम्नानेनेहातिसङ्करप्रसङ्गात् । शुनासीरयोः स्थानान्यत्वात् इहासमाम्नानम् इति चेत् ? न, द्वन्द्वसामान्यात्, पृथिव्यर्थत्वाच्च, संभोगाभिप्रायेण च तत्स्तुतेः–"तेनेमामुपसिञ्चतम्" इति ॥ द्यावापृथिव्योः प्रथमं समाम्नानं देवताभावादिह प्राप्तमिति चेत् ? न, दिवः पृथिव्यायतनत्वाभावात् ॥ द्वन्द्वप्रसङ्गेन चेह दिवः समाम्नानात् । "द्यावापृथिव्यौ ३१" "शुनासीरौ ३४"–इति देवतामपेक्ष्य द्वन्द्वमध्ये प्रथमागामित्वस्यावचने उलूखलमुसलयोर्द्रव्यत्वात् प्रथमं समाम्नानम्, तयोः पृथिव्यायतनत्वस्य निरुपचारप्रसिद्धेः, प्रचुरत्वाच्च द्वन्द्वयोः । ९ । ३५ । १ ॥

### उलूखलं व्याख्यातम् ॥

### मुसलं मुहुः सरम् ॥ २ ॥ ३५ ॥

---

* अत्र चतुस्त्रिंशखण्डसमाप्तिर्दृश्यते, सैव वरम्॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ नवमा ( चतुर्दशा )ऽध्यायस्य तृतीयः पादः ९, ३ ॥" इति तूपलभ्यते ॥
१ 'समाम्नातम्' ॥ २ स्थवचन इति । असमाम्नान इत्यर्थः । कृतेपीति शेषो भवेत् ॥

तयोः "उलूखलं (२९) व्याख्यातम्" "उरुकरम् (९।२०।१)"—इत्येवमादिना ॥
"मुसलं (२९) = मुहुः सरम्" । मुसलं कस्मात्? तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु ॥ ९ । ३५ । २ ॥

## तयोरेषा भवति--॥

"तयोः एषा भवति" स्तुतिः—॥ *

"आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ॥
हरी इवान्धांसि बप्सता ॥"

आयष्टव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने ॥ १ ॥

"आयजी वाजसातमा० ( ऋ० सं० १, २, २६, २ )"—इति । आभिमुख्येन मर्यादया वा "यष्टव्ये" पूज्ये, "वाजसातमे" "अन्नानां सम्भक्ततमे" "उच्चा विजर्भृतः" "उच्चैर्विह्रियेते" उलूखलमुच्छ्रीयते च, अवहननाय मुसलमुद्यम्यते, एतदुच्चैर्विहरणम् । ते एते नित्यम् अस्माकं गृहे "हरी" अश्वौ "इव" । नित्यमविच्छेदेन । "अन्धांसि" "अन्नानि" "बप्सत" "भुञ्जाने" संस्कारकत्वेन स्याताम्—इत्येतदाशास्महे ॥

"आयष्टव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने" गतार्थमेतत् ॥ ९ । ३६ । १ ॥

## हविर्धान ॥ ३० ॥

हविर्धाने हविषां निधाने ॥ २ ॥ ३६ ॥

"हविर्द्धाने(३०)" "हविषां निधाने" सोमास्तयोर्निधीयन्ते ॥ ९ । ३६ । २ ॥

## तयोरेषा भवति--॥

"तयोः एषा भवति"—॥ *

---

* अत्र पञ्चत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ * अत्र षट्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः ॥
इहाद्य सोमपीतये ॥"

आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये इति वा, यज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय ॥ १ ॥

"आ वामुपस्थमद्रुहा० ( ऋ० सं० २, ८, १०, ६ )"—इति । गृत्समदस्यार्षम् । "द्यावा नः पृथिवी"—इति च ( ९ । ३८ । १ ) । हविर्द्धानप्रवर्त्तने विनियोगः । हे हविर्द्धाने ! "अद्रुहा" अद्रोग्धव्ये युवामुच्येथे । यत्र युवामुपगम्य स्थिते तत् "वाम्" "उपस्थम्" "उपस्थानम्" "यज्ञियाः" "यज्ञसम्पादिनः" "देवाः" "इह" एतास्मिन् कर्मणि "अद्य" उपगम्य "सीदन्तु" [निषीदन्तु "सोमपीतये" "सोमपानाय"—इत्येतदाशास्महे ॥

"आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये इति वा याज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय" । वर्णितमेतत् ॥ ९ । ३७ । १ ॥

## द्यावापृथिवी ॥ ३१ ॥

द्यावापृथिव्यौ व्याख्याते ॥ २ ॥ ३७ ॥

"द्यावापृथिव्यौ ( ३१ )" "व्याख्याते" । द्यौश्च पृथिवी च इत्येते पदे व्याख्याते ॥ ९ । ३७ । २ ॥

तयोरेषा भवति--॥

"तयोः" "एषा" स्तुतिः "भवति"—॥ *

"द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।
यज्ञं देवेषु यच्छताम् ॥"

द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ॥ १ ॥

---

* [अत्र सप्तत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा स्तुतिर्भवति" इत्यतः ागेवोचिताऽवगन्तव्या ॥

"द्यावा नः पृथिवी० ( ऋ० सं० २, ८, १०, ५ )"–इति । "द्यावापृथिवी" "द्यावापृथिव्यौ" "नः" अस्माकम् "सिध्रम्" "साधनम्" "इमम्" "यज्ञं"। सोऽयमस्मान् साधयति, "अद्य" एतास्मिन् अहनि वर्त्तमानं "दिविस्पृशं" द्यां यः स्पृशति आपूरयति, तमेवङ्गुणं यज्ञं देवेषु "यच्छताम्" "नियच्छताम्" देवेभ्यो दत्तम्–इत्येतदाशास्महे ॥

"द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम्"। गतार्थमेतत् ॥ ९ । ३८ । १ ॥

## विपाट्छुतुद्री ॥ ३२ ॥

### विपाट्छुतुद्र्यौ व्याख्याते ॥ २ ॥ ३८ ॥

"विपाट्छुतुद्र्यौ" "व्याख्याते" "विपाट् विपाटनाद्वा"–( ९ । २४ । २ ) इत्यत्र विपाट् व्याख्याता, "शुतुद्री = शुद्राविणी" ( ९ । २४ । २ ) इत्यत्र शुतुद्री, "तद् यद् द्विवदुपरिष्टात् तद् व्याख्यास्यामः"–इति एतत् ॥ ९ । ३८ । २ ॥

### तयोरेषा भवति–॥

"तयोः" "एषा" स्तुतिः "भवति"–॥*

**"प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।**
**गावेव शुभ्रे मातरा रिहाणे बिपाट् छुतुद्री पयसा जवेते॥"**

**पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा, विषण्णे इति वा, हासमाने ह्रासति स्पर्द्धायां हर्षमाणे वा, गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते ॥ १ ॥**

"प्र पर्वतानामु० ( ऋ० सं० ३, २, १२, १ )"–इति । विश्वामित्रो ब्रवीति । ये चैते "विपाट्छुतुद्र्यौ" "पयसा" उदकेन पूर्णे "प्रजवेते" प्रकृष्टेन जवेन गच्छतः "पर्वतानाम्" "उपस्थात्" "उपस्थानात्" निर्झरात्, मेघानां वा। "उशती" "उशत्यौ" "कामयमाने" परस्परं समागमम्, समुद्रं वा । कथं प्रजवेते ? "अश्वे इव" "विषिते"

---

१ 'योषम' ॥ * अत्राष्टात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा स्तुतिर्भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"विमुक्ते" मन्दुरातः, [ सांदिभ्यो वा ] "विषण्णे इति वा" विभागेनैकस्मिन् मुक्ते, कस्मिंश्चिद् युक्ते युगादौ वा ।: "ह्रासमाने" स्पर्द्धमाने, परस्परेण हर्षमाणे वा ह्रष्यमाणे वा निपाट्छुतुद्र्यौ । "गावा इव" "गावौ इव" "शुभ्रे" "शोभने" कल्याण्यौ । "मातरा" "मातरौ" "सं" "रिहाणे" वत्समेकं प्रलेढु-मिच्छन्त्यौ । ये एवमेते प्रजवेते, ते अस्माकं गाधे भवतम्—इत्येतदाशास्महे ॥

"पर्वतानामुपस्था० पयसा प्रजवेते" । उक्तोऽस्यार्थः ॥ ९ । ३९ । १ ॥

## आर्त्नी ॥ ३३ ॥

### आर्त्नी अर्त्तन्यौ वारण्यौ वारिषण्यौ वा ॥ २ ॥ ३९ ॥

"आर्त्नी(३३)" धनुष्प्रान्ते । ते कस्मात् ? "अर्त्तन्यौ वा" ऋतेर्धातोर्गत्यर्थस्य, गमयतस्ते इषून्, "अरण्यौ वा" अरणार्हौ, "अरिषण्यौ वा" हन्त्र्यौ वा॥ ९।३९।२॥

### तयोरेषा भवति—॥

"तयोः एषा भवति"—॥ *

**"ते आचर॑न्ती सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृताम॒ुपस्थे॑ ।**
**अप॒ शत्रू॑न् विध्यतां संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फु॒रन्ती॑ अ॒मित्रा॑न् ॥"**

**ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान् ॥ १ ॥**

"ते आचर॑न्ती सम॑नेव॒० ( ऋ० सं० ५, १, १९, ४ । य० वा०सं०२९, ४)"—इति । आर्त्न्योरेवानुमन्त्रणमश्वमेधे अनेन क्रियते । "समना इव योषा" "समनसौ इव" एकभर्त्तृके योषिते यथैकं भर्त्तारं प्रत्याचरन्त्यौ भवतः परिष्वक्तुम्, एव-माक्रष्टारं प्रति नित्यमाचरन्त्यौ भवतः आनमन्त्यौ । "मातेव पुत्रं बिभृतामुपस्थे" मातेव पुत्रमुपस्थे रक्षणार्थं ये बिभृतामाक्रष्टारम् । अमुना प्रकारेण ये विस्फुरन्त्यौ नित्य-ममित्रान् भवतः । ययोरेषः स्वभावः । ते "आर्त्नी" नित्यम् अस्माकम् अमुना

* अत्रैकोनचत्वारिंशत्खण्डसमाप्तिर्दृश्यते, सा "तयोरेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

प्रकारेण "संविदाने" संवादमिव कुर्वाणे । परस्परतः आकर्षणाभिप्रायमेतत्, आकृष्यमाणयोस्तयोः संवाद इव परस्परतो भवति। "शत्रून्" "अपविध्यताम्"—इत्येतदाशास्महे ॥ ९ । ४० । १ ॥

## शुनासीरौ ॥ ३४ ॥

**शुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे, सीर आदित्यः सरणात् ॥ २ ॥ ४० ॥**

"शुनासीरौ (३४)" "शुनः=वायुः, शु एति अन्तरिक्षे" शुनासीराविलत्र, स हि क्षिप्रमेत्य प्रतिबध्यमानोऽन्तरिक्षे । "सीरः=आदित्यः सरणात्" स हि नित्यं सरति गच्छति ॥ ९ । ४० । २ ॥

**तयोरेषा भवति--॥**

"तयोः एषा भवति"–॥ *

**"शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।**
**तेनेमामुपसिञ्चतम् ॥"**

**इति सा निगदव्याख्याता ॥ १ ॥**

"शुनासीराविमां० (ऋ० सं० ३, ८, ९, ५ । य० वा० सं० १२, ६९ । अथ० सं० ३, १७, ७)"—इति । "इति सा निगदव्याख्याता" । वामदेवस्यार्षम् । शुनासीर्ये विनियोगः । हे "शुनासीरौ !" युवां "वाचम् इमां" स्तुतिलक्षणां "जुषेथाम्" सेवेथाम् । कथं च पुनरासेवितेयं युवाभ्यां स्यात् ? "यद् दिवि चक्रथुः पयः" ।

"यत्" "दिवि" द्युलोके "चक्रथुः" संभरथः युवाम् "पयः" उदकम् । "तेन" "इमां" पृथिवीम् "उपसिञ्चतम्" । एवमनेनास्मद्वांगासेविता युवाभ्यां भविष्यतीति ॥ ९ । ४१ । १ ॥

---

* अत्र चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

## देवीजोष्ट्री ॥ ३९ ॥

देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहो-
रात्रे इति वा ॥

शस्यञ्च समा चेति कात्थक्यः ॥ २ ॥ ४१ ॥

"देवी जोष्ट्री (३५)"–"देव्यौ जोषयित्र्यौ" सर्वस्य तर्पयित्र्यौ । के पुनस्ते ? इति । "द्यावापृथिव्यौ" "अहोरात्रे वा" ॥
"शस्यं च समा च इति कात्थक्यः" शस्यं व्रीह्यादि, समेति संवत्सरः॥९।४१।२॥

तयोरेष सम्प्रैषो भवति--॥

"तयोः एषः सम्प्रैषो भवति"–॥ *

देवी जोष्ट्री वसुधीती ययोरन्याघाद्वेषांसि यूयवदन्याव-
क्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज॥"

देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधीती वसुधान्यौ ययो-
रन्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वननी-
यानि यजमानाय वसुवननाय च वसुधानाय च वीतां
पिबेतां कामयेतां वा, यजेति सम्प्रैषः ॥ १ ॥

"देवी जोष्ट्री० (य० वा० सं० २८, १५)"–इति । "देवी जोष्ट्री". "देव्यौ जोषयित्र्यौ" "वसुधीती = वसुधान्यौ" वसूनां निधानभूते, "ययोः" देव्योः अन्या एका "अघा" "अघानि" "द्वेषांसि" हन्ति यान्यप्रियाण्यस्माकं तानि "यूयवतु" "अवयावयति" अवमिश्रयति नाशयत्यस्मत्तः । "अन्या" पुनः "आवक्षत्" "आवहति" । "वसु वार्याणि" "यजमानाय वननीयानि ( वरणीयानि ) वसूनि"। "वसुवने वसुधेयस्य" "वसुवननाय" च सम्भजनाय, "वसुधानाय" वसुविशिष्टस्य निधानाय च । ते देव्यौ जोषयित्र्यौ "अस्य" पृषदाज्यस्य स्वमंशं "वीताम्" "पिबेतां, कामयेतां वा" । मैत्रावरुणो ब्रवीति,–हे होतः ! त्वम् एते "यज"– "इति सम्प्रैषः" ॥

---

* अत्रैकचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेष संप्रैषो भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ 'मुक्तातिशिष्टस्य विधानमयम्'–इत्येकस्मिन्पुस्तके पाठान्तरम्॥

"दैव्यौ जोषयित्र्यौ०—यजेति सम्प्रैषः" । एतस्यार्थं उक्तः ॥ ९ । ४२ । १ ॥

देवीऊर्जाहुति ॥ ३६ ॥

इति षट्त्रिंशत्पदानि ॥ ३ ॥

देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा,शस्यं च समा चेति कात्थक्यः॥२।४२॥

"देवी ऊर्जाहुती (३६)" देव्यौ ऊर्जाह्वान्यौ । "द्यावापृथिव्यौ इति वा, अहोरात्रे इति वा, शस्यं च समा च इति कात्थक्यः" ॥ ९ । ४२ । २ ॥

तयोरेष सम्प्रैषो भवति—॥

"तयोः एषः सम्प्रैषः भवति"—॥ *

"दे॒वी ऊ॒र्जाहु॑ती॒ इष॒मूर्ज॑म॒न्याव॑क्ष॒त् सग्धिं॒ सपी॑तिम॒न्या नवे॑न॒ पूर्वं॒ दय॑माना॒ः स्या॑म॒ पु॒रा॒णेन॒ नवं॒ तामूर्ज॑मू॒र्जाहु॑ती ऊ॒र्जय॑माने॒ अधा॑तां॒ वसु॒वने॒ वसु॒धेय॑स्य वीतां॒ यज॑॥"

देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यावन्नं च रसं चावहत्यावहत्यन्या सहजग्धिं च सहपीतिं चान्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा ॥

यजेति सम्प्रैषो यजेति सम्प्रैषः ॥ १ ॥ ४३ ॥

"देवी ऊर्जाहुती० ( य० वा० सं० २८, १६ )"—इति । "देव्यौ ऊर्जाह्वान्यौ" ऊर्जस्य अन्नस्य निष्पादयित्र्यौ द्यावापृथिव्यौ ऊर्जाह्वान्यावुच्येते । "इषम् ऊर्जम्"

---

* अत्र द्विचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तयोरेष संप्रैषः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'ऊर्जाहुत्यो' ॥

"अन्या" एका "आवक्षत्" "अन्नं च" अन्नादि—"रसं च" व्रीह्याद्युपसेचनं क्षीरादिकं च, "सग्धिम्" एका उपनामितस्यान्नस्य सगुणस्य "सहपीतिम्" अन्या "सहजग्धिम्" सहभोजनं बन्धुभिरिति "आवक्षत्" "आवहति" आभिमुख्येन यथा बन्धुभिः सह भुञ्जीमहि तथा करोतु। तथा च तत् बह्वन्नमस्तु, यथा "नवेन" "पूर्वम्" पुराणं "दयमानाः" रक्षन्तः "स्याम" "पुराणेन नवम्" पुराणेन च नवं धान्यं दयमानाः स्याम। तामेवंलक्षणाम् "ऊर्जम्" "ऊर्जाहुती" "ऊर्जयमाने" बलवती ऊर्जतां च कुर्वाणे "अधाताम्" दत्ताम्। "वसुवने" "वसुवननाय च" "वसुधेयस्य" "वसुधानाय च" "वीताम्" "पिबेतां कामयेतां वा"॥

"यज"—"इति सम्प्रैषः" "यज"—"इति सम्प्रैषः" इति ॥ ९। ४३। १॥ *

[ अथ यान्यश्वोवोळ्हाग्रावानोमित्रःकनिक्रदद्वन्द्वंवदसंवत्सरमुपप्रवर्दप्रावेपामोप्रैतेवदन्त्वमन्दान्यज्ञसंयोगाद्वनस्पतउपश्वासयबर्हीनाममहिरिवभोगैरथेतिष्ठन्धन्वनागाविवक्षयन्तीवेदासुपर्णवस्तओजङ्घन्तियच्चिद्धित्वंवृषभोन्यक्रन्दयन्निमं तंपि तुन्विमंम आपो हिष्ठा याँ ओषधीरारात्र्यरण्याणि श्रद्धयाग्निः स्योनामीषांचित्तमिहेन्द्राण्यथातोऽष्टावायज्यावांधावानः प्रपर्वतानां ते आचरन्तीशुनासीरौ देवीजोष्ट्री देवी ऊर्जाहुती त्रिचत्वारिंशत् ]

इति निरुक्ते उत्तरषट्के नवमोऽध्यायः ॥ ९ ॥

इति श्रीजम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ नवमो [ चतुर्दशो ]ऽध्यायः समाप्तः ॥ ९ ॥

---

१ 'पूर्व्यम्' ॥ * अत्र त्रयश्चत्वारिंशखण्डसमाप्तिरवगन्तव्या ॥ "इति निरुक्तवृत्तौ नवमा (चतुर्दशा)ऽध्यायस्य चतुर्थः पादः ॥ ९, ४ ॥" इति तूपलभ्यते ॥

# अथ दशमोऽध्यायः १०.

## अथातो मध्यस्थाना देवताः ॥ १ ॥

व्याख्यातानि पृथिवीस्थानदेवतापदानि, अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि निर्वक्तव्यानि,तदर्थमिदमारभ्यते,—"अथातो मध्यस्थाना देवताः"—इति। अथ-शब्दो विशेषाधिकारार्थः। अतः—शब्द आनन्तर्यार्थः। मध्यं स्थानमेतासामिति मध्यस्थानाः देवताः, वाय्वाद्याः 'वक्ष्यन्ते'—इति वाक्यशेषः । देवता इति बहुवचनं भेदपक्षे, एकैव, नैरुक्तानां देवतात्रित्वाभ्युपगमात् । एतस्यैव मध्यमस्य पर्यायवचनान्येतानि वाय्वादीनि रोदस्यन्तानि गुणविशेषतो भवन्ति, यथैवोत्तमस्य ज्योतिषो दृश्यन्ते भगप्रभृतीनि ॥ १० । १ । १ ॥

## तासां वायुः प्रथमागामी भवति ॥ २ ॥

"तासां वायुः प्रथमागामी भवति" । नन्विन्द्र इति मध्यमस्य स्थानस्य मुख्यमभिधानम्, तत् प्रथमं समाम्नातव्यमासीत् ? न, मध्यमस्य वर्षकर्मोपलक्षणत्वात् । वर्षकर्मणि च वायोरधिकारः प्रथमः स्यात् । कथम् ? इति । वाय्वात्मनैवं हि मध्यमः, ऊर्जान्मासात् परतः सार्वदिक्कमुदकमुपसंहरन्नोषधिवनस्पतिजलाशयेभ्य उदकमन्तरिक्षलोकस्य गर्भमुपचिनोति, स मासाष्टकेन सम्भूतोदकगर्भो विपक्वः प्रावृषं प्राप्य प्रसवाय प्रकल्पते ॥

तदुक्तम्—"वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।
ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति ॥"—इति ॥

तदेवं वर्षकर्मप्रारम्भे वाय्वात्मनैव मध्यमो व्याप्रियत इति युक्तं वाय्वभिधानमिह प्रथमं समाम्नातमिति । इतश्च युक्तं यदुच्यते "तासां वायुः प्रथमागामी भवति"—इति, स एष सम्भृतोदकगर्भो वायुर्विनृण्वन् मेघजालेन[1] नभः, मध्यमो वरुणः सम्पद्यते, ततो रुदत् रुद्रः, तत इरां ददत् इन्द्रः, ततो रसान् प्रार्जयत् पर्जन्यः । एवमादिर्मध्यमस्य जगदनुग्रहाय वर्षप्रदानसिद्धये गुणोपजनक्रमः । अनयैव गुणोपजनक्रमानुपूर्व्या वायुः १, वरुणः २, रुद्रः ३, पर्जन्यः ४,—इत्येवमाद्या समाम्नाये देवतानामानुपूर्वी । तदेतत् स्फुटं द्युस्थाने गुणान्तरोपजनानुपूर्व्या ज्योतिर्मण्डलस्य सवितृप्रभृतिषु ॥ १० । १ । २ ॥

---

१ 'मेघजलेन' ॥

( अथ द्वात्रिंशत्पदानि )

**वायुः ॥ १ ॥**

**वायुर्वातेर्वेतेर्वा स्याद्गतिकर्मणः, एतेरिति स्थौलाष्ठीविः, अनर्थको वकारः ॥ ३ ॥ १ ॥**

"वायुः (१)" कस्मात् ? "वातेः" "वा गतिगन्धनयोः (अदा० प०)"— इत्यस्य, सततमसौ वाति गच्छति ॥ "वेतेः वा स्याद् गतिकर्मणः" अनेकार्थो वेतिः, तस्य वा "गतिकर्मणः" गत्यर्थस्य ॥ "एतेः—इति स्थौलाष्ठीविः"। अस्मिन् पक्षे "अनर्थकः वकारः" उपजनमात्रम्, एत्यसौ इति वायुः ॥ १० । १ । ३ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

**"वायवायाहि दर्शतेमे सोमा अरंकृताः ।**
**तेषां पाहि श्रुधी हवम् ॥"**

**वायवायाहि दर्शनीयेमे सोमा अरङ्कृता अलङ्कृतास्तेषां पिब शृणु नो ह्वानमिति ॥ १ ॥**

"वायवायाहि दर्शत० (ऋ० सं० १,१,३,१)"—इति । मधुच्छन्दस आर्षम् । आध्वर्यवे वायव्योपस्थाने विनियोगः, बाह्वृच्ये प्रउगे शस्त्रे शस्यते ॥ हे "वायो !" "दर्शत" "दर्शनीय!" दर्शनार्ह ! त्वदर्थम् "इमे" "सोमाः" अस्माभिः "अरङ्कृताः" "अलङ्कृताः" पर्याप्ताः पातुं संस्कृताः । स त्वमस्माकमिदम् "हवम्" "आह्वानम्" "श्रुधि" "शृणु" । श्रुत्वा च तत् "आयाहि" । एत्य च "तेषाम्" एतेषां सोमानां यः स्वोंऽशस्तव तं "पाहि" "पिब"—इत्येतदाशास्महे ॥ १० । २ । १ ॥

**कमन्यं मध्यमादेवमवक्ष्यत् ॥ २ ॥ २ ॥**

वायोः सर्वस्थानतामपेक्ष्य विचारमागूर्य ततोऽवधारयति,—सर्वस्थानत्वेऽपि सति "कमन्यम्" इन्द्रात् "मध्यमात्" "एवम् अवक्ष्यत्" मन्त्रकृत्—सोमा अरङ्कृताः, तेषां पिब—इति । प्रसिद्धं हि इन्द्रस्य मध्यमस्य सोमपानम्, तदर्थत्वात् सोमसंस्कारस्य, अप्रसाध्यमन्यस्य । तस्मादिन्द्र एव वायुः ॥ १० । २ । २ ॥



* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिताऽवगन्तव्या॥

तस्यैषापरा भवति—॥

"तस्य" इन्द्रस्य वायोः ऐन्द्रे एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दः, तथा "एषा" "अपरा" ऋक् "भवति"—॥ *

"आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभिश्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ॥"

आसस्रवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च ॥

श्रव इत्यन्ननाम श्रूयत इति सतः । वायोश्चास्य भक्षो यथा न विदस्येदिति ॥

इन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्यपरम् ॥ १ ॥

"आसस्राणासः० ( ऋ० सं० ४, ७, ९, १ )"—इति । भरद्वाजस्यार्षम् । महाव्रते महदुक्थे शस्यते उत्तरे पक्षे । "रथ्यासः" "रथ्याः" "अश्वाः" "सुचक्रे" "कल्याणचक्रे" "रथे" योगार्थम् "इन्द्रं शवसानम् अच्छ" इन्द्रमभिबलायमानमधिकबलमात्मानं मन्यमानम्, "आसस्राणासः" "आसस्रवांसः" नित्यमासर्पन्ति ये, तान् युक्त्वा रथेऽस्माकम्, आयाहि सोमपानाय यज्ञमिति । किमस्माकं ते कुर्वन्तु ? इति । "अभिश्रव ऋज्यन्तो वहेयुः" । "ऋजुगामिनः" भूत्वा "श्रवः" "अन्नम्" सोमाख्यमेतदस्मद्यज्ञे यत् । "नूचित्" "नवं च पुराणं च" तत्पानाय ऐनमिन्द्रमभिवहेयुः । "नु" क्षिप्रम् । यथा "अस्य" "वायोः" इन्द्रस्य इदम् "अमृतम्" एष सोमभक्षः न "विदस्येत्" । अविदस्तेऽनुपक्षीणे एतस्मिन् सोमभक्षेऽभिवहेयुः—इत्येतदाशास्महे ॥

"श्रवः"—"इति" एतत् "अन्ननाम" । तद्धि सर्वत्र "श्रूयते" । "नूचित्"—इति नवपुराणाभिधायकौ निपातौ । नवम्, यः सोमो गृहीत्वा तत्कालमेव हूयते । पुराणं पुनः, यः, प्रातःसवने गृहीत्वा माध्यन्दिने सवने हूयते, तृतीयसवने वा, तद्यथा—अतिग्राह्या ध्रुवश्च ॥

* अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, सा "तस्येन्द्रस्य वायोः" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'एतमि' ॥

एवमेतास्मिन् मन्त्रे ऐन्द्रसूक्तमध्यपातित्वात् इन्द्रप्रधाने यद् वाय्वभिधानम्, तत् "नैघण्टुकम्" इन्द्रस्यैव विशेषणार्थं व्यञ्जनमात्रम् ।–"इति एके" । "अपरे" पुनः "उभयप्रधाना" इयमृक् "इति" मन्यन्ते भेदपक्षवादिनः, तत् पुनरयुक्तम्, निष्केवल्ये विनियोगात् ॥ १० । ३ । १ ॥

## वरुणः ॥ २ ॥

## वरुणो वृणोतीति सतः ॥ २ ॥ ३ ॥

"वरुणः ( २ )" कस्मात् ? "वृणोतीति सतः" स हि वियद् वृणोति मेघजालेन ॥ १० । ३ । २ ॥

## तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"नी॒ची॑नबारं॒ वरु॑णः॒ कब॑न्धं॒ प्र स॑सर्ज॒ रोद॑सी अ॒न्तरि॑क्षम् ।
तेन॒ विश्व॑स्य॒ भुव॑नस्य॒ राजा॒ यवं॒ न वृ॒ष्टिर्व्यु॑नत्ति॒ भूम॑ ॥"

नीचीनद्वारं वरुणः कबन्धं मेघम् ।
कवनमुदकं भवति तदस्मिन्धीयते, उदकमपि कबन्धमुच्यते बन्धिरनिभृतत्वे, कमनिभृतं च प्रसृजति, द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन, तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् ॥ १ ॥ ४ ॥

"नी॒ची॑नबारम्॰ ( ऋ॰ सं॰ ४, ४, ३, ३ )"–इति । अत्रेराषम् । न्यक् अच्यते द्वारं यस्य स भवति नीचीनद्वारः, अधोद्वारः, तं "नीचीनद्वारम्" अधोबिलं कृत्वा "कबन्धं" "मेघं" "वरुणः" मध्यमः । अत एव मेघसम्बन्धात् "कवनम् उदकम्" "प्रससर्ज" "प्रसृजाति" महत्त्वेन, न ह्यमहानेतच्छक्नुयात् कर्तुम् । "रोदसी अन्तरिक्षम्" "द्यावापृथिव्यौ च अन्तरिक्षं च" । "महत्त्वेन" सर्वमापूरयिष्यन्निव । ततः तेन अतिप्रभूतोदकेन विसृष्टेन "विश्वस्य भुवनस्य" भूतजातस्योदकस्य वा "राजा" ईश्वरः "यवं न" यवमिव, कश्चित्

* अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

सत्कर्षी स्वल्पं "वृष्ट्या" "व्युनत्ति" विविधमुनत्ति क्लेदयति "भूम" "भूमिम्" कृत्स्नाम् यः—सोऽस्माकमिदं नाम करोतु ॥

अथ चैवमन्यथा योज्यम्—प्रसृजति द्यावापृथिव्यौ च अन्तरिक्षं च प्रकर्षेण सृजति उत्पादयति महत्त्वेन । यस्माच्चोत्पादयति, तस्मात् स एव भुवनस्य राजा विश्वस्य भुवनस्य भूतजातस्य, तेन हेतुना तदनुग्रहाय नीचीनद्वारम् अधोबिलं मेघं कृत्वा यवमिव वृष्टिर्व्युनत्ति भूमिमिति समानं पूर्वेण ॥

कवन्ध इति मेघ उच्यते । कस्मात् ? "कवनम् = उदकम्" कवतेर्गत्यर्थस्य "तदस्मिन् धीयते" इति कवन्धो मेघः । "उदकमपि कवन्धमुच्यते" । तत् कस्मात् ? अत्रोत्तरं पदं प्रथमं निराह,—"बन्धिः" धातुः "अनिभृतत्वे" निभृतस्तावदचपलः, तद्विपरीतार्थवाची बन्धिः, कं च तच्चपलं चेति कवन्धम्, सुखं चानवस्थायि चेत्यर्थः ॥ १० । ४ । १ ॥

## तस्यैषाऽपरा भवति—॥

"तस्य" वरुणस्य मध्यमत्वे "एषा" "अपरा" ऋक् "भवति" । सा पुनः किमर्थम् ? वर्षकर्म वरुणाभिधानं च सूर्येऽपि दृष्टम्, उत्तरस्यां तु शब्दत एव "मध्यमः"—वरुणः इति विशेषहेतुनोपपादयति—॥ *

"तमू षु संमुना गिरा पितॄणां चु मन्मभिः ॥
नाभाकस्यु प्रशंस्तिभिर्यः सिन्धूनामुपोदये सुप्तस्वंसा स मध्यमो नभन्तामन्युके समे ॥"

तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । "नभन्तामन्यके समे ।" मा भूवन्नन्यके सर्वे—ये नो द्विषन्ति दुर्धियः पापधियः पापसङ्कल्पाः ॥ १ ॥

१ कवन्ध—इति चौष्ठ्यमध्यः, दन्त्योष्ठ्यमध्योपि । * अत्र चतुर्थखण्डसमाप्तिर्दृश्यते, सा "तस्य वरुणस्य मध्यमत्वे" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"तमू षु समना० (ऋ० सं० ६, ३, २६, १ )"-इति । नाभाकस्यार्षम् ॥ सु-इत्येतस्योपसर्गस्य सम्बन्धि क्रियापदं नास्तीति "तं स्वभिष्टौमि"-इत्यभिपूर्वं क्रियापदमध्याह्रियते,-सुष्टुतमभिष्टौमि । केन ? "समना" तत् "समानया" तद्योग्यया, "गिरा" "गीत्या = स्तुत्या" "पितणां च मन्मभिः" ये च पितॄणां मननीयाः मननार्हाः बहुमानाः स्तोमाः, तैश्चाहमभिष्टौमि । "नाभाकस्य प्रशस्तिभिः" याश्च मम नाभाकस्य प्रशस्तयः स्तुतयः योग्याः तं वरुणं प्रतिं, ताभिरभिष्टौमि ॥ किंलक्षणः ? "यः" वरुणः "सिन्धूनाम् उपोदये" "स्यन्दमानानाम्" "अपाम्" "उपोदये" उपोद्भमे । अन्तरिक्षलोके वर्षस्य "सप्तस्वसा" सम्पद्यते । मध्यमाभिः अश्वाद्याभिः सप्तभिः "वाग्भिः" "स मध्यमः"-"इति" वरुणः "निरुच्यते" शब्दत एवैतस्मिन्मन्त्रे । तदनुग्रहादस्माकं "नभन्तामन्यके समे" "मा भूवन्नन्यके सर्वे" अन्य एव अन्यके शत्रवः, ते मा भूवन्नस्माकामिति ॥ १० । ५ । १ ॥

## रुद्रः ॥ ३ ॥

**रुद्रो रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा, "यदरुदत्तद्रुद्रस्य रुद्रत्वम्" इति काठकम् "यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इति हारिद्रविकम् ॥ २ ॥**

"रुद्रः (३)" कस्मात्? "रौतीति सतः" स हि स्तनयित्नुशब्दं करोति ॥ "रोरूयमाणो द्रवति इति वा" शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति ॥ "रोदयतेः वा" शत्रूनसौ रोदयति दुःखयति । ब्राह्मणमपि चैतस्मिन्नर्थे भवति,-"यदरुदत् तद्रुद्रस्य रुद्रत्वम्"-"इति" "काठकम्" कठानां प्रवचनम् ॥ ऐतिहासिकैरेतत् समवैति,-"स किल पितरं प्रजापतिमिषुणा विध्यन्तमनुशोचन्नरुदत् तद्रुद्रस्य रुद्रत्वम् । यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"-"इति, हारिद्रविकम्" स एवार्थः, केवलं तु शाखान्तरमन्यत् । एवं शाखान्तरेभ्योऽपि देवताभिधाननिर्वचनान्तराण्युपेक्ष्याणीत्युपप्रदर्शनार्थम् । हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः ॥१०।५ । २ ॥

## तस्यैषा भवति-॥

"तस्य एषा भवति"-॥ *

---

* अत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥"

**इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्नैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु न नः ॥ १ ॥**

"इमा रुद्राय० ( ऋ० सं० ५, ४, १३, १ )"—इति । वसिष्ठस्यार्षम्, उत्तरा च । शूलगवे विनियोगः । हे स्तोतारः ! यूयमुच्यध्वे,—"इमाः गिरः" स्तुतीः "भरत" "रुद्राय" किंलक्षणाय ? "स्थिरधन्वने" "दृढधन्वने" दृढधनुषे, "क्षिप्रेषवे" शीघ्रेषवे "देवाय" दानादिगुणयुक्ताय, "स्वधाव्ने" स्वधावते "अन्नवते" शीघ्रेषवे, "अषाळ्हाय" "अषाढाय" अनभिभूताय केनचित् "सहमानाय" नित्यमभिभवते शत्रून्, "वेधसे" "विधात्रे" "तिग्मायुधाय" तीक्ष्णायुधाय, स च इमा गिर उच्यमानाः "शृणोतु" "नः" अस्माकम्—इत्येतदाशास्महे ॥

"सहमानाय"—इति बलकृतेः मध्यमः ॥ १० । ६ । १ ॥

**तिग्मन्तेजतेरुत्साहकर्मणः ॥ २ ॥**

"तिग्मं तेजतेरुत्साहकर्मणः" ॥ १० । ६ । २ ॥

**आयुधमायोधनात् ॥ ३ ॥ ६ ॥**

"आयुधम् आयोधनात्" ॥ १० । ६ । ३ ॥

**तस्यैषाऽपरा भवति—॥**

"तस्य एषा अपरा भवति"—[ सा पुनः किमर्थम् ? "विधात्रे"—इत्युक्तं पूर्वस्यामृचि, तत्रैतद् भवति—किमसौ विधत्ते ? इति, अतः परया निर्ब्रवीति—रक्षःपिशाचानिति ]—॥ *

"या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥"

---

* अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा "तस्यैषाऽपरा भवति" इत्यतः प्रागुचिताऽवगन्तव्या ॥

**या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि ।**
**दिद्युद् द्यतेर्वा, द्युतेर्वा, द्योततेर्वा । क्ष्मया चरति क्ष्मा पृथिवी तस्यां चरति तया चरति विक्ष्मापयन्ती चरतीति वा, परिवृणक्तु नः सा सहस्रं ते स्वाप्तवचनभैषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः । तोकं तुद्यतेः । तनयं तनोतेः ॥ १ ॥**

"या ते दिद्युदवसृष्टा० ( ऋ० सं० ५, ४, १३, ३ )"—इति । हे भगवन् ! रुद्र! "या" "ते" तव "दिद्युत्" आयुधम्, ज्वरातीसारादिरोगाख्यम्, येन प्राणिनो हंसि। "दिवस्परि" द्युलोकादधि त्वया "अवसृष्टा" "चरति" । सर्वैव हि देवता द्युस्थाना इति गम्यते, दिवस्परीति लिङ्गात्, कर्माधिकारस्थानानि तु विशिष्टानि—इति तिसृणां त्रीणि कर्माधिकारस्थानानि नियतानि भवन्ति, अत एवोक्तमग्न्यधिकारे द्युस्थानो भवति—इति । कथम् ? या चरति दिद्युत् ? "क्ष्मया" पृथिव्या व्रीह्यादिभावमुपगतया, "तस्यां" व्रीह्यादिभावमुपगतायां पृथिव्यामनुप्रविश्य चरति अन्नपानसमुद्भूता, तत्प्रभवत्वात् सर्वरोगाणाम्, तदुक्तम्,—"नमोऽस्तु रुद्रेभ्यो ये के च पृथिव्यां येषामन्नं वातो वर्षमिषवः ( य० वा० सं० १६, ६६ )"—इति । तस्याः किम् ? दिद्युतः सा घ्नती प्राणिनोऽस्मान् "परिवृणक्तु" परिवर्त्तयतु "नः" । किमन्यदस्तु त्वत्तोऽस्माकम् ? "सहस्रं ते स्वपिवात भेषजा" । हे "स्वपिवात" "स्वाप्तवचन !" कस्यचिदपि अनतिक्रमणीयाज्ञ ! यानि तव "सहस्रं" "भेषजा" "भैषज्यानि" यैर्बहुभिः बहुप्रकारम् भेषजं करोषि भक्तानाम्, तान्यस्मान् प्रति सन्तु । किञ्च, "मा नः" मा अस्माकम् "तोकेषु" "पुत्रेषु" "तनयेषु" "पौत्रेषु च" "रीरिषः" हिंसां नो मा प्रयुङ्क्ष्व—इत्येतदाशास्महे ॥

"दिद्युत्"—"द्यतेः वा" अवखण्डनार्थस्य ( दि० प० ), "द्युतेः वा" दीप्त्यर्थस्य ( भ्वा० प० ) । "विक्ष्मापयन्ती चरतीति वा" हिंसन्ती चरतीति वा । "तोकम्"—इति पुत्रः, स हि नित्यं पित्रा विनयता तुद्यते इदं कुर्विदं मा कार्षीरिति । "तनयम्"—"तनोतेः" पौत्रम्, तद्ध्यतितरां पितुः सकाशात् ततं भवति । सत्यप्यपत्यनामत्वाविशेषे इहाजामि[1] नैव विशेषः । एवमन्यत्रापि समानार्थानामेकवाक्ये विशेष उपेक्ष्य इति दर्शयति ॥ १० । ७ । १ ॥

१ 'मितायै विशेषः' ॥

अग्निरपि रुद्र उच्यते ॥ २ ॥ ७ ॥

"अग्निः अपि रुद्रः उच्यते"—इति । विचारानुस्मृतये सङ्क्षेपप्रदर्शनम्॥१०।७।२॥

तस्यैषा भवति—॥

"तस्य एषा भवति" अग्नेः रुद्रस्य—॥ *

"जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥"

जरा स्तुतिर्जरतेः स्तुतिकर्मणः, तां बोध तया बोधयितरिति वा, तद्विविड्ढि तत् कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम् ॥ १ ॥

"जरा बोध० ( ऋ० सं० १, २,२३,५ । सा० सं० छ० आ० १, १,२,५ )"—इति । शुनःशेपस्यार्षम् ॥ "अश्वं न त्वा वारवन्तम् ( ऋ० सं० १ म० ६ अनु० ४ सू० )"—इति ॥ एतस्मिन् सूक्ते प्रातरनुवाके विनियोगः । येयं मया तव "जरा" स्तुतिरुच्यते, भगवन्नग्ने ! रुद्र ! तां त्वं "बोध" बुध्यस्व । अथवा—हे जराबोधयितः ! स हि जरया स्तुत्या होतृत्वे वर्त्तमानोऽभिमतमर्थं यजमानानां सम्पादयन् देवान् बोधयति । "तत् विविड्ढि" "तत् कुरु" "विशेविशे" मनुष्याय, "यज्ञियाय" यज्ञसम्पादिने जनाय, यत् त्वया यज्ञे कर्त्तव्यम्, ततः तुभ्यं रुद्राय देवतानां स्तोत्रे स मनुष्यः "दृशीकम्" "दर्शनीयम्" श्रवणीयम्, श्रवणार्हम् व्यपगतदोषं स्तोत्रमुच्चारयिष्यति—

"यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥ ( अथ० सं० ७, ८७, १ )"—इति ॥ १० । ८ । १ ॥

इन्द्रः ॥ ४ ॥

इन्द्र इरां दृणातीति वा ॥ २ ॥

"इन्द्रः ( ४ )" कस्मात् ? "इरां दृणाति—इति वा" इराम् अन्नं व्रीह्यादि, दृणाति विदारयति, इराशब्दात् पूर्वपदम्, दृणातेरुत्तरपदम्, वर्षक्लेदितमङ्कुरं बीजं

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

भिनत्ति, तैदिन्द्रकारितम्, सोऽयम् "इरादारः सन् इन्द्रः"-इति परोक्षेणोच्यते, यथा "अग्रणीः सन्नग्निः"-इति । विज्ञायते हि "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः"-इति । सर्वत्रैवं देवताभिधेयेष्वभिधानत एव हि देवता आत्मनस्तत्त्वमन्तर्णीय व्यवधाय आत्मानमविदुषां परोक्षीकृत्य नित्यं वर्त्तते, तां तु विद्वांसस्तदभिधानव्युत्पत्तिद्वारेण विवृत्य दैवेन चक्षुषा मनसोपजातदिव्यदृष्टयो दृष्ट्वा ताद्भाव्यं प्रतिपद्यन्ते इति तदभिधान-व्युत्पत्तौ कृत्स्नः पुरुषार्थ आहितः । इन्द्रश्च भूयिष्ठभाग् प्राणदेवतानामुभयोरध्यात्मा-भिदैवतयोरिति तदभिधानमाचार्योऽतितरां निरवोचत् ।। १० । ८ । २ ।।

## इरां ददातीति वा ॥ ३ ॥

"इरां ददाति-इति वा" । तदेव पूर्वपदम्, ददातेर्[२]उत्तरपदम् । यो वर्षद्वारेणासौ इरामन्नं ददाति । सोऽयम् इरादः = इरादाता = इन्द्रः ॥ १० । ८ । ३ ॥

## इरां दधातीति वा ॥ ४ ॥

"इरां दधाति-इति वा"। तदेव पूर्वपदम्, दधातेर्दानार्थस्य धारणार्थस्य वा उत्तरप-दम् । सोऽयम् इराधः = इराधारयिता = इन्द्रः ॥ १० । ८ । ४ ॥

## इरां दारयत इति वा ।

## इरां धा[३]रयत इति वा ॥ ५ ॥

"इरां दारयते-इति वा" । तदेव पूर्वपदम्, दारयतेरुत्तरपदम् । सोऽयम् इरादा-रयिता = इन्द्रः ॥ १० ॥ ८ । ५ ॥

## इन्दवे द्रवतीति वा ॥ ६ ॥

"इन्दवे द्रवति-इति वा" । इन्दुशब्दात् पूर्वपदम्, द्रवतेरुत्तरपदम् । इन्दुः सोमः, तं पातुमसौ द्रवति, द्रवतिर्गत्यर्थः, सोमपानार्थमसौ द्रवतीति । सोऽयम् "इन्दुद्रवः = इन्द्रः" ॥ १० । ८ । ६ ॥

## इन्दौ रमत इति वा ॥ ७ ॥

"इन्दौ रमते-इति वा" । क्रीडत्ययं सोमे इतीन्द्रः ॥ १० ॥ ८ ॥ ७ ॥

## इन्धे भूतानीति वा ।

## "तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते" ॥८॥

---

१ 'तमिन्द्रकारितम्' ॥ २ 'ददातिरुत्त' ॥ ३ 'इरां धार०' इत्यस्य टीका नास्ति ॥ ४ 'क्षरत्ययं सोमे' ॥

"इन्धे भूतानि–इति वा" "ञि इन्धी दीप्तौ"–इत्यस्य । भूतानि ह्यसावन्नोत्पस्याधिदेवस्थोऽध्यात्मस्थो वाऽभ्यवहारयन् विभजमानश्च दीपयति द्युतिमन्ति करोति । सोऽयम् "इन्धः = इन्द्रः" ॥

"तत्" इदमपरमिन्द्रस्य इन्द्रत्वं ब्राह्मणे उच्यते । "यदेनं" मध्यतोऽवस्थितं शरीरस्य "प्राणैः" प्राणभावेन विष्टभ्येतरान् प्राणान् वागादीनितरप्राणवृत्तिमाहाभाग्यसम्प्रदानेन यदहं विशिष्टोऽस्मि त्वं तद्विशिष्टोऽसीत्येवमादिना प्राणाधिदेवताः "समैन्धन्" समदीपयन् सन्तानार्थं "तदिन्द्रस्येन्द्रत्वमिति विज्ञायते" । इन्धे भूतानीति कर्त्तरि, प्राणैरेनं समैन्धतेति कर्मणि ॥ १० । ८ । ८ ॥

## इदंकरणादित्याग्रयणः ॥ ९ ॥

"इदङ्करणात्–इति आग्रयणः" । इदंशब्दात् पूर्वपदम्, करोतेरुत्तरपदम्, इदमसौ सर्वमकरोदिति । सोऽयम् इदङ्करः–सन्–इन्द्रः ॥ १० । ८ । ९ ॥

## इदंदर्शनादित्यौपमन्यवः ॥ १० ॥

"इदन्दर्शनात्–इति औपमन्यवः" । इदं पूर्वपदम्, दृशिरुत्तरपदम्, इदमसावद्राक्षीत् सर्वमिति । सोऽयम् इदन्दर्शी=इन्द्रः ॥ १० । ८ । १० ॥

## इन्दतेर्वैश्वर्यकर्मणः ॥ ११ ॥

"इन्दतेः वा ऐश्वर्यकर्मणः" । इन्देः पूर्वपदम्, द्रवतेः दारयतेः वा उत्तरपदम् । किमसौ द्रवति, दारयति वा ? इति ॥ १० । ८ । ११ ॥

## इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा ॥ १२ ॥

"शत्रूणां दारयिता वा, द्रावयिता वा" । किमुक्तं भवति ? ईश्वरश्चासौ द्रावयिता च शत्रूणाम्, अथवा–ईश्वरश्चासौ दारयिता च शत्रूणाम्, इतीन्द्रः ॥१०।८।१२॥

## आदरयिता च यज्वनाम् ॥ १३ ॥ ८ ॥

अथवा–ईश्वरश्चासौ "आदरयिता च यज्वनाम्" आदरकर्त्ता यज्वनामुपरि ॥ १० । ८ । १३ ॥

## तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

---

* अत्राऽष्टमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**"अर्दर्दरुत्समसृजो विखानि त्वमर्णवान् बद्बधानाँ अरम्णाः।**
**मुहान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानुवं हन्॥"**
**अदृणा उत्सम् । उत्स उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वो-नत्तेर्वा, व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्माध्यमिकान् संस्त्यायान् बाबध्यमानानरम्णा । रम्णातिः संयमनकर्मा, विसर्जनकर्मा वा, महान्तमिन्द्र पर्वतं मेघं यद्व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणम् ॥ १ ॥ ९ ॥**

"अर्दर्दरुत्सम० ( ऋ० सं० ४, १, ३२, १ । सा० सं० छ० आ० ४, १, २, ३ )"—इति । गातोरात्रेयस्यार्षम् । "उत्सः" मेघः । सः कस्मात् ? "उत्सदनाद् वा" उत्पूर्वस्य सदेः, ऊर्द्ध्वमसौ सन्न इत्युत्सः ॥ "उत्स्यन्दनाद् वा" उत्पूर्वस्य वा स्यन्दतेः, उपर्यसाववस्थितः स्यन्दतीत्युत्सः ॥ "उनत्तेः वा" "उन्दी क्लेदने ( रु० प० )"—इत्यस्य, क्लेदयत्यसौ । तम् "उत्सम्" मेघं हे भगवन् ! 'इन्द्र' ! त्वम् "अदर्दः" दारितवानसि त्वम् । दारयित्वा च जर्जरीकृत्य तस्य उत्सस्य "असृजः" "विखानि" विलानि विवृतानि त्वमकरोः । उदकनिर्गमनद्वाराणि स त्वममुना प्रकारेण "अर्णवान्" "अर्णस्वतः" अर्णसा उदकेन तद्वतः, "एतान् माध्यमिकान्" "संस्त्यायान्" मेघसङ्घातान्, उदकभारेणातिगुरुणा "बाध्यमानान्" यथाकालम् "अरम्णाः" विसृष्टवानसि ॥ "रम्णातिर्धातुः" "संयमनकर्मा" अन्यत्र, तद्यथा—"सविता यन्त्रैः पृथिवीमरम्णात् ( ऋ० सं० ८, ८, ७, १ )"—इत्यत्र, इह पुनर्मेघविदारणसम्बन्धात् "विसर्जनकर्मा"। किंच, "महान्तम्" इन्द्र ! योऽप्यतिमहान् पर्वतो मेघः, केनचिदप्यन्येनाशक्यो विवृतद्वारः कर्त्तुम्, तमपि "वि यद् वः" "यद् व्यवृणोः" विवृतम् अपावृतोदकनिर्गमनद्वारमकरोः । विवृत्य च "सृजः विधाराः" "व्यसृजः धाराः" त्वम् उदकधाराः पुनःपुनः "अवहन्" अवघ्नन् "दानवम्" उदकदातारं मेघम् । य एतदकार्षीः त्वं स इदं नास्माकं कुरुष्वेति ॥ १० । ९ । १ ॥

**तस्यैषाऽपरा भवति—॥**

"तस्य एषा अपरा भवति"—[ सा पुनः किमर्थम् ? उक्तं हि "अथास्य कर्म-

रसानुप्रदानम्, वृत्रवधः, या च का च बलकृतिः" इति, तदेतदिह रसानुप्रदानं वृत्रवधश्च दर्शितम्, बलकृत्युपप्रदर्शनार्थमपर उदाह्रियते ]–॥ *

**"यो जा॒त ए॒व प्र॑थ॒मो मन॑स्वान्दे॒वो दे॒वान्क्रतु॑ना प॒र्यभू॑षत् ।**
**यस्य॒ शुष्मा॒द्रोद॑सी॒ अभ्य॑सेतां नृ॒म्णस्य॑ म॒ह्ना स ज॑नास॒ इन्द्रः॑ ॥"**

**यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा । यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इति ॥ १ ॥**

"यो जा॒त ए॒व प्र॑थ॒मः०" ( ऋ० सं० २, ६, ७, १ )"–इति । गृत्समदस्यार्षम् । इन्द्राय मनस्वते पुरोडाशः, तस्य याज्या । गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किल मरुद्गणैः विनाकृतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे, स किल भीतोऽनेन सूक्तेनेन्द्रं तुष्टाव,–आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयाञ्चकार–

"यः" "जातः एव" जातमात्र एव "प्रथमः" मुख्यः सर्वभूतानां प्रतिमुख्यतां सम्पेदे । "मनस्वी" च मेधावी, अन्ये हि कालेन मुख्याः सम्पद्यन्ते मेधाविनश्च । "दे॒वो दे॒वान् क्रतु॑ना प॒र्यभू॑षत्" । सत्यपि देवत्वाविशेषे इतरान् देवान् क्रतुना "कर्मणा" "पर्यभूषत्" "पर्यगृह्णात्" परिगृहीतवान् स्वामित्वेन, "पर्यरक्षद्वा" मुख्यत्वात्, "अत्यक्रामत् वा" प्रभावेण । "यस्य" च "शुष्मात्" शारीरात् "बलात्" "रोदसी" "द्यावापृथिव्यौ अपि" "अभ्यसेताम्" "अबिभीताम्" । "नृम्णस्य मह्ना" "बलस्य" सेनालक्षणस्य "महत्त्वेन" अतिमहदसह्यमस्य बलम्, वश्यमयमावां सादयिष्यतीत्येवमतिमहत्यावेते द्यावापृथिव्यावबिभीतां यस्य शुष्मात् । "जनासः !" हे असुरजनाः ! "सः इन्द्रः" नाहमिन्द्रः, ब्राह्मणोऽहम्, तत्प्रसादाद्देवाप्ततद्रूप इति ॥ १० । १० । १ ॥

**ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥ २ ॥**

"ऋषेः दृष्टार्थस्य" अनुभूतेन्द्रमैत्रस्येन्द्रवयस्यस्य गृत्समदस्य इन्द्रं प्रति "प्रीतिः"

---

* अत्र **नवमखण्ड**समाप्तिर्दृश्यते, सा "**तस्यैषा भवति**" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'देवताचि' ॥

वृष्टिः "भवति" "आख्यानसंयुक्ता" आख्यानसम्बन्धात् । अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषय इति । अथवा—"दृष्टार्थस्य"—इति देवतार्थम्, सतत्त्वतो दृष्टवतो भावितान्तःकरणस्य "प्रीतेः" अतिहर्षात् "आख्यानसंयुक्ता" अन्येभ्यः कथनसंयुक्तेत्यर्थः ॥ १० । १० । २ ॥

## पर्जन्यः ॥ ९ ॥

### पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः ॥ ३ ॥

"पर्जन्यः ( ५ )" "तृपेराद्यन्तविपरीतस्य" । "तृप तृप्तौ ( दि० ९० )"—इत्यस्य धातोः । स कथं भवति ? आद्यन्तविपर्ययेण । अतस्तमाद्यन्तविपर्ययं स्वयमेव दर्शयति,—"तर्पयिता" स एव भवति । किम् ऐकदेशिकः । न-इत्युच्यते,—"जन्यः" सर्वजनपदतर्पयिता ॥ १० । १० । ३ ॥

### परो जेता वा ॥ ४ ॥

अथवैवमन्यथा स्यात्,—"परो जेता वा" परः प्रकृष्टो जेता पर्जन्यः, परशब्दात् पूर्वपदम्, जयतेरुत्तरपदम् ॥ १० । १० । ४ ॥

### परो जनयिता वा ॥ ५ ॥

"परो जनयिता वा" प्रकृष्टो जनयिता, तदेव पूर्वपदम्, जनयतेरुत्तरपदम् ॥ १० । १० । ५ ॥

### प्रार्जयिता वा रसानाम् ॥ ६ ॥ १० ॥

"प्रार्जयिता वा" कस्य ? "रसानाम्" प्रपूर्वस्यार्जयतेः पर्जन्यः, स हि रसान् प्रकटीकरोति ॥ १० । १० । ६ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

### "वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तुनयन्हन्ति दुष्कृतः ॥"

---

१ 'स्तुतिः' ॥ २ 'यतस्तमा' ॥ * अत्र दशमखण्डसमाप्तिर्दृश्यते, सा ""तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्मद् भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतः, यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः ॥ १ ॥

"वि वृक्षान् हन्ति० ( ऋ० सं० ४, ४, २७, २ )"—इति ।। अत्रेरार्षम्। कारीर्यां दिगुपस्थाने विनियोगः। 'वि वृक्षान् हन्ति' "विहन्ति वृक्षान्" "पर्जन्यः" अशनिपातैः। कदा? यदा तस्करादीन् अनाकालप्रभवान् "दुष्कृतः" "पापकृतः" वर्षेण ओषधीरभिनिष्पादयन् "स्तनयन्" "हन्ति" उपशमयति, सुभिक्षं कुर्वन्, तदा। "विहन्ति च रक्षांसि" विविधं हन्ति क्रूरकर्मणः। "विश्वं बिभाय" "सर्वाणि चास्माद्भूतानि बिभ्यति" "महावधात्" पर्जन्यात्। कथम्? "उता अनागा ईषते" एवं नाम महावधात् अस्मात् सर्वाणि भूतानि बिभ्यति, येन "अनागाः अपि" "अनपराधोऽपि" सन् सर्व एव "अस्मात्" "वर्षकर्मवतः" स्तनयित्नुशब्दैरशनिं मुञ्चतः "ईषते" "पलायते" मामयं "स्तनयन् हन्ति"—इति मन्यमानः। यो ऽयमेवमतिमहानुभावो भगवान् पर्जन्यः, स वर्षत्वस्माकमिति ॥ १० । ११ । १ ॥

## बृहस्पतिः ॥ ६ ॥

बृहस्पतिर्बृहतः पाता वा पालयिता वा ॥ २ ॥ ११ ॥

"बृहस्पतिः ( ६ )" कस्मात्? "बृहतः पाताः वा पालयिता वा" बृहतः महतोऽस्य जगतः उदकस्य वा पाता रक्षिता, पालयिता अपि रक्षितैव, धात्वन्यत्वमर्थैकत्वम् ॥ १० । ११ । २ ॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम्।
निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ॥"

---

१ 'सोयमे' ॥ * अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षात् ॥ १ ॥**

"अश्नापिनद्धम्० (ऋ० सं० ८, २, १८, २)"-इति । अयास्यस्याङ्गिरसस्यार्षम् । "अश्ना" "अशनवता" व्यापनवता "मेघेन" "अपिनद्धम्" आत्मनो मध्यमातिनीय नद्धं बद्धं विवृतं व्यवहितमदृश्यमन्यैः, "बृहस्पतिः" "मधु" उदकम् "पर्यपश्यत्" सर्वतोऽपश्यत् । कथम् ? "मत्स्यं न दीन उदनि क्षियन्तम्" । "मत्स्यम्" "न" "इव" "दीने" "उदनि" "उदके" उपक्षीयमाणप्राये "क्षियन्तं" "निवसन्तम्" यथा मत्स्यबन्धोऽल्प उदके जिघृक्षुर्मत्स्यं परिपश्येच्छक्यो ग्रहीतुमयमिति, एवं पर्यपश्यत् । "निष्टज्जभार चमसं न वृक्षात्" । तच्च मधु दृष्ट्वा "निर्जभार" "निर्जहार" निर्हृतवान्, कथम् ? "चमसं न वृक्षात्" यथा कश्चित् कुशलः शिल्पी वृक्षमध्यात् चमसं यज्ञपात्रं निर्हरेत् निष्पादयेत्, एवं निर्जहार बृहस्पतिः । अत एवोदकनिर्हरणात् मध्यमः । कथमसौ निर्जहार ? "विरवेण विकृत्य" भीषणेन अतिमहता रवेण "शब्देन" सङ्क्षोभ्य मेघम्, स्रस्तसर्वाङ्गसन्धिबन्धनं कृत्वा विक्लवम्, तत एवं विह्वलभूतं विकृत्य समन्ततो विशकलीकृत्य । एवं निर्जहार मधु यो बृहस्पतिः, सोऽस्माकमपीदं करोत्विति ॥ १० । १२ । १ ॥

**चमसः कस्माच्चमन्त्यस्मिन्निति । बृहस्पतिर्विरवेण शब्देन विकृत्य ॥ २ ॥**

"चमसः कस्मात् ?" चमेर्भक्षणार्थस्य, तत्र हि सोमश्चम्यते ॥ १० । १२ । २ ॥

## ब्रह्मणस्पतिः ॥ ७ ॥

**ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा ॥ ३ ॥ १२ ॥**

"ब्रह्मणस्पतिः (७)" कस्मात् ? "ब्रह्मणः पाता वा पालयिता वा" ब्रह्म= अन्नम्, ऋगादि वा, तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन् पाता सम्पद्यते, वर्षाभावे ह्येतदुभयमुत्सीदति ॥ १० । १२ । ३ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

---

* अत्र द्वादशखण्डसमाप्तिर्दृश्यते, सा "तस्य एषा भवति" इत्यतः प्रागेवोचिता ॥

"अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ॥
तमेव विश्वे पपिरे स्वर्दृशो बहुसाकं सिसिचुरुत्समुद्रिणम् ॥"

अशनवन्तमास्यन्दनवन्तमवातितं ब्रह्मणस्पतिर्मधुधारमभि-
यमोजसा बलेनाभ्यतृणत् तमेव सर्वे पिबन्ति रश्मयः सूर्य-
दृशो बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १॥ १३॥

"अश्मास्यमवतम्० ( ऋ० सं० २, ७, १, ४ )"–इति । गृत्समदस्यार्षम् । अश्मशब्दात् "अशनवन्तम्"–इति, आस्यशब्दात् "आस्यन्दनवन्तम्"–इति भाष्यकारश्चकार, तथा सामर्थ्यमपेक्ष्य । किमुक्तं भवति ? उदकव्यापनाक्रियया तद्वन्तम्, आस्यन्दनक्रियया चोदकप्रक्षरणक्रियया तद्वन्तम् । "अश्मास्यम्" मेघम् "मधुधारम्" उदकं धारयितारं "यम्" "ओजसा" "बलेन" "अभ्यतृणत्" अभ्यहनत् "ब्रह्मणस्पतिः" "तम्" "अवतम्" "अवातितम्" अवाञ्चितं भूमिम् उदकभावेन गतम्, पुनरादानकालमुदकस्य प्राप्य "तम् एव" "विश्वे" "सर्वे" "पपिरे" "पिबन्ति" तदुदकमाददते । के पुनस्ते ? "स्वर्दृशः" सूर्यस्य "रश्मयः" स्वरिव ये दृश्यन्ते, ते सूर्यसमानदर्शनाः, स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते, ते पिबन्ति, पुनश्च प्राप्य तदुत्सर्गकालं "बहुसाकम्" बहु तत् उदकम्, साकम् सहभूताः मण्डलात् अवाञ्चः[2] आवृत्य 'एनम्" अन्तरिक्षे, "उत्सं" मेघम् "उद्रिणम्" "उदकवन्तम्" कुर्वन्तः "सिञ्चंति" । तं च पुनरेवं मेघं यो ब्रह्मणस्पतिः लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि, सोऽस्माकमिदं नाम करोत्विति ॥ १० । १३ । १ ॥ *

## क्षेत्रस्य पतिः ॥ ८ ॥

क्षेत्रस्य पतिः । क्षेत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा ॥ १ ॥ १४ ॥

"क्षेत्रस्य पतिः" कस्मात् ? "क्षेत्रम्" तावत् "क्षियतेः–निवासकर्मणः" तदाश्रयेण हि ग्रामे क्षियन्ति निवसन्ति कुटुम्बिनः । "तस्य पाता वा पालयिता वा"

---

[1] 'अपातितम्' ॥ २ 'अर्वाञ्चः' ॥ * अत्र त्रयोदशखण्डसमाप्तिरवगन्तव्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ दशमा ( चतुर्दशा)ऽध्यायस्य प्रथमः पादः॥ १०, १॥" इति च दृश्यते ॥

मध्यमः, तत्कर्मोपपत्तौ हि क्षेत्रस्य क्षेत्रत्वसाफल्यम्, यदा हि मध्यमेन वृष्टं भवति, अथ क्षेत्रं सफलं भवति । विगृहीतमेव समाम्नातम्, निगमे तथा दृष्टत्वात्॥१०।१४।१

## तस्यैषा भवति-॥

"तस्य एषा भवति"-॥ *

"क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥"

क्षेत्रस्य पतिना वयं सुहितेनेव जयामो गामश्वं पुष्टं पोषयितृ चाहरेति । 'स नो मृळातीदृशे'। बलेन वा धनेन वा । मृळतिर्दानकर्मा पूजाकर्मा वा ॥ १ ॥ १५ ॥

"क्षेत्रस्य पतिना वयं० ( ऋ० सं० ३, ८, ९, १ )"-इति । वामदेवस्यार्षम् । क्षेत्रस्य पतये चरोः पुरोऽनुवाक्या । "क्षेत्रस्य पतिना" सुष्ठु "हितेन" केनचिदाप्तेन मित्रेण इव संयुक्ताः सन्तः "वयम्" "जयासः" गवाश्वादीनि धनानि पुष्टानि बलवन्ति पोषयितॄणि पोषणाय समर्थानि उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना त्वत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु । कथम्? इति । 'आ'-इत्यस्योपसर्गस्य सम्बन्धि क्रियापदमध्याजहार भाष्यकारः "आहर"-इति । कोऽर्थः ? उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथास्नुवमिहि, तथा क्षेत्रस्य पतिरस्मान् मृडयतु ॥ "मृळतिः दानकर्मा" "ईदृशे" धनलाभाय भोगाय चास्मान् ददातु, धारयतु, नित्यं स्थिरान् करोतु-इत्येतदाशास्महे ॥ १० । १५ । १ ॥

## तस्यैषाऽपरा भवति-॥

"तस्य एषा अपरा भवति"-। [ सा पुनः किमर्थम्? यस्य चरोः एषा पुरोऽनुवाक्या, तत्र ब्राह्मणं भवति,-"इयं वै क्षेत्रं पृथिव्यस्यामदीनायां प्रतितिष्ठति"-इति, यतः परया वर्णलिङ्गयोपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति, भक्तिमात्रं ब्राह्मणमिति ]-॥ *

---

* अत्र चतुर्दशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥ १ 'कस्मात्' ॥ * अत्र पञ्चदशखण्डसमाप्तिर्दृश्यते. सा "तस्यैषाऽपरा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**"क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व ।**
**म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृळयन्तु ॥"**

**क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृळयन्तु मृळयतिरुपदयाकर्मा पूजाकर्मा वा॥ १ ॥**

"क्षेत्र॑स्य पते॒ मधु॑मन्तम्० ( ऋ० सं० ३, ८, ९, २ )"—इति । आर्षं यदेव पूर्वस्याः । विनियोगो महाव्रते, अदित्यै चेतूरूपश्चतुःस्तनग्रहः, तस्य तृतीयमनयर्चा गृह्यते । हे "क्षेत्रस्य पते !" "मधुमन्तम् ऊर्मिम्" मधुरं स्वादु उदकसङ्घातम्, "धेनुः" यथा "पयः" दोग्धि, एवम् "अस्मासु" "धुक्ष्व" प्रक्षर । किंच, "मधुश्चुतं घृतमिव सुपूतम्" । मधु इव यत् मुहुर्मुहुः श्चोतति, घृतमिव सुपूतम् उदकमकलुषम्, तस्य दानेन "ऋतस्य नः पतयो मृळयन्तु" । "ऋतस्य" उदकस्य "पतयः", "पातारः" माध्यमिका देवाः क्षेत्रस्य पतिप्रमुखाः "मृळयन्तु" मृडयन्तु नित्यमस्मान् रक्षन्तु, पूजयन्तु वा ॥ १० । १६ । १ ॥

**तद्यत्समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकं मधुमन्तं मधुश्चुतमिति यथा ॥ २ ॥**

अत एव मन्त्रात् प्रसक्तमतः परं सर्वमन्त्रेषु जाम्यजामिता पदानां चिन्त्यते—जामीति पुनरुक्तस्य सञ्ज्ञा, सा पुनरियं निगमत एव । विज्ञायते हि—"जामि वा एतद् यज्ञे क्रियते, यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते"—इति । तदेतत् पुनरुक्तं द्विविधम्—समानशब्दार्थम्, असमानशब्दार्थं च । तत्र समानशब्दार्थं नाम, यदेकमेव पदमेकार्थमेकस्मिन्नेव वाक्याधिकारे पुनरुच्यते । तद्यथा—"मन्म॒ रेज॑ति रक्षो॒हा मन्म॒ रेज॑ति ( ऋ० सं० २, १, १७, १ )"—इति । तदधिकृत्यान्यथाप्रतिसमाधानाशक्तौ[1] वक्ष्यति—"अभ्यासे भूयांसमर्थं मन्यन्ते"—इति । यत् पुनरसमानार्थं पदमभ्यस्यते, तदपुनरुक्तमेव । यदसमानशब्दं समानार्थं च तदसुखप्रतिसमाधानमिति तदर्थमिहोपोद्घन्ति—

"तद्यत् समान्यामृचि"—इति । तदिति वाक्योपादाने । "यत्" "समान्यामृचि" एकस्यामृचि "समानाभिव्याहारं" पदं "भवति", समानमर्थमभिव्याहराति पदान्त-

१ 'चरुरूपश्च' ॥ ३ 'त्यान्यार्थाप्रतिसमाधानाशक्तौ' 'त्यान्यथाप्रतिसंधानाशक्तौ' ॥

रेण, यः कश्चित् पूर्वेऽर्द्धर्चेऽभिहितोऽर्थः, तमेव उत्तरेऽर्द्धर्चेऽभिदधत् "जामि भवति" । तत् "यथा–'मधुमन्तं, मधुश्चुतम्'–इति" । यो हि मधुश्चुत् अवश्यमसौ मधुमान् । "एकं" तावत् आचार्यमतम् ॥ १० । १६ । २ ॥

**यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम्–"हिरण्यरूपः स हिरण्यसंदृक्" इति यथा॥ ३॥**

"यदेव समाने पादे समानाभिव्याहारं भवति, तज्जामि भवतीत्यपरम्"।नानार्द्धर्चगतयोः समानार्थयोरपि पदयोरसमानपदान्तरव्यवधानात् प्रकृतार्थानुस्मृतये पुनरनुकीर्तनमजाम्येव, किंतु यदेव समाने पादे एकस्मिन् पदान्तरेण व्यवहितं पदं समानार्थं पुनरुच्यते, अविच्छिन्नप्रसक्तानुस्मृति, तदेव जामीत्यपरम् । तद्यथा–"हिरण्यरूपः स हिरण्यसन्दृक्–इति यथा ( ऋ० सं० २, ७, २३, ५ )"। यो हिरण्यरूपः सोऽवश्यं हिरण्यसन्दृक् ॥ १० । १६ । ३ ॥

**यथा कथा च विशेषोऽजामि भवतीत्यपरम्–"मण्डूका इवोदकान्मण्डूका उदकादिव" इति यथा ॥ ४ ॥**

तत् किं पौनरुक्त्येन तद्योज्यं पदम्, तत्संयोगाद्वा तदसाधु मन्त्रवाक्यम् ? न–इत्युच्यते–"यथा कथा च विशेषोऽजामि भवतीत्यपरम्" यथा कथञ्चित् यः कश्चित् स्वल्पोऽपि हि तत्र विशेषो वक्तव्यः, दृष्टानुविधानाच्छन्दसः, अर्थानुविधाने यतेतैवम् । येन केनचित् स्वल्पेनापि विशेषेण तदजामि भवतीत्यपरम् ॥

अपरे पुनः कृतवाक्यार्थपरिसमाप्त्यतिरिक्तं पदं पुनरभ्यस्यमानं निपातवत् पादपूरणत्वेनार्थवदिति प्रतिसमादधते । तदेतदवगतं भवति, इदमेव त्वभीष्टमाचार्यस्य–"यथा कथा च विशेषः" इति । तदर्थमुदाहरति–"मण्डूका इवोदकान् मण्डूका उदकादिव ( ऋ० सं० ८, ८, २४, ५ ) इति यथा–"इति । एवमादिषु यथा समानशब्देषु असमानशब्देषु च पुनरुक्तेषु यः कश्चिद् विशेषो वक्तव्यः ॥

स कथम् ? इति मन्त्रमेव तं व्याचक्ष्महे । यत्रैष पादः–"योगक्षेमं व आदाय ( ऋ० सं० ८, ८, २४, ५, )"–इति ।ऋषभस्यार्षम् । कामतो देवताः–कल्प्याः । विद्विष उच्यन्ते–

"योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्द्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान् मण्डूका उदकादिव ॥"–इति ।

योगो नाम लिप्सितार्थस्य प्राप्तिः, क्षेमो नाम तत्परिपालनम् । हे विद्विषः ! एतत् उभयं

भवद्भ्य आदाय मदधीनसर्वयोगक्षेमान् युष्मान् कृत्वा सर्वार्थेष्वपि 'अहं भूयासम्' 'उत्तमः' उत्कृष्टः युष्माकम् । 'आ वो मूर्द्धानमक्रमीम्' । उपरि युष्मानधितिष्ठेयम् । ते यूयमाक्रान्तमूर्द्धानो मया । 'मे' मम 'अधस्पदात्' पादयोरधो वर्त्तमानाः मन्मुख-प्रेक्षाः अस्वाधीनसर्वार्थवृत्तयो भूत्वा नित्यम् 'आवदत' । कथम् ? "मण्डूका इवोद-कात्" यथा मण्डूकाः उदकात् ऋते नित्यमस्वाधीनवाग्वृत्तयो निर्वचनाः सम्पद्यन्ते, एवं मदृते यूयं मा भूत । एवमत्रैकत्र विद्विषां निर्वाक्त्वे मण्डूका उपमानम्, पान्यत्र उदका-भावे मण्डूका यथा सर्वात्मनैव न भवन्ति, एवं मदभावे यूयमित्युदकमुपमानम् ॥

एष विशेषः पूर्वयोरपि मन्त्रयोर्भवति,—कश्चित् मधुमान् न तु मधु अविरतं मुहुर्मुहु-श्चोततीति, यथा "हिरण्यरूपः स हिरण्यसन्दृक्" इति, अत्र भवति कश्चिद्धिरण्यरूपः न तु हिरण्यमिव दृश्यमानः प्रिय इति विशेषः ॥ १० । १६ । ४ ॥

## वास्तोष्पतिः ॥ ९ ॥

### वास्तोष्पतिः ॥

### वास्तुर्वसतेर्निवासकर्मणस्तस्य पाता वा,पालयिता वा॥५।१६॥

"वास्तोष्पतिः (९)" वक्तव्यः । स च पुनरेष रुद्रात्मना मध्यमो वास्तोष्पतिः । विज्ञायते हि वास्तोष्पतीये यायावर्यप्रतिपत्तौ गृहगमनमधिकृत्य—"न हीनमन्वाह-रेयू रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयुः रुद्रं भूतमन्वाहरेयुः"—इति । स एष गृहाधिदेवता रुद्रो वास्तोष्पतिः । स पुनः "अमीवहा"—इति बलकृति-लिङ्गात् मध्यमः ॥

तस्य पूर्वं पदं विगृह्य निराह—"वास्तुः, वसतेः निवासकर्मणः" । "वास्तु"—इति गृहमुच्यते, उष्यते हि तस्मिन् । "तस्य" "पाता" रक्षिता, तदधिदेव-ताभावेन रुद्रात्मना च तत्कृतेनोपकारेण रक्षिता मध्यमः, इतरथा ह्युत्सीदे-युर्गृहाः ॥ १० । १६ । ५ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ॥
सखा सुशेव एधि नः ॥"

---

१ 'भूयास्थ' ॥ * अत्र षोडशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन् सखा नः सुसुखो भव ॥ शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी॥ विभाषितगुणः शिवमित्यप्यस्य भवति ॥ यद्यद्रूपं कामयते तत्तद्देवता भवति ॥ "रूपं रूपं मघवा बोभवीति" इत्यपि निगमो भवति ॥१॥

"अमीवहा वास्तोष्पते० ( ऋ० सं० ५, ४, २२, १ )"–इति । वसिष्ठस्यार्षम् । गृहकारिकास्थालीपाके यायावर्यप्रतिपत्तौ च वास्तोष्पतीयहोमे विनियोगः । हे भगवन् ! "वास्तोष्पते !" त्वम् अस्माकम् "अमीवहा" भव । अमीवा रोगः, तस्य हन्ता । कथम् ? "विश्वा" "सर्वाणि" "रूपाणि" "आविशन्" । यस्य अस्मद्दुःखहेतोर्यः प्रतिपक्षः, सर्पादेर्नकुलादिः, तस्य तस्य रूपमाविशन् तं तमस्माकममीवानं जहि । अमुना प्रकारेण "घ्नन्" अस्मदुपद्रवान्, "सखा" मित्रम्, "सुशेवः" सुष्ठुसुखः "भव" । "शेव इति सुखनाम" । तत् कस्मात्? "शिष्यतेः वकारो नामकरणः" शिषिर्धातुः, वकारः प्रत्ययः । शिष इत्यस्य स पुनः "अन्तस्थान्तरोपलिङ्गी" अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः, न सञ्ज्ञा–यथा 'अन्तस्था यरलवाः'। कश्च पुनरसौ? षकारः । तस्यान्तरमवकाशस्थानम् उपलिङ्गयति उपगच्छति यः' स भवत्यन्तस्थान्तरोपलिङ्गी । कश्च पुनरसौ? वकारः । स षकारस्य स्थानमुपगच्छति । ततो गुणे कृते शेव इति भवति । स च पुनरेष धातुः "विभाषितगुणः" इति । "शिवम् इति अपि अस्य भवति" अगुणपक्षे ॥

"सर्वाणि रूपाण्याविशन्"–इत्यतः प्रसक्तमुच्यते, शक्नोति पुनर्वास्तोष्पतिः सर्वाणि रूपाण्यावेष्टुमित्युच्यते–"यद् यद् रूपं कामयते तत्तद्देवता भवति" । अस्त्येतदैश्वर्यं देवतायाः यद्यदिच्छति रूपं तत्तत् करोति ॥ निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः–

"रूपं रूपं मघवा बोभवीति मायाः कृण्वा नस्तन्वं१ परि स्वाम् ।
त्रिर्यद्दिवः परि मुहूर्त्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ( ऋ० सं० ३, ३, २७, ३ )"–इति ।

विश्वामित्रस्यार्षम् । यावन्ति कानिचिद्रूपाणि "मघवा" इन्द्रो भवितुमिच्छति, तानि सर्वाण्यप्रतिबन्धेन "बोभवीति" पुनः पुनर्भवतीति । कथम्? 'मायाः कृण्वानः' इदं भवामीदं भवामीत्येवम् "तन्वं परि स्वां" स्वां तनुं तत्तदाकृत्यानेकविधां विकुर्वाणः ।

१ 'तत्तदेव भव' ॥

"त्रिर्यद्दिवः परि मुहूर्त्तमागात्" । दिवः परि दिवः अधि द्युलोकात्, मुहूर्त्तं मुहूर्त्तकालं प्रति यत् यः त्रिः आगात् आगच्छति । 'स्वैर्मन्त्रैः' हूयमानो वा स्तूयमानो वा युगपद्यजमानानां यज्ञेषु । 'अनतपाः' अनियतसोमपानकालः, सर्वदा यागोत्पत्तेः । 'ऋतावा' ऋतवान् यज्ञवान् । येनासावेवमात्मानं विकरोत्येवं च दिवो मुहूर्त्तं त्रिरागच्छति । तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूपमावेष्टुम् ॥

एवं च सुष्ठु यदेतदुच्यते—सर्वाणि रूपाण्याविशन्नमीवहा भवास्माकं त्वमिति १०।१७।१॥

## वाचस्पतिः ॥ १० ॥

### वाचस्पतिर्वाचः पाता वा पालयिता वा ॥ २ ॥ १७ ॥

"वाचस्पतिः (१०)" वक्तव्यः । स पुनरेषः "वाचः पाता वा पालयिता वा" प्राणात्मनेन्द्रः ॥ १० । १७ । २ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"पुनरेहि वाचस्पते देवेन मनसा सह ।
वसोष्पते निरामय मय्येव तन्वं[१] मम ॥"

### इति सा निगदव्याख्याता ॥ १ ॥

"पुनरेहि वाचस्पते० (अथ० सं० १, १, २ । ऋ० सं० १०, ६, १३, ७)"—इति । अपगतप्राणमिवात्मानं मन्यमानः पापकृत् पापसम्बन्धात् कुतश्चित् कृतानिर्णेजनः सन् प्राणं ब्रवीति—हे प्राण ! "पुनरेहि" त्वं मां प्रतीति । किं पुनरेकाकी ? न—इत्युच्यते,—"देवेन मनसा सह" सर्वेन्द्रियवृत्तिदीपकेन मनसा सह । एत्य च हे "वसोष्पते" हे धनस्य अन्नस्य च पते ! "निरामय" नियमेन रमय । मयि एव" एतां "तन्वं" "मम" मा यासमित्त इति । प्राणात् पृथग्भूतमात्मानं पश्यन् स्तोता ब्रवीति ॥ १० । १८ । १ ॥

## अपांनपात् ॥ ११ ॥

### अपान्नपात्तनूनप्त्रा व्याख्यातः ॥ २ ॥ १८ ॥

"अपान्नपात् (११)" "तनूनप्त्रा व्याख्यातः" शब्दनिर्वचनतः, अभिधेयतस्तु मध्यमः । अद्भ्य आदित्यः, ततो मध्यमः, एवमपां पौत्रः ॥ १० । १८ । २ ॥

---

१ 'ऋतावान्' ॥ * अत्र सप्तदशखण्डसमाप्तिर्दृश्यते, सा "तस्यैष भवति" इत्यतः प्रागेवोचिता ॥

## तस्यैषा भवति-॥

"तस्य एषा भवति" ॥-*

"यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईळते अध्वरेषु॥
अपान्नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥"

योऽनिध्मो दीदयद् दीप्यसेऽभ्यन्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपान्नपान्मधुमतीरपो देह्यभिषवाय याभिरिन्द्रो वर्द्धते वीर्याय वीरकर्मणे ॥ १ ॥

"यो अनिध्मो दीदयत् (ऋ० सं० ७, ७, २४, ४)"-इति। कवषस्यार्षम्। सर्व एव प्रत्यक्षकृतत्वेन गम्यते। हे "अपान्नपात्" "यः" त्वम् "अनिध्मः" अनिन्धनोऽपि "दीदयत्" "दीप्यसे" "अन्तः" "अभ्यन्तरं" प्रदेशं प्रति "अप्सु" वर्त्तमानः। "यम्" च त्वाम् "अध्वरेषु" "यज्ञेषु" "विप्रासः" "मेधाविनः" "ईळते" "स्तुवन्ति"। "सः" त्वमपान्नपात् "मधुमतीः" मधुररसाः मधुरस्वादाः "अपः" "दाः" "देहि" "अभिषवाय"। "याभिः" त्वमेव "इन्द्रः" ईश्वरः सोमपानद्वारेण "वावृधे" वर्द्धेथाः "वीर्याय" "वीरकर्मणे"-इत्येतत् प्रार्थयामहे ॥ १० । १९ । १ ॥

## यमः ॥ १२ ॥

### यमो यच्छतीति सतः ॥ २ ॥ १९ ॥

"यमः (१२)" वक्तव्यः। स पुनरेषः "यच्छति" उपरमयति जीवितात् सर्वं भूतग्राममिति यमः। अत एव बलवान् इति मध्यमः ॥ १० । १९ । २ ॥

## तस्यैषा भवति-॥

"तस्य एषा भवति"-॥ *

"परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥"

---

* अत्राष्टादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोन्विता ॥

* अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते सा "तस्यैषा भवति" इत्यतः प्रागेवोन्वितावगन्तव्या॥

परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इति ॥
अवतिर्गतिकर्मा, बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्येति ।
दुवस्यती राध्नोतिकर्मा ॥ १ ॥

"परेयिवांसम्० (ऋ० सं ८, ६, २४, १)"—इति । हविर्धानस्यार्षम्[1] । याम्ये पशौ वपायां विनियोगः । "परेयिवांसम्" "पर्यागतवन्तम्" सर्वतः प्राप्तवन्तम् । कान् पुनः ? "प्रवतः" "उद्वतः" "निवतः" च भूतसङ्घातान् । "प्रवतः"—इति मन्त्रे, "उद्वतो निवतः"—इति भाष्यकरोऽध्याजहार, तथा सामर्थ्यात्, "प्रवतः"= मनुष्याः, "उद्वतः"=देवाः, "निवतः"=तिर्यञ्चः, तथा गत्युपपत्तेः । तमेतमेवं "महीः" महतीः भूतजातीः, परेयिवांसम् । "बहुभ्यः" पुण्यकृद्भ्यः पापकृद्भ्यश्च "पन्थाम्" "पन्थानम्" "अनुपस्पशानम्" "अनुपस्पाशयमानम्" अमुना मार्गेण अयं प्राणी जीवनादुत्सर्पति, तमेव तस्य स्पाशयित्वा बद्ध्वा तस्कर इव सर्पज्वरादिरूपो भूत्वा जीवितादुपयास्यामीत्येवमुपस्पाशयमानं तमेवङ्कर्माणम् "वैवस्वतम्" विवस्वतः पुत्रम्, "सङ्गमनं जनानाम्" सममेव चक्षुः कृत्वा योऽस्माल्लोकादमुं लोकं यथाकृतकर्मफलोपभोगवशेन जनान् गमयति । तमेवं "यमम्" "राजानम्" ईश्वरं सर्वप्राणभृताम्, हे यजमान ! "हविषा" अनेन पशुलक्षणेन "दुवस्य" राध्नुहि परिचरस्वेत्यर्थः ॥

"अवतिर्गतिकर्मा"—इत्येतदत्र निर्वचनं कथं सम्बध्यत इति विज्ञातव्यम् । अथवा—प्रवत इत्यवतिरेवायमादिलुप्तः प्रपूर्व इति भाष्यकाराभिप्रायः ॥१०।२०।१ ॥

अग्निरपि यम उच्यते ॥ २ ॥ २० ॥

तत्प्रसङ्गाद्वा शब्दसारूप्याद्वा निराह—"अग्निरपि यम उच्यते" इति विचारोपप्रदर्शनाय ॥ १० । २० । २ ॥

तमेता ऋचोऽनुप्रवदन्ति—॥

"तम् एताः ऋचः अनुप्रवदन्ति"—इति प्रतिज्ञातार्थोपपादनाय, यथाग्निरपि यमशब्देन उच्यते, तथा इमा ऋचः अनुप्रवदन्ति—॥ *

---

१ 'यमस्यार्षम्'॥ * अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "तमेता ऋचोऽनुप्रवदन्ति" इत्यतः प्रागेवोचिता ॥

"सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत् त्वेषप्रतीका ॥"
"यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥"
"तं वश्चराथा वयं वसत्यास्तन्न गावो नक्षन्त इद्धम् ॥"
इति द्विपदाः ॥ सेनेव सृष्टा भयं वा बलं वा दधात्यस्तु-रिव दिद्युत् त्वेषप्रतीका भयप्रतीका बलप्रतीका यशः-प्रतीका महाप्रतीका दीप्तप्रतीका वा ॥
"यमो ह जात इन्द्रेण सह सङ्गतः ॥
यमाविहेह मातरा" इत्यपि निगमो भवति ॥
यम इव जातो यमो जनिष्यमाणो जारः कनीनां जर-यिता कन्यानां पतिर्जनीनां पालयिता जायानाम् । तत्प्रधाना हि यज्ञसंयोगेन भवन्ति—॥

"सेनेव सृष्टा० ( ऋ०सं० १,५,१०,७ )"—इत्येवमाद्याः । पराशरस्यार्षम् । एताः "द्विपदाः" विराजः । प्रातरनुवाकाश्विनयोः विनियोगः । "सेना इव सृष्टा" निश्चिता, अथवा—सेनापतिना विसृष्टा प्रेरिता । "असं दधाति" "भयं वा बलं वा दधाति" भयं परेभ्यः, बलं स्वेभ्यः, अथवा—अतर्किता भयं दधाति, अतर्किता बलं दधाति प्रणेतुः । "अस्तुः न दिद्युत्" "अस्तुः इव" क्षेप्तुर्यथा दिद्युत् आयुधम् "त्वेषप्र-तीका" "महाप्रतीका" महती या दृश्यते प्रतीकं दर्शनम्, "भयप्रतीका" दर्शनादेव भयानका, "दीप्तप्रतीका वा" दीप्तदर्शना । भयं वा बलं वा ददाति स्वेभ्यः परेभ्यश्चेति वर्त्तते । का पुनरसौ ? इति, अग्नेः अर्चिः । रक्षोभ्यो भयं ददाति, स्वेभ्यो बलम् ॥

"यमो ह जातो यमो जनित्वम्० ( ऋ० १,५,१०,८ )"—इति।यस्य इदम् एवं-लक्षणमर्चिः, स एव "यमः" अग्निः, सर्वमिदं जातं जनिष्यमाणं च । कथमेतद् गम्यते पार्थिवोऽत्राग्निर्यमशब्देनोच्यते, न मध्यमो नोत्तमो वा ? इति । तावपि हि यमा वुच्येते, यतो निगमान्तरेण विभज्य दर्शयति—"यमाविहेह मातरा ( ऋ० सं० ४,

१ 'क्षिप्ता' ॥

८, २५, १ )"–इत्यपि निगमो भवति"–इति । यत्रैष पादः, तस्मिन् मन्त्रे शक्यते यमशब्देन अग्निरुच्यत इति विभावयितुं व्यपदेशः । तद्यथा–

"बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेह मातरा ॥ ( ऋ० सं० ४, ८, २५, १ )"–इति ॥

भरद्वाजस्यार्षम् । बृहती । "बट्"–इति सत्यनाम । हे 'इन्द्राग्नी !' 'इत्था' सत्यम्, अमुना प्रकारेण यः सूक्ते महाभाग्यप्रकारोऽधिकृतः, तमित्थेत्यभिनयेनोपदिशन् ब्रवीति । 'महिमा' माहाभाग्यम् 'वां' युवयोः 'आपनिष्ठः' सर्वतोऽतिशयेन स्तुत्यः । यौ युवा-मेवमतिमहानुभावौ, तयोः 'समानः' 'वां' 'जनिता' जनयिता सूर्यः । तौ युवामेवं कृत्वैकपितृकौ एकजन्मानौ 'यमौ भ्रातरौ' । 'इह इह मातरौ' इह च पृथिवी-लोक इह च अन्तरिक्षलोके अवस्थितौ मातारौ सर्वस्य लोकस्य निर्मातारौ । एवमिह मन्त्रे पितृत्वेन सूर्यो व्यपदिष्टः, इन्द्राग्नी यमौ इति यमशब्दो मध्यमस्थानपृथिवीस्थान-योरत्रापि द्वयोर्यमयोरिह चेह च निर्माताराविति प्रथमेन 'इह'–शब्देन अग्निर्यम इति लक्ष्यते, तस्मादिहापि "यमो ह जातो यमो जनित्वम्"–इति युक्तं यदग्निरेवोच्यते ॥ "जारः कनीनां पतिर्जनीनाम्" । स एवाग्निः "जारः" "जरयिता" "कनीनाम्" "कन्यानाम्" कन्याभावस्य, यदा ह्यग्निसन्निधावूढा भवन्ति, अथ तासां कन्याभावो जीर्णो भवति "पतिः जनीनाम्" "पालयिता जायानाम्" कथम् ? "तत्प्रधानाः" सम्पद्यन्ते, अग्नौ व्रतोपगमनात्[1], आव्रतविमोकात् अग्निपारतन्त्र्याम्–॥

## "तृतीयो अग्निष्टे पतिः" इत्यपि निगमो भवति ॥
## तं वश्वराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौ-षधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं भोगैः ॥ १ ॥

यथा वै तासां[2] यथाधिकृतो यमो ह जातो यमो जनित्वमिति अग्निरेव यमो ह जातः, पतित्वेन कन्याभावस्य जरयिता ॥ तथायमपरो निगमः स्फुटतरः–"तृतीयो अग्निष्टे पतिः ( ऋ० सं० ८, ३, २७, ५ )–इत्यपि निगमो भवति" ।

"सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ( ऋ० सं० ८, ३, २७, ५ )"–इति ।

---

१ 'व्रतोपायनात्' ॥ २ 'चैतासां' ॥

सूर्याया आर्षम्। विवाहे विनियोगः। हे कन्ये! त्वमुच्यसे। 'सोमः' त्वां 'प्रथमः' 'विविदे' विन्नवान् प्राप्तवान् सौम्ये प्रथमकौमारके॥ 'गन्धर्वो विविद उत्तरः' उपजायमान-चारुताङ्गप्रविभाग-स्वरसौष्ठवामीषदनङ्गाङ्गसमाहृतहृदयां गन्धर्वः विश्वावसुः त्वां विविदे विन्नवान्। अथ पुनरिदानीं वैवाहिके उपगतायाः कर्मणि "तृतीयो अग्निष्टे पतिः" तृतीयस्तवायमग्निः। अत उद्वहनात् परम् 'तुरीयः' चतुर्थः 'ते' तवायं 'मनुष्यजाः' पतिः। इत्येवमनेनापि मन्त्रेण समवैति जारत्वं पातित्वं चाग्नेः। एवं चेत्-"यमो ह जातो यमो जनित्वम्"-इति यदधिकृतं सोऽग्निरेवेति सिद्धम्॥

"अग्निर्मह्यमथो इमाम् (ऋ० सं० ८, ३, २८, १)"-इति च केचिदधीयते निगमम्, उपचयहेत्वर्थम्। स निरुच्यते-

"सोमो ददद् गन्धर्वाय गन्धर्वो ददग्नये।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥ (ऋ० सं० ८, ३, २८, १)" इति।

स एव विनियोगः, आर्षं च।

'सोमः' एतां प्रथमं कौमारादभ्युह्य 'गन्धर्वाय' 'ददत्' अदात्। अथ 'गन्धर्वः' अप्येनामभ्युह्य स्वयौवनाधिकारात् 'अग्नये ददत्'। अथ 'अग्निः' अपि एनाम् अस्मिन् विवाहे संस्कृत्य 'रयिं' धनं 'च' 'पुत्रान्' 'च' 'मह्यम्' 'अदात्' ददाति। 'अथो' अपि च धनेन च पुत्रैश्च सह मह्यमदात् मह्यं ददाविति॥

"तं वश्चराथा वयम् (ऋ० सं० १, ५, १०, ८)"-इति। 'तम्' अग्निं यमम्। 'वः'-इति अनर्थकः। अथवा-यजमाना ऋत्विग्भिरुच्यन्ते। "चराथा" "चरन्त्या" जङ्गमया "पश्वाहुत्या" "वसत्या" "च" "निवसन्त्या" "औषधाहुत्या" जङ्गमेन स्थावरेण च हविषा "अस्तं न गावो नक्षन्ते"। 'अस्तं' गृहं यथा 'गावः' अवश्यं 'नक्षन्ते' आप्नुवन्ति स्वेनोपकारेण सायं वासाय, तथेममग्निमुभयलक्षणेन हविषा वयमाप्नुयाम। 'इद्धं' "समिद्धं भोगैः" सर्वभोगानामीश्वरं प्रदातारमिति॥१०।२१।१॥

## मित्रः॥ १३॥

### मित्रः प्रमीतेस्त्रायते॥ २॥

"मित्रः (१३)" कस्मात्? स हि "प्रमीतेः त्रायते"। प्रमीतिः प्रमरणम्, ततः सर्वलोकं त्रायते वर्षद्वारेण॥ १०। २१। २॥

**सम्मिन्वानो द्रवतीति वा ॥ ३ ॥**

"संमिन्वानो द्रवति इति वा" समन्ततो मिन्वानः उदकेन द्रवति अन्तरिक्षलोके ॥ १० । २१ । ३ ॥

**मेदयतेर्वा ॥ ४ ॥ २१ ॥**

"मेदयतेः वा" स्नेहनार्थस्य, सर्वं ह्यसावुदकेन स्नेहयति ॥ १० । २१ । ४ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

**"मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥"**

**मित्रो जनानायातयति प्रब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं च मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति ॥**

**कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति, विकृष्टदेहा वा ॥ मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्—जुहोतिर्दानकर्मा ॥ १ ॥**

"मित्रो जनान्यातयति ब्रुवाणः० ( ऋ० सं० ३, ४, ५, १ )"—इति । विश्वामित्रस्यार्षम् । अववृष्टहोमे प्रायश्चित्तम् । अग्निहोत्रे पूर्वस्यामाहुतौ विनियोगः । "मित्रो जनान्यातयति ब्रुवाणः" । आयातयति कृष्यादिषु प्रवर्तयति, तत्कर्मपूर्वकत्वात् कृष्यादिकर्मणाम्, न ह्यवृष्टे कृष्यादीनि आयात्यन्ते । आयातनमारम्भः । तद्यथा—भोजनमायातितमनेनेति । कथमायातयति ? "प्रब्रुवाणः" स्तनयित्नु"शब्दं कुर्वन्" । एवं प्रवर्त्तयन् कर्मसु ओषधीरुत्पादयन् यज्ञद्वारेण । स एव "मित्रः" "दाधार"

---

* अत्रैकविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

"धारयति" "पृथिवीम्" पृथिवीलोकनिवासिनः सर्वान्। "उत" "द्यां" धारयति, अमुना प्रकारेण अनुगृह्णन्। सः "मित्रः" "कृष्टीः" मनुष्यान् "अनिमिषाभिचष्टे" "अनिमिषन्नभिविपश्यति" उपकारद्वारेण, यो हि यस्मा उपकरोति, स तेन सम्यग् दृष्टो भवति। योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य, तस्मै "मित्राय" "हव्यम्" "घृतवत्" घृतोन्मिश्रम् "जुहोत" जुहुत हे मनुष्याः!॥

"कृष्टयः—इति मनुष्यनाम"। तत् कस्मात्? नित्यं हि ते कर्मवन्तो भवन्ति, आरम्भशीलत्वात्[1]। "विकृष्टदेहाः वा" संसृष्टदेहाः अन्ये पशवः, गवादयः, ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति, स तेषां सङ्कर्षः, मनुष्यास्तु कामतः प्रसारयन्त्यङ्गानि, स तेषां विकर्षो देहस्य॥ १०। २२। १॥

## कः॥ १४॥

## कः कमनो वा, क्रमणो वा, सुखो वा॥ २॥ २२॥

"कः (१४)"—इति वक्तव्यम्। स पुनरेष महानात्मा, सर्वात्मा प्राणबुद्धिसत्त्वः। उदाहरिष्यति च "अथैनं महान्तमात्मानम्"—इत्यधिकृत्य—"क ईषते तुज्यते (ऋ० सं० १, ६, ८, ३)"—इति। स कथं मध्यमो भवति? भवंति हि तस्मिन् सूक्ते "आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधानाः (ऋ० सं ८, ७, ४, २)"—इति। विज्ञायते च "प्रजापतिर्वै कः"—इति, प्रजापतिश्च मध्यमः। तथा च मंत्रवर्णो भवति राज्ञोऽभिषेकमधिकृत्याश्वमेधे—"प्रजापतिश्चरति गर्भे अन्तः"—इति सप्तानां प्रथमा, तयोपविष्टादभिषेकस्य जुहुयादिति। तस्माद् भवति मध्यमः॥

स कस्मात् "कः"? "कमनः वा" कामिनां काम्येष्वर्थेषु साधनम्। "क्रमणो वा" क्रमणसाधनम्, स्वयमेव वा क्रामति। "सुखः वा" काममेव वा, कः सुख इत्यर्थः॥ १०। २२। २॥

## तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
"स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥"

---

[1] 'अस्मा उप'॥ [2] 'आरम्भकुशलत्वात्'॥ * अत्र द्वाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता॥

**हिरण्यगर्भो हिरण्यमयो गर्भो हिरण्यमयो गर्भोऽस्येति वा ॥**
**गर्भो गृभेर्गृणात्यर्थे, गिरत्यनर्थानिति वा ॥**
**यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति, समभवदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातम् ॥**
**विधतिर्दानकर्मा ॥ १ ॥**

"हिरण्यगर्भः (ऋ० सं० ८, ७, ३ व० १ । १०, १०, ९ सू० १)"—इति । हिरण्यगर्भस्यैवार्षम् । सर्वात्मकत्वात्तदार्षत्वेऽपि मन्त्रस्य प्रथमपुरुषयोगः अविप्रतिषिद्धः, अथवा—परस्य ब्रह्मणो या हिरण्यगर्भावस्था प्रतिकल्पमाविर्भावतिरोभावधर्मिणी बुद्धिपूर्विका नित्या, तस्यां च नित्यो मन्त्रो विवक्षिताभिधानाभिधातृक आश्रयमात्रेणाभिधातारमुपादाय प्रवर्त्तमानोऽनुवक्तीत्यविवक्षितः पुरुषयोगः, कृतकत्वे हि नियमत एवोत्तमपुरुषयोगो मन्त्रस्याभविष्यत् । "भूतस्य" अस्य उत्पन्नस्य स्थावरजङ्गमस्य जगतः "हिरण्यगर्भः" एव "अग्रे" "समवर्त्तत" समभवत् उदपद्यत । तमुत्पन्नमान्विदं सर्वमुत्पेदे । स च पुनरग्रे जातः सन् तस्य पश्चाद्भूतस्य "एकः" असपत्नः अद्वितीयः "पतिः" पाता रक्षिता ईश्वरः स्वतन्त्रः "आसीत्" । कथम् ? इति, "स दाधार" यतः पतिः, अतः स एव दाधार, स एव धारयति, अद्यत्वेऽपि । किम् ? इति "पृथिवीम् उत द्याम्"। पृथिवीम् अन्तरिक्षम्, अपि च द्यां द्युलोकम् । अपि च "इमां" भूमिम्, अन्तरमनुप्रविष्टो बहिश्च वर्षाद्युपकारेण । योऽयमेवं भवति अतिमहानुभावः कः, तस्मात् अस्मै "कस्मै" काय "देवाय" "हविषा विधेम" हविर्दद्मः । अथवा—अनेन चरुलक्षणेन आज्य लक्षणेन वा "हविषा" तं वयं परिचरेम ॥

"विधतिर्दानकर्मा"—इति । तस्माद्धविःशब्दनतिरेव ज्यायसी । शतकृष्णलस्य पुरोऽनुवाक्या । आघारश्च प्राजापत्ये पशावनेन मन्त्रेण ॥ अथ "हिरण्यगर्भः" कस्मात् ? स हि "हिरण्यमयः" विज्ञानमयः "गर्भः" सर्वभूतानां तत्कृतत्वादन्तःप्रकाशस्य । हिर-

१ 'विधृतिर्दा' ॥

ण्यमयश्चासौ गर्भश्चेति समानाधिकरणः। "हिरण्यमयः गर्भः अस्य इति वा" शरीरेन्द्रियमनोबुद्धिभावेनैतमपेक्ष्य परमात्मानं च विज्ञानप्रकाशमात्रसतत्त्वं सर्वविशेषप्रहारित्वाद्धिरण्यगर्भमपेक्ष्य तत्प्रकृतित्वं च क्षेत्रज्ञस्यापेक्ष्य सोऽस्य हिरण्मयो हिरण्यप्रकृतिगर्भ इति हिरण्यगर्भः ॥

अथ "गर्भः" कस्मात् ? "गृभेः" धातोः गृणात्यर्थे वर्त्तमानस्य, सर्वस्य स्तुत्यो हि गर्भः ॥ "गिरत्यनर्थान् इति वा" सर्वाननर्थानसौ गिरति नाशयति ॥

अथ पुनरयं स्त्रीगर्भः कस्मात् ? इत्यत आह–"यदा हि स्त्री गुणान् गृह्णाति, गुणाश्चास्या गृह्यन्ते, अथ गर्भो भवति"। द्व्यवयवः स्त्री=रक्तम्, तत् यदा असौ पुरुषात् शुक्रावस्थान् गुणान् गृह्णाति आत्मानं सम्पृणक्ति अस्थिस्नायुमज्जानः गुणाश्चास्याः रक्तावस्थाः त्वङ्मांसशोणितानि पौरुषेण शुक्रेण गृह्यन्ते । तथैवमितरेतरकोशग्रहणव्यतिषङ्गे रक्तशुक्रयोः स्त्रीगर्भो भवति। अथवा–यदा हि स्त्री गुणान् गृह्णाति पुरुषस्य प्रेम्णा, गुणाश्चास्याः प्रेम्णा पुरुषेण गृह्यन्ते, तदितरेतरानुरागात् प्रमोदः । प्रमुदितयोः सम्पर्कात् गर्भग्रहणं च। तदेवं गर्भग्रहणहेतुकोऽयमिति ग्रहेर्गर्भः ॥१०।२३।१॥

## सरस्वान् ॥ १९ ॥

### सरस्वान् व्याख्यातः ॥ २ ॥ २३ ॥

"सरस्वान्(१९)" "व्याख्यातः" सरस्वत्या, केवलं लिङ्गकृतो विशेषः ॥१०।२३।२॥

### तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

**"ये ते॑ सरस्वन्नू॒र्मयो॒ मधु॑मन्तो घृत॒श्चुत॑ः ।**
**तेभि॑र्नोऽवि॒ता भ॑व ॥"**

### इति सा निगदव्याख्याता ॥ १ ॥ २४ ॥

"ये ते सरस्व० (ऋ० सं० ५, ६, २०, ५)"–इति । वसिष्ठस्यार्षम् । सारस्वते हविषि विनियोगः। हे भगवन् ! "सरस्वन् !" "ये" "ते" तव "ऊर्मयः" यैरूर्णोषि, नभो मेघैश्छादयसि, "मधुमन्तः" उदकवन्तः, "घृतश्चुतः" घृतवन्तः

---

* अत्र त्रयोविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

उदकप्रक्षराः, "तेभिः" तैः त्वम् अस्माकम् "अविता" तर्पयिता "भव"—इत्येतदाशास्महे ॥ १० । २४ । १ ॥ *

## विश्वकर्मा ॥ १६ ॥

### विश्वकर्मा सर्वस्य कर्त्ता ॥ १ ॥ २५ ॥

"विश्वकर्मा ( १६ )" वक्तव्यः । स कस्मात् ? "सर्वस्य कर्त्ता" यावदिदं किञ्चिद् भूतं भविष्यमाणं[1] क्रियमाणं च तस्य सर्वस्य कर्त्ता, वाय्वात्मकत्वात् सर्वचेष्टानां मध्यमः । स कथं सर्वं करोति ? पार्थिवाप्यौ धातू तेजसा परिपच्यमानौ वायुव्यूहेन विचरन् सर्वभावानुप्रवेशी सर्वमिदमत्यद्भुतमचिन्त्यमकृतात्मभिर्जगत् [2] करोतीति स मध्यमः, विश्वकरणाद् विश्वकर्मा । विज्ञायते हि वैश्वकर्मणं हविरधिकृत्य साकमेधेषु—"अथैष वैश्वकर्मणो विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवत्"—इति । भवति चोदकसम्बद्धमस्य मध्यमलिङ्गं विश्वकर्माणमधिकृत्य वैश्वकर्मणे सूक्ते,—"तमिद् गर्भं प्रथमं दध्र आपः ( ऋ० सं० ८, ३ १७, ६ )"—इति । विषुवति च वैश्वकर्मणं ग्रहमधिकृत्य विज्ञायते हि—"इन्द्रो वै वृत्रमहन् स इमं लोकमभ्यजयदमुं नु लोकं नाभ्यजयत् तं विश्वकर्मा भूत्वाभ्यजयत्"—इति । तस्यैव ग्रहस्य पुरोरुचमधिकृत्य विज्ञायते हि—"यद्यैन्द्रीं वैश्वकर्मणीं विद्यात्, तयैव गृह्णीयात्"—इति । स एष एवमादिभ्यो लक्षणेभ्यः सर्वस्थानानुभावित्वेऽपि सति विशेषतो मध्यम इति मध्यमस्थाने समाम्नातः ॥ १० । २५ । १ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"वि॒श्वक॑र्मा॒ विम॑ना॒ आद्वि॒हाया॑ धा॒ता वि॑धा॒ता प॑र॒मोत सं॒दृक् । तेषा॑मि॒ष्टानि॒ स मि॒षाम॑दन्ति॒ यत्रा॑ सप्तऋ॒षीन्प॒र एक॑मा॒हुः ॥"

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च

---

* अत्र चतुर्विंशखण्डसमाप्तिरुचितावगन्तव्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ दशमा ( पञ्चदशा )ऽध्यायस्य द्वितीयः पादः १०, २ ॥" इति चोपलभ्यते ॥

१ 'करिष्यमाणम्'—इति पाठः क्वचिद्दृश्यते—स साधुः । २ 'सर्वमेवमत्य' ॥ * अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

सन्द्रष्टा भूतानां तेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् ॥

अथाध्यात्मम्—

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्दर्शयितेन्द्रियाणामेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वान्नेन सह सम्मोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥ १ ॥

"वि॒श्वक॑र्मा॒ विम॑ना॒ आद्विहा॑या० (ऋ०सं०८,३,१७,२)"—इति। भौवनस्य विश्वकर्मणः प्रजापतेरार्षम्। अग्नौ वैश्वकर्मणाभ्यां सूक्ताभ्यां षोडशगृहीतं हूयते, तत्र विनियोगः। "विश्वकर्मा" "विमनाः" "विभूतमनाः" विभूतप्रज्ञानः, सर्वत्राप्रतिहतमस्य प्रज्ञानम्। किं प्रज्ञानमेव केवलम्? न—इति उच्यते—"आद्विहायाः" अप्यसावात्मनाविहायाः, आत्मनांपि सर्वप्रकारं महान्, महत्त्वाच्च "व्याप्ता" व्याप्नोति। एवं सर्वप्रकारं सर्वस्य जगतः यत एव च महान्, अत एव "धाता" उत्पादयिता सर्वभूतानाम्, उत्पाद्य च "विधाता" जीवनस्य, जीवतां च साध्वसाधुषु कर्मसु प्रवर्त्तमानानां "परमोत सन्दृक्" परमः प्रकृष्टः अव्यवधानेन "संद्रष्टा" सम्यक् प्रविभागेन द्रष्टा। साध्वसाधुप्रविभागदृष्टानां "तेषाम्" च भूतानां यानियानि "इष्टानि" प्रियाणि, तस्य विश्वकर्मणो दैवीं सम्पदमभिसम्पन्नानि। कान्त्यर्थो वा इषिः। यान्यभीप्सितानि तस्य विश्वकर्मणः। "मतानि वा" अभिमतानि वा। तस्य विश्वकर्मणः "नतानि वा" प्रह्वीभूतानि, तं विश्वकर्माणं प्रति तत्परिज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि, तेन सह एकीभूतानि विश्वकर्मणा, आधिदैविकमात्मानमभिसम्पन्नानि। "स मिषा मदन्ति" "इषा" उदकेन "अद्भिः" परिपुताभिः सुसूक्ष्माभिः "सह" तेन कर्मणा समानम् अविशेषेण मोदन्ते। क? "यत्रा सप्तऋ-

षीन् पर एकमाहुः" । "यत्र एतानि सप्तर्षीणानि" रसानामाकर्षणानि, द्रष्टॄणि वा रश्मीन्, "ज्योतींषि" "एकं" भवन्ति, अविभागमुपगच्छन्ति, मण्डले ह्येतेषामविभागः । किं तत्रैव ? न—इत्युच्यते—"यत्र पर एकमाहुः" । क्व च पुनः पर एकमाहुः ? मण्डलाधिष्ठातरि । योऽसौ यज्ञदानतपसां भोक्ता, हिरण्यश्मश्रुः, हिरण्यकेशः, आप्रणखात् सर्व एव सुवर्ण इति विज्ञायते 'एकम्' एव यमाहुर्देवतासतत्त्वाविदः—"इत्यधिदैवतम्" देवतामधिकृत्य मन्त्रस्य व्याख्यानमधिदैवतम् ॥

"अथाध्यात्मम्" आत्मानमधिकृत्य विश्वकर्मणो व्याख्यानम् अध्यात्मम् । कः पुनरयमात्मा ? विज्ञानसतत्त्वमात्रं सर्वविशेषविज्ञानप्रसवबीजम्, यदेकदेशाः प्रच्युता इव सन्तस्ततः कथमप्यविद्याव्यवधानादन्यत्वमिव विभ्रतः प्रतिशरीरं शास्त्रेण तावद्भाव्यं यावच्छिष्यते, सोऽयमात्मा प्रतिशरीरं क्षेत्रज्ञत्वेन स्वविशेषेण विज्ञानशक्त्याधिकारमनुभवन् हिरण्यगर्भावस्थमधिदैवमित्युच्यते । अथ पुनरन्यः शरीरावस्थासु वर्त्तमानः तदधिदैवतमनपेक्ष्य प्रतिशरीरं क्षेत्रज्ञत्वेव यद्विश्वकर्मभावमनुभवन् मन्त्रेण व्याख्यायते, तदध्यात्ममस्य ॥

"विश्वकर्मा" "सर्वस्य कर्त्ता" परमात्मा, प्रतिशरीरं क्षेत्रज्ञत्वेन वर्त्तमानः, तत्कृतत्वाद् वायोः क्रियापरिस्पन्दस्य । न केवलं सर्वक्रियाशक्तिमान्, किं तर्हि ? "विमनाः" च "विभूतमनाः" सर्वप्रज्ञानः । सर्वतोमुखाभिः विशेषविज्ञानशक्तिभिः "आद्विहायाः" अपि च विहायाः, महान्, विज्ञायते हि—"स वा एष महानात्मा अन्नादो वसुदानः"—इति । न केवलं महान्, किं तर्हि ? "धाता" स्रष्टा, स्वशक्तिविक्षेपस्य[1] । "विधाता" च तद्योग्यानां विषयाणां विक्षिप्तविहितानां च । तेषां "परमः" उत्कृष्टः[2] "इन्द्रियाणां संदर्शयिता" तत्कृतत्वाद् विषयविषयिसम्बन्धस्य, इन्द्रियाणां च तदधिष्ठितानां प्रतिविषयमालोकसामर्थ्योपजनात् तस्य विश्वकर्मणः परमात्मनः । "तेषां" स्वशक्तिविक्षेपात् क्षेत्रज्ञविभूतीनां यानि "इष्टानि" पूर्ववत् परमात्मज्ञानश्रद्धोपासनाभावनाप्रक्षपितदुरितानि तानि । "इषा" "अन्नेन" सह "सम्मोदन्ते" तृप्यन्ति । क्व ? "यत्रा सप्तऋषीन्" "यत्र इमानि सप्तऋषीणानि इन्द्रियाणि" द्रष्टॄणि, इन्द्रियाणि "ज्योतींषि" एकमाहुः । क्व ? बुद्धौ । तस्यामपि ह्येतेषामेकत्वमस्त्विति । किं तत्रैव ? न—इति, उच्यते—"पर एकमाहुः" । न यतः परतरमस्ति, तस्मिन् परतरे विश्वकर्मणि यदन्नं शक्तिमात्रं यदुपविष्टं भात् परमात्मा नित्यतृप्तः, तेनान्नेन परमात्मनि तद्विज्ञानोपासनात् ताद्भाव्यमुपगतास्तेन सहभूता मोदन्ते निरशनायापिपासाः नित्यतृप्ताः, अतीतशोकमोहजरामृत्यव आत्मविद इत्येवमाहुः सतत्त्वदृशो ब्राह्मणाः । यथा[3] चानुपक्षीणस्वधाशक्तिनित्यतृप्तं सर्वभावपरं तत् परं ब्रह्म

1 'स्वशक्तिविशेषस्य' ॥ 2 'प्रकृष्टः' ॥ 3 'यच्चानुपक्षी' ॥

यदात्मविदः प्रतिपद्यन्ते, तथा पुराणसूक्तेऽपि परमेष्ठिन आर्षम्–मन्त्रो दर्शयति,– "स्वधया तदेकं तस्माद्धान्यं न परः किञ्चनास (ऋ० सं० ८, ७, १७, २)"–इति। एवं सर्वत्र सम्भवो यावद्विषयो मन्त्राणां योज्यः–इत्युपप्रदर्शनायोभयथा मन्त्रो वर्णितः॥

"इत्यात्मगतिमाचष्टे" अमुना प्रकारेण वर्ण्यमान एष मन्त्र आत्मगतिमाचष्टे प्रख्यापयाति॥ १०। २६। १॥

## तत्रेतिहासमाचक्षते–विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार॥ २॥

यथा चेयमात्मगतिवाचिका ऋक्, "तत्र" एतस्मिन्नर्थे "इतिहासमाचक्षते" आत्मविदः। इतिवृत्तं परकृत्यर्थवादरूपेण। यः कश्चित् आध्यात्मिक आधिदैविक आधिभौतिको वार्थ आख्यायते दिष्ट्युदितार्थावभासनार्थं स इतिहास इत्युच्यते। स पुनरयमितिहासः सर्वप्रकारो हि नित्यमविवक्षितस्वार्थः, तदर्थप्रतिपत्तॄणामुपदेशपरत्वात्। "विश्वकर्मा ह भौवनः" यथोदितमिदं वैदिकं कर्म सम्बन्धदर्शनेन यः सर्वं करोति, सर्वात्मकत्वात् सर्वस्य वैश्वकर्मणीमवस्थामात्मन्युन्नीय स यजमानो विश्वकर्मा भुवनानां भूतानामात्मनि होता भूतेषु चात्मानम्। तथाहि विज्ञायते–"हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि"–इति। तथा च विदुषो दर्शनकृतः सर्वमेधसम्पत्सर्वकर्मसु। विज्ञायते ह्यग्निहोत्रमधिकृत्य–"स यत् सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेदं सर्वमनु सर्वं तद्यथाऽनेन सकृत् सर्वं तेनेष्ट्वा लोकं जयेत, तावदुह प्रातराहुत्या लोकं जयते, यस्यैते आहुती न बद्धं यावज्जीवमाप्नोति, स हि बहूनि च न बद्धानि, एतयोर्देवतयोरन्यतरामनु"–इति। न बद्धमित्यनन्तमुच्यते। तदेवं यस्मिन् कस्मिंश्चिन्मेधे कर्मणि अग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्मै सर्वार्थं हुत्वात्मानं सर्वमेवं भवतीति समासार्थः। स एषः सर्वस्य विदुषः सर्वः सर्वहुत् यज्ञः सर्वभावाय सम्पद्यते दर्शनतः। यो हीतरः सर्वमेधो निरूढसञ्ज्ञोऽहीनः। तद्यथा–त्रीण्याश्वमधिकानि, पञ्च पौरुषमेधिकानि, वाजपेयाप्तोर्यामौ चेति, तत्र "स आत्मानमपि अन्ततो जुहवाञ्चकार"–इति। स एतदात्महोमस्य विधानान्नोपपद्यते, दर्शनतस्तु सर्वमुपपद्यते। सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन्, सामान्यं चात्मानं विशेषे जुहाव

---

१ 'वात्मनि'॥

पश्यन्, सर्वकर्मसु स्वयमेवायमात्मयाजीत्युच्यते । यमधिकृत्य पृष्टं तदाहुरात्मयाजी श्रेयान् देवयाजीति । यथा चैतदेवमधिदैवाविद आत्मवित् श्रेयान् ॥ १० । २६ । २ ॥

## तदभिवादिन्येषर्ग्भवति—

## "य इमा विश्वा भुवनानि जुह्वत्" इति ॥ ३ ॥ २६ ॥

यमधिकृत्य "विश्वकर्मा विमना आद्विहायाः"—इतीयमृक् आत्मगत्या निरुक्ता, "तदभिवादिनी" तस्यैवार्थस्य इतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी "एषा ऋक् भवति" यथा—"य इमा विश्वा भुवनानि जुह्वत् ( ऋ० सं० ८, ३, १६, १ )"—इति । अनेकेषां समानप्रयोगदर्शनाधिकारवतां "यः" नाम कश्चित् किमित्येवं न्यसीदेवं कर्मण्यङ्गभावमुपजगाम । कथम् ? ऋषित्वेन, "होता" द्रव्यगुणकर्मदेवतायाथार्थ्यद्रष्टृत्वेन "विश्वा भुवनानि जुह्वत्" सर्वभूतान्यमुना सर्वमेधसम्पद्दर्शनप्रक्रमेण जुह्वत् अहावयत् । तस्य किम् ? इति । 'सः आशिषा' आशीः—प्रार्थना, कामः, प्रयोगदर्शनहेतुः, सर्वमिदमहं स्यामिति, येन प्रेर्यमाणः सर्वकर्मसु सर्वमेधं सर्वप्राप्तये प्रायुङ्क्त । 'द्रविणमिच्छमानः' प्रयोगजनितापूर्वफलं सर्वभावमिच्छन् । तत् किं नाप ? न—इत्युच्यते—आप । कथम् ? इति । 'प्रथमच्छत्' प्रथमोऽप्रजत्यात्, प्रजापतिभावेन मुख्यस्य च्छादयिता । यतः सम्पदे तथा सन् 'अवरान्' पश्चादुत्पन्नान् अस्मदादीन् विशेषान् 'आविवेश' व्याप्तवान् व्याप यस्यैवं प्रयोगफलयोर्वृत्तिः "स नः पिता" "जनिता" सोऽस्माकं पिता पाता जनयिता रक्षिता चेत्येवं विजानीमः, अतः ताद्भाव्यमश्नुवीमहीति ॥ १० । २६ । ३ ॥

## तस्योत्तरा भूयसे निर्वचनाय—॥

यथा चैतदेवं नान्यथेति तथेयम् "तस्य" "उत्तरा ऋक्" "भूयसे" बहुतराय "निर्वचनाय"—॥ *

## "विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु॥"

## विश्वकर्मन् हविषा वर्द्धयमानः स्वयं यजस्व पृथिवीं च

---

१ 'याथात्म्यद्र' ॥ * अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा "यथा चैतदेवम्" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥ १ ॥**

"विश्वकर्मन् हविषा वावृधानः॰ ( ऋ॰ सं॰ ८, ३, १६, ६ । य॰ वा॰ सं॰ १७, २२ )"-इति । प्रयोगावस्थां फलावस्थां च विश्वकर्मणः प्रतीत्योच्यते-हे "विश्वकर्मन्" प्रयोगावस्थित ! त्वमुच्यसे । अनेन "हविषा" सर्वमेधदर्शनसम्पदादियुक्तेन त्वं वर्द्धमानः विश्वकर्मत्वमापद्यमानः तत्फलविपरिणामकाले "स्वयं यजस्व" स्वयं सङ्गच्छस्व व्याप्नुहि । "पृथिवीम् उत द्याम्" "पृथिवीं च दिवं च" सर्वव्यापी भव । अपि च तत्रैतस्मिन् दर्शनकृते महिम्नि "मुह्यन्त्वन्ये अभितो जनासः" मोहमुपगच्छन्तु अभितः सर्वतः ते "जनाः" ये त्वदुपासनापराङ्मुखाः सन्तः तव "सपत्नाः" समानं पतित्वमिच्छन्ति । अथ पुनः "इह" त्वद्दर्शनोपासनाकर्मणि वर्त्तमानानाम् "अस्माकम्" "मघवा" सर्वधनेशानः, "सूरिः" मेधावी, सर्वत्राप्रतिहतप्रज्ञानः, "प्रज्ञाता" विशेषतोऽस्माकम् "अस्तु"-इत्येतदाशास्महे ॥

त्वष्टा, विश्वकर्मा,-इत्यधिभूतप्रधानाः पुराणविदः, तथापि कलाकौशलादिसर्वज्ञानहेतुको नामप्रतिलम्भ इत्यविप्रतिषिद्धम् । एवं सर्वासु देवतासु ॥ १० । २७ । १॥

## ताक्ष्र्यः ॥ १७ ॥

**ताक्ष्र्यस्त्वष्ट्रा व्याख्यातः ॥ २ ॥**

"ताक्ष्र्यः (१७)"-इति वक्तव्यम् । स पुनरेषः "त्वष्ट्रा व्याख्यातः" । तद्यथा- "तूर्णमश्नुते" ( ८ । १४ । १ )-इत्येवमादि ॥ १० । २७ । २ ॥

**तीर्णे अन्तरिक्षे क्षियति ॥ ३ ॥**

अथवा-"तीर्णे अन्तरिक्षे" सर्वतो गते "क्षियति" निवसति ॥ १० । २७।३ ॥

**तूर्णमर्थं रक्षति, अश्नोतेर्वा ॥ ४ ॥ २७ ॥**

अथवा-"तूर्णम्" उदकाख्यं "रक्षत्यश्नुते वा" अर्थविकल्पेन तूर्णशब्दात् पूर्वपदम्, रक्षतेरश्नोतेर्वोत्तरपदम् ॥ १० । २७ । ४ ॥

**तस्यैषा भवति--॥**

"तस्य एषा भवति"-॥ *

---

* अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

"त्यमू॒षु वा॒जिनं॑ दे॒वजू॑तं स॒हावा॑नं तरु॒तारं॒ रथा॑नाम् ।
अरि॑ष्टनेमिं पृत॒नाज॑मा॒शुं स्व॒स्तये॒ तार्क्ष्य॑मि॒हा हु॑वेम ॥"

तं भृशमन्नवन्तम् । जूतिर्गतिः प्रीतिर्वा । देवजूतं देवगतं देवप्रीतं वा । सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये ताक्ष्यमिह ह्वयेमेति ॥ कमन्यं मध्यमादेवमवक्ष्यत् ॥ १ ॥ २८ ॥

"त्यमूषु वाजिनम् (ऋ० सं० ८, ८, ३६, १ । सा० सं० छ० आ० ४, १, ५, १)"—इति । अरिष्टनेमेरार्षम् । विषुवति निष्केवल्ये शस्यते, "सद्यश्चित्"—इति च । यः ताक्ष्यः वाजी वेजनवान्, भयदाता वा परेभ्यः, बलवान् वा । "त्यं" तं "देवजूतं" देवैर्गतम्, परत्वेन ज्ञातं वा परोऽयमस्माकमिति । "देवप्रीतम्" देवैर्वा समानप्रीतम् । "सहावानम्" सहो बलम्, तेन तद्वन्तम्, एतदेव मध्यमलिङ्गम् । "तरुतारम्" "तारयितारम्" "रथानाम्" रंहितॄणां भूतानाम्, गतिमतां गमयितारमित्यर्थः, बलहेतुकत्वाद् गमनस्य । एवमादिगुणयुक्तम् "अरिष्टनेमिम्" केनचिदप्यप्रतिहतवज्रप्रहरणम् । नेमिरिति वज्रनाम । "पृतनाजम्" पृतनानां जेतारम् । "आशुम्" शीघ्रम् । "स्वस्तये" आत्मनः स्वस्त्ययनाय । सुष्ठु वयम् "इह" एतस्मिन् कर्मणि "हुवेम" आह्वयामहे ॥ १० । २८ । १ ॥

तस्यैषापरा भवति—॥

"तस्य एषा अपरा भवति" । सा पुनः किमर्थम् ? बलकृतिरुपप्रदर्शिता, वर्षकर्मोपप्रदर्श्यतेऽनया, सत्यामपि हि बलकृतौ पक्षिराजे गुरुत्मति सन्देहोऽसावपि बलवांश्च ताक्ष्यनामा च, वर्षकर्म त्वसमानं तेनास्य । अतश्चोक्तमेतदेवं विचारास्पदमपेक्ष्य "कम् अन्यम् मध्यमात् एवम् अवक्ष्यत्"—इति—॥ *

"स॒द्यश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इव॒ ज्योति॑षा॒पस्त॒तान॑ ।
स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते युव॒तिं न शर्या॑म् ॥"

सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा

* अत्राष्टाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषापरा भवति" इत्यतः प्रागेवोचिताऽवगन्तव्या ॥

**पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥ १ ॥**

"सद्यश्चिद्यः शवसा पञ्च कृष्टीः ( ऋ० सं० ८, ८, ३६, ३ )"–इति । "सद्योऽपि" "यः" तार्क्ष्यः, "बलेन तनोति अपः" वर्षभावेन । सद्यः शब्दो लक्षणार्थः,–अद्य, श्वः, परश्वः, परुत्, परारि चेति । "चित्" –इति अप्यर्थे, न कदाचिदप्यन्यः,सर्वदा तार्क्ष्य एवेति । किं प्रति अपः तनोति ? "पञ्च कृष्टीः" पञ्च मनुष्यजातानि प्रति, ब्राह्मणप्रमुखान् निषादपञ्चमान् वर्णान् प्रति, तदनुग्रहपूर्वकत्वात् सर्वलोकानुग्रहस्य वृष्टिग्रहणेन तद्विवक्षा। कथम् ? "सूर्यः इव ज्योतिषा" यथा सूर्यो ज्योतिःप्रकाशं लोकानुग्रहाय तनोति,तथा तार्क्ष्यः अपस्तनोति।यथा हविषा विधेमेति नम्यते,तत्र कस्मै देवायेति सम्प्रदानश्रुतेः[1] सम्प्रदानावैधुर्याय, एवमिहाप्युपमानोपमेयकारकसम्बन्धावैधुर्याय ज्योतिरिति नम्यते[2] । कस्मात् पुनरयमपस्ततान ? इति । इतः–यस्मात् "सहस्रसाः शतसा अस्य रंहिः" बहूंश्च बहुतरांश्च प्रकारान् मेघविदारणाय भजते अस्य तार्क्ष्यस्य रंहिः गतिः । अपि चैवमसह्यास्य गतिः, तस्माद् वरं तेनैव "एताम्" अस्य "वारयन्ति" न प्रतिबद्धुं शक्नुवन्ति केचन, अतिवेगवत्त्वात् । कथम् ? "युवतिं न शर्याम्" अतिबलवता धनुष्मता मुक्तां "शरमयीम् इषुम्" अन्येन वान्येन वाकाशप्रदेशेन प्रतिमिश्रयन्तीमात्मानम् । य एवमादिगुणयुक्तः तार्क्ष्यः, स इदं नामास्माकं करोत्विति ॥ १०।२९।१॥

## मन्युः ॥ १८

**मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा, मन्यन्त्यस्मादिषवः ॥ २ ॥ २९ ॥**

"मन्युः(१८)" "मन्यतेः" क्रोधार्थस्य, दीप्त्यर्थस्य वा, उभयमप्युपपद्यते, बलवत्त्वात् मध्यमस्य ॥ १०।२९।२ ॥

**तस्यैषा भवति–॥**

"तस्य एषा भवति"–॥ *

**"त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभिप्रयन्तु नरो अग्निरूपाः॥"**

---

१ 'संप्रदानश्रुतिः' इति पाठो भवेत् ॥ २ 'गम्यते' ॥ * अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिशयमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः सन्नद्धाः कवचिन इति वा ॥ १ ॥

"त्वया मन्यो सरथमारुजन्तो० ( ऋ० सं० ८, ३, १९, १। अथ० सं० ४, ३१, १ )"–इति। तपसः पुत्रो मन्युर्नाम, तस्यार्षम्। श्येनाजिरादिषु निष्केवल्ये विनियोगः। हे भगवन्! "मन्यो!" त्वया "सरथम्" एकमेव त्वया सह रथं समारुह्य "रुजन्तः" अभिभवन्तः, "हर्षमाणासः" तवाश्रयादविकलाः हृष्यन्तः, "अधृषिताः" अनाधर्षिताः परैः, अपि च हे "मरुत्वः!" "तिग्मेषवः!" एते अस्मद्योधाः "आयुधा" "आयुधानि" "संशिशाना:" "संशिश्यमानाः" तीक्ष्णानामिषूणामायुधानां च योऽर्थः तमनुतिष्ठन्तः भिन्दन्तः इषुभिः, छिन्दन्तः आयुधैः, अमुना प्रकारेण एते "नरः" नराः अस्मन्मनुष्याः योधाः, "अग्निरूपाः" "अग्निकर्माणः" अग्नय इवैते सेनाम् "अभि" भवन्तः "यन्तु" इति ॥ १० । ३० । १ ॥

## दधिक्राः ॥ १९ ॥

दधिक्रा व्याख्यातः ॥ २ ॥ ३० ॥

"दधिक्राः ( १९ )"–इति वक्तव्यम्। सः "व्याख्यातः"–"दधत् क्रामति" ( २ । २७ । ५ ) इत्येवमादि। सर्वं मध्यमे योज्यम् ॥ १० । ३० । २ ॥

तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥"

आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवान्-

---

* अत्र त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

**वैरणवान् सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति ॥ १ ॥**

"आ दधिक्राः शवसा पञ्च कृष्टीः० ( ऋ० सं० ३, ७, १२, ५ )"–इति । वामदेवस्यार्षम् । "आततान" "आतनोति" सर्वतस्तनोति । कोऽसौ ? इति, "दधिक्राः" ॥ केन ? "शवसा" "बलेन" ॥ किमातनोति ? "अपः" ॥ क ? "पञ्च कृष्टीः" "पञ्च मनुष्यजातानि" प्रति ॥ कथम् ? "सूर्यः इव ज्योतिषा" "सहस्रसाः शतसा" बहूनां बहुतराणां च उदकानां सम्भक्ता, "वाजी" "वेजनवान्" "अर्वा" "ईरणवान्" उदकेरणक्रियायोगी । य एवमादिगुणयुक्तो दधिक्राः, सोऽस्माकम् "इमाः" "इमानि" स्तुतिवाक्यानि स्तुतिलक्षणानि "वचांसि" "सम्पृणक्तु" "मध्वा" "मधुना, उदकेन" ॥ १० । ३१ । १ ॥

**मधु धमतेर्विपरीतस्य ॥ २ ॥**

"मधु"–"धमतेः" आद्यन्त–"विपरीतस्य" उदकं स्तुत्यनन्तरमेव ददात्वित्यर्थः ॥ बलकृतिः, वर्षकर्म चोभयमप्यस्ति, तस्मात् मध्यमः ॥ १० । ३१ । २ ॥

## सविता ॥ २० ॥

**सविता सर्वस्य प्रसविता ॥ ३ ॥ ३१ ॥**

"सविता ( २० )"–इति वक्तव्यम् । सः 'व्याख्यातः' "इममेवाग्निं सवितारमाह"–इत्यत्र । स पुनरिह वर्षकर्मयोगात् मध्यमः ॥ १० । ३१ । ३ ॥

**तस्यैषा भवति–॥**

"तस्य एषा भवति"–॥ *

**"सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥"**

**सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वात्वरमाण इति वा, सविता समुदितारमिति ॥ १ ॥**

---

* अत्रैकत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

"सविता यन्त्रैः पृथिवीमरम्णा० ( ऋ० सं० ८,८,७, १ )"—इति । अर्चन्नामाङ्गिरसो हैरण्यस्तूप ऋषिः, उत्तरायाश्च ( ७५२ पृ० ) । "सविता" मध्यमः, सर्वबलेशानः । किम् ? इति,—"यन्त्रैः पृथिवीम् अरम्णात्" यावत् किञ्चित् यन्त्र्यते तत् सर्वं बलेनैव, यन्त्रिता च इयं पृथिवी निश्चला, न चान्य इन्द्रात् बलवान् यन्त्रयितास्ति, तस्मात् इन्द्र एवेमां संयच्छन् स्थिरामकरोत् । "रम्णातिः संयमनकर्मा"—इति उक्तम् । अथवा—वर्षेणोपकारेण पृथिवीलोकनिवासिनो धारयति, तदस्याः संयमनम् । किमेतावदेव ? न—इत्युच्यते—"अस्कम्भने सविता द्यामदृंहत्" । एवमप्येतस्मिन् अस्कम्भने "अनारम्भणे" अमूर्तेऽन्तरिक्षे, यत्र पर्णमपि नालमवस्थानाय, तत्रैवमप्यतिगुर्वीं सौपर्णीं द्यां सविता एव अदृंहत् स्थिरामकरोत्—आभूतसंप्लवात् । को हि नाम मध्यमात् सवितुरन्य एतदतिदुष्करं कुर्यात् ? अपि च "अश्वम् इव अधुक्षत्" यथा-अश्वबन्धः अश्वं धूनुयात्, उपावृत्तम् अनायासेन रजः तस्मादपनेष्यन् । एवं "धुनिं समुद्रम्" उदकबन्धितारम् "मेघम्" "अधुक्षत्" "सविता" अधूनोत् अकम्पयत् उदकप्रक्षरणाय । क्व ? "बद्धम् अतूर्ते" एतस्मिन्नन्तरिक्षे अहिंसिते अत्वरमाणे वा, सर्वगतत्वादाकाशे, गमनायोग्ये वा । वाय्वात्मनैव विष्टभ्य निश्चेष्टं बद्धमिवाधुक्षत् यः सविता, सोऽस्माकमिदं नाम करोतु इति । समुदिता=समुद्रः=मेघः ॥ १० । ३२ । १ ॥

## कमन्यं मध्यमादेवमवक्ष्यत् ॥ २ ॥

"कम् अन्यम् मध्यमात् एवम् अवक्ष्यत्"—'मेघमधूनोत्' इति ॥ १० ।३२॥२॥

## आदित्योऽपि सवितोच्यते ॥ ३ ॥

कुतः संशयः ? अन्योऽपि यस्मात् मध्यमात् सवितोच्यते,यत आह—"आदित्यः अपि सविता उच्यते" इति ॥ १० । ३२ । ३ ॥

## तथा च हैरण्यस्तूपे स्तुतोऽर्चन् हिरण्यस्तूपऋषिरिदं सूक्तं प्रोवाच ॥ ४ ॥ ३२ ॥

यथा च एतत् एवम्, "तथा च" एतस्मिन्नेव "हैरण्यस्तूपे"सूक्ते स्तवः हैरण्यस्तूपमिदं सूक्तमिति । कुत एतत् ? अत आह—"अर्चन् हिरण्यस्तूपऋषिः इदं सूक्तं प्रोवाच" इति । अर्चन्—नाम्ना हिरण्यस्तूपः, तद्रूपः तद्व्रतो वा. स यथा एतत् सूक्तं प्रोवाच ॥ १० । ३२ । ४ ॥

तदभिवादिन्येषर्ग्भवति—॥

"तदभिवादिनी एषा ऋक् भवति" अस्मिन्नेव सूक्ते—॥ *

"हिर॑ण्यस्तूपः सवितुर्यथा॑ त्वाङ्गिरुसो जु॒ह्वे वाजे॑ अ॒स्मिन् ।
ए॒वा त्वार्च॒न्नव॑से वन्द॑मानः सोम॑स्येवां॒शुं प्रति॑ जागरा॒हम्" ॥

हिरण्यस्तूपो हिरण्यमयस्तूपो हिरण्यमयः स्तूपोऽस्येति वा । स्तूपः स्त्यायतेः, सङ्घातः । सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अन्ने अस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम् ॥ १ ॥

"हिर॑ण्यस्तूपः सवितुर्यथा॰ (ऋ॰ सं॰ ८, ८, ७, ५)"—इति । हे "सवितः !" "यथा" अन्यकालीनः "हिरण्यस्तूपः" "त्वा" त्वाम् "आजुह्वे" आजुहाव, कर्मण्याहुतवान्, एवम् "अहम्" अप्येतस्मिन् कल्पे हिरण्यस्तूपतामापन्नः "अर्चन्"नामा "अवसे" अवनाय "वाजे अस्मिन्" "अन्ने" संस्कृते हविषि त्वामाहूय "वन्दमानः" स्तुवन् "सोमस्य इव अंशुम्" सोममिव क्रीत्वा आहृतः "प्रति" "जागर" "जागर्मि" अनन्यमनाः त्वामा यागादुपासे—इति ॥

"स्तूपः स्त्यायतेः" । "स्त्यै सङ्घाते (भ्वा॰ प॰)" तस्य स्तूपः="सङ्घातः" इति ॥ १० । ३३ । १ ॥

## त्वष्टा ॥ २१ ॥

त्वष्टा व्याख्यातः ॥ २ ॥ ३३ ॥

"त्वष्टा(२१)"—इति वक्तव्यम् । सः "व्याख्यातः" (८।१४।१)॥१०।३३।२॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान ।
इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥"

---

* अत्रैव द्वात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तदभिवादिनी"—इत्यतः प्रागेवोचिता ॥
* अत्र त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

**देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमा जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानामसुरत्वमेकं प्रज्ञावत्त्वं वानवत्त्वं वापि वा॥ १ ॥**

"देवस्त्वष्टा॰ ( ऋ० सं० ३, ३, ३१, ४)"–इति । वैश्वामित्रस्य प्रजापतेरार्षम् । वैश्वदेवे विनियोगः । "त्वष्टा" "देवः" मध्यमः, "सविता" सर्वस्य भूतग्रामस्य प्रसविता उत्पादयिता उदकसम्प्रदानद्वारेण । किमुत्पादयिता एव ? न–इति उच्यते– "पुपोष प्रजाः" पुष्णाति चासावुत्पाद्य । न केवलं पुष्णाति, किं तर्हि ? "पुरुधा[1] जजान" इति, "बहुधा चैनाः[2] जनयति" वर्द्धयति । केन पुनरसौ जनयति, पुष्णाति, वर्द्धयति च ? यत आह–"इमा च विश्वा भुवनान्यस्य" । इमानि विश्वानि भुवनानि "उदकानि" अस्य यतः स्वतायां वर्त्तन्ते, तस्मात् जनयति पुष्णाति वर्द्धयति च । अतश्च सर्वमिदं शक्तः कर्त्तुम्, यतः–"महद्देवानामसुरत्वमेकम्" । महत् असुरत्वम् "प्रज्ञावत्त्वम्" "असुरिति प्रज्ञानाम" तया तद्वत्त्वम् । तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति, पुष्णाति, वर्द्धयति च, अप्रज्ञो हि साधनसम्पत्तावपि किं कुर्यात् । अथवा–"अनवत्वम्" असुः=प्राणः, तेन तद्वत्त्वम् । एवमपि सति प्राणेनैव शक्यते एतत् सर्वं कर्त्तुम्, अप्राणो हि किं कुर्यात् । "अन्नवत्त्वम्"–इति केचित् । तेषामन्नहेतुनोदकेन तद्वत्त्वम्, तथापि योज्यम् ॥ १० । ३४ । १ ॥

**असुरिति प्रज्ञानाम, अस्यत्यनर्थान्, अस्ताश्चास्यामर्थाः ॥ २ ॥**

"असुरिति प्रज्ञानाम" । तत् कस्मात् ? "अस्यति अनर्थान्" प्रज्ञैव हि प्रज्ञावतोऽस्यति क्षिपत्यनर्थान्, नाशयति । "अस्ताश्च अस्याम् अर्थाः" न हि तदस्ति व्यक्तेर्यत् सर्वं प्रज्ञावतां प्रज्ञायां नास्ति, एतावांस्तु विशेषोऽभिव्यंक्तमिति ॥१०।३४।२॥

**असुरत्वमादिलुप्तम् ॥ ३ ॥**

अथवा–यदेतद् "असुरत्वं" वसुमतो भावः वसुरत्वम्, एतत्, रो मत्वर्थे वकारलोपश्च, वसुना उदकेन तद्वान् असौ त्वष्टा ॥ १० । ३४ । ३ ॥

**वातः ॥ २२ ॥**

**वातो वातीति सतः ॥ ४ ॥ ३४ ॥**

---

१ 'पुरुषो' ॥ २ 'चैनां ज' ॥

"वातः (२२)" कस्मात्? "वातीति सतः"। "वा गतिगन्धनयोः (अदा० प०)"-इत्यस्य। सत इति धातुकारकावधारणम्। वायुशब्दो हि त्रयाणां धातूनां विकल्पेन, अयं तु वातेरेवेति विशेषः॥ १०। ३४। ४॥

## तस्यैषा भवति-॥

"तस्य एषा भवति-॥ *

**"वात आ वातु भेषजं शम्भु मयोभु नो हृदे।**
**प्र ण आयूंषि तारिषत्॥"**
**वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय**
**प्रवर्द्धयतु च न आयुः॥ १॥**

"वात आवातु भेषजम्० (ऋ० सं० ८, ८, ४४, १। सा० सं० छ० आ० २, २, ४, १०)"-इति। उल्बस्य वातायनस्यार्षम्। "वातः" अस्मान् आभिमुख्येन "भेषजम्" यद्यत् पथ्यम् अस्माकम्, तत्तत् गृहीत्वा "आवातु"। तच्च अस्माकं "शम्भु" अस्तु। 'शम्'-इति सुखनाम, तद्भावकमस्तु। तदात्वे च आयतौ परिणामे "मयोभु" अस्तु। "मयः"-इति सुखनाम, हृदयाय सुखमस्तु। स्तूयमानः प्रत्यक्षीभूत इव मनसि, यतः प्रत्यक्षमुच्यते-"प्रण आयूंषि तारिषत्"। हे भगवन्! वायो! प्रवर्द्धय त्वमस्माकमायूंषि सपुत्रपौत्रादिवर्गाणाम्, भैषज्यं च त्वमस्माकं नित्यमावह-इत्येतदाशास्महे॥ १०। ३५। १॥

## अग्निः॥ २३॥

## अग्निर्व्याख्यातः॥ २॥ ३५॥

"अग्निः" (२३)-"व्याख्यातः" (७। १४। २-५)॥ १०। ३५। २॥

## तस्यैषा भवति-॥

"तस्य एषा भवति"-॥ *

---

* अत्र चतुस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता॥
* अत्र पञ्चत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता॥

"प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे ।
मरुद्भिरग्न आगहि ॥"

तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति ॥ १ ॥

"प्रति त्यं चारुम० ( ऋ० सं० १, १, ३६, १ । सा० सं० छ० आ० १, १, २, ६ )"–इति । मेधातिथिः ऋग्द्रष्टा । "त्यं" तम् अङ्गवैकल्यरहितम् "अध्वरं प्रति" हे भगवन् ! "अग्ने !" त्वमस्माभिः "गोपीथाय" "सोमपानाय" "प्रहूयसे" आहूयसे । स त्वमेतद् ज्ञात्वा "मरुद्भिः" सह "आगहि" "आगच्छ" एतस्मिन्नस्मत्कर्मणि सोमं पातुम्–इत्येतदाशास्महे ॥ १० । ३६ । १ ॥

कमन्यं मध्यमादेवमवक्ष्यत् ॥ २ ॥ ३६ ॥

"गोपीथाय" "मरुद्भिः" सहेति मध्यमं लिङ्गम् ॥ १० । ३६ । २ ॥

तस्यैषापरा भवति–॥

"तस्य एषा अपरा भवति"–सा पुनः किमर्थम् ? गोपीथायेत्यव्यक्तं सोमपानं, व्यक्तसोमपानलिङ्गा उत्तरा । तद्यथा–॥ *

"अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिरग्न आगहि ॥"

अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय । सोम्यं मधु सोममयं, सोऽग्ने मरुद्भिः सहागच्छेति ॥ १ ॥ ३७ ॥

"अभि त्वा पूर्वपीतये० ( ऋ० सं० १, १, ३७, ४ । सा० सं० छ० आ० ३, २, २, ४ )"–इति । हे भगवन् ! "अग्ने !" "पूर्वपीतये" "पूर्वपानाय" पूर्वकाले प्रवृत्ताय पानाय "त्वा" त्वाम् "अभिसृजामि" वदे । किम् ? इति,–इदं "सोम्यं मधु" "सोममयं" तत् मधु । स त्वमागच्छ एतस्मिन् कर्मणि एतत् पातुम्–इत्येतदाशास्महे ॥ १० । ३७ । १ ॥ *

---

* अत्र षट्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषाऽपरा" इत्यतः प्रागुचिता ॥

* अत्र सप्तत्रिंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ दशमा-( पञ्चदशा )ऽध्यायस्य तृतीयः पादः ॥ १० । ३ ॥" इत्यपि चोपलभ्यते ॥

वेनः ॥ २४ ॥

वेनो वेनतेः कान्तिकर्मणः ॥ १ ॥ ३८ ॥

"वेनः (२४)"—इति वक्तव्यम्। स एषः "वेनतेः कान्तिकर्मणः" सर्वलोककान्तो हि मध्यमः, सर्वस्योपकारित्वात् ॥ १० । ३८ । १ ॥

तस्यैषा भवति— ॥

"तस्य एषा भवति"—॥ *

"अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।
इममपां संङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥"

अयं वेनश्चोदयत् पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति ॥ जरायुर्जरया गर्भस्य जरया यूयत इति वेममपां च सङ्गमने सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा ॥ १ ॥

"अयं वेनः० (ऋ० सं० ८, ७, ७, १। य० वा० सं० ७, १६)"—इति। भार्गवस्येयं वेनस्यार्षम्। शुक्रोऽनया गृह्यते। अन्तर्भावितप्रज्ञानः तस्मिन्मनसि प्रत्यक्षीभूतमभिनयेन दर्शयन्निव कस्मैचिद्ब्रवीति—"अयं वेनः" इति। किं करोति? चोदयति—"पृश्निगर्भाः"। पृश्निः = आदित्यः, प्रकृष्टो ह्यनेन वर्णः आष्टः प्राप्तः, यास्तस्य गर्भत्वमुपगताः रश्म्यन्तर्गताः परिपक्वाः आपो मासाष्टकेन सम्भृताः, ताः वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति। किंलक्षणः? "ज्योतिः जरायुः" "ज्योतिः अस्य" विद्युदाख्यं कर्मान्सलक्षणम्, "जरायुस्थानीयं" प्रज्ञावतः। तदधिष्ठातुः मध्यमस्य गर्भस्येव परिवेष्टनं "भवति"। क्वावस्थितश्चोदयति? "रजसो विमाने" रज उदकम्, तद्यत्र निमीयते, तत्रावस्थितः, अन्तरिक्षलोके इत्यर्थः। योऽयमेवमादिगुणयुक्तो वेनः, तम् "इमं" वेनम् "अपां" "च" "सङ्गमे" "सूर्यस्य" "च"

---

* अत्राष्टात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥
१ 'जरायु जरया'—इत्यपि पाठान्तरम्।

"सङ्गमे" समागमनस्थाने, यत्र सूर्यस्य रश्मिभिः आपः सङ्गच्छन्ते, तत्र वर्त्तमानम्, मध्यस्थाने । "विप्राः" मेधाविनः स्तोतारः "मतिभिः" स्तुतिभिः प्रज्ञापूर्विकाभिः "शिशुम्" "न" "इव" "रिहन्ति" । यथा हि शिशुर्नित्यं स्तूयते एवं स्तूयते । यदेतत् "रिहन्ति"–इति, एतत् "लिहन्ति" लिहेः ( अदा० उ० ) धातोः, वर्द्धयन्ति, पूजयन्ति वेत्यर्थवचनम् ॥

"जरायुः" कस्मात् ? तद्धि "जरया गर्भस्य" भवति, यथायथा गर्भो भवति-तथातथा तदुत्पद्यते । "जरया यूयते इति वा" यच्चैतत् जरेति प्रसिद्धम्, प्रसूताया गोः स्त्रिया वा, पश्चात् पतति सा जरेत्युच्यते, तया च यूयते मिश्र्यते तज्जरायिव त्युच्यते ॥ १० । ३९ । १ ॥

## शिशुः शंसनीयो भवति ॥ २ ॥

"शिशुः" कस्मात् ? स हि "शंसनीयो भवति" प्रयोजनेऽप्रयोजने वा अर्चन्ति, यत्किञ्चन प्रलपेषु ॥ १० । ३९ । २ ॥

## शिशीतेर्वा स्याद्दानकर्मणः । चिरलब्धो गर्भो भवति ॥ ३ ॥

"शिशीतेः वा स्यात्" धातोः "दानकर्मणः" दानार्थस्य, दीयते हि स पुरुषेण स्त्रियै धारणाय,–"चिरलब्धो गर्भो भवति" भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् 'अचिरात् लब्धो मे गर्भः' इति ॥ १० । ३९ । ३ ॥

## असुनीतिः ॥ २५ ॥

## असुनीतिरसून्नयति ॥ ४ ॥ ३९ ॥

"असुनीतिः (२५)"–इति । एतत् देवतापदम् । स पुनरयमिन्द्रः, मध्यमः, प्राणः । स पुनर्यदेतस्मात् शरीरादुत्क्रामति, अथेतरान् प्राणान् "असून्" अन्यत्र "नयति" विज्ञायते हि–"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुक्रामन्ति" इति ॥ १० । ३९ । ४॥

## तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"असुनीते मनो अस्मासु धारय जीवातवे सुप्रतिरा नु आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्द्धयस्व ॥"

* अत्रैकोनचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

**असुनीते मनः अस्मासु धारय चिरं जीवनाय प्रवर्द्धय च न आयू रन्धय च नः सूर्यस्य सन्दर्शनाय ॥ १ ॥**

"असुनीते मनो अस्मासु० ( ऋ० सं० ८, १, २२, ५ )"–इति । श्रुतबन्धोरार्षम् । हे "असुनीते" प्राण ! "मनः अस्मासु धारय" मनःप्रभृतीनेतान् प्राणान् आत्मनोऽवस्थानेनास्मच्छरीर एव धारय, मा त्वमुत्क्रामीः, त्वदनुत्क्रमेण अवस्थास्यन्ते इति । "जीवातवे" "चिरम्" अस्माकं "जीवनाय" मनो धारय । "सुप्रातिरा न आयुः" । अमुना प्रकारेण सुष्ठुप्रातिर प्रकर्षेण वर्द्धयास्माकमायुः । किञ्च, "रारन्धि नः" संसाधयास्माकम् । तथा अनुगृहाण, यथा "सूर्यस्य" "सन्दृशि" "सन्दर्शनाय" सम्यग् दर्शनाय अलं स्याम, दिव्यं नः चक्षुरुत्पादय, येन सम्यक् सूर्यं पश्येम । सर्वं चैतदन्नप्राचुर्ये सति भवति, यतो ब्रूमः–"घृतेन त्वं तन्वं वर्द्धयस्व" । घृतेन उदकेन, त्वमात्मानं यथाकालं वर्द्धयस्व, त्वय्युदकं ददति सर्वमिदं भवति । अहविर्भाक्त्वादसुनीतेर्घृतमित्युदकनामेत्यत्रोपपद्यते ॥ १० । ४० । १ ॥

रध हिंसासंराद्ध्योः पुषादिः

**रध्यतिर्वशगमनेऽपि दृश्यते–**

**"मा रधाम द्विषते सोम राजन्" इत्यपि निगमो भवति ।**

**घृतेन त्वमात्मानं तन्वं वर्धयस्व ॥ २ ॥**

"रध्यतिः वशगमने अपि दृश्यते" । तद्यथा–"मा रधाम द्विषते० ( ऋ० सं० ८ ७, १, ५ )"–इत्यत्र ।

"देवीः षळुर्वीरुरु नः कृणोत विश्वेदेवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ( ऋ० सं० ८, ७, १५, ५ । अथ० सं० ५, ३, ६–७ )"–इति ।

वैश्वदेवी । विहव्यस्यार्षम् । वैहव्यं सूक्तम् । तत्रैषा दर्शपूर्णमासादिषु हविषामभिमर्शने विनियुज्यते । 'देवीः' 'षट्' द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्च ओषधयश्चेति । ता उच्यध्वे–हे देव्यः ! उर्व्यः षट्, सर्वमिदम् ऊर्णुवत्यः यूयमुच्यध्वे । 'उरु' बहु यद्-यद् वयं युष्माभिः बहुक्रियमाणमिच्छामः, तत्तत् 'उरु' बहु कुरुध्वे । हे 'विश्वेदेवासः' विश्वेदेवाः ! यूयमपि 'इह' एतस्मिन् कर्मणि अस्माकमङ्गभावमुपगताः सन्तः 'वीरयध्वम्' वीरान् पुत्रान् इच्छत दातुम् । अपि च जातपुत्राः सन्तः 'मा हास्महि प्रजया' मा नः अस्मान् प्रजा कदाचित् अपि हासीत्, कष्टं हि पुत्रमरणम् । 'मा तनूभिः वयं

त्वाभिः हास्महि' मास्माकमायुषश्छेदोऽभूत्, युष्मदनुध्यानात् । अपि च "मां रधाम द्विषते सोम राजन्" हे भगवन् ! सोम ! राजन् !. विशेषतः त्वमुच्यसे, सर्वस्या अस्या आशिषः त्वदनुध्यानात् मा रधाम मा वंशं गच्छेम । द्विषते द्विषन्त एवास्माकमर्थ-सम्प्रदानादिना वश्यतामुपयान्तु, यतः अनिष्टं हि द्विषतो विधेयत्वमिति । सामर्थ्यादिह-"रध्यतिर्वशगमने" ॥ १० । ४० । २ ॥

## ऋतः ॥ २६ ॥

### ऋतो व्याख्यातः ॥ ३ ॥ ४० ॥

"ऋतः ( २६ )"—इति, एतत् पदम् । तदेतत् "व्याख्यातम्" निर्वच-नतः,—"ऋतमित्युदकनाम प्रत्यृतं भवति"—इति । इह त्वभिधेयो मध्यमः ॥ १० । ४० । ३ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥"

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रज्ञा वर्जनीयानि हन्त्यृतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो बद्धश्रोत्रः । कर्णौ बोधयन् दीप्यमानश्चायोरयनस्य मनु-ष्यस्य ज्योतिषो वोदकस्य वा ॥ १ ॥

"ऋतस्य हि शुरुधः० ( ऋ० सं० ३, ६, १०, ३ )"—इति । वामदेवस्यार्षम् । सम्पातसूक्ते निष्केवल्ये पृष्ठ्याभिप्लवयोः शस्यते । "ऋतस्य" मध्यमस्य । किम् ? इति—"शुरुधः" आपः "सन्ति" विद्यन्ते । किंलक्षणाः ? "पूर्वीः" अनेककाल-

* अत्र चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

सम्भृता[1]। यतश्चासाविद्धोऽद्भिरतस्तस्य "ऋतस्य" उदकसम्प्रदानद्वारेणानाकालं नाशयन्ती, "धीतिः" "प्रज्ञा" सर्वलोकस्य, "वृजिनानि" "वर्जनीयानि" अयशांसि "हन्ति" नाशयति। अकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्मादिषु प्रवृत्तिर्भवति। ददतश्चोदकं सर्वलोकवृजिनापघाताय। तस्य "ऋतस्य" एवमतिमहान् "श्लोकः" शब्दः स्तनयित्नुलक्षणो भवति, यः "बधिरस्यापि" बद्धश्रोत्रस्य, विधात्रापि निसर्गतः अपिहितश्रोत्रस्य, "आयोः" "अयनस्य" "मनुष्यस्य" बोधयत्यस्मृत इति। "कर्णौ" अतिदुर्भेदौ "आततर्द" "आतृणत्ति" आभिनत्ति। "शुचमानः" "दीप्यमानः" "ज्योतिषः" च "उदकस्य" च श्लोकः। एवं सतत्त्वो ह्यसावृत इति ॥ १० । ४१ । १ ॥

## इन्दुः ॥ २७ ॥

## इन्दुरिन्धेरुनत्तेर्वा ॥ २ ॥ ४१ ॥

"इन्दुः (२७)"—इत्येतत् पदम्। स कस्मात्? "इन्धेः" दीप्त्यर्थस्य, "उनत्तेः वा" क्लेदनार्थस्य, उभयमपीन्दौ उपपद्यते[2] चन्द्रमासि ॥ १० । ४१ । २ ॥

## तस्यैषा भवति—॥

"तस्य एषा भवति"— ॥ *

"प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति।
स्वयं सो अस्मदानिदो वधैरजेत दुर्मतिम्।
अवस्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥"

प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान् कामवान् वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सो अस्मदभिनिन्दितारम्। 'वधैरजेत दुर्मतिम्'। अवस्रवेदघशंसः। ततश्चावतरं क्षुद्रमिवावस्रवेत् ॥ १ ॥

---

१ 'सम्भूताः'—इति तु मुद्रितमासीत्। २ 'मपीदमुपप' इति पाठोऽपेक्षितः प्रतिभाति।
* अत्रैकचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"प्र तद्वोचेयम्० ( ऋ० सं० २, १, १७, १ )"—इति । अतिच्छन्दाः पारुच्छेपी । षष्ठेऽहनि मरुत्वतीये शस्यते । यद्यदिष्टं तस्येन्दोः तत्तदहं प्रब्रवीमि, अस्मै "इन्दवे" प्रीत्यर्थम् । किंलक्षणः ? "यः" इन्दुः "भव्यः" भवनार्हः, आत्मवान् अभिप्रेतानां[1] पात्रभूत इत्यर्थः । भव्यो भावनार्ह इव, यो हविषा भावनमर्हति, न च भाव्यते, अहविर्भाक्त्वात् । "हव्यो न" "हवनार्ह इव" यो यज्ञेन च पुनराहूयते, अहविर्भाक्त्वादेव । "इषवान्" नित्यम् "अन्नवान्" "कामवान् वा" कामिनां स्तोतॄणां[2] नित्यमभिमतफलसम्प्रदानोन्मुखः । तत्सम्प्रदानोन्मुखतया च नित्यमस्माकं "मन्म रेजति" "मननानि" प्रज्ञानानि "रेजयति" आकम्पयति, आकम्पितहृदयानुपकारितया नित्यमस्मान् करोति । कथं नाम एतं नित्यं स्तुयामेति । अपि च "रक्षोहा" रक्षांसि "बलेन" घ्नन् सुतरामस्माकं मन्म रेजति । किञ्च, "स्वयं सो अस्मदानिदः" । स्वयम् आदरवान् भूत्वा सः इन्दुः अस्मदानिदः "अस्मदभिनिन्दितारम्" "बधैः" वज्रप्रहारैरतिदुःसहैः "अजेत" जयेत्, क्षिपेद्वा "दुर्मतिं" पापमतिं योऽस्मान् प्रति । तेन वातिबलवतेन्दुना हन्यमानोऽस्मद्—"अघशंसः" अस्माकं यः पापानां शंसिता, कथयिता, स्वल्पानामपि स्फीतिकर्त्ता जनपदे । असौ "अवस्रवेत्" अधोगतिः स्यात् । "अवतरमव क्षुद्रमिव स्रवेत्" यावच्च प्रथमं स्रुतः[3] अधोगतः, ततोऽवतरम्, ततोऽवतरमिति, तावत् स्रवेत्, क्षुद्रमिव द्रव्यं किञ्चित् यावदामूलतो नष्टम्—इत्येतदाशास्महे ॥ बलकृतेर्मध्यम इति ॥ १० । ४२ । १ ॥

## अभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति ॥ २ ॥

इहाभ्यासबाहुल्यं दृष्ट्वा 'रेजति-रेजति', 'स्रवेत्—स्रवेत्'—इति, प्रतिसमाधत्ते—"अभ्यासे भूयांसम् अर्थं मन्यन्ते"—इति । शब्दाभ्यासे यत्रान्यो विशेषो नास्ति, तत्रैवं विशेषमाचार्या मन्त्रार्थसतत्त्वविदो मन्यन्ते—यदुतार्थभूयस्त्वमिति, न ह्येकस्मात्[4] स एव शब्दः पुनरभ्यस्यते । लोकेऽपि चैतद् दृष्टम्—शब्दाभ्यासेऽर्थभूयस्त्वमिति,—"यथा—अहो दर्शनीय ! अहो दर्शनीय ! इति" गुणातिशये हि स्त्रियाः शब्दाभ्यासः, तस्मान्मन्त्रेष्वपि तद्वदेवेति न्याय्यम् ॥ १० । ४२ । २ ॥

## तत्परुच्छेपस्य शीलम् ॥ ३ ॥

"तत्" च पुनरेतत् "परुच्छेपस्य" मन्त्रदृशः "शीलम्" । स हि नित्यमभ्यस्तैः शब्दैः स्तौति । मन्त्रदृशोऽपि स्वभाव उपेक्ष्य इत्युपप्रदर्शनायेदमुक्तम् ॥ १० । ४२ । ३ ॥

---

१ 'अभिप्रेतानाम्' ॥ २ 'होतॄणां' ॥ ३ 'स्तुतः' ॥ ४ 'न ह्येकस्मा' ॥

**परुच्छेप ऋषिः । पर्ववच्छेपः, परुषिपरुषि शेपोऽस्येति वा ॥ ४ ॥**

अथ पुनः "परुच्छेपः" कस्मात् ? परुच्छेपः "ऋषिः," तस्य हि "पर्ववत्" महान् "शेपः" प्रजननम् । "परुषिपरुषि शेपोऽस्येति वा" सर्वाङ्गसन्धिषु शेपकृतो योगः सुखात् किल । तस्य शेपोऽस्येति वा ॥ १० । ४२ । ४ ॥

**इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि,—सूक्तभाञ्जि हविर्भाञ्जि ॥ ५ ॥**

"इति इमानि सप्तविंशतिः देवतानामधेयानि अनुक्रान्तानि" । इतिकरणः प्रकारवचनः । एवमेतानि यथा समाम्नातानि सप्तविंशतिः सप्ताधिका विंशतिः देवतानामधेयानि "वायुः"—इत्यत आरभ्य यावत् "इन्दुः" इति । तेषां पुनः किमर्थमनुकीर्त्तनम् ? विशेषविवक्षया । कः पुनरसौ ? इति,—तेषां कानिचित् "सूक्तभाञ्जि हविर्भाञ्जि" च, सूक्तं च हविश्चोभयं भजन्ते, कानिचित् सूक्तमेव न हविः ॥ १० । ४२ । ५ ॥

**तेषामेतान्यहविर्भाञ्जि—वेनोऽसुनीतिर्ऋत इन्दुः ॥ ६ ॥**

"तेषाम् एतानि अहविर्भाञ्जि" । तद्यथा—"वेनः, असुनीतिः, ऋतः, इन्दुः" इति । एभ्यो ग्रान्यन्यानि त्रयोविंशतिः, तान्युभयं भजन्ते सूक्तं हविश्च । देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । "घृतेन"="उदकेन" त्वमात्मानं वर्द्धयस्वेत्येवमाद्यभिधानार्थं विशेषप्रविभागप्रज्ञप्तये अहविर्भाक्त्वादुदकमत्र घृतमित्येवमादि तद्गतेषु मन्त्रेषु विशेष उपेक्ष्य इति ॥ १० । ४२ । ६ ॥

**प्रजापतिः ॥ २८ ॥**

**प्रजापतिः प्रजानां पाता वा पालयिता वा ॥ ७ ॥ ४२ ॥**

"प्रजापतिः"—"प्रजानां पाता वा पालयिता वा" ॥ १० । ४२ । ७ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

---

* अत्र द्विचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेबोचिता ॥

"प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥"

प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परि बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीः ॥ १ ॥

"प्रजापते न० ( ऋ० सं ८, ७, ४, ५ । य० वा० सं १०, २०–२३, ६५ )"–इति । प्राजापत्यस्य हिरण्यगर्भस्यार्षम् । पितृयज्ञ उपस्थाने विनियुक्ता, राजसूये च विनियोगो होमे । हे "प्रजापते !" "न त्वत् अन्यः" न कश्चिदपि "एताः" "एतानि" सर्वदेवतारूपाणि "परिबभूव" परिगृह्य भवति, त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवसि । यत एवं त्वां वयं सर्वतो विभूतं पश्यामः सर्वस्येशानम्, अतो ब्रूमः–"यत्कामः ते" येनयेन युक्ताः सन्तो वयं तुभ्यं "जुहुमः" "तत् नः अस्तु" स कामोऽस्माकं त्वदनुध्यानात् समृद्ध्यतां नित्यमेव च । "वयं स्याम पतयो रयीणाम्" । रयीणां धनानां पतयः–"इति" इयम् अपरा "आशीः" द्वितीया, यत्कामा इति प्रथमा । अथवा–"आशीः"–इति आचार्यो दर्शयति इयं मन्त्रगतैव, यत्रापि न स्यात् तत्राप्यध्याहार्येति, स्तुत्याशिषोर्नित्यसम्बन्धादिति ॥ १० । ४३ । १॥

## अहिः ॥ २९ ॥

अहिर्व्याख्यातः ॥ २ ॥ ४३ ॥

"अहिः (२९) " "व्याख्यातः" निर्वचनतः–"अहिरयनात्" ( २। १७ । १ ) इति । इह त्वभिधेयो मध्यमः ॥ १० । ४३ । २ ॥

तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु सीदन् ॥"

अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु उदकेषु सीदन् ॥ १ ॥

* अत्र त्रयश्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"अब्जामुक्थैः० ( ऋ० सं० ५, ३, २६, ६ )"—इति। वाशिष्ठस्य पराशरस्यार्षम्। दशरात्रस्य चतुर्थेऽहनि वैश्वदेवे विनियोगः। हे स्तोतः! त्वमेतम् "अहिम्" "अब्जाम्" "अप्सुजम्" उदकजन्मानम् "उक्थैः" "गृणीषे" स्तौषि। "बुध्ने" "नदीनां" "नदनानाम्" अपां बन्धने एतस्मिन्नन्तरिक्षे, वर्त्तमानं "रजःसु सीदन्" उदकेषु लब्धव्येषु निमित्तभूतेषु एतस्मिन् कर्मणि अङ्गभावमुपगच्छन्॥ १०।४४।१॥

**बुध्नमन्तरिक्षं बद्धा अस्मिन्, धृता आप इति वा॥ इदमपीतरद् बुध्नमेतस्मादेव। बद्धा अस्मिन् धृताः प्राणा इति॥ २॥**

"बुध्नम्=अन्तरिक्षम्, बद्धा अस्मिन् धृता आपः"—इति। "इदम् अपि इतरत्" शरीरं बुध्नमित्युच्यते, "बद्धा अस्मिन् धृताः प्राणाः"—इति॥ १०। ४४। २॥

## अहिर्बुध्न्यः॥ ३०॥

**योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात्॥ ३॥ ४४॥**

"यः अहिः, सः बुध्न्यः" एतावांस्तु विशेषः "बुध्नम्=अन्तरिक्षम्, तन्निवासात्" "अहिर्बुध्न्यः ( ३० )"॥ १०। ४४। ३॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

**"मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः॥" मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोस्था च स्रिधद्यज्ञकामस्य॥ १॥**

"मा नोऽहिर्बुध्न्यः० ( ऋ० सं० ५, ३, २६, ७ )"—इति। पूर्वया समानं सर्वमिति। "मा" अस्मान् "अहिर्बुध्न्यः" "रिषे" "धात्" मा रेषणाय हिंसनाय कस्मैचित् धात्। किञ्च, "मा यज्ञो अस्य स्रिधदृतायोः"। मा यज्ञोऽस्य ऋतायोः, अस्य यजमानस्य यज्ञकामस्य मा स्रिधत् मा सुस्रवत्, नित्यमविनाशेन वर्त्ततामिति॥ १०। ४५। १॥

---

* अत्र चतुश्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता॥

सुपर्णः ॥ ३१ ॥

सुपर्णो व्याख्यातः ॥ २ ॥ ४५ ॥

"सुपर्णः ( ३१ )" "व्याख्यातः" "सुपतनः"–( ३ । १२ । १ ) इति । इह त्वभिधेयो मध्यमः ॥ १० । ४५ । २ ॥

तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥"

एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेढि वागेषा माध्यमिका स उ मातरं रेढि ॥ १ ॥

"एकः सुपर्णः० ( ऋ० सं० ८, ६, १६, ४ )"–इति । सध्रेः धर्मस्य वेयमार्षम् ॥ "एकः" एव अद्वितीयः, यस्य पतने गमने प्रतिमानम् अन्यद् द्वितीयं नास्ति । "सः" "सुपर्णः" सुपतनो वायुः "समुद्रम्" अन्तरिक्षं नित्यम् "आविवेश" "आविशति" न कदाचिदप्यनाविष्टस्तत्र । "सः" च पुनः सर्वभूतानुप्रवेशी, तदाविश्य "विश्वं" "भुवनं" "सर्वाणि इमानि भूतानि" "विचष्टे" "अभिविपश्यति" यथा द्रष्टव्यानि । "तम्" एवं वर्त्तमानम् अहं "पाकेन मनसा" विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् "अन्तितः" आन्तिकम् इव "अपश्यम्" । ऋषिर्दृष्टदेवतासतत्त्वः, कस्मैचिदाचक्षाणो ब्रवीति–"तं माता रेळ्हि स उ रेळ्हि मातरम्" । माता="माध्यमिका" वाक्, तम् उपजीवति, परस्पराश्रयत्वात्तयोर्वृत्तेरध्यात्मवदिति ॥१० । ४६ ।१ ॥

---

* अत्र पञ्चचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्य एषा भवति" इत्यतः प्रागेवोचिता ॥ १ 'वामदेवस्य वेयमा' ॥

## पुरूरवाः ॥ ३२ ॥

## इति द्वात्रिंशत्पदानि ॥ ४ ॥

### पुरूरवा बहुधा रोरूयते ॥ २ ॥ ४६ ॥

"पुरूरवाः" मध्यमः । विज्ञायते हि—"प्राण एव हि पुरूरवाः" इति । सः "बहुधा रोरूयते" स्तनयति, तेन पुरूरवाः ॥१० । ४६ । २ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"समस्मिञ्जायमान आसत ग्ना उतेमवर्द्धन्नद्यः१ स्वगूर्त्ताः ।
महे यत्त्वा पुरूरवो रणायावर्द्धयन्दस्युहत्याय देवाः ॥"

समासतास्मिञ्जायमाने ग्ना गमनादापः ।
देवपत्न्यो वापि चैनमवर्द्धयन्नद्यः स्वगूर्त्ताः स्वयङ्गामिन्यो
महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्द्ध-
यन् दस्युहत्याय च देवा देवाः ॥ १ ॥ ४७ ॥

"समस्मिन् जायमानः० ( ऋ० सं० ८, ५, २, २ )"—इति । उर्वश्या आर्षम् ॥ "अस्मिन्" एतस्मिन् पुरूरवसि "जायमाने" वर्षकर्मणि आत्मानं प्रति लभमाने प्रावृट्काले, "कर्मजन्मानः"—इति ह्युक्तम् । "समासत ग्नाः" "आपः" समागम्य तं परिवार्य, तद्विधेयतामुपगम्य "आसते" तिष्ठन्ति । "उत" अपि च यथायथैवमृतुवशात् वर्षासु नद आरोहति, तथातथैनं ताः "नद्यः" नदना आपः, "स्वगूर्त्ताः" "स्वयं गामिन्यः" भूत्वा सुतरां तद्विधेयतामुपगच्छन्त्यः, तदधिकारोद्भवेन "इम्" "एनम्" "अवर्धयन्" वर्द्धयन्ति । अतः परं स्तूयमानः प्रत्यक्षीभूतः प्रत्यक्षकृत उत्तरोऽर्द्धर्चः । हे "पुरूरवः !" "यत् त्वा महे रणाय" यस्मात् त्वां "महते रणाय" भेधेन सह "रमणीयाय" संग्रामाय "अवर्द्धयन्" वर्द्धयन्ति माध्यमिकाः "देवाः" । "दस्युहत्याय" मेघवधाय चेति । तस्मात् त्वामवश्यं ग्नाः समागम्यासते, वर्द्धयन्ति च नद्यः, सर्वथापि महानुभावः त्वं सर्वमेव त्वय्युपपद्यते इति ॥

---

* अत्र षट्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"देवपत्न्यः वा"—इति पृथक्त्वेन दर्शयति, तथापि योज्यते । समागम्यैतास्मिन्नैडे पुरूरवसि "आसत ग्नाः" सर्वा देवपत्न्यः, स हि स्त्रीणां स्वभावो यत् प्रजायमानां स्त्रियं परिवार्यासते । "उत ईम् अवर्द्धन्" अपि चैतमवर्द्धयन् । नदना ग्नाः स्तुतिपराः, तस्य "स्वगूर्त्ताः" "स्वयं गामिन्यः" अपरप्रणेयाः ईश्वराः । अपि च सर्वमेतदुपपद्यते, पुरूरवस्त्वयि, यस्मात् तस्मात् "महते" "रणाय" "रमणीयाय" "संग्रामाय" असुरैः सह "दस्युहत्याय" शत्रुवधाय अवर्द्धयन् स्वैर्महिमभिः त्वं नः असुरान् जेष्यसीति पुरश्चक्रुर्देवा इति ॥

द्विरभ्यासोऽध्यायपरिसमाप्तौ, यस्माल्लक्ष्यते समाप्तम् ॥ १० । ४७ । १ ॥ *

[ अथातो[1]मध्यस्थानाव[2]ायंवाया[3]ह्यासंस्त्राणासो[4]नीचीनबारन्तं[5]मूर्ष्विं[6]मारुद्रायं[7]याते[8]दिद्युज्जराबोधां[9]दर्दरुं[10]घोजात एवं[11]विवृक्षांनश्चा[12]पिनद्धं[13]मश्मास्यमवतं[14]क्षेत्रंस्यपतिः[15]क्षेत्रस्यपतिना[16]क्षेत्रस्यपते[17]ऽमीवंहा[18]पुनरेहियो[19]अनिध्मः परे[20]यिवांसं[21]सेनेवसृष्टा मि[22]त्रोजनान्[23]हिरण्यगर्भो[24]येतेसरस्वन्[25]विश्वकर्मा[26]सर्वस्यवि-श्वकर्मा[27]विमनाविश्वं[28]कर्मन्[29]हविषात्यं[30]मूषुसं[30]घश्वियस्त्वंयामन्य-[31]वांदधिक्राः[32]सवितायन्त्रैं[33]हिरण्यस्तूपोदे[34]वस्त्वष्टा[35]वात आ-[36]वातुप्रेतित्यमं[37]भित्वं[38]वेनोवेनतें[39]यंवेनो[40]ऽसुनीत[41]ऋतस्यहि[42]प्रतद्वोचेयं[43]प्रजाप[44]तेऽज्जामुक्थैर्मा[45]नोहि[46]रेकः सुपर्णः[47]समस्मिन् सप्तचत्वारिंशत् ॥ ]

इति निरुक्ते [ उत्तरषट्के ] दशमो [ चतुर्थो ]ऽध्यायः समाप्तः ॥ १० ॥

इति श्रीजम्बूमार्गाश्रमवासिन आचार्य्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ दशमो ( पञ्चदशो )ऽध्यायः परिसमाप्तः ॥ १० ॥

---

* अत्र सप्तचत्वारिंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ दशमा ( पञ्चदशा )ऽध्यायस्य चतुर्थः पादः ॥ १०, ४ ॥" इति चोपलभ्यते ॥

१ अस्मिन् दशमेऽध्याये सप्तचत्वारिंशत्खण्डानामेव परिगणने त्वाचार्याणामिच्छैव नियामिका । एकादशाध्यायस्थानां द्वादशखण्डानामप्यत्रैव परिगणने परुच्छन्दनिर्वचनत एकादशाध्यायप्रारम्भे तु प्रकरणसौष्ठवं स्यात् ॥

## ( अथ षट्त्रिंशत्पदानि )

### श्येनः ॥ १ ॥

# अथैकादशोऽध्यायः ११.

श्येनो व्याख्यातः ॥ १ ॥ १ ॥

"श्येनः (१)" "व्याख्यातः"—"श्येनः शंसनीयं गच्छति"—इति । इह त्वभिधेयो मध्यमः ॥ ११ । १ । १ ॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"आदाय॑ श्येनो अ॑भरत्सोम॑ं स॒हस्रं॑ स॒वाँ अ॒युतं॑ च सा॒कम् ।
अत्रा॒ पुर॑न्धिरजहा॒दरा॑ती॒र्मदे॒ सोम॑स्य मू॒रा अमू॑रः ॥"

आदाय श्येनोऽहरत्सोमं सहस्रं सवानयुतं च सह सहस्रं सहस्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्सम्बन्धेनायुतं दक्षिणा इति वा तत्र पुरन्धिरजहादमित्रानदानानिति वा । 'मदे सोमस्य मूरा अमूरः ।' इति ऐन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्ते ॥ १ ॥

"आदा॑य श्ये॒नः० (ऋ० सं० ३, ६, १५, ७)"—इति । वामदेवस्यार्षम् ॥ श्येनाजिरादिषु मरुत्वतीये शस्यते । ऋत्विग्भिर्विधानतः प्रत्तं "श्येनः" इन्द्रः "सोमम्" "आदाय" "अभरत्" अपिबत् । क ? "सहस्रं सवान्" सहस्रं सुत्यानां यत्र कुर्वन्ति, "अयुतं च" दक्षिणाः प्राप्नुवन्ति, न तु दीयन्ते, सत्रत्वात्, पृष्ठयशमनाभिप्रायं वा दक्षिणादानं स्यात्, सहस्रसाव्ये सत्रे तेषां तत्सम्बन्धात् । "अत्रा पुरन्धिः" अत्र अस्मिन् सहस्रसाव्ये सत्रे सः श्येनः "पुरन्धिः" बहुनो धनस्य दाता । "मदे" "सोमस्य" तृप्तौ, सोमस्य प्राप्तायाम् "अजहात् अरातीः" असु-

* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

रानमित्रान् पृथक्त्वपक्षे अभ्यजयत्, प्राणैर्मूढान् अप्रतिपत्तिकान् कृत्वा विषादमुपनीय अमूढो निःसाध्वसः । त्रित्वपक्षे तु "अदानान्"–"इति वा" । रातिर्दानार्थः, तत्प्रतिषेधेनारातिः, प्राक् सोमपानमदप्राप्तेः । अदानानिति न दास्यामीत्येवंधियः "मूराः" मूढमतयः, कार्पण्यसंयुक्ताः ये आसन्, तान् प्रति "सोमस्य मदे" प्राप्ते "अमूरः" अमूढः अकृपणो भूत्वा "अजहात्" अत्यजत्, दाता सम्पेदे ॥

सहस्रसाव्यमभिप्रेत्य तत्सम्बन्धेनायुतं दक्षिणा इति वा । "इति वा"–शब्देन किं विकल्प्यते,–सहस्रसाव्यं वा सत्रम् ? यत् पठन्ति याज्ञिकाः । तद्यथा–अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यमिति । तदह्नां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसङ्ख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां सम्पद्यते । सोमभक्षनिष्क्रयणश्रुतिश्च दक्षिणानामस्ति,–"यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते" इति,न चासति प्रश्लेषे रूढिबाधो न्याय्य इति । असत्यपि ऋत्विग्दक्षिणादानसम्बन्धे सहस्रसाव्यमेव सत्राणां प्रासर्पकाभिप्रायं वा अयुतम् । अथवा–सहस्रमिति बहुनाम । "सहस्रं सवान्" अभिषवा बहवः, प्रतिसवनमाभिषवमभिप्रेत्य यस्मिन्न कस्मिंश्चिद्दक्षिणावति सोमे अयुतं च दक्षिणाः, बह्व्य इत्यर्थः, अस्ति हि प्राप्तिः विशेषशब्दाः सामान्येषु भवन्तीति । तद्यथा–हिमेनोदकेनेति । अदक्षिणत्वात् सत्राणामेवं वेत्यभिप्रेत्य वाशब्दं चकार ॥ ११ । २ । १ ॥

## सोमः ॥ २ ॥

### ओषधिः सोमः सुनोतेर्यदेनमभिषुण्वन्ति ॥ २ ॥

"सोमः ( २ )"–इति वक्तव्यम् । स पुनरेषः "ओषधिः" "सोमः" हैमवतो मौजवतो वा । स कस्मात् ? "सुनोतेः" "षुञ् अभिषवे ( स्वा० उ० )"–इत्यस्य, अभिषूयते ह्यसौ यज्ञे । "यदेनमभिषुण्वन्ति"–इति कर्मकारकं दर्शयति । स कथम् ? मध्यमस्थानो भवति हि तमधिकृत्य–"यत्ते सोम दिवि ज्योतिः ( य० वा० सं० ६, ३३ )"–इति, "सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वतनूभूतमाप्याययति ( श० ब्रा० ३, ९, ४, १२ )"–इति । तस्मादस्यैव स्वा तनूर्यच्चन्द्रमाः, रसात्मकत्वात् । वायुर्वा सोऽयमेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः ॥ ११ । २ । २ ॥

### बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन ॥ ३ ॥२॥

"बहुलमस्य नैघण्टुकं वृत्तम्" अस्वार्था स्तुतिः परार्था । तद्यथा–प्रायः पावमानं मण्डलम् "आश्चर्यमिव प्राधान्येन" । स्वप्रधाना स्तुतिः, क्वचिदाश्चर्यं चित्रतः स्तुतिः स्यात् ॥ ११ । २ । ३ ॥

**तस्य पावमानीषु निदर्शनायोदाहरिष्यामः—॥**

"तस्य पावमानीषु" ऋक्षु "निदर्शनाय" उभयम् "उदाहरिष्यामः"—परार्थत्वं स्तुतेः स्वार्थत्वं च । परार्थं तावदुदाह्रियते, तद्यथा—॥ *

**"स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।**
**इन्द्राय पातवे सुतः ॥"**
**इति सा निगदव्याख्याता ॥ १ ॥ ३ ॥**

"स्वादिष्ठया मदिष्ठया० ( ऋ० सं० ६, ७, १६, १ । सा० सं० छ० आ० ५, २, ४, २ )"—इति । मधुच्छन्दस आर्षम् । ग्रावस्तोत्रे विनियोगः ॥ हे "सोम !" "स्वादिष्ठया" स्वादुतमया, "मदिष्ठया" मादयितृतमया च त्वं "धारया" "पवस्व" प्रक्षर । किमर्थम् ? "इन्द्राय" इन्द्रार्थम्, "पातवे" पानाय "सुतः" अभिषुतः । इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ॥ ११ । ३ । १ ॥

**अथैषापरा भवति चन्द्रमसो वैतस्य वा—॥**

"अथ एषा अपरा भवति, चन्द्रमसो वा एतस्य वा"—इति । अथ-शब्देन विशेषाधिकारवाचिना स्वप्रधानता स्तुतेरधिकरोति । चन्द्रमसो वेति चन्द्रत्वमापन्नस्याप्यौषधिसोमस्य वा, यथोक्तम्—"स तनूकरणे" ( ११ । २ । २ ) इतरथा ह्यप्राकृतप्रक्रिया स्यादनधिकारादस्मिन् प्रकमे चन्द्रमसः । चन्द्रमसो वाधिदैवमापन्नस्य । ओषधिसोमस्य वाधियज्ञमापन्नस्य । तदेतदुभयथा प्रदर्शयति—॥ *

**"सोमं मन्यते पपिवान्यत्संपिषन्त्योषधिम् ॥**
**सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥"**
**सोमं मन्यते पपिवान्यत्सम्पिषन्त्योषधिमिति वृथासुतमसोममाह सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम् ॥**
**अथाधिदैवतं सोमं मन्यते पपिवान्यत्सम्पिषन्त्योषधि-**

---

* अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, सा "तस्य पावमानीषु"इत्यतः प्रागुचिता ॥
* अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "अथैषाऽपरा भवति"इत्यतः प्रागुचिता ॥

मिति यजुः सुतमसोममाह सोमं यं ब्रह्माणो विदुश्चन्द्रमसं न तस्याश्नाति कश्चनादेव इति ॥ १ ॥ ४ ॥

"सोमं मन्यते–( ऋ० सं० ८, ३, २०, २ )"–इति । सूर्याया आर्षम् । विवाहे विनियोगः ॥ "यत्" "सम्पिंषन्ति" सञ्चूर्णयन्ति अभिषुत्य पिबन्ति सोमम् ओषधिम् केचिद्रासायनिकाः । ते "मन्यन्ते" "सोमं" पपिवांसः सोममपास्यामिति, न च पुनस्ते सोमपाः, वृथा सोमः स इति । अनेन तावदर्द्धर्चेनायं मन्त्र एवं "वृथा सुतमसोममाह" पातृंश्च । अथ कः सोमः ? के च सोमपाः ? यतो ब्रवीति– "सोमं०–कश्चन" । "यं" ब्राह्मणाः "सोमं" "विदुः" अधियज्ञे अङ्गभूतम्, "न तस्य अश्नाति" "कश्चन" "अयज्वा" अनधिकृतो यजमानत्वेन । "इति अधियज्ञम्" इति विषयमुपप्रदर्शयति ॥

"अथाधिदैवतम्"–इति विषयान्तरमधिकरोति । उक्तं हि "चन्द्रमसो वा"–इति, तदुपप्रदर्शनार्थमाह–"सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्"–"इति" "यजुः"। "सुतम्" अधियज्ञं चन्द्रमसमपेक्ष्य "असोममाह" । यथा पूर्वस्मिन् रासायनिकसोमस्यासोमत्वमधियज्ञमपेक्ष्य, एवमिहाप्यधियज्ञसोमस्यासोमत्वमाधिदैवसोमं चन्द्रमसमपेक्ष्य । एवं कृत्वा "सोमं" "यं" "ब्रह्माणः" "विदुः" "चन्द्रमसम्" "न तस्य अश्नाति" "कश्चन" "अदेवः इति" देवानां हि भक्ष्यत्वेन विपरिणतश्चन्द्रमाः, "सोमो नूनमेष तद्देवानामन्नम्"–इति ह विज्ञायते । एवमस्य स्वप्रधाना सोमस्य स्तुतिः ॥ ११ । ४ । १ ॥

अथैषापरा भवति चन्द्रमसो वैतस्य वा–॥

"अथ एषा अपरा भवति चन्द्रमसो वा एतस्य वा" । सा किमर्थम् ? "आश्चर्यमिव प्राधान्येन" इत्युक्तम् ( ११ । २ । ३ ) । तथा चेयम् अपरा अन्या स्वार्थप्राधान्या स्तुतिरप्यस्ति सोमस्येत्युपप्रदर्शनार्थमाह–॥ *

"यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥"

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा वायुः सोमस्य रक्षि-

---

* अत्र चतुर्थखण्डसमाप्तिर्दृश्यते, सा "अथैषाऽपरा भवति" इत्यतः प्रागुचिता ॥

ता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा । समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चन्द्रमा वा ॥ १ ॥

"यत्त्वा देव प्रपिबन्ति० ( ऋ० सं० ८, ३, २०, ५ )"—इति । यदा त्वां हे "देव !" सोम ! "प्रपिबन्ति" प्रारभन्ते सोमं पातुमृत्विग्यजमानाः, त्रिषु सवनमुख्येषु । तदा किम् ? इति—"ततः आप्यायसे पुनः" । ततः अनन्तरम् पुनः आप्यायसे । तदुक्तमधियज्ञे—"आप्यायनमाप्यायस्व ( "सं ते पयांसि० ( ऋ० सं० १, ६, २२, ३ । य० वा० सं० १२, ११३ । सा० सं० आ० ३, २ )"—इति । ) भक्ष्यशेषान्"—इति । "वायुः सोमस्य रक्षिता"—इति, वायव्येष्वसौ पात्रेषु गृहीतो रक्ष्यत इति "वायुमस्य रक्षितारमाह" मन्त्रदृक् "साहचर्यात् रसहरणात् वा" वायुसहचरितो ह्यसौ, तेन नित्यं सहचरणादविनाभावात्कर्मणः, रसहरणात् वा सर्वरसापहारो वायुः समर्थः सन् यन्न शोषयति सोमम्, तेन सोमो रक्षितो भवति । "समानां मास आकृतिः" समानां संवत्सराणां "मासः" "माता" निर्माता सोम ओषधिः, सर्वस्य किलौषधिः । "सोमस्य" चन्द्रमसः कलोपचयमनु प्रत्यहमेकैकश्येन कला इव चन्द्रमसः पर्णान्युपचीयन्ते, स पौर्णमास्यां पञ्चदशपर्णः सम्पद्यते, पौर्णमास्याः पुनः परतः कलाहानौ चन्द्रमस इव एकैकं पर्णमपचीयते इति ओषधेः सोमस्य सोमस्य चन्द्रमसः सम्पद्यते । तदायुर्वेदविदः सोमलक्षणं रसायनतन्त्रे स्मरन्ति । अमुना प्रकारेणोपचयापचयाभ्यां पर्णानां मासोपलक्षणद्वारेण[1] "समानां" "संवत्सराणाम्" "आकृतिः" आकर्त्ता भवति "सोमः रूपविशेषैः" । तदेवं पर्णानामुपचयापचयाभ्यामन्यदन्यद्रूपं प्रतिपद्यते एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

अथाधिदैवे—"यत्त्वा देव प्रपिबन्ति"—इति । अपरपक्षेषु पीयते रश्मिभिः । तदुक्तम्—"यमक्षितिमक्षितयः पिबन्ति" इति । "तत आप्यायसे पुनः" तं पूर्वपक्षमाप्याययन्तीति । तदप्युक्तम्—"यथा देवा अंशुमाप्याययन्ति" इति । वायुं[2] सोमस्य चन्द्रमसो रक्षितारमाह, एष ह्येनं सूक्ष्मया रश्मिनाड्या सुषुम्नाख्यया पुमर्यथाकालमापूरयति । "समानां" "संवत्सराणाम्" "मासः" चन्द्रमाः = सोमः, लक्षणत्वात् मासः द्वादशकृत्वो मासभूतमात्मानमावर्त्तयन् संवत्सराणां कर्त्ता भवति । "रूपविशेषैः"—इति । कलानामुपचयापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ॥

"स्वादिष्ठया मदिष्ठया० ( ११ । ३ । १ )"—इत्यस्यामपि[3] केचित् अधिदैव-

---

१ 'सोमलक्षणद्वारेण' ॥ २ 'वायुः' इति त्वशुद्धः पाठः । ३ 'इत्यस्यापि' ॥

मर्थं व्याचक्षते । तन्मतेनोच्यते—हे भगवन् ! "सोम !" चन्द्र ! "स्वादिष्ठया" अतिशयेन स्वादुतमया, "मदिष्ठया" अतिशयेन मदयितृतमया "पवस्व" प्रक्षर "धारया" प्रत्यहमेकैककलया, "इन्द्राय" सूर्याय "पातवे" "सुतः" आपूरितः सुषुम्नेन रश्मिना ॥ ११ । ५ । १ ॥

## चन्द्रमाः ॥ ३ ॥

### चन्द्रमाश्चायन् द्रमति, चन्द्रो माता, चान्द्रं मानमस्येति वा ॥ २ ॥

"चन्द्रमाः(३)" कस्मात् ? स हि "चायन्" पश्यन् सर्वभूतानि उपर्यवस्थितः "द्रमति" गच्छति, चायतेः पूर्वपदम्, द्रमतेरुत्तरपदम् । अथवा—"चन्द्रो माता" चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः, चन्द्रः पूर्वपदम्, मातोत्तरपदम् । "चान्द्रं मानमस्य—इति वा" चन्द्रमाः, चन्द्रः पूर्वपदम्, तदेवोत्तरपदम्, केवलं तु समानाधिकरणः पूर्वः, बहुव्रीहिरुत्तरः ॥ ११ । ५ । २ ॥

### चन्द्रश्चन्दतेः कान्तिकर्मणः ।

### चन्दनमित्यप्यस्य भवति ।

### चारु द्रमति, चिरं द्रमति, चमेर्वा पूर्वम् ॥ ३ ॥

अथ "चन्द्रः" कस्मात् ? "चन्दतेः कान्तिकर्मणः" नित्यकान्तो ह्यसौ ॥

"चन्दनम्"—"इत्यप्यस्यैव" चन्दतेः "भवति" तदपि हि कान्तम् ॥

अथवा "चारु द्रमति" चारुशब्दात् पूर्वपदम्, द्रमतेः उत्तरपदम्, चार्विति द्रमतिक्रियाविशेषणम् । अथवा—"चिरं द्रमति" तदेवोत्तरपदम्, चिरशब्दात् पूर्वपदम् । "चमेः ( भ्वा० प० ) वा पूर्वम्" द्रमतेरेवोत्तरपदम्, कोऽर्थः? चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः ॥ ११ । ५ । ३ ॥

### चारु—रुचेर्विपरीतस्य ॥ ४ ॥५॥

अथ "चारु" कस्मात् ? "रुचेः ( भ्वा० आ० )" आद्यन्त—"विपरीतस्य" दीप्तिकर्मणः ॥ ११ । ५ । ४ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

* अत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागेवोचिता ॥

"नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ॥"
'नवो नवो भवति जायमानः' इति पूर्वपक्षादिमभिप्रेत्य
'अह्नां केतुरुषसामेत्यग्रम्' इत्यपरपक्षान्तमभिप्रेत्य ।
आदित्यदैवतो द्वितीयः पाद इत्येके। 'भागं देवेभ्यो विद-
धात्यायन्' इत्यर्द्धमासेज्यामभिप्रेत्य । प्रवर्द्धयते चन्द्रमा
दीर्घमायुः ॥ १ ॥

"नवोनवो भवति० ( ऋ० सं० ८, ३, २३, ४ )"—इति । सूर्याया आर्षम् । दूणाशे[1] चान्द्रमसे चरौ विनियोगो राजयक्ष्मगृहीतेष्टौ च ॥ "नवो नवो भवति जाय-मानः" चन्द्रमाः, प्रतीच्यां दिशि पूर्वपक्षाद्युपक्रम्य, उपक्रान्तवृद्धिः, अस्तं गते आदित्ये पश्चादादित्यस्य प्रतिमासं जायमानो नवो नवो भवति । "अह्नां केतुरुषसामेत्यग्रम्"-"इति अपरपक्षान्तमभिप्रेत्य" अपरपक्षान्तेषु प्राच्यां दिशि प्रक्षीणः कलामात्रावशेषः अह्नां केतुः लक्षणम्, तत्कलोपचयापचयाभ्यां हि प्रतिपत्प्रभृतीन्यहानि लक्ष्यन्ते, अथवा—अह्नां केतुः कर्त्ता स्वगतिविशेषैः उषसामेत्यग्रम् इति । उषसो यः प्रकाशः, तस्य प्रान्ते पुरस्तात् उद्यतः सूर्यस्य दृश्यते । स पुनरेष एवं पर्यायेण प्रतीचीप्राच्यौ दिशौ "आयन्" पूर्वपक्षापरपक्षविभागेन एकैकशोऽपि पूर्णमास्यमावस्ययोः आगत्य कालौ भिन्दन् हविर्भागं वा विभागेन यथाविभागं "देवेभ्यो भागं" "विदधाति" एककर्माऽपि पूर्वपक्षात् पौर्णमास्यमावस्ययोः स्वगत्या काले तिथिं विभज्य देवेभ्यो ददाति विभागदाने हेतुर्भवति, पूर्णे चन्द्रमसि उपचये[2] पौर्णमास्यदर्शनेऽमावास्यायामिति ह विज्ञायते । य एवं करोति "चन्द्रमाः"सः "प्रतिरते"—प्रवर्द्धयते ईजानानां "दीर्घम् आयुः" । वयमपि च यजामहे, तमनेन हविषा । अतः सोऽस्माकमप्येतत्[3] करोतु—इत्येतदाशास्महे ॥

"आदित्यदैवतो द्वितीयः पाद इत्येके" । "पूर्वापरं चरतो माययैतौ० ऋ०सं० ८, ३, २३, ३ )"—इति । इत्यतोऽनन्तरमेवेवम्, मैत्रावरुणीये समाने हविषि विनियोग इत्यपेक्ष्येयमपि सौर्याचन्द्रमसीति अह्नां केतुरित्यतो विशेषलिङ्गात् ब्रवीति—"आदित्य-दैवतो द्वितीयः पादः" इति । तदर्थयोजना—यः "चन्द्रमाः" "नवो नवो भवति

---

१ 'दूणांशे' ॥ २ 'उपचये पौर्णमासीमेवमदर्शने' ॥ ३ 'एतत्' ॥

जायमानः" यश्च "भागं देवेभ्यो विदधात्यायन्" यश्च "प्रतिरते दीर्घमायुः" सोऽस्माकमप्येतत् करोतु । अयं यश्च सूर्यः "अह्नां" "केतुः" कर्त्ता, उदयास्तमयाभ्याम्, "उषसां" चै "अग्रम्" "एति" मुख्यत्वमागच्छति, तत्कृतत्वादुषसो जन्मनः । तद्रश्मिप्रान्तप्रोत्सार्यमाणे हि तमस्युषसो जायन्तेऽतः स तासां जनयितेति मुख्यः। अतः सोऽस्माकमेतदेवं करोतु—इत्येतदाशास्महे ॥

इह कथं चन्द्रमा मध्यस्थानः ? ननु सूर्यात् परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति । सत्यं स्मरन्ति, कर्मसंयोगेन तु द्युस्थानत्वे सति सर्वदेवतानां विशेषतः स्थाननियमो विवक्षितः, तदेतदैन्द्रं कर्म रसानुप्रदानं वृत्रवधो बलकृतिरिति, तथा बाहुल्येनैन्द्रेषु दृष्टत्वात्, बलकृतिश्च चन्द्रे दृष्टा, यथा—"बुधैरजेत दुर्मतिम्" प्रसिद्धं चेदम् इन्दुः=चन्द्रमा इति, रसात्मकत्वाच्चन्द्रमसो रसानुप्रदानसम्बन्धः । एवं चेदिन्द्रश्चन्द्रमाः, तस्य मेघवधाधिकारसम्बन्धः, कर्त्तृत्वेन सूर्यादर्वागिति युक्तं मध्यस्थानश्चन्द्रमाः । अपि च ओषधिसोमश्चन्द्रमा भवति अधियज्ञमापन्नः, स चेन्द्रस्यान्नम्, अन्नं चान्नादस्यात्मसाद्भवति, अन्नमानस्यानन्यत्वेनावस्थानादित्यतो युक्तं मध्यस्थान इति। यथा च सर्वगतो वायुर्विशेषतो मध्यस्थान इत्येवमित्यतोऽदोषः ॥ ११ । ६ । १ ॥

## मृत्युः ॥ ४ ॥

### मृत्युर्मारयतीति सतः ॥ २ ॥

"मृत्युः ( ४ )"—इति वक्तव्यम् । स कस्मात् ? "मारयतीति सतः" मध्यमो हि प्राणो मृत्युः, उत्क्रामन् शरीरादितरैः प्राणैः प्राणिनो वियोजयति, एवं मारयति । विज्ञायते हि—"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"—इति ॥११।६।२ ॥

### मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः ॥ ३ ॥ ६ ॥

अथवा—"मृतं च्यावयति" य एवोपक्षीणायुर्भवति, उपक्षीणकर्मा, तमेवासावपगमनेन प्रच्यावयति इति "शतबलाक्षः" "मौद्गल्यः" आचार्यो मन्यते । बहुवलानि अक्षाणि इन्द्रियाणि यस्य स शतबलाक्षः बहिन्द्रियः, मुद्गलस्यापत्यं मौद्गल्यः ॥ ११ । ६ । ३ ॥

### तस्यैषा भवति—॥

"तस्य" मृत्योः "एषा भवति"— ॥ *

१ 'वा' ॥ * अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा "तस्य मृत्योरेषा भवति" इत्यतः प्रागुचिता ॥

"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥"
परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो
मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा ॥ १ ॥ ७ ॥

"परं मृत्यो अनु परेहि० ( ऋ० सं० ७, ६, २६, १ । य० वा० सं० ३५ । ७ । आ० गृ० ४, ६ )"—इति । सङ्कुसुको नाम, तस्यार्षम् । आज्यहोमे पुत्रकामके कर्मणि स्थालीपाकविधाने षडाहुतिः ॥ हे "मृत्यो !" "परम्" अन्यम् "अनुपरेहि" अनुपरागच्छ त्वं "पन्थाम्" पन्थानम् । "यः ते स्वः" । कतमः सः ? "इतरो देवयानात्" यस्मात् देवयाने पथि वयं स्थिताः अनाधृष्याः तव पितृयानं पन्थानम् अनुपरेहि त्वम् । अपि च "चक्षुष्मते शृण्वते" च "ते" तुभ्यं "ब्रवीमि"—"मा" त्वम् "नः" अस्माकं "प्रजां" पुत्रान् पौत्रांश्च "रीरिषः" हिंसीः, "मा उत वीरान्" अन्यानपि, येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति ॥ ११ । ७ । १ ॥

तेषामेषा भवति—॥ *

"त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुं रसनामुरुष्यथः ॥"
इति सा निगदव्याख्याता ॥ १ ॥

॥ ११ । ८ । १ ॥

## विश्वानरः ॥ ८ ॥

विश्वानरो व्याख्यातः ॥ २ ॥ ८ ॥

"विश्वानरः ( ५ )"—"व्याख्यातः" ( ७ । २१ । १ ) अभिधानतोऽभिधेयतश्च ॥ ११ । ८ । २ ॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥*

---

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिता ॥ "तेषामेषा भवति" इत्यस्य व्याख्यानं तु न दृश्यते ॥ * अत्राष्टमखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"प्र वो॑ म॒हे मन्द॑माना॒याऽन्ध॒सोऽर्चा॑ वि॒श्वान॑राय विश्वा॒भुवे॑ इन्द्र॑स्य॒ यस्य॒ सुम॑खं॒ सहो॒ महि॒ श्रवो॑ नृ॒म्णं च॒ रोद॑सी सप॒र्यतः॑ ॥"

प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय, मोदमानाय, स्तूयमानाय, शब्दायमानायेति वा, विश्वानराय सर्वं विभूतायेन्द्रस्य यस्य प्रीतौ सुमहद् बलं महच्च श्रवणीयं यशो नृम्णञ्च बलं नन्नतं द्यावापृथिव्यौ वः परिचरत इति कमन्यं मध्यमादेवमवक्ष्यत् ॥ १ ॥ ९ ॥

"प्र वो॑ म॒हे॰ ( ऋ० सं० ८, १, ९, १ । य० वा० सं० ३३, ३५ )"—इति । वैकुण्ठस्यार्षम् । जगती । महाव्रते विनियोगः ॥ हे स्तोतारः ! "प्र अर्च" "प्रार्चत" प्रोच्चारयत स्तुतिम्, उच्चार्यमाणं चान्यैः प्रपूजयत । कस्मै ? "विश्वानराय" किंलक्षणाय विश्वानराय ? "महे" "महते" "अन्धसः" "अन्नस्य" दात्रे, "मन्दमानाय" हृष्यमाणाय, अथवा—शब्दायमानाय स्तोतृभिः, "विश्वाभुवे" सर्वप्रकारविभूतियुक्ताय । "इन्द्रस्य" ईश्वरस्य "यस्य" विश्वानरस्य, "सुमुखं सहः" "सुमहद् बलम्" "महि श्रवः" "महच्च श्रवणीयं यशः" बलमायातिर्महती "नृम्णं च" "नन्" मनुष्यान् प्रति यद् विशेषतः "नतम्" "बलम्" तच्च यस्य, महदपि चैतां "वः" स्तुतिं यस्य विश्वानरस्य प्रोच्यमानां "द्यावापृथिव्यौ" "परिचरतः" पूजयतः अभिनन्दतः, सर्वभूतानामियमभिमता स्तुतिरस्त्वित्यभिप्रायः ॥ ११ । ९ । १ ॥

तस्यैषापरा भवति—॥

"तस्य एषा अपरा भवति" [ सा पुनः किमर्थम् ? द्युस्थानोऽपि हि विश्वानरः समाम्नातः । अस्यां तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते ]—॥ *

"उदु॒ ज्योति॑र॒मृतं॑ वि॒श्वज॑न्यं वि॒श्वान॑रः सवि॒ता दे॒वो अ॑श्रेत् ॥"

उदशिश्रियज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति ॥ १ ॥

* अत्र नवमखण्डसमाप्तिर्देश्यते, सा "तस्यैषाऽपरा भवति" इत्यतः प्रागुचिता ॥

"उदु ज्योतिः० ( ऋ० सं० ५, ५, २३, १ )"—इति । वसिष्ठस्यार्षम् । प्रातरनुवाके विनियोगः ॥ "उत् अश्रेत्" उच्छ्रयति, ऊर्ध्वम् उपनयति "विश्वानरः" मध्यमो वायुः, "सविता" । किम् ? एतत् "ज्योतिः" "अमृतं" सूर्याख्यम्, सर्वगन्तॄणां वायुपूर्वकत्वाद् गमनस्योपपद्यते "विश्वजन्यं" सर्वलोकहितम् ॥

एवमत्र विश्वानरो ज्योतिरुच्छ्रयतीति व्यपदेशान्मध्यमो विश्वानरः । एवं चाभिप्रेत्योक्तम्—"कमन्यं मध्यमादेवमवक्ष्यत्" इति ॥

ओपस्योऽर्द्धर्च उत्तर इति—"क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषा" इति भाष्यकारो नाधिजगे, प्रसङ्गतस्तु निर्भ्रमः—यदा तत् ज्योतिः द्युस्थानमुपनीयते विश्वानरेणाथ तदा 'क्रत्वा' तत्कर्मणा 'देवानां' रश्मीनां 'चक्षुः' ख्यानं प्रकाशः 'अजनिष्ट' जायते 'उषा' । सा न पुनः जाता 'आविरकः भुवनं विश्वं' सर्वमाविष्करोति भूतजातमित्यर्थः ॥ ११ । १० । १ ॥

## धाता ॥ ६ ॥

### धाता सर्वस्य विधाता ॥ २ ॥ १० ॥

"धाता ( ६ )"—कस्मात् ? स हि "सर्वस्य विधाता" स्रष्टा, उदकपूर्वकत्वात् सर्वविधानस्य मध्यमः ॥ ११ । १० । २ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

**"धाता द॒दा॑तु दा॒शुषे॒ प्राचीं॑ जी॒वातु॒मक्षि॑ताम् ।**
**व॒यं दे॒वस्य॑ धीमहि सुम॒तिं स॒त्यध॑र्मणः ॥"**

**धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः ॥ १ ॥**

"धाता ददातु० ( अथ० सं० ७, १७, २ )"—इति । वामदेवस्यार्षम् । देविकासु धात्रे हविषि विनियोगः ॥ य एकः कश्चित् धात्रे दत्तवान् हविर्भवति, तस्मै "दाशुषे" सः "ददाति" । किं ददाति ? "प्राचीं जीवातुमक्षिताम्" । "प्राचीं" "प्रवृद्धां" महतीं "जीवातुं" "जीविकाम्" "अक्षिताम्" "अनुपक्षीणाम्" । यत एवमतो

---

* अत्र दशमखण्डसमाप्तिर्द्योत्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

ब्रूमः—"वयं" "देवस्य" धातुः "धीमहि" धारयामहे, "सुमतिम्" "कल्याणीं मतिम्" नित्यं हविर्दानयुक्तां "सत्यधर्मणः" नित्यमवितथार्थकारिणः ॥११।११।१॥

## विधाता ॥ ७ ॥

विधाता धात्रा व्याख्यातः ॥ २ ॥ ११ ॥

"विधाता (७)"—"धात्रा व्याख्यातः" धातैव विधाता ॥ ११ । ११ । २ ॥

तस्यैष निपातो भवति बहुदेवतायामृचि—॥

"तस्य एष निपातो भवति" स्तुतिसाधारण्येन "बहुदेवतायामृचि"—॥ *

"सोम॑स्य॒ राज्ञो॒ वरु॑णस्य॒ धर्म॑णि॒ बृह॒स्पते॒रनु॑मत्या उ॒ शर्म॑णि । तवा॒हम॒द्य म॑घव॒न्नुप॑स्तुतौ॒ धातु॒र्विधा॑तः क॒ल॒शाँ अ॑भक्षयम् ॥"

इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति ।

कलशः कस्मात् कला अस्मिञ्छेरते मात्राः ।

कलिश्च कलाश्च किरतेर्विकीर्णमात्राः ॥ १ ॥ १२ ॥

"सोम॑स्य॒ राज्ञो॰ ( ऋ॰ सं॰ ८, ८, २५, ३ )"—इति । विश्वामित्रस्यार्षम् ॥ "सोमस्य" "राज्ञः" "धर्मणि" कर्मणि, यत्र सोम इज्यते तस्योपस्तुतौ प्रवर्त्तमानः, तेन "प्रसूतः" "कलशान्" "सोमकलशान्" "अभक्षयम्" । "वरुणस्य" च एवमेव । "बृहस्पतेः" च, "अनुमत्याः" च "शर्मणि" शरणे आश्रये वर्त्तमानः, ताभ्याम् "अभिप्रसूतः" । "तव" "अहम्" हे "मघवन्" ! "अद्य" "उपस्तुतौ" युवयोश्च हे "धातः !" हे "विधातः !" सर्वैर्भवद्भिरनुज्ञातः एतान् "सोमकलशान्" "अभक्षयम्" इति ॥

"कलशः कस्मात्" ? "कलाः अस्मिन् शेरते मात्राः" । कलाः अवयवाः सोमसमुदायात् केचित् पृथक्कृताः, ते शेरते आसते अस्मिन्, कलाशब्दात् पूर्वपदम्, शीङ ( अ॰ आ॰ ) उत्तरपदम् ॥

---

१ 'सत्यमवितथा' ॥ * अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैष निपातो भवति" इत्यतः प्रागुचिता ॥

अथ कलाः कस्मात्? अत आह कलानिर्वचनानिर्वचनप्रसङ्गेन—"कलिश्च कलाश्च किरतेर्विकीर्णमात्राः"। "कॄ विक्षेपे (तु० प०)"—इत्यस्य, कलौ वचांसि परस्परं विक्षिप्यन्ते कला अपि विक्षिप्ता भवन्ति कुतश्चित् समुदायादिति ॥ ११ । १२।१ ॥—*

## अथातो मध्यस्थाना देवगणाः ॥ १ ॥

"अथातो मध्यस्थाना देवगणाः"। अथातःशब्दावुक्तार्थौ, तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति, मध्यस्थाना देवगणा इतीदमपि प्रसिद्धमेव ॥ ११ । १३ । १ ॥

## तेषां मरुतः प्रथमागामिनो भवन्ति ॥ २ ॥

"तेषां" "मरुतः" "प्रथमागामिनः भवन्ति"। कस्मात्? वायुरेव हि भेदेनापेक्षमाणो मरुदभिधानो बहुवचनभाग् भवति। तेषां प्राथम्यं वायुना व्याख्यातम्। एतावांस्तु विशेषः—बहुसाध्ये कर्मणि बहुधा मध्यमो भवति, पृथक्त्वेन तु विज्ञाता मरुतः शुक्रज्योतिश्च चित्रज्योतिश्चेत्येवमादयः, सप्तसप्तका देवगणाः मारुतेषु गणेषु सप्तकपालेषु, अग्नौ पुराणे चैत एव प्रसिद्धाः, सप्त¹विधवायुविचारिणः मारीचात् कश्यपाददित्यां ये जज्ञिरे ॥ नैरुक्तसमयस्तु सर्व एव गणा मरुतः। उक्तं च वार्त्तिके—

"मध्यमा वाक् स्त्रियः सर्वाः पुमान्सर्वश्च मध्यमः।
गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृतेः ॥"—इति ॥ ११ । १३ । २ ॥

## मरुतः ॥ ८ ॥

## मरुतो मितराविणो वा, मितरोचिनो वा, महद् द्रवन्तीति वा ॥ ३ ॥ १३ ॥

अथ "मरुतः (८)" कस्मात्? "मितराविणो वा" मितं नाम सुश्लिष्टम्, यथा तेषां योग्यं रवितुं तथा रुवन्ति स्तनयन्ति। अथवा—"मितरोचिनः" तथैव सुश्लिष्टं रोचन्ते ॥ "अमितराविणः"—इति केचिदिच्छन्ति,—"मरुतोऽमितराविणः"—इति समानसंहितत्वात् भाष्यस्य, तेषां बहुप्रकारं च ते रुवन्तीत्यर्थः। "अमितरोचिनः"—इत्यत्राप्येवमेव ॥ "महद् द्रवन्ति—इति वा"। इह शब्दमहत्ताभिप्रेता, पूर्वत्र बाहुल्यं बहुप्रकारता च ॥ ११ । १३ । ३ ॥

---

* अत्र द्वादशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तावेकादशा-(षोडशा)ऽध्यायस्य प्रथमः पादः ॥ ११, १ ॥" इति तूपलभ्यते ॥ १ 'सप्तधा कृत्स्नविचारिणः' ॥

तेषामेषा भवति—॥

"तेषाम् एषा भवति"—॥*

"आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥"

विद्युन्मद्भिर्मरुतः। स्वर्कैः स्वञ्चनैरिति वा, स्वर्चनैरिति वा, स्वर्चिर्भिरिति वा। रथैरायात। ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा॥ १॥

"आ विद्युन्मद्भिः० (ऋ० सं० १, ६, १४, १)"—इति। गोतमस्यार्षम्। आस्तारपङ्क्तिः॥ "हे मरुतः!" "आयात" यूयम्। केन? कीदृशेन वा? "विद्युन्मद्भिः" विद्योतनं विद्युत्, विशिष्टदीप्तियुक्तैः। "स्वर्कैः रथेभिः" रंहणैः मेघः "स्वञ्चनैः" सुगमनैः, यद्वा—"स्वर्चनैः" शोभनमर्चनं येषां तैः, सुष्ठु पूजितैः, अथवा—"स्वार्चिभिः" अनुपरतविद्युत्सम्पातैः। "ऋष्टिमद्भिः" रेषणवद्भिः, अनाकालस्य नाशनैः। पृथक्त्वे—विद्युन्मद्भिरिव ऋष्टिमद्भिः आयुधोपेतैः अशनपतनैः आप्लुवन्तो ये अन्तरिक्षे मेघाः पतन्ति, पृथक्त्वे समं समेता अश्वयुग्भिरिति। अपि च किमेवमेव यथाकथञ्चिदागच्छतेत्यागमनमात्रे वयमर्थिनः? न,—इत्युच्यते—"आ वर्षिष्ठया न इषा वयो न पप्तत सुमायाः"। हे सुमायाः सुकर्माणः! सुप्रज्ञाः! वा आपप्तत "आपतत" आगच्छतेत्यर्थः। कथम्? वर्षिष्ठया इषा "अन्नेन" अस्मत्प्रदेयेन संयुक्ताः। किं शनकैः आपतत? न,—इत्युच्यते—वयः न. "वय इव" पक्षिण इव शीघ्रमापतत—इत्येतदाशास्महे॥ ११।१४।१॥

रुद्राः॥ ९॥

रुद्रा व्याख्याताः॥ २॥ १४॥

"रुद्राः (९)"—"व्याख्याताः"॥ ११॥ १४। २॥

तेषामेषा भवति—॥

"तेषाम् एषा भवति"—॥*

---

* अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिता॥
* अत्र चतुर्दशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागुचिता॥

"आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥"

आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मण इयं वो अस्मदपि प्रतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति तृष्णक् तृष्यतेरुदन्युरुदन्यतेः ॥ १ ॥

"आरुद्रास इन्द्रवन्तः० (ऋ० सं ४, ३, २१, १)"—इति । श्यावाश्वस्यार्षम् । जगती । आग्निमारुते शस्यते ॥ हे "रुद्राः !" आगच्छत यूयम् । "इन्द्रवन्तः" "इदि परमैश्वर्ये (भ्वा० प०)" । "सजोषसः" परमैश्वर्येण नित्यमासेविताः, पृथक्त्वपक्षे तूपपद्यत एव इन्द्रेण सह प्रीयमाणा इति । "हिरण्यरथाः" उदकहरणार्थे[1] रंहणाः, पृथक्त्वपक्षे तु हिरण्यविकृतरथाः । "सुविताय" तस्मै[2] "कर्मणे" सुष्ठु सुगुणाय,[3] यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम् । किमिति आगच्छत ? "वः" युष्मान् "इयम्" "अस्मत्" मतिः "प्रतिहर्यते" "प्रतिकामयते" युष्मद्विनाकृतमिदं कर्म गुणवद्प्ये-तैरङ्गैर्मा[4] भूद् विगुणमित्येवमर्थं प्रतिहर्यते । अपि च हविः पूर्वं देवताः प्रेप्सन्ति ब्राह्मणा इवोपनिमन्त्रणम्, ततो यजमानः संस्कृते हविषि तदव्यापत्तये यागकालानतिक्रमणाय चान्नपतिरिवान्ने संस्कृते तदव्यापत्तये भोजनकालानतिक्रमणाय च देवताः प्रतिप्रेप्सति।विज्ञायते हि—"देवता वै सर्वा आशंसन्ति ग्रहे गृह्यमाणे मह्यं ग्रहं गृह्णाति"—इति, अत इदमुक्तम्—"इयं वो अस्मत्प्रतिहर्यते मतिः" इति । कथं पुनः प्रतिहर्यते ? "तृष्णजे न" "तृष्णजे इव" तृडुपजायते यस्मिन् विशेषतः काले, स तृडुपजः कालो घर्मान्तः, तस्मिन् यथा । "दिवः उत्साः" द्युलोकात् उत्साः, उत्सप्रभवा मेध्या आपः । "उदन्यवे" उदकमिच्छते लोकाय आगच्छन्ति प्रावृषि तथास्मन्मत्या प्रतिहर्यमाणा आगच्छतेति । उदन्युश्चातक इति केचित् । तस्य प्रेप्सतो यथा दिव उत्सा मेघा आगच्छन्ति, तथास्माकमागच्छतेति, एवं तेषां योजना ॥ ११ । १५ । १ ॥

## ऋभवः ॥ १० ॥

ऋभव उरु भान्तीति वा ।

१ 'हरणार्थं' ॥ २ 'तस्मिन्' 'कर्मणि' ॥ ३ 'सुगणाय' ॥ ४ 'दप्यन्यैर' ॥

ऋतेन भान्तीति वा ।

ऋतेन भवन्तीति वा ॥ २ ॥ १५ ॥

"ऋभवः (१०)" कस्मात् ? "उरु भान्ति–इति वा" ते हि बहु भान्ति दीप्यन्ते, उरुशब्दात् पूर्वपदम्, भातेरुत्तरपदम् ।

"ऋतेन भान्ति–इति वा" यज्ञेन सत्येन वा भान्ति, तदेवोत्तरपदम्, पूर्वपदे विकल्पः ।

"ऋतेन भवन्ति–इति वा" भवतेर्वोत्तरपदम्, ते हि ऋतेन सत्त्वेन वा भवन्ति, यज्ञेन वा भवन्ति, भूत्वा[1] देवत्वेन सर्वे युज्यन्ते ॥ ११ । १५ । २ ॥

तेषामेषा भवति–॥

"तेषाम् एषा भवति"–॥ *

"विष्ट्वी शमी॑ तरणि॒त्वेन॑ वा॒घतो॒ मर्त्ता॑सः॒ सन्तो॑ अमृत॒त्व-मा॑नशुः । सौ॒ध॒न्व॒ना ऋ॒भवः॒ सूर॑चक्षसः संवत्स॒रे सम॑पृ-च्यन्त धी॒तिभिः॑ ॥"

कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्त्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा, सूरप्रज्ञा वा, संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ॥ १ ॥

"विष्ट्वी शमी० (ऋ० सं० १, ७, ३०, ४)"–इति । कुत्सस्येयमार्षम् । आर्भवे विनियोगः ॥ "विष्ट्वी" "शमी"–इति द्वे अपि कर्मनामनी । यतोऽजामितायै भाष्य-कारः पूर्वं तावत् निराह–"कृत्वा" इति । किं कृत्वा ? "शमी" "कर्माणि" कथम् ? "तरणित्वेन" "क्षिप्रत्वेन" क्षिप्रकारित्वेन, सर्वयज्ञसम्पद्दर्शनेन । "वाघतः" "वोढारः" यज्ञस्यानुष्ठातारः, मेधाविनो वा, न ह्यमेधाविनः संवत्सरेण सकलं कर्म समा-पयितुं शक्ताः, ते तु संवत्सरेऽखिलं कृत्वा "मर्त्तासः" मनुष्याः "सन्तः" "अमृतत्वम्" अमृतभावं देवत्वम् "आनशुः" "आनशिरे" प्राप्तवन्तः । के पुनस्ते ? "सौधन्वनाः" सुधन्वनः पुत्राः, "ऋभवः" "सूरचक्षसः" "सूरख्यानाः" सूर्यविख्याताः, सूर्यसमा-नदर्शनाः, सूर्यसमानप्रज्ञाः[2] वा । यत ईदृशास्ते अतः "संवत्सरे" संवत्सरावयवे वस-

---

१ 'भूत्या देवत्वेन' ॥ * अत्र पञ्चदशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागेवोचिता ॥ २ 'सूर्यसमानसंज्ञाः वा' ॥

न्तादिकाले "समपृच्यन्त" समयुज्यन्त, "धीतिभिः" "कर्मभिः" अतश्च देवा अभवन्निति ॥ ११ । १६ । १ ॥

**ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन ॥ २ ॥**

"ऋभुः, विभ्वा, वाजः—इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः"—इति । आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह—"तेषां प्रथमोत्तमाभ्याम्" ऋभुणा वाजेन च "बहुवन्निगमाः भवन्ति" "न मध्यमेन" विभ्वा, स हि आर्भवाणां मन्त्राणां स्वभावः ॥११।१६।२॥

**तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति ॥ ३ ॥**

"तदेतत्" उच्यते—"ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति" । तद्यथा—

"इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त"—इति ॥११।१६।३॥

**आदित्यरश्मयोऽप्यृभव उच्यन्ते ।**

**"अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानुगच्छथ ॥"**

**अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेति ॥ ४ ॥**

"आदित्यरश्मयोऽप्यृभव उच्यन्ते"—इति । अभिधेयव्यभिचारमुपप्रदर्शयति । क्व च पुनस्ते उच्यन्ते ? यतः पठति—"अगोह्यस्य यदसस्तना"—इति ।

"उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।
अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानुगच्छथ ॥" ( ऋ० सं० २, ३, ६, १)"—इति ।

दीर्घतमस आर्षम् । जगती ॥ 'उद्वत्सु' ये उन्नताः प्रदेशाः भुवः अद्भिरनाक्रान्ताः, तेषु 'अस्मै' लोकाय उपकरिष्यन्तो यूयम् ऋभवः 'अकृणोतन' प्रतिसंवत्सरं

कुरुध्वे । तृणकुश्चादिवर्षेणादित्यमण्डलादौ वर्त्तमानाः। 'निवत्सु' पुनर्निम्नेषु भुवः प्रदेशेषु 'अपः' उदकं कुरुध्वे । 'स्वपस्यया' लोकानुग्रहप्रवृत्तया वर्षक्रियया हे 'नरः!'। किंच, "अगोह्यस्य" योऽयम् "अगोह्यः=आदित्यः, अगूहनीयः" न गूहितुं शक्यः केनचिदपि, "यस्य" "यदसस्तना गृहे" यावदस्य मण्डले सुप्ता इव निगूढा भवथ । "तदद्येदमृभवो नानुगच्छथ" । हे ऋभवः ! "यावत् तत्र" निगूढा "भवथ" रात्रौ, न तावदिह "भवथ" ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः सम्पद्यते । एतद् वो माहाभाग्यमहमनुकीर्त्तयामि, ते यूयमिदं नामास्माकं कुरुतेति ॥ ११ । १६ । ४ ॥

## अङ्गिरसः ॥ ११ ॥

**अङ्गिरसो व्याख्याताः॥ ५ ॥ १६ ॥**

"अङ्गिरसः (११)" "व्याख्याताः" एकवचनेन, "अङ्गारेष्वङ्गिराः" (३।१७।१)–इति ॥ ११ । १६ । ५ ॥

**तेषामेषा भवति–॥**

"तेषाम् एषा भवति"–॥ *

**"विरूपास इदृषयस्त इद्गम्भीरवेपसः ।**
**ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे ॥"**

**बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा, गम्भीरप्रज्ञा वा ते अङ्गिरसः पुत्रास्ते अग्नेरधिजज्ञिर इत्यग्निजन्म ॥ १ ॥ १७ ॥**

"विरूपास० (ऋ० सं ८, २, १, ५)"–इति । नामानेदिष्ठस्यार्षम् । अनुष्टुप् । पार्ष्ठिके षष्ठेऽहानि विनियोगः ॥ "विरूपाः" नानारूपाः । के पुनस्ते ? इति– "ऋषयः" अवितथस्य ब्रह्मणो द्रष्टारः । न केवलं पश्यन्ति, अपि च "गम्भीरवेपसः" अप्रमेयकर्माणः, अप्रमेयबुद्धयो वा । ऋष्यनेकत्वे कतमास्ते ? इति–"ते अङ्गिरसः सूनवः" येऽङ्गिरसः सूनवस्त एते विवक्षिताः । कदा पुनस्ते अङ्गिरसो जज्ञिरे ? अतं आह–"ते अग्नेः परिजज्ञिरे"–इति । अग्नित्वमापन्नस्याङ्गिरसोऽधि सकाशात् ये जज्ञिरे, ते एते विरूपाः गम्भीरवेपसश्च ममेदं नाम कुर्वन्त्विति ॥ ११ । १७ । १ ॥

---

* अत्र षोडशखण्डसमाप्तिर्द्रक्ष्यते, सा "तेषामेषा भवति" इत्यतः प्रागुचिता ॥

# पि॒तर॑ः ॥ १२ ॥

## पितरो व्याख्याताः ॥ १ ॥

"पितरः (१२)" "व्याख्याताः" "द्यौर्मे पिता (४।२१।१)"—इत्यत्र ॥ ११।१८।१ ॥

## तेषामेषा भवति—॥

"तेषाम् एषा भवति—॥ *

"उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तर॑ः सो॒म्यास॑ः ।
अस॒ुं य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु ॥"

उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पादिनस्तेऽसुं ये प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा, यज्ञज्ञा वा, ते न आगच्छन्तु पितरो ह्वानेषु ॥ २ ॥

"उदीरतामवर॰ (ऋ॰ सं॰ ७, ६, १७, १। य॰ वा॰ सं॰ १९, ४९)"—इति । शङ्खस्यार्षम् । पितृमेधे विनियोगः ॥ ये तावत् "अवरे" "पितरः" पृथिवीमाश्रिताः, ते तावत् "उदीरताम्" ऊर्ध्वं गच्छन्तु । अथ पुनर्ये "परासः" "परे" द्युलोकमाश्रिताः, तेऽप्युदीरताम्, तेषामप्यप्रच्युतिरस्तु, मुच्यन्तां वा तदधिकारप्रक्षये । "उन्मध्यमाः" पितरो येऽपि "मध्यमाः" मध्यस्थानाश्रयाः, तेऽप्युदीरताम् उत्तमं लोकमाश्रयन्ताम् । "सोम्यासः" "सोमसम्पादिनः" कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं सम्पादयन्ति । किम्प्रकाराः ? "असुं य ईयुः" प्राणमात्रमूर्त्तयः, अस्थूलविग्रहाः । "अवृकाः" "अनमित्राः" परं साम्यमुपगताः । "ऋतज्ञाः" यथावत् सत्य [ स्य ]—वेदितारः, यज्ञस्य वा । य एवमादिगुणयुक्ताः "पितरः" ते "नः" अस्माकम् "अवन्तु" नित्यम् "आगच्छन्तु" "हवेषु" आ "ह्वानेषु"—इत्येतदाशास्महे ॥ ११।१८।२ ॥

---

* अत्र सप्तदशखण्डसमाप्तिर्दृश्यते, सा "पितरो व्याख्याताः" इत्यतः प्राग्बोधिता ॥

माध्यमिको यम इत्याहुः ॥ तस्मान्माध्यमिकान् पितॄन्मन्यन्ते ॥ ३ ॥ १८ ॥

"माध्यमिको यमं इत्याहुः" नैरुक्ताः। "तस्मात् माध्यमिकान् पितॄन् मन्यन्ते" स हि तेषां राजेति ॥ ११ । १८ । ३ ॥

अङ्गिरसो व्याख्याताः ॥

पितरो व्याख्याताः ॥

अथर्वाणः ॥ १३ ॥ भृगवः ॥ १४ ॥

भृगवो व्याख्याताः ॥

अथर्वाणोऽथनवन्तः । थर्वतिश्चरतिकर्मा तत्प्रतिषेधः ॥ १ ॥

अत उत्तरे "अथर्वाणः ( १३ )" "भृगवः ( १४ )"—इत्येते पदे समाम्नाते । न चैतयोः समस्तयोः प्रत्येकं वा स्तुतिरस्ति । अस्ति तु पित्रङ्गिरोभृगुभिः साधारणा स्तुतिः । यतस्तदङ्गनिर्वचनाय प्रसङ्क्ष्यमाणानभिप्रेत्याथर्वशब्दानिर्वचनप्रसङ्गात् ब्रवीति—'अङ्गिरसः' "व्याख्याताः" ( ३ । १७ । १ ), येऽस्यामृचि वक्ष्यमाणायाम्,—"पितरः" "व्याख्याताः" ( ४ । २१ । १ ),—"भृगवः" "व्याख्याताः" ( ३ । १७ । १ )॥

"अथर्वाणः ( १३ )" कस्मात् ? ते ह्येते "अथनवन्तः" किमिदमथनम्, येन ते तद्वन्तः ? अत आह—"थर्वतिः चरतिकर्मा" गच्छत्यर्थः । ततः किम् ? "तत्प्रतिषेधः" पुरस्तादकारः,—न थर्वन्ति—इति अथर्वाणः, स्थिरप्रकृतयो हि ते ॥ ११ । १९ । १ ॥

तेषामेषा साधारणा भवति—॥

"तेषाम् एषा साधारणा भवति"—अङ्गिरःप्रभृतीनाम्—॥ *

"अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥"

अङ्गिरसो नः पितरो नवगतयो नवनीतगतयो वाथर्वाणो

---

* अत्राष्टादशखण्डसमाप्तिर्यतो, न "अत उत्तरे" इत्यतः प्रागेवोचिता ॥

## भृगवः सोम्याः सोमसम्पादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति ॥ २ ॥

"अङ्गिरसो नः पितरः०(ऋ०सं० ७,६,१५,१ । य० वा० सं०१९,५०)"—इति। यमस्यार्षम्। त्रिष्टुप्॥ "अङ्गिरसः" "नः" अस्माकम् "सोम्यासः" "सोमसम्पादिनः" नित्यं "सुमतौ" "कल्याण्यां मतौ" वर्त्तन्ते। "पितरः" च "नवग्वाः" "नवगतयः" पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति, "नवनीतिगतयो वा" नवनीतं प्रति येषां मनसो गतिरिदमस्माकमिति, ते नवग्वाः। विज्ञायते हि—"स्वयं विलीनं पितृणाम्" इति। पितरश्चैवंलक्षणाः—"अथर्वाणः" च "भृगवः" च, य एते "सोमसम्पादिनः" अस्माकं "कल्याण्यां मतौ" "वयम्" अपि तेषां "सुमतौ" "कल्याण्यां मतौ" उपकारप्रवृत्तायाम्, "यज्ञियानाम्" यज्ञसम्पादिनाम् "स्याम"। अपि च—तेषां "भद्रे" "भन्दनीये" स्तुत्ये "सौमनसे" "कल्याणे मनसि" "स्याम"। "भाजनवति" वा, येन मनसा भाजयन्ति अभिमतैरर्थैः स्तोतृंस्तस्मिन् शोभने च सङ्कल्पे शोभने वा अध्यवसाये स्याम इत्यर्थः॥ ११। १९। २॥

## माध्यमिको देवगण इति नैरुक्ताः ॥ ३ ॥

"माध्यमिको देवगणः—इति नैरुक्ताः"। ऋभवः, अङ्गिरसः, भृगवः, अथर्वाणः—इति, स्तुत्युपपत्तेः, देवतापदमध्ये समाम्नानादेकैकश एषां देवगण इति नैरुक्ता मन्यन्ते॥ ११। १९। ३॥

## पितर इत्याख्यानम् ॥ ४ ॥ १९ ॥

"पितर इत्याख्यानम्"। को विशेषः? अग्न्यादिदेवतापदविपर्ययस्तद्धर्मदेवताप्रकार एवायं य एते पितरो नामत एव ऋभुसनत्कुमारादय इत्याख्यानविदः स्मरन्ति॥ असावपि मन्त्राणां विषय इत्युपेक्ष्यः॥ अपि च देवगणा एते उत पितरः? इति। कुतो विचारः? ऋभवः, अङ्गिरसः, भृगवः—इत्येवमादीनामभिधानानामृषिषु प्रसिद्धेः॥ ११। १९। ४॥

## अथाप्यृषयः स्तूयन्ते—॥

"अथापि" इदमपरं कारणमृषय एवैत इति,—यतोऽन्येऽपि "ऋषयः स्तूयन्ते"। तद्यथा—वसिष्ठाः—॥ *

"सूर्य॑स्येव व॒क्षथो॒ ज्योति॑रेषां समु॒द्रस्ये॑व महि॒मा ग॑भी॒रः।
वात॑स्येव प्रज॒वो नान्येन॒ स्तोमो॑ वसिष्ठा॒ अन्वे॑तवे वः ॥"

इति यथा ॥ १ ॥

"सूर्यस्येव वक्षथ॰ ( ऋ॰ सं॰ ५,३,२३,३)"—इति । इन्द्रस्यार्षम् ॥ "सूर्यस्येव ज्योतिः" यथा सूर्यस्य दीप्तिरवभासिकार्थानाम्, एवम् "एषाम्" वसिष्ठानां "वक्षथः" वचनस्य दीप्तिः अधिदेवादिगतानामर्थानामसन्देहेनावभासिका वाच्येऽर्थे । अपि च न केवलमेषामसन्दिग्धार्थानि वचांसि,—गम्भीराणि च, महार्थवन्ति गम्भीरार्थतया दुरवगाहानि । यत आह—"समुद्रस्येव महिमा गभीरः" । यथा उदकमपरिमेयं समुद्रे, एवमपरिमेयार्थानि । सत्यपि च महार्थत्वे नैते विलम्बितस्तुतयः, किं तर्हि ? "वातस्येव प्रजवः" । प्रकृष्टो जव आशुप्रतिपत्तिः तुष्टूषतां वर्णपदवाक्येषु निर्मलमनोवाग्वृत्ती शब्दार्थावसङ्गेन प्रतिपद्येते । अपि चैवमतिमहानुभावा एते, नैतेषामन्यस्तोता वचनपदवीमनुगन्तुं शक्तः । यतो ब्रवीमि—"नान्येन" केनचित् स्तोत्रा, हे "वसिष्ठाः।" प्रत्यक्षीकृत्योत्तरेण पादेन ब्रवीति—एषः "स्तोमः" इयं स्तुतिः, भावत्की, असन्दिग्धार्था, गम्भीरा, अविलम्बिता च ।"न अन्येन अन्वेतवे" नानुगन्तुमन्यने शक्या, क एनामनुकरिष्यतीति स्तुतिपरितुष्ट इन्द्रो वसिष्ठानस्तौत् ॥

एवमृषयोऽपि स्तूयन्ते इति प्रदर्शनमप्यस्तीति मन्त्राणां विषय इति ॥

अपरे पुनः—"सूर्यस्येव वक्षथः" । सूर्यतेजःसमानदीप्तोरस एते वसिष्ठाः तेजस्विनः, समुद्रोपमगम्भीरस्वभावाश्च, शीघ्रगतयश्च, सर्वत्राप्रतिहतजवाः, न तेषामन्येन गतिरनुगन्तुं शक्येति वर्णयन्ति ॥ ११ । २० । १ ॥

## आप्त्याः ॥ १५ ॥

## आप्त्या आप्नोतेः ॥ २ ॥ २० ॥

"अप्त्याः(१५)"अपीन्द्रसहचारिण ऋषयः,एकतद्वितत्रिताः, ते इन्द्रेण सह चेरुरिति विज्ञायते । ऋभ्वादयोऽप्येतस्मादेव दर्शनादपिपक्षे मध्यस्थानाः । ते कस्मात् ? "आप्नोतेः" आप्नुवन्ति हि ते स्तुतिभिः स्तुत्यान् ॥ ११ । २० । २ ॥

* अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा "अथापि" इत्यतः प्रागेवोचिता ॥

तेषामेष निपातो भवत्यैन्द्र्यामृचि--॥

"तेषाम् एषः निपातः भवति ऐन्द्र्याम् ऋचि" इन्द्रो यस्यां स्तूयते, तस्यामृचि--॥*

"स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्तदानून्प्रसाक्षते प्रतिमानानि भूरि॥"

स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामादृणाति यः शवसा बलेन सप्त दातॄनिति वा सप्त दानवानिति वा प्रसाक्षते प्रतिमानानि बहूनि ॥ १ ॥

"स्तुषेय्यं पुरुवर्पस॰ (ऋ॰सं॰८,७,२,१)"--इति । बृहद्दिवस्यार्षम् । महाव्रते विनियोगः॥ "स्तुषेय्यम्" "स्तोतव्यम्" अहं स्तौमि इन्द्रम्। किंलक्षणम्? "पुरुवर्पसम्" "बहुरूपम्" "ऋभ्वम्" "उरुभूतम्" "इनतमम्" "ईश्वरतमम्" 'आप्त्यम् आप्त्यानां' ऋषीणां स्तुतिभिः अतिशयेन "आप्तव्यम्" "आदर्षते" "आदृणाति" यः "शवसा" "बलेन" आदारयति । किम्? "सप्तदानून्" "सप्त दातन्" मेघान्, असुरान् वा "दानवान्" नमुचिप्रभृतीन् । पृथक्त्वपक्षे--केन ? "शवसा" बलेन आदारयति । "प्रसाक्षते" च, य आप्नोति अभिभवति च "प्रतिमानानि" "भूरि" "बहूनि" अपि। तदुक्तम्--"यैरेनं प्रतिमिमते,नैनं तानि दभ्नुवन्तीति","न त्वा केता आदभ्नुवन्ति भूर्णयः (ऋ॰ सं॰ १, ४, २०, २)"--इति च ॥ ११ । २१ । १ ॥

साक्षतिराप्नोतिकर्मा ॥ २ ॥ २१ ॥

"साक्षतिः आप्नोतिकर्मा" ॥ ११ । २१ । २ ॥ *

अथातो मध्यस्थानाः स्त्रियः ॥ १ ॥

"अथ अतः मध्यस्थानाः स्त्रियः"। बहुवचनविशिष्टस्य मध्यमस्य गणशोऽवस्थितस्य विभवो व्याख्याताः । लिङ्गविशिष्टस्येदानीं यथासमाम्नायमेव व्याख्यातव्यः, तदर्थं पुनर्विशेषतोऽधिकारवचनम् अथातः--इति । मध्यमासां स्थानमिति मध्यस्थानाः--इति।काः पुनः ताः ? स्त्रियः इति, वक्ष्यन्ते इति शेषः ॥ ११ । २२ । १ ॥

---

* अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेष निपातः" इत्यतः प्रागुचिता ॥

* अत्रैकविंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तावेकादशा-(षोडशा)ऽध्यायस्य द्वितीयः पादः ॥ ११, २ ॥" इत्यपि समुपलभ्यते ॥

आदितिः ॥ १६ ॥

तासामदितिः प्रथमागामिनी भवति ॥

अदितिर्व्याख्याता ॥ २ ॥ २२ ॥

"तासाम् अदितिः प्रथमागामिनी भवति"। सा कस्मात् ? उक्तं हि—"अदीना देवमाता" ( ४ । २२ । २ )—इति ॥ ११ । २२ । २ ॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"दक्षस्य वादिते जन्मनि व्रते राजाना मित्रा वरुणा विवाससि।
अतूर्त्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु॥"

दक्षस्य वादिते जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि ॥

विवासतिः परिचर्यायाम्॥ "हविष्माँ आविवासति" इत्याशास्तेर्वा, अतूर्त्तपन्था अत्वरमाणपन्था बहुरथो अर्यमादित्योऽरीन्नियच्छति, सप्तहोता सप्तास्मै रश्मयो रसानभिसन्नामयन्ति, सप्तैनमृषयः स्तुवन्तीति वा विषमरूपेषु जन्मसु कर्मसूदयेषु ॥ १ ॥

"दक्षस्य वादिते० ( ऋ० सं० ८, २, ५, ६ )"—इति । गयस्यार्षम् । वैश्वदेवे शस्यते । अहोरात्रे मित्रावरुणौ, तयोर्या सन्धिवेला, तस्यां प्रथममवश्यायरसानुप्रदानसम्बन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते—"दक्षस्य वादिते०"—इति । 'वा'—शब्दः किमर्थः ? यदा दक्ष आदित्यः, त्वत्तो जातः, त्वं वा आदित्यात्, सन्धिवेलानन्तरं ह्यादित्यस्योदयो जन्म, तदेवास्य व्रतं कर्म । तदुक्तम्—"कर्मजन्मानः"

---

* अत्र द्वाविंशखण्डसमाप्तिर्दृश्यते, सा 'तस्या एषा भवति" इत्यतः प्रागेवोचिता ॥

इति। अथ तदेवं "दक्षस्य" "जन्मनि" उदये चार्द्धवर्त्तिन्यादित्ये, यतो वा लब्धात्मिकात्वम्। अप्यहोरात्रे उभे "विवाससि" परिचरसि, सर्वतो व्याप्नोषि, अर्द्धेनाहर्व्याप्नोषि मित्रम्, अर्द्धेन च रात्रिं वरुणम्। "राजानौ" सर्वलोकेश्वरौ, स्वाधिकारयुक्तास्वितिकर्त्तव्यातासु, तदधीनत्वात् प्रवृत्तेरिति। किंलक्षणो यो दक्षः तस्य जन्मनि? इति, यत आह—"अतूर्त्तपन्थाः" योऽयमादित्यः "अत्वरमाणपन्थाः" अत्वरमाणः पथि वर्त्तते, नियतगतिः प्रतिमुहूर्त्तं प्रत्यहं च। "पुरुरथः" बहुरंहणः। "अर्यमा" अरीणां तमसां नियन्ता। "सप्तहोता" "सप्तास्मै रश्मयः रसानभिसन्नामयन्ति" तदस्य सप्तहोतृत्वम्, "सप्तैनमृषयः" आह्वयन्ति नमन्ति,—"स्तुवन्ति" वसिष्ठाद्याः, तद्वास्य सप्तहोतृत्वम्। "विषुरूपेषु जन्मसु" "विषमरूपेषु" अन्यस्मिंश्चान्यस्मिंश्च नभसः प्रदेशे अयमुदेति, मण्डलान्तरं मण्डलान्तरं हित्वा दक्षिणोत्तरायणयोस्तदस्य विषमरूपत्वं विषमजन्मता, ततो लब्धात्मिका तं वा जनयन्ती। या त्वमेतौ मित्रावरुणौ परिचरसि, सा त्वमिदं नामास्माकं कुरुष्वेत्येतदाशास्महे— इति समस्तार्थः॥

अथवा—"दक्षस्य वा" यदा दक्षस्त्वत्तो जातः, "व्रते" च "कर्मणि" प्रवृत्तः। स्वाधिकारयुक्तोऽयम् "अतूर्त्तपन्थाः" "पुरुरथो॰ जन्मसु"। य एष वर्त्तते भगवानादित्यः। अथ तदा मित्रावरुणौ विवासस्याशास्से— ममैतावपि पुत्रत्वे लोकोपकारित्वेन सम्यग्वर्त्तेयातां यथैष दक्ष इत्यैतिहासिकपक्षे योजना॥

"विवासतिः परिचर्यायाम्"—इत्यत्र निगमः—"हविष्माँ आविवासति ( ऋ॰ सं॰ १, १, २३, ३, )"—इति।

"यो अग्निं देववीतये हविष्माँ आविवासति।
तस्मै पावक मृळय॥ ( ऋ॰ सं॰ १, १, २३, ३) "—इति।

मेधातिथेरार्षम्। गार्हपत्यानुगमने पूर्णाहुतिरनया हूयते॥ हे 'पावक!' अग्ने! 'देववीतये' देवभोजनाय "हविष्मान्" हविःसम्प्रयुक्तोयस्त्वाम् "आविवासति" परिचरति, तस्मै 'मृडय' उपदयां रक्षां कुर्वित्येतदा शास्महे॥ ११। २३। १॥

## आदित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतः॥ २॥

"आदित्यो दक्ष इत्याहुः" देवतासतत्त्वविदः। केन दर्शनेन? "आदित्यमध्ये च स्तुतः"। च-शब्दो हेत्वर्थः, यस्मादादित्यमध्ये स्तुतः॥ स्तुतिप्रामाणिका हि ते देवतासतत्त्वचिन्तां प्रति॥ कथमादित्यमध्ये स्तुतः? इति—"इमा गिरः"—इत्युपक्रम्य ब्रवीति—"तुविजातो वरुणो दक्षो अंशः ( ऋ॰ सं॰ २, ७, ६, १ )"—इति आदित्यमध्ये स्तुतः आदित्य एवासौ इति॥ ११। २३। २॥

अदितिर्दाक्षायणी ।

"अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्व्दि॑ति॒ः परि॑ ॥" इति च ॥

तत्कथमुपपद्येत समानजन्मानौ स्यातामिति ॥ ३ ॥

यद्येवं—नन्विदमपरं विरुध्यते—यदैतिहासिका आहुः—"अदितिर्दाक्षायणी"—इति । उभयमपि चैतस्मिन्निगमे श्रूयते—आदित्यो दक्षो दाक्षायण्यदितिरिति । तद्यथा—

"अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑ति॒ः परि॑ ।

भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त (ऋ०सं० ८, ३,१, ४)"—इति ।

अदितेर्दाक्षायण्या आर्षम् ॥ उत्तानपाद्राजा कश्चिद् यः पुराणेऽपि स्मर्यते,ततस्तावद्भू-र्नाम कश्चिज्जज्ञे । ततोऽपि 'भुवः' 'आशाः' दिशः 'अजायन्त' दिक्प्रजननभाव-मसौ कथमपि बिभर्त्ति,देवताजन्मप्रतिक्रियया वा । "अदितेर्दक्षः" "अजायत" प्रादुर्ब-भूव । "दक्षात्" "उ" च "परि" अधि सकाशात् "अदितिः" प्रादुर्बभूव ॥

"तत्" इतरेतरविरुद्धं "कथमुपपद्येत" ? यतः प्रतिसमाधानं ब्रवीति—"समानज-न्मानौ स्यातामिति" । समनन्तरजन्मानौ समानजन्मानौ यथोपवर्णितं मन्त्रे "दक्षस्य वादिते"—इत्यत्र ॥ ११ । २३ । ३ ॥

अपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती ॥ ४ ॥

"अपि वा देवधर्मेण" महदात्मना अदितिमपेक्ष्य तस्याः कारणत्वं च कार्य-त्वं च दक्षस्य, अथवा—महदात्मना दक्षमपेक्ष्यादितेः कार्यत्वम् । एवं कृत्वोक्तम्—"इतरेतरजन्मानौ"—"इतरेतरप्रकृती" इति ॥ ११ । २३ । ४ ॥

अग्निरप्यदितिरुच्यते ॥ ५ ॥ २३ ॥

अधुना व्यभिचारं दर्शयति—"अग्निरप्यदितिरुच्यते"—इति ॥ ११ । २३ । ५ ॥

तस्यैषा भवति—॥

"तस्य" अग्नेरदितिशब्दवाच्यत्वे "एषा भवति"—॥ *

"यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽनागा॒स्त्वम॑दिते स॒र्वता॑ता ।

यम्भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म ॥"

यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु कर्मततिषु ।

* अत्र त्रयोविंशखण्डसमाप्तिर्दृश्यते, सा "तस्याग्नेरदिति—"इत्यतः प्रागेवोचिता॥

आग आङ्पूर्वाद्गमेः ।

एन एतेः ।

किल्बिषं किल्भिदं सुकृतकर्मणो भयं कीर्तिमस्य भिनत्तीति वा । यं भद्रेण शवसा बलेन चोदयसि प्रजावता च राधसा धनेन ते वयमिह स्यामेति ॥ १ ॥

"यस्मै त्वं सुद्रविणो० ( ऋ० सं० १, ६, ३२, ५ )"–इति । कुत्सस्यार्षम् । प्रातरनुवाके विनियोगः ॥ हे "सुद्रविणः" सुधन ! "अदिते !" अग्ने ! "यस्मै" "त्वं" "ददाशः" "ददासि" । किम् ? इति–"अनागास्त्वम्" "अनपराध ! त्वं" "सर्वताता" "सर्वासु कर्मततिषु" इष्टिपशुसोमलक्षणासु अवैगुण्यं करोषि । "यं" च "भद्रेण" "शवसा" "बलेन" स्वजात्यविरोधिना, "प्रजावता" च "राधसा" प्रजासंयुक्तेन च धनेन त्वं "चोदयासि" "चोदयसि" अनुगृह्णासि । ते वयमेवानुगृह्यास्तव "स्याम"–इत्येतदाशास्महे ॥

"आगः आङ्पूर्वाद्गमेः" अवश्यमेवैतदागच्छति कर्त्तारमित्यागः ॥

प्रसङ्गादाह–"एनः एतेः" । तदप्येत्रमेवावश्यमेवैति ।

यदेतत् "किल्बिषम्" एतत् "कीर्तिं भिनत्ति" ॥ ११ । २४ । १ ॥

सरमा ॥ १७ ॥

सरमा सरणात् ॥ २ ॥ २४ ॥

"सरमा(१७)"देवशुनीत्यैतिहासिकपक्षेण, माध्यमिका वाक् नैरुक्तपक्षेण, सा कस्मात् ? "सरणात्" गमनात् ॥ ११ । २४ । २ ॥

तस्या एषा भवति–॥

"तस्या एषा भवति"–॥ *

"किमिच्छन्ती सरमा प्रेदमानड्दूरे ह्यध्वा जगुरिः पराचैः । कास्मे हितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥"

किमिच्छन्ती सरमेदं प्रानड् दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः

---

* अत्र चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

पराञ्चैनैरचितः का तवास्मास्वर्थहितिरासीत् किं परितक्नम् । परितक्म्या रात्रिः परित एनां तक्म । तक्मेत्युष्णनाम तकत इति सतः।कथं रसाया अतरः पयांसीति। रसा नदी रसतेः शब्दकर्मणः । कथं रसानि तान्युदकानीति वा ।

देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानम्॥ १ ॥

"किमिच्छन्ती० ( ऋ० सं० ८, ६, ५, १ )"—इति । देवपणयः किलासुराः देवगवीरपजह्रुः । ततः किलेन्द्रस्तदन्वेषणाय तदार्थं सरमां प्राहिणोत् । ते च देवपणयः तां दृष्ट्वा पप्रच्छुरनयर्चा—"किमिच्छन्ती सरमा"—इति । "इदम्" अस्मन्निवासस्थानं सरमा "किमिच्छन्ती" किमस्मत्तः प्रार्थयन्ती "प्रानट्" प्राप्तवती ? कदाचिदप्यनागतपूर्वेति । अपि च "दूरे ह्यध्वा" महदेतदध्वानं न यदृच्छया शक्यमागन्तुम्, य एव "जगुरिः" स्यात् भृशङ्गन्ता, स एव शक्त आगन्तुम् । "पराचैः" "पराञ्चैनैरचितः" पराङ्मुखैः अञ्चनैर्गमनैः आचितो गतः, विप्रकृष्टो देवनिवासात् । यतो ब्रूमः[1]—हे सरमे ! "कास्से हितिः" "का तव अस्मास्वर्थहितिः" अर्थस्याभिधानम् ? कोऽस्मत्तोऽर्थस्तव प्राप्तव्योऽभिप्रेत आसीद् ? येनायमतिमहानध्वा व्यवसित आगन्तुम् । अपि च "का परितक्म्यासीत्" "किं परितकनम्" ? अपि नाम सुखा रात्रिः अनन्तरा तवासीत् "परितक्म्या रात्रिः" । "तक्मेत्युष्णनाम" । तकतेर्गत्यर्थस्य, सर्वतो हि तद् गतं भवति । तदेनामुभयतः परिगृह्य वर्त्तते इति परितक्म्या रात्रिः । अपि च "कथं रसाया अतरः पयांसि" । "रसा" नाम "नदी" अध्यर्धयोजनाविस्तारा, तस्याः पयांस्यतिदुस्तराणि कथमतरः कथं तीर्णवत्यसि ? अथवा—"कथं रसानि तान्युदकानि" अपि नाम स्वादूनि, अपि श्रान्तायास्तवान्तरावासाः केष्वासन्निति ॥

"देवशुनीन्द्रेण प्रहिता"—इति निदानप्रख्यापनं मन्त्रार्थाभिव्यक्तये । "समूदे" संवादं कृतवतीत्यर्थः । इत्याख्यानविदः एवं मन्यन्ते ॥

वाक्पक्षे तु चिरकालीनवृष्टिव्युपरमे कदाचिदभिनवमेघसंप्लवे सहसैव स्तनयित्नुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामसूयन्निव ब्रवीति—"किमि-

[1] 'ब्रूमः' ॥

-च्छन्ती सरमा"–इति । इदमस्मच्छ्रोत्रं चिरमनागम्य "सरमा" माध्यमिका वाक् "किमिच्छन्ती" "प्रानट्" प्राप्तवती ? अपि च "दूरे हि अध्वा" चिरकालश्रुतेयमस्माभिः "जगुरिः" भृशं यो गन्ता स्यात्, स चिरविच्छिन्नमेतद्वर्षवर्त्म पुनरागच्छेत्सन्तनुयात् "पराचैः" "पराङ्मुखैः",–एतदचिन्त्यं चिरनष्टामित्यर्थः । अपि च "कास्मेहितिः" किमस्मास्वर्थाभिधानमासीत् ? पूर्वं तव हे सरमे ! येनागमः, किं वा न जातं येनापुनरागमः । अपि च चिरप्रोषितायास्तव किं परितकनमासीत् ? अन्तरिक्षनद्या अपि महत्या "रसायाः" "कथमतरः पयांसि" कथमतिबहून्युदकानि संक्षोभ्यात्मानं प्रति लब्धवत्यसि ? इति वा, "वाग्वै सरमा"–इति हि विज्ञायते ॥ ११ । २५ । १ ॥

## सरस्वती ॥ १८ ॥

### सरस्वती व्याख्याता ॥ २ ॥ २५ ॥

"सरस्वती ( १८ )" "व्याख्याता"–"नदीवत् ( २ । २३ । १ )"–इति "तद्यदेवतावत् ( २ । २३ । १ )"–इत्युक्तमिदं तत् ॥ ११ । २५ । २ ॥

### तस्या एषा भवति–॥

"तस्या एषा भवति"–॥ *

**"पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
**यज्ञं वष्टु धियावसुः ॥"**

**पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः ॥ १ ॥ २६ ॥**

"पावका नः सरस्वती० ( ऋ० सं० १, १, ६, ४ । य० वा० सं० २०, ८४ )"–इति । मधुच्छन्दस आर्षम् । प्रउगे विनियोगः, सारस्वते च हविषि ॥ "पावका" प्रक्षारयन्त्युदकेन । का पुनरसौ ? इति–"सरस्वती" माध्यमिका वाक् । "वाजेभिर्वाजिनीवती" । अन्नेन, हविषोदकेन वा, तद्वती । "यज्ञम्" एतमस्माकम्, "वाजेभिः" "अन्नैः" युक्तं "वष्टु" कामयताम् । अथवा–ऋगादिभावमापन्ना देवान् प्रति वहतु, वक्ष्यति हि–"तां विश्वरूपाः पशवो वदन्ति"–इति । "धियावसुः" कर्मधना ॥ ११ । २६ । १ ॥

---

* अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

## तस्या एषापरा भवति—॥

"तस्या एषा अपरा भवति"—स्फुटतरोदकलिङ्गा—॥*

"म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ ।
धियो॒ विश्वा॒ वि रा॑जति ॥"

महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभि विराजति ॥ १ ॥

"म॒हो अर्णः॒ सर॑स्वती० (ऋ० सं० १, १, ६, ६)"—इति । पूर्ववदार्षे विनियोगश्च ॥ "महो अर्णः" महदुदकं "सरस्वती" माध्यमिका वाक्, किं करोति ? "प्रचेतयति" "प्रज्ञापयति" आविष्करोति वर्षभावेन । केन पुनराविष्करोति ? "केतुना" स्वेन "कर्मणा, प्रज्ञया वा" नं ह्यप्रज्ञानवत्यबलिष्ठा चैतच्छक्ता कर्त्तुम् । एवं चोदकमाविष्कुर्वन्ती "धियो विश्वा विराजति" । "सर्वाणि प्रज्ञानान्यभिविराजति" । कथम् ? उदकादन्नम्, अन्नात्प्रज्ञानमित्येवं सर्वप्रज्ञानानामसावीष्ट इति ॥ ११ । २७ । १ ॥

## वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते ॥ २ ॥

"वाक् अर्थेषु विधीयते"—इत्युपपत्तिवचनम् । के पुनर्वाचोऽर्थाः ? "चर्तस्र ऊर्जं दुदुहे पयांसि"—इत्येवमादयः, उदकाधिकारलक्षणाः । तेष्वियमपि सरस्वती विधीयते "महो अर्णः"—इत्येवमादिषु । "तस्मान्माध्यमिकां वाचं मन्यन्ते" नैरुक्ताः ॥ ११ । २७ । २ ॥

## वाक् ॥ १९ ॥

## वाग्व्याख्याता ॥ ३ ॥ २७ ॥

"वाग् (१९)" वक्तव्या । सा पुनः "व्याख्याता"="वचेः (२ । २३ १)"—इति ॥ ११ । २७ । ३ ॥

## तस्या एषा भवति—॥

"तस्या एषा भवति"— ॥ *

---

* अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा" इत्यतः प्रागुचिता ॥
* अत्र सप्तविंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

**"यद्वाग्वद॑न्त्यविचेत॒नानि॒ राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा ।**
**चत॑स्र॒ ऊर्जं॑ दुदुह्रे॒ पयां॑सि॒ क्व॑ स्विदस्याः प॒र॒मञ्ज॑गाम ॥"**
**यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगामेति यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा ॥ १ ॥ २८ ॥**

"यद्वाग्वद॑न्त्य॰ ( ऋ॰ सं॰ ६, ७, ५, ४ )"—इति । नेमस्यार्षम् । सारस्वते पशौ विनियोगः ॥ यदा माध्यमिका "वाग्वदन्ती" निर्वचयन्ती । कानि ? "अविचेतनानि" "अविज्ञातार्थानि" शब्दरूपाणि स्तनयित्नुलक्षणानि । "राष्ट्री" ईश्वरा, या माध्यमिकानां, देवतानाम् । "निषसाद" निषीदति, व्यापृणोति आत्मानं वर्षकर्मणि । "मन्द्रा" "मदना" हर्षकरी, तर्पयित्री वा लोकस्य । अथ तदा किम् ? इति—"चतस्र ऊर्जं दुदुहे पयांसि"। चतस्रः दिशः प्रत्यनुदिशश्च दुदुहे दुग्धे, प्रक्षरति,—ऊर्जम् अन्नं पयांसि उदकानि । तेषां च पयसां "क्व स्विदस्याः परमं जगाम" । क्वैतानि निष्पाद्यौषधीर्गच्छन्ति ? कुतो वा प्रतिसंवत्सरं पुनरागच्छन्तीति ? कस्तत्त्वं "जगाम" जजान । यानि पृथिव्यामवतिष्ठन्ते, यानि मादित्यरश्मयो हरन्तीति । एवमनुपक्षीणपयस्केयमिति श्रूयते ॥ ११ । २८ । १ ॥

**तस्या एषापरा भवति—॥**

"तस्या एषा अपरा भवति"—( सा पुनः किमर्थम् ? इयमेव वाक् सर्वप्राण्यन्तर्गता माध्यमिका सर्वार्थाभिवादिनी भवतीति विभूत्युपप्रदर्शनार्थम् )—॥*

**"दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।**
**सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥"**
**देवीं वाचमजनयन्त देवास्तां सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च, सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता ॥ १ ॥**

---

* अत्राष्टाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषापरा भवति" इत्यतः प्रागुचिता ॥

"देवीं वाचमजनयंत० (ऋ० सं० ६, ७, ५, ५)"—इति । तदेवार्षम् ॥ "देवीं" दात्रीमुदकानाम्, यां "वाचम्" 'अजनयन्त' माध्यमिकाः "देवाः" "ताम्" एवैतां यथाभिमतार्थाभिधायिकां "विश्वरूपाः" "सर्वरूपाः" "पशवो वदन्ति" तत्पूर्वकत्वाद्वाक्प्रवृत्तेः, "व्यक्तवाचश्चाव्यक्तवाचश्च" व्यक्तवाचो मनुष्यादयः, अव्यक्तवाचो गवादयः । यैवं सर्वपशुभिरुच्यते, "सा नः" सास्माकं "मन्द्रा" "मदना" "इषम्" "अन्नम्" पयोघृतादिरूपम्, "रसं च" "ऊर्जं च" "दुहाना" प्रक्षरन्ती । "धेनुः" तर्पयित्री "वाग्" "अस्मानुपैतु" "सुष्टुता" सुष्टु स्तुता—इत्येतदाशास्महे ॥ ११ । २९ । १ ॥

**अनुमती राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायते ॥ २ ॥**

"अनुमतिः (२०)" "राका (२१)"—"इति देवपत्न्यौ इति नैरुक्ताः" । सहपदयोरुपन्यासस्तुल्योऽनयोरभिधेयविचार इति । मध्यस्थाने देवपत्न्याविति निर्ज्ञाते तदभिधाने इति नैरुक्ताः । "पौर्णमास्यौ—इति याज्ञिकाः" । ते च ब्राह्मणमुदाहरन्ति—"या पूर्वा पौर्णमासी"—इत्येवमादि । कालाधिदैवते चन्द्रसहचारिण्याविति मध्यस्थाने । पौर्णमास्यमावास्ययोर्नक्षत्रेष्टकामध्य उपधानान्नक्षत्रत्वमतश्च प्रदर्शनात् सर्व एवायं ज्योतिर्गणो ग्रहनक्षत्रतारकारूपो रसप्रायो मूर्त्तिमाप्नुवन्मध्यस्थान एवेति लक्ष्यते ॥ ११ । २९ । २ ॥

## अनुमतिः ॥ २० ॥

**अनुमतिरनुमननात् ॥ ३ ॥ २९ ॥**

"अनुमतिः (२०)" "अनुमननात्" । अनुमता किलेयमृषिभिर्देवैश्च चतुर्दशके पक्षे अस्त्वियं पौर्णमासीति ॥ ११ । २९ । ३ ॥

**तस्या एषा भवति--॥**

"तस्या एषा भवति"—॥ *

**"अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।**
**क्रत्वे दक्षाय नो हिनु प्रण आयूंषि तारिषः ॥"**

*अत्रैकोनत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्द्धय च न आयुः ॥ १ ॥

"अन्विदनुमते॰ (य॰ वा॰ सं॰ ३४, ८)"—इति। वामदेवस्यार्षम्। देविकासु विनियोगः॥ हे "अनुमते" "त्वम्" "अनुमन्यासै" "अनुमन्यस्व" अस्माकम् यदनुमन्तव्यं त्वया। "शं च नस्कृधि", "सुखं च" अस्माकं "कुरु"। "इषम्" "अन्नं च" अस्माकं "तोकाय" "अपत्याय" "धेहि"। "आयूंषि" च "नः" "प्रतारिषः" अतीर्णानि कुरु "प्रवर्द्धय"—इत्येतदाशास्महे॥ ११। ३०। १॥

## राका ॥ २१ ॥

राका रातेर्दानकर्मणः ॥ २ ॥ ३० ॥

सैव पौर्णमासी पञ्चदशके पक्षे "राका (२१)"—इत्युच्यते। सा पुनः कस्मात्? "रातेः दानकर्मणः" हविर्दाननिमित्तं हि सा भवति॥ ११। ३०। २॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना।
सीव्युत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम्॥"

राकामहं सुह्वानां सुष्टुत्याह्वये शृणोतु नः सुभगा बोधत्वात्मना सीव्यत्वपः प्रजननकर्म सूच्याच्छिद्यमानया। सूची सीव्यतेः। ददातु वीरं शतप्रदमुकथ्यं वक्तव्यप्रशंसम्॥ १॥

"राकामहं सुहवां॰ (ऋ॰ सं॰ २, ३, १०, ४)"—इति। गृत्समदस्यार्षम्। देविकासु विनियोगः॥ "राकाम्" "अहं" "सुहवां" "स्वाह्वानां" यस्याः शोभनमाह्वानं तां "सुष्टुती" "सुष्टुत्या" शोभनया स्तुत्या "हुवे" "आह्वये"। सा च पुनः "सुभगा" सुधनाऽस्माभिराहूयमाना "शृणोतु"। श्रुत्वा च "बोधतु" कर्त्तव्यतया तदवगच्छतु, यदपि च न ब्रूमहे तदपि "त्मना" "आत्मना" एव बुध्यताम्। अपि चेदमुच्यते—एवं "सीव्यतु अपः" सन्तनोतु "प्रजननकर्म" अस्माकं "सूच्याऽच्छि-

---

* अत्र त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता॥

१ अत्र 'स्वाह्वानाम्' इति पाठ[illegible]॥

द्यमानया" अविच्छिन्नेन प्रजासन्तानेन । न च पुनः प्रजामात्रमर्थयामहे, किं तर्हि ? "ददातु" "वीरं" पुत्रम् । किंलक्षणम् ? "शतदायं" "बहुप्रदम्" "उकथ्यम्" वक्तव्यप्रशंसम्" अपरिसमाप्तस्तुतिम् ॥ ११ । ३१ । १ ॥

**सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः ॥**

**अमावास्ये इति याज्ञिकाः ।**

**या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति विज्ञायते—॥**

"सिनीवाली (२२)"—"कुहूः (२३)"—इति पूर्ववदुपन्यासः । "अमावास्ये इति याज्ञिकाः"। तथैवं ब्राह्मणमपि चोदाहरन्ति—तथैव "पूर्वा सिनीवाली उत्तरा कुहूः"—॥

## सिनीवाली ॥ २२ ॥

**सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेः, तस्मिन्नन्नवती, वालिनी वा, वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा ॥ २ ॥ ३१ ॥**

"सिनीवाली (२२)" कस्मात् ? "सिनमन्नं भवति" । तत् कस्मात् ? सिनाति" बध्नाति "भूतानि" रसादिभिः धातुभिः । "वालम्" किमुच्यते ? "पर्व" ॥ तत्कस्मात् ? "वृणोतेः" वृण्वन्ति देवास्तत्र हवींषि । "तस्मिन्" पर्वणि, असौ सिनिनी "अन्नवती" इति सिनीवाली । अथ वोत्तरपदे विकल्पः—"वालिनी" वालैस्तद्वती, सिनिनी च सा वालिनी चेति सिनीवाली । औपमिकं वा । कथम् ? इति—"वालेनेवास्यामणुत्वाच्चन्द्रमाः" "सेवितव्यः" बोद्धव्यो "भवति"।एवमणुरसौ चन्द्रमा भवत्यस्यां येन ज्ञायते, वालेनाप्ययं सीयेत बोध्येतेति ॥ ११ ॥ ३१ । २ ॥

**तस्या एषा भवति—॥**

"तस्या एषा भवति"—॥ *

**"सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**
**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥"**

---

* अत्रैकत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

सिनीवालि पृथुजघने। स्तुकः स्त्यायतेः सङ्घातः पृथुकेशस्तुके पृथुष्टुते वा, या त्वं देवानामसि स्वसा। स्वसा सु असा स्वेषु सीदतीति वा, जुषस्व हव्यमदनं प्रजां च देवि दिश नः ॥ १ ॥

"सिनीवालि पृथुष्टुके॰ (ऋ॰ सं॰ २, ७, १५, ६, । य॰ वा॰ सं॰ ३४,१०। अथ॰ सं॰ ७, १०, २)"—इति । गृत्समदस्यार्षम् । देविकासु विनियोगः ॥ हे "सिनीवालि" "पृथुष्टुके" विस्तीर्णजघने, अथवा—"पृथुष्टुके" "पृथुकेशस्तुके" पृथुकेशकलापे, अथवा—"पृथुष्टुते"। "या" "त्वं" "देवानां" "स्वसा" भगिनी माध्यमिकानाम्। सा त्वम् "जुषस्व" आसेवस्व एतत् "हव्यम्" "आहुतम्" मर्यादया विधानतो हुतमस्माभिः। आसेव्य च "प्रजां देवि दिदिड्ढि नः" प्रजामस्माकं "दिश" अतिसृज, देहि—इत्याशास्महे ॥ ११ । ३२ । १ ॥

## कुहूः ॥ २३ ॥

कुहूर्गूहतेः। क्वाभूदिति वा, क्व सती हूयत इति वा, क्वाहुतं हविर्जुहोतीति वा ॥ २ ॥ ३२ ॥

"कुहूः (२३)" "गूहतेः" निगूहत्यसौ चन्द्रमसम्। "क्वाभूत्? इति वा" तस्यामप्रत्यक्षत्वात् वितर्क्यश्चन्द्रमा भवति क्वासावभूदस्येति। "क्व सती हूयते?—इति वा" सैवात्मना देवताभावादप्रत्यक्षात्र ज्ञायते, क्वापि सत्याहूयते इति अतो वितर्क्या भवति ॥ ११ । ३२ । २ ॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम॥"

कुहूमहं सुकृतं विदितकर्माणमस्मिन् यज्ञे सुह्वानामाह्वये, सा नो ददातु श्रवणं पितॄणां—पित्र्यं धनमिति वा, पित्र्यं

* अत्र द्वात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

यश इति वा, तस्यै ते देवि हविषा विधेमेति व्याख्यातम् ॥ १ ॥

"कुहूमहं सुवृतं० ( तै० ब्रा० ३ अष्ट० ३प्र० ११ अनु०। अथ० सं० ७,१०,५। आ० गृ० १, १० ) "–इति । देविकासु विनियोगः ॥ "कुहूम्" "अहं" "सुवृतं" "सुकृतं" शोभनानां कर्मणां कर्त्रीं, "विद्मनापसं" सर्वप्रत्यक्षकर्माणम्, "अस्मिन् यज्ञे" "सुहवां" "स्वाह्वानां" शोभनमाह्वानं यस्याः तां "जोहवीमि" "आह्वये" आह्वयामि । "सा" अस्माभिराहूतास्मिन्यज्ञे एत्य हविर्भुक्त्वा "नः" अस्माकं "ददातु" "श्रवणं" " पितॄणाम्" "पित्र्यं धनमिति वा" "पित्र्यं वा यशः" कुलोचितमित्यर्थः । प्रत्यक्षीकृत्योत्तरेण पादेनास्तौत्–यां त्वमस्माकमेतत् करोषि, "तस्यै" "ते" तुभ्यं हे "देवि !" कुहु ! "हविषा विधेम" हविर्दद्म इत्यर्थः । अथवा–तां त्वां हविषा परिचरेम इति ॥ ११ । ३३ । १ ॥

## यमी ॥ २४ ॥

यमी व्याख्याता ॥ २ ॥ ३३ ॥

"यमी( २४ )" "व्याख्याता" यमेन ( १० । १९ । १ ), लिङ्गमात्रविशेषः ॥ ११ । ३३ । २ ॥

तस्या एषा भवति–॥

"तस्या एषा भवति"–॥ *

"अन्यमू षु त्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥"

अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते, लिबुजेव वृक्षं तस्य वा त्वं मन इच्छ, स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्राम् ॥ यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम् ॥ १ ॥ ३४ ॥

---

* अत्र त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

"अन्यमू षु त्वं यम्यन्यः० ( ऋ० सं० ७, ६, ८, ४ )"—इति । यमी किल यमं चकमे भ्रातरम्, तां किल यमोऽनयर्चा प्रत्याचचक्षे ॥ कथम् ? हे "यमि !" "अन्यम् ऊ षु" "त्वम्" "अन्यमेव हि त्वम्" परिष्वजस्व मैथुनाभिप्रायेण । "लिबुजेव वृक्षम्" वल्लीव काचिद्गाढं समीपजं वृक्षम्, अन्य एव त्वां परिष्वजताम् । यस्य योग्यां त्वमनेनाभिप्रायेण परिष्वक्तुम् । "तस्य वा त्वं मन इच्छा" तस्य च त्वं मनः प्रवेष्टुमिच्छ, "स वा तव" । "अधा" अथैवमैकचित्यमुपगम्यमानेन समानेन सह "कृणुष्व" "संविदम्" सङ्कल्पादि मैथुनकार्यम् । "सुभद्रां" "कल्याणभद्राम्" । संविदमुभयलोकाविरोधिनीमित्यभिप्रायः ॥

त्रित्वपक्षे तु माध्यमिको यमो माध्यमिकां वाचमुषसमात्मानः प्रविभक्ताभिव कृत्वोभयस्थानां तां ब्रवीति—हे "यमि !" अतीतस्तेऽस्मत्परिष्वङ्गसमयः, प्रभातमिदानीम् । "लिबुजेव वृक्षं" द्युस्थानं परिष्वक्तुमिच्छ । तस्य च त्वं मनः प्रकाशमनुप्रवेष्टुमिच्छ, स च तव प्रकाशमनुप्रविशतु । अथैवमितरेतरसम्पर्कात् तेन सहैकीभूता लोकोपकाराय "कुरुष्व" परस्परं "संविदं" संवित्साधनं प्रकाशमिति ॥ ११ । ३४ । १ ॥ *

## उर्वशी ॥ २९ ॥

### उर्वशी व्याख्याता ॥ १ ॥ ३५ ॥

"उर्वशी ( २५ )"—वक्तव्या, सा पुनः "व्याख्याता" ( ५ । १३ । १ ) तदिहापि देवतायां योज्यम्,—"उर्वभ्यश्नुते" बहूदकं व्याप्नोति, "उरुर्वा वशोऽस्याः" महानस्याः काम उदके ॥ ११ । ३५ । १ ॥

### तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरते दीर्घमायुः ॥"

विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेताद्भ्योऽध्यप

---

१ 'संकल्पादि' ॥ * अत्र चतुस्त्रिंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तावेकादशा(षोडशा)ऽध्यायस्य तृतीयः पादः ॥ ११।३॥" इत्यपि तूपलभ्यते॥ * अत्र पञ्चत्रिंशखण्डसमाप्तिर्बोध्यते, स "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

इति । नर्यो मनुष्यो-नृभ्यो हितो नरापत्यमिति वा ।
सुजातः सुजाततरोऽथोर्वशी प्रवर्द्धयते दीर्घमायुः ॥ १ ॥

"विद्युन्न या पतन्ती० (ऋ०सं० ८,५,२,५)"–इति । मध्यमः पुरूरवाः त्रित्वपक्षे ब्रवीति–आत्मनो ज्योतिषः शब्दस्य च विभागमिव कृत्वा॥ "विद्युन्न" "विद्युदिव" । सम्प्रत्यर्थे वा नकारः । किम् ? इति–"या" "पतन्ती" गच्छन्त्यन्तरिक्षे मेघोदरेषु "दविद्योत्" पुनःपुनर्द्योतते पुनःपुनरात्मानं प्रति लभते॥कथम् ?"भरन्ती""हरन्ती" "मे"मम,स्वभूतानि"अप्या"आप्यानि "काम्यानि""उदकानि"अक्षरमाणानि"अन्तरिक्षलोकस्य" अधिपत्नी या उर्वशी, सा यदैवमुदकानि हरन्ती मेघेभ्यः पतन्ती भृशं स्वयं विद्योतते, "नूनं" निश्चयेन तदा "जनिष्ठः" "अपः" "अध्यपः" अधिक उदकोर्मिर्जायते, यः सर्वमिदमाच्छादयति । "नर्यः" "नृभ्यो हितः" पथ्यः सस्यसम्पत्करः, "नरापत्यमिति वा" इत्यैतिहासिकपक्षं द्योतयति । "सुजातः" "सुजाततरः" शोभनादपि शोभनतरः उदकोर्मिः । अथ तेन महतोदकोर्मिणा सस्यमभिनिष्पाद्य लोकस्यान्नसम्प्रदानद्वारेण "प्रोर्वशी तिरते" प्रतिरते "प्रवर्द्धयते" "दीर्घमायुः" ॥

ऐतिहासिकपक्षे त्वैलः पुरूरवाः उर्वश्या अप्सरसा वियुक्तो ब्रवीति–विद्युदिव या पतन्ती अद्योतत भृशं वपुष्मत्तया "भरन्ती" धारयन्ती अनेकानि स्त्रीगतानि हावभावादीनि काम्यानि वस्तूनि "मे" मम "अप्या" नित्यमाप्तव्या प्रिया । सा च पुनर्याहितगर्भा यतः अतो ब्रवीमि–जनिष्ठो अपः निश्चयेन जनिष्यते । "अध्यपः" अधिककर्मा । "नर्यः" "नृभ्यो हितः" सम्यक् परिपालयिता नराणाम् । अथवा–मम नरस्यापत्यमायुर्नाम राजा यं पुराणविदः कथयन्ति । "सुजातो" मच्छुक्रात् वीर्यवतो जातः, विशेषत उर्वश्याः क्षेत्रगुणात् सुजाततरः । तस्य वावश्यम् "उर्वशी" अस्मदसान्निध्येऽपि "प्रवर्द्धयते" तद्योग्यैः कर्मभिः "दीर्घमायुः" इति ॥ ११ । ३६ । १ ॥

## पृथिवी ॥ २६ ॥

### पृथिवी व्याख्याता ॥ २ ॥ ३६ ॥

"पृथिवी(२६)" "व्याख्याता"="अथ वै दर्शनेन पृथुः"–( १ । १४ । ५ ) इत्यत्र, इह तु माध्यमिका ॥ ११ । ३६ । २ ॥

### तस्या एषा भवति–॥

"तस्या एषा भवति"–॥ *

---

१ 'स्वर्गतानि' ॥ * अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा"तस्या एषा भवति" इत्यतः प्रागुचिता ॥

"बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥"
सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलममुत्र धारयसि पृथिवि प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वा ॥ १ ॥

"बळित्था पर्वतानां॰ (ऋ॰ सं॰ ४,४,२९,१)"—इति । अत्रेरार्षम् ॥ "बट्"—इति सत्यनाम । "इत्था"—इति अमुत्रेत्यर्थः । हे "पृथिवि" माध्यमिके ! "सत्यं" यथाभूतम्, त्वम् "अमुत्र" अमुष्मिन्नन्तरिक्षलोके वर्त्तमाना, "खिद्रं" "खेदनं" "छेदनम्" येन पर्वताः मेघांश्छेत्तुं शक्यन्ते, तद् "बलं" "बिभर्षि" "धारयसि" । हे "प्रवत्वति" "प्रवणवति" गमनवति ! "या" त्वं "भूमिं" "प्रजिनोषि" "प्रजिन्वसि" वर्षमुत्सृजन्ती, "मह्ना" "महत्त्वेन" हे "महिनि" "महति!" अथवा—"उदकवति !"। या त्वमेवं भूमिं प्रजिन्वसि, सा कथं न "मेघानां" पर्वतानां, छेदनसमर्थं बलं धारयिष्यसि ? अवश्यं धारयसीत्यभिप्रायः ॥

पृथिवि ! त्वं भूमिं प्रजिन्वसीति व्यपदेशान्मध्यस्थाना । हिरण्यनाशेष्ट्यां भौमस्यैककपालस्येयं याज्या । तत्र विज्ञायते—"अथ यद्भौमोऽस्यां हि स तदविन्दत्"—इति । तेन तत्रेयं भूमिरिज्यते, न च भूमिरस्यामृचि प्रधानत्वेन वर्त्तते, यथा चायमाचार्यो निराह । तदयमस्योदाहरणाभिप्रायः, स च विनियोगः,—इत्यविरोधोऽनयोर्मेधाविना समनुगंस्यते [१] ॥ ११ । ३७ । १ ॥

## इन्द्राणी ॥ २७ ॥

इन्द्राणीन्द्रस्य पत्नी ॥ २ ॥ ३७ ॥

"इन्द्राणी (२७)—" "इन्द्रस्य पत्नी" इन्द्रस्य विभूतिः । पृथक्त्वेन निर्ज्ञाता पौराणिकैः ॥ ११ । ३७ । २ ॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

---

१ 'समनुगम्यते' ॥ * अत्र सप्तत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

"इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नु ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥"

इन्द्राणीमासु नारिषु सुभगामहमशृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥ १ ॥ ३८ ॥

"इन्द्राणीमासु नारिषु० ( ऋ० सं० ८, ४, ३, १ )"—इति । वृषाकपेरार्षम् । पङ्क्तिः । पृष्ठयस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियोगः ॥ निर्धार्य ब्रवीति—सर्वास्वेव "आसु नारिषु" "इन्द्राणीम्" एव "अहं" "सुभगां" सौभाग्ययुक्तां लक्षणवतीम् "अश्रवम्" "अशृणवम्" । केन हेतुना ? यत आह—"न ह्यस्या अपरञ्चन" हि शब्दो हेत्वर्थः, चनेत्यप्यर्थे । यस्मादस्याः "अपरामपि" "समां" संवत्सरं प्रति न कदाचिदपि "पतिः" "म्रियते" नापि जीर्यते यथाऽन्यासां प्राकृतानां नारीणाम् । कतमः पतिः ? "विश्वस्मात्" "सर्वस्मात्" जगतो यः "इन्द्रः" "उत्तरः" योऽयमिन्द्र उद्गततरः "तमेतम्" इन्द्रमधिकृत्य "ब्रूमः"—इत्याचार्यो ब्रवीति ॥११।३८।२॥

तस्या एषाऽपरा भवति—॥

"तस्याः एषा अपरा भवति"। [ सा पुनः किमर्थम् ? ऋषिः एव वृषाकपिः प्रसिद्धः, स पुनरादित्योऽभिप्रेतो नैरुक्तानाम्, तदुपप्रदर्शनायापरामाह]—॥ *

"नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हुविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥"

नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति[1] सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥ १ ॥

"नाहमिन्द्राणि० ( ऋ० सं० ८, ४, ३, ६ )"—इति । समानो विनियोगः पूर्वया, आर्षं च ॥ इन्द्रो ब्रवीति—विभक्तामिवेन्द्राणीमात्मनः कृत्वाह । "नाहमिन्द्राणि !

---

* अत्राष्टात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा" इत्यतः प्रागुचिता ॥

[1] 'नियच्छति' ॥

वारण" "न रमे" अहं "सख्युर्वृषाकपेर्ऋते" य एष मम सखा वृषाकपिः, तस्मा- द्दते। किं योऽयमृषिर्मनुष्येषु प्रसिद्धः ? नेत्युच्यते—"यस्येदमप्यं हविः"। "अप्सु शृतम्" चरुपुरोडाशादि वा "अद्भिः संस्कृतमिति वा"। सोऽस्य मे प्रिय इष्टः सर्वेष्वपि "देवेषु" निर्द्धार्योच्यते ॥ यस्य विशेषतो "गच्छाति"। "विश्वस्मात्" "सर्व- स्मात्" अपि जगतो योऽहम् "इन्द्रः" "उत्तरः" उद्गततरः, सोऽप्यहमेवं ब्रवी- मीति ॥ ११ । ३९ । १ ॥

## गौरी ॥ २८ ॥

### गौरी रोचतेर्ज्वलतिकर्मणः ॥ २ ॥

"गौरी ( २८ )" "रोचतेः" ज्वलत्यर्थस्य। माध्यमिका वाक्, सा पुनः दीप्ति- मती ॥ ११ । ३९ । २ ॥

**अयमपीतरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति ॥ ३ ॥ ३९ ॥**

"अयमपीतरः" यो "गौरो वर्णः" सोऽपि "एतस्मादेव" रोचतेः, स हि दीप्ति- रूपत्वात् कृष्णादीनपेक्ष्य "प्रशस्यो भवति" ॥ ११ । ३९ । ३ ॥

**तस्या एषा भवति—॥**

"तस्याः एषा भवति"—॥ *

**"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतु- ष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्" ॥**

**गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन, द्विपदी मध्यमेन चादित्येन च, चतुष्पदी दिग्भिः, अष्टा- पदी दिग्भिश्चावान्तरदिग्भिश्च, नवपदी दिग्भिश्चावा- न्तरदिग्भिश्चादित्येन च; सहस्राक्षरा बहूदका परमे व्यवने ॥ १ ॥ ४० ॥**

---

* अत्रैकोनचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्राग्युचिता॥

"गौरीर्मिमाय० ( ऋ० सं० २, ३, २२, १ । अथ० सं०९, २६, २१ )"—इति । अस्यवामीये दीर्घतमस आर्षम् ॥ "गौरी" सर्वमिदं निर्मिमीते । कथम् ? "सलिलानि तक्षती" "कुर्वती" उदकपूर्वकत्वात् सर्वनिर्माणस्य । कथमुदकानि कुर्वती ? "एकपदी" "बभूवुषी" एकपदी भवति, "मध्यमेन" सहैकत्वमापन्ना,—"द्विपदी" "मध्यमेन चादित्येन च" । "चतुष्पदी" "दिग्भिः" अनपेक्ष्येन्द्रादित्यौ । "अष्टापदी" "दिग्भिश्चावान्तरदिग्भिश्च" । "नवपदी" "दिग्भिश्चावान्तरदिग्भिश्च" सह "आदित्येन च" । "सहस्राक्षरा" "बहूदका" । "परमे" "व्योमन्" "व्यवने" विभक्तानां भूतानां यत्परममवनमेकम्, सर्वभावानामविभक्त एक आत्मा, यस्तदात्मनैव भूतानां सलिलनिर्माणद्वारेण सर्वमिदं निर्मिमीते ॥ ११ । ४० । १ ॥

## तस्या एषाऽपरा भवति—॥

"तस्याः एषा अपरा भवति"—सा पुनः किमर्थम् ? इति—गौरीति गुणाभिधानम्[1] प्रसिद्धाभिधेयं छन्दसि देवतायाम्, यतः परया समर्थयति—॥ *

"तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद्विश्वमुपजीवति ॥"

तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति ॥ १ ॥

"तस्याः समुद्रा अधि विक्षरन्ति० ( ऋ० सं० २, ३, २२, २ )"—इति । अलिङ्गो मन्त्र इति चेत् ? तस्या इत्येतदेव लिङ्गमन्वादिश्यते सम्बन्धादृचोः, तस्मादलिङ्गः । "तस्याः" गौर्याः "अधि" सकाशात् "समुद्राः" मेघाः "विक्षरन्ति" "वर्षन्ति" । "तेन" उदकेन "जीवन्ति" "प्रदिशश्चतस्रः" दिक्प्रतिदिङ्निवासीनि "भूतानि" तेन[2] जीवन्ति । "ततः क्षरत्यक्षरम्" पुनःपुनः प्रतिसंवत्सरम्, तत एव क्षरत्युदकं मेघद्वारेण। "तत्" "विश्वम्" भूतजातं "उपजीवति"॥ एवं सैव सर्वोदकेशाना गौरीत्यभिप्रायः ॥

"उदकम्" "अक्षरम्"—इत्युच्यते । तत्कस्मात् ? तद्धि सर्वमिदमभिव्याप्य "क्षरति" सर्वमिदं सचराचरं सञ्चरति ॥ ११ । ४१ । १ ॥

---

१ 'समर्थयते' ॥ * अत्र चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा" इत्यतः प्रागुचिता ॥ २ 'तानि' ॥

गौः ॥ २९ ॥

गौर्व्याख्याता ॥ २ ॥ ४१ ॥

"गौः (२९)" "व्याख्याता" ( २।५ ) ॥ ११ । ४१ । २ ॥

तस्या एषा भवति–॥

"तस्याः एषा भवति"–॥ *

"गौरमीमेदनु वत्सं मिषन्तं मूर्द्धानं हिङ्ङ्कृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥"

गौरन्वमीमेद्वत्सं निमिषन्तमनिमिषन्तमादित्यमिति वा, मूर्द्धानमस्याभिहिङ्ङ्करोन्मननाय सृक्काणं सरणं घर्मं हरणमभिवावशाना मिमाति मायुं प्रप्यायते पयोभिर्मायुमिवादित्यमिति वा ॥

वागेषा माध्यमिका ॥

घर्मधुगिति याज्ञिकाः ॥ १ ॥

"गौरमीमेद० ( ऋ० सं० २, ३, २९, ३ । अथ० सं० ९, २७, ६ )"–इति दीर्घतमस आर्षम् । महाव्रते विनियोगः ॥ "गौः" "माध्यमिका वाक्" "वत्सम्" पुत्रम् "अन्वमीमेत्" अनुशब्दयति, महद्भिः स्तनयित्नुशब्दैः "आदित्यम्" स हि तस्या रसहरणाद् वत्सः । "मिषन्तम्" "अनिमिषन्तम्" अव्यवहितदर्शनं सर्वदा । अपि च "मूर्द्धानम्" शिरो रश्मीन् "अस्य" मध्यस्थानप्राप्तं प्राप्य । "हिङ्ङ्कृणोत्" हिङ्कारेणोपशब्दयति । "मातवै" सर्वलोकज्ञानाय । उदकानां "सृक्काणं" "सरणम्" अनवस्थायिनमादित्यम् । "घर्मं" "हरणं" रसानाम् । "अभिवावशाना" पुनःपुनः वाश्यमाना, वाशन्ती प्रतिसंवत्सरमेव "मिमाति मायुं" शब्दं करोति । "पयते" "प्रप्यायते" च प्रकर्षेण वर्द्धते "पयोभिः" उदकैः ॥

घर्मधुक्पक्षे–गौरेव "गौः" "अन्वमीमेत्" अनुशब्दयति, वत्समेव "वत्सं" "मिषन्तम्" तमेवोन्मुखं पश्यन्तम् । अपि च प्राप्य "मूर्द्धानम्" अस्य उपघ्राय हिङ्क्तियेव

---

* अत्रैकचत्वारिंशखण्डसमाप्तिर्दृश्यते,सा "तस्या एषा भवति"इत्यतः प्रागुचिता॥

शब्दं करोति । स हि गोः स्वभावः । "मातवै" कथं नामायं मां जानीयात् ममेयमिति । "सृक्काणम्" तामेव प्रत्यभिमुखं "सरणं" "घर्मं" "हरणं" पयसाम् । "अभिवावशाना" पुनःपुनर्वा [व] श्यमाना, प्रत्यहमेव शब्दं करोति, "प्रप्यायते" च "पयोभिः" वत्समस्मांश्च या वर्द्धयाति, सां नित्यमेवमस्त्विति ॥ ११ । ४२ । १ ॥

धेनुः ॥ ३० ॥

धेनुर्धयतेर्वा, धिनोतेर्वा ॥ २ ॥ ४२ ॥

"धेनुः (३०)" "धयतेः वा" धयतेऽसौ वत्सेनेति, "धिनोतेः वा" तर्पयत्यसौ उदकेन पयसा वा ॥ ११ । ४२ । २ ॥

तस्या एषा भवति—॥

"तस्याः एषा भवति"—॥ *

"उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदुषु प्रवोचम् ॥"

उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्येनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं प्रब्रवीमि ॥

वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ॥ १ ॥

"उप ह्वये सुदुघाम्० ( ऋ० सं० २, ३, १९, १ )"—इति । पूर्वयैव समानमार्षं विनियोगश्च ॥ "उप" गम्य मनसा "ह्वये" आह्वयेऽहं स्तुतिभिः । "सुदुघां" कल्याणमुदकं या दुग्धे, ताम्, "धेनुं" तर्पयित्रीं सर्वलोकस्य, "एताम्" माध्यमिकां वाचम् । "उत" "अपि च" मयैतामुपहूतां "सुहस्तः" "कल्याणहस्तः" "गोधुक्" इन्द्रः दोग्धुं प्रक्षारयतूदकानि । अमुना प्रकारेण "श्रेष्ठम्" अतिशयेन प्रशस्यमेतम्, "सवम्" उदकं "सविता" योऽयम् "अभीद्धः" "घर्मः" मध्यस्थानो विद्युदाख्यः, ... स "साविषत्" स "सनोतु" नित्यं ददात्विति तं सुष्ठु प्रब्रूमः ॥

---

* अत्र द्विचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥ १ 'सवनानाम्' ॥

घर्मधुक्पक्षे–धेनुरेव धेनुः, तामुपह्वये। "सुदुघां" सुदोहां "धेनुमेताम्" अस्मिन् कर्मणि अङ्गभावमुपगताम्। होता ब्रवीति–मया चैषमुपहूतां "सुहस्तः" "गोधुक्" अध्वर्युः अपि च दोग्ध्रेनां "श्रेष्ठम्" अतिशयेन प्रशस्यम्, एतं "सवम्" एतत् "यजुष्मत्पयः" "साविषत्" "सुनोतु" अभ्यनुजानातु "सविता"। यद्धि सवित्रा प्रसूतं क्रियते, तदेव साधु भवति। "अभीद्धः" एषः "घर्मः" दीप्तो महावीरः। तम-भिकृत्य प्रब्रूमः–"आहरैतस्मिन् पय आसेचनाय" इति ॥ ११। ४३। १ ॥

अघ्न्या ॥ ३१ ॥

अघ्न्याऽहन्तव्या भवति ॥ २ ॥

"अघ्न्या (३१)–"कस्मात्? सा हि सर्वस्यैव "अहन्तव्या भवति"॥ ११।४३।२॥

अघघ्नीति वा ॥ ३ ॥ ४३ ॥

"अघघ्नीति वा" सा हि पापं हन्ति ॥ ११। ४३। ३॥

तस्या एषा भवति–॥

यदि वाग्, यदि गौः, "तस्याः एषा भवति"–॥*

"सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥"

सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमा-चरन्ती ॥ १ ॥ ४४ ॥

"सूयवसा० (ऋ० सं० २, ३, २१, ५)"–इति। पूर्ववदार्षम्। माध्य-मिका वागुच्यते। शोभनं यवसमुदकमध्यात्मीकृत्य सूर्यात् तेन "भगवती" धनवती, उदकेन उदकवती भव। "अथ" पुनः "इदानीम्" एव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन "भगवन्तः" धनवन्तः "स्याम"। सा च पुनरेवं प्रतिसंवत्सरम् "आद्धि" "तृणं" मेघम्, तृद्यतेऽसाविति तृणः, तम्, अद्धि सञ्चूर्णय। "विश्वदानीं" "सर्वदा" यथाकालम् "पिब" "च" सूर्यरश्म्युपहृतम् "उदकम्" "आचरन्ती" आसेवन्ती, "शुद्धम्" अकलुषं सर्वतो मध्यस्थाने चरन्ती ॥

* अत्र त्रिचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "यदि वागू" इत्यतः प्रागुचिता॥

घर्मधुक्पक्षे—यवसमेव यवसम्, तज्जग्ध्वा पयस्विनी भव । वयमपि च ततः स्वत्प्रत्तेन पयसा धनवन्तः स्याम । या त्वमस्माकमेवमुपकारिणी, सा त्वं नित्यमद्धि तृणमघ्न्ये ! "विश्वदानीं" नित्यकालम्, पिब च शुद्धमकलुषमुदकमाचरन्ती आसेवन्ती आ सर्वतो यथाकाममरण्ये चरन्ती ॥ ११ । ४४ । १ ॥

## तस्या एषापरा भवति—॥

"तस्याः एषा अपरा भवति"—[सा पुनः किमर्थम् ? रूपतो हि पूर्वस्मिन्मन्त्रे घर्मधुक् सुतरामुपपद्यते, यतः परया वसुभिर्देवैः सम्बन्धात् माध्यमिकैव देवतेत्युपपादयति ]—॥*

"हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्द्धतां महते सौभगाय ॥"

इति सा निगदव्याख्याता ॥ १ ॥

"हिंकृण्वती० ( ऋ० सं० २, ३, १९, २ )"—इति । पूर्ववदार्षादि । 'हिङ्'—इत्येवं प्रकारं शब्दं स्तनयित्नु कुर्वन्ती "वसुपत्नी" वसूनामुदकानामीश्वरी । "वसूनां" वा आदित्यरश्मीनां मरुतां वा । "वत्सं" वत्स आदित्यो मध्यस्थानो वा रसहरणात् वत्सः तम्, "इच्छन्ती" "मनसा" या माध्यमिका वाक् नित्यम् "अभ्यागात्" "सेयम्" "अश्विभ्याम्" द्यावापृथिवीभ्यां सूर्याचन्द्राभ्यां वा वर्षाय "दुहां" दुग्धां प्रक्षरताम् "पयः" उदकम् । अमुना प्रकारेण प्रतिसंवत्सरं "वर्द्धताम्" उदकेनास्माकं "महते सौभगाय" यथा महत् सौभाग्यं धनवत्त्वं स्यात् तथा वर्द्धतामिति ॥ ११ । ४५ । १ ॥

## पथ्या ॥ ३२ ॥ स्वस्तिः ॥ ३३ ॥

## पथ्या स्वस्तिः-पन्था अन्तरिक्षं तन्निवासात् ॥ २ ॥ ४५ ॥

"पथ्या स्वस्तिः ( ३२–३३ )"—इति वक्तव्यम् । अत्र पूर्वपदं "पन्था अन्तरिक्षम्" "तन्निवासात्" पथ्या स्वस्तिः इत्युक्तं निर्वचनम् । यथा प्रायणीयायां यजतिप्रयोगो दृष्टः, तथा समाम्नातः—"पथ्यां स्वस्तिं पूर्वी यजति"—इति॥ ११।४५।२॥

## तस्या एषा भवति—॥

"तस्याः एषा भवति"—॥*

---

* अत्र चतुश्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा" इत्यतः प्रागुचिता ॥ १ 'पूर्वार्धे यजति' ॥ * अत्र पञ्चचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागेवोचिता ॥

"स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा॥"

स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान् गोपायत्विति देवा एनां गोपायन्त्विति वा ॥ १ ॥

"स्वस्तिरिद्धि०( ऋ० सं० ८, २, ५, ६) "—इति। वसुकर्णस्यार्षम् ॥ "इत्"—इत्यवधारणार्थे । "स्वस्तिः" "एव हि" "प्रपथे" अन्तरिक्षे "श्रेष्ठा" प्रशस्या सर्वदेवताभ्यः । "रेक्णस्वती" "धनवती" उदकेन "आभि या वाममेति" या "वननीयानि" तदुदकानि नित्यम् अभ्येति । तस्याः किम्? इति—"सा नः" सा अस्मान् "अमा" अमेति गृहनाम "गृहे" वसतः "अरणे" अरण्ये च "निर्गमने" च बहिर्गृहात् "पातु" रक्षतु । "स्वावेशा" सूपचरणा "भवतु" अस्माकम् । "देवगोपा" "देवी" चासौ "गोप्त्री" चेति देवगोपा, "देवान् गोपायत्विति, देवा एनां गोपायन्त्विति वा" । देवान् दातॄनस्मान् किं सर्वस्मात् हविषो गोपायतु, अथवा देवा माध्यमिका द्युस्थाना वा रश्मयः एनां गोपायन्त्विति वा ॥ ११। ४६। १ ॥

## उषाः ॥ ३४ ॥

उषा व्याख्याता ॥ २ ॥ ४६ ॥

"उषाः ( ३४ )" "व्याख्याता" । ( २ । १८ । ४ ) ॥ ११ । ४६ । २ ॥

तस्या एषा भवति—॥

"तस्याः एषा भवति"—॥*

"अपोषा अनसः सरत्सम्पिष्टादह बिभ्युषी ।
नियत्सीं शिश्नथद्वृषा ॥"

अपासरदुषा अनसः सम्पिष्टान्मेघाद् बिभ्युषी ।

* अत्र षट्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्राग्दर्शिता ॥

**अनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिंश्चीवरमनितेर्वा स्याज्जीवनकर्मण उपजीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद्वृषा वर्षिता मध्यमः ॥ १ । ४७ ॥**

"अपोषा अनसः सर० ( ऋ० सं० ३, ६, २० ५)"—इति । वामदेवस्यार्षम्, परा च ॥ "अपासरत्" "उषाः" अपासर्पत् । कुतः ? "अनसः" वायोः, यदा सम्पिनष्टि वायुर्मेघान् तदा तन्निवासिन्युषाः मामप्ययं हनिष्यतीति बिभ्यत्यपसरति । "नियत्सीं" "शिश्नथत्" यदा "निरशिश्नथत्" निर्जघान निर्हन्ति "वृषा" वर्षिता वायुः, तदा अपासरदुषाः ॥

"अनो वायुः" "अनितेः" धातोः प्राणनार्थस्य । "अपि वोपमार्थे स्यात्"—"अनस इव" "शकटात्" यथा शाकटिकः शकटात् केनचित् सम्पिष्यमाणादपसर्पेत्, एवं वायुना सम्पिष्यमाणान्मेघादपासरदुषाः—इति द्वितीया कल्पना ॥ ११। ४७ । १ ॥

**तस्या एषापरा भवति—॥**

"तस्याः एषा अपरा भवति"—[ सा पुनः किमर्थम् ? उत्तमापि ह्युषाः आदित्यसंश्रयाद्भवति, इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ॥ ]—॥ *

**"एतद॑स्या अनः॑ शये॒ सुसं॑म्पिष्टं॒ विपा॑श्या ।**
**ससार॑ सीं॑ परा॒वतः॑ ॥"**

**एतदस्या अन आशेते सुसम्पिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः परागताद्वा ॥ १ ॥**

"एतद॑स्या अनः॑ शये॒० ( ऋ० सं० २, ६, ३१, १ )"—इति । विशीर्णमुदकभावेन पृथिवीं संक्लेद्यावस्थितं दर्शयन् ब्रवीति मेघम्—॥ "एतत्" "अस्याः" उषसः "अनः" मेघाख्यमाश्रयभूतं "सुसम्पिष्टं" सुष्ठु सञ्चूर्णितं वायुना "इतरदिव" शकटानः । "विपाशि" छिन्नसर्वपाशबन्धनम् । "आ शये" "आशेते" आतत्य

* अत्र सप्तचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा" इत्यतः प्रागुचिता ॥

पृथिवीं शेते आस्ते। यतः सम्पिष्यमाणात् "ससार" माध्यमिका "वृषाः" "परावतः" दूराद्दूरतरं ननाशेति ॥ ११।४८।१॥

## इळा ॥ ३५ ॥

इळा व्याख्याता ॥ २ ॥ ४८ ॥

"इळा (३५)" "व्याख्याता" "ईट्टेः स्तुतिकर्मणः"—इति ॥ ११। ४८। २॥

तस्या एषा भवति—॥

"तस्या एषा भवति"—॥ *

"अभि न इळा यूथस्य माताऽस्मन्नदीभिरुर्वशी वा गृणातु।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः।
सिषक्तु न ऊर्जव्यस्य पुष्टेः॥"

अभिगृणातु न इळा यूथस्य माता सर्वस्य माताऽस्मदभि-नदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणा-नाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य मनुष्यस्य[1] ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टे ॥ १ ॥

"अभि नु इळा० (ऋ० सं० ४, २, १६, ४—५। अथवा—५, ३, ९, १९-२०)"—इति। अत्रेरार्षम्। शक्करी॥ "अभिगृणातु" अभिशब्दयत्वस्मान्। कासौ? "इळा"। किंलक्षणा? "यूथस्य माता" मेघयूथस्य निर्मात्री मध्यमा। केनाभिगृणातु? "नदीभिः" नदनाभिरद्भिः। "उर्वशी वा" उर्वशीति वा योच्यते, इडेति वा, सा "गृणातु" "नः" अस्मानिति अभिस्तनयतु। "उर्वशी वा बृहद्दिवा गृणाना"। उपमार्थे वा वाशब्दः भेदापेक्षया, उर्वशीव बृहत् महत् गृणातु, दिवा द्योतनवता विद्युत्सहितेनोदकसमूहेन, गृणाना शब्दयन्ती। "अभ्यूर्ण्वाना" सर्वमिदमभिप्रच्छाद-यन्ती, "प्रभृथस्य" "प्रभृतस्य" प्रकर्षेण सम्भृतस्य, "आयोः" "अयनस्य"

* अत्राऽष्टचत्वारिंशखण्डसमाप्तिर्दृश्यते,सा"तस्या एषा भवति"इत्यतः प्रागुचिता॥
१ 'मनुष्यस्यमनुष्यस्य'—इति तु मुद्रितमासीत्—मूलपुस्तकेषु सर्वेषु सकृदेव 'मनुष्यस्य'इत्युपल-भ्यते॥

गमनशीलस्य "उदकस्य" समूहेन "सिषक्तु" "सेवताम्" "नः" अस्मान् "ऊर्जव्यस्य पुष्टेः" यवादेः "अन्नस्य" पोषणाय ॥ ११ । ४९ । १ ॥

## रोदसी ॥ ३६ ॥

## इति षट्त्रिंशत्पदानि ॥ ५ ॥

**रोदसी रुद्रस्य पत्नी ॥ २ ॥ ४९ ॥**

"रोदसी ( ३६ )"—"रुद्रस्य पत्नी" रुद्रस्य विभूतिः ॥ ११ । ४९ । २ ॥

**तस्या एषा भवति—॥**

"तस्याः एषा भवति"—॥ +

**"रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।**
**आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥"**

**रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसीरोदसी ॥ १ ॥ ५० ॥**

"रथं नु मारुतं० ( ऋ० सं० ४, ३, २०, ३ )"—इति । श्यावाश्वस्यार्षम् । आग्निमारुते विनियोगः । स्तोता ब्रवीति—॥ "नु" "क्षिप्रम्" "वयं" "रथम्" "आहुवामहे" "आह्वयामहे" । "मारुतं"[च]मरुत्संयुक्तम् "श्रवस्युम्" "श्रवणीयं" यशस्विनम् । यस्मिन् किम् ? इति—"आ यस्मिन् तस्थौ" यस्मिन्नातिष्ठति, रंहणे गमने "रोदसी" "सचा" सह "मरुत्सु" "मरुद्भिः" सहिता मरुद्भिः रोदसी । किम् ? इति—"सुरणानि" "सुष्ठु रमणीयानि" "उदकानि" "बिभ्रती" धारयन्त्यातिष्ठति—इति । तं वयं मेघं रथमाह्वयामहे वर्षार्थमिति ॥ ११ । ५० । १ ॥ * .

---

+अत्रैकोनपञ्चाशखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

* अत्र पञ्चाशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तावेकादशा-( षोडशा )ऽध्यायस्य चतुर्थः पादः ॥ ११, ४ ॥" इति चोपलभ्यते ॥

[ [१]श्येनो व्याख्यात[२]आदाय[३]स्वादिष्ठया[४]सोमंमन्यते[५]यत्त्वादेवन-
वो[६]नवः[७]परमृत्यो त्वेष[८]मित्था[९]भवो[१०]मह उदु ज्योति[११]धाता ददातु[१२]सो-
मस्याथातो मध्यस्थाना देवगणा[१३]आ विद्युन्मद्भिः[१४]रुद्रा[१५]सो वि-
ष्टी[१६]शमी[१७]विरूपास[१८]उदीरता[१९]मवरेऽङ्गिरसो नः[२०]सूर्यस्य[२१]स्तुषे यम-
थातो मध्यस्थानाः स्त्रि[२२]यो दक्षस्य[२३]वा यस्मै[२४]त्वं किमिच्छन्ती[२५]पा-
वका[२६]नो महो[२७]अर्णो[२८]यद्वाग्वदन्ती देवीं[२९]वाचं अन्विदनुमते[३०]राका-
[३१]महं सिनीवालि[३२]कुहू[३३]महं मन्यमू[३४]र्वशी[३५]विद्युन्न[३६]बळित्थे[३७]न्द्राणी-
[३८]महमिन्द्राणि[३९]गौरीर्मिमाय[४०]तस्याः[४१]समुद्रा गौरमी[४२]मेदुपह्वये
[४३]सूयवसा[४४]द्धि ऋण्वतीस्वस्ति[४५]रिञ्चपो[४६]षा[४७]एतदस्या[४८]अभिनो रथं[४९]-
सुमा[५०]रंतमिति पञ्चाशत् ॥]

इति निरुक्ते [ उत्तरषट्के ] एकादशो [ पंचमो ]ऽध्यायः समाप्तः ॥ ११ ॥

इति श्रीजम्बूमार्गनिवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तावेकादशो ( षोडशो )ऽध्यायः ॥ ११ ॥

---

# अथ द्वादशोऽध्यायः १२.

व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना एतेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः, तदर्थं विशेषतः पुनराधिकारवचनम्–

## अथातो द्युस्थाना देवताः ॥ १ ॥

"अथातो द्युस्थाना देवताः"–इति । बहुवचनं पक्षेऽर्थवत् । द्यौस्तेषां स्थानमिति द्युस्थानाः, देवताः, व्याख्यास्यन्त इति शेषः ॥ १२ । १ । १ ॥

## तासामश्विनौ प्रथमागामिनौ भवतः ॥ २ ॥

"तासामश्विनौ प्रथमागामिनौ भवतः" । तौ कस्मात् ? कालतो हि द्युस्थानानां देवतानां विशेषो विवक्षितः, आश्विने च स्तुतशस्त्रके कर्मणि प्रथममश्विनोः कालः सन्धौ । एकश्चाश्वी मध्यस्थानः एको द्युस्थानो नैरुक्तानाम्, अतो द्युस्थानमध्यस्थानत्वात्तयोरश्विनोरुपन्यासः ॥ यद्येवमेकस्य मध्यस्थाने एकस्य द्युस्थाने उपदेशः प्राप्नोति ? न, एकैकस्य तयोः अश्विशब्दस्य पृथग्भावेन स्तुत्यभावादश्विद्वन्द्वस्य चात्यन्तमवियोगात्, नासत्याविति च पृथक् स्तुत्यभावत् । सत्यप्यवियोगे प्राथम्यात् प्रथमस्य समाम्नानं युक्तम् ? इति चेत्,न, तत्कालेन मध्यस्थानस्य हीयमानरूपत्वात्, द्युस्थानस्य च वर्द्धमानरूपत्वात्, अतोऽनन्तरं च द्युस्थानदेवतारूपान्तरसंस्थानादिति ॥ १२ । १ । २ ॥

( अथैकत्रिंशत्पदानि )

## अश्विनौ ॥ १ ॥

## अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः ॥ ३ ॥

"अश्विनौ–( १ )" कस्मात् ? "यद् व्यश्नुवाते सर्वम्" । केन ? "रसेनान्यः" रसेनोदकेन सर्वं व्यश्नुते व्याप्नोति ॥ "ज्योतिषान्यः" ज्योतिषैकः ॥ १२ । १ । ३ ॥

## अश्वैरश्विनावित्यौर्णवाभः ॥ ४ ॥

"अश्वैः अश्विनौ इत्यौर्णवाभः" । अश्वैस्तद्वन्तौ तावित्यौर्णवाभ आचार्यो मन्यते ॥ १२ । १ । ४ ॥

## तत्कावश्विनौ द्यावापृथिव्यावित्येके ॥ ५ ॥

"तत् कौ अश्विनौ" ? इति विचारः[१] तदिति वाक्योपादाने कावेतावश्विनाविति

---

१ 'चान्यतमवियोगा' ॥

विचारार्थः प्रश्नः । "द्यावापृथिव्यौ इत्येके" । विज्ञायते हि–"तौ यौ प्रत्यक्ष-दैवतमश्विनाविमे एव ते द्यावापृथिव्यौ"–इति ॥ द्यौर्ज्योतिषा व्याप्नोति, पृथिव्यन्नेन ॥ १२ । १ । ५ ॥

अहोरात्रावित्येके ॥ ६ ॥

"अहोरात्रौ इत्येके" । अहर्ज्योतिषा व्यश्नुते, रात्रिरवश्यायैः ॥ १२ । १ । ६ ॥

सूर्याचन्द्रमसावित्येके ॥ ७ ॥

"सूर्याचन्द्रमसौ इत्येके" । सूर्यो ज्योतिषा व्यश्नुते, रसेन चन्द्रमाः ॥ १२ । १ । ७ ॥

राजानौ पुण्यकृतावित्यैतिहासिकाः ॥ ८ ॥

"राजानौ पुण्यकृतौ इत्यैतिहासिकाः" अश्वैरश्विनावित्येतन्निर्वचनम्, अथास्मिन् पक्षे इतिहासे समवैति ॥ १२ । १ । ८ ॥

तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम् । अनुत्तमो भागो हि मध्यमः, ज्योतिर्भाग आदित्यः ॥ ९ ॥ १ ॥

"तयोः कालः ऊर्ध्वमर्द्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम्" । ज्योतिषा व्यतिभिद्यमानमूर्द्ध्वमर्द्धरात्रात् तमो यदा ज्योतिरनुविष्टभ्नाति, सोऽश्विनोः कालः । ततः प्रभृति सन्धिस्तोत्रं पुरोदयादाश्विनम्, उदिते सौर्याणि । तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि, तद्भागः "मध्यमः" तन्मध्यमस्य रूपम् । यत् "ज्योतिः" तमसि अनुप्रविष्टं तद्भागं तद्रूपम् "आदित्यः" । तावेतौ मध्यमोत्तमाविति स्वमतमाचार्यस्य यतः समर्थनायोदाहरति ॥ १२ । १ । ९ ॥

तयोरेषा भवति–॥

"तयोः एषा भवति"–॥ *

"वसातिषु स्म चरथोऽसितौ पेत्वाविव ।
कुदेदमश्विना युवमभि देवाँ अगच्छतम् ॥"

इति सा निगदव्याख्याता ॥ [ वसातिषु स्म चरथो वसा-

---

* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा "तयोरेषा भवति" इत्यतः प्रागुचिता ॥

१ अयं कोष्ठकान्तर्गतः पाठः कतिपयपुस्तकेषु नोपलभ्यते ॥

तयो रातयो वसन्ते स्मा इतरेतरा तयोः, वक्तेर्वा, वहतेर्वा, सितौ पेत्वाविव । अपेत्वा वृत्रहणं सुरातयोः ] ॥ १ ॥

"वसातिषु स्म०"—इति । उपजातदेवतादर्शनचक्षुः अतीतेषु रात्रिपर्यायेषु सन्धौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृक् ब्रवीति—"वसातिषु" रात्रिषु, तासु हि प्राणिनो निवसन्ति । किं तासु ? इति—"चरथः" युवाम् । कथम् ? "असिताविव पेत्वौ" कृष्णाविव मेघौ समानरूपौ । उषसिं कथमपि मया लक्षितौ यतो ब्रवीमि,—"कदेदमश्विना युवम्" । कदेदमस्मत्कर्म प्रति ये देवा आगताः, तान् प्रति हे युवामश्विनौ ! "आगच्छतम्" आगतवन्तौ स्थः ॥ १२ । २ । १ ॥

तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोः । असंस्तवेनैषोऽर्द्धर्चो भवति ॥ २ ॥

"तयोः" अश्विनोः "समानकालयोः" उभयोरपि हि तयोरूर्द्ध्वमर्द्धरात्रात् काल इति समानकालः । "समानकर्मणोः" उभयोरपि तयोरेकं कर्म, तिरो आह्न्याः सोमा आश्विनश्च द्विकपालः । "संस्तुतप्राययोः" प्रायेण हि तयोः बाहुल्येन संस्तव एव ॥

तयोः पुनः "असंस्तवेनैषोऽर्द्धर्चो भवति" ॥ १२ । २ । २ ॥

वासात्यो अन्य उच्यत उषःपुत्रस्तवान्य इति ॥ ३ ॥ २ ॥

ननु अस्यामृचि 'वसातिषु स्म चरथः' इति वसातयो हि जनपदा अपि प्रसिद्धाः तदधिपती पुण्यकृतौ राजानौ अश्वैस्तद्वन्ताविति शक्यते कल्पयितुम् ? तद्यथा—वासात्यौ तद्देशाधिपती कौचिद्राजानौ बह्वश्वौ पुण्यकृतौ यज्ञकर्मणि देवान् प्रति गतौ केनचिदुच्येते—यौ युवां वसातिषु जनपदेषु नित्यमसिताविव पेत्वौ समानवेषौ चरथः, तौ युवामिदं देवस्थानं प्रति ये देवा वर्त्तन्ते, तान् प्रति कदा हे अश्विनौ युवामागच्छतमागतवन्ताविति । मा भूदेषा मन्त्रार्थयोजनेत्यत आह,—

"वासात्योऽन्य उच्यते, उषःपुत्रः तवान्य इति" । एको वासात्य उच्यते, एकश्च उषसः पुत्र इति । एवमेतस्मिन् भिन्नस्तुतावर्द्धर्चे उषसः पुत्रेण सूर्येण सह समानव्याख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ॥ १२ । २ । ३ ॥

---

१ 'ब्रवीति' ॥

**तयोरेषापरा भवति—॥**

"तयोः एषा अपरा भवति" [ सा पुनः किमर्थम् ? मध्यमोत्तमावश्विनावित्यस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि—॥ *

**"इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः।**
**जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगःपुत्र ऊहे॥"**

**इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवो अन्यः सुभगः पुत्र ऊह्यत आदित्यः ॥ १ ॥ ३ ॥**

"इहेह जाता० ( ऋ० सं० २, ४, २५, ४ )"—इति । अगस्त्यस्यार्षम् । प्रातरनुवाकाश्विनयोः विनियोगः ॥ हे अश्विनौ ? युवामुच्येथे—"इहेह जाता" "इह च" मध्यस्थाने "इह च" द्युस्थाने "जातौ" "समवावशीतां" "संस्तूयेथे"। केन ? "अरेपसा तन्वा" "अपापया तन्वा"। यथासङ्कल्पतया। "नामभिः स्वैः" परमनाश्रित्य यानि स्वस्तुतिनिमित्तानि तैः। किंच, "जिष्णुर्वामन्यः" नित्यमेव जेता युवयोरन्यः। "सुमखस्य सूरिः" "सुमहतो बलस्येरयिता" शत्रुषु, स च नान्यो मध्यस्थानात् इति "मध्यमः" मध्यस्थानः। "दिवो अन्यः" "सुभगः पुत्रः" सुभगः सुधनः, ऊहे "ऊह्यते" वायुना "आदित्यः" नित्यम्, स च नान्यः सूर्यादित्येवमत्रापि मध्यमोत्तमाविति ॥ १२ । ३ । १ ॥

**तयोरेषाऽपरा भवति—॥**

"तयोः एषा अपरा भवति" [ सा पुनः किमर्थम् ? संस्तुतप्रायावेतौ समानकालौ समानकर्माणौ इत्युक्तं तदुपप्रदर्शनार्थम् ]—॥ *

**"प्रातर्युजा विबोधयाश्विनावेह गच्छताम्।**
**अस्य सोमस्य पीतये॥"**

---

* अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, सा "तयोरेषापरा" इत्यतः प्रागुचिता ॥
* अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "तयोरेषाऽपरा भवति" इत्यतः प्रागुचिता॥

**प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय ॥ १ ॥ ४ ॥**

"प्रातर्युजा० ( ऋ० सं० १, २, ४, १ )"–इति । मेधातिथेरार्षम् । प्रातरनुवाके विनियोगः ॥ हे स्तोतः ! यावेतौ प्रातर्युज्येते हविषा स्तुत्या च । तावेतौ "अश्विनौ" विस्पष्टाभिः स्तुतिभिः अस्मदर्थं "विबोधय" । विबोधितौ च त्वया "इह" कर्मणि "आगच्छताम्" अस्माकम् "अस्य सोमस्य" "पीतये" "पानाय" ॥१२।४।१॥

**तयोरेषापरा भवति—॥**

"तयोः एषा अपरा भवति" [ सा पुनः किमर्थम् ? नैवानयोः अन्यस्मिन् काले इज्यास्ति, यद्यपि क्रियते, अनिज्यैव सेति सुतरां परया संस्तवं कालं चोपदर्शयति ]–॥ *

"प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।
उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥"

**प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्टमेतदप्यन्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान्वनयितृतमः ॥ १ ॥**

"प्रातर्यजध्वम्० ( ऋ० सं० ४, ४, १८, २ )"–इति । अत्रेरार्षम् । प्रातरनुवाके विनियोगः, आश्विने च ॥ हे स्तोतारो यूयमुच्यध्वे । तौ "अश्विनौ" "प्रातः" एव "यजध्वम्" । कथम् ? इति, यतो ब्रवीमि,–"प्रहिणोत" प्रकर्षेण तौ प्रति स्तुतीर्हवींषि च गमयतेति । किमित्येवं ब्रवीमि–प्रातर्यजध्वमिति । इतः,–यस्मात् "न सायमस्ति देवयाः" अनयोर्देवयोः न सायमस्ति "इज्या" । यद्यपि कथञ्चित् स्यात्, "अजुष्टम्" अनासेवितं च तदश्विभ्यां कर्म । "उतान्यो अस्मद्यजते" । "अपि" च अनादृते त्वयि "अन्यः" अपि अस्मत्तः एतावश्विनौ "यजते" "वि च अवः" व्यावयति च, तर्पयति हविर्भिः । "पूर्वःपूर्वः" "यजमानः" प्रथमःप्रथमो यजमानो "वनीयान्" "वनयितृतमः" सम्भक्तृतमः, आदृतत्वात्, तस्यैव हविरासेवेते अश्विनौ, नेतरस्येति ॥ १२ । ५ । १ ॥

---

१ 'श्रुत्या' ॥ * अत्र चतुर्थखण्डसमाप्तिर्दृश्यते, सा "तयोरेषाऽपरा भवति" इत्यतः प्रागुचिता ॥

**तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्ते ॥२॥**

"तयोः कालः सूर्योदयपर्यन्तः" प्रकाशीभावस्यानुविष्टम्भामित्यतः कालात् प्रभृति सूर्योदयपर्यन्तस्तयोः कालः, ततः परं यागकालः। ततः किम्? "तस्मिन् अन्याः देवताः" तस्मिन् स्तुतिकाले[1] अन्याः देवताः आश्विने शस्त्रे याः स्तुतिं लभन्ते, ताः "ओप्यन्ते" त्वसामावापः तत्कालस्तुतिप्रतिलम्भे इति। तत्र तावदुषाः प्रथममोप्यते तद्देवतानि सूक्तानि शस्यन्ते ॥ १२।५।२ ॥

## उषाः ॥ २ ॥

**उषा वष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका ॥३॥५॥**

"उषाः (२)" "वष्टेः कान्तिकर्मणः"। "वश कान्तौ (अ० प० ७०)"- इत्यस्य। यच्चोक्तम् "उच्छतीति सत्याः" (२।१८।४)-इति, तद्वा इदं विकल्पेन द्युस्थानायाः, या पुनः "इतरा माध्यमिका" उषाः, न तस्या विकल्पः, किं तर्हि? उच्छतेरेव सा विवासनार्थस्य,-उदकानि विवासयति, विवास्यते वा मेघान्मध्यमेनेति ॥ १२।५।३ ॥

**तस्या एषा भवति-॥**

"तस्याः एषा भवति"-॥ *

"उषुस्तच्चित्रमाभरास्मभ्यं वाजिनीवति।
येन तोकं च तनयं च धामहे ॥"

**उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि ॥ १ ॥ ६ ॥**

"उषुस्तच्चित्रमा भरा० (ऋ० सं० १, ६, २६, ३। य० वा० सं० ३४, ३३। सा० सं० उ० आ० ८, ३, ८, १)"-इति। गोतमस्यार्षम्। प्रातरनुवाके आश्विने च विनियोगः ॥ हे "उषः!" "वाजिनीवति!" तदस्माकं "चित्रं" "चायनीयं धनम्" "आभर" "आहर" त्वम्। "येन" त्वत्प्रत्तेन वयं "पुत्रांश्च" "पौत्रांश्च" अविच्छेदेन तृप्तान् "धामहे" "दधीमहि" ॥ १२।६।१ ॥

---

[1] 'व्रतिकाले' ॥ * अत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

तस्या एषाऽपरा भवति—॥

"तस्याः एषा अपरा भवति" । सा पुनः किमर्थम् ? पूर्वस्यामृचि चित्रं घनमाहरेत्युक्तम्, तच्च पुनरुभयोरप्युषसोरविशिष्टम्, विशिष्टं तु परस्यामुत्तमलिङ्गम्—"पूर्वे अर्द्धे रजसो भानुमञ्जते"—इति, अतः परा उदाह्रियते—॥ *

"एता उ त्या उषसः केतुमक्रत पूर्वे अर्द्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥"

एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वे अर्द्धे अन्तरिक्षलोकस्य, समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने ।

"एमीदेषां निष्कृतं जारिणी वा" इत्यपि निगमो भवति । प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः ॥ १ ॥

"एता उ त्या० (ऋ० सं० १, ६, २४, १ । सा० सं० उ० आ० ८, ३, १६, १)"—इति । पूर्ववदार्षं विनियोगश्च ॥ याः "पूर्वे अर्द्धे" "रजसः" "अन्तरिक्षलोकस्य" "समञ्जते" "भानुना" भासा आत्मानमभिव्यञ्जयन्ति । "एताः" "त्याः" "ताः" "उषसः" । किमिति ? "केतुम् अक्रत" "अकृषत" कुर्वन्ति लोकस्य "प्रज्ञानम्" । कथं ताः प्रज्ञानं लोकस्य कुर्वन्ति ? अत आह—"निष्कृण्वाना आयुधानीव धृष्णवः" । "निरित्येष समित्येतस्य स्थाने" । यथा—संस्कुर्वाणाः नित्यं निर्मृजन्तः आयुधानि निर्मलानि कृण्वन्ति धृष्णवः धर्षयितारः ते आयुधिनस्तज्जीवनाः, एवं भानुना स्वेन भासा तमोमलमपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति । ततश्च "प्रति गावोऽरुषीर्यन्ति मातरः" । यत एवोदितास्तमेव सूर्यं प्रति यन्ति तत्रैवान्तर्लीयन्ते, सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे

---

* अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा "तस्या एषाऽपरा भवति" इत्यतः प्रागुचिता ॥

१ 'तत्रैवान्तर्धीयन्ते' ॥

जाते प्रकाशे उपजायते, ता उषस इत्याचक्षते, स एष परमार्थतः सूर्य एव स्त्रीलिङ्ग-विशिष्टो भवति, सूर्यकार्यत्वात् प्रकाशस्य ॥

"एकस्या एव पूजनार्थे बहुवचनम्"—इति वचनभेदप्रतिसमाधानम् ॥

निरित्येष समित्येतस्य स्थाने सामर्थ्याद् व्यत्ययः, संस्क्रियमाणानि ह्यायुधानि अतिनिर्मलानि भवन्ति ॥

यथा चोपपद्यते उपसर्गव्यत्ययः, तथा निगममुदाजहार—"एमीदेषाम्"—इति ।

"यदा दीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रत एमीदेषां निष्कृतं जारिणीव ॥ ( ऋ० सं० ७, ८, ३, ५ )"—इति ।

कवषस्य वा अक्षस्य वा आर्षम् । कृतनिवृत्तिर्देवनादशक्नुवन्नात्मानं धारयितुं ब्रवीति[1]—। 'यदा दीध्ये' भृशमभिध्यायामि[2] निश्चयेन 'न दविषाणि' न देविष्यामि 'एभिः' अक्षैरिति । अथ तदा 'सखिभ्यः' समानख्यानेभ्य कितवेभ्यः 'परायद्भ्यः' परागच्छद्भ्यः देवनस्थानमहमेभ्यः 'अवहीये' भृशं हीनोऽस्मीति । यदा च पुनस्ते प्राप्य आस्फारं निवपन्ति अक्षान्, अथ पुनस्तदा तैर्न्युप्ताश्च ते 'बभ्रवः' बभ्रुवर्णा अक्षाः 'वाचमक्रत' शब्दमकुर्वत, अथ तदा निवृत्तिमविगणय्य "एमि इत्" आगच्छाम्येव "एषाम्" अप्येषाम् अप्येवं "निष्कृतं" संस्कृतम् अक्षस्थानम् आस्फारं संस्कृतं "जारिणीव" व्यभिचारिणीव काचिद्दुःस्त्री चारित्रमात्मनोऽविगणय्येति ॥ १२।७।१॥

## सूर्या ॥ ३ ॥

## सूर्या सूर्यस्य पत्नी । एषैवाभिसृष्टकालतमा ॥ २ ॥ ७ ॥

"सूर्या ( ३ )"—इति वक्तव्यम् । सा पुनरियं "सूर्यस्य पत्नी" ॥ "एषैव" उषाः, "अभिसृष्टकालतमा" यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति, गततमा भवति, तथा तथा सैषा उषाः सूर्या सम्पद्यते ॥ १२ । ७ । २ ॥

## तस्या एषा भवति—॥

"तस्याः एषा भवति"—॥ *

"सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥"

---

१ 'ब्रवीमि' ॥ २ 'ध्यायामीति निश्च' ॥ * अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

**सुकाशनं शन्नमलं सर्वरूपम् ॥**

**अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति ।**

**किंशुकं क्रंशतेः प्रकाशयतिकर्मणः ।**

**शल्मलिः सुशरो भवति, शरवान्वा । आरोह सूर्ये अमृतस्य लोकमुदकस्य सुखं पत्ये वहतुं कुरुष्व ।**

**"सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा" इति च ब्राह्मणम् ॥ १ ॥**

"सुकिंशुकं शल्मलिं॰ (ऋ॰ सं॰:८, ३, १३,५)"–इति । सूर्याया आर्षम् । विवाहे विनियोगः ॥ त्रित्वे तावदुच्यते प्रभामात्मनो विभज्य तदधिदेवतां ब्रवीति– "सुकिंशुकं" सुष्ठु काशनं दीपनं लोकानाम्, "शल्मलिं" "शन्नमलं" व्यपगतमलम्, "विश्वरूपं" "सर्वरूपम्" "हिरण्यवर्णं" हिरण्योपमवर्णं हिरण्यमिव वरणीयम्, "सुवृतं" सुवर्त्तनं शोभनैर्वा रश्मिभिर्वृतम्, "सुचक्रं" सुचकनं सुदीप्तम् । एतमेवंलक्षणं मण्डलं रथम् "आरोह" त्वं हे "सूर्ये!" "अमृतस्य" उदकस्य "लोकं" स्थानम् । तत एवमधिरुह्य "स्योनं" सुखमेतस्मै "पत्ये" मण्डलाधिष्ठात्रे "वहतुं" "कृणुष्व" कुरुष्व–इति ॥

पृथक्त्वपक्षे तु–रथ एव रथः, सूर्य उद्वोढा, कन्या सूर्योच्यते । एवंलक्षणं रथमारोहेति ॥

"अपि वोपमार्थे स्यात्"–"सुकिंशुकमिव शल्मलिमिति" । किंशुकमिति पलाशपुष्पे प्रसिद्धिः । इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः ॥

"किंशुकं क्रंशतेः" धातोः प्रकाशनार्थस्य, तद्धि दीप्तिमद्भवति ।

"शल्मलिः सुशरो भवति" । "शॄ हिंसायाम्"–इत्यस्य धातोः, स हि मृदुत्वात् सुहिंस्यो भवति । "शरवान् वा" । हिंसावान्, कण्टकैरसौ हिनस्ति हि । "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्"! निरुक्तपक्षे ज्योत्स्नां सोमाय ददाति। यदुक्तम्–"आदित्यतोऽस्य दीप्तिर्भवति"–इति । "प्रजाप-

-त्यये वेति" उषसं वा मध्यस्थानायं प्रजापतये ददाति ॥ केचित्त्वैतिहासिकपक्षे इच्छन्ति ॥ तेषामितिहासं शृणु । कथमेतत् ? इति ॥ १२ । ८ । १ ॥

## वृषाकपायी ॥ ४ ॥

**वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा ॥२ ॥८॥**

"वृषाकषायी ( ४ )" "वृषाकपेः पत्नी" । वृषाकपिरादित्यः, तस्य पत्नी, तद्विभूतिः, उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात् । सा पुनः "एषैव" सूर्या, "अभिसृष्टकालतमा" वृषाकपायीत्युच्यते ॥ १२ । ८ । २ ॥

**तस्या एषा भवति--॥**

"तस्याः एषा भवति"-॥ *

**"वृषाकपायि रेवति सुपुत्र आ॒ सुस्नुषे ।**
**घसत्तु इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥"**

**वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा। स्नुषा साधुसादिनीति वा, साधुसानिनीति वा, स्वपत्यं तत् सनोतीति वा ।**

**प्राश्नातु त इन्द्र उक्षण एतान्माध्यमिकान् संस्त्यायान् ॥ उक्षण उक्षतेर्वृद्धिकर्मणः, उक्षन्त्युदकेनेति वा, प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥ १ ॥**

"वृषाकपायि रेवति० ( ऋ० सं० ८, ४, ३, ३ )"-इति । इन्द्रस्यार्षम् । षष्ठे पृष्ठ्याहनि वृषाकपौ विनियोगः ॥ हे "वृषाकपायि !" "रेवति" धनवति ! रयिमति ! "सुपुत्रे !" मध्यमेनेन्द्रेण रसहरणसामान्यात्-सहस्थानसामान्यात्, "सुस्नुषे" "माध्यमिकया वाचा" मिथुनसामान्यात् । किम् ? इति-"घसत्त इन्द्र उक्षणः"

---

१ 'तीहासो मृगयः'॥ * अत्राष्टमखण्डसमाप्तिर्दर्श्यते, सा" तस्या एषा भवति" इत्यतः प्रागुचिता ॥

प्राश्नातु ते इन्द्रः तव स्वभूतानेतान्माध्यमिकानुक्षणोऽवश्यायसंस्त्यायान् एष इन्द्र आदित्यः, स हि तानुद्यन् पिबति । "प्रियम्" इष्टम्, एतत् "काचित्करं हविः" । कमिति सुखनाम, तस्य यदाचितमाचयनं करोति, तद्भवति काचित्करम् । किं पुनस्तत् ? हविः उदकम्, तत् कुरुष्वावश्यायलक्षणं हविः अन्नमवश्यायैरभिनिष्पादय । किमर्थम् ? "विश्वस्मात्" सर्वस्मात् य एष इन्द्र आदित्यः "उत्तरः" तदर्थमिति ॥

"स्नुषा" "साधुसादिनीति वा साधुसानिनीति वा" । शोभने अर्थे श्वशुरस्य सन्तानलक्षणे सीदत्यङ्गभावमुपैतीति स्नुषा, साधु सनोति सन्ततिं सम्भजतीति वा स्नुषा, "सु अपत्यम्, तत्सनोतीति वा" । सु–इत्यपत्यनाम, प्रसूयते हि तदिति, तदियं श्वशुरस्य–सनोति सम्भजतीति वा स्नुषा ॥

"उक्षणः" "उक्षतेः" वृद्ध्यर्थस्य । वर्द्धयन्ति हि ते ओषधीरवश्यायाः, त एव वा बहुत्वाद् वृद्धा भवन्ति । उक्षतेर्वा सेचनार्थस्य, "उदकेन" हि अवश्यायाः सर्वमिदं सिञ्चन्ति ॥ १२ । ९ । १ ॥

## सुरण्यूः ॥ ५ ॥

## सरण्यूः सरणात् ॥ २ ॥ ९ ॥

"सरण्यूः (५)"–इति वक्तव्यम् । सैव यदा सूर्ये प्रत्यविभागेन सृता प्रसृता भवति, तदा "सरणात्" सरण्यूरित्युच्यते ॥ १२ । ९ । २ ॥

**तस्या एषा भवति–॥**

"तस्याः एषा भवति"–॥ *

"अपा॑गूहन्न॒मृतां॒ मर्त्ये॑भ्यः कृ॒त्वी सव॑र्णामदद्ु॒र्विव॑स्वते ।
उ॒ताश्विना॑वभर॒द्यत्तदासी॒दज॑हा॒दु द्वा मि॑थु॒ना स॑र॒ण्यूः ॥"

अप्यगूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदर्दुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः । यमं च यमीं चेत्यैतिहासिकाः ॥ १ ॥

---

* अत्र नवमखण्डसमाप्तिर्दृश्यते, सा "तस्या एषा भवति" इत्यतः प्रागुचिता ॥

"अपागूहन्न० ( ऋ० सं० ७, ६, २३, २ )"—इति । देवश्रवस आर्षम् ॥ "अपागूहन्" "अमृताम्" एतामुषसं वृषाकपाय्यवस्थायां "मर्त्येभ्यः" मनुष्येभ्यः। के ते ? रश्मयः ? "कृत्वी सवर्णामदद्दुर्विवस्वते"। तत्सवर्णामेतां कृत्वा सरण्यूम् अददुर्विवस्वते आदित्याय। "उत अश्विनौ अभरत्" स्तुतिभिः सोषाः, स ह्यश्विनोः स्तुतिकालः । अथवा—सरण्यूरभरत् हविषा, स ह्यश्विनोर्यागकालः । "यत् तत् आसीत्" उषसो रूपं सरण्य्वा वा "अजहात्" अत्यजत् । "द्वा" "द्वौ" "मिथुना" "मिथुनौ" सरण्यूः, "मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः" यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन, तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इति, एष तयोस्त्यागः ॥

"यमं च यमीं चेत्यैतिहासिकाः" । तन्मतेन मन्त्रार्थस्य योजना । त एव रश्मयः प्राणाधिदेवताभावमापन्नाः, तेष्वन्यैतद्रूपं चेत्यैतिहासिको व्यवहारः । तां त्वाष्ट्रीं सरण्यूमश्वां कृत्वा, तथा सत्यश्विनोर्जन्म भविष्यैत् पश्यन्तो लोकहिताय अमृताम् अमरणधर्मिणीं देवीम् अपागूहन्नन्तर्हितां चक्रुः । मर्त्येभ्यो मनुष्येभ्यः उत्तरान् कुरून् प्रति निन्युः । ततश्चान्यां तत्सवर्णां छायाप्रभवां कृत्वा तामदद्दुर्विवस्वते । 'उताश्विनावभरत्' यत् आश्वं तदा रूपमासत्तिन सा सरण्यूरश्विनावभरत् अजनयत् वा अपुष्णात् उत्तरेषु कुरुषु । 'अजहादु द्वा मिथुना सरण्यूः' द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति ॥ १२ । १० । १ ॥

**तत्रेतिहासमाचक्षते—त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार, सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव, ततोऽश्विनौ जज्ञाते सवर्णायां मनुः ॥ २ ॥ १० ॥**

"तत्रेतिहासमाचक्षते" । ऋजुरितिहासार्थः । यथा त्वाष्ट्री सरण्यूः विवस्वतोढा, सा च तस्मात् ननाश ॥ १२ । १० । २ ॥

**तदभिवादिन्येषर्ग्भवति—॥**

"तदभिवादिन्येषर्ग्भवति"—॥ *

१ 'त्वन्यद्रूपं चेत्यै' ॥ २ 'भविष्यं' ॥ * अत्र दशमखण्डसमाप्तिर्दृश्यते, सा "तदभिवादिन्येषर्ग्" इत्यतः प्रागुचिता ॥

त्वष्टा ॥ ६ ॥

"त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥"

त्वष्टा दुहितुर्वहनं करोतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश। रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ १ ॥ ११ ॥

[ "त्वष्टा-( ६ )" त्वष्टा हि विश्वकर्मा । सोऽप्यनयैवोच्यते ऋचा ॥ ]

"त्वष्टा दुहित्रे० ( ऋ० सं० ८, ६, १३, १ )"-इति । पूर्वयैव समानार्षे विनियोगश्च ॥ "त्वष्टा" देवो विश्वकर्मा यं पुराणविदो वदन्ति, सः "दुहित्रे" "दुहितुः" "वहतुं" "वहनं" विवाहं "करोतीति" "इदं विश्वं" "भुवनं" भूतजातं विवाहदर्शनप्रेप्सया "समेति" स हि विवाहानां स्वभावः । "यमस्य माता" भविष्यता योगेनोच्यते, "पर्युह्यमाना" पर्यूढा, यमं च यमीं च जनयित्वा, ततः "महः" "महतः" "जाया" "विवस्वतः" देवस्य जाया भार्या हित्वा अपत्ये मिथुनावाश्वं रूपं कृत्वा "ननाश" इति ॥

नैरुक्तपक्षे तु "त्वष्टा"-मध्यमः, तमोभागस्य उषसः "दुहित्रे" दुहितुः दूरे हितायाः प्रकाशरूपायाः "वहतुं" "वहनं" विवस्वतः "करोति"। "इदं विश्वं भुवनं समेति" प्रभातमिति मत्वा "सर्वाणि भूतानि" स्वासुस्वास्वितिकर्त्तव्यतासु अभिसमागच्छन्ति । "यमस्य माता पर्युह्यमाना" यमस्य मध्यमस्य माता देवधर्मेण, अथवा-द्युस्थानस्यैव जाया सा मातेति । जायतेऽस्यां पुत्रत्वेन पतिः "जाया" भार्या, "महतो विवस्वतः" प्रकाशेन प्रोत्सार्यमाणा "ननाश" नश्यति । सङ्क्षेपतो भाष्यकारोऽर्थं[2] निराह-"रात्रिरादित्यस्य" उषा जाया, सा "आदित्यस्योदयेऽन्तर्धीयते"-इति ॥ १२ । ११ । १ ॥ *

---

१ एतावान्कोष्ठकान्तर्गतः पाठो व्याख्यायामपेक्षितोऽस्ति ॥ २ 'भाष्यकारार्थं' ॥

* अत्रैकादशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ द्वादशा-( सप्तदशा )ऽध्यायस्य प्रथमः पादः ॥ १२, १ " इति तूपलभ्यते ॥

# सु॒वि॒ता ॥ ७ ॥

## सविता व्याख्यातः ॥ १ ॥

"सविता ( ७ )"—इति वक्तव्यम् । स पुनरेषः "व्याख्यातः" ( १० । ३१ ) अभिधानतः, इह पुनरादित्यः ॥ १२ । १२ । १ ॥

## तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति ॥ २ ॥ १२ ॥

"तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति" यदा यस्मिन् काले द्यौरेव अपहततमस्का भवति, न पृथिवी, पृथिव्यां तमो भवति, दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति, स सावित्रः कालः, तस्मिन् काले आदित्यः सवितोच्यते ॥ १२ । १२ । २ ॥

## तस्यैषा भवति—॥

"तस्य" सवितुः तत्कालोपलक्षितस्य "एषा" ऋक् प्राधान्यस्तुतिः "भवति"—॥ *

**"विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे । वि नाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥"**

**सर्वाणि प्रज्ञानानि प्रतिमुञ्चते । मेधावी कविः क्रान्तदर्शनो भवति, कवतेर्वा । प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजति ॥ १ ॥**

"विश्वा॑ रू॒पाणि॒ प्रति॑मुञ्चते क॒विः०" ( ऋ० सं० ४, ४, २४, २ । य० वा० सं १२, ३ )"—इति । श्यावाश्वस्यार्षम् । आभिप्लविके प्रथमेऽहनि विनियोगः, शिक्यपाशप्रतिमोके च यजमानस्याग्नौ ॥ "विश्वानि" "सर्वाणि" "रूपाणि" रूपवत्स्वर्थेषु "प्रतिमुञ्चते" आबध्नाति । तमोऽपघ्नन् रूपाण्याविः—कुर्वन् । "कविः" "क्रान्तदर्शनः" अथवा—"कवतेः" धातोः गत्यर्थस्य कविः, कवति गच्छत्यसौ नित्यम् । किञ्च कवित्वादेव "प्रासावीत्" "प्रसुवति" जनयति । अभ्यनुजानाति च "भद्रं द्विपदे चतुष्पदे" "द्विपाद्भ्यश्च" मनुष्यादिभ्यः "चतुष्पाद्भ्यश्च" गवादिभ्यः,

---

* अत्र द्वादशखण्डसमाप्तिर्द्दश्यते, सा "तस्या सवितुः" इत्यतः प्राप्नुचिता ॥

यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति । किञ्च, "वि नाकम् अख्यत्" विख्यापयति नाकं द्याञ्च विदर्शयति, तदा हि तस्यां विकीर्णरश्मयो भवन्ति । किञ्च, "अनुप्रयाणम्, उषसः विराजति" उषसः प्रयाणमनु विराजति प्रकाशते । सोऽस्माकं नामेदं करो-त्वित्याशिषा स्तुतिर्निराकाङ्क्षा ॥ १२ । १३ । १ ॥

**अधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादित्यधस्तात्तद्वेलायां तमो भवत्येतस्मात् सामान्यादधस्ताद्रामोऽधस्तात् ।**

**कृष्णः कस्मात् सामान्यादित्यग्निं चित्वा न रामामुपेयात्, रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात् सामान्यात् ॥ २ ॥**

"वि नाकमख्यत्"—इति सवितुः कालोपलक्षणकं मन्त्रलिङ्गम्, तत्पशुगुणसामान्येने समर्थयन्नाह—"अधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते" । "कस्माद्दुर्गे सा-मान्यात्" ? इति—"अधस्तात्तद्वेलायां तमो भवति" उपरिष्टाच्च ज्योतिः । शुक्लं तदा दिवि भवति, कीर्णरश्मित्वात्तस्याः, अधस्तात्तु भूम्यां तदा तमो भवति । एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः ॥

आह—"अधोरामः" इति किमुक्तं भवति ? उच्यते,—"अधस्तात् कृष्णः"—इति यदुक्तं स्यात् तदुक्तं भवत्यधोराम इति ॥

आह—"कृष्णः कस्मात् सामान्यात्" राम इत्युच्यते ? शृणु,—विज्ञायते हि "अग्निं चित्वा" प्रथमं चित्वा "न रामामुपेयात्"—इति । "रामा"—इति शूद्रोच्यते, सा हि "रमणाय" एव "उपेयते"—"न धर्माय" रमणार्थमेव सा । "कृष्णजातीया"-इत्येकार्थौ शब्दावधुना उत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत् पर्यायं रामशब्दो वृत्तेः कृष्णसामान्यमात्रेण ॥ १२ । १३ । २ ॥

**कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादिति कालानुवादं परीत्य । कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरम् ॥ ३ ॥**

"कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते" सः "कस्मात् सामान्यात्" ?

इति; उच्यते,—"कालानुवादं परीत्य" सवितुः कालमसौ वक्तीति एवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वम् ॥

कृकवाकुशब्दमधुना निर्वक्ति—"कृकवाकोः पूर्वं शब्दानुकरणम्" कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणं कृकः—इत्येवमसौ शब्दं करोति, "वचेरुत्तरम्" वाकुरित्येतत्, कृकः—इत्येवं वक्तीति कृकवाकुः ॥ १२ । १३ । ३ ॥

## भगः ॥ ८ ॥

**भगो व्याख्यातः ॥ ४ ॥**

"भगः—(८)" वक्तव्यः । स पुनरेषः "व्याख्यातः (३ । १६)" स्त्रीभगेन शब्दव्युत्पत्तितः ॥ १२ । १३ । ४ ॥

**तस्य कालः प्रागुत्सर्पणात् ॥ ५ ॥ १३ ॥**

"तस्य कालः प्रागुत्सर्पणात्" तस्मात्सावित्रात्कालात् परत, एतदुक्तमं ज्योतिर्भगाख्यं भवति ॥ १२ । १३ । ५ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥*

**"प्रा॒त॒र्जितं॒ भग॑मु॒ग्रं हु॑वेम व॒यं पु॒त्रमदि॑ते॒र्यो वि॑ध॒र्ता ।**
**आ॒ध्रश्चि॒द्यं मन्य॑मानस्तु॒रश्चि॒द्राजा॑ चि॒द्यं भगं॑ भ॒क्षीत्याह॑ ॥"**

**प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता सर्वस्याध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्रस्तुरश्चित् । तुर-इति यमनाम तरतेर्वा, त्वरतेर्वा, त्वरया तूर्णंगतिर्यमो राजा चिद्यं भगं भक्षीत्याह ॥**

**अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणम् । जनं भगो गच्छतीति वा, विज्ञायते जनं गच्छत्यादित्य उदयेन ॥ १ ॥**

* अत्र त्रयोदशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"प्रातर्जितं भग० ( ऋ० सं० ५, ४, ८, २ )"—इति । वसिष्ठस्यार्षम् ॥ प्रातः शत्रुस्तमांसि यो जयति, स भवति प्रातर्जित्, तम् "प्रातर्जितं" "भगं" सूर्यम्, "उग्रम्" उद्गूर्णम् अभ्युद्यतमुदयाय "हुवेम" आह्वयामहे "वयम्" । "पुत्रमदितेः" "यः" "विधर्त्ता" "विधारयिता" "सर्वस्य" जगतः स्वेनानुग्रहेण । किंच, "आध्रश्चिद्यं मन्यमानः" "आढ्यालुः" आढ्यानां स्पृहयिता "दरिद्रः" स यं मन्यमानः आकाङ्क्षन्नहन्यहनि पूजयन्नास्ते, अपि नामोदियात् भगस्ततो वान्नार्थं पर्यटेयमिति । "तुरश्चित्" तुरोऽपि "यमः तूर्णगतिः" सर्वान् प्राणिन आभिमुख्येनोपसंहाराय तूर्णगतिस्त्वरितगतिः यं मन्यमानं आस्ते प्रेताधिपतिः, तदुदयाद्धि कालातिक्रमेणासावुपसंहरति प्राणिनः । "राजा चित्" राजापि चार्थिनां कार्यचिकीर्षया "यं भगं भक्षि" तम् उदयं भजेति इत्येवमाह । तं वयं भगमाह्वयामहे ॥

आह—"अन्धः भगः इत्याहुः" तस्य कोऽर्थः ? इति, उच्यते—स हि सूर्यभावम्, "अनुत्सृप्तो न दृश्यते" नास्मिन् द्रष्टॄणां ध्यानं दर्शनमस्तीत्यन्धः । न पुनरसावेव न पश्यति इति,—"प्राशित्रमस्याक्षिणी निर्जघानेति च"—इति । ऐतिहासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रभागस्यानन्वीक्षणस्तुत्यर्थम् । "जनं भगो गच्छतीति" । तदेतत् प्रसिद्धमेव, यदा तदा तदात्मना जनमादित्यो गच्छति ॥ १२ । १४ । १ ॥

## सूर्यः ॥ ९ ॥

**सूर्यः सर्त्तेर्वा ।**

**सुवतेर्वा ।**

**स्वीर्य्यतेर्वा ॥ २ । १४ ॥**

"सूर्यः ( ९ )"—इति वक्तव्यम् । स पुनरयं भगकालात्सृतः सूर्यो भवति । "सर्त्तेः वा" सूर्यः ।

"सुवतेर्वा" प्रसवार्थस्य, स एव हि इदं सर्वं प्रसुवति जनयतीत्यर्थः ।

"स्वीर्यतेर्वा" सुपूर्वस्य वा ईरयतेः गत्यर्थस्य, वायुना ह्ययं सुष्ठु ईर्यते प्रेर्यत इत्यर्थः ॥ १२ ॥ १४ । ३ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति" प्राधान्यस्तुतिः—॥ *

---

* अत्र चतुर्दशखण्डसमाप्तिर्यतो द्वा "तस्यैषा भवति" इत्यतः प्रवृत्ता ॥

"उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥"

उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति ॥ कमन्यमादित्यादेवमवक्ष्यत् ॥ १॥१५॥

"उदु त्यं जातवेदसं० ( ऋ० सं० १ ४, ७, १ । य० वा० सं० ७, ४१ । सा० सं० छ० आ० १, १, ३, १० )"–इति । प्रस्कण्वस्यार्षम् । आश्विने विनियोगः॥ यम् "उद्वहन्ति" उदयमुपनयन्ति "जातवेदसम्" इति "सूर्यं" "केतवः" "रश्मयः" अश्वा वा यमुद्वहन्ति, ये इष्टाः "सर्वेषां भूतानां" "दृशे" "दर्शनाय" सूर्यम्, तं वयमभिप्रेतार्थसिद्धयेऽभिष्टुमः ॥ १२ । १५ । १ ॥

तस्यैषाऽपरा भवति–॥

"तस्य एषा अपरा भवति"–[ सा पुनः किमर्थम् ? जातवेदसं सूर्यमिति श्रवणात् सन्देहः,–किमियं जातवेदस्युत सौरीति ? परा त्वसंशयमेव सौरीति परां निजगाद ]–॥*

"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥"

चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ॥ १ ॥

"चित्रं देवाना० ( ऋ० सं० १, ८, ७, १ । य० वा० सं ७, ४२ )"–इति । कुत्सस्यार्षम् । आश्विने विनियोगः ॥ "चित्रं" "चायनीयं" पूजनीयम् । किं पुनस्तत् ? "देवानां" रश्मीनां यदेतत् "उदगात्" "अनीकं" समूहः । किमस्य ? "चक्षुर्मित्रस्य वरुणस्याग्नेः" एतस्मिन् मित्रस्य वरुणस्य अग्नेश्च चक्षुः "ख्यानम्" इत्यर्थः । य एषः सूर्यः "आत्मा" "जङ्गमस्य च स्थावरस्य च" सर्वभूतानुप्रवेशी "आप्राः" "आपूपुरत्" आपूरयति "द्यावापृथिव्यौ" च "अन्तरिक्षं च" महत्त्वेन सूर्य आत्मा । एतस्मिन् मित्रवरुणाग्न्यादीनां देवतानां ख्यानमनेन

---

* अत्र पञ्चदशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषाऽपरा" इत्यतः प्रागुचिता ॥

सूर्यात्मना, य एतान् मित्रप्रभृतीन् पश्यति, स साधु पश्यतीत्यभिप्रायः । विज्ञायते हि रहस्यब्राह्मणे—"य एष सूर्य आत्मा जगतस्तस्थुषश्चेति एतदिहैवोपेक्ष्यम्"—इति ॥

भेदपक्षे तु मित्रप्रभृतीनाम् एतच्चक्षुरिति याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति । तत्रापि विज्ञायते हि—"एष वै विश्वेषां देवानां चक्षुः"—इति ॥ १२ । १६ । १ ॥

## पूषा ॥ १० ॥

**अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति ॥ २ ॥ १६ ॥**

"अथ" "यत्" यदा "रश्मिपोषम्" आपूर्णस्तेजसा रश्मीन् सूर्यः "पुष्यति" बिभर्ति, "तत्" तदैव "पूषा( १० ) भवति" ॥१२ । १६ । २ ॥

**तस्यैषा भवति—॥**

"तस्य एषा भवति"—॥ *

**"शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।**
**विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु॥"**

**शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यद्विषमरूपे ते अहनी कर्म द्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु ॥ १ ॥ १७ ॥**

"शुक्रन्ते अन्य० ( ऋ० सं० ४, ८, २४, १ । सा० सं० छ० आ० १, २, ३, ३ )"—इति । भरद्वाजस्यार्षम् । चातुर्मास्येषु विनियोगः, पौष्णे हविषि ॥ हे "पूषन्!" "शुक्रम्" "अन्यत्" "ते" तव रूपं यल्लोहितम्, अन्यत्तव रूपं शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि । "यजतं" "यज्ञियं" यज्ञार्हम्, अन्यत् अयज्ञियमयज्ञार्हमन्यत् । भगांशरूपेण हि नायमिज्यते, विज्ञायते हि—"तस्मादेतौ भगांशौ यज्ञे न यजन्ते"—इति । किंच, "विषुरूपे" भवतः, एते शुक्लकृष्णे रूपे "अहनी" अहोरात्रे, कर्मणा—उदयेन शुक्लमहः करोषि, अस्तमयेन कृष्णम् । "द्यौरिवासि" यथा द्यौरावृत्य सर्वं वर्तते, एवं त्वमपि । किंच, "विश्वाः हि मायाः" सर्वाः प्रज्ञाः प्रज्ञावतां त्वम् "अवसि" पालयितृत्वात्पालयसि । उद्यन् अनुगृह्णासि हे "स्वधावः"

* अत्र षोडशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"अब्रवन्" ! पूषन् ! यं त्वामेवमादिगुणयुक्तमद्राक्ष्म, तव तस्य "भद्रा" भन्दनीया स्तुत्या "रातिः" दानम् "इह" अस्मिन् कर्मणि अस्मान् प्रति "अस्तु"—इत्येतदाशास्महे ॥ १२ । १७ । १ ॥

तस्यैषापरा भवति—॥

"तस्य एषा अपरा भवति" । [सा पुनः किमर्थम् ? इति,—पथि रक्षितृत्वे पूष्णोऽधिकारः, तत्परिप्रख्यापनार्थम् । अथवा—"इयं वै पूषा"—इति विज्ञायते, तद्दर्शनार्थम् ]—॥ *

"प॒थस्प॑थः॒ परि॑पतिं वच॒स्या काम॑न कृ॒तो अ॒भ्या॑नड॒र्कम् ।
स नो॑ रासच्छु॒रुध॑श्च॒न्द्राग्रा॒ धियं॑धियं सीषधाति॒ प्र पू॒षा ॥"

पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानडर्कमभ्यापन्नोऽर्कमिति वा स नो ददातु चायनीयाग्राणि धनानि कर्मकर्म च नः प्रसाधयतु पूषेति ॥ १ ॥

"पथस्पथः परिपतिं" (ऋ० सं० ७, १, ८, ८ । य० वा० सं० ३४, ४१ )"—इति । ऋजिश्वन आर्षम् । पौष्णे हविषि पञ्चमेऽहनि व्यूढे विनियोगः ॥ "पथस्पथः" सर्वमार्गाणामित्यर्थः । किम् ? इति—"परिपतिम्" "अधिपतिं" "वचस्या" "वचनेन" स्तुत्या "कामेन" स्वेन, पूषणं कामेनैव प्रत्यभिमुखीकृत्य "अर्कम्" अहम् "अभ्यानट्" स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोति । सोऽभिव्याप्तः सन् "नः" अस्मभ्यं "रासत्" "ददातु" । किम् ? "शुरुधश्चन्द्राग्राः" शुचं संरुन्धन्ति तानि धनानि, "चायनीयाग्राणि" अभिपूजितागमानि धर्म्य आगमो येषाम् । किंच, तैर्धनैर्धर्मलुब्धैः "धियंधियं सीषधाति" साधयति "प्रपूषा" "कर्मकर्म"अस्माकम्, इष्टिपशुसोमादिलक्षणं"प्रसाधयतु पूषा" यागायाविघ्नेनोपनामयतु इत्यर्थः॥१२।१८।१॥

विष्णुः ॥ ११ ॥

अथ यद्विषितो भवति तद्विष्णुर्भवति, विष्णुर्विशतेर्वा व्यश्नोतेर्वा ॥ २ ॥ १८ ॥

---

* अत्र सप्तदशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषाऽपरा" इत्यतः प्रागुचिता ॥

[ "विष्णुः ( ११ )"—इति वक्तव्यम् । ] "अथ" "यत्" यदा "विषितः" व्याप्तोऽयमेव सूर्य्यो रश्मिभिः "भवति" "तत्" "तदा" "विष्णुर्भवति"। "विशतेर्वा" यदाविष्टः प्रविष्टः, सर्वतो रश्मिभिर्भवति तदा विष्णुर्भवति । "व्यश्नोतेर्वा" विपूर्वस्य अश्नोतेः, यदा रश्मिभिरतिशयेनायं व्याप्तो भवति, व्याप्नोति वा रश्मिभिरयं सर्वम्, तदा विष्णुरादित्यो भवति ॥ १२ । १८ । २ ॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूळ्हमस्य पांसुरे ॥"

यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ॥ समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः ॥ समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यते ॥

अपि वोपमार्थे स्यात् समूळ्हमस्य पांसुल इव पदं न दृश्यत इति ॥

पांसवः पादैः सूयन्त इति वा, पन्नाः शेरत इति वा, पिंशनीया भवन्तीति वा ॥ १ ॥ १९ ॥

"इदं विष्णु० (ऋ० सं० १, २, ७, २ । य० वा० सं० ५, १५ । सा० सं० उ० आ० ८, २, ५, २ । अथ० सं ७, २६, ४ )"—इति । मेधातिथेरार्षम् । प्रायश्चित्ते आज्यासादने च विनियोगः ॥ "यदिदं" किञ्चिद्विभागेनावस्थितं "तद्विक्रमते" "विष्णुः" आदित्यः । कथमिति ? यत आह—"त्रेधा निदधे पदम्" "निधत्ते पदम्" निधानं पदैः । क्व ? तत्रै तावत्—"पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः" । पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्किञ्चिदस्ति तद्विक्रमते, तदधितिष्ठति, अन्तरिक्षे विद्यु-

* अत्राष्टादशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥
१ 'पंसनीया भवन्तीति वा' ॥ २ 'निदधात् पदैः' ॥ ३ 'तद् तावत्' ॥

दात्मना, दिवि सूर्यात्मना। यदुक्तम्– "तमू अकृण्वन् त्रेधा भुवे कम् ( ऋ० सं० ८, ४, ११, ५ )"–इति। "समारोहणे" उदयगिरावुद्यन् पदमेकं निधत्ते, "विष्णुपदे" माध्यन्दिनेऽन्तरिक्षे, "गयशिरसि" अस्तङ्गिरौ–"इत्यौर्णवाभः" आचार्यो मन्यते एवम्। "समूळ्हमस्य पांसुरे"। अस्मिन् "प्यायने" एतस्मिन् "अन्तरिक्षे" सर्वभूतवृद्धिहेतौ यन्मध्यन्दिनं "पदम्" विद्युदाख्यम्, तत् "समूळ्हम्" अन्तर्हितं "न" नित्यं "दृश्यते"। तदुक्तम्–"स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनम्"–इति।

"अपि वोपमार्थे स्यात्,–समूळ्हमिव पांसुले पदं न दृश्यत इति" यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वात् न दृश्यते, एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते, नावतिष्ठत इत्यर्थः॥

"पांसुरे"–इति रो मत्वर्थः।

अथ "पांसवः" कस्मात्? ते हि "पादैः सूयन्ते" जन्यन्त इत्यर्थः। अथवा– "पन्नाः शेरत इति"! अथवा–"पिंशनीयाः" ध्वंसनीयाः ध्वंसनार्हाः ते "भवन्ति" तदाकीर्णस्य दुर्दर्शीकत्वात्॥ १२। १९। १॥: *

## विश्वानरः॥ १२॥

### विश्वानरो व्याख्यातः॥ १॥ २०॥

"विश्वानरः (१२)" वक्तव्यः। स पुनरेषः "व्याख्यातः" अभिधानव्युत्पत्तितः,– "प्रत्यृतः सर्वाणि भूतानि ( ७। २१। १ )"–इति, इह तु नियमतो द्युस्थानः॥ १२। २०। १॥

### तस्यैष निपातो भवत्यैन्द्र्यामृचि–॥

"तस्यैष निपातो भवत्यैन्द्र्यामृचि"–। *

"विश्वानरस्य वस्पतिमनानतस्य शवसः। वः पतिम्
एवैश्च चर्षणीनामूती हुवे रथानाम्॥"

---

* अत्रैकोनविंशखण्डसमाप्तिर्बोध्या॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ द्वादशा ( सप्तदशा )ऽध्यायस्य द्वितीयः पादः॥ १२। २॥" इति तूपलभ्यते॥

* अत्र विंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैष निपातो भवत्यैन्द्र्यामृचि" इत्यतः प्राक्पुषिता॥

विश्वानरस्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्व कामैरयनैरवनैर्वा, चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन् यज्ञे ह्वयामि ॥ १ ॥

"विश्वानरस्य वस्पति० ( ऋ० सं० ६, ५, १, ४ । सा० सं० छ० आ० ४, २, ३, ५ )"–इति । "आ त्वा रथं यथोतये"–इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे निष्केवल्ये विनियोगः ॥ "विश्वानरस्य" "आदित्यस्य" "अनानतस्य" "शवसः" अनानतज्योतिर्बलस्य अनभिभूतप्रकाशस्यान्यैर्ज्योतिर्भिः बलपतिं पातारं रक्षितारमिन्द्रम् अस्मिन् यज्ञे "वः" युष्माकमर्थसिद्धये आह्वयामः । केन? इति–"एवैश्व" "कामैरयनैः" "चर्षणीनां" "मनुष्याणाम्" "अवनैः" गमनैः तं प्रति निमित्तभूतैः । "ऊती" "ऊत्या च" "पथा" येन मार्गेण रंहणा रश्मय इमं लोकमागच्छन्ति, तेन पथा भवतामहमिन्द्रमाह्वयामि ॥

"विश्वानरस्य वस्पतिम्"–इति पतिशब्देनेन्द्रवाचिना व्यपदेशात् षष्ठ्यन्तस्य विश्वानरशब्दस्य द्युस्थानवाचित्वे सामर्थ्यमुपपद्यते ॥ १२ । २१ । १ ॥

## वरुणः ॥ १३ ॥

वरुणो व्याख्यातः ॥ २ ॥ २१ ॥

"वरुणः(१३)" "व्याख्यातः(१०।३।२)"निर्वचनात्,इह त्वादित्यः॥१२।२१।२॥

तस्यैषा भवति–॥

"तस्य एषा भवति"–॥ *

"येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥"

भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोळ्हा तत्सम्पाती भुरण्युरनेन पावकख्यानेन । 'भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि' । तत्ते वयं स्तुम इति वाक्यशेषः ॥ १ ॥ २२ ॥

* अनेकविंशखण्डस्समाप्तिद्योतते सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"येनां पावक चक्षसा० ( ऋ० सं० १, ४, ७, ५ । मा० सं० आर० आ० ५ द० ११ )"-इति । प्रस्कण्वस्यैताः सर्वा आर्षम् । आश्विने विनियोगः ॥ "भुरण्युरिति क्षिप्रनाम"। "भुरण्युः" । क्षिप्रगामी "शकुनिः" । स पुनरयमेव योऽधियज्ञे अग्निश्चीयते स सुपर्णः । विज्ञायते हि-"स्वर्गाय वै लोकायाग्निश्चीयते"-इति । "तत्सम्पाती" तेन युक्तोऽग्निचिदुपात्तापूर्वसम्भारः । स्वर्गं लोकं प्रति तदेव शीघ्रं यः पतति, गन्तुमिच्छति, स भुरण्यति । हे भगवन्! "वरुण !" "पावक" पावयितः ! "येन" "ख्यानेन" दर्शनेन अनुग्राहकेण "त्वं" पुण्यकृतो "जनाननु भुरण्यन्तं" पूर्वेषां[1] पुण्यकृतां मार्गेण देवयानेन क्षिप्रं गच्छन्तमनुपश्यसि । किं तस्य दर्शनस्येति अपरिसमाप्तं वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमध्याजहार-"तत्ते" दर्शनमनुग्राहकं "वयं स्तुमः"-इति वाक्यशेषः ॥ १२ । २२ । १ ॥

## अपि वोत्तरस्याम्-॥

"अपि वोत्तरस्याम्" । अपि चैवं यथोक्तमपि चैवमन्यथा स्यात् । कथमिति ? यथोत्तरा ऋक्, तयापि सहैकवाक्यतोपेक्ष्या । कथम् ? इति, यतः पुनः पठति-॥ *

येनां पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥
वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः ।
पश्यञ्जन्मानि सूर्य ॥"

व्येषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानो अक्तुभी रात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य॥ १ ॥ २३ ॥

"येना पावक०"-इति । "येन" हे "पावक !" "वरुण !" "चक्षसा" "ख्यानेन" "जनान् अनु भुरण्यन्तं पश्यसि"-तेनैव ख्यानेन तयैव ख्यात्या प्रज्ञया युक्तस्त्वं "वि द्यामेषि" विविधमेषि अतिशयेन वा एषि । किमेषि ? द्युलोकम् । "रजः" "च" "पृथु" "महान्तं लोकम्" अन्तरिक्षम् । किं कुर्वाणः ? "अहा" "अहानि" महान्तं लोकम् अन्तरिक्षं च "मिमानः" कुर्वन् "अक्तुभिः"

---

१ 'सर्वेषां' ॥ * अत्र द्वाविंशखण्डसमाप्तिर्दृश्यते, सा "अपि वोत्तरस्याम्" इत्यतः प्रागुचिता ॥

रात्रीभिः "सह" "पश्यन्" च "जन्मानि". "जातानि" सर्वभूतान्यनुग्राहकत्वेन "सूर्यः" ॥ १२ । २३ । १ ॥

**अपि वा पूर्वस्याम्—॥**

अपि वोत्तरस्यामेकवाक्यता स्यात् "अपि" तर्हि "पूर्वस्याम्" अप्युपेक्ष्या । कथम् ? इति, यतः पठन्ति—॥ *

**"येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑ ।**
**त्वं व॑रुण॒ पश्य॑सि ॥**
**प्र॒त्यङ्दे॒वानां॒ विशः॑ प्र॒त्यङ्ङुदे॑षि॒ मानु॑षान् ।**
**प्र॒त्यङ् विश्वं॒ स्व॑र्दृ॒शे ॥"**

**प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं ज्योतिरुच्यते । प्रत्यङ्ङिदं सर्वमभिविपश्यसीति ॥ १ ॥ २४ ॥**

"येना॑ पावक॒०"—इति । हे "वरुण !" "पावक !" "येन" ख्यानेन ययैवानुग्रहबुद्ध्या "जनान् अनु भुरण्यन्तं पश्यसि"—तयैव ख्यात्या प्रज्ञया युक्तः "प्रत्यङ् देवानां" "विशः" या विशस्ताः कृत्वा पुरस्तात्तासाम्[2] "उदेषि" "मानुषान्" चैवमेव प्रत्यङ् कृत्वा तेषामपि पुरस्तादेव उदेषि । किं बहुना, हे "स्वः" आदित्य ! "प्रत्यङ्" "इदं सर्वम्" आत्मनः कृत्वा पुरस्तादुद्यन् "सर्वमभिविपश्यसि" ॥ १२ । २४ । १ ॥

**अपि वैतस्यामेव—॥**

न चेत् पूर्वस्यामुत्तरस्यां वा एकवाक्यता स्यात् "अपि वा" तर्हि "एतस्यामेव"—॥ *

**"येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑ ।**
**त्वं व॑रुण॒ पश्य॑सि ॥"**

**तेन नो जनानभिविपश्यसि ॥ १ ॥**

कथमिति ? यतः पुनः पठति—"येना॑ पावक॒०"—इति । हे "पावक" वरुण !

---

१ 'पठति' ॥ * अत्र त्रयोविंशखण्डसमाप्तिर्दृश्यते, सा "अपि वोत्तरस्या" इत्यतः प्रागुचिता ॥ २ 'स्तात्तस्याम्' ॥ * अत्र चतुर्विंशखण्डसमाप्तिर्दृश्यते, सा "न चेत् पूर्वस्यामु" इत्यतः प्रागेवोचिता ॥

"येन" ख्यानेन यथैवानुग्राहकप्रज्ञया "जनाननु भुरण्यन्तं पश्यसि त्वम्" पुण्यकारिणः, तेनैव ख्यानेन तथैवानुग्रहकारकबुद्ध्या अस्माकं जनानभिविपश्यसि ॥

को विशेषः प्रथमादध्याहारात् ? प्रथमे हि तत्ते वयं स्तुम इति स्तुत्या परिसमापितम्, इह पुनराशिषा । "तेन नो जनानभिविपश्यसि" स्तुत्याशिषोः सम्बन्धनित्यत्वाद्वाक्यस्य । एष साकाङ्क्षाणां मन्त्राणामेकवाक्यताप्रकार उपप्रदर्शितः॥ १२।२५।१॥

## केशी ॥ १४ ॥

केशी केशा रश्मयस्तैस्तद्वान् भवति, काशनाद्वा, प्रकाशनाद्वा ॥ २ ॥ २५ ॥

"केशी ( १४ )"—इति वक्तव्यम् । अत्र "केशा रश्मयः, तैस्तद्वानादित्यः" यो मध्यन्दिने भवति । "काशनाद्वा" प्रकाशनादित्यर्थः । रश्मयोऽपि केशाः, काशनादेव ॥ १२ । २५ । २ ॥

तस्यैषा भवति--॥

"तस्य एषा भवति"—॥ *

"केश्य१ग्निं केशी विषं केशी बिभर्त्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥"

केश्यग्निं च विषं च । विषमित्युदकनाम—विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य, विपूर्वस्य वा सचतेः । द्यावापृथिव्यौ च धारयति केशीदं सर्वमिदमभिविपश्यति, केशीदं ज्योतिरुच्यत इत्यादित्यमाह ।

अथाप्येते इतरे ज्योतिषी केशिनी उच्येते । धूमेनाग्नी रजसा च मध्यमः ॥ १ ॥ २६ ॥

"केश्य१ग्निम् ( ऋ० सं० ८, ७, २४, १ )"—इति । जूतेरार्षम् ॥ "केश्यग्निं बिभर्त्ति" वर्षेणोदकेनौषधीरभिनिष्पादयन्नाहुतिद्वारेण "केशी विषं बिभर्त्ति" ।

---

१ 'तथैवानु' ॥ * अत्र पञ्चविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

"विषमुदकम्" "विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य, विपूर्वस्य वा सचतेः" सर्वत्र ह्यतिशयेन यत्सक्तमिति, तदपि केशी बिभर्ति । "रोदसी" अपि च केश्येव बिभर्ति तन्निवासीनि भूतानि अनुगृह्णाति । अपि चायं स्वरादित्यः "केशी विश्वमिदम्" "सर्वमिदम् अभिविपश्यति" यथाभिद्रष्टव्यम् । कोऽयं केशीति ? यत आह दर्शयन्नेवादित्यम्–"केशीदं ज्योतिरुच्यते"–इति ॥

अतः परं विचारः–"अथाप्येते इतरे ज्योतिषी" प्रथम–माध्यमिके "केशिनी उच्यते"[1] । तत्र तावत् "धूमेनाग्निः" केशी, स हि तस्य प्रकाशनाय निगूढस्यापि[2] भवति । "रजसा च[3] मध्यमः" असावप्यमूर्त्तत्वात् अप्रकाशः सन् रजसोद्धूतेन प्रकाशते–असौ वायुरागच्छतीति,–उदकेन च वैद्युतः ॥ १२ । २६ । १ ॥

## केशिनः ॥ १९ ॥

## तेषामेषा साधारणा भवति–॥

"तेषां" त्रयाणामपि केशिनाम्–( १५ ) "एषा" "साधारणा" साधारण्येन प्रधानस्तुतिः "भवति"–॥ *

"त्र्यः केशिन ऋतुथा विचक्षते संवत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥"

त्रयः केशिन ऋतुथा विचक्षते कालेकालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ॥ १ ॥

"त्र्यः केशिन० (ऋ०सं०२,३,२२,४, अथ० सं० ९,२९, ६)"–इति । दीर्घतमस आर्षम् । महाव्रते वैश्वदेवे शस्यते ॥ य एते "त्रयः" "केशिनः" अग्निवायुसूर्याः "ऋतुथा" कालेकाले "विचक्षते" यथाकालम्[5] "अभिविपश्यन्ति" स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति, "एषाम्" "एकः" पृथिवीस्थानः "अग्निः" "संवत्सरे" "पृथिवीं" "वपते" "दहति" इत्यर्थः । तथा हि सा कर्मण्या सम्प-

---

१ 'उत्तरे'–इति मूले व्याख्यायां च पाठः । २ 'निरूढस्यापि'॥ ३ 'तु' ॥ ४ 'रजसोद्भूते'॥

* अत्र षड्विंशखण्डसमाप्तिर्दृश्यते, सा "तेषां त्रयाणामपि" इत्यतः प्रागुचिता ॥

५ 'पर्वकालम्' ॥

च्यते । "विश्वमेको अभि चष्टे" स्वाधिकारयुक्तैः "कर्मभिः" "अभिविपश्यति" अनुगृह्णाति "आदित्यः" । "ध्राजिरेकस्य ददृशे" । "गतिरेकस्य" रजसोद्भूतेन पार्थिवेन उदकेन वा "दृश्यते" "न रूपम्" "मध्यमस्य" ॥ १२ । २७ । १ ॥

## वृषाकपिः ॥ १६ ॥

अस्तं गच्छन्नादित्य उच्यते।

अथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति वृषाकम्पनः ॥ २ ॥ २७ ॥

"अथ यद्रश्मिभिरभिप्रकम्पयन्नेति" । अथ यत् यदा आदित्यः रश्मिभिः उपसंहृतैरुपसम्पन्नैर्भूतानि "अभिप्रकम्पयन् एति" "तत्" तदा "वृषाकपिः ( १६ ) भवति" वर्षिता चावश्यायानां कम्पनश्च भूतानाम्, सर्वो हि भगवत्यदृश्ये तद्भयात् अभिप्रकम्पते ॥ १२ । २७ । २ ॥

तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

"पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः॥"

पुनरेहि वृषाकपे सुप्रसूतानि यः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥ १ ॥

स्वप्नः स्वापो निद्रा।

"पुनरेहि वृषाकपे० ( ऋ० सं० ८, ४, ४, ६ )"—इति । वृषाकपेरार्षम् । पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता ॥ हे "वृषाकपे" भगवन् ! "यः एषः" त्वं "स्वप्ननंशनः" स्वप्ननाशनः "स्वप्नान्" "उदयेन" "नाशयसि" "सोऽस्तमेषि पथा पुनः" । यश्च त्वं "विश्वस्मात्" "सर्वस्मात्" जगतः "इन्द्रः" ईश्वरः "उत्तरः" उद्धततरः, स त्वं "पुनः" "एहि" आयाहि, उदयं प्राप्नुहि । तव आवां "सुविता" "सुप्रसूतानि" सुप्रवृत्तानि शोभनमर्थमुद्दिश्य जगतोऽनुग्रहमे-

---

* अत्र सप्तविंशखण्डस्य निर्दिश्यते या "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

तानि शोभनानि "कर्माणि" प्रवृत्तानि "कल्पयावहै" सगुणानि कुर्वः,—त्वमुदयेनाहमनुष्ठानेनेति ॥ १२ । २८ । १ ॥

## यमः ॥ १७ ॥

### यमो व्याख्यातः ॥ २ ॥ २८ ॥

"यमः ( १७ )" वक्तव्यः, स च पुनः "व्याख्यातः ( १० । १९ )" निर्वचनतः, इह त्वादित्योऽभिधेयः ॥ १२ । २८ । २ ॥

### तस्यैषा भवति—॥

"तस्य एषा भवति"—॥ *

[1]"यस्मिन्वृक्षे सुपलाशे देवैः सम्पिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥"

यस्मिन् वृक्षे सुपलाशे स्थाने वृतक्षये वापि वोपमार्थे स्याद् वृक्ष इव सुपलाश इति वृक्षो व्रश्चनात्पलाशं पलाशनाद्देवैः सङ्गच्छते यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा, पालयिता वा, पुराणाननुकामयेत ॥ १ ॥

"यस्मिन् वृक्षे सुपलाशे० ( ऋ० सं० ८, ७, २३, १ )"—इति । कुमारस्य यामायनस्यार्षम् ॥ "यस्मिन् वृक्षे" आदित्ये, स हि स्वगत्या कालम् अतिक्रामयन् सर्वभूतानामायूंषि क्षपयति । "वृश्चतीति वृक्षः" । "वृतक्षये वा" पुण्यकृद्भिर्वृते निवासे इत्यर्थः । "सुपलाशे" सुष्ठु पराशीर्णमले दीप्तिमति "देवैः" सह "रश्मिभिः" "सम्पिबते" "सङ्गच्छते" अस्तं गच्छन्नादित्यः । तत्र किमिति ? "अत्र" "नः" अस्मान् पुण्येन कर्मणा विद्यया च तत्प्रापिकया गतात्मनः "पुराणान्" इव तन्निवासिनः "अनु" "वेनति" वेनतु "कामयेत" कामयतु सम्प्रीणयत्वित्यर्थः ॥

"वृक्षे इव सुपलाशे"—इति, ऐतिहासिकपक्षे स्वगृहमुपागतानस्मान् सुपलाशवृक्षप्रख्यसुखनिवासे पितृराजो यमः पुराणान् इव तल्लोकनिवासिनः पितॄन् अनुकामयतु । अस्मिन् पक्षे देवैः सम्पिबत इति तदनुचारिणो गृह्यन्ते देवा इति ॥ १२।२९।१ ॥

---

* अत्राष्टाविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषा भवति" इत्यतः प्रागुचिता ॥

१ 'कुमारस्येयमार्षम्' ॥

## अज एकपात् ॥ १८ ॥

**अज एकपादजन एकः पादः ।**
**एकेन पादेन पातीति वा ।**
**एकेन पादेन पिबतीति वा ।**
**एकोऽस्य पाद इति वा ।**
**"एकं पादं नोत्खिदति" इत्यपि निगमो भवति॥२॥२९॥**

"अज एकपात् ( १८ )"–इति वक्तव्यम् । स पुनः अयमादित्यः नित्यम्, "अजनः" गमनः "एकः" च "पादः" ब्रह्मणः ॥ विज्ञायते हि–"अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः" इति ।

"एकेन पादेन पातीति वा" । सर्वमिदं जगत् एकेनांशेनानुप्रविश्य पाति रक्षति स्वापकाले प्राणात्मनाऽन्नं पचन्नजनश्चेत्यज एकपात् ।

"एकेन पादेन पिबतीति वा" । एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्यजनश्चेत्यज एकपात् ॥

अथ "वा" अजनो गमनः, "एकोऽस्य पाद इति" अज एकपात् । जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः ।

निगमोऽपि हि भवत्येवास्मिन्नर्थे–

"एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन् ।
स चेत्तमुद्धरेदङ्ग न मृत्युर्नामृतं भवेत्" ॥

"एकम्" आत्मनः "पादम्" अंशं "नोत्खिदति" नोद्धरति इति आदित्यो 'हंसः' महतस्तमसो वाध्वनो वा हन्ता । कुतः पुनर्नोत्खिदति ? 'सलिलात्' सन्मात्रे ब्रह्मणि लीनादेतस्माज्जगतः, 'उच्चरन्' अहन्यहनि उद्यन्नित्यर्थः । 'स चेत्' 'तं' जीवभूतमात्मनः पादमेतस्मात् जगतः 'उद्धरेत्' ततस्तदुद्धरणसमकालमेव 'अङ्ग' क्षिप्रं 'न मृत्युर्नामृतं भवेत्'–सर्वमिदमव्यपदेश्यं सदैव स्यादित्यर्थः ॥१२।२९।२॥

## तस्यैष निपातो भवति वैश्वदेव्यामृचि–॥

"तस्य एष निपातो भवति" साधारण्येन "वैश्वदेव्यांमृचि"–॥ *

---

१ 'सदेव' ॥ * अत्रैकोनविंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैष निपातो भवति" इत्यतः प्रागुचिता ॥

"पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।
विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥"

पविः शल्यो भवति यद्विपुनाति कायं तद्वत्पवीरमायुधं तद्वानिन्द्रः पवीरवान् । पवीरं शल्यवद् (आयुधम्), तेन तद्वान् ।

"अतितस्थौ पवीरवान् ॥" इत्यपि निगमो भवति ।

तद्देवता वाक् पावीरवी पावीरवी च दिव्या वाक्, तन्यतुस्तनित्री वाचोऽन्यस्या अजश्चैकपाद्दिवो धारयिता च सिन्धुश्चापश्च समुद्रियाः च सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृणवन्तु वचनानीमानीति ॥ १ ॥

"पावीरवी तन्यतु॰ ( ऋ॰ सं॰ ८, २, ११, ३ )"—इति । वसुकर्णस्यार्षम् । वैश्वदेवे शस्त्रे विनियोगः ॥ "पविः शल्यो भवति" । कस्मात् ? "यद्" "विपुनाति" विदारयति "कायम्" तेन शल्येन "तद्वत् पवीरमायुधम्" । रो मत्वर्थे । तेन शल्य-वता आयुधेन "तद्वानिन्द्रः पवीरवान्" ॥

यथा चैतदेवं तथैव निगमः—"अतितस्थौ पवीरवान्"—इति ।

"यो जनान् महिषाँ इवातितस्थौ पवीरवान् ।
उतापवीरवान् युधा ॥ ( ऋ॰ सं॰ ८, १, २४, ३ )"—इति ।

विप्रबन्धोरार्षम् ॥ 'यः' इन्द्रः 'महिषान्' अतिमहतोऽप्यसुरजनान् 'युधा' युद्धेन "अति" अतीत्य, "तस्थौ" तिष्ठति "पवीरवान्" आयुधवान् । अपि च 'अपवीरवान्' अनायुध इत्यर्थः । सायुधो निरायुधश्च नित्यमसुरजनान् महतोऽपि अतितिष्ठति यः, स इदं नामास्माकं करोत्विति ॥

"तद्देवता वाक् पावीरवी" स इन्द्रो यस्या माध्यमिकाया वाचो देवता, सैन्द्री वाक् पावीरवी, "तन्यतुः" "तनित्री" तनयित्री "वाचोऽन्यस्याः" । तदुक्तं—"तां विश्वरूपाः पशवो वदन्ति" । सा च "दिव्या वाक्" "अजश्चैकपात् दिवो धार-

१ 'चैवं मन्त्रदृगाह' ॥

यिता"। एतदत्र द्युस्थानत्वम् अजस्यैकपदः । "सिन्धुश्च" नदः, "आपश्च" समुद्रियाः, "विश्वे देवाः" "सर्वे च देवाः" "शृणवन्" "शृण्वन्तु" "इमानि वचनानि" स्तुतिलक्षणानि । किं वचनान्येव ? न, किं तर्हि ? "सह धीभिः" "कर्मभिः" हविर्दानयुक्तैः सहितानि । "सरस्वती" "च" शृणोतु "पुरन्ध्या" "सह" बहुधात्र्या, माध्यमिकया वाचा—इत्येतदाशास्महे ॥

निर्वचनस्यास्यामृच्युत्तरे पादे सम्यक् पाठोऽन्वेष्यः ॥ १२ । ३० । १ ॥

## पृथिवी ॥ १९ ॥

### पृथिवी व्याख्याता ॥ २ । ३० ॥

"पृथिवी ( १९ )" "व्याख्याता ( १ । १३ )" ॥ १२ । ३० । २ ॥

### तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि—॥

"तस्या एष निपातो भवति" दिवः पृथिव्याः "ऐन्द्राग्न्यामृचि"—न स्तुत्यत्वेन, किं तर्हि ? नैघण्टुकत्वेन केवलम्—॥*

"यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुतस्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥"

### इति सा निगदव्याख्याता ॥ १ ॥

"यदिन्द्राग्नी परमस्यां० ( ऋ० सं० १, ७, २७, ३ )"—इति । कुत्सस्यार्षम् ॥ हे "इन्द्राग्नी!" "वृषणौ" "यद्" यदि युवां "परमस्यां पृथिव्यां" द्युलक्षणायाम्, यदि "मध्यमस्यां" मध्यमायामन्तरिक्षे, यदि "अवमस्याम्" अस्यामेव भूम्याम्, "उतस्थः" तथापि "परि आयातम्" अस्मान् प्रति पर्येत्य । "अथ सोमस्य पिबतम्" अभिषुतस्य स्वमंशमिति ॥ १२ । ३१ । १ ॥

## समुद्रः ॥ २० ॥

### समुद्रो व्याख्यातः ॥ २ ॥ ३१ ॥

"समुद्रः ( २० )" "व्याख्यातः ( २ । १० )" इह तु आदित्य इति विशेषः । अत्रापि "समुद्रवन्त्यस्मादापः"—इत्येवमादि तदेव निर्वचनम् ॥ १२।३१।२॥

---

* अत्र त्रिंशखण्डः समाप्तिं दर्श्यते, सा "तस्या एष निपातो भवति" इत्यत प्रागुचिता ॥

तस्यैष निपातो भवति पावमान्यामृचि—॥

"तस्य एषः" समुद्रस्य "निपातो भवति, पावमान्यामृचि"—॥ *

"पुवित्रवन्तुः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
मुहः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥"

पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचम् । मध्यमः पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म । महः समुद्रं वरुणस्तिरोन्तर्दधात्यथ धीराः शक्नुवन्ति, धरुणेषूदकेषु कर्मण आरभमारब्धुम्॥ १॥

"पुवित्रवन्तुः परि वाचं० (ऋ० सं ७, २, २९, ३)"—इति । पवित्रस्यार्षम् । प्रवर्ग्ये विनियोगः ॥ रश्मयः पवित्रवन्तोऽमुष्मादादित्यमण्डलात् प्रसृताः मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते, तत्संयोगात् "माध्यमिका देवगणाः" "पवित्रवन्तः" "रश्मिवन्तः" भवन्ति । ते च "माध्यमिकां" "वाचं" "परि" वार्यं "आसते" । सः "वरुणः" विद्युदाख्यो "मध्यमः" "पिता" पाता रक्षिता, "एषां" मरुत्प्रभृतीनां "प्रत्नः" "पुराणः" "व्रतं" "कर्म" तदधिकारयुक्तम् "अभिरक्षति" । कथमिति ? तदुच्यते,—"महः" महान् "वरुणः" मध्यमः, महान्तं वा "समुद्रम्" आदित्यं मेघजालेन यदा "तिरोदधाति" दुर्दिनं कृत्वा, वर्षति ओषधीषु, अथ "धीराः" धीमन्तः "धरुणेषु" "उदकेषु" "शेकुः" "शक्नुवन्ति" "कर्मणः" कृष्यादेः, वैदिकस्य वा "आरभम्" "आरब्धुम्" प्रारम्भम् इत्येवमभिरक्षति । तेषां माध्यमिकानां व्रतं यदि ह्यसावावृणोति मेघैस्ततस्तेषामधिकारप्रतिलम्भो भवति ॥ १२ । ३२ । १ ॥

अज एकपाद्व्याख्यातः ॥ २ ॥

"अज एकपाद्" "व्याख्यातः" इह तूत्तमः ॥ १२ । ३२ । २ ॥

पृथिवी व्याख्याता ॥ ३ ॥

"पृथिवी" "व्याख्याता" ॥ १२ । ३२ । ३ ॥

---

* अत्रैकत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्य एषः समुद्रस्य" इत्यतः प्रागुचिता ॥

**समुद्रो व्याख्यातः ॥ ४ ॥ ३२ ॥**

"समुद्रः" "व्याख्यातः" ॥ १२ । ३२ । ४ ॥

**तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि–॥**

"तेषामेष निपातो भवति" स्तुतिसाधारण्येन "अपरस्यां बहुदेवातायामृचि"–॥*

**"उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।**
**विश्वे देवा ऋतावृधो हुवाना स्तुता मन्त्राः कविशस्ता अवन्तु ॥"**

**अपि च नोऽहिर्बुध्न्यः शृणोत्वजश्चैकपात् पृथिवी च, समुद्रश्च, सर्वे च देवाः, सत्यवृधो वा, यज्ञवृधो वा, हूयमाना मन्त्रैः स्तुता मन्त्राः कविशस्ता अवन्तु मेधाविशस्ताः ॥ १ ॥**

"उत नोऽहिर्बुध्न्यः शृणोत्व०" ( ऋ० सं० ४, ८, १०, ४ । य० वा०सं० ३४, ५३)"–इति । ऋजिश्वन आर्षम् । आग्निमारुते विनियोगः ॥ "उत नः" अप्यस्माकम् "अहिर्बुध्न्यः" "शृणोतु" । अपि "अज एकपाद्" अपि च "पृथिवी" अपि च "समुद्रः" "विश्वे देवाः" सर्वे एते, एवमादयो देवाः "ऋतावृधः" "सत्यवृधः" "यज्ञवृधः" उदकवृधो वा "हुवानाः" आ"हूयमानाः" "मन्त्रैः" यजुर्मयैः, "स्तुताः" च स्तोत्रैः सामभिः, "कविशस्ताः" कविभिश्च नैघण्टुकत्वेन मेधाविभिः शस्त्रैश्च शस्ताः स्तुतास्तेऽस्मानवन्तु–इत्येतदाशास्महे ॥ १२ ३३ । १ ॥

**दध्यङ् ॥ २१ ॥**

**दध्यङ् प्रत्यक्तो ध्यानमिति वा ।**

**प्रत्यक्तमस्मिन् ध्यानमिति वा ॥ २ ॥**

["दध्यङ्" "मनुः" "अथर्वा"–इति त्रित्वपक्षे आदित्य एवैते तद्गुणयोगाद् भवन्ति, द्युस्थाने समाम्नानात्; पृथक्त्वे पुनर्द्युस्थानाः तत्सहचारिण एते ऋषयः ॥ ]

---

* अत्र द्वात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेष निपातो भवति" इत्यतः प्रागुचिता ॥

"दध्यङ्-( २१ )" "प्रत्यक्तो ध्यानम्" प्रतिगतो ध्यानमिति, ध्यानारम्भणे ह्येष उक्तः स्वमधिकारमनुतिष्ठति ।

अथवा-"प्रत्यक्तमस्मिन् ध्यानमिति वा" अधिकरणं कारकम्, तथा हि तस्मिन् ध्यानकार्यं सफलं लक्ष्यत इति ॥ १२ । ३३ । २ ॥

## अथर्वा ॥ २२ ॥

## अथर्वा व्याख्यातः ॥ ३ ॥

"अथर्वा (२२.)" "व्याख्यातः (११ । १८ ।)" निर्वचनतः, न ह्ययं स्वस्मादधिकारात् थर्वति, न कदाचित् स्वमधिकारं मुञ्चति ॥ १२ । ३३ । ३ ॥

## मनुः ॥ २३ ॥

## मनुर्मननात् ॥ ४ ॥ ३३ ॥

"मनुः (२३)" अयं "मननात्" न हि तदस्ति यदयं न मनुते ॥ १२।३३।४॥

## तेषामेष निपातो भवत्यैन्द्र्यामृचि-॥

"तेषामेष निपातो भवति ऐन्द्र्यामृचि"-॥ *

"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन् ब्रह्माणि पूर्वथेन्द्र उकथा सम्ग्मतार्चन्ननु स्वराज्यम् ॥"

यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत तस्मिन् ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च सङ्गच्छन्तामर्चन्योऽनूपास्ते स्वाराज्यम् ॥ १ ॥ ३४ ॥

"यामथर्वा० (ऋ० सं० १, ५, ३१, ६)"-इति । गोतमस्यार्षम् । पार्ष्ठिके पञ्चमेऽहनि विनियोग ऐन्द्रे सूक्ते ॥ "याम्" "अथर्वा" "मनुः" "च" "पिता" "मानवानाम्" "दध्यङ्" "च" धियम् "अत्नत" "अतनिषत"। एतद्गुणविशिष्टोऽथमादित्यः, यत्तत्कर्माहोनिर्वृत्त्यादिलक्षणं तनोति, "तस्मिन्" सति "ब्रह्माणि" "अन्नानि" "उकथानि" च शस्त्राणि, "पूर्वथा" पूर्ववत्, "इन्द्रे" "समग्मत"

* अत्र त्रयस्त्रिंशत्खण्डसमाप्तिर्दृश्यते, सा "तेषामेष निपातः" इत्यतः प्रागुचिता ॥

"सङ्गच्छन्ताम्" समागच्छन्तु यज्ञेषु। किंलक्षणे इन्द्रे? इति, यत आह— "अर्चन्" "यः" इन्द्रः अभिपूजयते "स्वाराज्यम्" "अनु"— "उपास्ते" यथाशास्त्रमनुतिष्ठतीत्यर्थः ॥

पृथक्पक्षे आदित्यसहचारिण एते ऋषयः। तदा योऽयम्—य एते ऋषयः कर्म अतनिषत याज्ञम्, तस्मिन् ब्रह्माणि अन्नानि ऐन्द्रे पूर्ववत् समग्मत समागच्छन्तीति। शेषं समानमेवेति ॥ १२ । ३४ । १ ॥*

## अथातो द्युस्थाना देवगणाः ॥ १ ॥

"अथातो द्युस्थाना देवगणाः"—इति। एवमादि वक्तव्यम्। अतः परमेतद्देवोत्तमं ज्योतिर्गणशब्दाभिधेयत्वेन निर्वाच्यम्, एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तोऽभिष्टुवते, तदर्थं विशेषतः पुनरधिकारवचनम्—"अथातो द्युस्थाना देवगणाः" इति। द्यौरेषां स्थानं त इमे द्युस्थाना इति। के पुनस्ते? देवगणाः इति,—देवानां मित्रप्रभृतीनां गणाः ॥ पृथक्त्वपक्षे गणा इति बहुवचनमर्थवत् ॥ १२ । ३५ । १ ॥

## तेषामादित्याः प्रथमागामिनो भवन्ति ॥ २ ॥

"तेषामादित्याः प्रथमागामिनो भवन्ति"। ते कस्मात्? प्रत्यक्षत्वाच्छन्दस्य, 'सप्त ऋषयः' इत्येवमादीनां च परोक्षत्वात् ॥ १२ । ३५ । २ ॥

# आदित्याः ॥ २४ ॥

## आदित्या व्याख्याताः ॥ ३ ॥ ३५ ॥

"आदित्याः(२४)"ते पुनरभिधाननिर्वचनतो "व्याख्याताः (२।१३)"—"आदत्ते रसान्"—इत्यत्र। केवलं त्वत्र बहुवचनमिति विशेषः ॥ १२ । ३५ । ३ ॥

## तेषामेषा भवति—॥

"तेषाम्" आदित्यानाम् "एषा" प्राधान्यस्तुतिः "भवति" यां दृष्टेह द्युस्थाने गणाभिधानेन समाम्नातः—॥ *

---

१ 'इन्द्रे' ॥ * अत्र चतुस्त्रिंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ द्वादशा( सप्तदशा )ऽध्यायस्य तृतीयः पादः॥१२,३॥"इति तूपलभ्यते ॥ * अत्र पञ्चत्रिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामादित्यानाम्" इत्यतः प्रागुचिता ॥

"इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥"

घृतस्नूः घृतप्रस्नाविन्यः, घृतप्रस्नाविण्यः, घृतसारिण्यः,
घृतसानिन्य इति वा ।

आहुतीरादित्येभ्यश्चिरञ्जुह्वा जुहोमि चिरं जीवनाय,चिरं
राजभ्य इति वा, शृणोतु न इमा गिरो मित्रश्चार्यमा च
भगश्च बहुजातश्च धाता दक्षो वरुणोऽशश्च ॥

अंशोऽशुंना व्याख्यातः ॥ १ ॥

"इमा गिर आदित्येभ्यः० ( ऋ० सं० ३, ७, ६, १, । य० वा० सं० ३४, ५४ )"—इति । कूर्मस्य गार्त्समदस्य गृत्समदस्य वेयमार्षम्॥ "इमा गिरः" "घृतस्नूः। घृतमाहुतिलक्षणं याः प्रस्नुवन्ति प्रक्षरन्ति ताः घृतस्नूः । अथवा—"घृतप्रस्नाविण्यः" धात्वन्यत्वमर्थैकत्वम् । "घृतसानिन्यः" वा, घृतम् देवान् प्रति सानयन्ति सम्भाजयन्तीति तथा, सनोतेः सम्भजनार्थस्य । "घृतसारिण्यः" वा, "सृ गतौ"—इत्यस्य, देवान् प्रति घृतं याः सारयन्ति गमयन्तीति । ताभिः गीर्भिः, तैर्मन्त्रैः । "सनाद्राजभ्यः" "चिरं राजभ्यः" चिरन्तनेभ्यः सर्वलोकराजभ्यः, अथवा—सनादिति यावदायुषमनुत्सर्गेण "जुह्वा"जुहूसञ्ज्ञकेन पात्रेण "जुहोमि" । ताः पुनर्गिरोऽस्मदाशीर्युक्ताः, तत्समर्द्धनाय "शृणोतु" "नः" अस्माकं "मित्रः" "अर्यमा" "भगः" "च" "तुविजातः" "बहुजातश्च" "धाता" "दक्षः" "वरुणः" "अंशः" "च" ॥

तुवीति बहुनाम । सर्वविधातृत्वाद्बहुजन्मा धाता, यावदधिकारं जन्मेति ।

"अंशः अंशुना व्याख्यातः" ॥

प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्याः, शास्त्रातिगौरवभयात्तु न पृथक्पृथक् द्युस्थानत्वेन समाम्नाताः। ते त्वादित्यलिंगालिङ्गितेषु मन्त्रेषु पृथक्पृथक् उपेक्ष्याः,तत्स्तुतीनां पृथगपि विद्यमानत्वात् ॥ १२ । ३६ । १ ॥

सप्त ऋषयः ॥ २९ ॥

सप्त ऋषयो व्याख्याताः ॥ २ ॥ ३६ ॥

"सप्त ऋषयः ( २९ )" वक्तव्याः । ते पुनरमी "व्याख्याताः ( १० । २९ )" निर्वचनतः, इह त्वभिधेया रश्मयः, इन्द्रियाणि वा,—"सप्त सृप्ता संख्या ( ४ । २६ )" "ऋषिर्दर्शनात् ( २ । ११ )"—इति, सप्त च ते ऋषयश्च सप्तर्षयः ॥ १२ । ३६ । २ ॥

तेषामेषा भवति—॥

"तेषामेषा" प्राधान्यस्तुतिः "भवति"—॥ *

"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥"

सप्त ऋषयः प्रतिहिताः शरीरे रश्मय आदित्ये सप्त रक्षन्ति सदमप्रमादं संवत्सरमप्रमाद्यन्तः सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतम् ।

अथाध्यात्मं—सप्त ऋषयः प्रतिहिताः शरीरे षडिन्द्रियाणि विद्या सप्तम्यात्मनि सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्चेत्यात्मगतिमाचष्टे ॥ १ ॥ ३७ ॥

"सप्त ऋषयः प्रतिहिताः० ( य० वा० सं० ३४ ५५ )"—इति । हिरण्यगर्भस्यार्षम् । आथर्वणे आत्मस्तुतौ विनियोगः, उत्तरा च ॥ शृणाति सर्वमिदमिति शरीरमादित्यः, आश्रयणाद्वा सर्वमिदमस्मिन्नाश्रितमिति । तस्मिन् "सप्त ऋषयः" "रश्मयः" "प्रतिहिताः" प्रत्येकं हिताः निहिताः । ते पुनः सप्तैव अन्यूनाधिकाः सन्तः, सार्वदिकमुदकमुपनयन्तः, तेनेद्धस्तमादित्यं "सदं" सदेव "अप्रमादम्" "अप्रमाद्यन्तः" अनुत्सर्गेण स्वस्य कर्मणः "रक्षन्ति" निरिन्धनः पार्थिवोऽपि ह्यग्निः इन्धनक्षयान्निर्वाप्येत, "त एव" सप्त सप्ताः "आपनाः" सर्वस्य लोकस्य

* अत्र षट्त्रिंशखण्डसमाप्तिर्द्योत्यते, सा "तेषामेषा" इत्यतः प्रागुचिता ॥

व्यापनाः, "स्वपतः" अस्तमुपगच्छतः, अस्यादित्यस्यैव तं "लोकम्" आत्मानं गच्छंति, बाह्यं मण्डलं प्रविशन्ति । तेष्वनुप्रविष्टेषु "तत्र" सुप्तेषु उपरतप्रकाशवृत्तिषु तत्रान्तर्गतौ[1] "जागृतः" तन्मण्डलान्तरपुरुषः, तदधिष्ठाता, योऽसौ हिरण्यश्मश्रुः हिरण्यकेश इति विज्ञायते, वायुश्च—"इत्यधिदैवतम्" ॥

"अथाध्यात्मम्"—मण्डलवदेस्मिञ्छरीरे[2] रश्मिवदिन्द्रियाणि प्रतिहितानि निहितानि, तच्छरीरं नित्यं रूपाद्यालोकनाद्युपकारेण रक्षन्ति अप्रमाद्यन्ति, सप्तापनानि व्यापनानि विषयाणां शरीरस्य वा । तान्येव स्वपतोऽस्य जीवस्य सुखदुःखभोक्तुः लोकं शरीरमेव प्रत्यस्तमितमीयुः,—बुद्धिद्वारेण भोक्तर्येव भावनानुरूपेण लीयते । यद्भावनोपपादकः[3] स्वप्नभोक्तुः स्वप्नो भवति, तत्र जागृतः शरीरपरिपालनार्थम्, प्राज्ञश्चात्मा परमात्मा चिन्मात्रेण यः शरीरं व्याप्य वर्त्तते, तैजसश्च प्राणोऽन्नं पानं पचन् व्यूहंश्च रसान्तर्भूतं तेजोवायुवृत्तिः ॥ १२ । ३७ । १ ॥

## तेषामेषापरा भवति—॥

"तेषामेषा अपरा भवति"—[ सा पुनः किमर्थम् ? रश्मय एवेति स्फुटतायै]—॥ *

"तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम् ।
अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥"

तिर्यग्बिलश्चमस ऊर्द्ध्वबन्धन उर्द्ध्वबोधनो वा, यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुरित्यधिदैवतम् ।

अथाध्यात्मं तिर्यग्बिलश्चमस ऊर्द्ध्वबन्धन उर्द्ध्वबोधनो वा, यस्मिन्यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे ॥ १ ॥

"तिर्यग्बिलश्चमसः० (अथ० सं० १०, २६,९ )"—इति । तिर्यञ्चोऽस्य मण्डलस्य मधुपूर्णस्येव रश्मिच्छिद्राणि । चमनं चोदकमेष सनोतीति चमसः । ऊर्द्ध्व चैतद्बद्धमाभूत-

---

१ 'अन्तर्गतो' ॥ २ 'मण्डलवदस्मच्छरी' ॥ ३ 'तद्भावेनापपा' ॥ * अत्र सप्तत्रिंश खण्डसमाप्तिर्दृश्यते, सा "तेषामेषाऽपरा" इत्यतः प्रागुचिता ॥

सम्प्लवान्न निपद्यत इति "ऊर्ध्वबुध्नः" ऊर्ध्वं वावस्थितः प्रकाशेन बोधयतीति ऊर्ध्वबुध्नः, तस्मिन् "चमसे" मण्डले "यशः" उदकं "निहितं" नियमेन अधिकं वा हितमवस्थापितम्, "विश्वरूपम्" अनेकप्रकारमनेकरूपम् । कैः पुनस्तन्निहितम् ? इति–"ये" "अस्य" "महतः" जगतः, आत्मनो वा "गोपाः" गोप्तारः, एते रश्मयः "बभूवुः" भवन्ति । "ये" च "अत्र" एतस्मिन् मण्डले "साकम्" एकीभूतास्तदधिष्ठात्रा सह "आसते" । तैर्हि चतसृषु दिक्षु ऊर्ध्वमधो मण्डलं चोत्सृप्तानि यानि ज्योतींषि अस्य ते रश्मयः, सप्त सर्पणाः, ऋषणाद्दर्शनादस्य धर्मस्य ऋषय उच्यन्ते– "इत्याधिदैवतम्" ॥

"अथाध्यात्मम्"–इति । तिर्यक्छिद्रमिदमेव शिरश्चमसः, चम्यन्ते ह्यनेन रसा इति । "ऊर्ध्वबन्धनश्च" उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य, एतद्वियोगे हि विस्रस्यते शरीरम् । यस्मिन् यशो निहितं विश्वरूपं नानाप्रकारमिन्द्रियत्वेन भृतं रसाख्यं ज्ञानाख्यं वा । तस्य चमसस्य ये विधातारः, तद्द्वारेण अस्य शरीरस्य महतो गोप्तारः, तत्रैव चमसान्तरमनुप्रविष्टाः "साकं" "सह" तद्वशा उपजीवन्त आसते–"इत्यात्मगतिमाचष्टे" ॥ १२ । ३८ । १ ॥

## देवाः ॥ २६ ॥

## देवा व्याख्याताः ॥ २ ॥ ३८ ॥

"देवाः ( २६ )" वक्तव्याः । ते पुनः "देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा( ७। १५।१ )"–इत्यत्र निर्वचनतः "व्याख्याताः" इह तु रश्मयो बहुवचनेनोच्यन्त इति विशेषः ॥ १२ । ३८ । २ ॥

## तेषामेषा भवति–॥

"तेषामेषा" प्राधान्यस्तुतिः "भवति"–॥ *

"दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ निव॑र्त्तताम् । दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्रति॑रन्तु जी॒वसे॑ ॥"

देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृतुगामिनामिति वा, देवानां दानमभि नो निवर्त्ततां देवानां

* अत्राष्टात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा प्राधान्य" इत्यतः प्रागुचिता॥
१ 'रातिमभि' ॥

सख्यमुपसीदेम वयं देवा न आयुः प्रवर्द्धयन्तु चिर-
जीवनाय ॥ १ ॥

"देवानां भद्रा० ( ऋ० सं० १, ६, ५, २ )"—इति । गोतमस्यार्षम्[1] । देवेभ्यो वशामालभेतेति विनियोगः ॥ अस्य पशोर्वपायाः पुरोऽनुवाक्या । य एते "देवाः" रश्मयः नित्यम् ऋज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य सर्वतो यन्ति । अथवा— "ऋजूयताम्" "ऋतुगामिनाम्" ऋतावृतौ यथाकालमस्मात् मण्डलात् गच्छताम् । "सुमतिः" शोभना मतिः, प्रसादाभिमुखी मतिः । सा "नः" अस्मान् प्रति "निवर्त्तताम्" नियमेन वर्त्तताम्, तत्पूर्विका च "रातिः" धनलाभोऽस्मान् प्रति नियमेन वर्त्तताम् । ततश्च तेन धनलाभेन उपजनितसामर्थ्याः सन्तः "वयम्" तेषामेव "देवानां" "सख्यं" समानख्यानं याज्ञे कर्मणि समानमङ्गभावम्[2] "उपसेदिम" "उपसीदेम" उपगच्छेम वयम् । ततश्च तथाभूतानामस्माकम् "आयुः" ते देवाः "प्रतिरन्तु" "प्रवर्द्धयन्तु" "जीवसे" "चिरं जीवनाय"—इत्येतदाशास्महे ॥ १२ । ३९ । १॥

## विश्वेदेवाः ॥ २७ ॥

विश्वेदेवाः सर्वे देवाः ॥ २ ॥ ३९ ॥

"विश्वेदेवाः ( २७ )"—वक्तव्याः । "सर्वे देवाः" त एव रश्मयः, उपहितविश्वविशेषणाः सन्तो विश्वेदेवा भवन्ति ॥ १२ । ३९ । २ ॥

तेषामेषा भवति—॥

"तेषां" तदभिधानविशिष्टानाम् "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

"ओमासश्चर्षणीधृतो विश्वे देवास आगत ।
दाश्वांसो दाशुषः सुतम् ॥"

अवितारो वावनीया वा, मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति ॥ १ ॥

"ओमासश्चर्षणीधृतो० ( ऋ० सं १, १, ६, १ । य० वा० सं० ७, ३३ )"—इति । मधुच्छन्दसा दृष्टा । प्रउगे ग्रहे विनियोगः ॥ वैश्वदेवश्चानेन प्रातःसवने ग्रहो गृह्यते । हे "विश्वेदेवाः !" ये यूयम् "ओमासः" "अवितारः" रक्षितारः, "चर्ष-

---

१ 'दीर्घतमस आर्षम्' ॥ २ 'समानतां' ॥ * अत्रैकोनचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तेषां तदभिधानविशिष्टानाम्" इत्यतः प्रयुक्तिता ॥

णीनां" मनुष्याणां स्वेनोपकारेण, "अवनीया वा" तर्पणार्हाः। "धृतः" धारयितारश्च स्थितिकर्त्तारः। ते यूयं "दाश्वांसः" "दत्तवन्तः" मनसा कृतसङ्कल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति। ततः अस्य "दाशुषः" "दत्तवतः" हवींषि यजमानस्यैतं "सुतम्" अभिषुतं सोमं पातुम् "आगतः"—इत्येतदाशास्महे ॥ १२ । ४० । १ ॥

**तद्देतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते। यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः। अनत्यन्तगतस्त्वेष उद्देशो भवति बभ्रुरेक इति दश द्विपदा अलिङ्गाः। भूतांशः काश्यप आश्विनमेकलिङ्गम्।**

**अभितष्टीयं सूक्तमेकलिङ्गम् ॥ २ ॥**

अधुना विश्वान् देवानधिकृत्य तद्गतमेवाधियज्ञे किञ्चिद् विचारयिष्यन्नुपोद्घन्ति—, "तद्देतदेकमेव वैश्वदेवं गायत्रं तृचम्"—इत्येवमादि। तत्—इति समाम्नायस्यानुस्मृतये। एतत्—इति वक्ष्यमाणार्थसन्निधिकरणाय। एकं तृचं सूक्ते वैश्वदेवं गायत्रं गायत्रेण च्छन्दसा युक्तं "दशतयीषु" सर्वास्वपि बह्वीषु शाखासु "विद्यते"—नान्यदस्त्येवास्मिञ्छन्दसि, प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे। तत्र किं कर्त्तव्यम्? इति, यत आह—"यत्तु किञ्चिद्बहुदैवतं" मन्त्रजातं गायत्रेण च्छन्दसा युक्तम्, "तद्वैश्वदेवानां स्थाने युज्यते"। न्याय्यमित्यतः। "यदेव" "विश्वलिङ्गम्" विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा, तदेव वैश्वदेवानां स्थाने विनियुज्यते,—न बहुदेवतामात्रेण—"इति" "शाकपूणिः" मन्यते। तत् किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत न? इति, यत आह,—"अनत्यन्तगतस्त्वेष उद्देशो भवति" अनैकान्तिक एष उद्देशः। उद्देशः प्रतिज्ञा[1],—"यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने विनियुज्येत"[2]—इति। कथमनैकान्तिकम्? इति, वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानमाम्नायस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति, विश्वयुक्तमन्त्रजातवद्यावत्कर्मसु सर्ववैश्वदेवेषु तच्छन्दस्केषु अलमिति,—न च तत्सर्वास्वपि दशतयीष्वस्ति छन्दस्यलङ्कर्मोत्पादे, प्रयोजनं च तच्छन्दोयुक्तैरपि विविधैर्मन्त्रैर्भवति, न च ते तथाविधाः सन्तीति बहुदेवताश्च तस्मिञ्छन्दसि सन्ति। तत्किमस्तु तस्य कर्मणः प्रहाणम्, उत वा तत्स्थाने बहुदेवतानि सूक्तान्योप्यन्ताम्? इति, उच्यते,—युक्तं यद्बहुदेवतानि ओप्येरन्निति यास्काचार्यः पश्य-

---

[1] 'उद्देशनं प्रतिज्ञा' ॥ [2] 'प्रयुज्यते' ॥

न्नाह—"यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते" । सेयमनुत्पत्तिर्गायत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलङ्कर्मणि गमयति । बहुविश्वशब्दयोरितरेतरार्थाभिधेयप्रत्यासत्त्या बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति । अपि चैवमनत्यन्तगत इत्युद्देशः । येन "भूतांशः काश्यप आश्विनमेकलिङ्गम्" । भूतांशो नाम ऋषिः काश्यपः, स एकेनाश्विलिङ्गेन युक्तमनेकर्चं सूक्तं ददर्श, तत्र यास्वप्यश्विलिङ्गमृक्षु नास्ति तासामप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन, यथैकेनापि च्छत्रिणा मध्यगतेन च्छत्रिणो भवन्ति,—एवमेकेन विश्वलिङ्गतृचेन यावन्ति सूक्तानि कर्म [ १ ] णि संयुज्यन्ते बहुदेवतानि अविश्वलिङ्गान्यपि तानि तदर्थसाधकानीति ॥

ऋध्याम अश्विलिङ्गम्, येन पर्फरीसूक्तं सर्वमाश्विनम् ।

"ऋ॒ध्याम॒ स्तोमं॑ सनु॒याम॒ वाज॒मा नो॒ मन्त्रं॑ स॒रथे॒होप॑यातम् ।

यशो॒ न प॒क्वं मधु॒ गोष्व॒न्तरा भू॒तांशो॑ अ॒श्विनोः॒ काम॑मप्राः ॥ ( ऋ० सं० ८, ६, २, ६ । १०, ९, १, ११ )"—इति ।

हे अश्विनौ ! वयं 'स्तोमं' त्रिवृत्पञ्चदशादिकम् 'ऋध्याम' ऋध्यास्म, वर्द्धयेम । किञ्च, 'वाजं' हविर्लक्षणमन्नं युवाभ्यां 'सनुयाम' प्रयच्छेम । तस्माद् युवां 'सरथा' सरथौ, समानरथौ, एकमेव रथमारूढौ सन्तौ 'इह' अस्मिन् कर्मणि 'नः' अस्मदीयं 'मन्त्रं' मननीयं स्तोत्रम् 'उपयातम्' उपागच्छतम् । 'गोष्वन्तः' गोरूधस्यावस्थितं 'पक्वं' परिणतम्, तदेव 'मधु' मधुरं 'यशो न' यश इत्यन्ननाम, नश्चार्थे, क्षीराज्यादिलक्षणम्, महावीरपात्रे अवनीयमानम्, अन्नं चापेक्ष्य आगच्छतमिति सम्बन्धः । एवमुक्तप्रकारेण 'भूतांशः' एतन्नामा ऋषिः 'अश्विनोः' 'कामम्' अभिलाषमात्मीयाभिः स्तुतिभिः 'अप्राः' आपूरयत्, सम्पूर्णमकार्षीदित्यर्थः । "प्रा पूरणे" आदादिकः (प०), व्यत्ययेन मध्यमः ॥

"अभितष्टीयं सूक्तम्" चैन्द्रम्, तदपि "एकलिङ्गम्"—इति ॥

यथा—

"शु॒नं हु॑वेम म॒घवा॑न॒मिन्द्र॑म॒स्मिन्भरे॒ नृत॑मं॒ वाज॑सातौ ।

शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम् ॥ ( ऋ० सं० ३, २, ४, ७ )"—इति ।

---

१ ( 'सरथौ' समानरंहणौ समानगती युवामायातम् । इम [ वतः ] (?) श्रुतवतोर्भवतोः स्तोममृध्याम ऋद्धिं प्राप्नुमो वयम् । कथम्? इति । 'सनुयाम वाजम्' अन्नं भक्षेमहि । किंच—'यशो न पक्वं मधु' क्षीरं घृतं च यत् 'गोषु अंतः' मधु अस्ति । येन 'भूतांशः अश्विनोः' भवतोः 'कामम् अप्राः' अपूरयन्ते इत्यत आयातम्—इति ॥ ) इति पुस्तकान्तरे पाठान्तरं दृश्यते ।

विजयाय 'समत्सु' संग्रामेषु नित्यं 'घ्नन्तं' 'वृत्राणि' वारकाणि शत्रुजातानि, 'सञ्जितं' समस्तानां वीराणां धनानां च जेतारम्, 'शुनम्' शूनम्, उत्साहेन प्रवृद्धम्, 'नृतमम्' जगतः अतिशयेन नेतारम् 'ऊतये' रक्षणाय 'अस्मिन्' 'भरे' संग्रामे 'वाजसातौ' यस्मिन् शत्रून् जित्वान्नानि सम्भज्यन्ते तस्मिन्, 'हुवेम' वयमाह्वयामहे, तम् 'इन्द्रम्' एवमादिगुणयुक्तमात्मनो विजयायेति ॥ १२ । ४० । २ ॥

## साध्याः ॥ २८ ॥

## साध्या देवाः साधनात् ॥ ३ ॥ ४० ॥

"साध्याः ( २८ )"–"देवाः" "साधनात्" ते हि सर्वमिदं साधयन्ति, यदन्येन सर्वकर्मभिरसाधितं तत्साधयन्तीति साध्या उच्यन्ते । ते च पुनः प्राणाः विश्वसृज ऋषयः, ये सहस्रसंवत्सरसत्रेणेदं विश्वमसृजन्त, त एवैतेऽधिदैवं रश्मयः । विज्ञायते हि–"प्राणा वै सप्त ऋषयः साध्या विश्वसृजः"–इति ॥ १२ । ४० । ३ ॥

## तेषामेषा भवति–॥

"तेषामेषा" प्राधान्यस्तुतिः "भवति"–॥ *

"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥"
यज्ञेन यज्ञमयजन्त देवा अग्निनाग्निमयजन्त देवाः ।
'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' इति च ब्राह्मणम् ।
'तानि धर्माणि प्रथमान्यासन्' । ते ह नाकं महिमानः
समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः साधनाः ।
द्युस्थानो देवगण इति नैरुक्ताः । पूर्वं देवयुगमित्याख्यानम् १ ॥

"यज्ञेन यज्ञमयजन्त० ( ऋ० सं० २, ३, २३, ४ । ८, ४, १९, ६ । य० वा० सं० ३१, १६ )"–इति । दीर्घतमस आर्षम् ॥ "अग्निनाग्निमयजन्त देवाः" । उक्तं च–"तमुन्निन्यथुः सर्वगणं सर्वनामानम्"–इति, तम् अग्निं स्थावरजङ्गमभावेनेति । "तं वश्चराथा वयं वसत्या"–इत्येतस्मादर्शनवतः प्रयोक्तुः सर्वमिदमग्निरित्यभिप्रेत्य ब्रवीति–"यज्ञेन" "अग्निना" स्थावरजङ्गमभावमापन्नेन हविर्भूतेन "यज्ञम्"

* अत्र चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा–" इत्यतः प्रागुचिता ॥

"अग्निम्" एव सर्वदेवताभूतमादित्यादिप्रनाडिकया महान्तमात्मानम् "अयजन्त" "देवाः" दैवभाविनः, "पूर्वे" ज्ञानकर्मसमुच्चयकारिणो यजमानभावमापन्नाः, "साध्याः" विश्वसृजः ऋषयः, प्राणाः । "तानि धर्माणि" तानि कर्माणि, तथाविधज्ञानयुक्तानि, "प्रथमानि" मुख्यानि महदात्मभावापत्तये "आसन्" तैरपि क्रियन्ते इत्यर्थः । "ते" च तानि कृत्वा नियमेनैवानन्यभावित्वात् तत्फलस्य "महिमानः" तदानुपूर्व्येण जातमहदात्मभावाः सन्तः, तमेव "नाकं" महान्तमात्मानम् एकान्तसुखं "सचन्त" तद्भावमेव ते आपेदिरे । किं त एव ? इति, नेत्युच्यते—"यत्र पूर्वे साध्याः सन्ति देवाः" । शब्दार्थोपदेशनित्यत्वाद्यत्र पूर्वे च पूर्वतरे च ज्ञानकर्मसमुच्चयकारिण आसते सन्ति जग्मुरित्यर्थः । विज्ञायते हि—"विश्वसृजः प्रथमे सत्रमासत"—इति ॥

शिरो ह्यध्यात्मं द्युस्थानभक्तिः, अतः सप्त ऋषयः, देवाः, विश्वे देवाः, साध्या इति सर्वं एते प्राणाः, रश्मयो वेत्युपपद्यते ॥

ब्राह्मणमपि चैतमर्थमेवानुविदधाति—"अग्निः पशुरासीत्"—इत्येवमादि॥१२।४१।१॥

## वसवः ॥ २९ ॥

**वसवो यद्विवसते सर्वमग्निर्वसुभिर्वासव इति समाख्या, तस्मात् पृथिवीस्थानाः।इन्द्रो वसुभिर्वासव इति समाख्या, तस्मान्मध्यस्थानाः ॥ वसव आदित्यरश्मयो विवासनात्तस्माद् द्युस्थानाः ॥ २ ॥ ४१ ॥**

"वसवः (२९)"—इति वक्तव्यम् । ते पुनरमी त्रिस्थानाः । ते यस्मात् सर्वमिदं विभागेनावस्थितमाच्छादयन्ति । कथम् ? इति,—"वासवोऽग्निरिति समाख्या, तस्मात् पृथिवीस्थानाः" "इन्द्रो वसुभिर्वासव—इति समाख्या, तस्मात् मध्यस्थानाः" "वसव आदित्यरश्मयो विवासनात्, तस्मात् द्युस्थानाः" ॥ १२ । ४१ । २ ॥

**तेषामेषा भवति—॥**

"तेषाम्" "एषा" प्राधान्यस्तुतिः "भवति"—॥ *

**सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः । जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥"**

---

* अत्रैकचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा प्राधान्य—" इत्यतः प्रागुचिता ॥ १ 'अगन्म'—इति तु शाखान्तरीयः पाठः ॥

स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि जुषाणाः खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि ॥ १ ॥ ४२ ॥

"सुगा वो देवा० ( य० वा० सं० ८, १८ )"—इति। परमेष्ठिन आर्षम्। समिष्टयजुःषु विनियोगः ॥ हे "देवाः!" ये यूयम् "आजग्मुः" नित्यमागच्छत "इदं सवनम्" इमं यज्ञम्, अस्माभिः सह "जुषाणाः" प्रीयमाणाः। तेषां "वः" "अनुगच्छताम्" "सुगाः" "स्वागमनानि" शोभनानि आगमनानि पुनःपुनरस्मद्यज्ञेषु। एवमेव "सुपथानि" सुमार्गाणि सन्तु। किंच एतस्मिन् यज्ञे "जक्षिवांसः" "खादितवन्तः" हवींषि, "पपिवांश्च" "पीतवन्तश्च" सोमम्, तृप्ताः सन्तः, "अस्मे" "अस्मासु" "धत्त" निधत्त हे "वसवः!" "वसूनि"—इत्येतदाशास्महे ॥

समिष्टयजुःषु तृतीयसवने विनियोगादत्र द्युस्थानाः वसवः ॥ १२। ४२। १ ॥

तेषामेषापरा भवति—॥

"त्रिस्थानाः"—इत्युक्तम्, यत इतरयोरपि स्थानयोः प्रदर्शयति,—"तेषाम्" एषा "अपरा भवति"—॥*

"ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः। अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य॥"

ज्मया अत्र वसवोऽरमन्त देवा ज्मा पृथिवी तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त शुभ्राः शोभमाना अर्वाच एनान् पथो बहुजवाः कुरुध्वं शृणुत दूतस्य जग्मुषो नो अस्यार्थेः ॥ १ ॥

"ज्मया अत्र वसवो० ( ऋ० सं० ५, ४, ६, ३ )"—इति। वसिष्ठस्यार्षम् ॥ "ज्मा पृथिवी" "तस्यां" "भवाः" ये नित्यं भवन्ति, ते "ज्मयाः"। "रन्त" "अरमन्त"। "अत्र" एतस्मिन् कर्मणि, अस्मिन् वा लोके। "देवाः" "वसवः"। ये "च" "उरौ" विस्तृते अन्तरिक्षे विस्तीर्णे "मर्जयन्त" मार्ष्टिर्गत्यर्थः, "गमयन्तः"

* अत्र द्विचत्वारिंश खण्डसमाप्तिर्दृश्यते, सा "त्रिस्थानाः" इत्यतः प्रागुचिता ॥

यद्यत्तेषां गमयितव्यम्, अथवा—वर्त्तमानाः। "शुभ्राः" "शोभमानाः"। एवमनयोः स्थानयोः वसून् विभज्याधुना द्युस्थानांस्तान् कृत्वा ब्रवीति,—ये यूयमेवं त्रिस्थानाः, तान् वो ब्रवीमि,—नित्यम् "अस्य" "अग्नेः" "नः" अस्मद्—"दूतस्य" "जग्मुषः" युष्मान् प्रति गतवतः "शृणुत" यदयं ब्रवीति, श्रुत्वा चास्मान् "अर्वाग्" आभिमुख्येन "उरुज्रयः" "बहुजवाः" बहुप्रकारं शतसहस्रमागमनेनैव "पथः" मार्गान् प्रहतान् "कुरुध्वम्"—इत्येतदाशास्महे ॥ १२।४३।१॥

## वाजिनः ॥ ३० ॥

## वाजिनो व्याख्याताः ॥ २ ॥ ४३ ॥

"वाजिनः (३०)"—"व्याख्याताः"—"अपि स वाजी वेजनवान् (२। २८।)"—इत्यत्र, केवलमत्र बहुवचनकृतो विशेषः, रश्मयश्च अभिधेयाः। पृथक्त्वे देवाश्वाः ॥ १२।४३।२॥

## तेषामेषा भवति—॥

"तेषाम् एषा भवति" प्राधान्यस्तुतिः—॥ *

**"शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः। जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥"**

**सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे मितद्रवः सुमितद्रवः। स्वर्काः स्वञ्चना इति वा, स्वर्चना इति वा, स्वर्चिष इति वा। जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवा देवाश्वा इति वा ॥ १ ॥**

"शन्नो भवन्तु वाजिनः० (ऋ० सं० ४, २, २८, ७। य० वा० सं० ९, १६)"—इति। वसिष्ठस्येयमार्षम्। वाजिनयागे विनियोगः। "देवताता" एतस्मिन् "देवतातौ" "यज्ञे" "हवेषु" "आह्वानेषु" "शम्" "नः" अस्माकं "सुखाः" "भवन्तु" सन्तु "वाजिनः"। किंलक्षणाः? "मितद्रवः" "सु" श्लिष्टं शोभनं ये द्रवन्ति, "स्वर्काः" ये "स्वञ्चनाः" शोभनम् अञ्चन्ति, गच्छन्ति, "स्वर्चनाः" शोभनं वा अर्चनं येषां स्तुतिः, "स्वर्चिषः वा" येषां शोभना अर्चिषो दीप्तयः त

* अत्र त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तेषामेषा भवति" इत्यतः प्रागुचिता ॥

आगच्छन्तु। आह्वानेष्वस्माकं "जम्भयन्तः" । किम्? इति,—"अहिम्" "च" "वृकम्" "च" यश्चास्मानाहन्ति, यश्च वृकस्तस्करो मुष्णाति, "रक्षांसि" "च" येऽस्मान् रहसि क्षिण्वन्ति, तांश्चास्मत्तः "जम्भयन्तः" हिंसन्तः "सनेमि" "क्षिप्रम्"। सामर्थ्यादिह सनेमि—इति क्षिप्रनाम। "यूयन्" सामर्थ्यात् अपेत्यध्याहृत्य अप—"यावयन्तु" अपमिश्रयन्त्वित्यर्थः, इष्टं च रक्षसां नाशनं न मिश्रणमिति ॥१२।४४।१॥

## देवपत्न्यो देवपत्न्यः ॥ ३१ ॥

## इत्येकत्रिंशत्पदानि ॥ ६ ॥

## अग्निर्द्रविणोदा अश्वो वायुः श्येनोऽश्विनौ षट् ॥

## ॥ इति निघण्टौ पञ्चमोऽध्यायः ॥ ५ ॥

# ॥ इति निघण्टुः समाप्तः ॥

## देवपत्न्यो देवानां पत्न्यः ॥ २ ॥ ४४ ॥

"देवपत्न्यः—(३१)" वक्तव्याः। ताः पुनः "देवानां पत्न्यः" पालयित्र्यः पालनीया वा। पत्नीसंयाजेष्वेता इज्यन्त इत्यतस्तृतीयसवनभक्तित्वादादित्यं भजन्ते। तदुक्तम्,—"अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनम् (७।११।१)"—इति ॥ १२।४४।२ ॥

## तासामेषा भवति—॥

"तासां" देवपत्नीनाम् "एषा" "भवति" प्राधान्यस्तुतिः—॥ *

"देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥"

देवानां पत्न्य उशत्योऽवन्तु नः प्रावन्तु नस्तुजयेऽपत्य-

१ 'हि' ॥ * अत्र चतुश्चत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तासां देवपत्नीनाम्" इत्यतः प्रागुचिता ॥

जननाय चान्नसंसननाय च याः पार्थिवासो या अपामपि कर्मणि व्रते ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् ॥ १ ॥ ४५ ॥

"देवानां पत्नी० ( ऋ० सं० ४, २, २८, ७ )"—इति । प्रतिक्षत्रस्येयमार्षम् । आग्निमारुते पत्नीसंयाजेषु च विनियोगः ॥ या एता देवपत्न्यो नित्यमस्मत्तो हविरुशन्ति कामयन्ते, ताः अस्मत्तो हविरुपभुज्य ततोऽस्मान् अवन्तु प्रतितर्पयन्तु धनेन । किंच, "प्रावन्तु नस्तुजये" प्रकर्षेण अवन्तु रक्षन्तु "अपत्यजननाय" "वाजसातये" च "अन्नसंसंननाय" अन्नसम्भजनाय "च"। कतमास्ताः ? "याः पार्थिवासः" पृथिव्यां भवाः, "याः अपामपि" "व्रते" "कर्मणि" वर्षोत्सर्गे व्यापृताः, सर्वाः "सुहवाः" स्वाह्वानाः अस्माकं "यच्छत" "यच्छन्तु" ददतु "शर्म" "शरणं" गृहं सुखं त्राणं वा—इत्येतदाशास्महे ॥ १२ । ४५ । १ ॥

तासामेषापरा भवति—॥

"तासाम् एषा अपरा भवति"—[ सा पुनः किमर्थम् ? सामान्यतः पूर्वस्यामुक्ताः, विशेषतः परस्यामुच्यन्ते, पूर्वयैव समानार्षविनियोगा ]—॥ *

"उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥"

अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राट् राजते । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्तां य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् ॥ १ । ४६ ॥

"उत ग्ना व्यन्तु देवपत्नी० ( ऋ० सं० ४, २, २८, ८ । अथ० सं० ७, ४, ११, २ )"—इति । पुरुषैः पीतमग्न्यादिभिः, "उत" "अपि" "ग्नाः" स्त्रियः

* अत्र पञ्चचत्वारिंशखण्डसमाप्तिर्दृश्यते, सा "तासामेषाऽपरा"इत्यतः प्रागुचिता॥

"व्यन्तु" पिबन्तु एतदाज्यम् । कतमाः ? "इन्द्राण्य १ ग्नाय्यश्विनी राट्" । "आशृणोतु" च "रोदसी" "वरुणानी" च आभिमुख्येन च स्थित्वा शृणोतु । "रोदसी रुद्रस्य पत्नी" । आथर्वणे रोदसीत्यप्रगृह्यं पदम्, तदपेक्ष्यैकवचनेन भाष्यकारो निराह—"रोदसी रुद्रस्य पत्नी" इति । "वरुणानी च वरुणस्य पत्नी" । सर्वा अप्येताः "व्यन्तु" पिबन्तु एतदाज्यम् । "य ऋतुर्जनीनाम्" । यः "कालः" भोजनकालः "जायानाम्" । तस्मिन् काले दीयमानम् । कश्चासौ ? भुक्तवत्सु पुरुषेष्विति ॥ १२ । ४६ । १ ॥ *

[ अथातोद्युस्थानावेसातिषुस्मेहेहजाताप्रातर्युजाप्रातर्यजध्वंमुषस्तच्चित्रमेताउत्याःसुकिंशुकंवृषाकपाय्यंपागूहंस्त्वष्टादुहित्रेसविताविश्वारूपाणिप्रातजितंमुदुत्यश्चित्रंशुक्रन्तेपथस्पथइदंविष्णुर्विश्वानरोव्याख्यातोविश्वानरस्ययेनापावकेतिचतुष्कंकेश्यं१ ग्निंत्रयःकेशिनःपुनरेहियस्मिन्वृक्षेपांवीरवीर्यदिन्द्राग्नीपविन्नवन्तउतनोहियामथर्वाथातोद्युस्थानादेवगणाइमागिरःसप्तऋषयस्तिर्यग्बिलोदेवानाम्भद्रौमासोयज्ञेनसुगावोऽर्मयाअत्रैशन्नोभवन्तुदेवानांपत्नीरुतग्नाव्यन्त्विति षट्चत्वारिंशत् ॥ ]

इति निरुक्ते ( उत्तरषट्के ) द्वादशो ( षष्ठो )ऽध्यायः ॥१२॥

जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ
द्वादशो ( सप्तदशो )ऽध्यायः समाप्तः ॥ १२ ॥
( दैवतं काण्डं समाप्तम् । )

## ॥ इति निरुक्त उत्तरार्द्धः समाप्तः ॥

---

* अत्र षट्चत्वारिंशखण्डसमाप्तिर्बोध्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ द्वादशा ( सप्तदशा )ऽध्यायस्य तुरीयः पादः ॥ १२–४ ॥" इति तूपलभ्यते ॥

# अथ परिशिष्टम्।

## त्रयोदशोऽध्यायः १३.

**अथेमा अतिस्तुतय इत्याचक्षते ॥ १ ॥**

"अथेमा अतिस्तुतय इत्याचक्षते"—इत्येवमादि वक्तुं प्रकृतशेषमनुवर्त्तते। किं चात्र प्रकृतम्? स्तुतिलक्ष्या देवतेति—"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते (७। १। ४)"—इत्यत्र। ताः स्तुतयः कर्माधिकारनिरताः, स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च याः, ता उपप्रदर्श्याः। तदर्थं विशेषतः पुनरधिकारवचनम्—"अथ"—इति। "इमाः" या वक्ष्यमाणास्ताः "अतिस्तुतयः—इत्याचक्षते" अन्येऽप्याचार्या एवमेवैताः आचक्षते कथयन्ति शिष्येभ्यः 'अतिस्तुतय एताः' इति, प्रसिद्धा हीयमेतासु सञ्ज्ञेत्यभिप्रायः॥ १३। १। १॥

**अपि वा सम्प्रत्यय एव स्यान्माहाभाग्याद्देवतायाः ॥ २ ॥**

"अपि वा" अथवा नैवैतदातिस्तवनम्। किं तर्हि? "सम्प्रत्यय एव स्यात्" देवतासमानमेव। किं कारणम्? न ह्यतिशयो नाम देवतायाः स्तुतिरस्ति। कस्मात्? "माहाभाग्याद् देवतायाः"—इति, न हि विभूतेरियत्तास्ति, यामतिरिच्य स्तूयेत। तदुक्तम्—"ऋचीषमः"—इति। तथा च "नार्वागिन्द्रं प्रतिमानानि देभुः"—इति॥ १३। १। २॥

**सोऽग्निमेव प्रथममाह—॥**

**"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः—" इति यथैतस्मिन् सूक्ते।**

**"न हि त्वदारे निमिषश्च नेशे" इति वरुणस्य ॥ ३ ॥१॥**

नैरुक्तसमयानुवृत्तये अतिस्तुतयः प्रदर्श्यन्ते—"सः" इति, स्तोता असावाचार्यः "अग्निमेव" अधिकृत्य "प्रथममाह"। किं कारणम्? येनैव हि क्रमेण स्तुतयः उपप्रदर्शिताः, तेनैवात्र क्रमेणातिस्तुतयो न्याय्याः प्रदर्शयितुम्, न ह्यसति कारणे मुख्यातिक्रमो न्याय्य इति। क्व? यथा,—

"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः"—"इति" "यथैतस्मिन् सूक्ते" स्वकर्माधिकार-व्यतिरेकेण, अतिशयेन वा स्तुतिः ॥

मध्यस्थाने—"नु हि त्वदारे निमिषश्च नेशे ( ऋ० सं० २, ७, १०, १ )"—"इति"। "वरुणस्य"।

"अपो सुम्यक्ष वरुण भियसं यत्सम्राळृतावोऽनु मा गृभाय।
दामेव वत्साद्विमुमुग्ध्यंहो नु हि त्वदारे निमिषश्च नेशे ॥ ( ऋ० सं० २, ७, १०, १ )"—इति।

हे भगवन्! 'वरुण!' 'सम्राट्!' 'ऋतवन्!' यदेतत् 'अपः' कर्म किञ्चित्, 'भियसम्' भयङ्करमस्मासु 'अंहः' पापं यदात्मनः कायकृतम्, तदस्मत्तो 'दामेव वत्सात्' 'विमुमुग्धि' त्वं प्रमुञ्च। ततश्च तत्प्रमुच्य 'सुम्यक्ष' सुष्ठु गमय, नाशयेत्यर्थः। कस्मात्पुनरेवं ब्रूमहे? इतः,—यस्मात् "न हि त्वदारे निमिषश्च नेशे" त्वदन्तिकेऽपि वर्त्तमानस्य दूरेऽपि चः यः कश्चित्तस्यापि त्वदन्यो नेशे, त्वमेव दूरे चान्तिके च ईशिषे इत्यभिप्रायः ॥ १३ । १ ॥ ३ ॥

## अथैषेन्द्रस्य—॥

"अथ एषा इन्द्रस्य"—॥ *

"यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥"

यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा वज्रिन् सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामिति ॥ १ ॥ २ ॥

"यद् द्याव इन्द्र ते शतं० ( ऋ० सं० ६,५,८,५। सा० सं० छ० आ० ३, २, ४,६)"—इति। पुरुहन्मन आर्षम्। बृहती। वैरूपे स्तोत्रियानुरूपे ॥ हे भगवन्! "इन्द्र!" "यत्" "यदि" "ते" तव "शतम्" "द्यावः" "दिवः" "शतं" च "भूमीः" "भूमयः" "सहस्रं" च "सूर्याः" "रोदसी" "उत" "अपि" च समः ते "प्रतिमानानि" उपमानानि "स्युः" भवेयुः, कथञ्चित्,—तथापि "त्वा" त्वां जातमात्रमपि सर्वाणि अपि तानि "नाष्ट" "नैवाभ्यश्नुवीरन्"। किं तर्हि? त्वमेवैतानि सर्वाणि अभ्यश्नुवीथाः, अतिरिच्य वर्त्तेथा इत्यर्थः ॥ १३ । २ । १ ॥

---

* अत्र प्रथमखण्डसमाप्तिर्दृश्यते, सा "अथैषेन्द्रस्य" इत्यतः प्रागुचिता ॥

## अथैषादित्यस्य—॥

"अथ एषा आदित्यस्य"—॥ *

"यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क१स्यःपुल्वघो मृगःकमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः॥"

यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क्व स्यः पुल्वघो मृगः क्व स बह्वादी मृगः ।

मृगो मार्ष्टेर्गतिकर्मणः ।

कमगमद्देशं जनयोपनः सर्वस्माद्य इन्द्र उत्तरस्तमेतद्ब्रूम आदित्यम् ॥ १ ॥ ३ ॥

"यदुदञ्चो वृषाकपे० ( ऋ० सं० ८, ४, ४, २ )"—इति । पङ्क्तिः । इन्द्राण्या आर्षम् । पृष्ठ्यस्य षष्ठेऽहनि विनियोगः ॥ हे भगवन् ! "वृषाकपे !" "इन्द्र !" यदा त्वम् "उदञ्चः" उदङ्ङेव वर्त्तमानः, प्रदक्षिणं भुवनानि परिगच्छन् "गृहम्" "अजगन्तन" गृहानुप्रवेशो हि व्यवधीयते, व्यवधीयते च भगवानस्तं गच्छन्नादित्यः,—इत्येतस्मात् सामान्यादुच्यते गृहमिंद्राजगन्तन—इति । तदा त्वयि गृहमुपगते, अदृश्ये निरालोको लोकः सहसैव विस्मितो ब्रवीति—"क्व १ स्यः पुल्वघो मृगः" । "स्यः" "सः" । "पुल्वघः" पुरुशब्दात् पूर्वपदम्, घसेरुत्तरपदम्, क्व सः "बह्वादी" "मृगः" बहुसावत्ति सर्वप्राणिष्ववस्थितः । तदुक्तम्— "सूर्य आत्मा जगतस्तस्थुषश्च ( ऋ० सं० १, ८, ७, १, सा० सं० आर० आ० )"—इति ।

"मृगो मार्ष्टेर्गत्यर्थस्य" न ह्यसाववतिष्ठते, मार्ष्ट्येव हि मृगः ।

"कमगन्" "कं देशमगमत्" गतवान् १—येनास्माकमदृश्यः, स देवो "जनयोपनः" जनमोहनो बभूव, उदयास्तमयपरिगमनादादित्यस्य जना मुह्यन्ते, तत्त्वापरिज्ञानात् । "विश्वस्मात्" "सर्वस्मात्" जगतः "यः" त्वम् "इन्द्र !" "उत्तरः" "तमेतं त्वामादित्यम्" एवं "ब्रूमः"—"यदुदञ्चो वृषाकपे"—इति ॥ १३ । ३ । १ ॥

## अथैषाऽदित्यरश्मीनाम्—॥

"अथ एषा आदित्यरश्मीनाम्"—[ अतिस्तुतिः ]—॥ *

---

* अत्र द्वितीयखण्डसमाप्तिर्दृश्यते, सा "अथैषादित्यस्य" इत्यतः प्रागुचिता ॥

* अत्र तृतीयखण्डसमाप्तिर्दृश्यते, सा "अथैषादित्यरश्मीनाम्" इत्यतः प्रागुचिता ॥

"वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥"
व्यसृक्षत हि प्रसवाय न चेन्द्रं देवममंसत यत्रामाद्यद् वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु मत्सखा मम सखा मदनसखा ये नः सखायस्तैः सहेति वा सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥ १ ॥ ४ ॥

"वि हि सोतोरसृक्षत॰ ( ऋ॰ सं॰ ८, ३, २९, १ )"–इति । पूर्वयैव समानार्षविनियोगच्छन्दस्का ॥ "व्यसृक्षत" यदादित्यो रश्मीनहन्यहनि "सोतोः" सर्वभूत–"प्रसवाय" अभ्यनुज्ञानाय, तत्प्रकाशितलोकस्य सर्वकर्मोपपत्तेः । तदा किम् ? इति । तदा ते रश्मयः सर्वकर्मण्यनुगमनात् "नेन्द्रं देवममंसत" तमेवेन्द्रमादित्यं येन विसृष्टाः, तमेतमात्मनो दीपयितारं न मन्यन्ते, स्वमहिम्नेव वयं दीप्यामह इति मन्यन्ते । कदा ? "यत्र" यदा "अमदद् वृषाकपिः अर्यः" स्वामी रश्मिपोषं पुष्यति, "पुष्टेषु" एकीभूतेषु मध्यन्दिने । "मत्सखा" "मम सखा"-इति मन्त्रदृगाह । अथवा-सर्व एव मन्यते "ममायं सखा"—"ममायं सखा"–इति । अथवा "मदनसखा" हर्षसखेत्यर्थः, अथवा–"ये नः सखायः" रश्मयः "तैः सहेति" । "विश्वस्मात्"–इति, उक्तार्थः ॥१३।४।१॥

## अथैषाश्विनोः—॥

"अथ एषा अश्विनोः"–॥ *

"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥"
सृण्येवेति द्विविधा सृणिर्भवति भर्त्ता च हन्ता च तथाश्विनौ चापि भर्त्तारौ जर्भरी भर्त्तारावित्यर्थस्तुर्फरीतू हन्तारौ।

१ 'अथैषा वाचः प्रवल्हिता इव' एवमप्युपलभ्यते ॥ * अत्र चतुर्थखण्डसमाप्तिर्दृश्यते, सा "अथैषा" इत्यतः प्रागुचिता ॥

+ पुंस्त्वं कथम् ?

'नैतोशेव तुर्फरी पर्फरीका ।'

नितोशस्यापत्यं नैतोशं नैतोशेव तुर्फरी क्षिप्रहन्तारौ ।

'उदन्यजेव जेमना मदेरू ।'

उदन्यजेवेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसेति वा जेमने जयमने । जेमना मदेरू ॥

'ता मे जराय्वजरं मरायु ।'

एतज्जरायुजं शरीरं शरदमजीर्णम् ॥ १ ॥ ५ ॥

॥ १३ । ५ । १ ॥

अथैषा सोमस्य—॥ *

"तरत्स मुन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मुन्दी धावति ॥"

तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् ॥

'धारा सुतस्यान्धसः ।'

धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य॥ १ ॥ ६ ॥

॥ १३ । ६ । १ ॥

अथैषा यज्ञस्य—॥ *

"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥"

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयो अस्य

---

* अत्र पञ्चमखण्डसमाप्तिर्दृश्यते, सा "अथैषा सोमस्य" इत्यतः प्रागुचिता ॥

* अत्र षष्ठखण्डसमाप्तिर्दृश्यते, सा "अथैषा यज्ञस्य" इत्यतः प्रागुचिता ॥

पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त च्छन्दांसि । त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः। वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुभिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्याँ आविवेशेत्येष हि मनुष्यानाविशति यजनाय॥ १ ॥ ७॥
॥ १३ । ७ । १ ॥

तस्योत्तरा भूयसे निर्वचनाय–॥ *

"स्वुर्यन्तो नापेक्षन्तु आ द्यां रोहन्ति रोदसी ।
युज्ञं ये विश्वतोधारुं सुविद्वांसो वितेनिरे ॥"

स्वर्गच्छन्त ईजाना वा, नेक्षन्ते तेऽमुमेव लोकं गतवन्तमिक्षन्तमिति । 'आ द्यां रोहन्ति रोदसी' । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इति ॥ १ ॥ ८ ॥
॥ १३ । ८ । १ ॥

अथैषा वाचः प्रवल्हितेव–॥
"अथैषा वाचः प्राळ्हिता इव"–॥ *

"चुत्वारि वाक् परिमिता पुदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥"

चत्वारि वाचः पारिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेदयन्ते ।

---

* अत्र सप्तमखण्डसमाप्तिर्दृश्यते, सा "तस्योत्तरा भूयसे निर्वचनाय" इत्यत प्रागुचिता॥ * अत्राष्टमखण्डसमाप्तिर्दृश्यते, सा "अथैषा वाचः" इत्यतः प्रागवगन्तव्या ॥

गुहा गूहतेः ।

तुरीयं त्वरतेः ।

कतमानि तानि चत्वारि पदानि ? ।

ॐकारो महाव्याहृतयश्चेत्यार्षम् ।

नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः ।

मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः ।

ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः ।

सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके ।

पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः ॥

अथापि ब्राह्मणं भवति सा वै वाक् सृष्टा चतुर्द्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम् ।

या पृथिव्यां साग्नौ, सा रथन्तरे। यान्तरिक्षे सा वायौ, सा वामदेव्ये । या दिवि सादित्ये, सा बृहति,सा स्तनयित्नौ॥

अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति ॥ १ ॥ ९ ॥

"चत्वारि वाक्परिमिता पदानि० ( ऋ० सं० २, ३, २२, ५ । अथ० सं० ९, २५, २७, २९, १ )"—इति । दीर्घतमस आर्षम् । वाग्देवते पशौ विनियोगः ॥ प्रवह्लिकेत्यनभिव्यक्तिविशिष्टो वाक्यार्थः । "चत्वारि" "वाक्परिमिता" "वाचः परिमितानि" "पदानि" न पञ्चमं पदमस्ति । "तानि" पुनः "ब्राह्मणा विदुः" । किं सर्वे ? न,—"ये मनीषिणः" "मेधाविनः" । तेषां च पुनः पदानां "गुहा" "गुहायां" "त्रीणि" "निहिता" "निहितानि" "नेङ्गयन्ति" "नार्थं

वेदयन्ते" न प्रख्यापयन्ति, "तुरीयं" चतुर्थं भागम्, एकंपदं "मनुष्याः" परिज्ञानार्थं "वदन्ति" ॥

"तुरीयं त्वरतेः" तद्धि त्वरितमिव निर्गतं भवति त्रिभ्यः ।

"कतमानि तानि चत्वारि पदानि ?"—इति विचार्यः प्रश्नः ॥

तत्र तावत्, "नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः" मन्यन्ते । तत्राऽप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदानि अर्थं न वेदयन्ते, नामानि तु प्रसिद्धतरार्थत्वाद् गवाश्वादीन् वेदयन्त्यर्थान् ॥

एवं "मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः" अत्रापि व्यावहारिक्येव तु वेदयत्यर्थम् । "ऋचो यजूंषि सामानि, चतुर्थी व्यावहारिकीति नैरुक्ताः" अत्रापि व्यावहारिक्येव वेदयते ॥

"सर्पाणां वाक्, वयसाम्, क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके" सर्पादीनामित्यधिभूतविदः । अत्रापि व्यावहारिक्येव वेदयते, नेतराः ।

"पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः" । आत्मानं ये प्रवदन्ति आचार्यास्ते आत्मप्रवादाः ॥

"ब्राह्मणमपि च भवति" एतस्मिन्नर्थे,—"सा वै वाक् सृष्टा चतुर्द्धा व्यभवत्"—इत्येवमादि । तदेतदभिव्यक्तार्थमेव । "ततो या वागत्यरिच्यत, तां ब्राह्मणे न्यदधुः" निहितवन्तः, "तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति,—या च देवानां, या च मनुष्याणाम्" लौकिकी वैदिकी चेत्यर्थः ॥ १३ । ९ । १ ॥

## अथैषाक्षरस्य—॥

"अथ" पुनः "एषा" "अक्षरस्य" अतिस्तुतिः प्रवळ्हितेव—॥ *

"ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥"

ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे यस्तन्न वेद किं स ऋचा करिष्यति य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति—ऋतमत्तदेतदक्षरमोमित्येषा वागिति शाकपूणिः । ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते

* अत्र नवमखण्डसमाप्तिर्दृश्यते, सा "अथ पुनरेषा" इत्यतः प्रागुचिता ॥

नानादेवतेषु च मन्त्रेषु। एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रतीति च ब्राह्मणम् ॥ १ ॥ १० ॥

"ऋचो अक्षरे परमे० ( ऋ० सं० २, ३, २१, ४ । अथ०सं० ९, २८, ८ )"— इति। दीर्घतमस आर्षम्। अस्या निर्वचनत्रयम् अधिदैवाधियज्ञाध्यात्मविकल्पेन ॐ-कार आदित्य आत्मा चेति। तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते—

"कतमत् तदेतदक्षरम्" ? "ॐ"—"इत्येषा वाक्"—"इति शाकपूणेः" अभिप्रायः। ॐकारमृते न ह्यर्चयन्ति। तस्याः "अक्षरे" "परमे" "व्योमन्" व्योम—विविधमस्मिन् शब्दजातमोतमिति व्योम तस्मिन्, तिसृषु मात्रासु अकारोकारमकारलक्षणासूपशान्तासु यदवशिष्यते, तदक्षरं परमं व्योम, अपरमाकाशम् अपेक्ष्य तत्परं व्योम, शब्दसामान्यमभिव्यक्तमित्यभिप्रायः। "यस्मिन् देवा अधिनिषण्णाः सर्वे"। ऋगादिषु ये देवाः, ते मन्त्रद्वारेणाऽक्षरे निषण्णाः, तस्य शब्दकारणत्वात्। तद्यथा, प्रथमायां मात्रायां पृथिवी, अग्निः, ऋग्वेदः, पृथिवीलोकनिवासिन इत्येव, द्वितीयायां मात्रायाम् अन्तरिक्षम्, वायुः, यजूंषि, तल्लोकनिवासिनो जना इति, तृतीयायां मात्रायां द्यौः, आदित्यः, सामानि, तल्लोकनिवासिनो जना इति। विज्ञायते हि—"ॐकार एवेदं सर्वम्"—इति। "यस्तन्न वेद" अनया विभूत्याक्षरम्, "किमृ" असौ "ऋचा" ऋगादिभिर्मन्त्रैः "करिष्यति" ? यस्तेनाक्षरात्मना पश्यति। "य इत्तद्विदुस्त इमे समासते—इति विदुष उपदिशति"। ते हि तत्परिज्ञानात्ताद्भाव्यमुपगताः प्रणवविग्रहमात्मानमनुप्रविश्य समीकृता निर्वान्ति शान्तार्चिष इवानला इति ॥ १३ ।१०।१॥ *

आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि तस्य यदन्यन्मन्त्रेभ्यस्तदक्षरं भवतिरश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतम् ॥

अथाध्यात्मं--शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं

---

१ 'अथवा' ॥ २ 'यस्तानक्षरात्मना न पश्यति' ॥ * अत्र, दशमखण्डसमाप्तिरवगन्तव्या ॥

भवतीन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नधिनिषण्णा-[2]
नीत्यात्मप्रवादाः ॥ १ ॥ ११ ॥

"आदित्य इति पुत्रः शाकपूणेः एष ऋग्भवति"—इति, मण्डलमभिप्रेतम्। "यदेनमर्चन्ति" यस्मादेनमर्चन्ति, तस्मादृक्। "तस्य" "यदन्यत्" "मन्त्रेभ्यः" मण्डलगतेभ्योऽवयवेभ्यः, "तत्" परम् "अक्षरं" व्यवनम्, तत्र सर्वमोतमिति "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"—इति (तै० आ० १०, १३) श्रुतेः। "रश्मयोऽत्र देवा उच्यन्ते, य एतस्मिन्नधिनिषण्णा इति"। यस्तन्मण्डलमक्षरात्मना न वेद, किं स ऋचा आदित्येन मण्डलात्मना करिष्यति ? नासौ यथावदादित्यं वेदेत्यर्थः। "य इत्तद्विदुस्त इमे समासते"—इति व्याख्यातम् ॥

आत्मेत्यात्मप्रवादाः। अयमृग्भवति शरीरमिति। "इन्द्रियाण्यत्र देवा उच्यन्ते" तानि हि विषयेषु द्योतयन्त इति देवाः। "तस्य यदविनाशिधर्म" चेतनासतत्त्वमात्र-विज्ञानम्, "तत्" परमम् "अक्षरं" व्यवनम्। यत्तदक्षरं न वेद, किमसौ ऋचा शरीरेण करिष्यति ? न तस्य जीवितेनार्थः। "य इत्तद्विदुः"—इति व्याख्यातम् ॥ १३। ११।१ ॥*

अक्षरं न क्षरति न क्षीयते वाक्षयो भवति वाचोऽक्ष इति वा। अक्षो यानस्याञ्जनात्तत्प्रकृतीतरद्वर्त्तनसामान्यादित्ययं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूळ्होऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः। न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात्, मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूळ्हं तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ॥ १ ॥ १२॥

१ 'यान्यस्मिन्ने (न्नात्मन्ये) कं भवन्तीत्यात्मप्रवादाः ॥ २ 'षण्णा भवन्ति' ॥ * अत्रैकादशखण्डसमाप्तिरवगन्तव्या ॥ ३ 'वाक्षयं भ'

"अक्षरम्" कस्मात्? तद्धि "न क्षरति" नान्यथाभावमापद्यते । अथवा—"न क्षीयते" न कदाचिदप्यामूलतो विनश्यति । अथवा—"वाक्क्षयो भवति" नादो हि वर्णलक्षणाया वाचो निवासः । "वाचोऽक्षः—इति वा" अक्षरो ह्यक्ष इवानुप्रविश्य व्यञ्जनानि धारयति ॥

अथ "अक्षः" कस्मात्? उच्यते,—"यानस्य" यानाक्षः तावत् "समञ्जनात्" नित्यमसौ म्रक्ष्यते तैलादिना, "तत्प्रकृतीतरत्" स्वराख्यमक्षरम्, "वर्त्तनसामान्यात्" स्वरमधिरूढानि व्यञ्जनानि वर्त्तन्ते । "इति" परिसमाप्त्यर्थं इतिकरणः, उपप्रदर्शनार्थो वाऽन्तस्य ॥

एवमर्थं "मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः" मन्त्रार्थचिन्तानामभ्यूहो मन्त्रार्थचिन्ताभ्यूहः, वितर्कितः, शक्यते एतावता मन्त्रार्थोऽभ्यूहितुमिति । पुनः अयम् "अपि श्रुतितः"—"अपि तर्कतः" श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यश्चोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात् तस्योपरि पर्यायास्तर्कोऽभ्यूहो लक्षणान्याय इति । यद्यप्ययमभ्यूहः, तथापि "न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः" कुतः पृथक्त्वेन ? प्रकरणात् । किं तर्हि ? "प्रकरणश एव तु निर्वक्तव्याः" । तान्येतानि प्रकरणानि मन्त्राणां याज्ञं दैवतमध्यात्ममितिहासानुप्रवेश इति । किं कारणम् ? "न ह्येषु" मन्त्रेषु "प्रत्यक्षम्" अर्थदर्शनम् "अस्ति" । किं नास्त्येव ? न नास्ति । किं तर्हि ? "अनृषेः अतपसो वा"—इति, तस्येदानीमपि स्याद्य ऋषिस्तपस्वी च, निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावाद् यथावदर्थं मन्त्राणां पश्यतः । येऽन्ये पुनरौपदेशिकाः तानधिकृत्योच्यते—"पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति—इत्युक्तं पुरस्तात्"—इति । य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान् प्रतिपद्यन्ते, ते पारोवर्यविदः, तेषु यः कश्चिद्भूयोविद्यः बहुश्रुतो भवति, स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति । मन्त्रार्थ एव स्वयं विद्यावस्थानभावेन विष्वग्भूतो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति तमबहुश्रुतो नालमुत्प्रेक्षितुमिति,—युक्तं यत्तत्परिज्ञाननियोगे भूयोविद्यः प्रशस्यत इति । पुरस्तादपि चैतदुक्तम्, इह तु प्रसङ्गादुच्यते ॥

अतः परमागमविशुद्धये प्रस्तौति—"मनुष्या वा ऋषिषु उत्क्रामत्सु देवानब्रुवन्" इति । पूर्वमपि हि "साक्षात्कृतधर्माण ऋषयो बभूवुः"—इत्युक्तम्, इह तु मन्त्रार्थाभ्युपप्रदर्शनार्थमिति विशिष्यते—मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यति"—इति । एवमादिपुराकल्परूपोऽर्थविदः शास्त्रावतारस्तुतये, तेभ्यः "एतं मन्त्रार्थचिन्ताभ्यूहमभ्यूहं प्रायच्छन्" ते देवा एतं समस्तार्थमूहमपि भवन्तो-

ऽनेन मन्त्रार्थाः शक्यन्तेऽभ्यूहितुमिति । यस्मादेतदेवं "तस्मात्" अस्मिन् सूक्ते निरुक्तशास्त्रे यः "अनूचानः" विद्वान्, यदेव किञ्चिन्मन्त्रार्थेषु "अभ्यूहति" "आर्षं तत् भवति" तथैव तद्विषयोऽभ्यूहितवन्त इत्यभिप्रायः ॥ १३ । १२ । १ ॥ *

"हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो विचरन्त्युत्वे ॥"

हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा । सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पारमीप्सितव्यं तदिदमायुरिच्छता न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्याः ॥

अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति ॥ १ ॥ १३ ॥

व्याख्यातं दैवतं यज्ञाङ्गं चेत्यादि ॥

न तत् स्वमनीषिकयोच्यते,मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह । तद्यथा,–"हृदा तष्टेषु० (ऋ०सं०८,२,२४, ३, । १०, ६, ३,८)"–इति । "हृदा" हृदयेन बुद्ध्या, "तष्टेषु" सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः, "मनसो जवेषु" "मनसां" "प्रजवेषु" ये प्रजवाः प्रगमाः न साक्षात्ते दृश्यन्ते, तेष्वर्थेषु स्वर्गात्पूर्वदेवतादिषु "ब्राह्मणाः" अधिगतमन्त्रार्थतत्त्वाः विचारयन्तः,—किमत्र तत्त्वं किंवा अतत्त्वमिति, प्रवचनेन ततः "संयजन्ते" परस्परेण संपूजयन्ति । कतमे ते ? इति,–"सखायः" "समानख्यानाः ऋत्विजः" ते हि प्रयोगे अभियुक्तत्वादतितरां विद्वांसः । तेषु किम् ? इति,—"अत्राह त्वम्"–इति । "अत्र" तत्र तेषु अर्थेषु

* अत्र द्वादशखण्डसमाप्तिरवगन्तव्या ॥

सूक्ष्मेषु "विजहुः" तत्यजुः, "त्वम्" एकम् त्यक्तवन्तः । मन्त्रार्थव्याख्याने कमविद्वांसं के न तत्यजुः ? "वेद्याभिः" "वेदितव्याभिः" "प्रवृत्तिभिः" न हि तासां मनोवृत्तीनामन्तोऽस्ति, यासु प्रतिभानवतामपि मनोवृत्तयो न प्रवर्त्तन्ते, अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः । ये पुनः "ओहब्रह्माणः" इदं निरुक्तशास्त्रम् ऊहब्रह्म येषामस्ति ते शब्दार्थसङ्कटेष्वप्रतिबध्यमाना अतिक्रम्य अविद्वांसं "वि" विशेषतः सर्वत्रैव प्रतिपूज्यमानाः "चरन्ति" "त्वे" एके इत्यर्थः ॥

एवमेतस्मिन्मंत्रे अस्या उद्धाहितार्थनिवोदित्रस्य मन्त्रार्थचिन्ताम्यूहस्य ब्रह्मत्वं श्रूयते । तस्मादिदमपि निरुक्तशास्त्रं ब्रह्मैव वेद इत्यर्थः ॥

इदानीमुपसंहरति—"सेयं विद्या"—इति । श्रुतिमतीत्याद्यर्थमेवैका विद्या बुद्धिं वर्षति, ज्यायसी सर्वाभ्यो विद्याभ्यो महानेष तर्कः। "तस्याः तपसा पारमीप्सितव्यम्" गन्तुमिति वाक्यशेषः । पदवाक्यप्रमाणविदा ब्राह्मणेन यस्माद्वेदो विधिनि[1]षेधप्रतिप्रसवनियमपरिसङ्ख्यापुनर्वचनपरार्थवादगहनः, अर्थवादाश्च यथाश्रुतप्रमाणग्राहिणो विदुषोऽपि परमभ्रान्तहेतवः, तस्मात् परमदुर्विज्ञानवेदनीयत्वात् वेदवाक्यानामिमां विद्यामन्तरेण सम्यगर्थावगमो न भवति । अतोऽस्यां अखिलपुरुषार्थोपकारप्रवृत्ताया अन्तरेण तपःपारगमनं नास्तीत्यत इदमुक्तमाचार्येण,—"तस्यास्तपसा पारमीप्सितव्यम्" इति, अयमभ्युपायः तस्याः पारगमने । "तदिदम्" अतपस्विना सर्वथापि "आयुरिच्छता" निरुक्तशास्त्रं "न निर्वक्तव्यम्" अतपस्वी ह्यागमवान् अपि मलिनान्तःकरणत्वान्न शक्नुयात्, ततो[2]ऽस्यायुश्छिद्येत, तपस्विनापि च निर्ब्रुवता "तस्मात्" "छन्दःसु" शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षित्वनिराकाङ्क्षा[3]र्थे "शेषाः" वाक्यशेषाः, पादार्द्धर्चादिलक्षणाः उपेक्षितव्याः ॥ १३ । १३ । १ ॥ *

[ [1]अथेमा[2]र्येवावो[3]यद्दुदश्चोवि[4]हिसोतोः[5]सूर्ण्ये[6]वंतरत्स[7]चत्वारि-[8]शृंगा[9]स्वर्[10]यन्तश्चत्वारि[11]वांगृचो अक्षर आदित्य [12]ईत्यक्षरन्न-क्षरति[13]हदांतष्टेषुत्रयोदश ॥ ]

इति निरुक्ते त्रयोऽदशोध्यायः समाप्तः ॥ १३ ॥

इति नैरुक्तं प्रथमं परिशिष्टं समाप्तम् ॥ १ ॥

इति श्रीजम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशा ( अष्टादशा )ऽध्यायः समाप्तः ॥ १३ ॥
( अतिस्तुतिप्रकरणं समाप्तम् ) ।
इति सपादत्रयोदशा ( सप्तदशा ) ध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता ॥

---

१ 'विधिप्रतिषेधप्रतिप्रसव' ॥ २ 'ततो ह्यायुश्छिद्येत' ॥ ३ 'निराकाङ्क्षितार्थे' ॥ * अत्र त्रयोदशखण्डसमाप्तिरवगन्तव्या ॥ "इति ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशा-( अष्टादशा )ऽध्यायस्य प्रथमः पादः ॥ १३ । १ ॥" इदं तूपलभ्यते ॥

# अथ चतुर्दशोऽध्यायः १४. ❀

## अथवा त्रयोदशस्यैव द्वितीयादित्रिपादी ।

### तत्राद्यः, द्वितीय पादः ।

व्याख्यातं दैवतं यज्ञांगं चाथात ऊर्द्ध्वमार्गगतिं व्याख्यास्यामः । सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टाऽथैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्ग्गणः प्रवदन्तीन्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ॥ १४ ॥ १ ॥ ❀

"अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म आ॒सन् ।
अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑ ॥"
"अ॒हम॑स्मि प्रथम॒जा ऋ॒तस्य॒ पूर्वं॑ दे॒वेभ्यो॑ अ॒मृत॑स्य॒ नाम॑ ।
यो मा॒ ददा॑ति॒ स इदे॒व मा॑वा अ॒हमन्न॒मन्न॑म॒दन्त॑मद्मि ॥"
इति स ह ज्ञात्वा प्रादुर्बभूवैवं तं व्याजहारायं तमात्मानमध्यात्मजमन्तिकमन्यस्मा आ चचक्ष्वेति ॥ १४ ॥ २ ॥ ❀

"अप॑श्यं गो॒पामनि॑पद्यमान॒मा च॒ परा॑ च प॒थिभि॒श्चर॑न्तम् ।
स स॒ध्रीची॒ः स विषू॑ची॒र्वसा॑न॒ आव॑रीवर्त्ति॒ भुव॑नेष्व॒न्तः ॥"
आवरीवर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तदव्यक्तं तदस्पर्शं

* वृत्तिकृन्मते एषोऽध्यायो नास्ति ॥ * अत्र प्रथमखण्डसमाप्तिर्बोध्या ॥ १ 'नाभिः' ॥
* अत्र द्वितीयखण्डसमाप्तिर्बोध्या ॥



कथं नास्ति। वृत्तिकारः स्वयमाह (२।१२४।१६) — यद् द्विवद् ...

तदरूपं तद्रसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके । तत् क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति । सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी । रजः इति कामद्वेषस्तम इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते परिभातिलिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोऽपि निश्चयलिङ्ग आकाशः ॥ १४ ॥ ३ ॥ *

आकाशगुणः शब्द आकाशाद्वायुर्द्विगुणः स्पर्शेन वायोर्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्ति तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति भूतग्रामाः पृथिवीमपि यन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वायुं वायुराकाशमाकाशो मनो मनो विद्यां विद्या महान्तमात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्त्तेते स कालस्तदेतदहर्भवति ।

"युगसाहस्रपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः" इति ॥ १४ ॥ ४ *

१ 'प्रतिभातिलिंगो' ॥ * अत्र तृतीयखण्डसमाप्तिर्बोध्या ॥ * अत्र चतुर्थखण्डसमाप्तिर्बोध्या ॥

तं परिवर्त्तमानमन्योऽनुप्रवर्त्तते द्रष्टा द्रष्टा विभक्तातिमात्रोऽहमिति गम्यते स मिथ्यादर्शनेदम्पावकं महाभूतेषु चिरोण्वाकाशाद्वायोः प्राणाः चक्षुश्च वक्तारं च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्त्तिः पार्थिवांस्त्वष्टौ गुणान् विद्यात् त्रीन्मातृतस्त्रीन् पितृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोऽन्नं पानमित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि क्लृप्तः ॥ १४ ॥ ५ ॥ *

स यद्यनुरुध्यते तद्भवति, यदि धर्मोऽनुरुध्यते तद्देवो भवति, यदि ज्ञानमनुरुध्यते तदमृतो भवति, यदि काममनुरुध्यते संच्यवत इमां योनिं सन्दध्यात्, तदिदमत्र मतं श्लेष्मा रेतसः सम्भवति, श्लेष्मणो रसः, रसाच्छोणितम्, शोणितान्मांसम्, मांसान्मेदः, मेदसः स्नावा, स्नाव्नोऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातो रेतः, तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति। शुक्रातिरेके पुमान् भवति, शोणितातिरेके स्त्री भवति, द्वाभ्यां समेन नपुंसको भवति, शुक्रेण भिन्नेन यमो भवति, शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं संयम्यते, सौम्यो भवत्येकरात्रोषितं कललं भवति, पञ्चरात्राद् बुद्बुदाः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्बुदः, पञ्चविंशतिरात्रः स्वस्थितो घनो भवति, मासमात्रात्कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशः,

* अत्र पञ्चमखण्डसमाप्तिर्बोध्या।

मासचतुष्केण त्वग्व्यादेशः, पञ्चमे मासे नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्वांगसम्पूर्णो भवति ।

"मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि मयोषितानि यानि वै ॥
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
साङ्ख्यं योगं समभ्यस्येत्पुरुषं वा पञ्चविंशकम् ॥" इति ।

ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टस्तन्न स्मरति जन्ममरणमन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ १४ ॥ ६ ॥ *

अष्टोत्तरं सन्धिशतमष्टाकपालं शिरः सम्पद्यते, षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणामर्द्धचतस्रो रोमाणि कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थगुदपाय्वेतन्मूत्रपुरीषं कस्मादाहारपानसिक्तत्वानुपचितकर्माणावन्योन्यं जयेते इति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यज्ञानतमसि मग्नौ जरामरणक्षु-



* अत्र षष्ठखण्डसमाप्तिर्बोध्या ॥

त्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्यासू-यात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मादार्जवजवीभावानां तन्निर्मुच्यते, सोऽस्मापान्नं महाभूमिकावच्छरीरान्निमेष-मात्रैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रति-पद्यते ॥ १४ ॥ ७ ॥*

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति, ते धूममभिसम्भ-वन्ति, धूमाद्रात्रिम्, रात्रेरपक्षीयमाणपक्षम् , अपक्षीय-माणपक्षाद्दक्षिणायनम्, दक्षिणायनात् पितृलोकम्, पितृलोकाच्चन्द्रमसम्, चन्द्रमसो वायुम्, वायोर्वृष्टिम्, वृष्टेरोषधयश्चैतद्भूत्वा तस्य संक्षये पुनरेवेमं लोकं प्रति-पद्यते ॥ १४ ॥ ८ ॥*

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानो-क्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षादु-दगयनम्, उदगयनाद्देवलोकम्, देवलोकादादित्यम्, आदित्याद्वैद्युतम्, वैद्युतान्मानसम्, मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवन्ति, ते न पुनरावर्त्तन्ते शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्यम् १४।९॥



* अत्र सप्तमखण्डसमाप्तिर्बोध्या ॥ * अत्राष्टमखण्डसमाप्तिर्बोध्या ॥

अथाप्याह—॥ ❀

"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥"

न तं विद्यथा विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिमन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः क्षेत्रज्ञमनुप्रवदन्त्यथाहो विद्वांसः क्षेत्रज्ञोऽनुकल्पते तस्य तपसा सहाप्रमादमेत्यथाप्तव्यो भवति तेनासन्ततमिच्छेत्तेन सख्यमिच्छेदेष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति । ज्ञाता कस्माज्ज्ञायतेः, सखा कस्मात् सख्यतेः, सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि, प्रज्ञया कर्म कारयतीति वा, तस्य यदापः प्रतिष्ठाशीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतः ॥ १४ ॥ १० ॥

अथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः॥ ❀

हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः । विभुः । प्रभुः । शम्भुः । राभुः । वृधकर्मा । सोमः । भूतम् । भुवनम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः । स्वर्णीकम् । स्मृतीकम् । स्वृतीकम् । सती-

❀ अत्र नवमखण्डसमाप्तिर्दृश्यते, सा "अथाप्याह" इत्यतः प्रागेवोचिता प्रतिभाति ॥
❀ अत्र दशमखण्डसमाप्तिर्दृश्यते, सा "अथात्मनो" इत्यतः प्रागुचिता ॥

कम् । सतीनम् । गहनम् । गभीरम् । गह्वरम् । कम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । हविः । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः । सर्गाः । शम्बरम् । अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्व । पुष्करम् । सगरः[1] । समुद्रः । तपः । तेजः । सिन्धुः । अर्णवः । नाभिः । ऊधः । वृक्षः । तत् । यत् । किम् । ब्रह्म । वरेण्यम् । हंसः । आत्मा । भवन्ति[2] । वर्धन्ति । अध्वानम् । यद्वाहिष्ठ्या[3] । शरीराणि । अव्ययश्च संस्कुरुते । यज्ञः । आत्मा । भवंति । यदेनं तन्वते ॥ १४ ॥ ११ ॥

अथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति— ॥ ❀

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥"

सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः सोमः पवते सोमः सूर्यः प्रसवनाज्ज-

१ 'सगरम्' इति तु मुद्रितमासीत् ॥ २ 'भवांते' इति पुस्तकान्तरे ॥ ३ 'यद्वाहिष्या' इति मद्रितम् ॥ ❀ अत्रैकादशखण्डसमाप्तिर्दृश्यते, सा "अथैतम्" इत्यतः प्रागुचिता ॥

निता मतीनां प्रकाशकर्मणामादित्यरश्मीनां दिवो द्योतनकर्मणामादित्यरश्मीनां पृथिव्याः प्रथनकर्मणामादित्यरश्मीनामग्नेर्गतिकर्मणामादित्यरश्मीनां सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनामिन्द्रस्यैश्वर्यकर्मणामादित्यरश्मीनां विष्णोर्व्याप्तिकर्मणामादित्यरश्मीनामित्यधिदैवतम् ॥

अथाध्यात्मं—सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगतिमाचष्टे ॥ १४ ॥ १२ ॥ *

"ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥"

ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणः, गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणो यत एतस्मिंस्तिष्ठति, स्वधितिर्वनानामित्येष हि स्वयंकर्माण्यादित्यो धत्ते वनानां वनन-



* अत्र द्वादशखण्डसमाप्तिर्बोध्या ॥

कर्मणामादित्यरश्मीनां, सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमान एष एवैतत् सर्वमक्षरमित्यधिदैवतम् ॥

अध्यात्मं—ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां, पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणाम्, ऋषिर्विप्राणामित्ययमप्यृषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां, महिषो मृगाणामित्ययमपि महान् भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां, श्येनो गृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञानकर्मणो यत एतस्मिंस्तिष्ठति, स्वधितिर्वनानामित्ययमपि स्वयं कर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणां, सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत् सर्वमनुभवत्यात्मगतिमाचष्टे ॥ १४ ॥ १३ ॥ *

"तिस्रो वाचं ईरयति प्र वह्निर्ऋतस्यं धीतिं ब्रह्मणो मनीषाम्। गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥"

वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो

* अत्र त्रयोदशखण्डसमाप्तिर्बोध्या ॥

यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमित्यधिदैवतम् ॥

अथाध्यात्मम्—वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमतामृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगतिमाचष्टे॥ १४॥ १४॥ *

"सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः । सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सन्नवन्ते ॥"

एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः कामयमाना आदित्यं यन्त्येवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्त्येवमेव सोमः सुतः पूयते अज्यमान एतमेवार्काश्च त्रिष्टुभश्च सन्नवन्ते तत एतस्मिन्नादित्य एकं भवन्तीत्यधिदैवतम् ॥

अथाध्यात्मम्—एत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमः सुतः पूयते अज्यमान इममेवात्मा च सप्त ऋषयश्च सन्नवन्ते तानीमान्येतस्मिन्नात्मन्येकं भवन्तीत्यात्मगतिमाचष्टे ॥ १४ ॥ १५ ॥ *



* अत्र चतुर्दशखण्डसमाप्तिर्बोध्या ॥ * अत्र पञ्चदशखण्डसमाप्तिर्बोध्या

"अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥"
अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुरित्यधिदैवतम् ॥
अथाध्यात्मम्—अत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे ॥ १४ ॥ १६ ॥ *

"महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥"
महत्तत् सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवानामाधिपत्यमदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा ॥ १४ ॥ १७ ॥ *

"विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥"
विधुं विधमनशीलं दद्राणं दमनशीलं युवानं चन्द्रमसं पलित आदित्यो गिरति सद्यो म्रियते स दिवा समुदितेत्यधिदैवतम् ॥

---

१ 'महत्' ॥ * अत्र षोडशखण्डसमाप्तिर्बोध्या ॥ * अत्र सप्तदशखण्डसमाप्तिर्बोध्या ॥

अथाध्यात्मं—विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे ॥ १४ ॥ १८ ॥*

"साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि रूपशः ॥"

सहजातानां षण्णामृषीणामादित्यः सप्तमस्तेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् ॥

अथाध्यात्मं—सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमस्तेषामिष्टानि वा, कान्तानि वा, क्रान्तानि वा, गतानि वा, मतानिवा, नतानि वा न्नेन सह सम्मोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिचष्टे ॥ १४ ॥ १९ ॥*

"स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेत-

---

* अत्राष्टादशखण्डसमाप्तिर्बोध्या ॥ १ 'मादित्यरश्मयस्तेषामिष्टानि' ॥

* अत्रैकोनविंशखण्डसमाप्तिर्बोध्या ॥ "इति निरुक्ते त्रयोदशस्यैव द्वितीयः पादः समाप्तः" इति तूपलभ्यते ॥

न्धः । क॒विर्यः पु॒त्रः स ई॒मा चि॑केतु॒ यस्ता वि॑जा॒नात्स पि॒तुष्पि॒तास॑त् ॥"

स्त्रिय एवैताः शब्दस्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्देन निराहारः प्राण इति पश्यन् कष्टान्न विजानात्यन्धः कविर्यः पुत्रः स इमा जानाति, यः स इमा जानाति स पितुष्पितासदित्यात्मगतिमाचष्टे ॥ १४ ॥ २० ॥ *

"स॒प्तार्ध॑ग॒र्भा भुव॑नस्य॒ रेतो॒ विष्णो॑स्तिष्ठन्ति प्र॒दिशा॒ विध॑र्मणि । ते धी॒तिभि॒र्मन॑सा॒ ते वि॑प॒श्चितः॑ परि॒भुवः॒ परि॑भवन्ति वि॒श्वतः॑ ॥"

सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोर्द्ध्व-शब्दो [ यतो ] यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्य्ययन्ति परिभुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतम् ॥

अथाध्यात्मं—सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्द्ध्व शब्दो [ यतो ] यान्यस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे ॥ १४ ॥ २१ ॥ *

"न वि जा॑नामि॒ यदि॑वे॒दमस्मि॑ नि॒ण्यः सन्न॑द्धो॒ मन॑सा चरामि । य॒दा माग॑न्प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः ॥"

---

* अत्र विंशखण्डसमाप्तिर्बोध्या ॥ १ 'र्द्ध्वशब्दो यत एतस्मिंस्तिष्ठन्ति' ॥ २ 'नोर्ध्वशब्दो यत एतस्मिंस्तिष्ठन्ति' ॥ * अत्रैकविंशखण्डसमाप्तिर्बोध्या ॥

न हि विजानन् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्तेऽयमादित्योऽयमात्मा ॥ १४ ॥ २२ ॥*

"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।
ता शश्वन्ता विषूचीना वियन्तान्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥"

अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन चन्द्रमसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं न चन्द्रमसमित्यधिदैवतम् ॥ अथाध्यात्मम्—अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यात्मानं न मन इत्यात्मगतिमाचष्टे ॥ १४ ॥ २३ ॥*

"तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥"

तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो दीप्तिनृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं विश्व ऊमा इत्यधिदैवतम् ॥

* अत्र द्वाविंशखण्डसमाप्तिर्बोध्या ॥ * अत्र त्रयोविंशखण्डसमाप्तिर्बोध्या ॥

अथाध्यात्मं—तद्भवति भूतेषु ज्येष्ठमव्यक्तं यतो जायत उग्रस्त्वेष नृम्णो ज्ञाननृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति । निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं सर्व ऊमा इत्यात्मगतिमाचष्टे ॥ १४ ॥ २४ ॥ ❀

"को अद्य युंङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून् हृत्स्वसो मयोभून्य एषां भृत्या मृणधत्स जीवात् ॥"

क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसून्य सुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि य इमं सम्भृतं वेद कथं स जीवतीत्यधिदैवतम् ॥

अथाध्यात्मं—क आत्मा धुरि गा युङ्क्त इन्द्रियाणि कर्मवन्ति भानुमन्ति दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि य इमानि सम्भृतानि वेद चिरं स चीवतीत्यात्मगतिमाचष्टे ॥ १४ ॥ २५ ॥ ❀

"क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति । कस्तोकाय क इभायोत रायेऽधिब्रवत्तन्वे३ को जनाय ॥"

क एव गच्छति को ददाति को बिभेति को मंसते सन्तमिन्द्रं कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ॥ १४ ॥ २६ ॥ ❀

---

❀ अत्र चतुर्विंशखण्डसमाप्तिर्बोध्या ॥ ❀ अत्र पंचविंशखण्डसमाप्तिर्बोध्या ॥
❀ अत्र षड्विंशखण्डसमाप्तिर्बोध्या ॥

"को अ॒ग्निमी॑ट्टे ह॒विषा॑ घृ॒तेन॑ स्रु॒चा य॑जाता ऋ॒तुभि॑र्ध्रु॒वेभिः॑ ।
कस्मै॑ दे॒वा आव॑हाना॒शु होम॒ को मं॑सते वी॒तिहो॑त्रः सु॒दे॒वः॥"

क आदित्यं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुदेवः कल्याणदेव इत्यधिदैवतम् ॥ अथाध्यात्मं—क आत्मानं पूजयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञ इत्यात्मगतिमाचष्टे ॥ १४ ॥ २७ ॥ ❋

"त्वम॒ङ्ग प्र शं॑सिषो दे॒वः श॑विष्ठ॒ मर्त्य॑म् ।
न त्वद॒न्यो म॑घवन्नस्ति मर्डि॒तेन्द्र॒ ब्रवी॑मि ते॒ वचः॑ ॥"

त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन् पाता वा, पालयिता वा, जेता वा, सुखयिता वा, इन्द्र ब्रवीमि ते वच इति स्तुतिसंयुक्तम् ॥ १४ ॥ २८ ॥ ❋

"हं॒सः शु॑चि॒षद्व॒सुर॑न्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् ।
नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तम्॥"

हंस इति हंसाः सूर्यरश्मयः परमात्मा परं ज्योतिः पृथिवी व्याप्तेति व्याप्तं सर्वं व्याप्तं वननकर्मणानभ्यासेनादित्यमण्डलेनेति त्ययतीति लोको त्ययतीति हंसय-

---

१ 'पूरयति' ॥ २ 'पूरयति' ॥ ❋ अत्र सप्तविंशखण्डसमाप्तिर्बोध्या ॥ ❋ अत्राष्टाविंशखण्डसमाप्तिर्बोध्या ॥ "इति निरुक्ते त्रयोदशाध्यायस्यैव तृतीयः पादः समाप्तः" इति तूपलभ्यते ॥ ३ 'लोके' इति क्वचित्पाठः ॥

न्त्ययतीति हंसाः परमहंसाः परमात्मा सूर्यरश्मिभिः प्रभूत गभीर वसतीति त्रिभिर्वसतीति वा रश्मिर्वसतीति वा वह्निर्वसतीति वा सुवर्णरेताः पूषा गर्भा रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभन्तान्तरिक्षा चरत्यथान्तरिक्षा चरदिति दिवि भुवि गमनं वा सुभानुः सुप्रभूतो होतादित्यस्य गता भवन्त्यतिथिर्दुरोणसत् सर्वे दुरोणसद् इवं सर्वे रसा विकर्षयति रश्मिर्विकर्षयति वह्निर्विकर्षयति वननं भवत्यश्वगोजा अद्रिगोजा धरित्रिगोजाः सर्वे गोजा ऋतजा बहुशब्दा भवन्ति निगमो निगमव्यति भवत्यूषे निर्वचनाय ॥ १४ ॥ २९ ॥ ❀

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥"

द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्त्तारौ दुष्कृतं पापं परिसारकमित्याचक्षते । सुपर्णा सयुजा सखायेत्यात्मानं दुरात्मानं परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं रक्ष शरीरं वृक्षं पक्षौ प्रतिष्ठापयति तयोरन्यद्भुक्त्वान्नमनश्नन्नन्यां सरूपतां सलोकतामश्नुते य एवं विद्वाननश्नन्नन्यो अभिचाकशीतीत्यात्मगतिमाचष्टे ॥१४॥३०॥ ❀

"आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥"

---

* अत्रैकोनत्रिंशखण्डसमाप्तिर्बोध्या ॥ * अत्र त्रिंशखण्डसमाप्तिर्बोध्या ॥

आगमिष्यन्ति शक्रो देवतास्तास्त्रिभिस्तीर्थैभिः शक्रप्रतरै-
रीळितेभिस्त्रिभिस्तीर्थैर्यज्ञमिमं नो यज्ञभागंधेयमग्नीषोमभा-
गाविन्द्रो जुषस्व तृप्तामेवं मातुलयोगकन्या भागं सतृंकेव
सा या देवतास्तास्तत्स्थाने शक्रं निदर्शनम्॥ १४॥ ३१॥ *

"विप्रं विप्रासोऽवसे देवं मर्त्तास ऊतये ।
अग्निं गीर्भिर्हवामहे ॥"

विप्रं विप्रासोऽवसे विदुर्वेद विन्दतेर्वेदितव्यं विमलशरी-
रेण वायुना विप्रस्तु हृत्पद्मनिलयस्थितमकारसंहितमु-
कारं पूरयेन्मकारनिलयं गतं विप्रं प्राणेषु बिन्दुसिक्तं
विकसितं वह्नितेजःप्रभं कनकपद्मेष्वमृतशरीरममृतजात-
स्थितममृतवाचामृतमुखे वदन्ति । 'अग्निर्गीर्भिर्हवामहे' ।
अग्निं सम्बोधयेदग्निः सर्वा देवता इति ॥ १४ ॥ ३२ ॥

तस्योत्तरा भूयसे निर्वचनाय—॥ *

"जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥"

जातवेदस इति जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रल-
यन्यायेनाच्छाय सुनवाम सोममिति प्रसवेनाभिषवाय
सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मो निश्चये
निदहाति दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः
पर्षदति दुर्गाणि दुर्गमनानि स्थानानि नावेव सिन्धुं—य-

---

* अत्रैकत्रिंशखण्डसमाप्तिर्बोध्या ॥ * अत्र द्वात्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्योत्तरा भूयसे" इत्यतः प्रागुचिता ॥

था कश्चित्कर्णधारो नावेव सिन्धोः स्यन्दनान्नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति तानि तार यति ॥ १४ ॥ ३३ ॥

तस्यैषापरा भवति—॥ ❀

"इदं तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः ।
सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥"

इदं तेऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति सर्पो जीर्णामिव सर्पस्त्वचं त्यजति पापं त्यजन्ति, आप आप्नोतेः ॥ १४ ॥ ३४ ॥

तासामेषा भवति—॥ ❀

"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥"

त्र्यम्बको रुद्रस्तं त्र्यम्बकं यजामहे सुगन्धिं सगन्धिं सुष्ठुगन्धिं पुष्टिवर्द्धनं पुष्टिकारकमिवोर्वारुकमिव फलं बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व माम्॥ १४ ॥ ३५ ॥

कस्मादित्येषामितरेषापरा भवति—॥ ❀

"शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥"

शतं जीव शरदो वर्द्धमान इत्यपि निगमो भवति शतमिति

---

❀ अत्र त्रयस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तस्यैषापरा" इत्यतः प्रागुचिता ॥
❀ अत्र चतुस्त्रिंशखण्डसमाप्तिर्दृश्यते, सा "तासामेषा भवति" इत्यतः प्रागुचिता॥
❀ अत्र पञ्चत्रिंशखण्डसमाप्तिर्दृश्यते, सा "कस्मादित्येषा" इत्यतः प्रागुचिता ॥

शतं दीर्घमायुर्मरुत एना वर्द्धयन्ति शतमेनमेव शतात्मानं भवति शतमनन्तं भवति शतमैश्वर्यं भवति शतमिति शतं दीर्घमायुः ॥ १४ ॥ ३६ ॥ ❀

"मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदाचना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥"

मा च ते धामानि मा च ते कदा च नः सरिषुः सर्वाणि प्रज्ञानान्युपमानाय मनुष्यहितोऽयमादित्योऽयमात्माऽथै-तदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्ग्गणः प्रवदति वैश्व-कर्मणे देवानां नु वयं जानानासदासीन्नो सदासीत्तदानी-मिति च सैषात्मजिज्ञासा, सैषा सर्वभूतजिज्ञासा, ब्रह्मणः सारिष्टं सरूपतां सलोकतां गमयति य एवं वेद नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय नमो यास्काय ब्रह्म शुक्लमसीय ब्रह्म शुक्लमसीय ॥ १४ ॥ ३७ ॥ ❀

[ ❀ [1]व्याख्यातंदैवत[2]मग्निरस्मिजन्मना[3]पश्यज्ञोप[4]माकाश-[5]गुणंस्तम्परिव[6]र्त्तमानंस[7]र्यंद्यनुरुध्यतेऽ[8]ष्टोत्तरमर्थयेहिंसामाश्रि-[9]त्यांथयेहिंसामुत्सृज्यन[10]न्तंतह[11]सोघर्मःसोमः[12]पंवते[13]ब्रह्मादेवानां ति[14]सोवाचईरयतिसो[15]मं[16]ज्ञावोऽ[17]कान्महत्तत्सोमो[18]विधुन्द-ज्ञाणं[19]सौकञ्जानां[20]स्त्रियःसतीः[21]संताद्धंग[22]र्भानंविजा[23]नाम्यपा-ङ्प्राङेतिते[24]दिदासें[25]कोअद्ययुङ्क्ते[26]कईषते[27]कोअग्निमीट्टे[28]त्वंम-ङ्ग[29]हंसः शुचि[30]षद्वांसुपर्णाऽ[31]यांहीन्द्रविप्रंवि[32]प्रोसो[33]जातवेदसङ्-[34]दन्तेन्याभिस्[35]र्यंम्बकं[36]शंतञ्जीव[37]मांतेराधांसीति सप्तत्रिंशत् ॥ ]

---

* अत्र षट्त्रिंशखण्डसमाप्तिर्बोध्या ॥ * अत्र सप्तत्रिंशखण्डसमाप्तिर्बोध्या ॥
* इयं खण्डशृङ्खला च केवलं द्वितीयपरिशिष्टस्यैवेति बोध्यम् ॥

[ ❀ अथेमायद्द्यावोयद्दुदश्वोविहिंसोतोसूण्येवतंरत्सचत्वारिशृङ्गास्वर्ग्यन्तष्टत्वारिवागृंचोअक्षरआदित्यइत्यक्षरन्नक्षरतिहदातष्टेषुव्याख्यातंदैवतमग्निरास्मिजन्मनापश्यङ्गोपामाकाशगुणस्तम्परिवर्त्तमानंसंयद्यनुरुध्यतेऽष्टोत्तरमथये हिंसामाश्रित्याथयेहिंसामुत्सृज्यनतंह सोधर्मःसोमः पवते ब्रह्मा देवानां तिस्रो वाच ईरयति सोमंगावोऽक्रामन्महत्तत्सोमोविधुंदद्राणंसाकंश्वानांस्त्रियःसतीःसप्तार्धगर्भानविजानाम्यपाङ्प्राङेतितदिर्दासको अद्ययुक्तेकईषतेकोअग्निमीट्टेत्वम हंसःशुचिषद्द्वासुपर्णायाहीन्द्रविप्रंविप्रासोजातवेदसइदंतेऽन्याभिस्त्ययंकंशतंजीवमातेरांधांसीतिपञ्चाशत् ॥ ]

इति निरुक्ते चतुर्दशाध्यायः समाप्तः ॥ १४ ॥




❀ इयं खण्डशृङ्खला च परिशिष्टस्य प्रथमखण्डमारभ्यानुक्रान्ता वेदितव्या ॥

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" स्टीम् प्रेस—मुंबई.

# जाहिरात।

## ऋग्यपुस्तकें (वैदिकग्रंथाः।)

| नाम. | की. रु. आ. |
|---|---|
| ऋग्वेदसंहिता मूल. ... ... ... ... | ३–८ |
| शुक्लयजुर्वेद (वाजसनेयी) संहिता–संपूर्ण कर्मकाण्डादिमें अत्यन्त उपयोगी सर्वानुक्रमणिका अनुवाक् प्रतिज्ञासूत्र याज्ञवल्क्यशिक्षा स्वरसहित अकारादि क्रमसे मंत्रानुक्रमणिका समेत स्थूलाक्षरोंमें शुद्धतापूर्वक उत्तम कागजोंमें. ... | २–० |
| शुक्लयजुर्वेदसंहिता–पंडित ज्वालाप्रसादमिश्रकृत "मिश्रभाषा भाष्य" सहित जिसमें मंत्रोंके ऋषि छंद देवता और विनियोग प्रतिमंत्रमें वर्णित हैं और कात्यायन श्रौतसूत्रोंका और प्राचीनभाष्योंका अभिप्राय लेकर मंत्रार्थ बहुतही सुगमरीतिसे वर्णनकर उसकी विधिप्रमाण और अभिप्रायभी साथही साथ लिखे हैं. | ८–० |
| ऋग्यजुस्सामाथर्वविधानम्–जपादि अनुष्ठानके लिये अवश्य संग्राह्य है | ०–१॥ |
| मंत्रसंहिता–शुक्लयजुर्वेद नित्यकर्मानुष्ठान व्यवहारोपयोगी मंत्रोंका अपूर्व संग्रह. ... ... ... ... ... | ०–६ |
| रुद्री शुक्लयजुर्वेदी–षडंगन्याससहित. ... ... ... | ०–३ |
| रुद्री शुक्लयजुर्वेदी–सभाष्य भाषाटीकासमेत जिल्द बँधी ... | ०–१२ |
| दंडक शुक्लयजुर्वेदी. ... ... ... ... | ०–३ |
| पितृसंहिता–श्राद्धादिकोंमें ब्राह्मणभोजनके समयमें पाठ करने योग्य | ०–१॥ |
| पुरुषसूक्त–श्रीसूक्त मूल नित्यपाठोपयोगी. .... ... | ०–॥। |
| पुरुषसूक्त–भाषाटीकासमेत ... ... ... ... | ०–३ |
| गृह्यसूत्र–(पारस्कराचार्यप्रणीत हरिहरभाष्यसहित) जिसमें षोडशसंस्कारादिके सूत्र और कारिका हैं.... ... ... | १–४ |
| अष्टत्रिंशोपनिषद्–रेशमी गुटका नित्यपाठोपयोगी जिसमें ईश–केन–कठ–प्रश्न–मुंड–मांडूक्य–तैत्तिरीय–ऐतरेय–छांदोग्य बृहदारण्यक, श्वेताश्वतरोपनिषद्, कैवल्य, जाबाल, गर्भनारायणाथर्वशीर्ष, नारायणोपनिषद, बृहज्जाबालोपनिषद, वज्रसूचिकोपनिषद्, आदि एकत्र संग्रह कियागयाहै. ... ... | १–० |

नाम. की.

ईशावास्योपनिषद्–पंडित ज्वालाप्रसादमिश्रकृत भाषाटीकासमेत
मुक्तिकोपनिषद्–भाषाटीका.... ... ... ...
कैवल्योपनिषद्–मूलमात्र ... ... ... ...
भवसंतारणोपनिषद्–भा. टी. सहित–स्वामी श्रीरामप्रपन्नजीकृत
याज्ञवल्क्यशिक्षा–भा० टी० ... ... ...

## वेदान्तग्रंथाः ।

ब्रह्मसूत्र–( शारीरक ) व्यासप्रणीत शंकराचार्यकृत शांकरभाष्य और गोविंदानंदकृत रत्नप्रभाटीकासहित व्यासाधिकरणमाला और शांडिल्यकृतभक्तिसूत्र स्वप्नेश्वराचार्यकृत भाष्य समेत छपता है ।
ब्रह्मसूत्र–( शारीरक ) "वेदान्तदर्शन" प्रभुदयालकृत वेदान्ततत्त्व-प्रकाश भाषाभाष्यसमेत मुमुक्षुओंको अतिसुगमतासे सुबोध ज्ञानोपयोगी बहुत सरल भाषामें है.... ... ...
ब्रह्मसूत्र–( वेदान्तदर्शन ) सरल भाषाटीकामें भाष्यानुसार ...
वेदान्तपरिभाषा–शिखामणिटीका और मणिप्रभाटीकासहित
वेदान्तपरिभाषा–अर्थदीपिकाटीका समेत ... ...
वेदान्तपरिभाषा–साधु गोविन्दसिंहकृत अत्युत्तम भाषाटीकासमेत
वेदान्तसार–संस्कृत मूल और संस्कृतटीका व भाषाटीकासमेत इसमें संपूर्ण वेदान्तका तत्त्वरूपसार वर्णितहै ... ...
वेदान्तसंज्ञा–भाषाटीकासमेत इस छोटेसे ग्रंथके अभ्याससे वेदान्तकी संज्ञादिप्रक्रिया जाननेसे पंचदशी आदि बडे ग्रंथोंको सुगमतासे समझ सकेंगे. ... .... ... ...
वेदस्तुति–श्रीयुत बाबू सीतारामजीकृत भाषाटीकासमेत श्रीमद्भागवतान्तर्गत दशमस्कंधोत्तरार्धके ८७ अध्यायमें श्रीकृष्ण भगवान्ने श्रुतदेव ब्राह्मण और राजाबहुलाश्वको सन्मार्गनाम वेदमार्गका उपदेश किया है अर्थात् इस श्रुतिमें समस्तवेद ब्रह्म-प्रतिपादन किये हैं ... ... ... ...